IV 1—2.

# शब्दकल्पद्रुमः।

अर्थात्

एतद्देशप्रचलितसमस्तकोषाशेषशास्त्रसङ्कलिताकारादिवर्णक्रमविन्यस्तशब्द-तल्लिङ्ग-नानार्थ-पर्य्याय-प्रमाण-प्रयोग-धातु-तदनुबन्धाभिधेय-सहित-तत्तच्छब्दप्रसङ्गोत्थित-वेद-वेदाङ्ग-वेदान्त-न्याय-पुराणेतिहास-सङ्गीत-शिल्प-सूपकारशास्त्र-ज्योतिष-तन्त्राख्यान-काव्यालङ्कार-छन्दःप्रभृति-नाम-लक्षणोदाहरण-द्रव्यगुण-रोगनिदानौषध-स्मृत्युक्तधर्म्मादिसंयुक्त-सर्व्वदर्शनमतानुसारि-संस्कृताभिधानग्रन्थः।

## स्यार-राजा-राधाकान्तदेव-बाहादुरेण

विरचितः।

पाणिनिमतानुसारि प्रत्येकशब्दव्युत्पत्ति मूलग्रन्थातिरिक्तसकलशब्दार्थ प्रमाण प्रयोग-पर्य्याय धातुपदोदाहरणादिभिः नूतनसङ्कलितसकलशब्द तदर्थ तत्प्रमाण-प्रयोगादिसहित-सुप्रकाशपरिशिष्टेन च साङ्गम्

## श्रीवरदाप्रसादवसुना तदनुजेन श्रीहरिचरणवसुना च

सर्व्वशास्त्रविशारदकोविदवृन्दसाहाय्येन संपरिवर्द्धितः। नागराक्षरैः प्रकाशितश्च।

चतुर्थः काण्डः।

प्रथम-द्वितीय-खण्डौ।

कलिकाता राजधान्यां

रामनारायण यन्त्रे मुद्रितः। ७१ नं० पाथुरियाघाट ष्ट्रीट्-स्थितभवनात् प्रकाशितश्च। शकाब्दाः १८२७।

PRINTED BY ... RAMNARAYAN PRESS, AND CONSIDERABLY IMPROVED, CAREFULLY REVISED AND PUBLISHED BY BARADA PRASAD BASU, AND HARI CHARAN BASU. 71, PATHURIAGHATA STREET CALCUTTA

To be had at the Sabdakalpadruma Office, No 71 Pathuriaghata Street Calcutta and at the Baptist Mission Press No 24 Lower Circular Road Calcutta. Price for Subscribers in India, Re 1 and Countries out of India 1s for each number

# গোপালতাপনী।

সম্প্রতি অথর্ববেদীয় পিপ্পলাদশাখার অন্তর্গত গোপালতাপনী নামে এই উপনিষৎখানি দুইটী টীকার সহিত মুদ্রিত হইয়াছে। এই উভয় টীকার ম প্রথমটী বৈষ্ণবাগ্রণী শ্রীজীবগোস্বামীর ও দ্বিতীয়টী শ্রীবিশ্বেশ্বরপণ্ডিতের প্রণীত। পূজ্যপাদ গোস্বামীর ব্যাখ্যাটী সম্পূর্ণ ভক্তিরসের আধার স্বরূপ। যদিও ট পূর্ব্বে এই গোপালতাপনী উপনিষৎখানি শেষোক্ত টীকার সহিত মুদ্রিত হইয়াছিল তথাপি তাহাতে ভক্তিজ্ঞান-লাভাকাঙ্ক্ষী পবিত্রাত্মা বৈষ্ণবদিগের অভ মোচন হয় নাই, কেননা বৈষ্ণবগণ প্রায়ই চিত্তশুদ্ধির নিমিত্ত ভক্তিপ্রধান গ্রন্থেরই অনুশীলন করিয়া থাকেন; কিন্তু বিশ্বেশ্বরপণ্ডিতের টীকাটীর ব্যাখ্যা জ্ঞানপক্ষপাতিনী। ব্রহ্মবিদ্যা-স্বরূপিণী উপনিষৎ সকল যে, জ্ঞানপ্রধান গ্রন্থ ইহা অবশ্য স্বীকর্তব্য, কিন্তু গোপালতাপনী-গ্রন্থ পূর্ব্বোত্তর বিভাগানুসারে, ভ ও জ্ঞান, এই উভয়াত্মক সুতরাং উভয়মত ব্যাখ্যারই প্রয়োজন। বিশেষত এই তাপনীগ্রন্থ ভক্তিজ্ঞানপরায়ণ মহাত্মা বৈষ্ণবদিগেরই পরম আদরের ব অতএব ইহাতে শ্রীজীবগোস্বামীর টীকাটীই বিশেষ উপাদেয়, অথচ ঈদৃশ মহার্ঘ টীকা এ প্রদেশে কুত্রাপি মুদ্রিত হয় নাই, এই অভাব মোচনের বিশেষতঃ সত্ত্বপ্রধান মহাত্মা বৈষ্ণবগণ পরমাচার্য্য গোস্বামীর ভক্তিরসপূর্ণ টীকার বিশেষ অনুরাগী জানিয়া এই উভয়বিধ টীকার সহিত এই গ্রন্থখানি মুদ্রি করিয়াছি। ইহার মূল্য ৮০ আনা, কিন্তু শব্দকল্পদ্রুম ও দেবীভাগবতের গ্রাহকের পক্ষে ॥০ মাত্র।

ইহার বঙ্গানুবাদ অতি সরল ভাষায় ও টীকানুযায়ী সরল টিপ্পনীতে ভূষিত হইয়াছে। ইহার মূল্য শব্দকল্পদ্রুম অথবা দেবীভাগবতের গ্রাহকের পক্ষে ॥০ অ অপরের পক্ষে ৸০ আনা। যাঁহারা মূল ও অনুবাদ একত্রে লইবেন তাঁহাদের পক্ষে ১৲ এক টাকা।

শ্রীহরিচরণ বসু
সম্পাদক।

শব্দকল্পদ্রুম-কার্য্যালয়
৭১ নং পাথুরিয়াঘাটা ষ্ট্রীট্—কলিকাতা।
শকাব্দ—১৮১৩। মাঘ।

# शब्दकल्पद्रुमः।

## चतुर्थकाण्डम्।



य, अन्तःस्थयकारः। स च षड्विंशव्यञ्जनवर्णः। अस्योच्चारणस्थानं तालु। ( यदुक्तं सिद्धान्तकौमुद्याम्। “इचुयशानां तालु।” तथा च शिक्षायाम्। १७।

“कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू।”)

तस्य स्वरूपं यथा,—

“यकारं शृणु चार्वङ्गि। चतुष्कोणमयं सदा।
पलालधूमसङ्काशं स्वयं परमकुण्डली॥
पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं तथा।
प्रणमामि सदा वर्णं मूर्त्तिमन्मोक्षमव्ययम्॥”

इति कामधेनुतन्त्रे ५ पटलः॥

वङ्गीयवर्णमालायामस्य लेखनप्रकारो यथा,—

“ऊर्द्ध्वाधःक्रमतो रेखा चतुष्कोणमयी शुभा।
नारायणशिवधयस्तासु तिष्ठन्ति नित्यशः॥
मात्रा कुण्डलिनी ज्ञेया ध्यानमस्य प्रचक्षते॥”

तस्य ध्यानं यथा,—

“धूम्रवर्णां महारौद्रीं षड्भुजां रक्तलोचनाम्॥
रक्ताम्बरपरीधानां नानालङ्कारभूषिताम्॥
महामोक्षप्रदां नित्यामष्टसिद्धिप्रदायिनीम्।
एवं ध्यात्वा यकारन्तु तन्मन्त्रं दशधा जपेत्॥”

तत्प्रणाममन्त्रो यथा,—

“त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा।
प्रणमामि सदा वर्णं शक्तिमामोक्षमव्ययम्॥”

इति वर्णोद्धारतन्त्रम्॥

अस्य नामानि यथा,—

“यो वाणी वसुधा वायुर्विकृतिः पुरुषोत्तमः।
युगान्तः श्वसनः शीघ्रो धूमार्चिः प्राणिसेवकः।
प्रकाश्रमी जटी लीला वायुवेगी यशस्करी।
सङ्कर्षणः जपा बाली हृदयं कपिलाप्रभा॥
आग्नेयो व्यापकस्त्यागी होमो यानं प्रभा सुख
चक्षः सर्वेश्वरी धूमचामुण्डा सुसखेश्वरी॥
त्वगात्मा मलयो माता हंसिनी भृङ्गनायकः
वेगमः शोषकी मौनी धनिष्ठानन्दवेदिनी।
मेढ्ः सोमः मज्जनामा पापहा प्राणसंज्ञकः॥

इति नानातन्त्रशास्त्रम्॥



…ाङ्कुबन्धविशेषः। स तु दिवादिगणाद्यपदः।
…था च कविकल्पद्रुमे। “दिवाद्यो याद्यादिकः॥”
…न्दःशास्त्रान्तर्गतगणविशेषः। तथा च छन्दोमञ्जर्याम्।

“आदिगुरुः पुनरादिलघुर्यः॥”

अस्य साङ्केतिकचिह्नं यथा, ।ऽऽ ;
काव्यादौ अस्य प्रथमप्रयोगे लक्ष्मीलाभः फलम्।
यथा, वृत्तरत्नाकरटीकायाम्।

“यो लक्ष्मीं दिशतु दाहं ममममथ कवौ भः सुखं
सस्तु खेदम्॥”)

…, पुं, (याति वातीति। या गतौ + डः।) वायुः।
यशः। योगः। यानम्। यात्रा। इति शब्दरत्नावली॥ सर्व्वनाम। यच्छब्दार्थे इति यावत्। इति विश्वः॥
…कः, त्रि, यः। ये इति भाषा। यच्छब्दस्य टेरक्
टेः पूर्व्वं अकागमेन निष्पन्नः॥ (“अव्ययसर्व्वनाम्नामकच् प्राक् टेः।” ५। ३। ७१। इति पाणिनिसूत्रम्। यथा, ऋग्वेदे। ८।२१।१८।
“चित्र इद्राजा राजका इदन्यके यके सरस्वतीमनु॥”)

यकृत्, क्ली, ( यज् + “शकेर्ऋतिन्।” उणा० ४। ५८। इत्यत्र “बाहुलकात् यजेः कश्च।” इत्युज्ज्वलदत्तोक्त्या ऋतिन् जस्य च कः।) कुक्षिदक्षिणभागस्थमांसखण्डम्। तत्पर्य्यायः। कालखण्डम् २। इत्यमरः। २। ६। ६६॥ कालखञ्जम् ३ कालेयम् ४ कालकम् ५। इति हेमचन्द्रः॥ करण्डः ६ महास्नायुः ७। इति रभसः॥*॥ (यथा, ऋग्वेदे। १०। १६३। ३।
“यक्नं मतस्नाभ्यां यक्नः प्लाशिभ्यो विवृहामि ते।”
“यक्नः हृदयसमीपे वर्त्तमानः कालमांसविशेषो यकृत् तस्मात्।” इति तद्भाष्ये सायनः॥)
अथ शरीरावयवविशेषस्य यकृतः स्वरूपमाह।
“अधो दक्षिणतश्चापि हृदयाद्यकृतः स्थितिः।
तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम्॥”
अथ यकृद्रोगमाह।
“प्लीहामयस्य हेत्वादि समस्तं यकृदामये।



किन्तु स्थितिस्तयोर्ज्ञेया वामदक्षिणपार्श्वयोः॥”
अथ यकृद्रोगचिकित्सा।
“प्लीहोद्दिष्टाः क्रियाः सर्व्वा यकृत्यपि समाचरेत।

काश्च दक्षिणे बाहौ तत्र शोणितमोक्षणम्॥
क्षारश्च विङ्कणाभ्यां पूतिकस्याश्च निस्तुतम्।
पिबेत् प्रातर्यथावह्नि यकृत्प्लीहप्रशान्तये॥”

इति भावप्रकाशः॥

( तथा च।
“वातेनोदीरितं रक्तं कफेन च घनीकृतम्।
पित्तेन पाकतां प्राप्तं त्रिदोषसंश्रितं यकृत॥
लक्षणं तस्य वक्ष्यामि तेन तत्रापि लक्षयेत्।
क्षीयते तेन मनुजो मृत्युराशु प्रवर्त्तते॥
वमिस्तमकयोर्हारो हृल्लासः श्वसनं भ्रमः।
दाहोऽरुचिस्तृषामूर्च्छा कण्ठे दाहः शिरोव्यथा॥

हृच्छूलश्च प्रतिश्यायः क्षीयनं कटुकास्यता।
सशल्यं हृदि शूलश्च निद्रानाशः प्रलापनः॥
हृदये मन्यते जाड्यं उदरं गच्छते भृशम्।
एतैर्लिङ्गैर्विजानीयात् यकृत् कोष्ठे च वर्द्धितम्॥”
अथास्य चिकित्सा॥

“निम्बनीपधवत्वक्तसं निशा
काश्मरी च तुलसी च सिंहिका।
क्वाथ एव हृदयामयापह
आशु शूलयकृतश्च नाशकृत्॥
सौराष्ट्रीकासीसमहौषधानि
दुरालभाजातिप्रवालकञ्च।
दार्व्वी यवानी ककुभः समङ्गा
क्वाथः ससर्पिर्यकृदाशु हन्ति॥”

इति हारीते चिकित्सितस्थाने चतुर्थेऽध्याये॥

“प्लीहवद्दक्षिणात् पार्श्वात् कुर्य्याद्यकृदपि च्युतम्॥”

इति वाभटे निदानस्थाने द्वादशेऽध्याये॥)

यकृदात्मिका, स्त्री, (यकृत इवात्मा स्वरूपं यस्याः। बहुव्रीहौ कः। टापि अत इत्वम्।) तैलपायिका। इति शब्दचन्द्रिका॥

यक्षवैरी, [न्] पुं, (यक्षतो वैरी नाशकः ।) रोहितकवृक्षः । यथा,—
"प्लीहघ्नो मांसदलनो यक्षवैरी चलच्छदः ॥"
इति शब्दचन्द्रिका ॥

यक्ष, क ङ महि । इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-सक०-सेट् ।) क ङ, यक्षयते । महि पूजायाम् । इति दुर्गादासः ॥

यक्षः, पुं, (यक्ष्यते पूज्यत इति । यक्ष+घञ् । यद्वा, ईं लक्ष्मीमश्नोतीति । अश+अच् ।) गुह्यकमात्रम् । गुह्यकेश्वरः । इति मेदिनी । षे, २२ ॥ इन्द्रगृहम् । क्षमरचकः । इति सारस्वतः ॥ यक्षस्वरूपं यथा,—
"आजग्मुर्यक्षनिकराः कुवेरवरकिङ्कराः ।
शैलप्रस्तरकरा अञ्जनाकारमूर्त्तयः ॥
विकृताकारवदनाः पिङ्गलाक्षा महोदराः ।
स्फटिका रक्तवेशाश्च दीर्घस्कन्धाश्च केचन ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १७ अध्यायः ॥
यक्षगणो यथा,—
"प्रचेतसः सुता यक्षास्तेषां नामानि मे शृणु ।
केवलो हरिकेशश्च कपिलः काञ्चनस्तथा ।
मेघमाली च यक्षाणां गण एष उदाहृतः ॥"
तस्य व्युत्पत्तिर्यथा,—
"धातुर्यक्षत्यथोक्तश्च दहने चपये च सः ।
यद्यक्षत्युक्तवानेष तस्माद्यक्षो भवत्ययम् ॥"
इति वह्निपुराणे काश्यपीयवंशः ॥
(अपरा निरुक्तिर्यथा, विष्णुपुराणे ।१।५।४१।
"मैवं भो रक्ष्यतामेष यैरुक्तं राक्षसास्तु ते ।
ऊचुः खादाम इत्यन्ये ये ते यक्षास्तु जक्षणात् ॥"
पुं, क्ली, पूजा । यथा, ऋग्वेदे । ७ । ६१ । ५ ।
"अमूरा विश्वा वृषणा विमा वां
न यासु चित्रं ददृशे न यक्षम् ॥"
"न यक्षं न पूजा दृश्यते ।" इति तद्भाष्ये सायनः ॥ तथाच अथर्ववेदे ।११।२।२४।
"तव यक्षं पशुपते अप्स्वन्तः ॥")

यक्षकर्द्दमः, पुं, (यक्षप्रियः कर्द्दमः ।) कर्पूरागुरुकस्तूरीकक्कोलानां मिश्रितसमभागः । इत्यमरः । २ । ६ । १३३ ॥ "कर्पूरादिभिर्गन्धद्रव्यैः समभागैः साधितोऽनुलेपनभेदो यक्षकर्द्दम उच्यते । यक्षप्रियः कर्द्दमो यक्षकर्द्दमः ।
'कुङ्कुमागुरुकस्तूरीकर्पूरं चन्दनन्तथा ।
महासुगन्धमित्युक्तं नामतो यक्षकर्द्दमः ॥'
इति धन्वन्तरिः ॥
अन्यत्रापि ।
कर्पूरागुरुकस्तूरीकक्कोलघर्षणादि च ।
एकीकृतमिदं सर्व्वं यक्षकर्द्दम इष्यते ॥"
इति तट्टीकायां भरतः ॥

यक्षतरुः, पुं, (यक्षप्रियो यक्षाश्रितो वा तरुः । शाकपार्थिवादिवत् समासः ।) वटवृक्षः । इति राजनिर्घण्टः ॥ (विवरणमस्य वटशब्दे ज्ञातव्यम् ॥)

यक्षधूपः, पुं, (यक्षप्रियो धूपः ।) धूपसामान्यम् । धूनकधूपः । इति केचित् । धुना इति ख्यात इति केचित् । इति भरतः ॥ तत्पर्य्यायः सर्ज्जरसः २ अरालः ३ सर्व्वरसः ४ बहुरूपः ५ । इत्यमरः । २ । ६ । १२७ ॥ रालः ६ धूपः ७ वह्निवल्लभः ८ । इति रभसः ॥ कालः ९ सालजः १० सालनिर्यासः ११ कललः १२ । इति रत्नमाला ॥ (अस्य पर्य्यायान्तराणि,—
"रालस्तु शालनिर्यासस्तथा सर्ज्जरसः स्मृतः ।
देवधूपो यक्षधूपस्तथा सर्व्वरसश्च सः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
एतेन माधवपूजननिषेधो देवीपूजा च यथा कालिकापुराणे ६८ अध्याये ।
"न यक्षधूपं वितरेत् माधवाय कदाचन
"यक्षधूपेन वा देवीं महामायां प्रपूजयेत् ।")
सरलद्रवरसः । टारपिन तैल इति भाषा । तत्पर्य्यायः । पायसः २ श्रीवासः ३ सरलाङ्कः ४ । इति हेमचन्द्रः । ३ । ४११ ॥

यक्षरसः, पुं, (यक्षप्रियो रसः । शाकपार्थिवत् समासः ।) पुष्पमद्यम् । तत्पर्य्यायः । आसवः २ । इति त्रिकाण्डशेषः ॥

यक्षराजः, पुं, (यक्षाणां राजा । "राजाहः-सखिभ्यष्टच् ।" ५ । ४ । ९१ । इति समासान्तष्टच् ।) कुवेरः । इति शब्दरत्नावली ॥ (यथा, महाभारते । ५ । १९४ । ४९ ।
"इत्युक्तो भगवान्देवो यक्षराजः सुपूजितः ।
प्रययौ सहितः सर्व्वैर्निमेषान्तरचारिभिः ॥"

यक्षराट्, [ज्] पुं, (यक्षेषु राजते इति । राज् "सत्सूद्विषद्रुहेति ।" ३।२।६१ । इति क्विप् ।) कुवेरः । (यथा, भागवते । ८ । १८ । १७ ।
"तस्मा इत्युपनीताय यक्षराट् पात्रिकामदात् ॥"
यक्षराजमात्रम् । मणिभद्रः । यथा, महाभारते । ३ । ६४ । १२७ ।
"तथा मे यक्षराडद्य मणिभद्रः प्रसीदतु ॥"*॥
यक्षा इव महान्तो राजन्तेऽत्र । राज्+क्विप् ।) रङ्गमण्डपः । इति मेदिनी । जे, ३५ ॥

यक्षराट्पुरी, स्त्री, (यक्षराजः पुरी ।) अलका । सा च कैलासपर्व्वतस्थितकुवेरपुरी । इति जटाधरः ॥

यक्षरात्रिः, स्त्री, (यक्षप्रिया यक्षाणां वा रात्रिः ।) कार्त्तिकी पूर्णिमा । तत्पर्य्यायः । दीपाली २ । इति त्रिकाण्डशेषः ॥

यक्षसाधनं, क्ली, (यक्षाणां साधनम् ।) यक्षोपासना । यथा, वाराहीतन्त्रे ।
"यक्षाणां यक्षिणीनाञ्च पैशाचीनाञ्च साधनम् ।
भूतवेतालगान्धर्व्वं मारणोच्चाटनानि च ।
अधोगमनमेतेषां साधने पैहिकं हितम् ॥"

यक्षामलकं, क्ली, (यक्षाणामामलकम् ।) पिण्डखर्ज्जूरफलम् । इति शब्दमाला ॥

यक्षावासः, पुं, (यक्षाणामावासो वासस्थानम् ।) वटवृक्षः । इति राजनिर्घण्टः ॥

यक्षिणी, स्त्री, (यक्षः पूजा अस्त्यस्याः । यक्ष+इनिः । ङीप् ।) कुवेरपत्नी । इति शब्दरत्नावली ॥ यक्षभार्य्या च ॥ (यथा, कथासरित्सागरे । १० । १७८ ।
"सोऽपि सुप्ताशु विजने भ्रातुः पुत्रं तमभ्यधात् ।
अशङ्कितं मा त्वथाः पुत्र ! मम विद्धि हि यक्षिणी ॥")

यक्षी, स्त्री, (यक्षस्य भार्य्या । यक्ष+पुंयोगादिति ङीष् ।) कुवेरपत्नी । इति शब्दरत्नावली ॥ (यक्षभार्य्या । यथा, महाभारते ।३। ६४ । ११७ ।
"यक्षी वा राक्षसी वापि उताहोस्वित् सुराङ्गना ।
सर्व्वथा कुरु नः स्वस्ति रक्षस्वास्मान-निन्दिते ! ॥")

यक्षोडुम्बरकं, क्ली, (यक्षप्रियमुडुम्बरम् । ततः स्वार्थे कन् ।) अश्वत्थफलम् । इति त्रिकाण्डशेषः ॥

यक्ष्मघ्नी, स्त्री, (यक्ष्माणं हन्ति । हन्+"अमनुष्यकर्त्तृके च ।" ३ । २ । ५३ । इति टक् । ततो ङीप् ।) द्राक्षा । इति शब्दमाला ॥

यक्ष्मा, [न्] पुं, (यक्ष+"बाहुलकात् यक्षतेरपि ।" उणा० ४।१५०। इत्यत्र उज्ज्वलदत्तोक्त्या मनिन्प्रत्ययेन साधुः ।) रोगविशेषः । तत्पर्य्यायः । क्षयः २ शोषः ३ । इत्यमरः । २ । ६ । ५१ ॥ राजयक्ष्मा ४ रोगराट् ५ ॥ अथ राजयक्ष्माधिकारः । "तत्र राजयक्ष्मणो विप्रकृष्टं सन्निकृष्टञ्च निदानमाह ।
'वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात् ।
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥'
वेगोऽत्र वातमूत्रपुरीषाणाम् ।
'वातमूत्रपुरीषाणि निरुणद्धि यदा नरः ॥'
इति चरकवचनात् ॥
क्षयात् क्षीयतेऽनेनेति क्षयः तेनातिव्यवायानशनेर्ष्यादयो धातुक्षयहेतवः क्षयशब्देनोच्यन्ते । साहसात् बलवता समं मल्लयुद्धादितः । विषमाशनात् बहु स्तोकमकाले वा भुक्तं तत् विषमाशनम् । तस्मात् । त्रिदोषः सान्निपातिकः । हेतुचतुष्टयात् अन्येऽपि हेतवः हेतुचतुष्टय एवान्तर्भवन्ति । यक्ष्मणः पर्य्यायाः राजयक्ष्मक्षयशोषाः ॥*॥ यक्ष्मादीनां शब्दानां निरुक्तिमाह ।
'वैद्यो व्याधिमतां यस्मात् व्याधेर्बलेन यक्ष्यते ।
स यक्ष्मा प्रोच्यते लोके शब्दशास्त्रविशारदैः ॥
यक्ष्यते पूज्यते ।
'राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः ।
तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः ॥
क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते बुधैः ।
संशोषणाद्रसादीनां शोष इत्यभिधीयते ॥'*॥
संप्राप्तिमाह ।
'कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु ।
अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तरा ।
क्षीयन्ते धातवः सर्व्वे ततः शुष्यति मानवः ॥'
कफप्रधानैर्दोषैः रसवर्त्मसु रुद्धेषु अनन्तरा सर्व्वे धातवः क्षीयन्ते ततो मानवः शुष्यति ।

कारणभूतस्य रसस्य क्षये कार्य्याणां रक्तादीनामनुक्रमेण क्षीयमाणत्वात् ॥ * ॥ मार्गावरोधे रसक्षयहेतुमाह चरकः ।

'रसस्रोतःसु रुद्धेषु स्वस्थानस्थो विदह्यते ।
स ऊर्द्ध्वं कासवेगेन बहुरूपः प्रवर्त्तते ॥'

स्वस्थानस्थः हृदयस्थः । कासं विनापि रसक्षयो भवति मार्गावरोधकुपितवातेन रसस्य शोषणात् । उक्तञ्च ।

'वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च ।
अनुलोमक्षयं दृष्ट्वा प्रतिलोमक्षयाच्च ॥'

अनुलोमक्षयं दर्शयित्वा प्रतिलोमक्षयमप्याह । अतिव्यवायिनो वा रेतसि क्षीणे प्रतिलोमक्रमेणानन्तरा सर्व्वे धातवो रसपर्य्यन्ताः क्षीयन्ते । तद्यथा । शुक्रे क्षीणे मज्जा क्षीयते मज्जनि क्षीणेऽस्थि क्षीयते । एवं पूर्व्वं पूर्व्वं क्षीयते । ननु कार्य्यस्य शुक्रस्य क्षये कथं कारणभूतानां मज्जादीनां क्षयः । उच्यते । शुक्रक्षयाद्वायुः कुप्यति । यदुक्तम् ।

'वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन चेति ।'

स वायुः सान्निध्यक्रमेण मज्जादीन् सर्व्वान् धातून् संशोषयति । ततस्तदनन्तरं मानवः शुष्यति ॥ * ॥ पूर्व्वरूपमाह ।

'श्वासाङ्गसादकफसंस्रवतालुशोष-
वम्यग्निसादमदपीनसकासनिद्राः ।
शोषे भविष्यति भवन्ति स चापि जन्तुः
शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥
स्वप्नेषु काकशुकशल्लकिनीलकण्ठ-
गृध्रास्तथैव कपयः कृकलासकाश्च ।
तं वाहयन्ति स नदीर्विजलाश्च पश्येत्
शुष्कांस्तरून् पवनधूमदवार्द्दितांश्च ॥' * ॥

यक्ष्मणो लक्षणमाह ।

'अंसपार्श्वाभितापश्च सन्तापः करपादयोः ।
ज्वरः सर्व्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः ॥'

अंसयोः पार्श्वयोः अभितापः पीड़ा अत्र सकलधातुक्षयपूर्व्वकः सकलशरीरशोषोऽपि बोद्धव्यः । क्षीयन्ते धातवः सर्व्वे ततः शुष्यति मानव इति संप्राप्तिः । एवं षड्रूपे एकादशरूपे च बोद्धव्यम् । एतानि त्रीणि लक्षणानि प्रायोभावित्वेन चरकेणोक्तानि । सुश्रुतेन यक्ष्मणि षड्लक्षणान्युक्तानि ।

'भक्तद्वेषो ज्वरः कासः श्वासः शोणितदर्शनम् ।
स्वरभेदश्च जायेत षड्रूपे राजयक्ष्मणि ॥' * ॥

उल्वणतया दोषाणां भेदादेकादश लक्षणान्याह ।

'स्वरभेदोऽनिलाच्छूलं सङ्कोचश्चांसपार्श्वयोः ।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥
शिरसः परिपूर्णत्वमभक्तच्छन्द एव च ।
कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः ॥'

अनिलादुल्वणात् एवं पित्तात् कफाच्च । यत आह सुश्रुतः ।

'एक एव मतः शोषः सन्निपातात्मको गदः ।
उद्रेकात्तत्र लिङ्गानि दोषाणां निपतन्ति च ॥'

असाध्यत्वचिह्नमाह ।

'एकादशभिरेभिर्व्वा षड्भिर्व्वापि समन्वितम् ।
त्रिभिर्व्वा पीड़ितं लिङ्गैर्ज्वरकासासृगामयैः ।
जह्याच्छोषार्द्दितं जन्तुमिच्छन् सुविपुलं यशः ॥'

तत्र विशेषमाह ।

'सर्व्वैरर्द्धैस्त्रिभिर्व्वापि लिङ्गैर्मांसबलक्षये ।
युक्तो वर्ज्ज्यश्चिकित्स्यस्तु सर्व्वरूपोऽप्यतोऽन्यथा ॥'

सर्व्वैर्लिङ्गैरेकादशभिः । अर्द्धैः षड्भिः त्रिभिर्ज्वरकासरुधिरवमनैः । अतोऽन्यथा मांसे बले सति सर्व्वरूपोऽपि प्रत्याख्याय चिकित्स्यः ।

'महाशनं क्षीयमाणमतीसारनिपीड़ितम् ।
शूनमुष्कोदरञ्चैव यक्ष्मिणं परिवर्ज्जयेत् ॥'

महाशनं क्षीयमाणमित्येकमसाध्यलक्षणम् । अतीसारनिपीड़ितमिति द्वितीयम् । यत उक्तम् ।

'मलायत्तं बलं पुंसां शुक्रायत्तन्तु जीवनम् ।
तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी ॥'

शूनमुष्कोदरमिति तृतीयम् ॥ * ॥ अरिष्टमाह ।

'शुक्लाक्षमन्नद्वेष्टारमूर्द्ध्वश्वासनिपीड़ितम् ।
कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ॥'

मेहन्तं शुक्रं क्षरन्तम् । शुक्लाक्षत्वादीनि प्रत्येकशोऽरिष्टलक्षणानि ॥ * ॥ अवधिमाह ।

'परं दिनसहस्रन्तु यदि जीवति मानवः ।
सुभिषग्भिरुपक्रान्तस्तरुणः शोषपीड़ितः ॥'

शोषपीड़ितो मानवस्तरुणो भवति । सुभिषग्भिरुपक्रान्तो भवति । तदा परं दिनसहस्रम् । द्वितीयदिनसहस्रं यदि जीवति तत्र जीवनविकल्प इत्यर्थः । एतेन शोषपीड़ितो मानवस्तरुणो भवति । सद्वैद्यचिकित्स्यो भवति । तदा प्रथमदिनसहस्रं जीवेदेव इत्युक्ता चिकित्सामाह ।

'ज्वरानुबन्धरहितं बलवन्तं क्रियासहम् ।
उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् ॥'

आत्मवन्तं यत्नवन्तं धृतिमन्तं वा ॥ * ॥ अथ निदानविशेषैः शोषविशेषानाह ।

'व्यवायशोकवार्द्धक्यव्यायामाध्वप्रशोषितान् ।
व्रणोरःक्षतसंज्ञौ च शोषिणौ लक्षणैः शृणु ॥'

व्रणोरःक्षतसंज्ञौ शोषिणौ । व्रणशोषी उरःक्षतशोषी च ॥ * ॥ तत्र व्यवायशोषिणो लक्षणमाह ।

'व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः ।
पाण्डुदेहो यथापूर्व्वं क्षीयन्ते चास्य धातवः ॥'

शुक्रस्य क्षयलिङ्गैः सुश्रुतोक्तैः । तानि यथा, शुक्रक्षये मेढ्रवृषणयोर्वेदना अशक्तिर्मैथुने चिराद्वा प्रसेकः प्रसेके चाल्पशुक्रदर्शनमिति । यथापूर्व्वं क्षीयन्ते चास्य धातवः प्रथमं शुक्रं क्षीयते पश्चात् शुक्रक्षयजनितवायुना मज्जादयोऽपि धातवो यथापूर्व्वं क्षीयन्ते ॥ * ॥ शोकशोषिणो लक्षणमाह ।

'प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः ।
विना शुक्रक्षयकृतैर्विकारैरुपलक्षितः ॥'

प्रध्यानशीलः यस्याभावेन शोको जनितस्तद्ध्यानपरः । स्रस्ताङ्गः शिथिलाङ्गः । तादृशः व्यवायशोषिसदृशः । तेन शुक्रादिसर्व्वधातुक्षययुक्तो भवति । परं शुक्रक्षयकृतैर्विकारैर्मेढ्रवृषणवेदनादिभिर्वर्ज्जितो भवति । व्याधिस्वभावात् ॥ * ॥ जराशोषिणो लक्षणमाह ।

'जराशोषी कृशो मन्दवीर्य्यबुद्धिबलेन्द्रियः ।
कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः ॥
ष्ठीवति श्लेष्मणा हीनं गौरवारुचिपीड़ितः ।
संप्रस्रुतास्यनासाक्षः शुष्करूक्षमलच्छविः ॥'

मन्दशब्दः स्वल्पार्थः । शुष्करूक्षमलच्छविः शुष्करूक्षे मलच्छवी यस्य सः ॥ * ॥ अध्वशोषिणो लक्षणमाह ।

'अध्वप्रशोषी स्रस्ताङ्गः संभृष्टपरुषच्छविः ।
प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः ॥'

संभृष्टस्येव परुषा छविर्यस्य सः । प्रसुप्तगात्रावयवः प्रसुप्तः स्पर्शाज्ञः । क्लोमं तिलकं पिपासास्थानम् ॥ * ॥ व्यायामशोषिणो लक्षणमाह ।

'व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः ।
लिङ्गैरुरःक्षतकृतैः संयुक्तश्च क्षतं विना ॥'

एभिरेव स्रस्ताङ्गत्वादिभिरध्वशोषिणो लक्षणैरेव । भूयिष्ठ अत्यर्थम् ॥*॥ व्रणनिदानं व्रणशोषमाह ।

'रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् ।
व्रणितस्य भवेच्छोषो साध्योऽसाध्यश्च स स्मृतः ॥'

उरःक्षतस्य निदानमाह ।

'धनुषायस्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ।
युध्यमानस्य बलिभिः पततो विषमोच्चतः ॥
वृषं हयं वा धावन्तं दम्यं चान्यं निगृह्णतः ।
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः
परान् ॥
अधीयानस्य चात्युच्चैर्दूरं वा व्रजतो द्रुतम् ।
महानदीं वा तरतो हयैर्व्वा सह धावतः ॥
सहसोत्पततो दूरं तूर्णं चातिप्रनृत्यतः ।
तथान्यैः कर्म्मभिः क्रूरैर्भृशमभ्याहतस्य वा ॥
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ।
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्य्यते ॥'

आयास्यतः आयासं कुर्व्वतः । दम्यं वृषादिकम् । अन्यच्च गजोष्ट्रादिकम् । शिला दीर्घपाषाणः । अश्म प्रस्तरखण्डः । निर्घातोऽस्त्रविशेषः । व्याधिः उरःक्षताख्यः ॥*॥ उरःक्षतस्य लक्षणमाह ।

'उरो विरुज्यतेऽत्यर्थं भिद्यते च विभज्यते ।
शूलं भवति तत्पार्श्वे शुष्यत्यङ्गं प्रवेपते ॥
प्रपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रकम्पते ।
क्रमाद्वीर्य्यं बलं वर्णो रुचिरग्निश्च हीयते ॥
ज्वरो व्यथा मनोदैन्यं विड्भेदोऽग्निवधस्तथा ॥
दुष्टः श्यावः सुदुर्गन्धः पीतो विग्रथितो बहुः ।
कासमानस्य चाभीक्ष्णं कफः सासृक् प्रवर्त्तते ॥
स क्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ।
अव्यक्तं लक्षणं तस्य पूर्व्वरूपमिति स्मृतम् ॥'

विरुज्यते पीड्यते । भिद्यते विदार्य्यत इव ।

विभज्यते द्विधा क्रियत इव । स पुरुषः । क्षतः उरःक्षतवान् । क्षयजं क्षीयते क्षीणो भवति । न केवलं श्वासकफक्षयादेव क्षीणो भवति । तथा शुक्रौजसोः क्षयात् । अतिसेवनादिना शुक्रौजसोः क्षयादपि क्षीणो भवति ॥*॥ उरःक्षतस्य विशिष्टं लक्षणमाह ।

'उरोरुक् शोणितच्छर्दिः कासो वैशेषिकः क्षते । क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहः ॥'

क्षते उरःक्षतवति । उरोरुक् शोणितच्छर्दिः कासो वैशेषिक. विशेषतो भवत्येव । तस्मिन्नेवोरःक्षतवति श्वासकफशुक्रौजसां क्षयात् क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहश्च भवति ॥*॥ निदानविशेषेणोरःक्षतस्य लक्षणविशेषमाह ।

'शुक्ररोधात् क्षयाच्चैव कोष्ठात् प्रतिमकात्तथा । क्षतोरस्कस्याग्निपाके निःश्वासो याति पूतिकः ॥'

क्षयात् धातुक्षयविशेषरतिव्यवायादितः कोष्ठात् प्रतिमकात् कोष्ठात् प्रतिमकवातेन प्रतिलोमगमनात् पूतिकः पूतिगन्धः ॥ * ॥ उरःक्षतस्य साध्यासाध्यलक्षणमाह ।

'अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः । परिसंवत्सरो याप्यः सर्वलिङ्गन्तु वर्जयेत् ॥'*॥

अथ राजयक्ष्मचिकित्सा ।

'बलिनो बहुदोषस्य पञ्च कर्माणि कारयेत् । शोषिणः क्षीणदेहस्य तत्क्षतं स्याद्विषोपमम् ॥ शुक्रायत्तं बलं पुंसां मलायत्तन्तु जीवनम् । तस्माद्यत्नेन संरक्षेत् यक्ष्मिणो मलरेतसी ॥ शालिषष्टिकगोधूमयवमुद्गादयो हिताः । मद्यानि जाङ्गलाः पक्षिमृगाः शुष्का विशोषिणः ॥

सपिप्पलीकं सयवं सकुलत्थं सनागरम् । दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत् ॥ तेन षड्विनिवर्त्तन्ते विकाराः पीनसादयः ॥ प्रस्थतो द्विगुणं मांसं सर्वतोऽष्टगुणं जलम् । पादस्थं संस्कृतञ्चाज्ये षडङ्गो यूष उच्यते ॥'

तद्यथा । यवपल १ कुलत्थपल १ छागमांसपल ४ जलपल ४८ शेषपल १२ ततः पलमिते घृते संस्करणीयम् । तत्र कर्षमितं सैन्धवं देयं जीरकार्धं हिङ्गु च देयम् । पिप्पली नागरञ्च पृथक् माषमितं कल्कीकृत्य देयम् । दाडिमामलकाभ्यामम्लत्वं साध्यम् । षडङ्गयूषः ॥*॥

'ककुभत्वक् नागबला वानरीबीजं विचूर्णितं पयसा । पक्वं मधुघृतयुक्तं ससितं यक्ष्मादिकासहरम् ॥ छागमांसं पयश्छागं छागं सर्पिः सनागरम् । छागोपसेवा शयनं छागमध्ये तु यक्ष्मनुत् ॥ मधुताप्यविडङ्गाश्मजतुलोहघृताभयाः । घ्नन्ति यक्ष्माणमत्युग्रं सेव्यमाना हिताशिनः ॥' ताप्यं स्वर्णमाक्षिकम् ।

'शर्करामधुसंयुक्तं नवनीतं लिहन् क्षयी । क्षीराशी लभते पुष्टिमतुल्ये चाज्यमाक्षिके ॥ सितोपलातुगाक्षीरीपिप्पलीबहुलात्वचः । अन्त्यादूर्द्ध्वं द्विगुणिताश्चूर्णिता मधुसर्पिषा ॥ लेहयेद्दाहरोगार्त्तं कासश्वासक्षयातुरम् । पार्श्वशूलिनमल्पाग्निं सुप्तजिह्वं वमिप्लुतम् । हस्तपादाङ्गदाहे च ज्वरे रक्ते तथोर्द्ध्वगे ॥' सितोपला मिश्री । बहुला सूक्ष्मैला । इति सितोपलादिरवलेहः ॥*॥

'जातीफलं विडङ्गानि चित्रकं तगरं तिलाः । तालीशं चन्दनं शुण्ठी लवङ्गमुपकुञ्चिका ॥ कर्पूरञ्चाभया धात्री मरीचं पिप्पली तुगा । एषामक्षसमा भागाश्चातुर्जातकसंयुताः । पलानि सप्त भङ्गायाः सिता सर्वसमा मता ॥ चूर्णमेतत् क्षयं कासं श्वासञ्च ग्रहणीगदम् । अरोचकं प्रतिश्यायं तथा चानलमन्दताम् । एतान् रोगान् निहन्त्येव हृष्टमिन्द्राशनिर्यथा ॥ वातरोगाधिकारोक्तं तैलं लाक्षादि योजयेत् । अभ्यङ्गे यक्ष्मिणो नित्यं सद्वैद्योपदेशतः ॥'

इति जातीफलाद्यचूर्णम् ॥*॥

'वासकस्य रसप्रस्थं माक्षिकासितशर्करा । पिप्पली द्विपलं तावत् सर्पिषश्च शनैः पचेत् ॥ तस्मिन् लेहत्वमायाते शीते क्षौद्रपलाष्टकम् । दत्त्वावतारयेद्वैद्यो लीढो लेहोऽयमुत्तमः ॥ निहन्ति राजयक्ष्माणं कासं श्वासञ्च दारुणम् । पार्श्वशूलञ्च हृच्छूलं रक्तपित्तं ज्वरन्तथा ॥'

इति वासावलेहः ॥*॥

अथ व्यवायादिहेतुकशोषचिकित्सा । तत्र व्यवायशोषचिकित्सा ।

'व्यवायशोषिणां क्षीररसमांसाज्यभोजनैः । सुकूलैर्मधुरैर्हृद्यैर्जीवनीयैरुपाचरेत् ॥' रसा मांसरसः सुकूलैर्हितैः ॥*॥ शोकशोषचिकित्सा ।

'हर्षणाश्वासनैः क्षीरैः स्निग्धैर्मधुरशीतलैः । दीपनैर्लघुभिश्चान्नैः शोकशोषमुपाचरेत् ॥'*॥ व्यायामशोषचिकित्सा ।

'व्यायामशोषिणां स्निग्धैः क्षतक्षयहितैर्हिमैः । उपाचरेज्जीवनीयैर्विधिना श्लैष्मिकेण तु ॥'*॥ अध्वशोषचिकित्सा ।

'आस्यासुखैर्दिवास्वप्नैः शीतैर्मधुरबृंहणैः । अन्नमांसरसाहारैरध्वशोषमुपाचरेत् ॥'*॥ व्रणशोषचिकित्सा ।

'व्रणशोषं जयेत् स्निग्धैर्दीपनैः स्वादुशीतलैः ईषदम्लैरनम्लैर्वा यवमांसरसादिभिः ॥'*॥ अथोरःक्षतचिकित्सा ।

'बलाश्वगन्धा श्रीपर्णी बहुपुत्री पुनर्नवा । पयसा नित्यमभ्यस्ताः शमयन्ति क्षतक्षयम् ॥' श्रीपर्णी गम्भारी । बहुपुत्री शतावरी । इति बलादिचूर्णम् ॥*॥

'एला पत्रत्वचोऽर्द्धाक्षा पिप्पल्यर्द्धपलं पृथक् । सितामधुकखर्ज्जूरमृद्वीकाश्च पलोन्मिताः ॥ संचूर्ण्य मधुना युक्ता वटिका संप्रकल्पयेत् । अक्षमात्रां ततश्चैव भक्षयेच्च दिने दिने ॥ क्षतक्षयं ज्वरं कासं श्वासं हिक्कां वमिं भ्रमम् । मूर्च्छां मदं तृषां शोषं पार्श्वशूलमरोचकम् ॥ प्लीहानमामवातञ्च रक्तपित्तं स्वरक्षयम् । एलादिगुटिका हन्ति वृष्या सन्तर्पणी परा ॥ द्राक्षायाः प्रस्थमेकन्तु मधूकस्य पलाष्टकम् । पचेत्तोयाढके शुद्धे पादशेषेण तेन तु ॥ पलिके मधुकद्राक्षे पिष्टे श्यामापलद्वयम् । प्रदाय सर्पिषः प्रस्थं पचेत् क्षीरे चतुर्गुणे ॥ सिद्धे शीते पलान्यष्टौ शर्करायाः प्रदापयेत् । एतद्द्राक्षाघृतं सिद्धं क्षतक्षीणे सुखावहम् ॥ वातपित्तज्वरश्वासविस्फोटकहलीमकान् । प्रदरं रक्तपित्तञ्च हन्यात्कासबलप्रदम् ॥'

इति द्राक्षादिघृतम् ॥*॥

'क्षीरे धात्रीविदारीक्षुवरीणाञ्च तथा रसे । पचेत् समे घृतप्रस्थं मधुरैः कर्षसम्मितैः ॥ द्राक्षाद्विचन्दनोशीरशर्करोत्पलपद्मकैः । मधूककुसुमानन्ताकाश्मरीतृणसंज्ञकैः ॥ प्रस्थार्द्धं मधुनः शीते शर्करार्द्धतुलान्तथा । पलार्द्धकांश्च संचूर्ण्य त्वगेलापत्रकेशरान् ॥ विनीय तत्र संलिह्यान्मात्रां नित्यं सुयन्त्रितः । अमृतप्राशमित्येतदश्विभ्यां परिकीर्त्तितम् ॥ क्षीरमांसाशिनां हन्ति रक्तपित्तक्षतक्षयम् । तृष्णारुचिश्वासकासच्छर्द्दिमूर्च्छाप्रमर्द्दनम् । मूत्रकृच्छ्रज्वरघ्नञ्च बल्यं क्षीरविवर्द्धनम् ॥'

इति अमृतप्राशावलेहः ॥*॥

'यद्वृष्यञ्च तर्पणं शीतमविदाहि हितं लघु । अन्नपानं निषेवन्त क्षतक्षीणैः सुखार्थिभिः ॥

शोकं स्त्रियः क्रोधमसूयनाञ्च
त्यजेदुदारान् विषयान् भजेच्च ।
तथा द्विजातींस्त्रिदशान् गुरूंश्च
वाचश्च पुण्याः शृणुयाद्धितेभ्यः ॥'*॥

अथ राजयक्ष्मणि रसाः । अमृतेश्वरो रसो राजयक्ष्मणि रसेन्द्रचिन्तामणौ ।

'रसभस्मामृतासत्त्वं लौहं मधुघृतान्वितम् । अमृतेश्वरनामायं बहुगुणो राजयक्ष्मजित् ॥'

इति अमृतेश्वरो रसः ॥

रसभस्म मारितो रसः । अमृतासत्त्वं गुडूचीसत्त्वम् । लौहं मारितम् ॥*॥

'अथोऽंशा मारितात् सूतादेकोऽंशो हेमभस्मतः । एकोऽंशो मृतताम्रस्य शिला गन्धश्च तालकम् । प्रत्येकं भागयुग्मं स्यादेतत् सर्व्वं विचूर्णयेत् ॥ वराटीः पूरयेत्तेन छागीक्षीरेण टङ्कणम् । पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे ताश्च पूरयेत् ॥ ततो गजपुटे पक्त्वा चूर्णयेत् स्वाङ्गशीतलम् । रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः ॥ मरिचैकोनविंशत्या कणाभिर्दशभिस्तथा । मधुना सर्पिषा चापि दद्यादेतं रसं भिषक् ॥ अनेन नश्यति क्षिप्रं वातश्लेष्मभवः क्षयः ॥'

इति राजमृगाङ्को रसो राजयक्ष्मणि रसेन्द्रचिन्तामणौ ॥*॥

'शुद्धसूतं द्विधा गन्धं कुर्य्यात् खल्वेन कज्जलीम् । तयोः समं तीक्ष्णचूर्णं मर्द्दयेत् कन्यकाद्रवैः ॥ त्रियाममातपे शोष्यं ताम्रपात्रे विधारयेत् ।

आच्छादोरक्तपक्षैश्च ज्वादुष्णं यामशुष्मतः ॥
शाम्यराग्नौ श्वसेत् पश्चाद्दोराणामनुद्धरेत् ।
संचूर्ण्य गालयेदच्छे वस्त्रं वारितरं भवेत् ॥
त्रिकटुत्रिफलैलाभिर्जातीफललवङ्गकैः ।
नवभागोन्मितैरेतैः सम एव रसो भवेत् ॥
निष्कद्वयमितं लिह्यं मधुना सह लेहयेत् ।
अयमग्निरसो नाम्ना कासश्वयथुहरः परः ॥'
इति अग्निरसः शार्ङ्गधरे ॥"
इति भावप्रकाशस्य मध्यखण्डे द्वितीयभागे राजयक्ष्माधिकारः ॥ * ॥ (अथास्य पौराणिकं विवरणं यथा,—
"दिवौकसां कथयतामृषिभिर्वै श्रुता कथा ।
कामव्यसनसंयुक्ता पौराणी शशिनं प्रति ॥
रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः ।
आजगामाल्पतामिन्दोर्देहः स्नेहपरिक्षयात् ॥
दुहितृणामसम्भोगाच्छेषाणाञ्च प्रजापतेः ।
क्रोधो निश्वासरूपेण मूर्त्तिमान्निःसृतो मुखात् ॥
प्रजापतेर्हि दुहितरस्त्राविंशतिरंशुमान् ।
भार्य्यार्थं प्रतिजग्राह न च सर्व्वास्ववर्त्तत ॥
गुरुणा तमवध्यातं भार्य्यास्वसमवर्त्तिनम् ।
रजोऽन्धमबलं दीनं यक्ष्मा शशिनमाविशत् ॥
सोऽभिभूतोऽतिगुरुणा गुरुक्रोधेन निष्प्रभः ।
देवदेवर्षिसहितो जगाम शरणं गुरुम् ॥
अथ चन्द्रमसः शुद्धां मतिं बुद्ध्वा प्रजापतिः ।
प्रसादं कृतवान् सोमस्ततोऽश्विभ्यां चिकित्-
सितः ॥
स विमुक्तग्रहश्चन्द्रो विरराज विशेषतः ।
तेजसा वर्द्धितोऽश्विभ्यां शुद्धं सत्त्वमवाप च ॥
क्रोधो यक्ष्मा ज्वरो रोग एकोऽर्थो दुःखसंज्ञितः ।
यस्मात् स राज्ञः प्रागासीद्राजयक्ष्मा ततो
मतः ॥
स यक्ष्मा हुङ्कृतोऽश्विभ्यां मानुषं लोकमागतः ।
लब्ध्वा चतुर्व्विधं हेतुं समाविशति मानवान् ॥
अयथाबलमारम्भं वेगसन्धारणं क्षयम् ।
यक्ष्मणः कारणं विद्यात् चतुर्थं विषमाशनम् ॥"
अस्य विशेषहेतुर्यथा,—
"युद्धाध्ययनभाराध्वलङ्घनप्लवनादिभिः ।
पतनैरभिघातैर्वा साहसैर्वा तथापरैः ॥
अयथाबलमारम्भैर्जन्तोरुरसि विक्षते ।
वायुः प्रकुपितो दोषावुदीर्य्योभौ विधावति ॥"
तथास्य लक्षणादिकं यथा,—
"स शिरःस्थः शिरःशूलं करोति गलमाश्रितः ।
कण्ठोद्ध्वंसञ्च कासञ्च स्वरभेदमरोचकम् ॥
पार्श्वशूलञ्च पार्श्वस्थो वर्च्चोभेदं गुदे स्थितः ।
जृम्भां ज्वरञ्च सन्धिस्थ उरःस्थश्चोरसो रुजम् ॥
क्षणनाच्चोरसो रक्तं कासमानः कफानुगम् ।
जर्ज्जरेणोरसा कृच्छ्रमुरःशूली निरस्यति ॥
इति साहसिकं यक्ष्मा रूपैरेतैः प्रपद्यते ।
तस्मात् साहसिकं कर्म्म वर्ज्जयेत् ... साहसम् ॥
ह्रीमत्त्वाद्वा घृणित्वाद्वा भयाद्वा वेगमागतम् ।
वातमूत्रपुरीषाणां निगृह्णाति यदा नरः ॥
तदा वेगप्रतीघातात् कफपित्ते समीरयन् ।
ऊर्द्ध्वं तिर्य्यगधः कुर्य्याद्विकारान् कुपितोऽनिलः ॥
प्रतिश्यायञ्च कासञ्च स्वरभेदमरोचकम् ।
पार्श्वशूलं शिरःशूलं ज्वरमंसावमर्द्दनम् ॥
अङ्गमर्द्दं मुहुश्छर्द्दिर्व्वर्च्चोभेदं त्रिलक्षणम् ।
रूपाण्येकादशैतानि यक्ष्मा येरभ्यति महान् ॥"
इति चरके चिकित्सास्थाने अष्टमेऽध्याये ॥
अस्य चिकित्सा यथा,—
"काञ्चनं रससिन्दूरं मौक्तिकं लौहमभ्र-
कम् ।
विद्रुमं चन्द्रवैक्रान्तं तारं ताम्रञ्च वङ्गकम् ॥
कस्तूरिका लवङ्गञ्च जातिकोषैलवालुका ।
प्रत्येकं बिन्दुमात्रञ्च सर्व्वं मर्द्द्यं प्रयत्नतः ।
कन्यानीरेण संमर्द्द्य कैशराजरसेन च ।
अजाक्षीरेण संभाव्य प्रत्येकं दिवसत्रयम् ॥
चतुर्गुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ।
अनुपानं प्रदातव्यं यथादोषानुसारतः ॥
नानारोगप्रशमनं सर्व्वोपद्रवसंयुतम् ।
क्षयं हन्ति तथा कासं यक्ष्माणं श्वासमेव च ॥
प्रमेहान् विंशतिञ्चैव दोषत्रयसमुत्थितान् ।
सर्व्वान् रोगान् निहन्त्याशु भास्करस्तिमिरं
यथा ॥"
इति हेमकाञ्चनाभ्रवटी ॥
"शिलाजतुमधुव्योषताप्यलौहरजांसि च ।
क्षीरेणालोड्य सत्त्वाशु यक्ष्मा क्षयमवाप्नुयात् ॥"
इति शिलाजत्वादिलौहम् ॥*॥
इति वैद्यकरसेन्द्रसारसंग्रहे राजयक्ष्माधि-
कारे ॥ * ॥ )

यच्छत्, [ त् ] त्रि, दानकर्त्ता । उपरमकर्त्ता । दानधातोर्यमधातोश्च शतृप्रत्ययेन निष्पन्नः ॥

यज, ऐ ञ औ देवार्च्चादानसङ्गतौ । इति कवि-कल्पद्रुमः ॥ ( भ्वा०-उभ०-सक०-अनिट् । ) सङ्गस्य कृतिः सङ्गकृतिः । ऐ, इज्यात् । ञ, यजति यजते विष्णुं सुधीः पूजयतीत्यर्थः । पशुना रुद्रं यजति प्रभुं रुद्राय ददातीत्यर्थः । यजति सर्व्वं सन् सता सह सङ्गं करोतीत्यर्थः । औ, यष्टा । इति दुर्गादासः ॥

यजतः, पुं, (यजतीति । यज् + "भृमृदृशियजि-पर्व्विपच्यमितमिनमिहर्य्येभ्योऽतच् ।" उणा० ३।११०।इति अतच् ।) ऋत्विक् । इति सिद्धान्त-कौमुदी ॥ ( ऋषिविशेषः । स तु ऋग्वेदस्य ५ म० ६७।६८ । सूक्तयोः ऋषिः ॥ त्रि, यष्टव्यः । यथा, ऋग्वेदे । १ । १८१ । ३ ।
"अहंपूर्व्वो यजतो धिष्ण्या यः ॥"
"यजतो यष्टव्यः ।" इति तद्भाष्ये सायनः ॥
तथा च तत्रैव । ३ । ५ । ८ ।
"यथा विद्वाँ अरं करद्विश्वेभ्यो यजतेभ्यः ।"
"यजतेभ्यः सर्व्वेभ्यो यजनीयेभ्यो देवेभ्यः ।"
इति तद्भाष्ये सायनः ॥)

यजतिः, पुं, (यज् + बाहुलकात् अतिः ।) यागः । यथा,—
"यजतिषु येयजामहं कुर्य्यान्नानुयाजेषु ।"
इति मलमासतत्त्वधृता श्रुतिः ॥

यजत्रः, पुं, (यजतीति । यज् + "अमिनक्षियजि-वधिपतिभ्योऽत्रन् ।" उणा० ३ । १०५ । इति अत्रन् । ) अग्निहोत्री । इत्युणादिकोषः ॥ (यजनशीले, त्रि । यथा, ऋग्वेदे ।७।५२।१६।
"पिता च तन्नो महान् यजत्रो
विश्वेदेवाः समनसो जुषन्त ॥"
"यजत्रः यजनशीलः ।" इति तद्भाष्ये सायनः ॥)

यजत्, [त्] पुं, यागकर्त्ता । यजधातोः शतृप्रत्ययेन निष्पन्नः ॥

यजनं, क्ली, (इज्यते इति । यज् + ल्युट् ।) यागः । ( यथा, महाभारते । ७ । ५३ । १७ ।
"यस्य सेन्द्रामरगणा इन्द्रद्युतिपुरोगमाः ।
देवा विष्वक्सृजः सर्व्वे यजनान्ते समासते ॥")
तत्तु ब्राह्मणस्य षट्कर्म्मान्तर्गतकर्म्मविशेषः । यथा, मानवे १ अध्याये ।
"अध्यापनं अध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहञ्चैव ब्राह्मणानामकल्पयत् ॥"
अस्य लक्षणं यथा । पश्वीराज्यपुरोडाश-सोमौषधिचरुप्रभृतिभिर्हविर्भिः खदिरपलाशा-श्वत्थन्यग्रोधोदुम्बरप्रभृतिभिः समिद्भिः स्रुक्स्रुवो-दूखलमुषलकुठारखनित्रयूपदारुदर्भचर्म्मपात्र-पवित्रभाजनादिभिर्यज्ञोपकरणैरश्वाह्वोताध्वर्यु-ब्रह्मादिभिरृत्विग्भिः काम्यनैमित्तिकानां पञ्चादिपूर्व्विकाणां यथोक्तदक्षिणानां समापकं यजनम् । इति श्राद्धविवेकधृतदेवलवचनम् ॥ (इज्यतेऽत्रेति । यज + अधिकरणे ल्युट् । यज्ञ-स्थानम् । यथा, श्रीमद्भागवते । ४ । ४ । ६ ।
"तद्ब्रह्मघोषोत्सवकाञ्चनदर्भचर्म्मभि-
र्निसृष्टभाण्डं यजनं समाविशत् ॥"
"यजनं यज्ञस्थानम् ।" इति तट्टीकायां श्रीधर-स्वामी ॥ )

यजन्तः, पुं, यागकर्त्ता । यजधातोर्झच्प्रत्ययेन निष्पन्नः । इति सिद्धान्तकौमुदी ॥

यजमानः, पुं, (यजतीति । यज् + शानच् ।) अध्वरे आदेष्टा । तत्पर्य्यायः । [illegible] यष्टा २ । इत्य-मरः ।२।७।८॥ (यथा, श्रीम[illegible]
"नाहं तथाद्मि यजमानहविर्वितानै-
श्च्योतद्घृतप्लुतमदन् हुतभुङ्मुखेन ॥" )
"नत्वादिचयं यजमाने । अध्वरे यागविषये मम इष्टसम्पादनाय यथार्थं कर्म्म कुरु इति ऋत्वि-जामादेशको यागस्वामी नत्वादिशब्दत्रयवाच्य इत्यर्थः । ऋतमेधाजिनादिधारणं विद्यतेऽस्य व्रती इन् । यजते इति ल्लनि यष्टा । शाने यजमानः । स व्रती सोमपानवति अध्वरे यज-मानः सन् दीक्षित उच्यते अन्यत्राप्युपचारात् । दीक्ष मौण्ड्येज्योपनयनव्रतादेशेषु क्तः दीक्षा-शब्दादितो वा ।" इति भरतः ॥

यजाकः, त्रि, (यजतीति । यज् दाने + आकन् ।) दानकर्त्ता । इत्युणादिकोषः ॥

यजिः, पुं, (यजतीति । यज् + "सर्व्वधातुभ्य [illegible] उणा० ४।११७। इति इन् ।) यष्टा । इत्युणादि-कोषः ॥

यजुः, [ स् ] क्ली, (इज्यतेऽनेनेति । यज् + "अर्त्तिपृवपियजीति ।" उणा० २ । ११८ । इति उसिः ।) वेदविशेषः । इत्यमरः । १ । ६ । ३ ॥ "इज्यतेऽनेनेति यजुः । यजे ज्यौ देवार्च्चादानसङ्गतौ । अर्त्तिसुसिस् इति उस् ।" इति भरतः ॥ * ॥ अपि च । यजुराह जैमिनिः । शेषे वा यजुःशब्दः । शेषे ऋक्सामभिन्ने मन्त्रजाते तत्‌श्च यज्ञमन्त्रजातं प्रश्लिष्य पठितं गानादिविच्छेदरहितं सत् यजुरिति । इति तिथ्यादितत्त्वम् ॥ यजुर्व्वेदस्य षड़शीतिर्भेदा भवन्ति । तत्र चरका नाम द्वादश भेदा भवन्ति । चरकाः १ आह्वरकाः २ कठाः ३ प्राच्यकठाः ४ कपिष्ठलकठाः ५ औपमन्यवाः ६ आलम्बकठाः ७ चारायणीयाः ८ वारायणीयाः ९ वार्त्तान्तवेयाः १० श्वेताश्वतराः ११ मैत्रायणीयाश्चेति १२ । तत्र मैत्रायणीया नाम सप्त भेदा भवन्ति । मानवाः १ दुन्दुभाः २ चैकेयाः ३ वाराहाः ४ हारिद्रवेयाः ५ श्यामाः ६ श्यामायनीयाश्चेति ७ । तेषामध्ययनमष्टौ शतम् । यजुःसहस्राण्यधीत्य शाखापारो भवति । तान्येव द्विगुणान्यधीत्य पदपारो भवति । तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति । षड़ङ्गान्यधीत्य षड़ङ्गविद्भवति । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि । तत्र प्राच्योदीच्यौ नैर्ऋत्यां निरुक्तेः । तत्र वाजसनेया नाम सप्तदश भेदा भवन्ति । जावालाः १ बौधेयाः २ काण्वाः ३ माध्यन्दिनाः ४ शापेयाः ५ तापायनीयाः ६ कापालाः ७ पौण्ड्रवत्साः ८ आवटिकाः ९ परमावटिकाः १० पाराशर्य्याः ११ वैधेयाः १२ वैनेयाः १३ औधेयाः १४ गालवाः १५ वैजवाः १६ कात्यायनीयाश्चेति १७ । प्रतिपदमनुपदं छन्दो भाषा धर्म्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि भवन्ति । उपज्योतिषम् १ आङ्गलक्षणम् २ प्रतिज्ञा ३ अनुवाक्यम् ४ परिसंख्या ५ चरणव्यूहम् ६ श्राद्धकल्पः ७ प्रवराध्यायश्च ८ शाल्बम् ९ क्रतुः १० संख्या ११ अनुगमः १२ यज्ञम् १३ पार्षदः १४ होमकम् १५ पञ्चवः १५ उक्थानि १७ कूर्म्मलक्षणम् १८ । इत्यष्टादशपरिशिष्टानि ।

"द्वे सहस्रे शते न्यूने मन्त्रे वाजसनेयके ।
इत्युक्तं परिसंख्यातमेतत् सकलं सशुक्रियम् ॥
ग्रन्थाश्च परिसंख्यातं ब्राह्मणञ्च चतुर्गुणम् ।
आद्यावारभ्य वेदान्तं अन्ययाञ्जलिपूर्व्वकम् ।
वेदमध्याय एतेषां होमान्ते तु समारभेत् ॥"

तत्र तैत्तिरीयका नाम द्विभेदा भवन्ति । औख्याः खाण्डिकेयाश्चेति । तत्र खाण्डिकेया नाम पञ्च भेदा भवन्ति । आपस्तम्बी १ बौधायनी २ सत्याषाढ़ी ३ हिरण्यकेशी ४ औधेयाश्चेति ५ । तत्र कठानामुपगानविशेषः । चतुश्चत्वारिंशदुपग्रन्थान् ।

"मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते ।
यजुर्व्वेदः स विज्ञेयोऽन्ये शाखान्तराः स्मृताः ॥"

यजुर्व्वेदस्य धनुर्व्वेद उपवेदः । यजुर्व्वेदस्य भारद्वाजगोत्रम् । रुद्रदैवत्यम् । त्रैष्टुभं छन्दः । यजुर्व्वेदः शुद्धः । दीर्घः । कपाली । ताम्रवर्णः । कमलनयनः । आदित्यवर्णः वर्णेन । पञ्चारत्निमात्रः । अस्य ध्यानम् ।

"वन्दे रौद्रं त्रैष्टुभं ताम्रवर्णं
भारद्वाजं कमलेक्षं सुशाङ्गम् ।
यजुर्व्वेदं दीर्घमादित्यवर्णं
कापालीनं पञ्च चारत्निमात्रम् ॥"

य इदं दैवतं रूपं गोत्रं प्रमाणं छन्दो वर्णं वर्णयति स विद्यां लभते स विद्यां लभते । जन्मजन्मनि वेदपारो भवति । जन्मजन्मनि वेदधारी भवति । अव्रतो व्रती भवति । अप्रयतः प्रयतो भवति । अब्रह्मचारी ब्रह्मचारी भवति । जातिस्मरो जायते । इति चरणव्यूहम् ॥ ( ऋक्सामभिन्नो मन्त्रविशेषः । इति केचित् ॥)

यजुर्व्वेदः, पुं, ( यजुरेव वेदः । यजुषां वेद इति वा ।) वेदविशेषः । तस्याधिपतिर्यथा,—

"ऋग्वेदाधिपतिर्जीवः सामवेदाधिपः कुजः ।
यजुर्व्वेदाधिपः शुक्रः शशिजोऽथर्व्ववेदराट् ॥"
इति ज्योतिषम् ॥

अस्य वक्ता वैशम्पायनः । स तु आदावेक एवासीत् । यथा,—

"ऋग्वेदश्रावकं पैलं जग्राह स महामुनिः ।
यजुर्व्वेदप्रवक्तारं वैशम्पायनमेव च ॥
जैमिनं सामवेदस्य श्रावकं सोऽन्वपद्यत ।
तथैवाथर्व्ववेदस्य सुमन्तुमृषिसत्तमम् ॥
एक आसीद्‌यजुर्व्वेदस्तञ्चतुर्धा व्यकल्पयत् ।
चातुर्होत्रमभूद्‌यस्मिंस्तेन यज्ञमथाकरोत् ॥
आध्वर्य्यवं यजुर्भिः स्यादृग्भिर्होत्रं द्विजोत्तमाः ।
उद्गात्रं सामभिश्चक्रे ब्रह्मत्वञ्चाप्यथर्व्वभिः ॥
ततः स ऋच उद्धृत्य ऋग्वेदं कृतवान् प्रभुः ।
यजूंषि च यजुर्व्वेदं सामवेदञ्च सामभिः ॥
एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा ।
शाखानान्तु शतेनाथ यजुर्व्वेदमथाकरोत् ॥
सामवेदं सहस्रेण शाखानाञ्च विभेदतः ।
अथर्व्वाणमथो वेदं बिभेद नवकेन तु ॥"
इति कौर्म्मे ४९ अध्यायः ॥

यज्ञः, पुं, इज्यते हविर्दीयतेऽत्र । (इज्यन्ते देवता अत्र इति वा । यज् + "यजयाचयतविच्छप्रच्छरक्षो नङ् ।" ३।३।९० । इति नङ् ।) यागः । तत्पर्य्यायः । मखः २ अध्वरः ३ यागः ४ सप्ततन्तुः ५ मखः ६ क्रतुः ७ । इत्यमरः ।२।७।१३॥ इष्टिः ८ इष्टम् ९ वितानम् १० मन्युः ११ आहवः १२ सवनम् १३ हवः १४ अभिषवः १५ होमः १६ हवनम् १७ महः १८ । इति शब्दरत्नावली ॥ स त्रिविधः । सात्त्विको राजसिकस्तामसिकश्च । सात्त्विकयज्ञो यथा,—

"अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥"

राजसिकयज्ञो यथा,—

"अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम् ॥"

तामसिकयज्ञो यथा,—

"विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥"
इति श्रीभगवद्गीतायाम् १७ अध्यायः ॥ * ॥

स च नानाविधः । यथा,—

"द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥"
इति श्रीभगवद्गीतायाम् ४ अध्यायः ॥ * ॥

पञ्च यज्ञा यथा,—

"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥"
इति मार्कण्डे ११५ अध्यायः ॥ * ॥

(तथाच मनुः । ४ । २१—२२ ।

"ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्व्वदा ।
नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत् ॥
एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः ।
अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥")

अपरपञ्चयज्ञा उक्ता यथा, शिवपुराणे वायुसंहितायामुत्तरभागे । १८ । ८९—१०६ ।

"कर्म्मयज्ञस्तपोयज्ञो जपयज्ञस्तदुत्तरः ।
ध्यानयज्ञो ज्ञानयज्ञः पञ्च यज्ञाः प्रकीर्त्तिताः ॥
कर्म्मयज्ञरताः केचित्तपोयज्ञरताः परे ।
जपयज्ञरताश्चान्ये ध्यानयज्ञरतास्तथा ॥
ज्ञानयज्ञरताश्चान्ये विशिष्टाश्चोत्तरोत्तरम् ।
कर्म्मयज्ञो द्विधा प्रोक्तः कामाकामविभेदतः ॥
कामात् कामी ततो भुक्त्वा कामासक्तः पुनर्भवेत् ।
अकामो रुद्रभवने भोगान् भुक्त्वा ततश्च्युतः ॥
तपोयज्ञरतो भूत्वा जायते नात्र संशयः ।
तपस्वी च पुनस्तस्मिन् भोगान् भुक्त्वा ततश्च्युतः ॥
जपध्यानरतो भूत्वा जायते भुवि मानवः ।
जपध्यानरतो मर्त्त्यस्तद्वैशिष्ट्यवशादिह ॥
ज्ञानं लब्ध्वा चिरादेव शिवसायुज्यमाप्नुयात् ।
तस्मान्मुक्तौ शिवाज्ञप्तः कर्म्मयज्ञोऽपि देहिनाम् ॥
अकामः कामसंयुक्तो बन्धायैव भविष्यति ।
तस्मात् पञ्चसु यज्ञेषु ध्यानज्ञानपरो भवेत् ॥
ध्यानं ज्ञानञ्च यस्यास्ति तीर्णस्तेन भवार्णवः ।
हिंसादिदोषनिर्मुक्तो विशुद्धश्चित्तसाधनः ॥
ध्यानयज्ञः परस्तस्मादपवर्गफलप्रदः ।
बहिः कर्म्मकरा यद्वन्नातीवफलभागिनः ॥
दृष्टा नरेन्द्रभवने तद्वच्चापि कर्म्मिणः ।
ध्यानिनां हि वपुः सूक्ष्मं भवेत प्रत्यक्षमैश्वरम् ॥
यथेह कर्म्मिणां स्थूलं मृत्काष्ठाद्यैः प्रकल्पितम् ।
ध्यानयज्ञरतास्तस्माद्देवान् पाषाणमृन्मयान् ॥
नात्यन्तं प्रतिपद्यन्ते शिवयाथात्म्यवेदनात् ।
आत्मस्थं यः शिवं त्यक्त्वा बहिरभ्यर्च्चयेन्नरः ॥
हस्तस्थं फलमुत्सृज्य लिहेत् कूर्परमात्मनः ।
ज्ञानात् ध्यानं भवेत् ध्यानाज्ज्ञानं भूयः प्रवर्त्तते ॥
तदुभाभ्यां भवेन्मुक्तिस्तस्मात् ध्यानरतो भवेत् ।
द्वादशान्ते तथा मूर्द्ध्नि ललाटे भ्रूयुगान्तरे ॥

यज्ञः यज्ञः

नासाग्रे वा तथास्ये वा कन्धरे हृदये तथा।
नाभौ वा शाम्भवस्थाने ध्यानाविष्टेन चेतसा॥
बहिर्य्यागोपचारेण देवं देवीञ्च पूजयेत्।
अथवा पूजयेन्नित्यं लिङ्गे वा हस्तकेऽपि वा॥
वह्नौ वा स्थण्डिले वाथ भक्त्या वित्तानुसारतः॥
अथवान्तर्बहिश्चैव पूजयेत् परमेश्वरम्।
अन्तर्य्यागरतः पूजां बहिः कुर्व्वीत वा न वा॥")
अस्योत्पत्तिर्यथा,—

ऋषय ऊचुः।

"कथं यज्ञवराहस्य देहो यज्ञत्वमाप्तवान्।
चैतात्वमगमन् पुत्रा वराहस्य कथं त्रयः।
तन्नोऽद्य श्रोष्यमाणानां कथयस्व महामते।॥

श्रीमार्कण्डेय उवाच।

शृणुध्वं द्विजशार्दूला यत् पृष्टोऽहं महाद्भुतम्।
यस्मिंस्तु देवास्तिष्ठन्ति यस्मिन् सर्व्वं प्रतिष्ठितम्॥
यज्ञेन ध्रियते पृथ्वी यज्ञस्तारयति प्रजाः।
अन्नेन भूता जीवन्ति पर्ज्जन्यादन्नसम्भवः॥
पर्ज्जन्यो जायते यज्ञात् सर्व्वं यज्ञमयं ततः।
स यज्ञोऽभूद्वराहस्य कायात् शम्भुविदारितात्॥
यथाहं कथये तद्वः शृणुध्वमवहिता द्विजाः।
विदारिते वराहस्य काये भर्गेण तत्क्षणात्॥
ब्रह्मविष्णुशिवा देवाः सर्व्वे च प्रमथः सह।
विष्णुजलात् समुद्धृत्य तच्छरीरं नभः प्रति॥
तद्विभेजुः शरीरन्ते विष्णोश्चक्रेण खण्डशः।
तस्याङ्गसन्धयो यज्ञा जातास्ते वै पृथक पृथक्॥
यस्माद्यस्माच्च ये यज्ञास्तान् शृणुध्वं महर्षयः।
भ्रूनासासन्धिना जातो ज्योतिष्टोमो महाध्वरः॥
हनुश्रवणसन्ध्योस्तु वह्निष्टोमो व्यजायत।
चक्षुर्भ्रुवोः सन्धिना तु व्रात्यष्टोमो व्यजायत॥
राजः पौनर्भवष्टोमस्तस्य पोत्रौष्ठसन्धिना।
वृहष्टोमवृहष्टोमौ जिह्वामूलादजायत॥
अतिरात्रं सवैराजमधोजिह्वान्तरादभूत॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥
स्नानं तर्पणपर्य्यन्तं नित्ययज्ञाश्च सर्व्वशः।
कण्ठसन्धेः समुत्पन्ना जिह्वातो विधयस्तथा॥॥
वाजिमेधो महामेधो नरमेधस्तथैव च।
प्राणिहिंसाकरा येऽन्ये ते जाताः पादसन्धितः॥
राजसूयोऽथ कारीरी वाजपेयस्तथैव च॥
पृष्ठसन्धौ समुत्पन्ना ग्रहयज्ञास्तथैव च॥
प्रतिलोमार्गयज्ञाश्च दानश्राद्धादयस्तथा।
हृत्सन्धितः समुत्पन्नाः सावित्रीयज्ञ एव च॥
सर्व्वेषां साधका यज्ञाः प्रायश्चित्तकराश्च ये।
ते मेढ्रसन्धितो जाता यज्ञास्तस्य महात्मनः॥
रक्षःसत्रं सर्पसत्रं सर्व्वञ्चैवाभिचारिकम्।
गोमेधो वृक्षजापश्च खुरेभ्यो ह्यभवन्निमे॥
मायेष्टिः परमेष्टिश्च गौघ्यतिर्भोगसम्भवः।
लाङ्गूलसन्धौ संजाता अग्निष्टोमस्तथैव च॥
नैमित्तिकाश्च ये यज्ञाः संक्रान्त्यादौ प्रकीर्त्तिताः।
लाङ्गूलसन्धौ ते जातास्तथा द्वादशवार्षिकम्॥
तीर्थप्रयोगसामौजयजुःसङ्कर्षणस्तथा।
आर्कमाथर्व्वणञ्चैव नाभिसन्धेः समुद्गताः॥
अश्चोत्कर्षः पैत्रयज्ञः पञ्चमार्गोऽतियोजनः।
लिङ्गसंस्थानयज्ञैश्च यज्ञा जाताश्च जानुनि॥
एवमष्टाधिकं जातं सहस्रं द्विजसत्तमाः॥
यज्ञानां सततं लोका यैर्भोगमश्नुतेऽद्यापि च।
सुगश्च पोत्रात् संजाता नासिकायाः स्रुवोऽभवत्॥
अन्ये स्रुकस्रुवभेदा ये ते जाताः पोत्रनासयोः।
ग्रीवाभागेन तस्याभूत् प्राग्वंशो मुनिसत्तमाः॥
इष्टापूर्त्तं यजुर्धर्म्मो जाताः श्रवणरन्ध्रतः।
दंष्ट्राभ्यो ह्यभवन् यूपाः कुशा रोमाणि चाभवन्॥
उद्गाता च तथाध्वर्य्युर्होता समिध एव च।
अग्रदक्षिणवामाङ्गपश्चात्पादेषु सङ्गताः॥
पुरोडाशाः सचरवो जाता मस्तिष्कसञ्चयात्।
ऊर्ध्वनेत्रयुगाज्जाता यज्ञकेतुस्तथा खुरात्॥
मध्यभागोऽभवद्वेदी मेढ्रात् कुण्डमजायत।
रेतोधारास्तथैवाज्यं स्वराञ्जमाः समुद्गताः॥
यज्ञालयः पृष्ठभागात् हृत्पद्मात् यज्ञ एव च।
तदात्मा यज्ञपुरुषो सुज्ञाः कर्णात् समुद्गताः॥
एवं यावन्ति यज्ञानां भाण्डानि च हवींषि च।
तानि यज्ञवराहस्य शरीरादेव चाभवन्॥
एवं यज्ञवराहस्य शरीरं यज्ञतामगात्।
यज्ञरूपेण सकलमाप्यायितुमिदं जगत्॥
एवं विधाय यज्ञन्तु ब्रह्मविष्णुमहेश्वराः।
सुप्तं कनकं घोरमासेदुर्यत्नतत्पराः॥
ततस्तेषां शरीराणि पिण्डीकृत्य पृथक् पृथक्।
त्रिदेवास्त्रिशरीराणि वधमब्जखवायुभिः॥
सुप्तस्य शरीरन्तु वधमब्जखवायुना।
स्वयमेव जगत्स्रष्टा दक्षिणाग्निस्ततोऽभवत्॥
कनकस्य शरीरन्तु चापयामास केशवः।
ततोऽभूद्गार्हपत्याग्निः पञ्चवैतानभोजनः॥
घोरस्य तु वपुः शम्भुश्चापयामास वै स्वयम्।
तत आहवनीयोऽग्निस्तत्रजात समजायत॥
एतैस्त्रिभिर्जगत् व्याप्तं त्रिमूलं सकलं जगत्।
एतत् यत्र त्रयं नित्यं तिष्ठति द्विजसत्तमाः।
समस्ता देवतास्तत्र वसन्त्यनुचरैः सह॥
एतद्धर्म्मपदं नित्यमेतदेव त्रयात्मकम्।
एतत् त्रयीविधिस्थानमेतत पुण्यकरं परम्॥
यस्मिन् जनपदे चैत वृत्यन्ति अयवक्षयः।
तस्मिन् जनपदे नित्यं चतुर्व्वर्गो विवर्द्धते॥
एतद्वः कथितं सर्व्वं यत् पृष्टं द्विजसत्तमैः।
यथा यज्ञवराहस्य देहो यज्ञत्वमाप्तवान्।
तथा च तस्य पुत्राणां देहाश्चैतात्वमागमन्॥"

इति कालिकापुराणे ३० अध्यायः॥*॥

ब्रह्मण आदियज्ञो यथा,—

पुलस्त्य उवाच।

"पूर्व्वमेव मया ख्यातं यदा स्वायम्भुवो मनुः।
जातः परमधर्म्मात्मा शतरूपापतिः स्वयम्॥
सदा प्रजापतिः पूर्व्वं सृष्टिकर्म्मण्ययोजयत्।
वत्स। त्वमेव संकल्पात् स्वयं सृष्टिं कुरु त्वय॥
स्वयं तु पुष्करं गत्वा कृत्वा यज्ञन्तु विस्तरम्।
ब्रह्मोद्गाता होताध्वर्य्युश्चत्वारो यज्ञवाहकाः।
एकैकस्य त्रयश्चान्ये परिवाराः स्वयं कृताः॥
एते वै षोडश प्रोक्ता ऋत्विजो वेदचिन्तकाः।
शतानि त्रीणि षड्भिश्च यज्ञाः सृष्टाः स्वयम्भुवा॥

भीष्म उवाच।

यज्ञस्य ब्रह्मणो विप्र! समाप्तिं वद साम्प्रतम्॥

पुलस्त्य उवाच।

मन्वन्तरे व्यतीते तु यज्ञस्यावभृथोऽभवत।
दक्षिणा ब्रह्मणा दत्ता प्राची होतुस्तु दक्षिणा॥
अध्वर्य्यवे प्रतीचीं तु उद्गातुश्चोत्तरा तथा।
त्रैलोक्यं सकलं ब्रह्मा ददौ तेषान्तु दक्षिणाम्॥
धनानाञ्च शतं सार्द्धं दातव्यं यज्ञसिद्धये।
अध्वर्य्यूणां सहस्राणि स्वेच्छया दानमिच्छति॥"

इति पाद्मे सृष्टिखण्डे ३१ अध्यायः॥*॥

ब्राह्मणादीनां स्वधर्म्मयज्ञा यथा,—

"आरम्भयज्ञाः क्षत्राः स्युर्हविर्यज्ञा विशः स्मृताः।
परिचारयज्ञाः शूद्रास्तु जपयज्ञास्तु ब्राह्मणाः॥"

इति मात्स्ये १२८ अध्यायः॥*॥

हिंसायज्ञस्य अधर्म्मजनकत्वं यथा,—

"तथा विश्वभुगिन्द्रस्तु यज्ञं प्रावर्त्तयत प्रभुः।
दैवतैः सह संहृत्य सर्व्वसाधनसंभृतम्॥
तस्याश्वमेधे वितते समाजग्मुर्महर्षयः।
महर्षयश्च तान् दृष्ट्वा दीनान् पशुगणांस्तदा॥
विश्वं भुजन्ते त्वपृच्छन् कोऽयं यज्ञविधिस्तव।
अधर्म्मो बलवानेष हिंसाधर्म्मेप्सया तव॥
न नः पशुवधस्त्विष्टस्तव यज्ञेश्वरोत्तम।।
अधर्म्मो धर्म्मघाताय प्रारब्धः पशुभिस्त्वया॥
नायं धर्म्मो ह्यधर्म्मोऽयं न हिंसा धर्म्म उच्यते।
आगमेन भवान् धर्म्मं प्रकरोतु यदीच्छति॥
विधिदृष्टेन यज्ञेन धर्म्मेणाव्ययहेतुना॥
एवं विश्वभुगिन्द्रस्तु ऋषिभिस्तत्त्वदर्शिभिः।
उक्तो न प्रतिजग्राह मानमोहसमन्वितः॥
तेषां विवादः सुमहान् जज्ञे इन्द्रमहर्षिणाम्।
जङ्गमैः स्थावरैः केन यष्टव्यमिति चोच्यते॥
ते तु खिन्ना विवादेन तथ्ययुक्ता महर्षयः।
सन्धाय वाक्यमिन्द्रेण पप्रच्छुः खचरं वसुम्॥

ऋषय ऊचुः।

महाप्राज्ञ कथं दृष्टस्तव यज्ञविधिर्नृप!।
उत्तानपादे! प्रब्रूहि संशयं नो नुद प्रभो!॥

सूत उवाच।

श्रुत्वा वाक्यं वसुस्तेषामविचार्य्य बलाबलम्।
वेदशास्त्रमनुस्मृत्य यज्ञतत्त्वमुवाच ह॥
यष्टव्यं पशुभिर्मेध्यैरथ मूलफलैरपि।
हिंसा स्वभावो यज्ञस्य इति मे दर्शनागमः॥
एवं कृतोत्तरास्ते तु युक्तात्मानं ततो धिया।
अवश्यं भाविनं दृष्ट्वा तमधो ह्यशपंस्तदा॥
इत्युक्तमात्रो नृपतिः प्रविवेश रसातलम्।
धर्म्माणां संशयच्छेत्ता राजा वसुरधो गतः॥

तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशयः ।
तस्मान्न हिंसा यज्ञस्य यदुक्तमृषिभिः पुरा ॥"
इति मात्स्ये ११६ अध्यायः ॥
तद्वैदिकपर्य्यायः । वेनः १ अध्वरः २ मेधः ४ विदथः ५ नार्य्यः ६ सवनम् ७ होत्रा ८ इष्टिः ९ देवताता १० मखः ११ विष्णुः १२ इन्दुः १३ प्रजापतिः १४ घर्म्मः १५ । इति पञ्चदश यज्ञनामानि । इति वेदनिघण्टौ । ३ । १७ ॥ (विष्णुः । यथा, महाभारते ।१३।१४९।११७।
"यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥")
यज्ञकृत्, त्रि, (यज्ञं करोतीति । कृ + क्विप् ।) यागकर्त्ता । (यथा, श्रीमद्भागवते ।४।४।७।
"तामागतां तत्र न कश्चनाद्रियद्-
विमानितां यज्ञकृतो भयाज्जनः ।
ऋते स्वसॄर्वै जननीञ्च सादराः
प्रेमाश्रुकण्ठ्यः परिषस्वजुर्मुदा ॥"
पुं, विष्णुः । यथा, महाभारते । १३ । १४९ । ११८ ।
"यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग् यज्ञसाधनः ॥")
यज्ञपशुः, पुं, (यज्ञार्थः पशुः ।) घोटकः । इति शब्दमाला ॥ (यथा, श्रीमद्भागवते । ४ । १९ । ११ ।
"चरमेणाश्वमेधेन यजमाने यजुष्पतिम् ।
वैण्ये यज्ञपशुं स्पर्द्धन्नपोवाह तिरोहितः ॥")
छागश्च ॥
यज्ञपुरुषः, पुं, (यज्ञरूपी पुरुषः ।) विष्णुः । इति हेमचन्द्रः । २ । १३ ॥ (यथा, श्रीमद्भागवते । २ । ७ । ११ ।
"सत्रे ममास भगवान् हयशीरषाथो
साक्षात् स यज्ञपुरुषस्तपनीयवर्णः ।
छन्दोमयो मखमयोऽखिलदेवतात्मा
वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥")
यज्ञभाजनं, क्ली, (यज्ञस्य भाजनम् ।) यज्ञपात्रम् । इति जटाधरः ॥
यज्ञभूषणः, पुं, (यज्ञं भूषयतीति । भूष + णिच् + ल्युः ।) श्वेतदर्भः । इति राजनिर्घण्टः ॥ (कुशमात्रम् । यथा, भावप्रकाशे पूर्व्वखण्डे प्रथमे भागे ।
"कुशो दर्भस्तथा बर्हिः सूच्यग्रो यज्ञभूषणः ।
ततोऽन्यो दीर्घपत्रः स्यात् क्षुरपत्रस्तथैव च ॥")
यज्ञयोग्यः, पुं, (यज्ञे योग्यः उचितः ।) उडुम्बरवृक्षः । इति राजनिर्घण्टः ॥ यागार्हे, त्रि ॥
यज्ञवल्ली, स्त्री, (यज्ञस्य वल्ली ।) सोमवल्ली । इति राजनिर्घण्टः ॥ (गुणादयोऽस्याः सोमवल्लीशब्दे ज्ञातव्याः ॥)
यज्ञवाटः, पुं, (यज्ञस्य वाटो मण्डपम् ।) यज्ञस्थानम् । इति हेमचन्द्रः ॥ (यथा, श्रीमद्भागवते । १० । २३ । ३३ ।
"इत्युक्ता मुनिपत्न्यस्ता यज्ञवाटं पुनर्गताः ।
ते चानसूयवः स्वाभिः स्त्रीभिः सत्रमपारयन् ॥")
यज्ञवृक्षः, पुं, (यज्ञस्य वृक्षः ।) वटीवृक्षः । इति राजनिर्घण्टः ॥ (विकङ्कतः । तत्पर्य्यायो यथा,
"विकङ्कतः स्रुवावृक्षो ग्रन्थिलः स्वादुकण्टकः ।
स एव यज्ञवृक्षश्च कण्टकी व्याघ्रपादपि ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
यज्ञश्रेष्ठा, स्त्री, (यज्ञे श्रेष्ठा ।) सोमवल्ली । इति राजनिर्घण्टः ॥
यज्ञसाधनः, पुं, (यज्ञं साधयतीति । सिध + णिच् + ल्युः ।) विष्णुः । इति महाभारते तस्य सहस्रनामस्तोत्रम् । १३ । १४९ । ११८ ॥ (यज्ञसाधके, त्रि । यथा, ऋग्वेदे । १।१४५।३।
"पुरुप्रैषस्ततुरिर्यज्ञसाधनः ।"
"यज्ञसाधनः यज्ञसाधकः तदायत्तत्वात् यज्ञस्य ।"
इति तद्भाष्ये सायणः ॥)
यज्ञसारः, पुं, (यज्ञे सारः उत्कृष्टः ।) यज्ञोडुम्बरवृक्षः । इति राजनिर्घण्टः ॥
यज्ञसूत्रं, क्ली, (यज्ञे धृतं सूत्रम् ।) यज्ञोपवीतम् । यथा,—
"पवित्रं यज्ञसूत्रञ्च यज्ञोपवीतमित्यपि ।
यज्ञसूत्रं तदेवोपवीतं स्याद्दक्षिणे भुजे ॥
उद्धृते वामबाहौ तु प्राचीनावीतमन्यतः ।
निवीतन्तु तदेव स्यात् कण्ठलम्बि ह्यवस्थितम् ॥"
इति जटाधरः ॥
तस्य प्रमाणं यथा,—
"ऊर्द्ध्वन्तु त्रिवृतं सूत्रं सधवानिर्म्मितं शनैः ।
तन्तुत्रयमधोवृत्तं यज्ञसूत्रं विदुर्बुधाः ॥
त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरसम्मितम् ।
शिरोधरान्नाभिमध्यात् पृष्ठार्द्धपरिमाणकम् ॥
यजुर्विदां नाभिमितं सामगानामयं विधिः ।
वामस्कन्धेन विधृतं यज्ञसूत्रं बलप्रदम् ॥"
इति कालिकापुराणे ४ अध्यायः ॥
अस्य धारणे मन्त्रो यथा —
"यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि ।"
इति संस्कारतत्त्वधृतभट्टभाष्यम् ॥
यद्वाम्नु,—
"यज्ञोपवीतं परमं पवित्रं
बृहस्पतेर्यत् सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं
यज्ञोपवीतं बलमस्तु तेजः ॥"
इति पशुपतिः ॥
युगभेदे तत्सूत्रनियमो यथा,—
"सत्ये स्वर्णमयं सूत्रं त्रेतायां राजतं तथा ।
द्वापरे ताम्रजं प्रोक्तं कलौ कार्पाससम्भवम् ॥"
इति ब्रह्माण्डमार्कण्डेयः ॥
अन्यच्च ।
"ब्रह्मार्थं धार्य्यते सूत्रं यज्ञं ब्रह्मायमिष्यते ।
स्वर्णं रौप्यं ताम्रमयं पट्टं कार्पासवार्क्षिकम् ॥
मृगाजिनं गृहं प्राज्ञो यथालभ्यं विधाय च ।
यज्ञसूत्रं परिचरेद्ब्रह्मचालिङ्गक्रियात्मकम् ॥
न तत्र नियमो यस्मात् सूत्रसामान्यमुच्यते ॥"
इति ब्रह्मादिव्यसंहिता ॥
यज्ञस्थानं, क्ली, (यज्ञस्य स्थानम् ।) यज्ञवाटः । इति जटाधरः ॥
यज्ञाङ्गः, पुं, (यज्ञं अङ्गति प्राप्नोतीति । अङ्ग + अच् ।) उडुम्बरः । इत्यमरः । २ । ४ । २२ ॥ (अस्य पर्य्यायो यथा,—
"यज्ञाङ्गो जन्तुवृक्षश्च हेमदुग्धोऽप्युडुम्बरः ॥"
इति वैद्यकरत्नमालायाम् ॥
"उडुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
खदिरवृक्षः । इति राजनिर्घण्टः ॥ ब्राह्मणयष्टिका । इति शब्दचन्द्रिका ॥ (यज्ञ एव अङ्गं यस्य । विष्णुः । यथा, महाभारते ।१३।१४९।११७ ।
"भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥"
यज्ञस्याङ्गमिति ।) यागावयवे यज्ञसाधने च क्ली ॥ (यथा, कुमारसम्भवे । १ । १७ ।
"यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमञ्च ॥")
यज्ञाङ्गा, स्त्री, (यज्ञमङ्गति प्राप्नोति या । अङ्ग + अच् । टाप् ।) सोमवल्ली । इति राजनिर्घण्टः ॥ (विवृतिरस्याः सोमवल्लीशब्दे ज्ञातव्या ॥)
यज्ञान्तः, पुं, (यज्ञस्य अन्तोऽवसानं यस्मिन् ।) अवभृथः । इति हेमचन्द्रः । ३ । ४९८ ॥ यागशेषश्च ॥ (यथा, महाभारते । १३ । १४९ । ११८ ।
"यज्ञान्तकृत् यज्ञगुह्यमन्नमन्नाद एव च ॥")
यज्ञारिः, पुं, (यज्ञस्य दक्षयज्ञस्य अरिर्नाशकः ।) शिवः । इति धनञ्जयः ॥ राक्षसश्च ॥
यज्ञिकः, पुं, पलाशवृक्षः । इति जटाधरः ॥ (अनुकम्पितो यज्ञदत्तः । "बह्वचो मनुष्यनाम्नष्ठज् वा ।" ५ । ३ । ७८ । इति ठच् । "ठाजादावूर्द्ध्वं द्वितीयादचः ।" ५।३।८३। इति प्रकृतेर्द्वितीयादच ऊर्द्ध्वस्य लोपः । यज्ञदत्तकः । इति काशिका ॥)
यज्ञियं, त्रि, (यज्ञमर्हतीति । यज्ञ + "यज्ञर्त्विग्भ्यां घखञौ ।" ५।१।७१। इति घः ।) यज्ञकर्म्मार्हम् । इत्यमरः । २।७।२७ ॥ (यथा, हरिवंशे । २९ । १६ ।
"ततो यज्ञविभागो हि यज्ञियैर्हि सुरैः पुरा ॥")
यज्ञाय हितम् । इति मुग्धबोधव्याकरणम् ॥ (यथा, मनुः । २ । २३ ।
"कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः ॥")
यज्ञियः, पुं, (यज्ञाय हितः । यज्ञ + घः ।) द्वापरयुगम् । इति त्रिकाण्डशेषः ॥ (खदिरवृक्षः । तत्पर्य्यायो यथा,—
"खदिरो रक्तसारश्च गायत्री दन्तधावनः ।
कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः ॥"
इति भावप्रकाशे पूर्व्वखण्डे प्रथमे भागे ॥
पलाशः । तत्पर्य्यायो यथा,—
"पलाशः किंशुकः पर्णो यज्ञियो रक्तपुष्पकः ।
क्षारश्रेष्ठो वातपोथो ब्रह्मवृक्षः समिद्वरः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

मैत्रं मृगशिरो मूला यात्रायामुत्तमाः स्मृताः ॥
भरणी कृत्तिकाश्लेषा विशाखा चोत्तरात्रयम् ।
मघा पशुपतिश्चैव यात्रायां मरणप्रदाः ॥

पूर्व्वे कुबेरं दहने निशाटे
यमे जलेशे पवने महेशे ।
त्याज्यं नरस्य प्रतिपत्क्रमेण
युग्मं तिथीनां प्रवदन्ति तज्ज्ञाः ।
स्यात् संमुखे यानमसुक्षयाय
पश्चाद्भवेन् सर्व्वशुभाय पुंसाम् ॥

सूर्य्यः शुक्रः कुजो राहुर्मन्दश्चन्द्रो गुरुर्ब्बुधः ।
अग्रतः शोभना यात्रा पृष्ठतो मरणं ध्रुवम् ॥

पूर्व्वेण नन्दं दक्षिणे यानपादं
रोहिण्यं तच्चार्य्यमाद्याश्च शूलम् ।
कामं यायात् साम्परायेषु कार्य्ये-
ष्वन्यदापि प्रेक्ष्य शूलानि भानि ॥”

तत्र दिक्शूलम् ।
“षष्ठ्यष्टमी चतुर्थी च नवमी द्वादशी तथा ।
चतुर्द्दशी कुहूस्त्याज्या यात्रायामशुभप्रदाः ॥
प्रायो जगुः स्वजयजन्मदशाय संस्थाः
पापाः शुभाः सविकलं परिमुच्य खस्थम् ।
सर्व्वगाः शुभफलं जनयन्ति सौम्या-
स्त्यक्तारिसंस्थममरारिगुरुं जिगीषोः ॥
नाकालवर्षविद्युत्स्तनिताब्दं कथञ्चिदपि यानम् ।
आसप्ताहात् दिव्यान्तरीक्षभौमैस्तथोत्पातैः ॥”

तत्र क्रमः ।
“राज्ञां यात्राविधिं वक्ष्ये जिगीषूणां परात्मनाम् ।
नीराजनाविधिं कृत्वा सैनिकाश्वगणेष्वतः ।
गजानश्वान् स्वकानन्यानिति यात्राक्रमो मतः ॥”

तत्र नीराजनाविधिः ।
“वर्षान्तेऽभ्युदिते शुक्रे चन्द्रे पूर्णे शुभग्रहे ।
अश्वनीराजनं कुर्य्यात् यथोक्तं ज्योतिषसत्तमैः ॥
उदीच्यां प्रस्थिते भानौ संक्रान्तौ वा शुभे दिने ।
गजनीराजनं कुर्य्यात् महीपालो जिगीषिवान् ॥
वृश्चिकस्थे रवौ कुर्य्यात् पत्तिनीराजनाविधिम् ।
नौकानीराजनं कुर्य्यात् दक्षिणाशां प्रतिस्थिते ॥
अन्येषाञ्चैव यानानां विजयादशमीतिथिम् ।
ध्वजादीनाञ्च सर्व्वेषां शक्रोत्थाने नीराजनम् ॥
छत्रस्य नवदण्डस्य तथा सिंहासनस्य च ।
गृहस्य नगरस्यापि महाविषुवसंक्रमे ॥
आत्मनो युवराजस्य महिष्या मन्त्रिणान्तथा ।
स्वजन्मदिवसे राजा कुर्य्यान्नीराजनाविधिम् ॥
अभिषेकदिनं प्रोक्तमेषां जन्मदिनं मया ॥”

तद्यथा,—
“अश्वानां भास्करो देवो रेवन्तमिति संज्ञया ।
गजानां देवता शक्रः पत्तीनां कालिका मता ॥
नौकानां वरुणो देवो यानानान्तु जयन्तकः ।
अस्त्राणां देवता रामो यमः खड्गस्य पूज्यते ॥
ध्वजानां हनुमान् पूज्यो हव्यस्तिरिति क्रमात् ।
तान् पूजयित्वा विधिवद्देवान्नीराजयेन्नृपः ॥
द्वादशमहिषैः पुष्टैश्चामरघण्टाखनादिभूषणैः ।
छागलैर्महिषद्विगुणैः पुरुषैस्तद्विगुणैश्चात्र दीपि-
काभिः ॥
भव्यं वा सप्तमांशुदिने नीराजयेद्राजा ।
द्वादशवाद्यै र्वचिरैः साङ्गोपाङ्गैरलङ्कृताङ्गैः ॥
तस्याह्नो चाश्वगजप्रतनीराजनं सम्भवति ।
छागलशतं वृषभशतं शतञ्च मेषाणाम् ॥
तुरगा दश छत्राणि यात्राः पञ्च द्विपश्चैकः ।
भल्लुका हि कुक्कुराश्चैकैकाः पत्तिजयकस्य ॥
नौकाशतकं साङ्गं नवदशकं काचनादिभि-
र्घटितम् ।
वेणुशतमपि जयतां नौकानीराजने राज्ञाम् ॥
यदा द्विपदं यानं सर्व्वतामिच्छति तुरगैः ।
सुदशाश्वतरयष्टिभिर्योग्याङ्गैर्योग्यवर्णैश्च ॥
अष्टाभिर्धातुभिः कुर्य्याद्ध्वजनीराजनाविधिम् ।
गजाश्वनरनौकाभिर्द्विगुणाभिर्यथोत्तरम् ।
रत्नैर्नानाविधैरन्नैर्धातुभिर्वसनैस्तथा ॥
सिंहासनेन योग्येन कुर्य्यान्नीराजनाविधिम् ।
गृहनीराजनाद्येवं नरस्याय निगद्यते ॥
श्वभिः खरैः शृगालैश्च वायेकचरैस्तथोद्धतैः ।
पुरं नीराजयेद्राजा चिरसम्पत्तिहेतवे ॥
श्वा दशाश्वतदर्द्धेन नरश्चैव तदर्द्धतः ।
व्याघ्रादीनां तथैकैकं रत्नं नानाविधन्तथा ॥
अन्नानि धातवश्चैव वस्त्राणि च फलानि च ।
वनजाः स्थलजाश्चैव जलजाश्चैव जन्तवः ॥
नवग्रहाश्च सूर्य्याद्याः प्रोक्ता, सप्त घटास्तथा ।
धान्यधातुसमायुक्ता नौकाखड्गध्वजास्तथा ॥
निजदेहमितं स्वर्णं रजतं ताम्रमेव वा ।
आत्मनीराजने दद्याद्यदिच्छेच्चिरसंस्थितिम् ॥
अस्त्रैर्नानाविधैः कुर्य्याद्युवराजनीराजनम् ।
अलङ्कारैश्च विविधैर्देवीनीराजनं मतम् ॥
मन्त्रिनीराजनं राजा छत्रेणैव समाचरेत् ॥
धर्म्मात्मानां मन्त्रिकाणां विप्राणां धनिनान्तथा ।
वस्त्रैर्नीराजनं कुर्य्यादिति भोजस्य सम्मतम् ॥
नीराजनाया वस्तूनि न पश्येन्न पुनः स्पृशेत् ।
सप्तकृत्वः परिभ्राम्य कुर्य्यान्नीराजनाविधिम् ॥
न्यसेद्वा परराष्ट्रेषु गहने वा जलेऽपि वा ।
दैवज्ञवैद्यदीनेभ्यः प्रयच्छेद्वा यथायथम् ॥
इति संक्षेपतः प्रोक्तो मया नीराजनाविधिः ।
अनेन विधिना राजा सुचिरं सुखमश्नुते ॥”

तथा हि गर्गः ।
“नीराजना महीन्द्राणां निघ्नन्ति विपदोऽखिलाः ।
सैव सन्नहनं राज्ञां कञ्चुकेनेव संयतः ॥
नीराजनाविन्दितानां न भयं विद्यते क्वचित् ।
नीराजनाविधिहीनानां नश्यन्तु सर्व्वसम्पदः ॥”

तथा च वाक्य ।
“ये भूमिपालाः प्रतिवत्सरान्त
कुर्व्वन्ति नीराजनकर्म्म सम्यक् ।
तेषां न लक्ष्मीः व्ययतामुपैति
साम्राज्यलक्ष्मीः करगैव तेषाम् ॥
एवं नीराजनं कृत्वा राजा प्रस्थानमाचरेत् ॥”

इति नीराजनाविधिः ॥ * ॥

अथ यात्रा ।
“गुणातिशयसम्पन्नः प्रभुं यायाज्जिगीषया ।
यदि पश्चात् प्रकोपो न यदि राष्ट्रे न कण्टकाः ॥
संश्रायान्यत्र यायाद्वा पार्ष्णिग्राहेण शत्रुणा ॥

रात्रावुलूको विनिहन्ति काकान्
काकोऽप्युलूकान् रजनीव्यपाये ।
इति स्वकालं समुदीक्ष्य यायात्
काले फलन्तीह समीहितानि ॥

प्रबलव्यसनोपेतं दुर्भिक्षादिप्रपीडितम् ।
समन्तान्तरकोपितं न यायात् पृथिवीपतिः ॥
निजदेवानुकूल्ये हि प्रातिकूल्ये परस्य च ।
यायान्नृपो यतो दैवं बलमेतत् परं मतम् ॥”

अन्यत्र तु ।
“निरातङ्के निरुत्पाते निर्वह्नौ निरामये ।
विपक्षे जयमिच्छन्ति राजानो विजिगीषवः ॥”

इति युक्तिकल्पतरुः ॥

शुभयात्रायामङ्गलदर्शनं यथा,—
“तस्य निर्गच्छतो गेहात् वामोऽस्य सुखतो-
ऽभवत् ।
ध्वजे चरोह कापोतः शिवा श्यामा च
दक्षिणा ॥
पिङ्गला चञ्चुगोधा च शूकरी कैवलः तथा ।
गजवाजरसैनाजशिखिविच्छिकाश्च पायसः ॥
पद्मं विभिन्दते सर्पः कुम्भोदकं व्यपोह्यत ।
कराय वानरो जलो मार्ज्जारो ध्वनिभैरवम् ॥
तैलतक्रलवणकेशयुक्ताभ्यक्तादिदर्शनम् ।
वामोऽथ जम्बुकस्तु त्वाममकलं रवम् ॥
तुषकार्पासवपाणां भिन्दितानाञ्च दर्शनम् ।
रक्ताम्बरधरो मुण्डः पङ्कामिषं तथा वसा ॥
ललाटे शक्रचाप उल्कापातध्वजाकथाः ।
दिशां दाहमथोकम्पाः सरजः कलुषं नभः ॥
निलीयन्तेऽपते भानुर्नद्यः प्रतिमुखावहाः ।
उष्णोदकं महाकूपे शरत्सु दीर्घिकासु च ॥
अकालविकृतिः पुष्पफलानामभ्रभूरुहाम् ।
शीत उष्णविपर्य्यासो मेघनादाश्च दारुणाः ॥
आरण्यसत्त्वा ग्रामेषु ग्रामजारण्यवासिनः ।
क्रोष्ट्रसर्पमण्डूकाश्च शशश्वानः पिपीलिकाः ॥
रुदन्ती महती सेना मृगाश्वाश्च तथैव च ।
यते च पुरप्राकारे निपतन्त्युत्पतन्ति च ॥
दुर्गन्धः शार्करो वायुर्दीनो योधा हतप्रभाः ।
शकृन्मूत्राश्रुपातानि गजा अश्वाः प्रचक्रिरे ।
ध्वजच्छत्रपताकानां स्फुटनं दण्डभिन्दनम् ।
कलङ्कमसि चक्रे च हता दुन्दुभिरेव च ॥
व्यालताकूटनचापि नाराचानाञ्च कुञ्चता ।
गदानां मुद्गराणाञ्च शीर्णता त्वनुभिन्दता ॥
शुष्कप्ररोहणञ्चार्द्रपातश्चैव च ।
प्रतिमारुदितं स्वेदो ज्वलकानाञ्च अज्वलनम् ॥
गवां रासभमारोहः क्षीणाश्च वज्रपातता ।
अलीकत आविष्कारादि व्यत्यार्विशिप्रशोभनम् ।
बालानां धावनं युद्धे निःश्रीकाः सकलाः प्रजाः ।
मक्षिकादंशमत्कुणकुरीनासदर्शनम् ॥
निस्तेजा न वर्द्धतेऽग्निः सधूमः स्फुटते मुहुः ॥
एवंविधान् तथोत्पातान् दृष्ट्वा घोरान् वासव ।
पप्रच्छ नारदं सोऽथ किमेतदिहतं दिव । ॥”

इत्याद्ये देववतारे घोरवधाध्यायः ॥

अथ द्वादश यात्रा ।
"प्रणम्य जगतां नाथं कलिकल्मषनाशनम् ।
द्वादशयात्रामाहात्म्यानि वक्ति श्रीरघुनन्दनः ॥"
तत्रादौ द्वादशयात्राकालस्य सुखोपादेयत्वात्
आदौ स एव निरूप्यते । तद्यथा स्कन्दपुराणे ।
इन्द्रद्युम्न उवाच ।
"वैशाखादिषु मासेषु यात्रापूजाविधिं मुने ! ।
श्रोतुमिच्छामि देवेशे यथावद्वक्तुमर्हसि ॥
जैमिनिरुवाच ।
वैशाखादिषु मासेषु देवदेवस्य शार्ङ्गिणः ।
या या द्वादश यात्राः स्युस्ता हि वक्ष्यामि ते
शृणु ॥
वैशाखे चान्दनी यात्रा ज्यैष्ठे स्नापन्युदीरिता ।
आषाढे रथयात्रा स्यात् श्रावणे शयनी तथा ॥
भाद्रे दक्षिणपार्श्वीया आश्विने वामपार्श्विका ।
उत्थानी कार्त्तिके मासि छादनी मार्गशीर्षके ॥
पौषे पुष्याभिषेकः स्यान्माघे शाल्योदनी तथा ।
फाल्गुने दोलयात्रा स्याच्चैत्रे मदनभञ्जिका ॥
एकैका मुक्तिदा सर्व्वा धर्म्मकामार्थसाधना ॥"
अथ यात्राविधिः । स्कान्दे ।
"वैशाखस्य सिते पक्षे तृतीयाक्षयसंज्ञिता ।
तत्र मां लेपयेद्गन्धलेपनैरतिशोभनैः ॥
वैशाखस्यामले पक्षे तृतीया पापनाशिनी ।
अयमाविष्कृता चैषा प्राजापत्यर्क्षसंयुता ॥
यः पश्यति तृतीयायां कृष्णं चन्दनभूषितम् ।
वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम् ॥
वैष्णवा जयशब्देन पूजयित्वा सदा हरिम् ।
नानास्तोत्रनिवहैर्व्विविधैः संस्तुवन्ति च ॥
वेणुवीणादिवाद्यैश्च तथा नानोपचारकैः ।
सन्तोषयन् जगन्नाथं तृतीयादौ विलेपयेत् ॥
वैशाखस्य तृतीयायां जलमध्ये विशेषतः ।
लेपनं मण्डपे कुर्य्याज्जलके वा ह्रदहदे ॥
चन्दनागुरुह्रीवेरं कुष्ठकुङ्कुमरोचना ।
जटामांसी मुरा चैव विष्णोर्गन्धाष्टकं विदुः ॥
एतैर्गन्धैस्तथान्यैश्च विष्णोर्गात्राणि लेपयेत् ।
शतञ्च तुलसीकाष्ठं कुर्य्याल्लेपनकर्म्मणि ॥"१॥
अथ स्नानयात्रा । स्कन्दपुराणे ।
"ज्यैष्ठामध्यावसीतांशं पूर्णयं जगदाकरम् ।
तस्याश्च स्नापनं कार्य्यं महास्नानविधानतः ।
तस्यां प्रातःस्नानकाले नयन्ता पश्यन्ति माम् ।
रामं सुभद्रां सुस्नाप्य मम लोकमवाप्नुयात् ॥"
तथा ।
"मासि ज्यैष्ठे तु संप्राप्ते नक्षत्रे शक्रदेवते ।
पौर्णमास्यां हरेः स्नानं सर्व्वकामफलप्रदम् ॥
सर्व्वतीर्थमयः कूपस्तदास्ते निर्म्मलः शुचिः ।
तदा भोगवती तत्र प्रत्यक्षं भवति द्विजाः ॥
तस्मात् ज्येष्ठ्यां समुद्धृत्य सोमाद्यैः कलसैर्जलैः ।
स्नापयन्ति तदा कृष्णं मखनं तं जनायुषम् ॥
जन्माहनि हरेः स्नानमुत्सवं परमाद्भुतम् ।
उत्सवो वै न हीयेत तस्मात्तद्यत्नतश्चरेत् ॥
जननी च यकारादिस्तान्यत्रयात्रा प्रतिष्ठिता ।
ज्येष्ठस्नानं भगवतो ये पश्यन्ति मुदान्विताः ॥
न ते भवाब्धौ मज्जन्ति यात्रायां यममानवाः ।
ज्येष्ठे च स्नपनं कुर्य्यात् श्रीविष्णोर्जन्मवासरे ॥
दैनन्दिनन्तु दुरितं पञ्चमासनिवर्हणम् ।
ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च ॥
स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च ।
कोटिकोटिसहस्राणि क्षुद्रपापानि यानि च ॥
सर्व्वाण्येव प्रणश्यन्ति पौर्णमास्यान्तु वासरे ।
पुरुषसूक्तमन्त्रेण पावमान्या तथैव च ॥
नारिकेलोदकेनाथ तथा तालफलाम्बुना ।
पञ्चामृतैः शीततोयैः कर्पूरवासितैः ॥
यवोदकेन शुद्धेन तथा पुष्पोदकेन च ।
स्नापयित्वा जगन्नाथं पूजयेत् परमेश्वरम् ॥
ॐ वं घण्टायै नमः इति घण्टावाद्यं निवेदयेत् ।
य एवं कुरुते विद्वान् ब्राह्मणः क्षत्रियः शुचिः ।
सर्व्वपापैः प्रमुच्येत विष्णुलोकं स गच्छति ।
चतुर्द्दश्यां दृढं मञ्चं कारयित्वा सुशोभनम् ॥
सुगन्धिधूपसुरभिं चन्दनाम्भःसमुक्षितम् ।
एवं मञ्चं प्रतिष्ठाप्य कलसानधिवासयेत् ॥
सुवासितं जलपूर्णं पावकं कलसं न्यसेत् ।
जयशब्दैश्च स्तुतिभिर्नीयते जगदीश्वरः ॥
जयस्व राम कृष्णेति जयभद्रेति चोदिते ।
नीयते मञ्चदेशन्तु निर्घोषे मङ्गलादिभिः ॥"
अथ रथयात्रा । स्कन्दपुराणे ।
"गुण्डिकाख्यां महायात्रां प्रकुर्व्वीयाः क्षिती-
श्वर ! ।
आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ॥
तस्यां रथे समारोप्य रामं मां भद्रया सह ।
यात्रोत्सवं प्रवृत्ताय प्रीणयेच्च द्विजान् बहून् ॥
ऋक्षाभावे तिथौ कार्य्या सदा सा प्रीतये मम ।
सप्ताहं वरितस्तीरे मम यात्रा भविष्यति ॥
अष्टमे दिवसे सर्व्वान् रथान् माल्यैर्व्विभूषयेत् ।
नवम्यामानयेद्देवालयेषु प्रीतः सलक्षिदाम् ॥
दक्षिणाभिमुखी यात्रा विष्णोरेषा सुदुर्लभा ।
यथा पुण्या तथा चेयं ते हे मुक्तिप्रदायिके ॥
अष्टाहे विश्वलेत्सक्तं तदर्द्धेन तु पार्थसीम् ॥"
इतिवत् तिथिना एकाष्टो बोद्धव्यः ।
"तिथिरेकेन दिवसचान्द्रमानेन कीर्त्तितः ॥"
इति विष्णुधर्म्मोत्तरात् ॥
यत्तु ।
"आषाढस्य सिते पक्षे भद्रा वा पुष्यसंयुता ।
यात्रोत्सवं प्रकुर्व्वीयात्तदभावे पुष्य एव हि ॥"
इति ईश्वरसंहितायां वचनान्तरम् ॥
तद्वैकल्पिकप्रयोगान्तरविधायकम् । पाद्मे ।
"आषाढस्य द्वितीयायां रथं कुर्य्याद्विशेषतः ।
आषाढशुक्लैकादश्यां चपहोममहोत्सवम् ॥
नातः परं हि तत्रास्य यात्रान्तरमपेक्षते ।
अथ स्वयं त्रिलोकेशः स्यन्दनेन कृतक्षणात् ॥
नाशयन् सर्व्वपापानि वर्षे वर्षे व्रजेदसौ ।
रथस्थितं व्रजन्तं तं महावेदीमहोत्सवे ॥
ये पश्यन्ति मुदा भक्त्या वासस्तेषां हरेः पदे ।
सत्यं सत्यं पुनः सत्यं प्रतिज्ञातं द्विजोत्तमाः ॥
नातः श्रेयःपदो विष्णोरुत्सवः प्राक्तनात्तः ।
रथयात्रैव यात्रायां मुख्यत्वाच्च प्रजापतिः ॥
महावेदीं व्रजन्तं तं रथस्थं पुरुषोत्तमम् ।
बलभद्रं सुभद्राञ्च दृष्ट्वा मुक्तिर्न चान्यथा ॥
आषाढस्य सिते पक्षे दिने विष्णोः शुभप्रदे ।
प्रतिष्ठाप्य सन्धृत्य विधिना पूर्व्ववद्द्विजाः ॥
रथं नरो हरेः कुर्य्यात् स्वायनं सुपरिष्कृतम् ।
भूषयेद्विविधैर्भक्त्या वस्त्रालङ्कारमाल्यकैः ॥
मृदङ्गपणवाद्यैश्च भेरीढक्कादयस्तथा ।
नटनर्त्तकमुख्याश्च गायना बहवस्तथा ॥
वेश्या यौवनदर्पाढ्या रूपालङ्कारभूषिताः ।
ध्वजाश्च बहवस्तत्र पताकाधिष्ठिताम्बराः ॥
गरुडञ्च ध्वजं कुर्य्यात् रक्तचन्दनमिश्रितम् ।
दीर्घनासं पीतदेहं कुण्डलाभ्यां विभूषितम् ॥
चतुरष्टभुजगं सर्व्वालङ्कारभूषितम् ।
देव्याः पद्मध्वजं कुर्य्यात् पद्मकाष्ठविनिर्म्मितम् ॥
सप्तच्छदमयं कुर्य्याद्रोहिणो लाङ्गलध्वजम् ।
सारथिं वाजिनश्चैव बलं बलसुदान्वितम् ॥
चीरकैर्म्मञ्जलैर्दाम्भैर्व्विलिखग्नैः सुशोभनम् ।
इत्थं सुघटितं तस्तु रथं देवत्रयस्य च ॥
अरुणोदयवेलायां देवं तस्मात् प्रपूजयेत् ।
ब्राह्मणैर्व्वैष्णवैः सार्द्धं यतिभिश्च तपस्विभिः ॥
विज्ञापयेद्देवदेवं यात्रार्थे स कृताञ्जलिः ।
ततः कर्पूरपर्णैश्च सुमनोभिरथाकिरन् ॥
पथि शोभनसूक्तानि प्रपठन्ति द्विजातयः ।
केचिच्च मङ्गलगाथाश्च केचिज्जय जयेति च ॥
जितन्तु इति मन्त्रं वै केचित् पुण्यं जपन्ति च ।
सूतमागधमुख्याश्च कीर्त्तिं कार्ष्णीं मुदा जगुः ॥
चर्च्चरीझर्झरीवेणुवीणामाधुरिकादयः ।
शब्दायन्ते सुमधुरं गोविन्दविजयान्तरे ॥
एवं प्रवृत्ते समये कृष्णं रामपुरःसरम् ।
नयन्ति विप्रा भक्ताश्च क्षत्रियाश्च विशस्तथा ॥
करे धृत्वा जगन्नाथं भ्रामयित्वा रथत्रयम् ।
रामं भद्राञ्च कृष्णञ्च रथमध्ये निवेशयेत् ॥
पूजयेदुपचारैस्तैः महाभाक्तसुसंयतः ।
रथच्छायां समाक्रम्य अज्ञहत्यां व्यपोहति ॥
तद्देशसंसक्तनुस्तथैव पापसंहतिम् ।
यथाम्बुदृढितिस्तेन स्वर्गज्ञाखानजं फलम् ॥
ये प्रयासं प्रकुर्व्वन्ति तेऽपि मोक्षमवाप्नुयुः ।
अनुगच्छन्ति ये कृष्णं ते देवत्वमिवप्नुवाः ॥
वेदैः स्तुवन्ति वेदानां वक्तारो मोक्षभागिनः ।
इतिहासपुराणाद्यैः स्तोत्रैर्व्वापि सुसंस्कृतैः ॥
स्तुवन्ति पुण्डरीकाक्षं ये वै विगतकल्मषाः ।
ते वै जयन्ति पापानि जयशब्दैः स्तुवन्ति ये ॥
नर्त्तनं कुरुते चापि गायन्त्यथ नरोत्तमाः ।
वैष्णवोत्तमसंसर्गान्मुक्तिं प्राप्नोत्यसंशयम् ॥
नामानि कीर्त्तयिष्यन्ति न ते यान्ति यमालयम् ॥
जयस्व रामकृष्णेति जयभद्रेति यो वदेत् ।
न मातृगर्भे जातोऽस्य स च देवत्वमाप्नुयात् ॥
चामरैर्व्यजनैः पुष्पैः स्वसकैर्न्नीलचेलकैः ।
रथस्थाये स्थितो यो वै वीजयेत् पुरुषोत्तमम् ॥
संवीज्यमानोऽप्सरोभिर्देवगन्धर्व्वयोषिताम् ।
सुदृक्ते तु भोगानखिलान् यावदाभूतसंप्लवम् ॥

स्नानः परतरो लोके महावेदीमहोत्सवात् ।
सर्व्वपापहरो योगः सर्व्वतीर्थफलप्रदः ॥
तमुद्दिश्य ये तत्र दानं ददति वै नराः ।
यत्किञ्चिदप्यफलं मेरुदानेन संमितम् ॥
गुण्डिकामण्डपे यान्तं भद्राकृष्णं सहाग्रजम् ।
तथा जगन्नाथं दर्पणेष्वभिषेचयेत् ॥
पञ्चामृतैः शीततोयैः पुष्पकर्पूरवासितैः ।
नारिकेलजलेनाथ तथा तालफलाम्बुना ॥
इक्षोदकेन शुद्धेन तथा पुष्पोदकेन च ।
सर्व्वाङ्गमनुलिम्पेच्च चन्दनेन्दुमदद्रवैः ॥
सुगन्धिमाल्याभरणैर्धौतचेलैः सुशोभनैः ।
चामरैश्च जलार्द्रैश्च शीतलैर्व्यजनैस्तथा ॥
वीजयेत् पुण्डरीकाक्षं सुभद्रां बलमेव च ।
सिताभिः पानकैर्हृद्यैस्तथा खण्डविकारकैः ॥
खर्ज्जूरैर्नारिकेलैश्च नानारम्भाफलादिभिः ।
तथा क्षीरविकारैश्च पनसैरिक्षुभिस्तथा ॥
वासितैः शीततोयैश्च गन्धताम्बूलपत्रकैः ।
सकर्पूरलवङ्गाद्यैः पूजयेत् परमेश्वरम् ॥
रथस्थितं देवत्रयं ये पुरुषर्षभाः ।
प्रदक्षिणं प्रकुर्व्वन्ति चित्ततःसम एव च ॥
ततोऽपराह्णे देवेशं दक्षिणाभिमुखीकृतम् ।
शनैः शनैर्नयेद्विष्णुं मण्डपस्य च सम्मुखे ॥
एवं व्रजति देवेशे सूर्य्यश्चास्तं गतोऽभवत् ।
दीपकानां सहस्राणि ज्वालितानि नरैस्ततः ॥
मण्डपे वासयेद्देवान् गुण्डिकाख्ये मनोहरे ।
चारुचन्द्रातपे चारुमाल्यचामरभूषिते ॥
पूजयित्वा जगन्नाथं तोषयेत् गीतनृत्यकैः ।
उपचारादिभिस्तत्र सप्ताहानि जनार्द्दनम् ॥
सप्ताहं ये प्रपश्यन्ति गुण्डिकामण्डपे स्थितम् ।
सार्द्धं रामं सुभद्राञ्च विष्णुसायुज्यमाप्नुयात् ॥
दिवा तद्दर्शनं पुण्यं रात्रौ दशगुणं भवेत् ।
यत्किञ्चित् कुरुते कर्म्म कोटिकोटिगुणं भवेत् ॥
सर्व्वं मेरुसमं दानं सर्व्वे व्याससमा द्विजाः ।
महावेद्यां गते कृष्णे योगोऽयं खलु दुर्लभः ॥
अर्द्धोदयादयो योगाः स्कन्देन परिभाषिताः ।
महावेद्याख्ययोगस्य कलां नार्हन्ति षोडशीम् ॥
अष्टाहे च पुनः स्नात्वा दक्षिणाभिमुखान्वयात् ।
दक्षिणाभिमुखी यात्रा विष्णोरेषा प्रकीर्त्तिता ॥
कार्य्या प्रयत्नतः सा हि भुक्तिमुक्तिप्रदा भवेत् ।
दक्षिणाभिमुखं यान्तं कृष्णं पश्यन्ति ये नराः ॥
न तेषां पुनरावृत्तिः सत्यमेतन्न संशयः ।
पुराविदो वदन्त्येतां यात्रां नवदिनात्मिकाम् ॥
तस्याः संकीर्त्तनादेव निर्म्मलो जायते नरः ।
तावतीयं महायात्रा यो यथा कर्त्तुमिच्छति ॥
सोऽपि विष्णुप्रभावेन वैकुण्ठभवनं व्रजेत् ।
उद्धृत्य सप्तपुरुषान् पापावलिसमन्वितान् ॥”४॥
अथ शयनयात्रा । स्कान्दे ।
“आषाढे शुक्लद्वादश्यां कुर्य्यात् शयनमहोत्सवम् ।
मण्डपे रचयेत्तत्र शयनागारमुत्तमम् ॥
देवस्य पुरतः शय्यां रत्नादिनिर्म्मितोपरि ।
आस्तीर्य्य मृदुपिच्छादि मृदुचीनोत्तरच्छदाम् ॥
कर्पूरधूलिविच्छिन्नां साधुचन्द्रातपां शुभाम् ।
पुष्पगन्धयुतां मुक्तारञ्जितां चन्दनाङ्किताम् ॥
साधुहारां शुभां स्निग्धां नानाचित्रोपशोभिताम् ।
एवं स्वापनकं कृत्वा निशीथे स्वापयेद्विभुम् ॥
संपूज्य भावयेद्देवं शेषे लक्ष्म्यादिभिः सह ।
एह्येहीति च संप्रार्थ्य स्वापार्थं परमेश्वरम् ॥
नयेच्छय्यागृहद्वारं वासयेत् घटिकात्रयम् ।
पञ्चामृतैः स्नापयेत्तान् पृथक्पलशताधिकैः ॥
सुगन्धिचन्दनैर्लिप्तान् वस्त्रालङ्करणादिभिः ।
पूजयित्वा यथान्यायं प्राञ्जलिर्मन्त्रमुच्चरेत् ॥”
जगद्वन्द्य इत्यादि ।
“सुदृढं कारयेद्द्वारं विष्णोः शयनवेश्मनः ।
स्नापयित्वा जगन्नाथं लभते सुखमुत्तमम् ॥”५॥
अथ पार्श्वपरिवर्त्तनयात्रा ।
“अथ ते संप्रवक्ष्यामि पार्श्वस्य परिवर्त्तनम् ।
नभस्यविमले पक्षे संप्राप्ते हरिवासरे ॥
विष्णोः स्वापगृहद्वारं शनैर्गत्वा प्रविश्य च ।
नमस्कृत्य जगन्नाथं पर्य्यङ्कशायितं मुदा ॥
अपवार्य्य शनैर्द्वारं पूजयेदुपचारकैः ।
प्रणम्य भक्त्या तत्पादौ स्वापयेदुत्तरामुखम् ॥”
मन्त्रञ्चेमं पठेत् ।
“ॐ देवदेव ! जगन्नाथ ! कल्याणं परिकल्पय ।
परिवृत्तमिदं सर्व्वं यथा स्थावरजङ्गमम् ॥
यत् दृष्ट्वा चेष्टितैरेव जायन्त्यप्रसुप्तिभिः ।
जगन्नाथ सुप्तोऽसि पार्श्वेन परिवर्त्तय ॥
परिवर्त्तनकालोऽयं जगतः पालनाय ते ।
त्वद्भक्तोऽयं शक्रोऽपि भजे तिष्ठन् नमस्तुतः ।
इदं त्वत्पादकमलं विसृज्य नाहं तज्जगम् ।
मह्यौ जलं स्रावयति प्रजापालनहेतुकम् ॥
इति संप्रार्थ्य देवेशं विनयाल्लोडयेत्ततः ।
व्यजनैश्चामरैश्चैव वीजयेत् परमेश्वरम् ॥
सुगन्धिचन्दनैरस्य सर्व्वाङ्गं परिलेपयेत् ।
स्वादूनि भक्ष्यद्रव्याणि पायसादीनि दापयेत् ॥
शय्यागृहद्वारि विभोः शनैर्भक्त्या निवेदयेत् ।
देवमुद्दिश्य यत् कुर्य्यात् सर्व्वमक्षयतां व्रजेत् ॥
पार्श्वे च जन्मदिवसे उपवासपरो भवेत् ॥”
एवं आश्विनशुक्लैकादश्यां पूर्व्वोक्तविधानेन श्रीकृष्णस्य वामपार्श्वपरिवर्त्तनं कार्य्यम् ।
मतान्तरे ।
“शुभे चैवाश्विने मासि महामायां प्रपूजयेत् ।
सौवर्णीं राजतीं मार्त्तीं विष्णुमायां महेश्वरीम् ।
हिंसा चैव न कर्त्तव्या कदाचिद्विष्णुपूजकैः ॥”६॥
अथोत्थानयात्रा ।
“एकादश्यान्तु कार्त्तिक्यां शुक्लायां पृथिवीपते ।
तथासुत्थापयेद्भक्त्या पूजयित्वा जगद्गुरुम् ।
पूर्व्ववत् पूजयित्वा तु प्रातर्मन्त्रं समुच्चरेत् ॥”
मन्त्रस्तु ।
“ॐ उत्तिष्ठ देवदेवेश ! तेजोराशे जगत्पते ! ।
मोहैतत् सकलं देव ! प्रसुप्तं तव मायया ॥
प्रफुल्लपुण्डरीकाक्ष ! श्रीहरे ! शयनेन वै ।
त्वया हृष्टं जगदिदं परमं सुखमेष्यति ॥
ये ते स्मार्त्ताः क्रियाः सर्व्वाः प्रवर्त्तन्ते ततो ध्रुवम् ।
इत्युत्थाप्य जगन्नाथं वेणुवीणादिनिःस्वनैः ॥
जयशब्दैस्तथा देवं नयेयुर्नृत्यमण्डपम् ॥
तैलेनाभ्यज्य तोयेन स्नापयेत् पुरुषोत्तमम् ।
पश्चान्नारिकेलरसैः फलरसैस्तथा ॥
सुगन्धामलकेनाथ यवकल्केन लेपयेत् ।
घर्षयेत्तत्तथा चूर्णैर्लेपयेन्मृगचन्दनैः ॥
पुष्पवासिततोयैश्च कुङ्कुमोदकैस्तथा ।
स्नापयित्वा क्षयेत् पापं बहुजन्मोपपादितम् ॥
महोपचारैः संपूज्य विष्णुं नीराजयेत्ततः ।
कृताञ्जलिपुटो भूत्वा प्रार्थयेत् परया मुदा ॥”७॥
अथ प्रावरणयात्रा ।
“मार्गशीर्षे सिते पक्षे कुर्य्यात् प्रावरणोत्सवम् ।
कृत्वा दृष्ट्वा नरो भक्त्या वैष्णवं लोकमाप्नुयात् ॥
षष्ठ्यामधिवासं कुर्व्वीत पञ्चम्यां निशि कर्म्मवित् ।
प्रभाते मण्डलं कुर्य्यात् पद्ममष्टदलान्वितम् ॥
दिक्पालान् पूजयेद्दिक्षु क्षेत्रपालं गणाधिपम् ।
चक्रप्रचण्डौ च बहिश्चतुर्दिक्षु प्रपूजयेत् ॥
तन्मध्ये स्थापयेद्वस्त्रं क्षालयेदुष्णवारिणा ।
पूजयित्वा जगन्नाथं गन्धतैलेन दीपकम् ॥
दत्त्वा कृष्णाय भक्त्या तु गीतवाद्यैर्नयेन्निशाम् ।
प्रातः प्रपूजयेद्देवं नानाद्रव्यैः सुशोभनैः ॥
सप्तभिः सप्तभिर्द्दिव्यैर्वासोभिः परिवेष्टयेत् ।
सुखदञ्च सर्व्वाङ्गे शीतप्रावरकैर्द्विजाः ॥
दूर्व्वाक्षतैः प्रपूज्याथ कुर्य्यान्नीराजनां विभोः ।
भगवन्तं समुद्दिश्य तापसेभ्यः प्रदापयेत् ॥
गुरुभ्यश्चान्यदेवेभ्यो दीनानाथेभ्य एव च ।
शीतप्रावरणं दद्यात् सज्जनः परमया मुदा ॥
ददाति भगवान् प्रीतस्तस्मै वरमनुत्तमम् ॥”८॥
अथ पुष्यस्नानयात्रा ।
“पुष्यस्नानोत्सवं वक्ष्ये यथोक्तं ब्रह्मणा पुरा ।
पुष्यर्क्षेण च संयुक्ता पौर्णमासी यदा भवेत् ।
पौषे मासि तु तत् कुर्य्यात् पुष्यस्नानोत्सवं हरेः ॥
चतुर्दश्यां निशायान्तु कुम्भानामधिवासनम् ।
रात्रौ जागरणं कृत्वा प्रातर्वह्निं प्रकीर्त्तयेत् ॥
ब्रह्मविष्णुशिवेभ्यश्च प्रत्येकं समिधं क्रमात् ।
जुहुयात् पूजयित्वा तु तदन्ते पुरुषोत्तमम् ॥
पूजयेदुपचारैस्तु आदर्शे प्रतिबिम्बितम् ।
ततः पुरुषसूक्तेन कुम्भांस्तानभिमन्त्रयेत् ।
क्रमात् देवस्य शिरसि स्नापयेद्विधिवत्ततः ॥”
[illegible] ।
“ततः पञ्चामृतेनैव वासुदेवञ्च क्षालयेत् ।
लक्ष्म्या युक्तं पुनर्विप्र उपचारैः प्रपूजयेत् ॥
दूर्व्वाङ्कुराद्यैः स्तुतिभिर्वाद्यैः संपूज्य केशवम् ।
समन्ताद्विकिरेद्देवं कर्पूराद्यैः सुतण्डुलान् ॥
नीराजयेज्जगन्नाथं कर्पूरघृतवर्त्तिभिः ।
ततः प्रदक्षिणं कृत्वा दण्डवत् प्रणमेत् क्षितौ ॥
पुष्यस्नानोत्सवं पुण्यं ये पश्यन्ति मुदान्विताः ।
सर्व्वसम्पन्नकामास्ते व्रजेयुर्व्वैष्णवं परम् ॥”९॥
अथ नवशस्ययात्रा ।
“कुर्य्यादयनसंक्रान्त्यां नवशस्यमहोत्सवम् ।
संक्रान्तेः पूर्व्वदिवसे नवं शालिं सकुङ्कुमम् ।
प्रासादपूर्व्वदेशे तु स्थापयित्वाधिवासयेत् ॥”

यथा च पाद्मे ।
"संक्रान्त्यां माघमाघस्य चाधिवासितमच्युतात् ।
निवेद्य विष्णवे भक्त्या इमं मन्त्रमुदीरयेत् ॥
त्वयि तुष्टे जगत् सर्व्वमनेन प्रभविष्यति ।
इदं सर्व्वं जगन्नाथ ! गृहाण पिष्टकं शुभम् ॥
ब्राह्मणान् भोजयेत् भक्त्या देवदेवपुरःस्थितान् ।"
अभ्यर्च्य भगवन्तमित्यादि ॥
"नवेन वाससावेष्ट्य दूर्व्वाचम्पकपुष्पकैः ।
पूजयित्वाभिमन्त्र्याथ लक्ष्म्यामभिरक्षतु ॥
पुनः प्रभाते देवेशं प्रक्षिपेद्गन्धचन्दनैः ।
वस्त्रालङ्कारमाल्यैश्च पूजयित्वा यथाविधि ॥
नीराजयित्वा देवेशं सच्छुलाजधिवासिताम् ।
स्थालीषु पाकपात्रेषु मधुखण्डान्यभिषिञ्चिताम् ॥
षट्स्थितः स्थापयेदग्रे गन्धपुष्पाक्षतान्विताम् ।
अपूपं पायसं कृत्वा दद्याद्वै चक्रपाणये ।
इक्षुशर्करपिष्टञ्च विष्णोः प्रियतरं परम् ॥
ॐ जीवनं सर्व्वभूतानां जनकस्त्वं जगद्गुरो ! ।
त्वत्तः स्थावराः प्राणिनो भूते त्वयैव जनिताः प्रभो ! ॥
लोकानुग्रहणार्थाय गृहीत्वा चित्रविग्रहम् ।
तव प्रीत्यै समानीतान् गृहाण परमेश्वर ! ॥
त्वयि तुष्टे जगत् सर्व्वमनेन प्रभविष्यति ।
स्वाहाकारस्वधाकारवषट्कारा दिवौकसाम् ॥
आप्यायना भविष्यन्ति तैरेवाप्यायितं जगत् ।
इदं सर्व्वं जगन्नाथ ! त्वन्मयं सचराचरम् ॥
इति संप्रार्थ्य देवेशं ब्राह्मणान् विनिवेदयेत् ॥"१०॥
अथ दोलयात्रा ।
"फाल्गुने मासि कुर्व्वीत दोलारोहणमुत्तमम् ।
यत्र क्रीडति गोविन्दो लोकानुग्रहणाय वै ॥
प्रत्यर्च्चा देवदेवस्य गोविन्दाख्यान्तु कारयेत् ।
पलगुरुत्वं प्रकुर्व्वीत पञ्चाहानि त्र्यहानि वा ॥
फाल्गुन्याः पूर्व्वतो विप्राश्चतुर्द्दश्यां निशामुखे ।
वह्न्युत्सवं प्रकुर्व्वीत दोलमण्डपपूर्व्वतः ॥"
पाद्मे ।
"पौर्णमास्यां समारभ्य पञ्चम्याञ्च समाप-
येत् ॥"११॥
अथ मदनभञ्जिका यात्रा ।
"वासन्तिकां समाश्रित्य यात्रां मदनभञ्जि-
काम् ।
यस्यां कृतायां दृष्टायां प्रीणाति पुरुषोत्तमः ॥
चैत्रशुक्लत्रयोदश्यामाहरेत्तत् समूलकम् ।
देवस्याग्रे विरचिते मण्डपे साधिवासिते ॥"१२॥
इति यात्रातत्त्वम् ॥
देवाः षोडशप्रकारोत्सवः । यथा,—
"वैशाखे मधुयात्रा च चन्दनागुरुकल्पना ।
ज्यैष्ठे महास्नानयात्रा अम्बुवाच्यादिनत्रयम् ॥
आषाढ़े रथयात्रा च दिग्दिनव्यापिनी परा ।
श्रावणे जलयात्रा च वस्त्रभूषणचामरैः ॥
भाद्रे यात्रा धनजाख्या चण्डिकाया दिनत्रयम् ।
आश्विने च महापूजा यात्रा यज्ञबलिप्रिया ॥
कार्त्तिके दीपयात्रा च नवान्नमण्डपाश्रये ।
पौषे चाङ्गरागयात्रा वस्त्रालङ्कारभूषणैः ॥
माघे मासि महादेवी दृष्टव्या च चतुर्द्दशी ।
दोलाकेलिः फाल्गुने च चैत्रे यात्रा चतुष्टयी ।
दूतीयात्रा रासयात्रा वासन्ती शीलयात्रिका ।
एवं यात्रा मया प्रोक्ता षोड़शी भवमोचनी ॥"
इति वामकेश्वरतन्त्रे ५४ पटलः ॥
(रोगिदर्शनार्थं भिषजां यात्राविवरणम् । यथा,
"इदानीं निर्गमे पुत्र ! प्रवेशे वा गृहस्य च ।
शुभाशुभानि सर्व्वाणि वक्ष्यामि शकुनानि च ॥
राजा गजो द्विजमयूरकखञ्जरीटा-
श्चाषः शकुन्तरजकः सितवस्त्रयुक्तः ।
पुत्रान्विता च युवती गणिका च कन्या
श्रेयः सुखाय यशसो प्रतिदर्शयन्ति ॥
नटाश्वाश्च भासहारीतचक्रो
भारद्वाजोच्छिकरम्भाजसंज्ञः ।
एते श्रेष्ठा दक्षिणे चाथ सव्ये
वैद्यावेशो निर्गमे श्रेयसे च ॥
सर्पोलूको वानरः शूकरश्च
गोधा शशः लक्कश्च शशश्च ।
एते रिक्तानिर्गमे वा प्रवेशे
कार्य्याघाती नोपकारेषु शस्ताः ॥
मृगो वा पिङ्गलो वापि प्रशस्ता दक्षिणे सदा ।
निर्गमे वा प्रवेशे च दक्षिणाः शुभदायकाः ॥
एको वा त्रीणि वा पञ्च सप्त वा नवसंख्यया ।
भाग्यकाले नराणान्तु मृगा यान्ति प्रदक्षिणाः ॥
शिखिचयगजगोधारासभो भङ्गराजो
सुखरपिककपोतौ पोतकौ शूकरौ वा ।
सदनुविहगराजो मङ्गलाशंसिनः स्यु-
र्वदति शकुनवेत्ता वामतो निर्गमे वः ॥
तित्तिरिः कुररः क्रौञ्चः सारसाभासशूकरः ।
वामे तु शुभशंसी च निर्गमे कार्य्यसिद्धये ॥
काको दक्षिणतः श्रेष्ठो निर्गमे शुभदायकः ।
प्रवेशे गदितः श्रेष्ठो वामतः सुखावहः ॥
जाहको हि शशकोऽपि कर्कटो-
कौलिकश्च गदितं न सुखाय ।
न शुभदर्शना अमी भवेयुः
सर्पगोधाककलाशविड़ालाः ॥
दर्शनं हितकरं प्रवदन्ति
खञ्जरीटमरालच्छिकराणाम् ।
वामतः शुभकराः प्रवदन्ति
दार्व्वाघाटवराटकशुकाश्च ॥
इति शुभाशुभशकुनानि ॥"
इति हारीते द्वितीयस्थाने सप्तमेऽध्याये ॥ ७ ॥
तथा च ।
"शवकाष्ठपलाशानां शुष्काणां पथि सङ्गमाः ।
नेष्यन्ते पतितान्त्यादीनाञ्च रिपवस्तथा ॥
मृदुशीतोऽनुकूलश्च सुगन्धिश्चानिलः शुभः ।
खरोष्णोऽनिष्टगन्धश्च प्रतिलोमश्च गर्हितः ।
ग्रन्थ्यर्ब्बुदादिषु सदा छेदशब्दश्च पूजितः ।
विद्रधिउदरगुल्मेषु भेदशब्दस्तथैव च ॥
रक्तपित्तातिसारेषु रुद्धशब्दः प्रशस्यते ।
एवं व्याधिविशेषेण निमित्तमुपधारयेत् ॥
तथैवाक्रुष्टहाकष्टमाक्रन्दरुदितस्वनाः ।
छर्द्दी वातपुरीषाणां शब्दो वै गर्द्दभोष्ट्रयोः ॥
प्रतिषिद्धं तथा भग्नं क्षुतं स्खलितमाहतम् ।
दौर्म्मनस्यञ्च वैद्यस्य यात्रायां न प्रशस्यते ॥"
इति सुश्रुते सूत्रस्थाने २९ अध्यायः ॥)

**यादईशः**, पुं, ( यादसां जलानां जलजन्तूनां वा ईशः । ) समुद्रः । इति हेमचन्द्रः । ४ । १४९ ॥

**याद**, [स्] क्ली, (यान्ति वेगेनेति । या + असुन् । धातुलकात् दागमश्च ।) जलजन्तुः । इत्यमरः । १।१०।२० ॥ ( यथा, भगवद्गीतायाम् ।१०।२९।
"अनन्तश्चास्मि नागानां वरुणो यादसा-
महम् ॥"
जलम् । इति निघण्टुः । १ । १२ ॥ )

**यादःपतिः**, पुं, ( यादसां पतिः । ) समुद्रः । इत्यमरः ।१।१९।१०॥ वरुणः । इति जयपालः ॥

**यादवः**, पुं, ( यदोरपत्यम् । यदु + अण् । ) श्रीकृष्णः । इति शब्दरत्नावली ॥ ( यथा, भगवद्गीतायाम् । ११ । ४१ ।
"सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण ! हे यादव ! हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि ॥")
ययातेर्ज्येष्ठपुत्रो यदुस्तस्य वंशः । यथा,—
"ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ ।।"
इत्युपक्रम्य ।
"माधवा वृष्णयो राजन् यादवाश्चेति संज्ञितम् ॥"
इति श्रीभागवते ९ स्कन्धे २३ अध्यायः ॥
(यदुसम्बन्धिनि, त्रि । यथा, भागवते । ११।१।३ ।
"मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं
यद्यादवं कुलमहो अविषह्यमास्ते ॥")

**यादवी**, स्त्री, (यदोरियमिति । यदु + अण् । ङीप् ।) दुर्गा । इति त्रिकाण्डशेषः ॥ ( यदुवंशीयस्त्री सामान्ये । यथा, महाभारते । १ । ९५ । १३ ।
"प्राचीन्वान् खल्वश्मकीमुपयेमे यादवीं तस्या-
मस्य जज्ञे संयातिः ॥")

**यादसांनाथः**, पुं, ( यादसां जलजन्तूनां नाथः । षष्ठ्या अलुक् । ) वरुणः । इति हलायुधः ॥

**यादसांपतिः**, पुं, ( यादसां जलजन्तूनां पतिः । षष्ठ्या अलुक् ।) समुद्रः । इत्यमरः । १।१।६४ ॥ वरुणः । इति मेदिनी । ति, २४२ ॥ ( यथा, देवीभागवते । ३ । ९ । ३५ ।
"अश्विनौ वसवस्त्वष्टा कुबेरो यादसांपतिः ॥"
क्वचित् विशेषणमपि । यथा, मार्कण्डेये ।२७।११।
"यावद्दन्तजले देवं वरुणं यादसांपतिम् ॥")

**यादृक्**, [श्] त्रि, (य इव दृश्यते । दृश् + "त्यदादिषु दृशोऽनालोचने कञ्च ।" ३।२।६० । इति चकारात् क्विन् । "आ सर्व्वनाम्नः ।" ६।३।९१ । इत्याकारादेशः । ) य इव दृश्यते सः । इति मुग्धबोधव्याकरणम् ॥ येमन इति भाषा । ( यथा, भागवते । ४ । २९ । ६४ ।
"नानुभूतं क्वचानेन देहेनादृष्टमश्रुतम् ।
कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि ॥")

**यादृशः**, त्रि, ( य इव दृश्यते यमिव पश्यति वा । दृश् + "दृशेः क्सश्च वक्तव्यः ।" ३।२।६० । इति

वार्त्तिकोक्तिः क्सः । "आसर्व्वनाम्नः ।" ६।३।९१। इत्यत्र "दृशे चेति वक्तव्यम् ।" इत्यात्वम् । ) य इव दृश्यते सः । इति मुग्धबोधव्याकरणम् ॥ येमन इति भाषा ॥

याद्दशः, त्रि, ( य इव दृश्यते । दृश + "त्यदादिषु दृशः इति ।" ३।२।६० । इति कञ् । "आसर्व्व-नाम्नः ।" ६।३।९१ । इत्याकारादेशः । ) य इव दृश्यते सः । इति मुग्धबोधव्याकरणम् ॥ येमन इति भाषा । (यथा, मनुः । ४ । २५४ ।
"यादृशोऽस्य भवेदात्मा यादृशञ्च चिकीर्षितम् ।
यथा चोपचरेदेनं तथात्मानं निवेदयेत् ॥"
स्त्रियां यादृशी ॥ )

यादोनाथः, पुं, ( यादसां नाथः । ) समुद्रः । इति राजनिर्घण्टः ॥ ( वरुणः । इति यादसां-नाथशब्ददर्शनात् ॥ )

यादोनिवासः, पुं, ( यादसां निवासः । ) जलम् । इति हेमचन्द्रः । ४ । १३५ ॥

यानं, क्ली, ( या + ल्युट् । अर्द्धर्चादित्वात् पुंलिङ्ग-मपि । ) राज्ञां सन्ध्यादिषड्गुणान्तर्गतगुण-विशेषः । तत्तु उपचितशक्तेः शत्रुमभ्यु-द्यतस्य प्राकारास्कन्दनाय यात्रा । इति भरतः ॥ ( यथा, देवीभागवते । ५ । ४ । ११ ।
"यानमद्यधुना नैव कर्त्तव्यं सहसा पुनः ॥"
यात्यनेनेति । या + ल्युट् । ) हस्त्यश्वरथदोलादि । तत्पर्य्यायः । वाहनम् २ युग्यम् ३ पत्रम् ४ धोर-णम् ५ । इत्यमरः । २।८।५८ ॥ विमानम् ६ चक्र-रम् ७ यापनम् ८ गतिनिवर्त्तकम् ९ । इति शब्द-रत्नावली ॥ * ॥ ( यथा, मनुः । ९ । २६५ ।
"शिल्पेन व्यवहारैश्च शूद्रापत्यैश्च केवलैः ।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणाम् ।
कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः ॥")

अथ चतुष्पदयानोद्देशः ।

"ये गजवाज्यादिविभेदतोऽमी
मया निरुक्ता इह वाजिमुख्याः ।
दिशानया सर्व्वचतुष्पदानां
भेदो विधेयो विदुषादरेण ॥
तथा यथा वाजिकपोषणेन
यानेन वा दोषगुणौ भवेताम् ।
तथा तथैवान्यचतुष्पदानां
प्रकीर्त्तितौ दोषगुणौ बुधेन ॥
वरमयानमपोषणमेव वा
वरमिवान्यशरीरमपोषणम् ।
न खलु दोषयुतं च चतुष्पदं
स्पृशति पश्यति शोभनचेतनः ॥
सुराबिन्दुर्दूषयति पयोघटशतं यथा ।
तथा सर्व्वं दूषयति दोषदुष्टचतुष्पदः ॥"
इति चतुष्पदयानोद्देशः ॥ * ॥

अथ द्विपदयानोद्देशः ।

"मानुषैः पक्षिभिर्व्वापि तथान्यैर्द्विपदैरपि ।
यानं स्याद्द्विपदं नाम तस्य भेदो ह्यनेकधा ॥
सामान्यञ्च विशेषञ्च तस्य भेदो द्विधा भवेत् ॥"
तत्र सामान्यं यथा,—
"यानं द्विपदाभ्यां सत् तद्दोलादिकमुच्यते ।
चतुर्भिर्युक्तिसंयुक्तैरेकधातुगुणाम्बरैः ।
दोलेति कथ्यते तेषां नियमोऽयं प्रदर्श्यते ॥"
तत्र सद्यः ।

"उपेन्द्रमूलाद्विशिवाग्निवर्णं
शक्रेन्दुतारातिथियोमलर्णं ।
रुद्रिच्चमापुष्ययमाङ्कवर्णं
दोलाद्विकारोद्भवमाद्यमिदम् ॥

एकैकाङ्कस्य नियमे नियमश्चैवमेकवत् ।
कनकं रजतं ताम्रं लौहं धातुचतुष्टयम् ॥
चतुर्विधानामुद्दिष्टं ब्रह्मादीनां यथाक्रमम् ।
सुराणामसुराणाञ्च चातुर्व्वर्ण्यसदाकृतम् ॥
त्रिहस्तसम्मितो मध्ये तदर्द्धं पार्श्वयोर्द्वयोः ।
विजया नाम दोलेयं विजयाय महीक्षिताम् ॥
विजया मङ्गला क्रूरा शिवा क्षेमा शुभा क्रमात् ।
वितस्त्येकैकसंवृद्धा दोलाः षट् स्युः सुखावहाः ॥
कुम्भश्च पद्मकोषश्च शङ्खः पल्लव एव च ।
चतुर्विधानां दोलासु कल्याणाय चतुष्टयम् ॥
हंसः केकी शुको भृङ्गश्चतुष्टयमिदं क्रमात् ।
कुम्भाद्यग्रे निधातव्यं चतुर्विधमहीक्षिताम् ॥
अत्रापि वर्णविन्यासो विज्ञेयो नवरत्नवत् ॥"
भोजस्तु ।
"गजः प्रस्थानदोलायां रणदोलासु केशरी ।
मृगो भ्रमणदोलायां क्रीडादोलासु षट्पदः ॥
भुजङ्गमः प्रकुराज्ये वृषभो दानकर्म्मणि ।
दोलोपर्य्युपरि न्यस्यो वस्तुभिर्मुनिशासनम् ॥
यदश्रदक्षं यानं स्यात् तत् पर्य्यङ्कमिति स्मृतम् ।
त्रिहस्तमात्रितो यानस्तदर्द्धपरिणाहवान् ।
पर्य्यङ्कः क्षेमनामायं भर्त्तुः सर्व्वार्थसाधकः ॥
क्षेमो म्लानजयो दुःखश्चत्वारस्ते यथाक्रमम् ।
वितस्त्येकैकसंवृद्ध्या यथा चायामं सङ्गिनः ॥
मणिधातुगुणादीनां नियमः पूर्व्ववत्ततः ।
विशेषमथ वक्ष्यामि पर्य्यङ्कस्य यथाक्रमम् ॥
शुक्तिश्च गजदन्तश्च मृगशृङ्गाण्येव च ।
चम्पादिकलतानां पर्य्यङ्केषु न्यसेत् क्रमात् ॥
पद्मशङ्खगजाश्वालिहंसकोकशुकान् क्रमात् ।
आदित्यादिदशानां मणिकल्पेन विन्यसेत् ॥
महीक्षितां विशेषेण सिंहमानेव शस्यते ।
निर्म्माणे शुक्तिदन्ताश्च राज्यभोगसुखप्रदाः ॥
तदेवावक्रदण्डन्तु खट्टायानमिति स्मृतम् ।
अस्यापि पूर्व्ववन्मानमणिधात्वादिनिर्णयः ॥
विशेषश्चरणोच्छ्रायः परिणाहार्द्धसम्मितः ।
तदेव पैत्रिचरणं पीठयानमिति स्मृतम् ॥
तस्य भेदो द्विधा दण्डवक्रावक्रप्रभेदतः ।
मानादिकं पूर्व्वतुल्यं विशेषाच्चतुरस्रता ॥
एवमन्यानि मिश्राणि यानानि विविधानि च ।
सामान्याख्यानि जानीयात् शिल्पिभिर्निर्म्मितानि वै ॥
मनोहरत्वं लघुता दृढतेति गुणत्रयम् ।
प्रोक्तं द्विपदयानानां महत् भोजभूभुजा ॥
इति सामान्यद्विपदयानकथनम् ॥"
इति युक्तिकल्पतरुः ॥ * ॥ विशेषद्विपदयानन्तु चतुर्दोलशब्दे निष्पदयानोद्देशस्तु नौकाशब्दे द्रष्टव्यम् ॥ (फलप्राप्तिहेतौ, त्रि । यथा, ऋग्वेदे । १० । ११० । २ ।
"तनूनपात् पथ ऋतस्य यानान्
मध्वा समञ्जन् स्वदया सुजिह्व ॥"
"यानान् फलप्राप्तिहेतून् पथो मार्गान् ।" इति तद्भाष्ये सायणः ॥ या + भावे ल्युट् । गतिः । यथा, वाभटे शारीरस्थाने षष्ठेऽध्याये ।
"यानं खरोष्ट्रमार्ज्जारकपिशार्द्दूलसूकरैः ।
यस्य प्रेतैः शृगालैर्वा स मृत्योर्वर्त्तते मुखे ॥")

यानपात्रं, क्ली, (यानसाधनं पात्रम् । शाकपार्थिव-वत् समासः । ) निष्पदयानविशेषः । जाहाज इति भाषा ॥ तत्पर्य्यायः । वहित्रकम् २ बोहित्थम् ३ वहनम् ४ पोतः ५ । इति हेमचन्द्रः । ३ । ५४१ ॥ समुद्रयानम् ६ । इति वराहपुराणम् ॥ ( यथा, हरिवंशे । १४५ । ६४ ।
"समुच्छ्रितैः सितैः पोतैः यानपात्रैस्तथैव च ।
शोभितं क्षितिकाभिश्च शुशुभे वरुणालयः ॥")

यानमुखं, क्ली, ( यानस्य मुखम् पुरोभागः । ) रथादेः पुरोभागः । तत्पर्य्यायः । धूः २ । इत्यमरः । २ । ८ । ५५ ॥

यापनं, क्ली, ( या + णिच् + ल्युट् । ) वर्त्तनम् । कालक्षेपणम् ॥ ( यथा, कामन्दकीये । १७ । ३१ ।
"पूर्व्वसन्तापनिर्मुक्तः कालयापनमाश्रितः ॥" )
निरसनम् । इति मेदिनी । ने, ११२ ॥ ( यापय-तीति । या + णिच् + ल्युः । प्रापकं, त्रि । यथा, भागवते । ३ । २२ । ३३ ।
"अयातयामास्तस्यासन् यामाः स्वान्तर-यापनाः ॥")

यामा, स्त्री, जटा । इति भूरिप्रयोगः ॥

याप्यः, त्रि, (यापि + यत् ।) अधमः । निन्दितः । इत्यमरः । ३।१।५४ ॥ (यथा, बृहत्संहितायाम् । १९ । २९ ।
"यदशुभमशुभेऽब्दे मासजं तस्य वृद्धिः
शुभफलमपि चैव याप्यमन्योऽन्यतायाम् ॥")
गोपनीयः । ( यथा, सुश्रुते निदानस्थाने प्रथमे अध्याये ।
"शोणितं तदसाध्यं स्यात् याप्यं संवत्सरोत्थि-तम् ॥")
क्षेपणीयकालादिः । इति मेदिनी । ये, ४८ ॥ व्याधिविशेषः । यथा,—
"साध्या याप्या असाध्याश्च व्याधयस्त्रिविधाः स्मृताः ।
सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते ॥
याप्यलक्षणमाह ।
यापनीयन्तु तं विद्यात् क्रियां धारयते हि याम् ।
क्रियायान्तु निवृत्तायां सद्यो यश्च विनश्यति ॥
प्राप्ता क्रिया धारयति सुखिनं याप्यमातुरम् ।
प्रपतिष्यदिवागारं स्तम्भो यत्नेन योजितः ॥
साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥

अक्रियावतां चिकित्सारहितानाम् ।” इति भावप्रकाशः ॥

याप्ययानं, क्ली, (याप्यं अधमं यानम् ।) शिविका । इत्यमरः । २ । ८ । ५३ ॥

याभः, पुं, (यभ्यते इति । यभ + घञ् ।) मैथुनम् । यथा । वृषाश्वयोर्याभिरर्थे सन् । इति सिद्धपाठे वोपदेवः । ८४६ ॥ (यथा, भागवते । ९ । १९ । ६ ।
“पीवानं श्मश्रुलं प्रेष्ठं मीढ्वांसं याभकोविदम् ।
स एकोऽजवर्षस्तासां मण्डीनां रतिवर्द्धनः ।
रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत ॥”)

यामः, पुं, (याति यायते वा । या + “अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ।” उणा० १।१४० । इति मन् । यम् + घञ् वा ।) दिवारात्र्योश्चतुर्थभागैकभागः । तत्पर्य्यायः । प्रहरः २ । इत्यमरः । १।४।६ ॥ (यथा, मनौ । ७ । १४५ ।
“उत्थाय पश्चिमे यामे कृतशौचः समाहितः ।
हुताग्निर्ब्राह्मणांश्चार्च्च्य प्रविशेत् स शुभां सभाम् ॥”)
संयमः । इति मेदिनी । मे, २४ ॥ (गमनम् । यथा, ऋग्वेदे । १ । ४८ । ४ ।
“उषो ये ते प्र यामेषु युञ्जते ।”
“यामेषु गमनेषु ।” इति तद्भाष्ये सायणः ॥ गमनसाधनः । यथा, ऋग्वेदे । ७ । ५१ । ४ ।
“कुविन्न देवीः सनयो नवो वा
यामो बभूयादुषसो वो अद्य ॥”
“यामो गमनसाधनः स रथः ।” इति सायणः ॥ देवगणभेदः । यथा, मार्कण्डेयपुराणे । ९५।१८ ।
“यज्ञस्य दक्षिणायान्तु पुत्त्रा द्वादश जज्ञिरे ।
यामा इति समाख्याता देवाः स्वायम्भुवेऽन्तरे ॥”)

यामघोषः, पुं, (यामे प्रतियामे घोषः रवोऽस्य । प्रतिप्रहरं रवकरणादेवास्य तथात्वम् ।) कुक्कुटः । इति शब्दमाला ॥

यामघोषा, स्त्री, (यामे यामे घोषोऽस्याः । यामान् प्रहरान् घोषति शब्दायते इति वा । घुष + अच् । टाप् ।) यन्त्रविशेषः । घड़ी इति भाषा । तत्पर्य्यायः । नाली २ घटी ३ यामनाली ४ समयकाष्ठा ५ दण्डढक्का ६ । इति त्रिकाण्डशेषः ॥

यामनाली, स्त्री, (यामस्य नालीव ।) यामघोषा । इति त्रिकाण्डशेषः ॥

यामनेमिः, पुं, इन्द्रः । इति त्रिकाण्डशेषः ॥

यामलं, क्ली, युगलम् । इति हेमचन्द्रः । ६ । ६० ॥ तन्त्रशास्त्रविशेषः । तस्य लक्षणं यथा,—
“सृष्टिश्च ज्योतिषाख्यानं नित्यकृत्यप्रदीपनम् ।
क्रमसूत्रं वर्णभेदो जातिभेदस्तथैव च ।
युगधर्म्मश्च संख्यातो यामलस्याष्टलक्षणम् ॥”
तत्तु षड्विधम् । आदियामलम् १ ब्रह्मयामलम् २ विष्णुयामलम् ३ रुद्रयामलम् ४ गणेशयामलम् ५ आदित्ययामलम् ६ । इति वाराहीतन्त्रम् ॥ एषां श्लोकसंख्या तन्त्रशब्दे द्रष्टव्या ॥

यामवती, स्त्री, (यामः प्रहरः अस्त्यस्यामिति । याम + मतुप् । मस्य वः ङीप् ।) रात्रिः । इति राजनिर्घण्टः ॥

यामाता, [ऋ] पुं, (जामाता पृषोदरादित्वात् जस्य यः ।) जामाता । दुहितुः पतिः । इत्यमरटीका शब्दरत्नावली च ॥ यामातुर्विष्णुतुल्यत्वं तस्य गृहे कन्यादातुर्दौहित्रजननात् प्राक् भोजननिषेधश्च यथा, कामधेनावादित्यपुराणम् ।
“विष्णुं यामातरं मन्ये तस्य मन्युं न कारयेत् ।
अप्रजातायान्तु कन्यायां नाश्नीयात्तस्य वै गृहे ॥”
इत्युद्वाहतत्त्वम् ॥

यामार्द्धं, क्ली, (यामस्यार्द्धम् ।) प्रहरस्यार्द्धम् । तस्याधिपा यथा,—
“वारेशाद्दलयामेषु राज्यह्नोः पञ्च षट्क्रमात् ।
अधिपाः सुरगुर्वाद्यास्तत्र यथार्क्कादि भवन्ति हि ॥
रवीन्दुभृगुसौम्याजशनिजीवरवयो निशि ।
रविशुक्रबुधानीशशनीज्यकुजभास्कराः ॥
दिने तृष्याः परेष्वेवं तत्राध्यनाश्चतुर्गुणाः ।
पापदले भवेन्निष्टिः शुभदले शुभं भवेत् ॥
शुभग्रहस्य दले तु कर्म्मारम्भाच्छुभं भवेत् ।
आरम्भात् पापदले तु कर्म्म निष्फलतां व्रजेत् ॥
यस्याह्नयामकस्यैव प्रागर्द्धः समुदाहृतः ।
षट् षट् परीत्य दलाच्च क्रयो रात्रौ मतास्तथा ॥
यामार्द्धाधिपसंख्यातो द्वितीयस्तु तदर्द्धतः ।
तदर्द्धांशु तृतीयः स्यात्तदर्द्धांशु तुरीयकः ॥
अङ्काभावे तु राहुः स्यात्तदर्द्धो वसुसंज्ञकः ।
भव्याद्यस्य परित्यागाद्दिवादलाधिपा यथा ॥”
इति ज्योतिषतत्त्वम् ॥

यामिः, स्त्री, (याति कुलात् कुलान्तरमिति । या + बाहुलकात् मिः ।) स्वसा । कुलस्त्री । इत्यमरः । २ । ६ । १४० ॥ “स्वसा भगिनी । कुलस्त्री कुलवधूः । प्रहरे संयमे यामो यामिः स्वसृकुलस्त्रियोरित्यन्तःस्थादौ रभसः ॥ जिह्मस्तु कुटिले निम्ने जामिः स्वसृकुलस्त्रियोरिति चवर्गतृतीयादावजयः इति भरतमुकुटौ ॥ यथा, जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ॥ इति स्वामी ॥ जे चये बाहुलकान्मिः । यद्वा जसु अदने बाहुलकादिन् जामिरिति । अन्तःस्थादौ या प्रापणे धातुर्वोध्यः ।” इति रामाश्रमः ॥ (यथा, मनौ । ४ । १८३ ।
“यामयोऽप्सरसो लोके वैश्वदेवस्य बान्धवाः ॥”)
यामिनी । इति शब्दरत्नावली ॥ धर्म्मस्य पत्नी । तस्याः कन्या नागवीथी । यथा,—
“अरुन्धती वसुर्यामिर्लम्बा भानुर्मरुत्वती ।
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च नामतः ।
धर्म्मपत्न्यो दश त्वेतास्तास्वपत्यानि मे शृणु ।
लम्बायाश्चैव घोषोऽसौ नागवीथी तु यामिजा ॥”
इति वह्निपुराणे काश्यपीयप्रजासर्गः ॥

यामिकभटः, पुं, (यामे यामे नियुक्तः । याम + ठक् । स चासौ भटश्चेति ।) प्राहरिकः । चौकीदार इति भाषा । यथा,—
“उन्मादाम्बुदवर्द्धिताम्बतमसः प्रभ्रष्टदिक्चक्रके
काले चाग्रदुरग्रयामिकभटप्रारब्धकोलाहले ।
कर्णस्यास्तु हृदर्णवाम्बुदवचोवञ्चूर्यदन्तःपुरा-
दायातासि यदम्बुजाक्षि ! ततकं मन्ये भयं
योषिताम् ॥”
इति कर्णाटः ॥

यामित्रं, क्ली, लग्नात् सप्तमराशिः । यथा,—
“धीस्थानं पञ्चमं ज्ञेयं यामित्रं सप्तमं स्मृतम् ।
तुर्य्यं तूर्णं तथास्ताख्यं षट्कोणं रिपुमन्दिरम् ॥”
यामित्रवेधो यथा,—
“पापात् सप्तमगः शशी यदि भवेत् पापेन
युक्तोऽथवा
यत्नेनापि विवर्जयेत्तमिमनो दोषोऽप्ययं कथ्यते ।
यामित्रे विपदो गृहे सुतवधः चौरेषु रोगोद्भवो-
ऽप्युद्वाहे विधवा व्रते तु मरणं मूलञ्च पुंस्कर्म्मणि ॥
रविमन्दकुजाक्रान्तं लग्नात् सप्तमं त्यजेत् ।
विवाहयात्राचूडासु गृहकर्म्मप्रवेशने ॥”
इति यामित्रवेधः ॥ ● ॥
अस्य प्रतिप्रसवो यथा ।
“लग्नत्रिकोणगतमन्दिरगोऽथ पूर्णो
मित्रर्क्षसौम्यग्रहगोऽथ तदीक्षितो वा ।
यामित्रवेधविहितानपहृत्य दोषान्
दोषाकरः सुखमनेकविधं विधत्ते ॥”
इति ज्योतिस्तत्त्वम् ॥

यामिनी, स्त्री, (यामाः सन्त्यस्याम् । याम + इनिः । ङीप् ।) रात्रिः ॥ (यथा, महाभारते । १२ । ५३ । १ ।
“ततः शयनमाविश्य प्रसुप्तो मधुसूदनः ।
याममात्रार्द्धशेषायां यामिन्यां प्रत्यबुध्यत ॥”)
हरिद्रा । इत्यमरः । १ । ४ । ४ ॥ (कश्यपपत्नी । यथा, भागवते । ६ । ६ । २१ ।
“तार्क्ष्यस्य विनता कद्रुः पतङ्गी यामिनीति च ।
पतङ्ग्यसूत पतगान् यामिनी शलभानथ ॥”
प्रह्लादस्य द्वितीया तनया । यथा, कथासरित्सागरे । ४६ । २२ ।
“प्रह्लादो यामिनीं नाम द्वितीयां तनयां ददौ ॥”)

यामिनीपतिः, पुं, (यामिन्याः पतिः ।) चन्द्रः । इति शब्दरत्नावली ॥ (यथा, भागवते । १० । ३५ । २५ ।
“यदुपतिर्द्विरदराजविहारो
यामिनीपतिरिवैष दिनान्ते ।
मुदितवक्त्र उपयाति दुरन्तं
मोचयन् व्रजगवां दिनतापम् ॥”)
कर्पूरम् । इत्यमरः ॥

यामी, स्त्री, (यमस्येयम् । यमो देवतास्याः इति वा । यम + अण् । ङीप् ।) दक्षिणदिक् । इति राजनिर्घण्टः ॥ (यथा, ज्योतिषे ।
“————याम्यां गुरौ न व्रजेत् ।”
यामि + ङीप् ।) कुलस्त्री । इति शब्दरत्नावली ॥ (यथा, मनौ । ४।१८० ।
“मातापितृभ्यां यामीभिर्भ्रात्रा पुत्त्रेण भार्य्यया ।
दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥”

धर्म्मपत्नी । यथा, विष्णुपुराणे ।१।१५।१०५।
"अरुन्धती वसुर्यामी लम्बा भानुर्मरुत्वती ।
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च
ता दश ॥")

यामुनं, क्ली, ( यमुनायां भवम् । यमुना + अण् । यमुनाया इदमिति वा ।) स्रोतोऽञ्जनम् । इत्यमरः । २।६।१०० ॥ (अस्य पर्य्यायो यथा,—
"अञ्जनं यामुनञ्चापि कापोताञ्जनमित्यपि ।
तत् स्रोतोऽञ्जनं कृष्णं सौवीरं श्वेतमीरितम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
पुं, जनपदभेदः । यथा, भागवते । १।१०।३४ ।
"कुरुजाङ्गलपाञ्चालान् शूरसेनान् स यामुनान् ।
ब्रह्मावर्त्तं कुरुक्षेत्रं मत्स्यान् सारस्वतानथ ॥"
पर्व्वतविशेषः । यथा, रामायणे । ४।४०।२१ ।
"कालिन्दीं यमुनां रम्यां यामुनञ्च महा-
गिरिम् ।"
तीर्थभेदः । यथा, महाभारते । ३ । ८४ । ४१ ।
"यमुनाप्रभवं गत्वा समुपस्पृश्य यामुनम् ।
अश्वमेधफलं लब्ध्वा स्वर्गलोके महीयते ॥")
यमुनासम्बन्धिनि, त्रि । (यथा, प्रायश्चित्ततत्त्वे ।
"त्रिभिः सारस्वतं तोयं सप्ताहेन तु यामुनम् ।
सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्म्मदम् ॥")

यामुनेष्टकं, क्ली, ( यामुनमिष्टकम् । ) सीसकम् । इति जटाधरः ॥ ( विवृतोऽस्य सीसकशब्दे विषयः ॥ )

यामेयः, पुं, भागिनेयः । यामिः स्वसृकुलस्त्रियो-रित्यनुशासनात् यामेरपत्यमित्यर्थे ढक्-(ढक्) प्रत्ययनिष्पन्नः ॥ ( याम्या धर्म्मपत्न्या अपत्यमिति । यामिपुत्त्रः । यथा, भागवते । ६।६।६ ।
"ककुदः सङ्कटस्तस्य कीकटस्तनयो यतः ।
भुवो दुर्गाणि यामेयः स्वर्गो नन्दिस्ततोऽभवत् ॥")

याम्यः, पुं, ( यामो नियामोऽस्य । यामो + यत् । ) अगस्त्यमुनिः । चन्दनद्रुमः । इति मेदिनी । ये, ४८ ॥ (यमस्यायमिति । यम + ष्यञ् । यमदूतः । यथा, मार्कण्डेये । ११ । ३० ।
"क्लिश्यमानस्य याम्यैश्च नरकेषु च पातनः ।
पुनश्च गर्भो जन्माथ मरणं नरकस्तथा ॥")

याम्या, स्त्री (यमस्येयं यमो देवतास्या इति वा । यम + "यमाच्चेति वक्तव्यम् ।" ४।२।८५ । इति वार्त्तिकोक्त्या ण्यः । टाप् ।) दक्षिणदिक् । (यथा, रामायणे । २ । १०३ । २६ ।
"प्रगृह्य तु महीपालो जलपूरितमञ्जलिम् ।
दिशं याम्यामभिमुखो रुदन् वचनमब्रवीत् ॥")
भरणीनक्षत्रम् । इति मेदिनी । ये, ४८ ॥ (यमसम्बन्धिनि, त्रि । यथा, महाभारते ।२।८।१।
"कथयिष्ये सभां याम्यां युधिष्ठिर ! निबोध ताम् ।
वैवस्वतस्य यां पार्थ ! विश्वकर्म्मा चकार ह ॥")

याम्यायनं, क्ली, ( याम्यायामयनं याम्यं अयनमिति वा ।) दक्षिणायनम् । यथा, मलमासतत्त्वे ।
"याम्यायने हरौ सुप्ते सर्व्वकर्म्माणि वर्ज्जयेत् ॥"

याम्योद्भूतः, पुं, (याम्यायामुद्भूतः ।) श्रीतालवृक्षः । इति राजनिर्घण्टः ॥

यायजूकः, पुं, ( पुनः पुनर्यजति । यज् + यङ् । "यजजपदशां यङः ।" ३ । २ । १६६ । इति ऊकः । ) पुनःपुनर्यागकर्त्ता । तत्पर्य्यायः । इज्याशीलः । इत्यमरः । २ । ७ । ८ ॥ ( यथा, रामायणे । २ । ७२ । १५ ।
"या गतिः सर्व्वभूतानां तां गतिं ते पिता गतः ।
राजा महात्मा तेजस्वी यायजूकः सतां गतिः ॥")

यायावरः, पुं, (पुनःपुनरतिशयेन वा याति देशाद्देशान्तरं गच्छतीति । या + यङ् । "यश्च यङः ।" ३।२।१७६। इति वरच् ।) अश्वमेधीयाश्वः । इति जटाधरः ॥ जरत्कारुमुनिः । इति त्रिकाण्डशेषः ॥ ( ऋषीणां गणविशेषः । यथा, महाभारते । १२ । २४३ । १७ ।
"तात प्रशान्तधर्म्माणस्तथा यायावरा गताः ॥"
जरत्कारुमुनिरेतद्वंशीयः । यथा, महाभारते । १ । १३ । ११ ।
"जरत्कारुरिति ख्यात ऊर्द्ध्वरेता महातपाः ।
यायावराणां प्रवरो धर्म्मज्ञः संशितव्रतः ॥")
त्रि, पुनःपुनर्गमनशीलः । यथा,—
"यायावराः पुष्पफलेन चान्ये
प्राणद्धुरर्घ्यां जगदर्च्चनीयम् ॥"
इति भट्टिः । २ । २० ॥
( स्त्री, यायावरा । यथा, भागवते ।७।११।१६ ।
"वार्त्ता विचित्रा शालीनयायावरशिलोञ्छनम् ।
विप्रवृत्तिश्चतुर्द्धेयं श्रेयसी चोत्तरोत्तरा ॥"
"यायावरं प्रत्यहं धान्ययाचना ।" इति तत्र श्रीधरस्वामी ॥ )

यावः, पुं, (यौति यूयते वा । यु + घञ् अप् वा । ततः प्रज्ञाद्यण् । ) अलक्तः । इत्यमरः । २ । ६ । १२५ ॥ (तथास्य पर्य्यायः ।
"लाक्षा पलङ्कषालक्तो यावो वृक्षामयो जतु ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
यथा, नैषधे । २२ । ४३ ।
"नतस्तदीयाधरयावयोगा-
दुदेति बिम्बाकृतबिम्ब एषः ॥"
यव एव । स्वार्थेऽण् । यावः । यथा, तैत्तिरीयसंहितायाम् । ४ । ३ । ६ । २ ।
"यावानां भागोऽस्य यावानामाधिपत्यमिति ॥")

यावकः, पुं, (यव एव यावः स इवेति इवार्थे कन् । यद्वा, याव एव । याव + "यावादिभ्यः कन् ।" ५ । ४ । २९ । इति स्वार्थे कन् । ) कुल्माषः । इत्यमरः । २ । ९ । १९ ॥ "द्वे वोरोधान्ये । कुलत्थ इत्यन्ये मालाजातिपर्णे काश्मीरेषु तुलसीति ख्याति । इति सुभूतिः ॥ यव इव शुचिमिति यवकः विकारसंघेति कः । यवक एव यावकः स्वार्थे ष्णः । कुलेन मस्यति परिणमति कुल्माषः मसीयं दे परिमाणे परीणामे चम् मसीषादित्वादनुक् । कुल्मासो दन्त्यसकारवान् मद्दन्त्यसकारवांश्च । कुल्मासो रभसश्चेति दन्त्यान्ते रचितं इति मधुः ॥ कुल्माषो यावके पुंसि काञ्जिके तु नपुंसकमिति मूर्द्धन्यान्ते रभसः ।" इति भरतः ॥
"यवकः स्यात् कुल्माषः कुल्मासो यावकोऽपि च ।
घोरधान्ये वटिके वा कुल्मे काश्मीरदेशजे ।
शालिधान्येषु चणार इति केचित् प्रचक्षते ॥"
इति शब्दरत्नावली ॥ * ॥
यावान्नम् । इति हेमचन्द्रः ॥ (यथा, मनौ ।११। १२६ ।
"वह्वरापाचलत्यासु मासं शोधनमैन्दवम् ।
मन्त्रिणो करणीयेषु तप्तः स्याद्यावकेनाघम् ॥")
अलक्तकः । इति शब्दरत्नावली ॥ ( यथा, किराते । ५ । ३८ ।
"इह सनियमयोः सुरापगाया-
मुषसि सयावकसव्यपादरेखा ।
कथयति शिवयोः शरीरयोगं
विषमपदा पदवी विवर्त्तनेषु ॥" )

यावज्जीवं, व, क्ली, ( यावत् जीवतीति । जीव + "यावति विन्दजीवोः ।" ३ । ४ । ३० । इति णमुल् । ) यावदायुः । जीवनपर्य्यन्तम् । यथा,
"यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता ।
माता च मम वन्ध्यासीदपुत्त्रश्च पिता मम ॥"
इति व्याहतशब्दटीकायां भरतः ॥

यावत्, व, ( यद् + डावतुः । ) साकल्यम् । अवधिः । मानम् । अवधारणम् । इत्यमरः । ३ । ३ । २४५ ॥ "साकल्ये निरवशेषे । यथा । यावद्दत्तं तावद्भुक्तं ॥ अवधौ मर्य्यादायाम् । सत्वात् शाखां यावत् प्रकाशः ॥ मानं प्रमाणम् । यावद्गृहाणि तावन्निमन्त्रय ॥ अवधारणमियत्तापरिच्छेदः । इयतो भाव इयत्ता परिमाणं तस्य परिच्छेदो निश्चयः । यथा यावत् पात्रं तावद्ब्राह्मणानामन्त्रयस्व । यावत् कार्त्स्न्येऽवधारणे प्रशंसायां परिच्छेदे मानाधिकारसम्भ्रमे पक्षान्तरे चेति मेदिनी ।" इति भरतः ॥ ( यत्परिमाणमस्य इत्यर्थे । यत् + "यत्तदेतेभ्यः परिमाणे वतुप् ।" ५ । २ । ३९ । इति वतुप् । "आ सर्व्वनाम्नः ।" ६ । ३ । ९१ । इत्यात्वम् । ) यत्परिमितं, त्रि । तत्र यावान् यावती यावत् इति रूपत्रयं भवति । यच्छब्दात् निपातनाद्वतुप्रत्ययनिष्पन्नः । इति तद्धितपादे वोपदेवः ॥ ( यथा, भागवते । २ । ९ । ३१ ।
"यावानहं यथा भावो यद्रूपगुणकर्म्मकः ।
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥"
यथाच मनुः । ८ । १५५ ।
"यावती सम्भवेद्वृद्धिस्तावतीं दातुमर्हति ॥"
तथाच याज्ञवल्क्यः । २ । २६४ ।
"यावत् शस्त्रं विनश्येत्तु तावत् स्यात् स्वेच्छिता:
फलम् ॥")

यावतिथः, त्रि, ( यावतां पूरणः । यावत् + "तस्य पूरणे डट् ।" ५।२।४८ । इति डट् । "वतोरिथुक् ।"५।२।५३। इति इथुगागमश्च ।) यावत्परिमाणम् । इति मुग्धबोधव्याकरणम् ॥ ( यथा, मनुः । १ । २० ।
"आद्याद्यस्य गुणन्त्वेषामवाप्नोति परः परः ।
यो यो यावतिथश्चैषां स स तावद्गुणः स्मृतः ॥")

यावनः, पुं, (यवने यवनदेशे भवः । यवन + अण् ।) सिह्लकगन्धद्रव्यम् । इत्यमरः । २।६। १२८ ॥ (विवृतिरस्य सिह्लकशब्दे ज्ञातव्या ॥)

यावनालः, पुं, (यवनाल एवेति । यवनाल + स्वार्थे अण् ।) धान्यविशेषः । जोयार इति भाषा । तत्पर्य्यायः । यवनालः २ शिखरी ३ वृत्ततण्डुलः ४ दीर्घनालः ५ दीर्घशरः ६ क्षेत्रेक्षुः ७ इक्षुपत्रकः ८ । तस्य गुणाः । मधुरत्वम् । गौल्यत्वम् । बल्यत्वम् । त्रिदोषघ्नत्वम् । हृद्यत्वम् । रुच्यत्वम् । अर्शोयक्ष्मगुल्मव्रणनाशित्वञ्च । इति राजनिर्घण्टः ॥

यावनालशरः, पुं, (यावनाल इव शरः ।) शरभेदः । जोन्हरी इति हिन्दी भाषा । तत्पर्य्यायः । नदीजः २ दृढत्वक् ३ वारिसम्भवः ४ यावनालनिभः ५ खरपत्रः ६ । अस्य गुणाः । ईषन्मधुरत्वम् । रुच्यत्वम् । शीतत्वम् । पित्तक्षयनाशित्वम् । पशूनां बलप्रदत्वञ्च । इति राजनिर्घण्टः ॥

यावनाली, स्त्री, (यवनालस्य विकारः । यवनाल + अण् । ततो ङीप् ।) यावनालशर्करा । तत्पर्य्यायः । हिमोत्पन्ना २ हिमानी ३ हिमशर्करा ४ क्षुद्रशर्करिका ५ क्षुद्रा ६ गुडभा ७ जलबिन्दुजा ८ । अस्या गुणाः । गौल्यत्वम् । उष्णत्वम् । तिक्तत्वम् । अतिपिच्छिलत्वम् । वातघ्नत्वम् । सारकत्वम् । रुच्यत्वम् । दाहपित्तास्रशमित्वञ्च । इति राजनिर्घण्टः ॥

यावशूकः, पुं, (यवशूक एव । यवशूक + स्वार्थे अण् । यद्वा, यावस्य यवस्य शूकः कारणत्वेनास्त्यस्येति । अर्श आद्यच् ।) यवक्षारः । इति रत्नमाला ॥ (यथा, सुश्रुते चिकित्सास्थाने १ अध्याये ।

"क्षौमं प्लोतं पिचुं फेनं यावशूकं ससर्ज्जकम् ।
कर्कशाणि च पत्राणि लेखनार्थे प्रदापयेत् ॥")

यावसः, पुं, (यूयते इति । यु + "वहियुभ्यां णित् ।") उणा० ३।११८ । इति असच् । तस्य णित्वञ्च । यद्वा, यवसानां समूहः । यवस + "तस्य समूहः ।" ४।२।३७ । इत्यण् ।) घाससमूहः । इति सिद्धान्तकौमुदी ॥

याव्यं, त्रि, (यूयते इति । यु + "आसुयुवपिरपिलपित्रपिचमश्च ।" ३।१।१२६ । इति ण्यत् ।) निन्दनीयम् । यूयते यत् । इति मुग्धबोधव्याकरणम् ॥

याशोधरेयः, पुं, (यशोधराया अपत्यं पुमान् । यशोधरा + ढक् ।) शाक्यमुनिपुत्त्रः । इति हेमचन्द्रः ॥

याष्टीकः, पुं, (यष्टिः प्रहरणमस्य । यष्टि + "शक्तियष्ट्योरीकक् ।" ४ । ४ । ५९ । इति ईकक् ।) यष्टिधारियोद्धा । बेठेरा इति भाषा । तत्पर्य्यायः । याष्टिहेतिकः २ । इत्यमरः । २।८।७० ॥ ( यथा, राजतरङ्गिण्याम् । ६ । २०२ ।

"आक्रन्दय हतं दृष्ट्वा सम्बन्ध्य प्रार्थनादिकम् ।
एके प्रभुत याष्टीकास्तस्य हन्तुं व्यवर्जयत् ॥")

यासः, पुं, (यस + घञ् ।) दुरालभा । इत्यमरः । २ । ४ । ९१ ॥ (यथा,—

"यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ।
दुरालभा दुरालम्भा समुद्रान्ता च रोदिनी ॥
गान्धारी कच्छुरानन्ता कषाया हरविग्रहा ।
यासः स्वादुः सरस्तिक्ततुवरः शीतलो लघुः ॥
कफमेदोमदभ्रान्तिपित्तासृक्कुष्ठकासजित् ।
तृष्णाविसर्पवातास्रवमिज्वरहरः परः ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

यासा, स्त्री, (यासः प्रयत्नोऽस्त्यस्या इति अर्श आद्यच् । टाप् ।) मदनशलाकापक्षी । इति शब्दमाला ॥

यु, ङ क निन्दने । इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-सक०-सेट् ।) ङ क, यावयते । इति दुर्गादासः ॥ ("यावयते बाला हृद्यम् ।" इति मनोरमा ॥)

यु, ञ श बन्धे । इति कविकल्पद्रुमः ॥ (क्र्या०-उभ०-सक०-सेट् ।) ञ श, युनाति यो वयस्योऽपि न वेश्यावन्धकीजनैरिति हलायुधः । इति दुर्गादासः ॥

यु, ल मिश्रणे । अमिश्रणे । इति कविकल्पद्रुमः ॥ (अदा०-पर०-सक०-सेट् ।) ल, यौति । मिश्रणे यथा,—

"यौति काले कुलस्त्रीभिः पाकसन्तानहृद्ये ॥"
इति हलायुधः ॥

अमिश्रणे समवायजन्ये । अयुतसिद्धानामिति मिलितसिद्धानामित्यर्थः । इति दुर्गादासः ॥

युक्, [ज्] त्रि, (युज्यते समाधत्ते इति । युजौ ङ समाधौ + क्विप् ।) समाधिमान् । इति मुग्धबोधव्याकरणम् ॥ (युज्यते परस्परमिति ।) युग्मम् । इति शब्दरत्नावली ॥ (यथा, मनुः । ३ । २७७ ।

"युक्षु कुर्व्वन् दिनर्क्षेषु सर्व्वान् कामान् समश्नुते ।
अयुक्षु तु पितॄन् सर्व्वान् प्रजां प्राप्नोति पुष्कलाम् ॥")

युक्, स, निन्दा । युज क ङ, निन्दे इत्यस्माद्भावे क्विप्प्रत्ययेन निष्पन्नम् ॥ (एतच्चिन्त्यम् ॥)

युक्तं, त्रि, (युज्यते स्म इति । युज् + क्तः ।) न्याय्यम् । तत्तु न्यायागतद्रव्यादिकम् । इत्यमरः । ३ । ८ । २४ ॥ (यथा, शाकुन्तले । १ अङ्के ।

"जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्त्रमेवं गुणोपेतं चक्रवर्त्तिनमाप्नुहि ॥")

अपृथग्भूतम् । मिलितमित्यर्थः । इति मेदिनी । ते, ४७ ॥ (यथा, आनन्दलहर्य्याम् । १ ।

"शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरिञ्च्यादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥")

युक्तं, क्ली, (युज् + क्तः ।) हस्तचतुष्टयम् । इति मेदिनी । ते, ४७ ॥

युक्तः, पुं, (युज्यते स्म योगेनेति । युज् + क्तः ।) अभ्यस्तयोगः । यथा,—

"योगज्ञो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ।
युक्तस्य सर्व्वदा भानं चिन्तासहकृतोऽपरः ॥"
इति भाषापरिच्छेदे । ६६ ॥

तस्य लक्षणं यथा, गीतायाम् । ६ । ८ ।

"ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥"

"योगारूढस्य लक्षणं श्लोकत्रयेणाह ज्ञानेति । ज्ञानमौपदेशिकं विज्ञानमपरोक्षानुभवः ताभ्यां तृप्तो निराकाङ्क्ष आत्मा चित्तं यस्य । अतः कूटस्थो निर्व्विकारः । अतएव विजितानि इन्द्रियाणि येन । अतएव समानि लोष्टादीनि यस्य । मृत्खण्डपाषाणसुवर्णेषु हेयोपादेयबुद्धिशून्यः स युक्तो योगारूढ इत्युच्यते ॥" इति तट्टीकायां श्रीधरस्वामी ॥ (रैवतमनोः पुत्त्रः । यथा, हरिवंशे । ७ । २८ ।

"अथ पुत्त्रानिमांस्तस्य निबोध गदतो मम ।
धृतिमानव्ययो युक्तस्तत्त्वदर्शी निरुत्सुकः ॥")

युक्तरसा, स्त्री, (युक्तः रसोऽस्याः ।) रास्ना । इत्यमरभरतौ । २।४।१४० ॥ काँटा रासना इति भाषा । (तथास्याः पर्य्यायः ।

"रास्ना युक्तरसा रस्या सुवहा रसना रसा ।
एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

युक्ता, स्त्री, (युक्त + टाप् ।) छन्दोविशेषः । इति रत्नमाला ॥ एलानी इति भाषा ॥

युक्तिः, स्त्री, (युज्यते इति । युज् + क्तिन् ।) न्यायः । इति मेदिनी । ते, ४७ ॥ (यथा, पञ्चतन्त्रे । ३ । १६४ ।

"तस्य तद्वचनं श्रुत्वा धर्म्मयुक्तिसमन्वितम् ।
उपगम्य ततोऽश्वः कपोतः प्राह लुब्धकम् ॥")

लोकव्यवहारः । इति व्यवहारमातृका ॥

"धर्म्मशास्त्राविरोधे तु युक्तियुक्तो विधिः स्मृतः ॥"
इति स्मृतिश्च ॥

अनुमानम् । यथा,—

"युक्तिव्यपाश्रयात्तु अपथैनमर्हयेत् ॥
युक्तिरनुमानम् ।
अनुमानेन विज्ञेयं न स्यातां पक्षसाक्षिणौ ।
इत्येकवाक्यत्वादिति विवरणम् ॥ अथ युक्तिः ।
नारदः ।
उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः ।
केशाकेशिगृहीतश्च युगपत् पारदारिकः ॥
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः ।
तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्त्तितः ॥
प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः ।
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् ॥
प्रत्यक्षचिह्नैः रुधिराक्तखड्गादिभिः । पारुष्यं वाक्पारुष्ये । शस्त्रः । लोप्त्रहस्तश्च चौर इति ।
नारदः ।
अभीक्ष्णं दीयमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं समाचरेत् ॥
यदा धनिकेनाधमर्णिकस्त्रिचतुःपञ्चकृत्वो वा त्वं मे ऋणं धारयसीति पुनःपुनर्दीयमानोऽपि

रणाररणौ रथाङ्गे। इति भरतः ॥ (यथा, महाभारते । ८ । ७२ । २७ ।
"अधरविर्महाबाहुर्घूर्णोरक्षः सुदुर्ज्जयः ।" )
रत्यङ्गं, क्ली, ( रतेरङ्गम् । ) योनिः । इति शब्दरत्नावली ॥
रथः, पुं, ( रम्यतेऽनेनात्र वा । रम्+"हनिकुषिनीरमिकाशिभ्यः क्थन् ।" उणा० २ । २ । इति क्थन् । अनुनासिकलोपश्च । ) कायः । ( यथा, गीतायाम् ।
"आत्मानं रथिनं विद्धि शरीरं रथमेव च ॥")
चरणः । वेतसवृक्षः । इति विश्वः ॥ ( अस्य पर्य्यायो यथा,—
"वेतसो नम्रकः प्रोक्तो वानीरो वञ्जुलस्तथा ।
अभ्रपुष्पश्च विदुलो रथः शीतश्च कीर्त्तितः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
तिनिशवृक्षः । इति राजनिर्घण्टः ॥ चक्रविशिष्टयुद्धाद्यर्थयानम् । तत्पर्य्यायः । शताङ्गः २ स्यन्दनः ३ । इत्यमरः । २ । ८ । ५१ ॥ स्यन्दनमानम् । रंहयः ॥ ( यथा, मनुः । ८ । २९५ ।
"स चेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा ।
प्रमापयेत् प्राणभृतस्तत्र दण्डोऽविचारितः ॥")
तद्द्वारा भ्रमणगुणाः ।
"हस्त्यश्वरथदोलाद्यैर्भ्रमणं बालकोचितम् ।
स्थिरीकरणमङ्गानां वक्तुं वह्निविवर्द्धनम् ॥"
इति राजवल्लभः ॥ * ॥
रथविशेषाणां नामानि यथा,—
"युद्धार्थे चक्रवद्याने शताङ्गः स्यन्दनो रथः ।
सक्रीडार्थः पुष्परथो देवार्थस्तु मरुद्रथः ॥
योग्यो रथो वैनयिकोऽध्वरथः परियानिकः ।
कर्णीरथः प्रवहणं डयनं रथगर्भकः ॥
अनस्तु शकटोऽथ स्यात् गन्त्री कम्बलिवाह्यकम् ।
अथ काम्बलवास्त्राद्यास्तैः परिवृते रथे ॥
सपाण्डुकम्बलो यः स्यात् संवीतः पाण्डुकम्बलैः ।
स तु द्वैपो वैयाघ्रश्च यो वृतो द्वीपिचर्म्मणा ॥"
इति हेमचन्द्रः ॥
गोलोकस्य रथो यथा,—
"ददर्श विप्रपत्नीभिर्न्निर्म्मितं सुधोपमम् ।
बालकान् भोजयित्वा तु स्वयञ्च बुभुजे विभुः ॥
एतस्मिन्नन्तरे तत्र शातकुम्भरथं वरम् ।
ददृशुर्विप्रपत्न्यश्च पतन्तं गगनाद्द्रुतम् ॥
रत्नदर्पणसंयुक्तं रत्नसारपरिच्छदम् ।
रत्नस्तम्भैर्न्निबद्धञ्च सद्रत्नकलसोज्ज्वलम् ॥
श्वेतचामरसंयुक्तं वह्निशुद्धांशुकान्वितम् ।
पारिजातप्रसूनानां मालाजालविराजितम् ॥
शतचक्रसमायुक्तं मनोयायि मनोहरम् ।
वेष्टितं पार्षदैर्द्दिव्यैर्व्वनमालाविभूषितैः ॥
पीतवस्त्रपरीधानै रत्नालङ्कारभूषितैः ।
नवयौवनसम्पन्नैः श्यामलैः सुमनोहरैः ॥
द्विभुजैर्म्मुरलीहस्तैर्गोपवेशधरैर्वरैः ।
शिखिपुच्छगुञ्जमालाबद्धवङ्किमचूडकैः ॥
आरुह्य रथास्तूर्णं ते प्रणम्य हरेः पदम् ।
रथमारोहयां चक्रुर्[illegible]कामिनीः ॥
विप्रभार्य्या हरिं नत्वा जग्मुर्गोलोकमीप्सितम् ।
बभूवुर्गोपिकाः सद्यस्त्यक्त्वा मानुषविग्रहान् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १८ अध्यायः ॥
देव्या रथयात्रा यथा,—
ब्रह्मोवाच ।
"भूयस्तं संप्रवक्ष्यामि देव्याराधनमुत्तमम् ।
यत् कृत्वा सर्व्वकामानां व्याप्तिस्त्रिर्भविष्यति ॥
दन्तिदन्तमयैर्व्वैर्हैमवल्कैः सुशोभनैः ।
विचित्रपद्मरागाद्यैर्म्माणिभिरुपशोभितैः ॥
रथस्तैः कारयेद्दिव्या सप्तभौमं मनोरमम् ।
दुकूलवस्त्रसंछन्नमर्द्धचन्द्रोपशोभितम् ॥
घण्टाकिङ्किणिशब्दाढ्यं चामरैः कटकान्वितम् ।
पताकाध्वजशोभाढ्यं दर्पणैरुपशोभितम् ॥
तं रथं पूजयेच्छक्र जातीकुसुममल्लिकैः ।
पारिजातकपुष्पैश्च यक्षकर्द्दमचन्दनैः ॥
सुगन्धधूपितैः कृत्वा देवीं तत्र निवेशयेत् ।
प्रतिमां शोभनां वत्स । महासुरक्षयङ्करीम् ॥
पूजयेद्रथविन्यस्तां सर्व्वमङ्गलमङ्गलाम् ।
दुर्गा कात्यायनी देवी वरदा विन्ध्यवासिनी ॥
निशुम्भशुम्भमथनी महिषासुरघातिनी ।
प्रसीदतु सदा मेऽस्तु यच्च मे वाञ्छितं हृदि ॥
अनेन वलिपूर्व्वेण नमस्कारयुतेन च ।
पूजयित्वा ततो नेया समन्तात्परगोलकैः ॥
पञ्चमी सप्तमी पुर्णा नवम्येकादशीषु च ।
तृतीयाशिवविप्रादिवसेमृतसंयेषु च ॥
महानदीनदंश्रपर्व्वतस्थपथेषु च ।
तत्र मण्डपविन्यासं मण्डपादिविनिर्म्मितम् ॥
शैलं वा काष्ठमयं वापि कृत्वा वास्तुविचारितम् ।
सर्व्वलक्षणसंपूर्णं सर्व्वशोभासमन्वितम् ॥
पूर्व्वे च कारयेच्छक्र पश्चाद्यात्रां प्रचक्रिरे ।
महाजनपदोपेतां महार्घ्योभिः समाकुलाम् ॥
सर्व्वान्नपाननैवेद्यैः समस्तैरपि पूजयेत् ।
दद्याद्वलिं शक्र सर्व्वं सर्व्वदिक्षु समन्ततः ॥
भूयो वेतालसंघस्य मन्त्रेणानेन सुव्रत । ।
रक्ष मां निजभूतेभ्यो वलिं गृह्ण सदा प्रियम् ॥
मातर्मातर्वरे देवि । सर्व्वकामार्थसाधिनि ।
अनेन वलिदानेन सर्व्वकामान् प्रयच्छ मे ॥
एवं दत्त्वा वलिं शक्र तथा देव्यावतारयेत् ।
विन्यसेद्भद्रपीठे तु मण्डलैरुपशोभिताम् ॥
तत्रस्थां पूजयेद्देवीं हैमकल्पैश्च नालजैः ।
कलसैस्तु सहस्रेण गन्धोदकसुपूरितैः ॥
समस्तफलसम्पन्नैर्भार्य्याभियैरथ पल्लवैः ।
स्नापयेदेकमेकेन रत्नगर्भैर्व्वेदृहैः ॥
वेदमङ्गलशब्देन शङ्खवादित्रनिस्वनैः ।
वेणुवीणामृदङ्गैश्च घण्टाकिङ्किणिराविभिः ॥
स्नापयित्वा ततो देवीं निर्म्मञ्छनकैः शुभैः ।
गोमयादिकृतैः पञ्चदीपवरैर्व्वा विशोधितैः ॥
स्वस्तिकैर्न्नन्द्यावर्त्तैः शङ्खैर्नीलोत्पलान्वितैः ।
यवशाल्यङ्कुरोद्भिन्नैर्य्यवाचारैर्निमञ्जयेत ॥
प्रत्येकञ्च दहेद्धूपं प्रत्येकं कलसैः स्नपेत् ।
तथा कर्पूरतोयेन चन्दनैः कुङ्कुमेन च ॥
गोरोचनासमेतेन देवीमालिप्य पूजयेत् ।
हेमजैर्नालिजैर्माल्यै रत्नमाल्यैरनेकधा ।
वासोभिः सुमनोज्ञैश्च पुनर्धूपं समुत्क्षिपेत् ॥
भक्षयेत तथा कन्या द्विजातीनथ दुःखितान् ।
भक्ष्यभोज्यान्नपानेन तत्र सर्व्वांश्च प्रीणयेत् ॥
भोजयित्वा क्षमापयेत देवि मे प्रीयतामिति ।
रथे कृत्वा तथा देवीं पुनरेव गृहं नयेत् ॥
महता जनसंघेन समस्तविभवान्वितैः ।
प्रान्तरेषु पथं सर्व्वं पुष्पदूर्व्वाचितैर्ज्जलैः ॥
प्रक्षिप्यमाणैः कन्याभिः स्त्रीभिर्मङ्गलवादिभिः ।
सलिलेन यथा पांशुं कृत्वा पङ्कं प्रचक्रिरे ॥
पुरशोभां पथे शोभां द्वारशोभां गृहे गृहे ।
कारयीत तथा शक्र सर्व्वबाधां निवारयेत् ॥
अच्छेद्यास्तरवस्तस्मिन् प्राणिहिंसां विवर्ज्जयेत् ।
बन्धनस्था विमोक्तव्या वध्याः क्रोधादिसम्भवः ॥
अकालकौमुदीं शक्र रथयात्रान्तु कारयेत् ।
सर्व्वदा सर्व्वदेवैस्तु शङ्कराद्यैः प्रतिष्ठिता ॥
रथयात्रा तदा शक्र सुरैः स्वर्गे सदा कृता ।
तथा किन्नरगन्धर्व्वैर्भूपातालनिवासिभिः ॥
रथयात्राप्रभावेन मोदन्ते दिवि देवताः ।
आदित्यो रथयात्राकृद्रथेन नभसः क्रमेत ॥
दैत्यो दिव्यविमानस्था रथयात्राप्रभावतः ।
क्रीड़न्ति विविधैर्भोगैः सर्व्वातङ्कविवर्ज्जिताः ॥
तथा त्वमपि देवेन्द्र । रथयात्राकरो भव ।
शिवायाः शिवदायास्तु परमेण समाधिना ॥
अगस्त्य उवाच ।
रथयात्राकृतं पुण्यं लक्ष्मी वासवस्य तु ।
पूर्व्वं यत् कथितं तात तत् सर्व्वं मयाखिलम् ॥
व्यापितं नात्र सन्देहो देवीमाहात्म्यमुत्तमम् ।
यः पठेत् प्रत्यहञ्चापि भक्तिमान् नृपसत्तम ॥
स सुखं यशः सौभाग्यं पुत्रप्राप्तिमभीप्सिताम् ।
लभते नात्र सन्देह इत्येवं ब्रह्मणोऽब्रवीत् ॥
स्वबलेन कृतं राज्यं पुरा शक्रस्य कीर्त्तिना ।
धनदस्य पुरीप्राप्तिर्व्वरुणस्य च वायुना ॥
इति ध्यानं कृता तेन तथा श्रुत्वा च निर्ज्जितैः ।
भुञ्जते परया हृष्टा पुरीभोगिवतीः शुभाः ॥"
इति देवीपुराणे रथयात्राविधिमाहात्म्यम् ३६ अध्यायः ॥ * ॥ नवग्रहाणां रथा यथा,—
"योजनानां सहस्राणि भास्करस्य रथो नव ।
ईशादण्डस्तथैवास्माद्द्विगुणो द्विजसत्तमाः ॥
सार्द्धकोटिस्तथा सप्त नियुतान्यधिकानि तु ।
योजनानान्तु तस्याक्षं तत्र चक्रं प्रतिष्ठितम् ॥
त्रिनाभिमतिपञ्चारे षण्णेमिन्यक्षयात्मके ।
संवत्सरस्तु यत् कृत्स्नं कालचक्रं प्रतिष्ठितम् ॥
चत्वारिंशत्सहस्राणि द्वितीयोऽक्षो विवस्वतः ।
पञ्चान्यानि तु सार्द्धानि स्यन्दनस्य द्विजोत्तमाः ॥
अक्षप्रमाणमुभयोः प्रमाणं तत्परार्द्धयोः ।
भूयोऽक्षस्तद्युगार्द्धे च ध्रुवाधारं रथस्य वै ॥
द्वितीयेऽक्षे तु तच्चक्रं संस्थितं मानसाचले ।
हयाश्च सप्त छन्दांसि तन्नामानि निबोधत ॥
गायत्री च बृहत्युष्णिक् जगती पंक्तिरेव च ।
अनुष्टुप् त्रिष्टुबित्युक्ताश्छन्दांसि हरयो रवेः ॥"१ ॥
इति कौर्म्मे ३८ अध्यायः ॥

"रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः ।
वामदक्षिणतो युक्ता दश तेन निशाकरः ।
वीथ्याश्रयाणि चरति नक्षत्राणि रविर्यथा ॥ २ ॥
सोमपुत्त्रस्य चाष्टाभिर्वाजिभिर्वायुवेगिभिः ।
वारिजैः स्यन्दनो युक्तस्तेनासौ याति सर्व्वतः ॥ ३ ॥
शुक्रस्य भूमिजैरश्वैः स्यन्दनो दशभिर्वृतः ॥ ४ ॥
अष्टाभिश्चाथ भौमस्य रथो हैमः सुशोभनः ।५।
बृहस्पतेरथाष्टाश्वः स्यन्दनो हेमनिर्म्मितः ॥ ६ ॥
रथस्तमोमयो [illegible] मन्दस्यायसनिर्म्मितः । ७ ।
स्वर्भानोर्भास्करारेश्च तथा षड्भिर्हयैर्वृतः ॥ ८ ॥ ९ ॥
एते महाग्रहाणां वै समाख्याता रथा नव ।
सर्व्वे ध्रुवे महाभागा निबद्धा वातरश्मिभिः ॥
ग्रहर्क्षताराधिष्ण्यानि ध्रुवे बद्धान्यशेषतः ।
भ्रमन्ति भ्रामयन्त्येनं सर्व्वाण्यनिलरश्मिभिः ॥"
इति कौर्म्मे ४० अध्यायः ॥ * ॥
श्रीजगन्नाथदेवस्य रथः यात्राशब्दे द्रष्टव्यः ॥*॥
(त्रिपुरदहनार्थं महेश्वरादिष्टा देवा येन प्रकारेण तद्रथं निर्म्मितवन्तस्तदाह । मात्स्ये । १३३ । १३—७१ ।
"त्रिनेत्र एवमुक्तस्तु देवैः शक्रपुरोगमैः ।
उवाच देवान् देवेशो वरदो वृषवाहनः ॥
अपगच्छतु वो देवा महद्दानवजं भयम् ।
तदहं त्रिपुरं धक्ष्ये क्रियतां यद्ब्रवीमि तत् ॥
यदीच्छथ मया दग्धुं तत् पुरं सहदानवम् ।
रथमौपयिकं मह्यं सज्जयध्वं किलास्य ते ॥
दिग्वाससा तथोक्तास्ते सपितामहकाः सुराः ।
तथेत्युक्ता महादेवं चक्रुस्ते रथमुत्तमम् ॥
धरां कूवरकौ द्वौ तु रुद्रपार्श्वचरावुभौ ।
अधिष्ठानं शिरो मेरोरक्षो मन्दर एव च ॥
चक्रुश्चन्द्रञ्च सूर्य्यञ्च चक्रे काञ्चन-राजते ।
कृष्णपक्षं शुक्लपक्षं पक्षद्वयमरीश्वराः ॥
रथनेमिद्वयं चक्रुर्देवा ब्रह्मपुरःसराः ।
आदिद्वयं पक्षयन्त्रं यन्त्रमेताश्च देवताः ॥
कम्बलाश्वतराभ्याञ्च नागाभ्यां समवेष्टितम् ।
भार्गवश्चाङ्गिराश्चैव बुधोऽङ्गारक एव च ॥
शनैश्चरस्तथा चात्र सर्व्वे ते देवसत्तमाः ।
वरूथं गगनं चक्रुश्चारुरूपं रथस्य ते ॥
कृतं द्विजिह्वनयनं त्रिवेणु शातकौम्भिकम् ।
मणिमुक्तेन्द्रनीलैश्च वृतं ह्यष्टमुखैः सुरैः ॥
गङ्गा सिन्धुः शतद्रुश्च चन्द्रभागा इरावती ।
वितस्ता च विपाशा च यमुना गण्डकी तथा ॥
सरस्वती देविका च तथा च सरयूरपि ।
एताः सरिद्वराः सर्व्वा वेणुसंज्ञाः कृता रथे ॥
धृतराष्ट्राश्च ये नागास्ते च वेण्वात्मकाः कृताः ।
वासुकेः कुलजा ये च ये च रैवतवंशजाः ॥
ते सर्पा दर्पसम्पूर्णाश्चापतूणेष्वनूनगाः ।
अवतस्थुः शरा भूत्वा नानाजातिशुभाननाः ॥
सुरसा सरमा कद्रूर्विनता शुचिरेव च ।
तृषा बुभुक्षा सर्व्वोग्रा मृत्युः सर्व्वशमस्तथा ॥
ब्रह्मवध्या च गोवध्या बालवध्या प्रजाभयाः ।
गदा भूत्वा शक्तयश्च तदा देवरथेऽभ्ययुः ॥
युगं कृतयुगञ्चात्र चातुर्होत्रप्रयोजकाः ।
चतुर्व्वर्णाः सलीलाश्च बभूवुः स्वर्णकुण्डलाः ॥
तद्युगं युगसङ्काशं रथशीर्षे प्रतिष्ठितम् ।
धृतराष्ट्रेण नागेन बद्धं बलवता महत् ॥
ऋग्वेदः सामवेदश्च यजुर्व्वेदस्तथापरः ।
वेदाश्चत्वार एवैते चत्वारस्तुरगा भवन् ॥
अन्नदानपुरोगाणि यानि दानानि कानिचित् ।
तान्यासन् वाजिनां तेषां भूषणानि सहस्रशः ॥
पद्मद्वयं तक्षकश्च कर्कोटक-धनञ्जयौ ।
नागा बभूवुरेवैते हयानां वालबन्धनाः ॥
ओङ्कारप्रभवास्ता वा मन्त्रयज्ञक्रतुक्रियाः ।
उपद्रवाः प्रतीकाराः पशुबन्धेष्टयस्तथा ॥
यज्ञोपवाहान्येतानि तस्मिन् लोकरथे शुभे ।
मणि-मुक्ता-प्रवालैस्तु भूषितानि सहस्रशः ॥
प्रतोदोङ्कार एवासीत् तदग्रञ्च वषट्कृतम् ।
सिनीवाली कुहू राका तथा चानुमती शुभा ॥
योक्त्राण्यासंस्तुरङ्गाणामपसर्पणविग्रहाः ॥
कृष्णान्यथ च पीतानि श्वेतमाञ्जिष्ठकानि च ।
अवदाताः पताकास्तु बभूवुः पवनेरिताः ॥
ऋतुभिश्च कृतः षड्भिर्धनुः संवत्सरोऽभवत् ।
अजरा ज्याभवच्चापि साम्बिका धनुषो दृढा ॥
कालो हि भगवान् रुद्रस्तञ्च संवत्सरं विदुः ।
तस्मादुमा कालरात्रिर्धनुषो ज्याऽजराभवत् ॥
सगर्भं त्रिपुरं येन दग्धवान् स त्रिलोचनः ।
स इषुर्विष्णुसोमाग्नि-त्रिदैवतमयोऽभवत् ॥
आननं ह्यग्निरभवच्छल्यं सोमस्तमोनुदः ।
तेजसः समवायोऽथ चेषोस्तेजो रथाङ्गधृक् ॥
तस्मिंश्च वीर्य्यवृद्ध्यर्थं वासुकिर्नागपार्थिवः ।
तेजः संवसनार्थं वै मुमोचातिविषो विषम् ॥
कृत्वा देवा रथञ्चापि दिव्यं दिव्यप्रभावतः ।
लोकाधिपतिमभ्येत्य इदं वचनमब्रुवन् ॥
संस्कृतोऽयं रथोऽस्माभिस्तव दानवशत्रुजित् ।
इदमापत्परित्राणं देवान् सेन्द्रपुरोगमान् ॥
तं मेरुशिखराकारं त्रैलोक्यरथमुत्तमम् ।
प्रशस्य देवान् साध्विति रथं पश्यति शङ्करः ॥
सुहुर्दृष्ट्वा रथं साधु साध्वित्युक्त्वा मुहुर्मुहुः ।
उवाच सेन्द्रानमरानमराधिपतिः स्वयम् ॥
यादृशोऽयं रथः क्लृप्तो युष्माभिर्मम सत्तमाः ।
ईदृशो रथसम्पत्त्या यन्ता शीघ्रं विधीयताम् ॥
इत्युक्ता देवदेवेन देवा विद्धा इवेषुभिः ।
अवापुर्महतीं चिन्तां कथं कार्य्यमिति ब्रुवन् ॥
महादेवस्य देवोऽन्यः को नाम सदृशो भवेत् ।
मुक्त्वा चक्रायुधं देव सोपास्य इषुमाश्रितः ॥
धुरि युक्ता इवोक्षाणो घटन्त इव पर्व्वतैः ।
निश्वसन्तः सुराः सर्व्वे कथमेतदिति ब्रुवन् ॥
अहं सारथिरित्युक्त्वा जग्राहाश्वांस्ततोऽग्रजः ॥
ततो देवैः सगन्धर्व्वैः सिंहनादो महान् कृतः ।
प्रतोदहस्तं सम्प्रेक्ष्य ब्रह्माणं सूततां गतम् ॥
भगवानपि विश्वेशो रथस्थे वै पितामहे ।
सदृशः सूत इत्युक्त्वा चारुरोह रथं हरः ॥
आरोहति रथं देवे ह्यश्वा हरभरातुराः ।
जानुभिः पतिता भूमौ रजोग्रासश्च गामितः ॥
देवो दृष्ट्वाथ वेदांस्तानभीषच्छ्रयान् भयात् ।
उज्जहार पितॄनार्त्तान् सुपुत्र इव दुःखितान् ॥
ततः सिंहरवो भूयो बभूव रथभैरवः ।
जयशब्दश्च देवानां सम्बभूवार्णवोपमः ॥
तदोङ्कारमयं गृह्य प्रतोदं वरदः प्रभुः ।
स्वयम्भुः प्रययौ वाहाननुमन्त्र्य यथाजवम् ॥
ग्रसमाना इवाकाशं मुष्णन्त इव मेदिनीम् ।
मुखेभ्यः ससृजुः श्वासानुच्छ्वसन्त इवोरगाः ॥
स्वयम्भुवा चोद्यमानाश्चोदितेन कपर्द्दिना ।
व्रजन्ति तेऽश्वा जवनाः क्षयकाल इवानिलाः ॥
ध्वजोच्छ्रयविनिर्म्माणी ध्वजयष्टिमनुत्तमाम् ।
आक्रम्य नन्दी वृषभं तस्थौ तस्मिन्निच्छया ॥
भार्गवाङ्गिरसौ देवौ दण्डहस्तौ रविप्रभौ ।
रथचक्रे तु रक्षेते रुद्रस्य प्रियकाङ्क्षिणौ ॥
शेषश्च भगवान् नागः अनन्तोऽनन्तकरोऽरि-
णाम् ।
शरहस्तो रथं पाति शयनं ब्रह्मणस्तदा ॥
यमस्तूर्णं समास्थाय महिषञ्चातिदारुणम् ।
द्रविणाधिपतिर्व्यालं सुराणामधिपो द्विपम् ॥
मयूरं शतचन्द्रञ्च कूजन्तं किन्नरं यथा ।
गुह आस्थाय वरदो जुगोप च रथं पितुः ॥
नन्दीश्वरश्च भगवान् शूलमादाय दीप्तिमत् ।
पृष्ठतश्चापि पार्श्वाभ्यां लोकस्य क्षयकृद्यथा ॥
प्रमथाश्चाग्निवर्णाभाः साग्निज्वाला इवाचलाः ।
अनुजग्मू रथं शार्व्वं नक्रा इव महार्णवम् ॥
भृगुभरद्वाज-वसिष्ठ-गौतमाः
क्रतुः पुलस्त्यः पुलहस्तपोधनाः ।
मरीचिरत्रिर्भगवानथाङ्गिराः
पराशरागस्त्यमुखा महर्षयः ॥
हरमजितमजं प्रतुष्टु-
वुर्वचनविचित्रविचित्रभूषणैः ।
रथत्रिपुरे सकाञ्चनाचलो
व्रजति सपक्ष इवाद्रिरम्बरे ॥
करिगिरिरविमेघसन्निभाः
सजलपयोदनिनादनादिनः ।
प्रमथगणाः परिवार्य्य देवगुप्तं
रथमभितः प्रययुः सुदर्पयुक्ताः ॥
मकर-तिमि-तिमिङ्गिलावृतः
प्रलय इवातिसमुद्धतोऽर्णवः ।
व्रजति रथवरोऽति भास्वरो
ह्यशनिनिपातपयोदनिस्वनः ॥"*॥)
अथ ज्योतिर्विदाभरणे रथकर्म्माह ।
"सौम्ये चलवुतिग्मकरेषु
स्वष्टनाखिलविधानमथाहुः ।
सततमृदुध्रुवक्षिप्रतपस्ये
माधुराश्विवति साधुभिरङ्ग ॥"
अथ रथचक्रमाह ।
"उष्णदीधितकरकीर्णपुरन्ध्रा-
दियस्तवलयं वलयस्य ।
नवभागनिचितक्रमसङ्ख्या-
दाविमध्यमनसो नवभागम् ॥
क्षणभे भवति संक्रान्तिरम्भ-
कूवरोद्भवि नयोऽथ रथाङ्गे ।

सन्धिभिरर्थक्षतिरन्तरसन्धौ
भीतिरिहमनसो ननु गर्भे ॥"

अथ मुहूर्त्तगणपतौ रथकर्म्म ।

"पुष्ये पुनर्व्वसुज्येष्ठानुराधा रेवती द्वयोः ।
श्रवणादित्रिभे हस्तत्रितये रोहिणीत्रये ।
सार्के सौम्यदिने सौम्यविलग्ने रथकर्म्म सत् ॥"

अथ ज्योतिःसागरे रथचक्रम् ।

"रथाकारं लिखेच्चक्रं भानुभादौ विलोकयेत् ।
रथाग्रे त्रीणि रथाग्नि ऋक्षमार्गे प्रदापयेत् ॥
प्रष्ठे त्रयं त्रयं चक्रे सन्धिदण्डे मध्यद्वयम् ।
रथाग्ने च महोत्पातं मध्ये चैव सुखप्रदम् ॥"

इत्यार्थेषु ज्योतिर्व्विदाभरणेऽग्य लता: शुभा दिश: ॥ * ॥ अस्यार्थः । अथानन्तरं धीरा: स्यन्दनानां रथानां अखिलं सम्पूर्णं विधानं कार्य्यमाहुः कथयन्ति । केषु लोकसंज्ञानि स्वाति पुनर्व्वसुः श्रवणा धनिष्ठा शतभिषा एतानि । मैत्रसंज्ञानि मृगशिरा रेवती चित्रा अनुराधा एतानि । लघुसंज्ञानि हस्ता अश्विनी पुष्या अभिजित् एतानि । नियुरिन्द्रस्तद्र्ज्येष्ठा को ब्रह्मा तद्र रोहिणी एतेषु नक्षत्रेषु । पुनः केषु सेनवहात्सु इनः सूर्य्यः तेन सह वर्त्तमानेषु । सतां शुभग्रहाणां शुद्ध वारेषु । पुनः कस्मिन् साधुराशिवति शुभग्रहराशियुक्ते अङ्गे लग्ने सति । पुनः कैः यथा स्त्री सप्तमं स्थानं अस्तु चतुर्थं तपः नवमं एतद्रतनस्थैः साधुभिः शुभग्रहैरिति । अथ रथचक्रे नक्षत्रस्थापनम् । उष्णांति । उष्णद्युतिः सूर्य्यस्तस्य करैः किरणैः क्षीणं आप्तं पुरं कल्याणमकलीयन्नभागप्रदेशं यस्य तत् तदृक्षमिति तस्मात् अर्थात् सूर्य्या क्रान्तनक्षत्रात् अनसः शकटस्य वलयचक्रं तस्याग्रात् अग्रभागमारभ्य नाभिमध्यं मध्यभागपर्य्यन्तं सुधिया ऋक्षवलयं भचक्रं देयं न्यासीकार्य्यं किम्भूतं ऋक्षवलयं नवभागं नवभिर्भागैः स्थितमिति यावत् । पुनः किंभूतं मध्यभागान्निर्गतं वामभागेन आप्तभ्रमणमिति । अथास्य फलम् । अनसः शकटस्य अग्रभे अग्रागतवर्त्तमाने चन्द्रनक्षत्रे सङ्गतिः युद्धं भवति । कूबरोऽपि युगन्धरगते वर्त्तमानचन्द्रे अन्तो क्षतिः मरणं भवति ॥ रथाङ्गे चक्रयुग्मे जयो भवति । सन्धिमे सन्धिगतनक्षत्रे अर्थक्षतिः द्रव्यहरणं भवति । अन्तरसन्धौ मध्यसन्धानगतनक्षत्रे भीतिर्भयो भवति । गर्भे मध्यभागगतनक्षत्रे इष्टं शुभं भवति । ननु निश्चितमिति । अन्यत् सुगमम् ॥

रथक:, पुं, (रथ इव प्रतिकृतिः । कन् ।) मन्दिरावयवविशेषः । यथा,—

"अष्टांशेन गर्भस्य रथकानान्तु निर्गमः ।
परिधेर्गुणभागेन रथकांस्तत्र कल्पयेत् ॥
तत्तृतीयेन वा कुर्य्यात् रथकानान्तु निर्गमम् ।
वामत्रयं स्थापनीयं रथकाभिमतये सदा ॥"

इति श्रीहरिभक्तिविलासे २० विलासः ॥

रथकट्या, स्त्री, (रथानां समूह इति । "खलगोरथात् ।" इति मुग्धबोधसूत्रेण कट्या: । टाप् ।) रथसमूहः । तत्पर्य्यायः । रथव्रजः २ । इत्यमरः । २ । ८ । ५५ ॥ (रथकच्या । इति पाणिनिः । ४ । २ । ५१ ॥)

रथकर:, पुं, (करोतीति । कृ + अच् । रथानां करः ।) रथकारः । इति शब्दरत्नावली ॥

रथकार:, पुं, (रथं करोतीति । कृ + अण् ।) रथनिर्म्माणकर्त्ता । कुमार इति भाषा । स तु करणीगर्भे माहिष्याज्जातः । (यथा, वाजसनेयसंहितायाम् । ३० । ६ ।

"क्षोभसे प्रमदे कुमारीपुत्रं
मेधायै रथकारं धैर्य्याय तक्षाणम् ।"

"रथकारं माहिष्येण करिण्यां जातम् ।"
इति तद्भाष्ये महीधरः ॥) तत्पर्य्यायः । तक्षा २ वर्द्धकिः ३ त्वष्टा ४ काष्ठतट् ५ । इत्यमरः ॥ सूत्रधारः ६ वड्का ७ रथकरः ८ काष्ठतक्षकः ९ । इति शब्दरत्नावली ॥

रथकुटुम्बी, [न्] पुं, (रथं कुटुम्बयितुं धारयितुं शीलमस्य । णिनिः । यद्वा, रथ एव कुटुम्बम् । तदस्यास्तीति । इनिः ।) सारथिः । इत्यमरः । २ । ८ । ६० ॥

रथक्रान्त:, पुं, (रथवत् क्रान्तं क्रमणमस्य ।) तालविशेषः । यथा,—

"अश्वक्रान्तो रथक्रान्तो विष्णुक्रान्तस्ततः परः ।
सूर्य्यक्रान्तो विधुक्रान्तो वनभिन्नागपञ्चकः ॥
इति पञ्चमहीनानां संज्ञाः सप्त क्रमान्मताः ॥"

इति सङ्गीतरत्नाकरः ॥

रथगर्भक:, पुं, (रथो गर्भेऽस्य ।) स्कन्धवाह्ययानम् । नररथः । तत्पर्य्यायः । कर्णीरथः २ प्रवहणम् ३ डयनम् ४ । इति हेमचन्द्रः ॥

रथगुप्ति:, स्त्री, परप्रहरणाभिघातरक्षार्थं रथस्य सन्नाहवदावरणकादिद्रव्यम् । रथस्य गुप्तिः काष्ठादिभ्यो रक्षार्थमावरणम् । तत्पर्य्यायः । वरूथः २ । इत्यमरः भरतश्च ॥

रथगोपनं, क्ली, (रथस्य गोपनं शस्त्रादिभ्यो रक्षार्थमावरणम् ।) रथगुप्तिः । इति हलायुधः ॥

रथचरण:, पुं, (रथचरणं चक्रं तदेव नामास्य ।) चक्रवाकपक्षी । इति शब्दरत्नावली ॥ (पु, क्ली, रथस्य चरणः ।) रथचक्रम् । यथा,—

"रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति ।"

इति महिम्नः स्तोत्रम् ॥

रथद्रु:, पुं, (रथनामा द्रुः । यद्वा, रथस्य द्रुमः । तन्नोपयोगित्वात् ।) तिनिशवृक्षः । इत्यमरः । २ । ४ । २६ ॥ (तथास्य पर्य्यायः ।

"तिनिशः स्यन्दनो नेमी रथद्रुर्व्वञ्जुलस्तथा ।"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

रथन्तर:, त्रि, रथेन तरति यः । इति मुग्धबोधव्याकरणम् ॥ (कल्पविशेषे, पुं । यथा, मत्स्यपुराणे । ५३ । ३३—३४ ।

"रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य यत् ।
सावर्णिना नारदाय कृष्णमाहात्म्यसंयुतम् ॥
यत्र ब्रह्मवराहस्य चरितं वर्ण्यते मुहुः ।
तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते ॥"

रथेन तरतीति । तॄ + "संज्ञायां भृतॄवृजिधारिसहितपिदमः ।" ३ । २ । ४६ । इति खच् । मुमच । अत्र व्युत्पत्तिमात्रम् । नत्ववयवार्थानुगमः ।) साममेदे, क्ली । यथा, ऋग्वेदे । १ । १६४ । २५ ।

"जगता सिन्धुं दिव्यस्तभायद्रथन्तरे सूर्य्यं पर्य्यपश्यत् ॥"

"रथन्तरे एतन्नामके साम्नि ।" इति तद्भाष्ये सायणः । स्त्रियां ङीप् । रथन्तरी । पौरवस्य ईलिनस्य भार्य्या । यथा, महाभारते ।१।९४।१७।

"रथन्तर्य्यां सुतान् पञ्च पञ्चभूतोपमांस्ततः ।
ईलिनो जनयामास दुष्मन्तप्रभृतीन् नृपान् ॥")

रथपर्य्याय:, पुं, (रथः पर्य्यायो यस्य ।) वेतसवृक्षः । इति शब्दचन्द्रिका ॥ (विवरणमस्य वेतसशब्दे विज्ञेयम् ॥)

रथपाद:, पुं, (रथस्य पादः ।) चक्रम् । इति हेमचन्द्रः ॥

रथप्रा, स्त्री, नदीविशेषः । इति शब्दरत्नावली ॥

रथयात्रा, स्त्री, (रथेन भगवतो यात्रा ।) आषाढशुक्लद्वितीयायां श्रीजगन्नाथस्य रथारोपणरूपोत्सवः । यथा, स्कन्दपुराणे ।

"आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ।
तस्यां रथे समारोप्य रामं मां भद्रया सह ॥
यात्रोत्सवं प्रवर्त्याथ प्रीणयेच्च द्विजान् बहून् ॥
तथा ।
ऋक्षाभावे तिथौ कार्य्या सदा सा प्रीतये मम ॥
मां जगन्नाथम् । सा यात्रा ।" इति तिथ्यादितत्त्वम् ॥ * ॥

"नातः श्रेयःपदो विष्णोरुत्सवः शास्त्रसम्मतः ।
रथयात्रैव यात्राणां मुख्येत्याह प्रजापतिः ॥"

इति यात्रातत्त्वम् ॥ * ॥

अन्यत् यात्राशब्दे द्रष्टव्यम् ॥

रथाङ्गं, क्ली, (रथस्याङ्गम् ।) चक्रम् । इत्यमरः ॥ (यथा, रघुः । ७ । ४१ ।

"रथो रथाङ्गध्वनिना विजज्ञे
विलोलघण्टाक्वणितेन नागः ॥"

रथावयवमात्रम् । यथा, महाभारते । १४ । ८२ । १३ ।

"ध्वजे पताकादण्डेषु रथयन्त्रद्वयेषु च ।
अर्थेषु च रथाङ्गेषु न शरीरे न सारथौ ॥"

सुदर्शनचक्रम् । यथा, माघे । १ । २१ ।

"रथाङ्गपाणेः पटलेन रोचिषामृषित्विषः संवलिता विरेजिरे ॥")

रथाङ्ग:, पुं, चक्रवाकपक्षी । इत्यमरः ॥ (यथा, नैषधे । १९ । ३५ ।

"विरहतरलजिह्वा ब्रह्मज्ञयन्त्यतिविह्वलामिह सहचरीं नामग्राहं रथाङ्गविहङ्गमाः ॥")

रथाङ्गपाणिः, पुं, ( रथाङ्गं सुदर्शनचक्रं पाणौ यस्य । ) विष्णुः । इति हलायुधः ॥ ( यथा, भागवते । १ । ९ । ३८ ।

"स्वनिगममपहाय मत्प्रतिज्ञा-
मृतमधिकर्त्तुमवप्लुतो रथस्थः ॥") — 

"तवेद भ्रातुः पदवीं परस्य
दुरन्तवीर्य्यस्य रथाङ्गपाणेः ॥")

रथाङ्गी, स्त्री, ( रथस्याङ्गमिवाकृतिर्यस्याः । रथाङ्ग + ङीष् ।) ऋद्धिः । इति राजनिर्घण्टः ॥

रथान्तरः, पुं, कल्पभेदः । इत्यग्निपुराणम् । (रथन्तर इत्यपि पाठः ॥ )

रथाभ्रः, पुं, वेतसवृक्षः । इति शब्दरत्नावली ॥

रथाभ्रपुष्पः, पुं, ( रथाभ्रस्य पुष्पमिव पुष्पमस्य ।) वेतसः । इत्यमरटीकायां भरतः ॥

रथारोही, [ न् ] पुं, ( रथे अवरोहतीति । अव + रुह + णिनिः । ) रथस्थयुद्धकर्त्ता । इति हेमचन्द्रः ॥

रथिकः, पुं, ( रथोऽस्यास्तीति । रथ + ठन् । ) रथी । इत्यमरः । २ । ८ । ७६ ॥ ( यथा, वृहत्संहितायाम् । १५ । ११ ।

"हस्ते तस्करकुञ्जर-
रथिकमहामात्रशिल्पिपण्यानि ॥" )

तिनिशवृक्षः । इति राजनिर्घण्टः ॥ ( रथेन चरतीति । रथ + "पर्पादिभ्यः ष्ठन् ।" ४ । ४ । १० । इति ष्ठन् । रथचारिणि, त्रि । इति सिद्धान्तकौमुदी ॥ )

रथिनः, पुं, ( रथस्य इनः प्रभुः । शकन्ध्वादित्वादकारलोपः ।) रथी । इत्यमरः ।२।८।७६ ॥

रथिरः, पुं, ( रथोऽस्यास्तीति । रथ + "मेधारथाभ्यामिरन्निरचौ वक्तव्यौ ।" ५ । २ । १०९। इत्यस्य वार्त्तिकोक्त्या इरच् । ) रथी । इति शब्दरत्नावली ॥ (यथा, ऋग्वेदे । १ । २ । १७ ।

"अनुदेयान्रथिरो याति साधन् ॥"

"रथिरः रथी ।" इति तद्भाष्ये सायणः ॥ )

रथी, [ न् ] पुं, (रथोऽस्यास्तीति । रथ + इनिः ।) रथस्वामी राजादिः । तत्पर्य्यायः । रथिकः २ रथिनः ३ । इत्यमरः । २।८ । ७६ ॥ रथारोही ४ रथी ५ रथिरः ६ । इति हेमचन्द्रः ॥ रथस्वामी ७ सारथः ८ । इति शब्दरत्नावली ॥ स्यन्दनारोहः ९ । इति जटाधरः ॥ ( यथा, रघुः । ७ । ३७ ।

"पत्तिः पदातिं रथिनं रथेश-
स्तुरङ्गसादी तुरगाधिरूढम् ॥" )

रथ्यः, पुं, ( रथं वहतीति । रथ + "तद्वहति-रथयुगप्रासङ्गम् ।" ४ । ४ । ७६ । इति यत् । ) रथस्य वोढा घोटकः । इत्यमरः । २ । ८ । ४६ ॥ रथासः । इति हेमचन्द्रः ॥ ( रथस्य नेता । यथा, ऋग्वेदे । ८ । २१ । ६ ।

"ऋभुर्न रथ्यं नवं दधाता केतमादिशे ।"

"रथ्यं रथस्य नेतारम् ।" इति तद्भाष्ये सायणः ॥ रथसम्बन्धिनि, त्रि । यथा, ऋग्वेदे । २ । ३१ । ७ ।

"अभिर्न रथ्यो अहंधीतिमश्याः ।"

"रथ्यो रथसम्बन्धी अभिर्न अर्पणशीलोऽश्व रथ।" इति तद्भाष्ये सायणः ॥ रथस्येदमिति । "रथात् यत् ।" ४ । ३ । १२१ । इति यत् । ) स्त्री चक्रम् ॥ ( युगम् । इति काशिका ॥

रथ्या, स्त्री, ( रथानां समूहः । रथ + "खलगोरथात् ।" ४ । २ । ५० । इति यत् । ) रथसमूहः । तत्पर्य्यायः । रथकट्या (ड्या) २ रथव्रजः ३ । अभ्यन्तरमार्गः । गाह इति भाषा ॥ तत्पर्य्यायः । प्रतोली २ विशिखा ३ । इत्यमरः ॥ आवर्त्तनी । इति मेदिनी ॥ ( रथाय हिता । रथ + "रथाद्यत् ।" ४ । ३ ।१२१ । इति यत् । यद्वा, रथं वहतीति । "तद्वहतीति ।" ४ । ४ । ७६ । इति यत् । ) पन्थाः । ( यथा, महाभारते । १ । १४१ । ६० ।

"पानागारेषु रथ्यासु सर्व्वतीर्थेषु चाप्यथ ।
चत्वरेषु च कूपेषु पर्व्वतेषु वनेषु च ॥" )

चत्वरम् । इति हेमचन्द्रः ॥

रद, उत्खाते । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) रेफादिः । उत्खातमुत्खननमिति गोविन्दभट्टः । रदति भूमिं शूकरः । इति दुर्गादासः ॥

रदः, पुं, ( रदतीति । रद विलेखने + पचादित्वात् अच् । ) दन्तः । ( यथा, आर्य्यासप्तशत्याम् । ४०९ ।

"भ्रमसि प्रकटयसि रदं
करं प्रसारयसि त्वमपि भयवित्ति ।
धिङ्मानं तव कुञ्जर
जीवं न जुहोषि जठराग्नौ ॥")

विलेखनम् । इति मेदिनी । दे, १४ ॥ पुरुषदन्तलक्षणं यथा,—

"विवर्णधनक्षीणाश्च दन्ताः स्निग्धा घनाः
शुभाः ।
तीक्ष्णा दंष्ट्राः समाः श्रेष्ठा जिह्वा रक्ता समा
शुभा ॥"

स्त्रीदन्तलक्षणं यथा,—

"कुन्दपुष्पसमा दन्ता भाषितं कोकिलासमम् ।
दाक्षिण्ययुक्तमशठं हंसशब्दसुखावहम् ॥
नासा समा समपुटा रुचिरा तु रुचिरा शुभा ।
करालविषमा दन्ताः क्लेशाय च भयाय च ।
चौर्य्याय कृष्णमांसाश्च दीर्घा भर्त्तुश्च मृत्यवे ॥"

इति गारुडे ६६ अध्यायः ॥*॥

दन्तकाष्ठस्य शुचित्वं यथा,—

"दन्तवद्दन्तलग्नेषु जिह्वास्पर्शेऽशुचिर्भवेत् ॥"

इति कौर्म्मे उपविभागे १२ अध्यायः ॥*॥

"दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत् ।
न तत्र बहुशः कुर्य्याद्यत्नमुद्धरणे पुनः ।
भवेदशौचमत्यर्थं तृणवेधाद्व्रणे कृते ॥"

इति प्रायश्चित्ततत्त्वधृतवचनम् ॥

रदच्छदः, पुं, ( रदानां छद आच्छादकः । ) ओष्ठः । इति हेमचन्द्रः ॥

रदनः, पुं, ( रद्यतेऽनेनेति । रद + करणे ल्युट् । रदतीति । रद + ल्युर्वा । ) दन्तः । इत्यमरः । २ । ६ । ९१ ॥ ( यथा, हरिवंशे । १३० । ८७ ।

"रदनैः पन्नगरिपुं करेण शिरसा तदा ।
ऐरावतो गजपतिराजघान महंस्तथा ॥"

रद + भावे ल्युट् । ) उत्खनने, क्ली ॥

रदनच्छदः, पुं. ( रदनानां छद आच्छादकः । ) ओष्ठः । अधरः । इत्यमरः । २।६।९० ॥ तस्य शुभाशुभलक्षणं यथा,—

"मांसलैश्च धनोपेता अवक्रैरधरैर्नृपाः ।
बिम्बोपमैश्च स्फुटितै रोक्षै रूक्षैश्च खण्डितैः ।
विवर्णधनक्षीणाश्च दन्ता स्निग्धा घनाः शुभाः ॥"

इति गारुडे ६६ अध्यायः ॥

रदनी, [न्] पुं, ( रदनौ प्रशस्तदन्तावस्य स्त इति । रदन + इनिः । ) हस्ती । इति राजनिर्घण्टः ॥

रदी, [न्] पुं, ( रदौ प्रशस्तदन्तावस्य स्त इति । रद + इनिः । ) हस्ती । इति हलायुधः ॥

रध, य ऋ ञ हिंसने । पाके । इति कविकल्पद्रुमः ॥ ( दिवा०-पर०-सक०-वेट् । ) य, रध्यति । ञ, रधिष्यति रत्स्यति । ऋ, अरधत् । इति दुर्गादासः ॥

रञ्ज, म औ ञ } रागे । इति कविकल्पद्रुमः ॥
रञ्ज, य म औ ञ } ( भ्वा०-दिवा० च उभ०-वर्णान्तरोत्पादने सक०-आसक्तौ अक०-अनिट् ।), य ञ, रज्यति रज्यते । म, रजयति जगत् जगदमबाहन्याच रञ्जयति पुत्रं पिता । औ, रङ्क्ता । ञ, रजति रजते । रागो वर्णान्तरोत्पादनमासक्तिश्च । इति दुर्गादासः ॥

रन्तिदेवः, पुं, ( रमते इति । रम + संज्ञायां तिक् । रन्तिश्चासौ देवश्चेति । ) विष्णुः । चन्द्रवंशीयनृपतिभेदः । स तु साङ्कृतिपुत्रः । इति मेदिनी । वे, ६२ ॥ (यथा, भागवते ।९।२१।२।

"गुरुश्च रन्तिदेवश्च संकृतेः पाण्डुनन्दन ! ।
रन्तिदेवस्य महिमा इहामुत्र च गीयते ॥"

अयं हि याज्ञिको दाताग्रगण्य इति पुराणेषु श्रूयते । एतद्यज्ञहतगोचर्म्मरसेनैव चर्म्मण्वती नदी जाता । यथा, महाभारते । ३ । २०७ । ८—९ ।

"राज्ञो महानसे पूर्व्वं रन्तिदेवस्य वै द्विज ।
द्वे सहस्रे तु वध्येते पशूनामन्वहं तदा ॥
अहन्यहनि वध्येते द्वे सहस्रे गवां तथा ।
समांसं ददतो ह्यन्नं रन्तिदेवस्य नित्यशः ॥
अतुला कीर्त्तिरभवन्नृपस्य द्विजसत्तम ! ॥"

तथाच तत्रैव । १२ । २९ । १२२—१२८ ।

"उपातिष्ठंश्च पशवः स्वयं तं संशितव्रतम् ।
ग्राम्यारण्या महात्मानं रन्तिदेवं यशस्विनम् ॥
महानदी चर्म्मराशेरुत्क्लेदात् सुस्रुवे यतः ।
ततश्चर्म्मण्वतीत्येवं विख्याता सा महानदी ॥
ब्राह्मणेभ्यो ददौ निष्कान् सदसि प्रतते नृपः ।
तुभ्यं निष्कं तुभ्यं निष्कमिति क्रोशन्ति वै द्विजाः ॥
सहस्रं तुभ्यमित्युक्त्वा ब्राह्मणान् संप्रपद्यते ।
अन्वाहार्य्योपकरणं द्रव्योपकरणञ्च यत् ॥
घटाः पात्र्यः कटाहानि स्थाल्यश्च पिठराणि च ।
नासीत् किञ्चिदसौवर्णं रन्तिदेवस्य धीमतः ॥

शान्तौ रन्तिदेवस्य यां रात्रिमवसन् गृहे ।
आलभ्यन्त शतं गावः सहस्राणि च विंशतिः ॥
तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः ।
सूपभूयिष्ठमश्नीध्वं नाद्य मांसं यथा पुरा ॥”)
कुक्कुरः । इति शब्दरत्नावली ॥

**रन्तुः**, स्त्री, (रमते अत्रेति । रम् + तुन् ।) वर्त्म । नदी । इति मेदिनी । ते, ४६ ॥

**रन्धनं**, क्ली, पाकः । रधधातोर्भावेऽनट्प्रत्ययेन निष्पन्नम् । यथा रन्धनाय स्थाली । इति संक्षिप्तसारव्याकरणम् ॥ (रध् + ल्युः । नाशके, त्रि । यथा, भागवते । ४ । ३० । २८ ।
“यदङ्घ्र्यभ्यर्थते कामैः स्वबुद्ध्याभद्ररन्धन ! ॥”
“हे अभद्ररन्धन ! अमङ्गलनाशन !।” इति तट्टीकायां श्रीधरः ॥)

**रन्धितं**, क्ली, (रध् + क्त ।) अन्नरन्धनद्रव्यम् । तस्य पात्रान्तरे स्थापनविधिर्यथा,—
“सङ्कीर्णे पाकसम्भारे मार्गे वा वामतर्जिते ।
स्थापयेद्गुणवान् सूदः सिद्धान्नं पात्रकान्तरे ॥
भक्तं सपात्रके स्थाप्यं न स्थाप्यं पात्रकान्तरे ॥
घृतं कालायसे स्थाप्यं मांसं मांसभवं रसम् ।
स्थापयेद्राजते हैमे पात्रे लौहेऽथ कांस्यजे ।
पक्वादिवहुविधं शाकं स्थाप्यं कांस्यलौहजे ।
पक्वान्नं पिष्टकं भक्ष्यं स्थाप्यं कांस्येऽथ दारुजे ॥
धारयेत् सुश्रृतं क्षीरं पार्थिवे वाथ कारजे ।
पानीयं पायसं तक्रं न्यस्य येष्वेव धारयेत् ॥
काचजे स्फाटिके वाथ वैदूर्य्यादिविनिर्मिते ।
धारयेत् सर्व्वदा पात्रे रागषाड़वशङ्कुकान् ॥
यत्पात्रान्तरे स्थाप्यं तद्द्रव्यं तद्गुणापहम् ।
सर्व्वदा सुखदं ह्यन्यथा दोषकारकम् ॥”
इति सूपकारशास्त्रे पाकराजेश्वरः ॥

**रन्ध्रं**, क्ली, (रन्धयति छिनत्त्यनेनेति । रध् + बाहुलकात् रक् ।) दूषणम् । (यथा, रघुः । १२ । ११ ।
“रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ ॥”)
छिद्रम् । इति मेदिनी ॥ (यथा, रघौ । १५ । ८७ ।
“एवमुक्ते तया साध्व्या रन्ध्रात् सद्योभवाद्भुवः ।
शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ ॥”
मनुष्यशरीरस्थरन्ध्राणि यथा —
“नासानयनकर्णानां द्वे द्वे रन्ध्रे प्रकीर्तिते ।
मेहनापानवक्त्राणामेकैकं रन्ध्रमुच्यते ।
दशमं मस्तके प्रोक्तं रन्ध्राणीति नृणां विदुः ॥
स्त्रीणामन्यत्यधिकानि स्युः स्तनयोर्गर्भवर्त्मनः ।
सूक्ष्मच्छिद्राणि चान्यानि मतानि त्वचि जन्मिनाम् ॥”
इति शार्ङ्गधरे पूर्व्वखण्डे पञ्चमेऽध्याये ॥
योनिः । यथा, महाभारते ।१०।२८२।५३।
“रन्ध्रागतमथाश्वानां शिखोद्भेदश्च बर्हिणाम् ।
मेघरागः कोकिलस्य स्वरः प्रोक्तो महात्मना ॥”)

**रन्ध्रकराटः**, पुं, (रन्ध्रे कराटः कण्टको यस्य ।) जालबर्बुरकः । इति राजनिर्घण्टः ॥

**रन्ध्रबभ्रुः**, पुं, (रन्ध्रे गर्त्ते बभ्रुर्नकुल इव ।) उन्दुरः । इति त्रिकाण्डशेषः ॥

**रन्ध्रवंशः**, पुं, (रन्ध्रविशिष्टो वंशः ।) छिद्रयुक्तवंशः । फाँपावाँश इति भाषा । तत्पर्य्यायः । त्वक्सारः २ कीचकाख्यः ३ मस्करः ४ वातकीयः ५ शुषिराख्यः ६ । अस्य गुणाः ।
“वंशौ त्वक्सौ कषायौ च किञ्चित्तिक्तौ च शीतलौ ।
मूत्रकृच्छ्रप्रमेहार्शःपित्तदाहास्रनाशनौ ॥
विशेषो रन्ध्रवंशस्तु दीपनोऽजीर्णनाशकः ।
रुचिकृत् पाचनो हृद्यः शूलघ्नो गुल्मनाशनः ॥”
इति राजनिर्घण्टः ॥

**रप**, वदे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) रपति । वदः कथनम् । इति दुर्गादासः ॥

**रफ**, गत्याम् । वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) रफति । इति दुर्गादासः ॥

**रफ**, इ गत्याम् । वधे । इति कविकल्पद्रुमः ॥ आत्मा०-पर०-सक०-सेट् ।) इ, रम्फ्यते । इति दुर्गादासः ।

**रब**, इ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक० सेट् ।) इ, रम्ब्यते । इति दुर्गादासः ॥

**रब**, इ ङ शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ॥)

**रवः**, पुं, शब्दः । रवधातोर्भावेऽल्प्रत्ययेन निष्पन्नः ॥ (यथा, राजतरङ्गिण्याम् । ५ । ४०८ ।
“सुप्तस्तटादृषदे मत्त इव निद्रालसेक्षणः ।
प्रबुद्धः शस्त्रपातैः स यसुपद्भैरवान् रवान् ॥”)

**रभ**, इ ङ शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।) इ, रम्भ्यते । ङ, रम्भते । इति दुर्गादासः ॥

**रभ**, औ ङ राभस्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-अनिट् । राभस्यमुत्सुकीभावः । निर्विचारा प्रवृत्तिरिति गोविन्दभट्टः । औ, रब्धा । ङ, रभते साधुः पुण्ये । आङ्पूर्व्वोऽयमारम्भे । शास्त्रं पठितुमारभते शिष्यः । इति दुर्गादासः ॥

**रभसः**, पुं, (रभणमिति । रभ + “अत्यविचमितमिनमिरभिलभीति ।” उणा० ३ । ११७ । इति असच् ।) वेगः । (यथा, माघे । ९ । ७२ ।
“रभसोत्थितामुपगतः सहसा
परिरभ्य कश्चन वधूमवधत् ॥”)
हर्षः । इति मेदिनी । से, ११ ॥ (प्रेमोत्साहः । यथा, गीतगोविन्दे । ५ । ६ ।
“मनसि रभसविभवे हरिरुदयतु सुकृतेन ॥”
“रभसस्य प्रेमोत्साहस्य ।” इति तट्टीकाबालबोधिनी ॥) संरम्भः । यथा, माघे । ११ । १९ ।
“प्रमदमदनमाद्यद्यौवनोद्दामरामा
रमणरभसखेदस्वेदविच्छेददक्षः ॥”
संभ्रमः । यथा, भागवते । ११ । १६ ।
“वज्रदंष्ट्राः श्वानः सप्तशतानि
विंशतिश्च सरभसं खादन्ति ॥”)
पौर्व्वापर्य्यविचारः । इच्छयः । औत्सुक्यमिति कलिङ्गः । स्त्रियामा रभसा च दृश्यते । इति छन्दः । (यथा, किरातार्ज्जुनीये । ५ । १ ।
“अथ जयाय नु मेरुमहीभृतो
रभसया नु दिगन्तदिदृक्षया ।
अभिययौ स हिमाचलमुच्छ्रितं
समुदितं नु विलङ्घयितुं नभः ॥”)
(यथा, महाभारते । ५ । ५१ । १० ।
“सर्व्वेषां मम पुत्राणां स एकः क्रूरविक्रमः ।
अकाशी विप्रतीपश्च बाल्येऽपि रभसः सदा ॥”
महान् । इति निघण्टः । ३ । ३ ॥)
यदा तु रभसगुणयोगात्तच्छब्दः आदित्वात् अप्रत्यये तद्वति वर्त्तते तदा वाच्यलिङ्गता स्यात् । इति लिङ्गादिसंग्रहे भरतः ॥
स्वनामख्यातः अभिधानविशेषश्च ॥

**रम**, उ ङ ञ औ क्रीड़े । इति कविकल्पद्रुमः ॥ (भ्वा० आत्म०-अक०-अनिट् । क्वावेट् ।) रेफादिः । उ, रमित्वा । रन्त्वा । ङ, रमते । ञ, रामः रमः । औ, रन्ता । इति दुर्गादासः ॥

**रमः**, पुं, (रमते इति । रम् + पचाद्यच् ।) कान्तः । (यथा, किरातार्ज्जुनीये । ५ । २० ।
“निधिगुह्यकाधिपरमैः परमैः ॥”)
रक्ताशोकवृक्षः । कामदेवः । इति मेदिनी । मे, २५ ॥ रमणञ्च । रमधातोर्भावेऽल्प्रत्ययनिष्पन्नम् ॥

**रमकः**, पुं, (रमते इति । रम् + “रमेरश्च लो वा ।” उणा० ३ । ६३ । इति क्वुन् ।) कान्तः । इत्युणादिकोषः ॥

**रमठं**, क्ली, (रम + अठन् ।) हिङ्गु । इत्युणादिकोषः ॥ (जनपदविशेषे, पुं । तद्देशवासिनि, त्रि । यथा, महाभारते । ३ । ५१ । २४ ।
“जागुडान् रमठान् मुण्डान् स्त्रीराज्यानथ
तङ्गणान् ॥”)

**रमठध्वनिः**, पुं, (रमठ इति शब्देन ध्वन्यते कथ्यते इति । ध्वन् + इन् ।) हिङ्गु । इति शब्दचन्द्रिका ॥

**रमणं**, क्ली, (रमयतीति । रम् + णिच् + ल्युः ।) पटोलमूलम् । इति मेदिनी ॥ जघनम् । इति हेमचन्द्रः ॥ (रम् + भावे ल्युट् ।) जम्भनम् । तत्पर्य्यायः । अब्रह्मचर्य्यकम् २ ग्राम्यधर्म्मः ३ सुरतम् ४ रतम् ५ संप्रयोगः ६ निधुवनम् ७ मैथुनम् ८ रतिः ९ उपस्थम् १० धर्षितम् ११ क्रीड़ारत्नम् १२ महासुखम् १३ त्रिभद्रम् १४ योगमिथुनम् १५ अभिमानितम् १६ । इति शब्दरत्नावली ॥ (यथा, माघे । ११ । १९ ।
विकचकमलगन्धैरन्धयन् भृङ्गमालाः
सुरभितमकरन्दं मन्दमावाति वातः ।
प्रमदमदनमाद्यद्यौवनोद्दामरामा-
रमणरभसखेदस्वेदविच्छेददक्षः ॥”)
क्रीड़नम् । इति रमधात्वर्थदर्शनात् ॥ (रत्युत्पादनम् । यथा, भागवते । १० । २ । १३ ।
“रामेति लोकरमणाद्बलं बलवदुच्छ्रयात् ॥”
“लोकस्य रमणात् रत्युत्पादनात् ।” इति तत्र

स्वामी ॥ वनविशेषः । यथा, हरिवंशे ।१५५।२२।
"भाति चैत्ररथञ्चैव नन्दनञ्च वनं महत् ।
रमणं भावनं चैव वेणुमन्तं समन्ततः ॥")

रमणः, पुं, ( रमते रमयतीति वा । रम् + णिच् वा + ल्युः ।) पतिः । (यथा, कुमारे । ४ । २१ ।
"वचनीयमिदं व्यवस्थितं
रमण ! त्वामनुयामि यद्यपि ॥"
रमयति स्त्रीपुरुषाणां अन्तःकरणमिति । रम् + णिच् + ल्युः । ) कामदेवः । इति मेदिनी । णे, ७९ ॥ गर्द्दभः । इति हेमचन्द्रः । ४ । १८१ ॥ वृषणः । इति शब्दचन्द्रिका ॥ महारिष्टः । इति राजनिर्घण्टः ॥ ( धरवसुपुत्त्राणामन्यतमः । यथा, मात्स्ये । ५ । २४ ।
"कल्याणिन्यां ततः प्राणो रमणः शिशिरोऽपि च
मनोहरा धरात् पुत्त्रानवापाथ हरेः सुता ॥"
रमणीये, त्रि । यथा, भागवते । ४ । ६ । १० ।
"रमणं विहरन्तीनां रमणैः सिद्धयोषिताम् ॥")

रमणकं, क्ली, ( रमन्ते लोका अत्र । रम् + ल्युट् । संज्ञायां कन् । ) जम्बुद्वीपान्तर्गतवर्षविशेषः । स तु रम्यकवर्षः । यथा,—
"एवमेवोत्तरे त्रीणि वर्षाणि च तपोधन ।
कुरुवर्षं सिन्धुकूलात् शृङ्गवानवधिः स्मृतः ॥
हिरण्मयं ततो वर्षं श्वेतावधि निगद्यते ।
रम्यकञ्च ततो वर्षं नीलस्यावधिः स्मृतः ॥"
अपि च ।
शिव उवाच ।
"दक्षिणेन तु श्वेतस्य निषधस्योत्तरेण तु ।
वर्षं रमणकं नाम जायन्ते तत्र मानवाः ॥
शुक्लाभिजनसम्पन्नाः सर्व्वे सुप्रियदर्शनाः ।
दशवर्षसहस्राणि शतानि दश पञ्च च ।
जीवन्ति ते महाभाग नित्यं मुदितमानसाः ॥"
इति पाद्मे भूखण्डे १२८ । १२९ अध्यायौ ॥
(अन्यत् रम्यकशब्दे द्रष्टव्यम् ॥ वीतिहोत्रस्य पुत्त्रभेदः । यथा, भागवते । ५ । २० । ३१ ।
"तद्द्वीपस्याधिपतिः प्रैयव्रतो वीतिहोत्रो नाम तस्यात्मजौ रमणकधातकिनामानौ वर्षपती नियुज्य स्वयं पूर्व्वजवद्भगवत्कर्म्मशील एवास्ते ॥")

रमणा, स्त्री, रमणी । इत्यमरटीका ॥ ( पीठस्य शक्तिविशेषः । यथा, देवीभागवते । ७।३०।६७ ।
"रमणा रामतीर्थे तु यमुनायां मृगावती ॥")

रमणी, स्त्री, ( रमतेऽस्यामिति । रम + ल्युट् । ङीप् । ) नारी । इति मेदिनी । णे, ७२ ॥ उत्तमस्त्रीविशेषः । या वपुर्गुणोपचारेण सौभाग्येन कान्तं रमयति सा । इत्यमरभरतौ ॥ ( यथा, कथासरित्सागरे । ५० । २१४ ॥
"रथेन रमणीयुक्तः प्रजानां दत्तकौतुकः ॥" )
वालाजटः । यथा,—
"वाला च रमणी रामा वन्ध्या कामकलापि
च ॥"
इति शब्दचन्द्रिका ॥

रमणीयं त्रि, ( रम् + अनीयर् । ) सुन्दरम् । इत्यमरटीका ॥ (यथा, गीतगोविन्दे । १ । ११ ।
"वितरसि दिक्षु रणे दिक्पतिकमनीयम्
दशमुखमौलिबलिं रमणीयम् ॥" )

रमण्यं, त्रि, ( रम् + "अर्हन्योच ।" उणा० ३ । १०१ । इति अन्यप्रत्ययः । रमणीयम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ )

रमतिः, पुं, ( रमतेऽस्मिन् इति । रम् + "रमेर्नित् ।" उणा० ४ । ६३ । इति अतिप्रत्ययः । नित्त्व । ) नायकः । स्वर्गः । इति मेदिनी । ते, १४३ ॥ काकः । इति शब्दरत्नावली ॥ कालः । कामदेवः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

रमा, स्त्री, ( रमयतीति । रम् + णिच् + अच् । टाप् च । ) लक्ष्मीः । इति मेदिनी । मे, २५ ॥ ( यथा, भागवते । ३ । ६ । २३ ।
"एष प्रसन्नवरदो रमयात्मशक्त्या
यद्यत् करिष्यति गृहीतगुणावतारः ॥"
यथा च ।
"रमा यत्र नवाक् तत्र यत्र वाक् तत्र नो रमा ।
ते यत्र विनयो नास्ति सा च सा च स च
त्वयि ॥"
इत्युद्भटः ॥ )
शशिध्वजराजकन्या । सा कल्किदेवेन विवाहिता । यथा,—
"ततः शशिध्वजो राजा सुहृदाहूय पुत्रकान् ।
सुधान्वाया मतिं बुद्धा रमां प्रादात् स
कल्कये ॥"
इति कल्किपुराणे २५ अध्यायः ॥
शोभा । इति राजनिर्घण्टः ॥ ( गङ्गा । यथा, काशीखण्डे । २९ । १४५ ।
"रेवती रतिसम्पन्ना रत्नगर्भा रमा रतिः ॥"

रमाधवः, पुं, ( रमाया लक्ष्म्या धवः पतिरिति । ) श्रीकृष्णः । यथा । रमाधवः पूज्यो माधवत्वात् । इत्यवयवप्रश्ने जगदीशः ॥

रमानाथः, पुं, श्रीकृष्णः । रमा लक्ष्मीस्तस्या नाथः स्वामी । इति षष्ठीतत्पुरुषसमासनिष्पन्नः ॥

रमापतिः, पुं, ( रमायाः पतिः । ) श्रीकृष्णः । यथा, मुग्धबोधव्याकरणे ।
"मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥"
( यथा च देवीभागवते । १ । ५ । ८ ।
"दृष्ट्वा भारं धनुर्ज्यायां निद्रामाप रमा-
पतिः ॥" )

रमाप्रियं, क्ली, ( रमायाः प्रियम् । ) पद्मम् । इति शब्दचन्द्रिका ॥

रमावेष्टः, पुं, ( रमया वेष्टतेऽसौ । वेष्ट + घञ् । ) श्रीवासः । इति राजनिर्घण्टः ॥

रमिता, त्रि, ( रम् + णिच् + क्त । टाप् । ) रतिप्रापिता । यथा,—
"ललितगतिर्व्रजयुवतिस्तरणिसुताविपिनगता ।
सुररिपुणा रतिगुरुणा परिरमिता प्रमद-
मिता ॥"
इति छन्दोमञ्जरी ॥
"व्रजयुवतिर्गोपवधूः सुररिपुणा श्रीकृष्णेन परिरमिता सती प्रमदं हर्षं इता गता । किम्भूता । ललितगतिः ललिता शोभना गतिर्यस्याः सा तथा । पुनः किम्भूता तरणिसुताविपिनगता यमुनासम्बन्धिवनमुपागता । किम्भूतेन रतिगुरुणा रतौ शृङ्गारे गुरुणा उपाध्यायेन । अयमभिप्रायः । स्वयं रतिकुशलो नायिकाञ्च रतिमध्यापयति ।" इति तट्टीका ॥

रमेश्वरः, पुं, ( रमाया लक्ष्म्या ईश्वरः पतिरित्यन्ता वा । ) विष्णुः । यथा,—
"श्रीराम राघव रमेश्वर रावणारे
भूतेश मन्मथरिपो प्रमथाधिनाथ ।
चाणूरमर्द्दन हृषीकपतेऽसुरारे
त्वाम्भा भटा य इति सन्ततमामनन्ति ॥"
इति काशीखण्डे हरिहरस्तोत्रम् ॥

रम्भः, पुं, ( रम्भते रागमप्यङ्गनादिकमनेनेति । रभि + कर्म्मणि घञ् ।) वेणुः । ( रम्भते उद्यमशीलो भवति निरन्तरमुदरभरणायेति भावः । रभि + अच् । ) वानरविशेषः । इति मेदिनी । भे, ७ ॥ महिषासुरपिता । यथा,—
श्रीऔर्व्व उवाच ।
"आराधितो महादेवो रम्भेण सुरवैरिणा ।
चिरेण स च सुप्रीतस्तपसा तस्य शङ्करः ॥
अथ तुष्टो महादेवः प्रत्यक्षं रम्भमुक्तवान् ।
प्रीतोऽस्मि ते वरं रम्भ वरयस्व यथेप्सितम् ॥
एवमुक्तः प्रत्युवाच रम्भस्तं चन्द्रशेखरम् ।
अपुत्रोऽहं महादेव यदि ते मय्यनुग्रहः ॥
मम जन्मत्रये पुत्रो भवान् भवतु शङ्कर ।
एवमुक्तस्तु देवेन प्रत्युवाच वृषध्वजः ॥
भवत्वेतदभिप्रेतं ते भविष्यामि सुतस्तव ।
इत्युक्त्वा स महादेवस्तत्रैवान्तरधीयत ॥
रम्भोऽपि यातः स्वस्थानं हर्षोत्फुल्लविलोचनः ।
पथि गच्छन् स रम्भोऽथ ददर्श महिषीं
शुभाम् ॥
त्रिहायणीं चित्रवर्णां सुन्दरीं ऋतुशालिनीम् ।
स तां दृष्ट्वाथ महिषीं रम्भः कामेन मोहितः ॥
दोर्भ्यां गृहीत्वा च तदा चकार सुरतोत्सवम् ।
तयोः प्रवृत्ते सुरते सा तदा तस्य तेजसा ॥
दधार महिषी गर्भं तदाभून्महिषासुरः ॥"
इति कालिकापुराणे ५६ अध्यायः ॥
( असौ एव जन्मान्तरे रक्तवीजो जातः । एतद्विवरणं यथा, देवीभागवते । ५।२।१७-४६ ।
व्यास उवाच ।
"दनोः पुत्रौ महाराज ! विख्यातौ क्षिति-
मण्डले ।
रम्भश्चैव करम्भश्च द्वावास्तां दानवोत्तमौ ॥
तावपुत्रौ महाराज ! पुत्रार्थं तेपतुस्तपः ।
बहून् वर्षगणान् कामं पुण्ये पञ्चनदे जले ॥
करम्भस्तु जले मग्नश्चकार परमं तपः ।
वृक्षं रसालवटं प्राप्य स रम्भोऽग्निमसेवत ॥
पञ्चाग्निसाधनासक्तः स रम्भस्तु यदाभवत् ।
ज्ञात्वा शचीपतिर्दुःखमुद्वयौ दानवौ प्रति ॥

गत्वा पञ्चवटे तत्र याक्षरूपं चकार ह ।
तापसन्तु करम्भन्तं तदा जग्राह पादयोः ॥
निजघान च तं दुष्टं करम्भं हव्यसूदनः ।
भ्रातरं निहतं श्रुत्वा रम्भः कोपं परन्तपः ॥
स्वशीर्षं पावके होतुमैच्छच्छित्त्वा करेण च ।
केशपाशे गृहीत्वाशु वामेन क्रोधसंयुतः ॥
दक्षिणेन करेणोग्रं गृहीत्वा खड्गमुत्तमम् ।
छिनत्ति शीर्षं तावद्वह्निना प्रतिबोधितः ॥
उक्तश्च दैत्य मूर्खोऽसि स्वशीर्षं छेत्तुमिच्छसि ।
आत्महत्यातिदुःसाध्या कथं त्वं कर्त्तुमुद्यतः ॥
वरं वरय भद्रं ते यस्ते मनसि वर्त्तते ।
मा म्रियस्व मृतेनाद्य किन्ते कार्य्यं भविष्यति ॥

व्यास उवाच ।

तच्छ्रुत्वा वचनं रम्भः पावकस्य सुभाषितम् ।
ततोऽब्रवीद्वचो रम्भस्त्यक्त्वा केशकलापकम् ॥
यदि तुष्टोऽसि देवेश ! देहि मे वाञ्छितं वरम् ।
त्रैलोक्यविजयी पुत्रः स्यान्मे परबलार्द्दनः ॥
अजेयः सर्व्वथा स स्याद्देवदानवमानवैः ।
कामरूपी महावीर्य्यः सर्व्वलोकाभिवन्दितः ॥
पावकस्तं तथेत्याह भविष्यति तवेप्सितम् ।
पुत्रस्तव महाभाग ! मरणाद्विरमाधुना ॥
यस्यां चित्तं तु रम्भ ! त्वं प्रमदायां करिष्यसि ।

व्यास उवाच ।

तस्यां पुत्रो महाभाग ! भविष्यति बलाधिकः ॥
इत्युक्तो वह्निना रम्भो वचनं चित्तरञ्जनम् ।
श्रुत्वा प्रणम्य प्रययौ वह्निं तं दानवोत्तमः ॥
यक्षैः परिवृतं स्थानं रमणीयं श्रियान्वितम् ।
दृष्ट्वा चक्रे तदा भावं महिष्यां दानवोत्तमः ॥
मत्तायां रूपपूर्णायां त्रिहायण्यां च योषितम् ।
सा समागाच्च तरसा कामयन्ती मुदान्विता ॥
रम्भोऽपि गमनं चक्रे भवितव्यप्रचोदितः ।
सा तु गर्भवती जाता महिषी तस्य वीर्य्यतः ॥
तां गृहीत्वाथ पातालं प्रविवेश मनोहरम् ।
महिषैश्च तां रक्षन् प्रियामनुमतां किल ॥
कदाचित् महिषश्चान्यः कामार्त्तस्तामुपाद्रवत् ।
स्वयमागत्य तं हन्तुं दानवः समुपाद्रवत् ॥
त्वरयाथ समागत्य महिषं समताडयत् ।
सोऽपि तं निजघानाशु शृङ्गाभ्यां काममोहितः ॥
ताड़ितस्तेन तीक्ष्णाभ्यां शृङ्गाभ्यां हृदये भृशम् ।
भूमौ पपात तरसा ममार च विमूर्च्छितः ॥
मृते भर्त्तरि सा दीना भयार्त्ता विद्रुता भृशम् ।
सा वेगात्तं वटं प्राप्य यक्षाणां शरणं गता ॥
पृष्ठतस्तु गतस्तत्र महिषः कामपीड़ितः ।
कामयानस्तु तां कामी बलवीर्य्यमदोद्धतः ॥
क्रन्दती सा भृशं दीना दृष्ट्वा यक्षैर्भयातुरा ।
धावमानश्च तं वीक्ष्य यक्षवृन्दास्तु समाययुः ॥
युद्धं समभवद्घोरं यक्षाणां च हयारिणा ।
शरेण ताड़ितस्तूर्णं पपात धरणीतले ॥
मृतं रम्भं समानीय यक्षास्ते परमं प्रियम् ।
चितायां रोपयामासुस्तस्य देहस्य शुद्धये ॥
महिषी सा पतिं दृष्ट्वा चितायां रोपितं तदा ।
प्रवेष्टुं सा मतिं चक्रे पतिना सह पावकम् ॥
वार्य्यमाणापि यक्षैः सा प्रविवेश हुताशनम् ।
ज्वालामालाकुलं साध्वी पतिमादाय वल्लभम् ॥
महिषस्तु चितामध्यात् समुत्तस्थौ महाबलः ।
रम्भोऽप्यन्यद्वपुः कृत्वा निःसृतः पुत्रवत्सलः ॥
रक्तबीजोऽप्यसौ जातो महिषोऽपि महाबलः ।
अभिषिक्तस्तु राज्येऽसौ ह्यसुरैरसुरोत्तमैः ॥
एवं स महिषो जातो रक्तबीजश्च वीर्य्यवान् ।
अवध्यस्तु सुरैर्दैत्यैर्मानवैश्च नृपोत्तम ! ॥" )

रम्भा, स्त्री, ( रभि + अच् । टाप् । ) कदली । ( यथा, नैषधे । २ । ३७ ।
"तरुमूरुयुगेन सुन्दरी
किमु रम्भां परिणाहिना परम् ॥" )
अप्सरोविशेषः । इति मेदिनी । भे, ७ ॥ (यथा, महाभारते । १ । ६५ । ५० ।
"अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा ॥")
गौरी । इति शब्दरत्नावली ॥ ( सा तु पीठस्थ-शक्तीनामन्यतमा । यथा, देवीभागवते । ७ । ३० । ५८ ।
"गौरी प्रोक्ता कान्यकुब्जे रम्भा तु मलयाचले ॥" )
गोध्वनिः । इति हेमचन्द्रः । ६ । ४२ ॥ वेश्या । इति धरणिः ॥

रम्भातृतीया, स्त्री, ( रम्भाख्या तृतीया । ) व्रतविशेषकालः । यथा,—

ब्रह्मोवाच ।

"रम्भातृतीयां वक्ष्ये च सौभाग्यश्रीसुतादिदाम् ।
मार्गशीर्षे सिते पक्षे तृतीयायामुपोषितः ॥
गौरीं यजेद्बिल्वपत्रैः कुशोदाशः करम्भदः ।
कदम्बादो गिरिसुतां पौषे मरुवकैर्यजेत् ॥
कर्पूराशः क्षमारदो मल्लिकादन्तकाष्ठकृत् ।
माघे सुभद्रां कल्हारैर्घृताशी मल्लकप्रदः ॥
गोतीमयं दन्तकाष्ठं फाल्गुने गोमतीं यजेत् ।
कुन्दैः कृत्वा दन्तकाष्ठं जीवाशः सक्तुकीप्रदः ॥
विशालाक्षीं दमनकैश्चैत्रे कासारसंप्रदः ।
दधिप्राशो दन्तकाष्ठं तगरं श्रीमुखीं यजेत् ॥
वैशाखे कर्णिकारैश्च अशोकाशो वटप्रदः ।
ज्यैष्ठे नारायणीमर्च्चेत् शतपत्रैश्च खण्डदः ॥
यवप्राशश्च तच्चाद आषाढ़े माधवीं यजेत् ।
तिलाशी बिल्वपत्रैश्च चीरामवटकप्रदः ॥
औदुम्बरं दन्तकाष्ठं तगरैः श्रावणे श्रियम् ।
दन्तकाष्ठं सर्ज्जकाशः क्षीरदो सुतमां यजेत् ॥
पद्मैर्यजेत् भाद्रपदे शृङ्गोदाशो गुड़ादिदः ।
राजपुत्रीं चाश्वयुजे जपापुष्पैश्च जीवकम् ॥
प्राशयेन्नियमे नैवेद्यैः कृशरैः कार्त्तिके यजेत् ।
जातिपुष्पैः पद्मजाञ्च पञ्चगव्याशनो यजेत् ॥
घृतोदनञ्च वर्षान्ते सपत्नीकान् द्विजान् यजेत् ।
उमामहेश्वरं सार्द्धं लवणं तु गुड़ं स्थितम् ॥
पञ्चवर्णसुवर्णादि रात्रौ च कृतजागरः ।
गीतवाद्यैर्ददेत् प्रातर्गवाद्यं सर्व्वमाप्नुयात् ॥"

इति गारुडे १२० अध्यायः ॥ * ॥

अपि च । "अथ तृतीया । सा चतुर्थीयुता रम्भाव्रतेतरदैवकर्म्मसु ग्राह्या ।
'रम्भाख्यां वर्ज्जयित्वा तु तृतीयां मुनिसत्तम ।
अन्येषु सर्व्वकार्य्येषु गणयुक्ता प्रशस्यते ॥'

इति ब्रह्मवैवर्त्तात् ।

तच्च युग्मवाक्यं रम्भाव्रतपरम् । भविष्योत्तरे ।
'कुरुष्व भद्रे यत्नेन रम्भाख्यं व्रतमुत्तमम् ।
ज्यैष्ठे शुक्लतृतीयायां स्नातनियमतत्परा ॥'
रम्भाख्यमिति रम्भया कृतमिति रम्भाव्रतम् ।"
इति तिथ्यादितत्त्वम् ॥

रम्भोरूः, स्त्री, रम्भे इव ऊरू यस्याः सा । इति व्याकरणम् ॥ ( यथा, रघौ । ६ । ३५ ।
"अनेन यूना सह पार्थिवेन
रम्भोरु ! कच्चिन्मनसो रुचिस्ते ।")

रम्यं, क्ली, ( रम + "पोरदुपधात् यत् ।" ३ । १ । ९८ । इति यत् ।) पटोलमूलम् । इति मेदिनी ॥ प्रधानधातु । इति जटाधरः ॥

रम्यः, पुं, (रम्यते अनेनेति । रम + यत् ।) चम्पकवृक्षः । इति मेदिनी ॥ बकवृक्षः । इति शब्दचन्द्रिका ॥

रम्यः, त्रि, (रम + यत् ।) मनोज्ञः । इति मेदिनी ॥ (यथा, मनौ । ७ । ६९ ।
"रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत् ॥")
बलकरः । इति जटाधरः ॥

रम्यकं, क्ली, (रम्यते जनोऽत्रेति । रम् + यत् । ततः कप् संज्ञायां कन् वा ।) वर्षविशेषः । इति जटाधरः ॥ एतस्य विवरणं यथा,—
"दक्षिणेन तु मेरोस्तु श्वेतस्य चोत्तरेण च ।
वायव्यं रम्यकं नाम जायन्ते तत्र मानवाः ॥
मतिप्रधाना विमला जरादुर्गन्धवर्ज्जिताः ।
तत्रापि सुमहान् वृक्षो न्यग्रोधो रोहितः
स्मृतः ।
तत्फलप्राशनादेव जीवन्ति बहुवासरम् ॥"

इति वराहपुराणे रुद्रगीताज्ञानाध्यायः ॥

( तथाच देवीभागवते । ८ । ९ । १८—२६ ।
"रम्यके नाम वर्षे च मूर्त्तिं भगवतः पराम् ।
मात्स्यां देवासुरैर्वन्द्यां मनुः स्तौति निरन्तरम् ॥

मनुरुवाच ।

ओँ नमो मुख्यतमाय नमः सत्त्वाय
प्राणायौजसे बलाय महामत्स्याय नमः ।
अन्तर्ब्बहिश्चाखिललोकपालकै-
रदृष्टरूपो विचरस्युरुस्वनः ।
स ईश्वरस्त्वं य इदं वशे नय-
न्नाम्ना यथा दारुमयीं नरः स्त्रियम् ॥
यं लोकपालाः किल मत्सरज्वरा
हित्वा यतन्तोऽपि पृथक् समेत्य च ।
पातुं न शेकुर्द्विपदश्चतुष्पदः
सरीसृपं स्थाणु यदत्र दृश्यते ॥
भवान् युगान्तार्णव ऊर्म्मिमालिनि
क्षोणीमिमामोषधिवीरुधां निधिम् ।
मया सहोरुक्रमतेऽज ओजसा
तस्मै जगत्प्राणगणात्मने नमः ॥
एवं स्तौति च देवेशं मनुः पार्थिवसत्तमः ।
मत्स्यावतारं देवेशं संशयच्छेदकारकम् ॥

ध्यानयोगेन देवस्य निर्धूताशेषकल्मषः ।
आस्ते परिचरन् भक्त्या महाभागवतोत्तमः ॥”
तथाच मात्स्ये । ११२ । १० ॥ वैष्णवे । २।२।१३॥
महाभारते च । ६ । १ । ७ ॥ मरुत्वम् ॥ ) पटोलमूलम् । इति त्रिकाण्डशेषः ॥ ( यथा, सुश्रुते । १ । ३९ अध्याये ।
“कम्पिल्लकरम्यकपाटलापूगहरीतकीत्यादयः ॥”
पुं, आग्नीध्रपुत्रभेदः । एतन्नामानुसारेणैव रम्यकवर्षोऽभवत् । यथा, भागवते । ५ । २ । १९ ।
“तस्यामु ह वा आत्मजान् स राजवर्य्य आग्नीध्रो नाभिकिंपुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान् नवपुत्रानजनयत् ॥”)

रम्यपुष्पः, पुं, ( रम्यं दर्शनीयं पुष्पमस्य । ) शाल्मलिवृक्षः । इति राजनिर्घण्टः ॥ (शाल्मलिशब्देऽस्य गुणादयो ज्ञेयाः ॥ )

रम्यफलः, पुं, ( रम्यं फलमस्य । ) कारस्करवृक्षः । इति राजनिर्घण्टः ॥

रम्या, स्त्री, ( रमतेऽस्यामिति । रम+“पोरदुपधात् यत् ।” ३ । १ । ९८ । इति यत् । टाप् च । ) रात्रिः । इति मेदिनी ॥ स्थलपद्मिनी । इति राजनिर्घण्टः ॥ ( गङ्गा । यथा, काशीखण्डे तस्याः सहस्रनामकीर्त्तने । २९ । १४५ ।
“रेवती रतिकृद्रम्या रत्नगर्भा रमा रतिः ॥”)

रम्रः, पुं, (रम्+स्फायादित्वात् रः ।) अरुणवर्णः । शोभा । इत्युणादिकोषः । २ । २३८ ॥

रय ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् । ) ङ, रयते । इति दुर्गादासः ॥

रयः, पुं, ( रयते अनेनेति । रय+“पुंसि संज्ञायां घः प्रायेण ।” ३ । ३ । ११८ । इति घः । रीङ्गतौ अनेनेति वा । री गतौ + अप्रत्ययेन साधुरिति ।) वेगः । इत्यमरः ।१।१।६७ ॥ प्रवाहः । यथा,—
“प्रवाहः पुनरोघः स्याद्वेगो धारा रयश्च सः ॥”
इति हेमचन्द्रः ॥
(यथा, महाभारते । २ । १७ । ६ ।
“कथमन्तं न गच्छेम वृत्तस्येव नदीरयाः ॥”
पुरूरवसः पुत्रभेदः । यथा, भागवते ।९।१५।१।
“ऐलस्य चोर्व्वशीगर्भात् षडासन्नात्मजा नृप ।
आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः ॥”)

रराटी, स्त्री, (ललाट+रलयोरैक्यात् लस्य रत्वम् । ततो ङीप् ।) ललाटः । इति पुराणम् ॥ (यथा, भागवते । २ । १ । २८ ।
“तपो रराटीं विदुरादिपुंसः
सत्यन्तु शीर्षाणि सहस्रशीर्ष्णः ॥”)

रल्लकः, पुं, (“रमणं रत् क्विप्यनुनासिकलोपे रत् इच्छा तां लाति कः रल्लस्ततः स्वार्थे कन् ।” इत्यमरटीकायां रघुनाथचक्रवर्त्ती । ) कम्बलः । इत्यमरः ॥ पक्ष्म । इति सुभूतिः ॥ मृगविशेषः । इति मुकुटः ॥

रव, ह गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) ह, रम्वति । इति दुर्गादासः ॥

रवः, पुं, ( रूयते इति । रु शब्दे + भावे अप् । ) शब्दः । इत्यमरः ॥ (यथा, रघुः । ९ । ५४ ।
“धनुरधिज्यमनाधिरुपाददे
नरवरो रवरोषितकेशरी ॥”)

रवणं, क्ली, ( रौतीति । रु+युच् । ) कांस्यम् । इति हेमचन्द्रः ॥ ( रु+भावे ल्युट् । ) रवश्च ॥

रवणः, पुं, ( रौतीति । रु+“सुयुरुवृञो युच् ।” उणा० २ । ७४ । इति युच् । ) उष्ट्रः । इति हेमचन्द्रः ॥ (यथा, माघे । १२ । ९ ।
“उत्थातुमिच्छन् विधृतः पुरोबला-
न्निधीयमाने भरभाजि यन्त्रके ।
अर्द्धोज्झितोद्गारविमिश्रघर्घरः
स्वनाम निन्ये रवणः स्फुटार्थताम् ॥”)
कोकिलः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

रवणः, त्रि, ( रु+युच् । ) शब्दनः । तीक्ष्णः । भण्डकः । चपलः । इति शब्दरत्नावली ॥

रवथः, पुं, ( रु+“शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ।” उणा० ३ । ११३ । इति अथप्रत्ययः । ) कोकिलः । इत्युणादिकोषः ॥

रविः, पुं, ( रूयते स्तूयते इति । रु+“अच इः ।” उणा० ४ । १३८ । इति इः । ) सूर्य्यः । अर्कवृक्षः । इत्यमरः ॥ सूर्य्यस्य भोग्यं दिनं वाररूपम् ॥ यथा,—
“रवौ वर्ज्ज्यं चतुः पञ्च भौमे सप्त द्वयं तथा ॥”
इत्यादिवारवेलाकथने समयप्रदीपः ॥
तत्र निषिद्धानि यथा, —
“माषमामिषमांसञ्च मसूरं निम्बपत्रकम् ।
भक्षयेद्यो रवेर्व्वारे सप्तजन्मस्वपुत्रकः ॥
आर्द्रकं मधु मत्स्यञ्च भक्षयेद्यो रवेर्दिने ।
सप्तजन्म भवेद्रोगी जन्म जन्म दरिद्रता ॥
निम्बं मांसं मसूरञ्च बिल्वकाञ्जिकमार्द्रकम् ।
भक्षयेद्यो रवेर्व्वारे सप्तजन्मस्वपुत्रकः ॥”
इति कर्म्मलोचनम् ॥ * ॥
रविग्रहस्य रक्तश्याममिश्रितवर्णः । अयं पूर्व्वदिक्पुरुषक्षत्रियजातिसत्त्वगुणकटुरससिंहराशिहस्तागच्छसप्तमीतिथितास्त्रकलिङ्गदेशानामधिपतिः । काश्यपगोत्रः । द्वादशाङ्गुलशरीरः । पद्महस्तद्वयः । पूर्व्वाननः । सप्ताश्ववाहनः । शिवाधिदैवतः । वह्निप्रत्यधिदैवतश्च । इति ग्रहयज्ञतत्त्वादयः ॥ * ॥ अस्य व्युत्पत्तिर्यथा,
“अवतामोक्षयो लोकांस्तस्मात् सूर्य्यः परिभ्रमात् ।
अचिरात्तु प्रकाशेन अवनात् स रविः स्मृतः ॥”
इति मात्स्ये १०१ अध्यायः ॥ * ॥
अस्य भार्य्यापत्यानि यथा,—
“मरीचेः कश्यपो जज्ञे तस्माज्जज्ञे विभावसुः ।
तस्य भार्य्याभवत् संज्ञा पुत्त्री त्वष्टुः प्रजापतेः ॥
त्रीण्यपत्यानि राजेन्द्र ! संज्ञायां महसां निधिः ।
आदित्यो जनयामास कन्याञ्चैकां सुलोचनाम् ।
वैवस्वतं मनुश्रेष्ठं यमञ्च यमुनां ततः ॥
नातितेजोमयं रूपं सोढुं सा तं विवस्वतः ।
मायामयीं ततश्छायां सवर्णां निर्म्ममे स्वतः ॥
संज्ञोवाच ततश्छायां सवर्णां शृणु मे वचः ।
अहं यास्यामि सदनं पितुस्त्वं पुनरत्र मे ।
भवने वस कल्याणि ! निर्व्विशङ्कं ममाज्ञया ॥
मनुरेष यमाद्यैतौ यमुनायमसंज्ञकौ ।
स्वापत्यबुद्ध्या द्रष्टव्यमेतद्बालत्रयं त्वया ॥
न वक्तव्यमिदं वृत्तं त्वया पत्यौ कदाचन ।
इत्याकर्ण्याथ सा त्वाष्ट्रीं देवी छाया जगाद ताम् ॥
आकचग्रहणादाहमाशापाशं कदाचन ।
आख्यास्यामि चरित्रं ते याहि देवि ! यथासुखम् ॥
इति छायां गृहे स्थाप्य संज्ञागात् पितुरालयम् ।
उवाच पितरं देवी जामातुस्तव न क्षमा ॥
तेजः सोढुमहं तात । काश्यपस्य महात्मनः ।
तन्निशम्य चुकोपासौ भर्त्सयामास कन्यकाम् ॥
मत्तं श्रेयः कथं वा स्यादिति सा परिचिन्त्य च ।
अगच्छद्वडवा भूत्वा चरन्ती चोत्तरान् कुरून् ॥
तपस्तेपे च सा तीव्रं पतिमाधाय चेतसि ।
मन्यमानोऽथ तां संज्ञां सवर्णायां तथा रविः ॥
सावर्णिं जनयामास मनुश्रेष्ठं महीपते ।
शनैश्चरं द्वितीयञ्च सुतां भद्रां तृतीयिकाम् ॥
सवर्णा स्वेष्वपत्येषु वात्सल्यात् स्नेहभावतः ।
चकाराभ्यधिकं स्नेहं न तथा पूर्व्वजेष्वहो ॥
चिरमालोक्य तां भार्य्यां उवाच सविता वचः ।
अयि भाविनि बालेषु समेष्वपि कुलक्षया ॥
विधीयतेऽधिकः स्नेहः सावर्ण्यादिसुतान् प्रति ।
नाचचक्षे तदा साथ भास्करे परिपृच्छति ॥
ततः समुद्यतं शप्तुं छाया सर्व्वं शशंस ह ।
यथा वृत्तं तथा तथ्यं तुतोष भगवान् रविः ॥
निरासं न शशाप जगाम त्वष्टुरन्तिकम् ।
त्वष्टापि च यथान्यायं सान्त्वयित्वाथ काश्यपम् ।
निर्दग्धुकामं कोपेन प्रार्थयच्च मुदा तदा ॥
त्वष्टोवाच ।
तवातितेजसो भीता प्राप्योत्तरकुरून् वने ।
वडवारूपमास्थाय संज्ञा चरति शाद्वले ।
द्रष्टा हि तां भवानद्य स्वभार्य्यां तात मा वध ॥
लब्धानुज्ञोऽथ सविता गत्वोत्तरकुरूनथ ।
स हरिर्हरिरूपेण सुखेन समताड़यत् ॥
त्वरमाणा च सवितुः परपुरुषशङ्कया ।
सा तन्निरवमत् शुक्रं नासिकाभ्यां विवस्वतः ।
देवौ तस्मादजायेतामश्विनौ भिषजां वरौ ॥”
इति पाद्मे स्वर्गखण्डे ११ अध्यायः ॥
( अन्यत् सूर्य्यशब्दे द्रष्टव्यम् ॥ )

रविकान्तः, पुं, ( रविणा रविकरसंयोगेन कान्तः कमनीयः । ) सूर्य्यकान्तमणिः । इति राजनिर्घण्टः ॥

रविचक्रं, क्ली, ( रवेश्चक्रम् । ) नराकारसूर्य्यचक्रविशेषः । यथा,—
“लिख्यते रविचक्रन्तु भास्करो नरसन्निभः ।
यस्मिन्नृक्षे भवेत् सूर्य्यस्तदादौ त्रीणि मस्तके ।
त्रयं वक्त्रे प्रदातव्यमेकैकं स्कन्धयोर्न्यसेत् ॥
एकैकं बाहुयुग्मे तु एकैकं हस्तयोर्द्वयोः ।

"बलवती मे खिलिनीभिः शायमाना रसा गता ॥"

"रसा रसातलं गता ।" इति तट्टीकायां स्वामिपादाः ॥ नदी । यथा, ऋग्वेदे ।१।११२।१२।
"याभी रसां क्षोदसोद्नः पिपिन्वथुः ॥"
"रसां नदीम् ।" इति तद्भाष्ये सायनः ॥)

**रसाखनः**, पुं, ( खनतीति । खन् विदारे + अच् । रसाया भूमेः खनः । ) कुक्कुटः । इति शब्दचन्द्रिका ॥

**रसाग्रजं**, क्ली, ( रसानां अग्रजं रसस्य अग्रे जायते इति वा । जन् + डः । ) रसाञ्जनम् । इति राजनिर्घण्टः ॥

**रसाञ्जनं**, क्ली, ( रसजातमञ्जनं इति मध्यपदलोपी कर्म्मधारयः । ) रसजाताञ्जनविशेषः । रसवत् इति भाषा । तत्पर्य्यायः । रसगर्भम् २ तार्क्ष्यशैलम् ३ । इत्यमरः ॥ रसोद्भूतम् ४ रसाग्रजम् ५ कृतकम् ६ बालभैषज्यम् ७ दार्व्वीक्वाथोद्भवम् ८ रसरागः ९ वर्ण्याञ्जनम् १० रक्तनाभम् ११ अग्निसारम् १२ । अस्य गुणाः । हिमत्वम् । तिक्तत्वम् । चक्षुष्यत्वम् । मधुरत्वम् । कटुत्वम् । रक्तपित्तविषच्छर्द्दिहिक्कापकारनाशित्वञ्च ।
"दार्व्याम्बु भाव्यमानायां तत्किट्टन्तु रसाञ्जनम् ।
तदभावे तु कर्त्तव्यं दार्व्वीक्वाथसमुद्भवम् ॥"
इति राजनिर्घण्टः ॥
अपि च ।
"दार्व्वीक्वाथसमं क्षीरं पादं पक्त्वा यदा घनम् ।
तदा रसाञ्जनाख्यं तन्नेत्रयोः परमं हितम् ॥
रसाञ्जनं तार्क्ष्यशैलं रसगर्भञ्च तार्क्ष्यजम् ।
रसाञ्जनं कटु श्लेष्मविषनेत्रविकारनुत् ।
उष्णं रसायनं तिक्तं छेदनं व्रणदोषहृत् ॥"
इति भावप्रकाशः ॥

**रसाढ्यः**, पुं, ( रसेनाढ्यः युक्तः । ) आम्रातकः । इति राजनिर्घण्टः ॥ ( आम्रातकशब्देऽस्य विवरणं ज्ञातव्यम् ॥ )

**रसातलं**, क्ली, ( रसायाः तलं निम्नभागस्थलोकविशेषः । ) पातालम् । इत्यमरः ॥ ( यथा, महाभारते । १२ । ३४७ । ५६ ।
"जगाम वेदानखिलान् रसातलगतो हरिः ॥")
पातालभेदः । यथा,—
"अतलं वितलञ्चैव नितलञ्च तलातलम् ।
महातलञ्च सुतलं सप्तमञ्च रसातलम् ॥
पातालभेदाः सप्तैव वामनः कौर्म्मिना अमी ।
तत्र पातालमेकैकं दशसाहस्रयोजनम् ॥"
इति शब्दमाला ॥
( रसैव निवातकवचानां निवासस्थानम् । तथा च देवीभागवते । ८ । २० । ८—१२ ।
"ततोऽधस्ताच्च विवरे रसातलसमाह्वये ।
दैतेया निवसन्त्येव पणयो दानवाश्च ये ॥
निवातकवचा नाम हिरण्यपुरवासिनः ।
कालेया इति च प्रोक्ताः प्रत्यनीका हविर्भुजाम् ॥
महौजसश्चौत्पत्त्यैव महासाहसिनस्तथा ।
सकलेशस्य च हरेस्तेजसा हतविक्रमाः ॥
बिलेशया इव सदा विवरे निवसन्ति हि ।
ये वै वाग्भिः सरमया शक्रदूत्या निरन्तरम् ॥
मन्त्रवर्णाभिरसुरास्त्रासिता बिभ्यति स्म ह ॥")

**रसादानं**, क्ली, (रसानां आदानं ग्रहणम् ।) शोषणम् । इति हेमचन्द्रः ॥ ( रसाया दानम् । ) भूमिदानञ्च ॥

**रसाधारः**, पुं, ( रसानां जलानां आधारः । रसां पृथिवीं धरति आकर्षणेनेति वा । धृ + अच् । ) सूर्य्यः । इति शब्दरत्नावली ॥ रसस्याधारश्च ॥

**रसाधिकः**, पुं, ( रसाय स्वर्णादीनां द्रवीकरणाय अधिकः प्रबलः । ) टङ्गणः । इति राजनिर्घण्टः ॥ अधिकरसश्च ॥

**रसाधिका**, स्त्री, ( रसेन अधिका । ) काकोलीद्राक्षा । इति राजनिर्घण्टः ॥

**रसाभासः**, पुं, (रस इव आभासते इति । आ + भास् + अच् ।) अनौचित्यविशिष्टरसः । तस्य लक्षणं यथा,—
"अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः ।"
अनौचित्यञ्चात्र रसानां भरतादिप्रणीतलक्षणानां सामग्रीरहितत्वे सत्येकदेशयोगित्वोपलक्षणपरं बोध्यम् । तच्च बालव्युत्पत्तये एकदेशतो दर्श्यते । उपनायकसंस्थायां मुनिगुरुपत्नीगतायाञ्च । बहुनायकविषयायां रतौ तथानुभयनिष्ठायां प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्य्यगादिगते शृङ्गारे अनौचित्यम् । रौद्रे गुर्व्वादिगतकोपे । शान्ते च हीननिष्ठे । गुर्व्वाद्यालम्बने हास्ये । ब्रह्मवधाद्युत्साहे । अधमपात्रगते तथा वीरे । उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र । तत्र रतेरुपनायकनिष्ठत्वे यथा मम ।
"स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी
क्षोणीमावृणुते तमालमलिनच्छायातमःसन्ततिः ।
तन्मे सुन्दर ! मुञ्च कृष्ण ! सहसा वर्त्मेति गोप्या गिरः
श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥"
बहुनायकनिष्ठत्वे यथा,—
"कान्तास्त एव भुवनत्रितयेऽपि मन्ये
येषां कृते सुतनु ! पाण्डुरयं कपोलः ।"
अनुभयनिष्ठत्वे यथा,—
मालतीमाधवे नन्दनस्य मालत्याम् । पश्चादुभयनिष्ठत्वेऽपि प्रथममेकनिष्ठत्वे रतेराभासत्वमिति श्रीमल्लोचनकाराः । तस्योदाहरणं यथा रत्नावल्याम् । सागरिकाया अन्योऽन्यदर्शनात् प्राक् वत्सराजे रतिः । प्रतिनायकनिष्ठत्वे यथा हयग्रीववधे । हयग्रीवस्य जलक्रीडावर्णने । अधमपात्रगतत्वे यथा,—
"जघनस्थलनद्धपत्रवल्ली-
गिरिमल्लीकुसुमानि कापि भिल्ली ।
अवचित्य गिरौ पुरो निषण्णा
स्वकचानुच्चयवाञ्चकार भर्त्रा ॥"
तिर्य्यग्गतत्वे यथा,—
"मल्लीमतल्लीषु वनान्तरेषु
वल्ल्यन्तरे वल्लभमाह्वयन्ती ।
चञ्चद्विपञ्ची कलनादभृङ्गी
सङ्गीतमङ्गीकुरुते स्म भृङ्गी ॥"
आदिशब्दात्तापसादयः । रौद्राभासो यथा,—
"रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहु-
र्मुक्ताकार्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः ।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्त्तयन्
अंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्ज्जुनः ॥"
भयानकाभासो यथा —
"अशक्नुवन् सोढुमधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम् ।
प्रविश्य हेमाद्रिगुहागृहान्तरं
निनाय बिभ्यद्दिवसानि कौशिकः ॥"
स्त्रीनीचविषयमेव हि भयं रसप्रकृतिः । एवमन्यत्र । इति साहित्यदर्पणे ३ परिच्छेदः ॥

**रसाम्लं**, क्ली, (रसाम्लकोऽम्लो यत्र ।) वृक्षाम्लम् । इति राजनिर्घण्टः ॥ चुक्रम् । इति भावप्रकाशः ॥

**रसाम्लः**, पुं, (रसेन सह अम्लो यत्र ।) अम्लवेतसः । इति राजनिर्घण्टः ॥

**रसायकः**, पुं, (रसं रसत्वमयति प्राप्नोति इति । अय + ण्वुल् । ) तृणविशेषः । इति शब्दचन्द्रिका ॥

**रसायनं**, क्ली, कटिः । इति राजनिर्घण्टः ॥ (रसो दुग्धं अयनं स्थलं यस्येति ।) तक्रम् । इति हेमचन्द्रः ॥ विषम् । ( रसा रसरक्तादय ईयन्ते प्राप्यन्ते अनेनेति । इ + ल्युट् । ) जराव्याधिनाशकौषधम् । इति मेदिनी ॥ (यथा, माघे । २ । ९३ ।
"षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षं रसायनम् ।
भवन्त्यस्यैवमङ्गानि स्थास्नूनि बलवन्ति च ॥")
"न सूतेन विना कान्तं न कान्तेन विना रसः ।
सूतकान्तसमायोगात् रसायनमुदीरितम् ॥"
इति राजनिर्घण्टः ॥ * ॥
अथ रसायनाधिकारः । तत्र रसायनस्य लक्षणमाह ।
"यज्जराव्याधिविध्वंसि वयस्तम्भकरं तथा ।
चक्षुष्यं बृंहणं वृष्यं भेषजं तद्रसायनम् ॥"
रसायनस्य फलमाह ।
"दीर्घमायुः स्मृतिर्मेधामारोग्यं तरुणं वयः ।
देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात् ॥"
तद्विधिमाह ।
"पूर्व्वे वयसि मध्ये वा मनुष्यस्य रसायनम् ।
प्रयुञ्जीत भिषक् प्राज्ञः स्निग्धशुद्धतनोः सदा ॥
नाविशुद्धशरीरस्य युक्तो रासायनो विधिः ।
न भाति वाससि क्लिष्टे रङ्गयोग इवाहितः ॥"

अथ तद्‌दाहरणानि ।
"शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः ।
त्रिशः समस्तमथवा प्राक् पीतं स्थापयेद्वयः ॥
मण्डूकपर्ण्याः स्वरसः प्रभाते
प्रयोज्य यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्प्याः
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥
आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि ।
मेध्यानि चैतानि रसायनानि
मेध्या विशेषेण च शङ्खपुष्पी ॥"
मण्डूकपर्णी ब्राह्मी । थरभी इति लोके । तदलाभे मञ्जिष्ठापि ग्राह्या । तस्या अपि रसायनत्वात् ।
"माक्षिकेण तुगाक्षीर्या पिप्पल्या लवणेन च ।
त्रिफला सितया वापि युक्ता सिद्धं रसायनम् ॥
सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् ।
वर्षादिष्वभया प्राश्या रसायनगुणैषिणा ॥
पुनर्नवस्यार्द्धपलं नवस्य
पिष्टं पिवेद्यः पयसार्द्धमासम् ।
मासद्वयं तत्त्रिगुणं समां वा
जीर्णोऽपि भूयः स पुनर्नवः स्यात् ॥
ये मासमेकं स्वरसं पिवन्ति
दिने दिने भृङ्गरजःसमुत्थम् ।
क्षीराशिनस्ते बलवीर्य्ययुक्ताः
समाशतं जीवनमाप्नुवन्ति ॥
शतावरी मुण्डितिका गुडूची
सहस्तिकर्णी सहतालमूली ।
एतानि कृत्वा समभागयुक्ता-
न्याज्येन किंवा मधुनावलिह्यात् ॥
जराविकारान्तु विमुक्तदेहो
भवेन्नरो वीर्य्यबलादियुक्तः ।
विभाति देवप्रतिमः स नित्यं
प्रभामयो भूरिविशुद्धबुद्धिः ॥
पीताश्वगन्धा पयसार्द्धमासं
घृतेन तैलेन सुखाम्बुना वा ।
वार्य्यस्य पुष्टिं वपुषो विधत्ते
बालस्य शस्यस्य यथाम्बुवृष्टिः ॥
अयःफलं गुग्गुलुरत्र योज्यः
पलत्रयं वीजफलानि पञ्च ।
फलानि चाष्टौ त्रिफलारसञ्च
कर्षं लिहन् याप्यमरत्वमेव ॥"
लोहगुग्गुलुः ।
"न केवलं दीर्घमिहायुरश्नुते
रसायनं यो विधिवन्निषेवते ।
गतिं स देवर्षिनिषेवितां शुभां
प्रपद्यते ब्रह्म तथैव चाक्षयम् ॥"
इति रसायनाधिकारे भावप्रकाशः ॥
( तथा च ।
"लाभोपायो हि शस्तानां रसादीनां रसायनम् ।
पूर्व्वे वयसि मध्ये वा तत् प्रयोज्यं जितात्मनः ।
स्निग्धस्य सुतरक्तस्य विशुद्धस्य च सर्व्वथा ॥
नाविशुद्धे शरीरे हि युक्तो रासायनो विधिः ।
वाजीकरो वा मलिने वस्त्रे रङ्ग इवार्पितः ॥"
"रसायनानां द्विविधं प्रयोगमृषयो विदुः ।
कुटीप्रावेशिकं मुख्यं वातातपिकमन्यथा ॥
निर्व्वाते निर्भये हर्म्ये प्राप्योपकरणे पुरे ।
दिश्युदीच्यां शुभे देशे त्रिगर्भां सूक्ष्मलोचनाम् ॥
धूमातपरजोव्यालस्त्रीमूर्खाद्यविलङ्घिताम् ।
सज्जवैद्योपकरणां सुमृष्टां कारयेत् कुटीम् ॥
अथ पुण्येऽह्नि संपूज्य पूज्यांस्तां प्रविशेच्छुचिः ।
तत्र संशोधनैः शुद्धः सुखी जातबलः पुनः ॥
ब्रह्मचारी धृतियुतः श्रद्दधानो जितेन्द्रियः ।
दानशीलदयासत्यव्रतधर्म्मपरायणः ॥
देवतानुस्मृतौ युक्तो युक्तस्वप्नप्रजागरः ।
प्रियौषधः पेशलवाक् प्रारभेत रसायनम् ॥
हरीतकीमामलकं सैन्धवं नागरं वचाम् ।
हरिद्रां पिप्पलीं वेल्लं गुडञ्चोष्णाम्बुना पिवेत् ॥
स्निग्धः स्विन्नो नरः पूर्व्वं तेन साधु विरिच्यते ।
ततः शुद्धशरीराय कृतसंसर्ज्जनाय च ॥
त्रिरात्रं पञ्चरात्रं वा सप्ताहं वा घृतान्वितम् ।
दद्याद्यावकमाशुद्धेः पुराणशकृतोऽथ वा ॥
इत्थं संस्कृतकोष्ठस्य रसायनमुपाहरेत् ।
यस्य यद्यौगिकं पश्येत् सर्व्वमालोच्य सात्म्य-
वित् ॥"
"कुटीप्रवेशः क्षमिणां परिच्छदवतां हितः ।
अतोऽन्यथा तु ये तेषां सौर्य्यमारुतिको विधिः ॥
वातातपसहा योगा वक्ष्यन्तेऽतो विशेषतः ।
सुखोपचारा भ्रंशेऽपि ये न देहस्य बाधकाः ॥"
इत्युत्तरस्थानीयवाग्भटे ३९ अध्याये ।
विशेषस्तु तस्मिन्नध्याये ज्ञातव्यः ॥ * ॥ रसः पारदः तदाश्रया तज्जातीय-हरितालादिकञ्च अयनं आश्रय उपायो वा यस्य तत् । स्वर्णादिकरणम् ।
अथ रसायने ईश्वर उवाच ।
"गोमूत्रं हरितालञ्च गन्धकञ्च मनःशिलाम् ।
समं समं गृहीत्वा तु यावत् शुष्यति पेषयेत् ॥
एकादशदिनं यावत् यत्नेन रचयेत शुचिः ।
मन्त्रेण धूपदीपादिनैवेद्यैर्गन्धमिश्रितैः ॥
मन्त्रस्तु ॐ हरिहराय रसायनं सिद्धिं कुरु कुरु स्वाहा । अयुतजपेन सिद्धिः ।
तद्वटीं गोलकं कृत्वा वस्त्रेणावेष्टयेत् पुनः ।
मृत्तिकां लेपयेत्तस्य छायाशुष्कन्तु कारयेत् ॥
गर्त्ते कुण्डे विनिक्षिप्य पञ्चाशत्काष्ठवह्निना ।
ज्वालयेद्दृढयामन्तु नान्यथा शङ्करोदितम् ॥
तद्भस्म जायते सिद्धिर्व्विद्धि सिद्धिसमाकुलम् ।
ताम्रपात्रे अग्निमध्ये बिन्दुमात्रं नियच्छति ॥
तत्क्षणाज्जायते स्वर्णं नान्यथा शङ्करोदितम् ।
दातव्यं गुरुभक्ताय न दद्याद्दुष्टमानसे ।
सिद्धपीठे भवेत्सिद्धिर्गायत्रीजपजापनैः ॥
यस्मै कस्मै न दातव्यं दातव्यं शिवभक्तके ।
अनिसृष्टं द्विजातीनां पापकानां विशेषतः ॥
गोप्यं गोप्यं महागोप्यं देवानामपि दुर्लभम् ॥"
प्रकारान्तरम् ।
"आनीय वसुपत्रेण सम्यक् तोलकद्वयम् ।
चतुरात्रं शिवचात्रं मायाविन्दुसमन्वितम् ।
वीजत्रयञ्चाष्टशतं प्रजपेत् सम्यगोपरि ।
अशीतितोलकमानं छागदुग्धसमुद्भवम् ॥
दुग्धमानीय यत्नेन चाष्टोत्तरशतं जपेत् ।
वस्त्रयुक्तेन सूत्रेण दुग्धमध्ये विनिक्षिपेत् ॥
उत्तापं ज्वालयेद्धीमान् मन्दमन्देन वह्निना ।
रिपुर्व्वदाहपर्य्यन्तमहःशेषं भवेद्यदि ॥
तद्वैधोलोक्य तद्रूपं दुग्धं तोये विनिक्षिपेत् ॥"
ततः परीक्षा कर्त्तव्या ।
"निर्धूमं पावके द्रव्यं दृष्ट्वा उत्थाप्य यत्नतः ।
तत्रैव प्रजपेन्मन्त्रं सर्व्वबन्धनमात्मकम् ॥
सार्द्धेन तोलकं ताम्रं दृष्ट्वा उत्थाप्य यत्नतः ।
गुञ्जाप्रमाणं तद्रूपं सत्यं सत्यं हि शङ्करि ! ।
रौप्यं भवति तद्रूपं नान्यथा शङ्करोदितम् ॥"
प्रकारान्तरम् ।
"कृष्णसर्पमेकं गृहीत्वा तस्य मुखे शिववीर्य्यं पूरयित्वा सर्पस्य मुखं गुदञ्च बद्धा नूतनमृण्मयस्थालीमध्ये संस्थाप्य स्थालीमुखं कर्पटादिना संलिप्य निर्ज्जनस्थाने प्रातरारभ्य पुनःप्रातर्यावत् वह्निना ज्वालं दद्यात् । ततः शुभक्षणे स्थालीमुखमुद्धृत्य सर्पभस्म विहाय शिववीर्य्यं गृह्णीयात् । ततस्तोलकमितं ताम्रं गालयित्वा तस्मिन् गालितताम्रे रत्तिकमात्रं तत् शिववीर्य्यं दद्यात् तेन तत्क्षणादेव तत्ताम्रं सुवर्णीभूतम् । आदौ शिवार्च्चनं कृत्वा पश्चात् प्रयोग एव कर्त्तव्यः ॥" इति रसार्णवतन्त्रे ईश्वरदत्तात्रेय-संवादे रसायनं नाम त्रयोदशः पटलः ॥ )

रसायनः, पुं, गरुडः । विडङ्गः । इति मेदिनी ॥

रसायनफला, स्त्री, ( रसायनेन फलति या । फल + अच् । टाप् । ) हरीतकी । इति त्रिकाण्डशेषः ॥

रसायनश्रेष्ठः, पुं, ( रसायनेषु श्रेष्ठः । ) पारदः । इति राजनिर्घण्टः ॥

रसायनी, स्त्री, ( रसान् तैलादीन् अयनं प्राप्नोतीति । अय + ल्युः । ङीप् । ) गुडूची । काकमाची । महाकरञ्जः । गोरक्षदुग्धा । मांसच्छदा । इति राजनिर्घण्टः ॥ ( मञ्जिष्ठा । अस्याः पर्य्यायो यथा,—
"मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ।
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ॥
रसायन्यरुणा काला रक्ताङ्गी रक्तयष्टिका ।
भण्डीतकी च गण्डीरी मञ्जूषा वस्त्ररञ्जिनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )

रसालं, क्ली, ( रसं आलातीति । आ + ला + कः । ) सिह्लकम् । वोलम् । इति मेदिनी ॥

रसालः, पुं, (रसं आलाति गृह्णाति । आ + ला + कः । ) इक्षुः । आम्रः । इत्यमरः ॥ ( यथा, साहित्यदर्पणे १० परिच्छेदे अतिशयोक्त्यलङ्कारे ।
"प्रागेव हरिणाक्षीणां चित्तमुत्कलिकाकुलम् ।
पश्चादुद्भिन्नबकुलरसालमुकुलश्रियः ॥" )
पनसः । इति शब्दरत्नावली ॥ कुन्दरुकम् ॥ गोधूमः । पुण्ड्रकनामेक्षुः । इति राजनिर्घण्टः ।

रसालसा, स्त्री, ( रसेन अलसा । ) नाडी । इति शब्दचन्द्रिका ॥

रसाला, स्त्री, ( रसान् आलातीति । आ+ला+कः । टाप् ।) रसना । दूर्व्वा । विदारी । इति मेदिनी ॥ मार्जिता । इति शब्दरत्नावली ॥ शिखरिणी । तत्पर्य्यायः । मार्ज्जिता २ । इत्यमरः ॥ तस्याः करणप्रकारो यथा,—

"आर्द्धं माहिषमम्लमल्पमधुरं दध्याढकं शर्क्करा
शुभ्रा प्रस्थयुगोन्मिता शुचिपटे किञ्चिच्च
क्षीरेण पिपेत ।
दुग्धेनार्द्धघनेन चन्द्रमधवस्याखां दृढं स्रावये-
देलाबीजलवङ्गचन्द्रमरिचैर्योग्यैश्च सद्योजयेत् ॥
भीमेन प्रियभोजनेन रचिता नाम्ना रसाला
स्वयं
श्रीकृष्णेन पुरा पुनःपुनरियं प्रीत्या समा-
स्वादिता ।
इयं येन वसन्तवर्ज्जितदिने सेव्या परं नित्यश-
स्तस्य स्यादतिवीर्य्यवृद्धिरनिशं सर्व्वेन्द्रियाणां
बलम् ॥
क्षीणा तथा शरदि ये रविशोषिताङ्गा
ये च प्रमत्तवनितासुरतातिखिन्नाः ।
ये चापि मार्गपरिखेदपरीतगात्रा-
स्तेषामियं वपुषि पौष्टिकमाशु कुर्य्यात् ॥
रसाला शुक्रला बल्या रोचनी वातपित्तजित् ।
दीपनी वृंहणी स्निग्धा मधुरा शिशिरा सरा ।
रक्तपित्तं तृषां दाहं प्रतिश्यायं विनाशयेत् ॥"
इति राजनिर्घण्टः ॥

अपि च ।

"दध्नोऽर्द्धाढकमीषदम्लमधुरं खण्डस्य चन्द्रद्युतेः
प्रस्थं क्षौद्रपलञ्च पञ्च हविषः शुण्ठ्याश्चतुर्म्माष-
कान् ।
एलामाषचतुष्टयं मरिचतः कर्षं लवङ्गं तथा
शुभ्रा शुक्लपटे शनैः करतलेनोन्मथ्य विस्रा-
वयेत् ॥
न्यस्ताङ्के मृगनाभिचन्दनरजोऽगुरुधूपिते
कर्पूरेण सुगन्धितं तदखिलं संशोध्य संस्थाप-
येत् ।
तस्यार्थे मधुरेश्वरेण रचिता सैषा रसाला
स्वयं
भोक्तुर्भीमबदीपनी सुखकरी कान्तेव नित्यं
प्रिया ॥"
इति भावप्रकाशः ॥

रसालिहा, स्त्री, शीर्णमाला । इति शब्दचन्द्रिका ॥ चाकुलिया इति भाषा ॥

रसाली, स्त्री, ( रसान् आलाति ला । आ+ला+कः । ङीप् । ) पुण्ड्रकेक्षुः । इति राजनिर्घण्टः ॥

रसाश्वासा, स्त्री, पलाशीलता । इति राजनिर्घण्टः ॥

रसास्वादः, पुं, ( रसस्य आस्वादः । ) अखण्डवस्त्वनवलम्बनेनापि चित्तवृत्तेः सविकल्पानन्दास्वादनम् । समाध्यारम्भसमये सविकल्पानन्दास्वादनं वा । इति वेदान्तसारः ॥ * ॥ "चतुर्थं विघ्नमाह नास्वादयेदिति । उक्तसविकल्पकसमाधौ द्वितीयः शब्दानुविद्धत्रिपुटीविशिष्टस्त्रिक य आनन्दो बाह्यशब्दादिविषयप्रपञ्चभारत्यागप्रयुक्तो न तु चैतन्यप्रयुक्तः । यथा निधिग्रहणाय प्रवृत्तस्य निधिपरिपालकभूतप्रेताद्याहतस्य निधिप्राप्तेः अभावेऽपि भूताद्युपद्रवनिवृत्तिमात्रेण कोऽपि महानानन्दो भवति तथा सविकल्पकसमाधावखण्डवस्त्वनवलम्बनेन नित्यानन्दरसास्वादनाभावेऽपि अनिष्टबाह्यप्रपञ्चनिवृत्तिजन्यानन्दं सविकल्पकरूपं ब्रह्मानन्दभ्रमेण स्वादयति तद्रसास्वादनमित्यर्थः । तत्त्वान्तरमाह समाधीत्यादि । निर्व्विकल्पकसमाध्यारम्भकाले अनुभूय मानसविकल्पकानन्दस्यानभिज्ञतया पुनस्तस्यैवास्वादनं रसास्वाद इत्यर्थः ।" इति सुबोधिन्याख्या तट्टीका ॥

रसास्वादी, [ न् ] पुं, ( रसं मधु आस्वादयितुं शीलमस्य । आ+स्वद्+णिनिः । ) भ्रमरः । इति शब्दमाला ॥ रसास्वादविशिष्टे, त्रि ॥

रसाढ्यः, पुं, ( रसः आढ्या आख्या यस्य । ) सरलद्रवः । इति रत्नमाला ॥

रसिकः, पुं, (रसोऽस्यास्तीति वा । रस+ठन् ।) सारसपक्षी । इति राजनिर्घण्टः ॥ तुरङ्गः । हस्ती । इति सारस्वतः ॥ सरसे, त्रि । इति मेदिनी ॥ ( यथा, भागवते । १ । १ । ३ ।

"पिबत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः ॥")

रसिका, स्त्री, ( रसिक+टाप् । ) रसाला । इक्षुरसः । इति मेदिनी ॥ काञ्ची । रसना । इति विश्वः ॥

रसिकेश्वरः, पुं, ( रसिकानां रसज्ञानामीश्वरः । ) श्रीकृष्णः । यथा,—

"वृन्दावनान्तरे रम्ये रासोत्सवसमुत्सुकम् ।
रासमण्डलमध्यस्थं नमामि रसिकेश्वरम् ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे १२ अध्यायः ॥
( रसिकश्चेत्यत्र ॥ )

रसितं, क्ली, ( रस शब्दे+भावे क्तः । ) मेघनिर्घोषः । इत्यमरः ॥ रुतम् । स्वर्णादिखचिते, त्रि । इति मेदिनी ॥

रसुनः, पुं, ( रस+उनन् । ) लशुनः । इति शब्दचन्द्रिका ॥ (विवरणमस्य रसोनशब्दे ज्ञातव्यम् ॥)

रसेन्द्रः, पुं, ( रसानां धातुरसानामिन्द्रः श्रेष्ठः । ) पारदः । इति राजनिर्घण्टः ॥ ( यथा, भावप्रकाशे । १ । १ ।

"असाध्यो यो भवेद्रोगो यस्य नास्ति चिकित्सितम् ।
रसेन्द्रो हन्ति तं रोगं नरकुञ्जरवाजिनाम् ॥"
अस्य पर्य्यायादिकं रसशब्दे द्रष्टव्यम् ॥ )

रसोत्तमः, पुं, ( रसेषु उत्तमः । यद्वा, रसः उत्तमोऽस्य । ) मुद्गः । इति राजनिर्घण्टः ॥ मेरुदुग्धञ्च ॥

रसोद्भवं, क्ली, ( रसात् पारदधातोरुद्भवतीति । उत्+भू+अच् । ) हिङ्गुलम् । इति राजनिर्घण्टः ॥ रसजाते, त्रि ॥

रसोनः, पुं, (रसेनैकेनोनः ।) रसुनः । इति राजनिर्घण्टः ॥ (तस्योत्पत्तिर्यथा,—

"राहोरमृतचौर्य्येण लूनात् ये पतिता गलात् ।
अमृतस्य कणा भूमौ ते रसोनत्वमागताः ॥
द्विजा नाश्नन्ति तमतो दैत्यदेहसमुद्भवम् ।
साक्षादमृतसम्भूतेर्ग्रामणीः स रसायनम् ॥"
इति वाग्भटे उत्तरस्थाने ३९ अध्यायः ॥
"अथ वीर्य्यञ्च वक्ष्यामि रसोनस्य महामते ।
रसैश्च पञ्चभिर्युक्तो रसोनस्तेन वर्णितः ॥"
"हन्ता वातादिरोगाणां रसोनो विहितो बुधैः ।
जाङ्गलानि रसांश्चैव भोजनार्थे प्रदापयेत् ॥"
इति हारीते कल्पस्थाने तृतीयेऽध्याये ॥

अथास्य गुणाः ।

"रसोनो वृंहणो वृष्यः स्निग्धोष्णः पाचनः
सरः ।
रसे पाके च कटुकस्तीक्ष्णो मधुरको मतः ॥
भग्नसन्धानकृत् कण्ठ्यो गुरुः पित्तास्रवृद्धिदः ।
बलवर्णकरो मेधाहितो नेत्र्यो रसायनः ॥"
इति च भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
अन्यद्विवरणमस्य रसोनकशब्दे लशुनशब्दे च द्रष्टव्यम् ॥ )

रसोनकः, पुं, ( रसोन+स्वार्थे कन् । ) लशुनः । तत्पर्य्यायः ।

"लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम् ।
अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः ॥"
तस्योत्पत्तिर्यथा,—
"यदामृतं वैनतेयो जहार सुरसत्तमात् ।
तदा ततोऽपतद्बिन्दुः स रसोनोऽभवद्भुवि ॥
पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्ज्जितः ।
तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः ॥"
अस्यावयवगुणाः ।
"कटुकश्चापि मूलेषु तिक्तः पत्रेषु संस्थितः ।
नाले कषाय उद्दिष्टो नालाग्रे लवणः स्मृतः ।
बीजे तु मधुरः प्रोक्तो रसस्तद्गुणवेदिभिः ॥"
अस्य भक्षणगुणाः ।
"रसोनो वृंहणो वृष्यः स्निग्धोष्णः पाचनः सरः ।
रसे पाके च कटुकस्तीक्ष्णो मधुरको मतः ॥
भग्नसन्धानकृत् कण्ठ्यो गुरुः पित्तास्रवृद्धिदः ।
बलवर्णकरो मेधाहितो नेत्र्यो रसायनः ॥
हृद्रोगजीर्णज्वरकुक्षिशूल-
विबन्धगुल्मारुचिकासशोफान् ।
दुर्नामकुष्ठानलसादजन्तु-
समीरणश्वासकफांश्च हन्ति ॥
मद्यं मांसं तथाम्लञ्च हितं लशुनसेविनाम् ।
व्यायाममातपं रोषमतिनीरं पयो गुडम् ।
रसोनमश्नन् पुरुषस्त्यजेदेतन्निरन्तरम् ॥"
इति भावप्रकाशः ॥
( तथास्यान्या विवृतिर्यथा,—
"अमृतमथने जातः सुरासुरयशो महान् ।

जहार वैनतेयश्च चञ्चुना त्रिदिवं गतः ॥
संग्रामश्रमसम्प्राप्ते श्रमवेगप्रधाविते ।
आकृष्टे वेगतः प्राप्ते चञ्चुना स्यन्दविन्दवः ॥
ततस्तु सम्भूमिते देशे पतितास्तत्र संस्थिताः ।
तस्मात् कालवशाज्जातं दुर्भिक्षं द्वादशाब्दि-
कम् ॥
विमुक्ताः कानने सर्व्वा वृक्षाकाष्ठप्रतानिकाः ।
तस्माच्च कानने सर्व्वे प्रजास्तं गहनं गताः ॥
तेषां मध्ये जरायुक्तो मतिहीनोऽतिजर्ज्जरः ।
अयष्टिः सर्व्वरुग्युक्तः शीर्णदन्तावलीयुतः ॥
ज्वलत्कक्षैः क्षुधापन्नैः ऋषिभिस्तत्र विस्मृतः ।
सोऽपि क्षुधातुरः सर्व्वां पर्य्यटन्नुर्व्वरां महीम् ॥
कुत्रचित् पुण्ययोगेन दृष्टवान् विटपान् शुभान् ।
नीलशैवालसङ्काशान् शाड्वलान् बहुलान्
भुवि ।
क्षुधार्त्तपीडनेनापि भुक्तवान् शाड्वलानपि ॥
वल्लीसमानन्तरे शुष्कान् विटपान् तदनन्तरम् ।
भुक्तवान् कन्दकान् सोऽपि मासमेकं तथा
ऋषिः ॥
पश्चात् सुभिक्षे सञ्जाते सर्व्वे चैकत्र संस्थिताः ।
सोऽपि दृष्टो युवा भूत्वा गतस्तत्र च यत्र ते ॥
तं दृष्ट्वा विस्मयापन्नाः पप्रच्छुः किं कृतं त्वया ।
भोक्तवान् सोऽपि किञ्चिच्च वृथा तैः प्रापित-
स्ततः ॥
यत्त्वया खादितं द्रव्यं तदभक्ष्यं द्विजातिभिः ।
दुर्लभ्यमपि निश्चित्य तस्माज्जातं रसोनकम् ॥"
"तेन रसोनकं नाम विख्यातं भुवनत्रये ।
कुक्कुटाण्डनिभं गौरं शीर्णपर्णं समुद्धरेत् ॥
बद्धा पुटे सुनिर्गन्धं धारयेत्पक्षमागते ।
दोषाग्निदग्धनाशेन म्रियते दीर्य्यते भुवि ॥
वर्षासु शिशिरे चैव कारयेत्तान्यथा युतम् ।
रामठं जीरके द्वे च अजमोदाकटुत्रयम् ॥
चूर्णसौवर्च्चलोपेतं वातरोगे विशेषतः ।
मातुलुङ्गरसेनापि मूलानाहे प्रकीर्त्तितः ॥"
इति हारीते कल्पस्थाने तृतीयेऽध्याये ॥
अत्रान्यत् द्विजाभक्ष्यत्वकारणादिकं रसोनशब्दे
द्रष्टव्यम् ॥ )
रसोपलं, क्ली, ( रसवत् पारद इव उपलम् । )
मौक्तिकम् । इति त्रिकाण्डशेषः ॥
रस्नं, क्ली, ( रस+"लषिपशुभिरविभ्यः कित् ।"
उणा० ३ । १२ । इति नप्रत्ययः । ) द्रव्यम् ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
रस्यं, क्ली, ( रसात् भुक्तान्नादिपरिपाकात् आगत-
मिति । रस+यत् । ) रक्तम् । इति शब्द-
चन्द्रिका ॥ ( यथा, महाभारते ।१४।५०।३२।
"यथैव मन्थिनो रस्यं नवनं सर्प्पिरुद्धवत् ॥"
रसयुक्ते, त्रि । यथा, भगवद्गीतायाम् । १७ । ८ ।
"रस्याः स्निग्धाः स्थिरा हृद्या आहाराः
सात्त्विकप्रियाः ॥")
रस्या, स्त्री, ( रसाय हिता । रस+यत् । टाप् । )
रास्ना । ( अस्याः पर्य्यायो यथा,—
"रास्ना युक्तरसा रस्या सुवहा रसना रसा ।
एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
पाठा । इति राजनिर्घण्टः ॥
रंह, तु क गतौ । इति कविकल्पद्रुमः ॥ ( अदन्त
चुरा०-पर०-सक०-सेट् । ) रंहयति रंहा-
पयति । इति दुर्गादासः ॥
रंहः, [ स् ] क्ली, ( रम+"रमेश्च ।" उणा०
४ । २१३ । इति असुन् हुगागमश्च । "अपि
रंहिभ्यामसुन् इत्यत्रो रंह इति धातुप्रदीपः ।"
इत्युज्ज्वलः । ) वेगः । तत्पर्य्यायः । तरः २
रयः ३ स्यदः ४ जवः ५ । इत्यमरः ॥ रंघः ६
जवनः ७ । इति तट्टीका ॥ ( यथा, रघुः ।
२ । ३४ ।
"न पादपोन्मूलनशक्ति रंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥")
रह, त्यजि । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् । ) रहति सुखं दीनः । इति दुर्गा-
दासः ॥
रह, इ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म० सक०-सेट् । ) इ, रंहते । इति दुर्गा-
दासः ॥
रह, तु क त्यागे । इति कविकल्पद्रुमः ॥ (अदन्त
चुरा०-पर०-सक०-सेट् । ) रहयति शोकं
धीरः । इति दुर्गादासः ॥
रहः, [स्] क्ली, ( रमन्तेऽत्रेति । रम+"रमेर्ह
च ।" उणा० ४ । २१४ । इति असुन्प्रत्ययः ।
हकारश्चान्तादेशः । "रह त्यागे अस्मादसुनि
रह इति धातुप्रदीपः ।" इत्युज्ज्वलः । )
निर्ज्जनम् । तत्पर्य्यायः । विविक्तः २ विजनः ३
छन्नः ४ निःशलाकः ५ रहः ६ उपांशुः ७
इत्यमरः ॥ ( यथा, रघौ । ३ । ३ ।
"तदाननं मृत्सुरभि क्षितीश्वरः
रहस्युपाघ्राय न तृप्तिमाययौ ॥")
तत्त्वम् । रतिः । गुह्यम् । इति मेदिनी ॥
रहः, [स्] अ, विजनम् । इत्यमरः ॥
"रहो निधुवनेऽपि स्यादन्तो गुह्ये नपुंसकम् ॥"
इति रभसश्च ॥
"देशादन्यत्र रहोऽव्ययं शब्दान्तरं वास्ति सुरत-
वाचकम् ।" इत्युज्ज्वलः । ४ । २१४ ॥)
रहस्यं, त्रि, ( रहसि भवम् । रहस्+दिगादि-
त्वात् यत् । इत्युज्ज्वलः । ४ । २१४ । ) गोप-
नीयम् । रहसि भवम् । इति मेदिनी अमरश्च ॥
रहस्यरोमस्पर्शनिषेधो यथा,—
"न सर्पशस्त्रैः क्रीडेत खानि खानि न संस्पृशेत् ।
रोमाणि च रहस्यानि नाशिष्टेन सहा व्रजेत् ॥"
इति कौर्म्मे १५ अध्यायः ॥
रहस्या, स्त्री, ( रहस्य+टाप् । ) नदीभेदः ।
इति मेदिनी ॥ ( यथा, महाभारते ।६।९।१९।
"रहस्यां शतकुम्भां च सरयूं च नरेश्वर ! ॥")
रास्ना । पाठा । इति राजनिर्घण्टः ॥
रहितं, त्रि, ( रह+क्तः । ) वर्ज्जितम् । यथा,—
"आलस्यकमादौ च अन्ते च स्वतन्त्रकम् ।
गुरोस्तद्रहितं ज्ञात्वा जपकर्म्म समाचरेत् ॥"
इति तन्त्रसारः ॥
अपि च ।
"दिग्भोऽब्दाभिरहितो जन्मर्क्षाढ्यो भशो-
भितः ।
भं भवेदब्दवेशोऽत्र योगेऽप्येवं विचिन्तयेत् ॥"
इति जातकपद्धतिः ॥
रा, ल दाने । ग्रहणे । इति कविकल्पद्रुमः ॥
( अदा०-पर०-सक०-अनिट् । ) ल, राति ।
इति दुर्गादासः ॥
राः, स्त्री, (रा+सम्पदादित्वात् क्विप् ।) विभ्रमः ।
दानम् । इत्येकाक्षरकोषः ॥ काञ्चनम् । इति
शब्दरत्नावली ॥
राः, [ रै ] पुं, ( रा दाने+"रातेर्डैः ।" उणा०
२ । ६६ । इति डैः । ) धनम् । ( यथा, भाग-
वते । ३ । २५ । ३८ ।
"आत्मानमनु ये चेह ये रायः पशवो
गृहाः ॥" )
स्वर्णम् । इत्यमरः ॥ शब्दः । इति शब्दरत्ना-
वली ॥ ( स्त्री, श्रीः । यथा, ऋग्वेदे । १० ।
१११ । ७ ।
"स चन्द्रयदुवसः सूर्य्यस्य चित्रामस्य केतवो
रामविन्दन् ॥"
"चित्रा नानावर्णां रां रायं श्रियमविन्दन् अल-
भन्त ।" इति तद्भाष्ये सायणः ॥ )
राका, स्त्री, ( रा दाने+"कृदाधाराच्चिकलिभ्यः
कः ।" उणा० ३ । ४० । इति कः । बहुल-
वचनादेव न ह्रस्वः । ) नदीविशेषः । ( सा च
शाल्मलीद्वीपस्थानां नदीनामन्यतमा । यथा,
भागवते । ५ । २० । १० ।
"तद्वर्षाद्रयो नद्यश्च सप्तैवाभिज्ञाताः । सुरसः
शतशृङ्गो वामदेवः कुन्दः कुमुदः पुष्पा-
वर्षः सहस्रश्रुतिरिति । अनुमती सिनीवाली
सरस्वती कुहू रजनी नन्दा राकेति ॥")
कच्छूरोगः । नवजातरजाः स्त्री । ( रायते दीयते
देवेभ्य हविर्यस्याम् । इति निघण्टुटीकायां देव-
राजयज्वा । ५ । ५ । २१ । ) सम्पूर्णेन्दुतिथिः ।
इति मेदिनी ॥ ( यथा, ऋग्वेदे । २ । ३२ । ४ ।
"राकामहं सुहवां सुष्टुती हुवे
शृणोतु नः सुभगा बोधतु त्मना ॥"
"संपूर्णचन्द्रा पौर्णमासी राका ।" इति सायणः ॥
राक्षसीविशेषः । सा च खरस्य शूर्पणखायाश्च
जननी । यथा, महाभारते । ३ । २७४ । १-८ ।
मार्कण्डेय उवाच ।
"पुलस्त्यस्य तु यः क्रोधादर्द्धदेहोऽभवन्मुनिः ।
विश्रवा नाम सक्रोधः स वैश्रवणमैक्षत ॥
बुबुधे तन्तु सक्रोधं पितरं राक्षसेश्वरः ।
कुबेरस्तत्प्रसादार्थं यतते स्म सदा नृप ! ॥
स राजराजो लङ्कायां निवसन्नरवाहनः ।
राक्षसीः प्रददौ तिस्रः पितुर्वै परिचारिकाः ॥
ताः सदा तं महात्मानं सन्तोषयितुमुद्यताः ।
ऋषिं भरतशार्दूल ! नृत्यगीतविशारदाः ॥

पुष्पोत्कटा च राका च मालिनी च विशां
पते ।
अन्योऽन्यस्पर्द्धया राजन् ! श्रेयस्कामाः सुम-
ध्यमाः ॥
स तासां भगवांस्तुष्टो महात्मा प्रददौ वरान् ।
लोकपालोपमान् पुत्त्रानेकैकस्या यथेप्सितान् ॥
पुष्पोत्कटायां जज्ञाते द्वौ पुत्त्रौ राक्षसेश्वरौ ।
कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि ॥
मालिनी जनयामास पुत्त्रमेकं विभीषणम् ।
राकायां मिथुनं जज्ञे खरः शूर्पणखा तथा ॥”)

राक्षसः, पुं, रक्षत्यस्मात् रक्षः रक्ष एव राक्षसः । तत्पर्य्यायः । कौणपः २ क्रव्यात् ३ क्रव्यादः ४ अस्रपः ५ आशरः ६ रात्रिचरः ७ रात्रिञ्चरः ८ कर्व्वुरः ९ निकषात्मजः १० यातुधानः ११ पुण्यजनः १२ नैर्ऋतः १३ यातु १४ रक्षः १५ । इत्यमरः ॥ सन्ध्याबलः १६ चपाटः १७ रजनीचरः १८ नीलाभाः १९ तृपल्वः २० नक्तञ्चरः २१ पलाशी २२ पलाशः २३ भूतः २४ । इति शब्दरत्नावली ॥ नीलाम्बरः २५ कल्माषः २६ कटप्रूः २७ आशिरः २८ कीलालपाः २९ नरधिष्ण्यः ३० । इति जटाधरः ॥ तस्योत्पत्तिर्यथा,—
“रजोमात्रात्मिकामेव ततोऽन्यां जगृहे तनुम् ।
ततः क्षुद्ब्रह्मणो जाता जज्ञे कोपाश्रयात्मनः ॥
क्षुत्क्षामानन्धकारेऽथ सोऽसृजद्भगवांस्ततः ।
विरूपाः श्मश्रुला जातास्तेऽभ्यधावन्त तं
प्रभुम् ॥
मैवं भो रक्ष्यतामेष यैरुक्तं राक्षसास्तु ते ॥”
इति वह्निपुराणम् ॥ * ॥
अपि च ।
“रक्षोगणं क्रोधवशात् स्वनामानमजीजनत् ।
दंष्ट्रिणां विपुलं तेषां भीमसेनाहतं वयम् ॥”
इति मात्स्ये आदिसर्गे कश्यपान्वयनाम ६ अध्यायः ॥ * ॥ राक्षसभोज्यान्नानि यथा,—
“कुक्कीटाद्युपपन्नञ्च यच्चोच्छिष्टान्वितं भवेत् ।
केशावपन्नमाधूतं मारुतश्वासवद्भवेत् ॥
एभिः संसृष्टमन्नञ्च भागो वै रक्षसां भवेत् ।
तस्मात्प्राज्ञः सदा विद्वानन्नान्येतानि वर्ज्जयेत् ॥
राक्षसा नाम ये प्रोक्तास्ते भुञ्जन्त्यन्नमीदृशम् ॥”
इति वामनपुराणे ३९ अध्यायः ॥ * ॥
तेषां विहारः स्वर्लोकादधः । यथा,—
“अन्तरीक्षचरा ये च भूतप्रेतपिशाचकाः ।
वर्ज्जयित्वा रुद्रगणांस्ते तत्रैव चरन्ति हि ॥
नोर्द्ध्वं विक्रमणे शक्तिस्तेषां सम्भूतपाप्मनाम् ।
अत ऊर्द्ध्वं हि विप्रेन्द्र राक्षसा ये कृतैनसः ।
ते तु स्वर्गादधः सर्व्वे विहरन्त्युद्ववर्ज्जिताः ॥”
इति पाद्मे स्वर्गखण्डे १५ अध्यायः ॥ * ॥
(अनेनाधिष्ठितस्य रोगिणो लक्षणं यथा,—
“सक्रोधदृष्टिं भ्रुकुटीसुवदनं ससंभ्रमम् ।
प्रहरन्तं प्रधावन्तं शब्दन्तं भैरवाननम् ॥
अशनादिनापि वर्ज्जितं नष्टनिद्रं निशाचरम् ।
निर्लज्जमशुचिं शूरं क्रूरं परुषभाषिणम् ।
रोषणं रक्तमाल्यस्त्रीरक्तमद्यामिषप्रियम् ।
दृष्ट्वा च रक्तं मांसं वा लिहानं दशनच्छदौ ।
हसन्तमन्नकाले च राक्षसाधिष्ठितं वदेत् ॥”
इति वाग्भटे उत्तरस्थाने चतुर्थेऽध्याये ॥)
अष्टप्रकारविवाहान्तर्गतविवाहविशेषः । यथा,
“आसुरो द्रविणादानाद्गान्धर्व्वः समयान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥”
इत्युद्वाहतत्त्वम् ॥
(तल्लक्षणान्तरञ्च यथा, मनुः । ३ । ३३ ।
“हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं
गृहात् ।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥”
राक्षसविवाहस्तु क्षत्त्रियस्यैव प्रशस्तः । यथा, तत्रैव । ३ । २४ ।
“चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः ।
राक्षसं क्षत्त्रियस्यैकं आसुरं वैश्यशूद्रयोः ॥”
निन्द्यप्रजोत्पत्तिजनकतया तु ब्राह्माद्यपेक्षया राक्षसादिविवाहस्य गर्हितत्वमाह तत्रैव । ३ । ४१—४२ ।
“इतरेषु तु शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्व्विवाहेषु ब्रह्मधर्म्मद्विषः सुताः ॥
अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विव-
र्ज्जयेत् ॥” * ॥
अब्दविशेषे, पुं, क्ली । यथा, वृहत्संहितायाम् । ८ । ४५ ।
“इन्द्राग्निदैवं दशमं युगं यत्
तत्राद्यमब्दं परिधाविसंज्ञम् ।
प्रमादियानन्दमतःपरं यत्
स्याद्राक्षसं चानलसंज्ञितञ्च ॥”)
रक्षःसम्बन्धिनि, त्रि ॥

राक्षसी, स्त्री, (राक्षस + ङीप् ।) कौणपी । राक्षसपत्नी । यथा, रघुः । १२ । ६१ ।
“दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता ।
जानकी विषवल्लीभिः परीतेव महौषधिः ॥”)
दंष्ट्रा । वृहद्दन्तेति यावत् । इति हेमचन्द्रः ॥ चण्डा चोरनामगन्धद्रव्यमिति यावत् । इति मेदिनी ॥ सायाह्नवेला । यथा,—
“प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु ।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततः परम् ॥
सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कार-
येत् ।
राक्षसी नाम सा वेला गर्हिता सर्व्वकर्म्मसु ॥”
इति तिथ्यादितत्त्वम् ॥

राक्षसेन्द्रः, पुं, (राक्षसानामिन्द्रः ।) रावणः । इति त्रिकाण्डशेषः ॥ (राक्षसपतिमात्रे च । यथा, महाभारते । १ । १५४ । १८ ।
“धिक् ! त्वामसति पुंस्कामे मम विप्रिय-
कारिणि ।
पूर्व्वेषां राक्षसेन्द्राणां सर्व्वेषामयशस्करि ॥”)

राक्षा, स्त्री, (लाक्षा । रलयोरैक्यात् लस्य रत्वम् ।) लाक्षा । इत्यमरः ॥

राख, ऋ शोषालमर्थयोः । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सक० च-सेट् ।) शोषः क्लेदरहितीभावः । अलमर्थो भूषणं सामर्थ्यं निवारणञ्च । ऋ, अरराखत् । इति दुर्गादासः ॥

रागः, पुं, (रञ्जनमिति रज्यतेऽनेनेति वा । रञ्ज + भावे करणे वा घञ् । “घञि च भावकरणयोः ।” ६ । ४ । २७ । इति नलोपः ।) मात्सर्य्यम् । लोहितादिः । (यथा, कुमारे । ३ । ३० ।
“रागेण बालारुणकोमलेन
चूतप्रवालोष्ठमलञ्चकार ॥”)
क्लेशादिः । अनुरागः । (यथा, आर्य्यासप्तशत्याम् । २७० ।
“तानवमेत्य च्छिन्नः परोपहितरागमदन-
सङ्घटितः ।
काच इव कामिनीनां न शोभते निर्भरः प्रेमा ॥”)
गान्धारादिः । नृपः । इति मेदिनी ॥ चन्द्रः ॥ सूर्य्यः । इति शब्दरत्नावली ॥ लाक्षादिः । (यथा, कुमारे । ४ । १९ ।
“तमिमं कुरु दक्षिणेतरं
चरणं निर्म्मितरागमेहि मे ॥”)
रक्तिमवित् । रञ्जनम् । इति नानार्थरत्नमाला ॥ प्रीतिः । यथा,—
“वीतरागभयक्रोधस्थितधीर्मुनिरुच्यते ॥”
इति भगवद्गीताश्लोकटीकायां श्रीधरस्वामी ॥
तस्य लक्षणं यथा,—
“सुखमप्यधिकं चित्ते सुखत्वेनैव रज्यते ।
यतस्तु प्रार्थनोत्कर्षात् स राग इति कीर्त्तितः ॥”
इत्युज्ज्वलनीलमणिः ॥ * ॥
(अभिमतविषयाभिलाषः । स तु पञ्चक्लेशान्तर्गतः । यथा,—
“अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च-
क्लेशाः । रागोऽभिमतविषयाभिलाषः ।” इति शिशुपालवधटीकायां मल्लिनाथः । ४ । ५६ ॥
“सुखानुशयी रागः ।” इति पतञ्जलिः ।) गानशास्त्रीयरागा यथा । भरतमते हनुमन्मते च रागः षड्विधः । तेषां नामानि यथा । भैरवः १ कौशिकः २ हिन्दोलः ३ दीपकः ४ श्रीरागः ५ मेघः ६ । हनुमद्भरतयोर्म्मते प्रत्येकमेषां पञ्च रागिण्यः । सोमेश्वरकल्लिनाथयोर्म्मते प्रत्येकमेतेषां षट् रागिण्यः । एतेषां प्रत्येकमष्टौ पुत्त्राः एकैकपुत्त्रभार्य्या च । कल्लिनाथसोमेश्वरमते षड्रागा यथा । श्रीरागः १ वसन्तः २ पञ्चमः ३ भैरवः ४ मेघः ५ नटनारायणः ६ । इति नानासङ्गीतशास्त्रम् ॥ * ॥
अथ रागस्य व्युत्पत्तिसंख्यास्थानानि ।
“यैस्तु चेतांसि रज्यन्ते जगत्त्रितयवर्त्तिनाम् ।
ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभिः ॥
गोपीभिर्गीतमारब्धमेकैकं कृष्णसन्निधौ ।
तेन जातानि रागाणां सहस्राणि तु षोडश ॥
रागेषु तेषु षट्त्रिंशद्रागा जगति विश्रुताः ।

कालक्रमेण तथापि ह्रास एव तु दृश्यते ।
केचिद्वदन्ति ते रागाः सर्व्वे सन्तीति निश्चितम् ॥
मेरोरुत्तरतः पूर्व्वे पश्चिमे दक्षिणे तथा ।
वसुमत्खण्डे ये देशास्तत्रामीषां प्रचारता ॥”
तथा च । अङ्गवङ्गकलिङ्गतैलङ्गभूलिङ्गद्राविड़सुरङ्गयुगलङ्गखेलाङ्गसौवीरकीरकाश्मीरनाभीरनाहीरसिन्धुजालन्धरमगमगधनिषधमलयद्वीपयवनाङ्गमालवजालवमरुमरुचोलोत्कलकुन्तलसिंहलबर्बरकेकयकेरल-कोशलमल्लिवालमल्लभल्लसौविरलपालकिरातगुर्जरातगुर्ज्जरकालञ्जरगौड़दविड़ौड्राम्बष्ठविदर्भपाञ्चालसौराष्ट्रमत्स्यशकलौहावरखशकौकणवत्सपकामरूपप्रहरिणभैविदर्भदुर्मेटवाटकीकटदेवकूटकुन्तलाटभोटकवाटकरहाटकर्णाटकुन्तिकावन्तिकङ्कणकाजकान्यकुब्जभोजकाम्बोजतोजतुखारविहारवलीहारवाजगेहविदेहवाह्लीकचर्चरीकनिगर्त्तानर्त्तादिदेशेषु रागाः प्रचरन्तीति ।
“यस्य श्रवणमात्रेण रज्यन्ते सकलाः प्रजाः ।
सर्व्वानुरञ्जनाद्धेतोस्तेन राग इति स्मृतः ॥”*॥
अथ रागाः ।
“आदौ मालवरागेन्द्रस्ततो मल्लारसंज्ञितः ।
श्रीरागश्च ततः पश्चाद्वसन्तस्तदनन्तरम् ॥
हिन्दोलश्चाथ कर्णाट एते रागाः षडेव तु ।६।
षट्त्रिंशद्रागिणी तत्र क्रमशः कथिता मया ॥
धानसी मालसी चैव रामकिरी च सिन्धुड़ा ।
आशावरी भैरवी च मालवस्य प्रिया इमाः ॥६
वेलावली च पुरवी कानड़ा माधवी तथा ।
कोड़ा केदारिका चापि मल्लारदयिता इमाः ॥६
गान्धारी शुभगा चैव गौरी कौमारिका तथा ।
वेलोयारी च वैरागी श्रीरागस्य प्रिया इमाः ॥६
तुड़ी च पञ्चमी चैव ललिता पठमञ्जरी ।
गुर्ज्जरी च विभाषा च वसन्तस्य प्रिया इमाः ॥६
मायूरी दीपिका चैव देशकारी च पाहिड़ा ।
वराड़ी मोरहाटी च हिन्दोलस्य प्रिया
इमाः ॥६॥
नाटिका चाथ भूपाली रामकेली गड़ा तथा ।
कामोदा चापि कल्याणी कर्णाटस्य प्रिया
इमाः ॥६॥३६॥*॥

अथ कालनियमः ।
“विभाषा ललिता चैव कामोदा पठमञ्जरी ।
रामकीरी रामकेली वेलायारी च गुर्ज्जरी ॥
देशकारी च शुभगा पञ्चमी च गड़ा तुड़ी ।
भैरवी चाथ कौमारी रागिण्यो दश पञ्च च ।
एताः पूर्व्वाह्नकाले तु गीयन्ते गायनोत्तमैः ॥
वराड़ी मायूरी कोड़ा वैरागी चाथ धानसी ।
वेलावली मोरहाटी सप्तैता रागयोषितः ।
गेया मध्याह्नकाले तु यथा भारतभाषितम् ॥
गान्धारी दीपिका चैव कल्याणी पुरवी तथा ।
कानड़ा शारवी चैव गौरी केदारपाहिड़ा ॥
मायूरी मालसी नाटी भूपाली सिन्धुड़ा तथा ।
सायाह्ने ताश्च रागिण्यः प्रगायन्ति चतुर्द्दश ॥
पुरुषा वसुभूपाद्या रागास्ते मालवादयः ।
प्रदोषे चापराह्णे च रजन्यां गायगोचराः ॥
दशदण्डात् परं रात्रौ सर्व्वेषां गानमीरितम् ।
मेघमल्लाररागस्य गानं वर्षासु सर्व्वदा ॥
श्रीपञ्चम्यां समारभ्य यावत् जन्मोत्सवं हरेः ।
तावद्वसन्तरागस्य गानमुक्तं मनीषिभिः ॥
शक्रोत्थानं समारभ्य यावद्रामोत्सवम् ।
गीयते सद्भिर्नित्यं मालश्री सा मनोहरा ॥
सर्व्वेषामिह रागाणां रागिणीनाञ्च सर्व्वशः ।
रङ्गभूमौ नृपाज्ञायां कालदोषो न विद्यते ॥
रागस्यालापयेदादौ तत्पश्चात्तदनन्तरम् ।
नान्यथा प्रगातव्या नृपाज्ञायां न दूषणम् ॥
रागाः षड्‌च रागिण्यः षट्त्रिंशच्चाक-
विग्रहाः ।
आगता नन्दनवनात् नन्दायां वसुधातले ॥”*॥
अथ ध्यानम् ।
“नितम्बिनीचुम्बितवक्त्रपद्मः
शुकद्युतिः कुण्डलवान् प्रमत्तः ।
सङ्गीतशालां प्रविशन् प्रदोषे
मालाधरो मालवरागराजः ॥ १ ॥
नीलोत्पलं कर्णयुगे वहन्ती
श्यामा सुकेशी च सुमध्यभागा ।
ईषत्सहासाम्बुजरम्यवक्त्रा
सा धानसी पद्मसुचारुनेत्रा ॥ १ ॥
करे शुभा चाम्बुजयुग्मरम्या
इतस्ततश्चारु विलोकयन्ती ।
कण्ठस्थमुक्तामौक्तिकरत्नहारा
सा मालसी संकथिता विचित्रा ॥ २ ॥
प्रतप्तचामीकरचारुवक्त्रा
कर्णावतंसं कमलं वहन्ती ।
पुष्पं धनुः पुष्पशरैर्दधाना
चन्द्रानना रामकिरी प्रदिष्टा ॥३॥
महेन्द्रनीलद्युतिरम्बुजाक्षी
प्रवादयन्ती कपिलाशयन्तम् ।
विचित्ररत्नाभरणा सुकेशी
सा सिन्धुड़ा कान्तसमीपसंस्था ॥४॥
जवाप्रसूनद्युतिबिम्बवक्त्रा
सकम्पपद्मं करयोर्दधाना ।
क्षौमांशुकाच्छादितगात्रयष्टि-
राशावरी रङ्गकिला विदग्धा ॥५॥
सरोवरस्था स्फाटिकस्य मन्दिरे
सरोरुहैः शङ्करमर्चयन्ती ।
तालप्रयोगप्रतिरङ्गगीतै
गौरीतनुर्भैरविका सतीयम् ॥”६॥*॥
अथ मल्लारः ।
“विहारशीलोऽतिसुकान्तदेहः
कान्ताप्रियो धार्म्मिकधर्म्मयुक्तः ।
कामातुरः पिङ्गलनेत्रयुग्मो
मल्लाररागः प्रियकृत् सुवेशः ॥१॥
सङ्केतितोत्फुल्ललतानिकुञ्ज
तलस्थितिः कान्तसमागमाय ।
वेलावली चम्पकमौलिनी सा
बाला विचित्राभरणा निरुक्ता ॥१॥
रहःसु कान्तप्रियमाश्रयन्तं
रम्यं वहन्ती कुचकुम्भयुग्मे ।
दूर्व्वादलश्यामतनुः सकामा
पुरातनैः सा पुरवी निरुक्ता ॥२॥
अशोकवृक्षस्य तले निषण्णा
वियोगिनी वाष्पकणाञ्चिताङ्गी ।
विभूषिताङ्गी जटिलेव बाला
सा कानड़ा हेमलतेव तन्वी ॥३॥
संगृह्य संगृह्य गले दधाना
प्रसूनमाला दयितेन बाला ।
गौरी स्वकान्तानतचुम्बितास्या
सा सुन्दरी माधविका निकुञ्जे ॥४॥
सुकच्छपीं वादयति स्वभर्त्तु-
र्गानार्थमभ्यस्यति सम्मुखेन ।
सदैव ताला विहिता च माला
कोड़ा कला तानवती मता सा ॥५॥
बाला सलुम्बोर्ज्वती सुदेहा
केशप्रलम्बाञ्चितवारिबिन्दुः ।
निम्नीकृयन्ती तिमिरांशुकान्तं
केदारिका रक्तपयोधरश्रीः ॥”६॥*॥
अथ श्रीरागः ।
“लीलाविहारेण वनान्तराणि
चिन्वन् प्रसूनानि वधूसहायः ।
विलासवेशो धृतदिव्यमूर्त्तिः
श्रीराग एष प्रथितः पृथिव्याम् ॥१॥
सन्ध्यासुकाले रहमध्यदेशे
प्रवादयन्ती च पिनाकयन्त्रम् ।
धाराधराभासुविचित्रिताङ्गी
गान्धारिका गन्धवनं निधत्ते ॥ १ ॥
रसनया सुविचारकौतुकं
विदधती कविकोविदकौतुकम् ।
सुकवितान्तभावनतत्परा
भगवती सुभगा बहुराकृता ॥२॥
पुष्पोद्याने चाहंमालीकलापैः
क्रीड़न्त्येव कोकिलाकाकलीषु ।
रामा श्यामा सद्गुणानाञ्च सीमा
गौरी गौरी गौरवालोकदिष्टा ॥३॥
अट्टालिकायां स्फुटकौमुदीभिः
प्रकाशितायां रजनीविहारम् ।
आश्रित्य कान्तेन समं वसन्ती
कौमारिका कामकला वहन्ती ॥४॥
गौरीपादाम्भोजमभ्यर्चयन्ती
गम्भीरोत्थं गन्धमाल्यं दधाना ।
नानारत्नोपायनैर्भक्तिभावै-
र्वेलायारी कथ्यते बालिकेयम् ॥५॥
उल्लासयन्ती धम्मिल्लं रहःस्थान् प्राणबन्धुना ।
मालतीकुसुमस्रग्भिर्वैरागी रागिणी स्मृता ॥”६
अथ वसन्तः ।
“चूताङ्कुरेणैव कृतावतंसो
विघूर्णमानारुणनेत्रपद्मः ।
पीताम्बरः काञ्चनचारुदेहो
वसन्तरागो युवतिप्रियश्च ॥१॥

सुहृत्समानालिसुगीतियुक्ता
मुक्तासमानाकलितहारयष्टिः ।
चूताङ्कुरं पाणियुगे वहन्ती
मदावशाङ्गी सुकृतेरितीयम् ॥१॥
संगीतगोष्ठीषु गरिष्ठभावं
समाश्रिता गायनसम्प्रदायैः ।
सर्व्वाङ्गिनी नूपुरपादपद्मा
सा पञ्चमी पञ्चमवेदवेद्या ॥२॥
उरसि केशचयस्य सुभारं
विदधती शयनोत्थितचारुवेशम् ।
विलुलितालकवलितशाङ्गी
भासुरा ललिता कथिता बुधैः ॥३॥
सखीकलापैः परिहास्यमाना
वियोगिनी कान्तवियोगदेहा ।
पीनस्तनी चैव धराप्रसुप्ता
श्यामा सुकेशी पटमञ्जरीयम् ॥४॥
कर्णोत्पलालम्बिमधुव्रतालीं
शृणोति या मञ्जुलकूजितानि ।
कान्तान्तिकं गन्तुमनाः प्रदोषे
सा गुर्ज्जरी वेशकलोचिताङ्गी ॥५॥
अध्यापयन्ती निजशिष्यवृन्दं
सङ्गीतशास्त्राणि विवेचनाभिः ।
मनोहरा चारुलताभिरामा
समस्तभावाकुशला विभाषा ॥"६॥*॥

अथ हिन्दोलः ।

"छायाभिलाषेण पतन् पृथिव्यां
उत्थापितस्तनुजमालिवृन्दैः ।
उल्लोलकल्लोलतरैर्विदग्धो
हिन्दोलरागः कथितो रसज्ञैः ॥१॥
मयूरकेकाश्रवणोल्लसन्ती
मयूरिकानृत्यरतं किरन्ती ।
मयूरकान्तीव चितिं दधाना
मायूरिका संकथिता गुणज्ञैः ॥१॥
प्रदोषकाले गृहसंप्रविष्टा
प्रदीपजालावगमावदाता ।
सीमन्तसिन्दूरविराजमाना
सुरक्तमाल्या किल दीपिकेयम् ॥२॥
सार्द्धं सखीभिर्विजने वसन्ती
विचित्रवर्णोजनितल्पसङ्गा ।
निरीक्षमाणाननदर्पणा या
सा देशकारी कथिता गुणज्ञैः ॥३॥
भर्त्तुर्दधाना चरणारविन्दं
निषेधयन्ती परदेशयानम् ।
प्रकामदाम्पत्यसुखे निमग्ना
सा पाहिड़ा संकथिता कवीन्द्रैः ॥४॥
कर्णे दधाना सुरपुष्पयुग्मं
स्फुरत्सुवर्णोज्ज्वलमनोहराङ्गी ।
स्मेरानना चारुविलोलनेत्रा
वराङ्गनेयं कथिता वराड़ी ॥५॥
उत्पन्नमात्रे प्रथमापराधे
मानं पुनः कर्त्तुमनाश्चिरेण ।
अनुक्षभावान्नियतं वदन्ती
सा मोरहाटी हठकेलिदक्षा ॥"६॥*॥

अथ कर्णाटः ।

"कृपाणपाणिस्तुरगाधिरूढो
मयूरकण्ठातिसुकण्ठकान्तिः ।
स्फुरत्त्रिनर्त्ताश्वधरः प्रशान्तः
कर्णाटरागो हरितालवर्णः ॥१॥
चिरं नटन्ती सुभरङ्गमध्ये
संप्रार्थयन्ती नटिनं वसन्तम् ।
सुगीतनादेषु कृतावधाना
नटी सुशाटीपरिधानदेहा ॥१॥
स्वनायकं पुष्पलताधिरूढा
हसन्मुखी सर्व्वसुदं वहन्ती ।
स्वनानि शृण्वत्युपगीति मुग्धा
भूपालिका सा स्खलदुत्तरीया ॥२॥
अध्यापयन्ती शुकसारसाराः
श्रीराम रामेति सुवेशलक्ष्मीः ।
वामस्तनार्द्धस्खलितांशुकश्रीः
श्रीरामकेली कथिता कवीन्द्रैः ॥३॥
विशिष्टवैदग्ध्यवती समन्तात्
कलाविलासेन विमोहयन्ती ।
दृष्टप्रियस्था परिपुष्टदेहा
वक्रा प्रलम्बस्तनभारभग्ना ॥४॥
भर्त्तुः समं पाथसि सञ्चरन्ती
पयोविहारेण सरोरुहाणि ।
विचिन्वती सौरभमोदमाना
कामोदरागिण्युदिता गुणज्ञैः ॥५॥
स्वाधूता नटकृत्यपरिश्रमेण
बाला लीलाभिः सुदती कलादरा ।
नटीनां कल्याणी कलयति मत्तहस्ती
स्खलत्प्रस्थानं सुखरिता किङ्किणीकलापम् ॥"६॥

अथ रागरागिणीनां भावनिरूपणम् ।
"मालवः श्रीश्च हिन्दोलो मल्लारस्तदनन्तरम् ।
गायन्ति गायका धीर सामर्थ्येन चतुष्टयम् ॥
वसन्तो रागः कर्णाटो द्वौ वीरौ भवतः क्रमात् ॥
धानसी मालसी चैव भैरवी माधवी तथा ।
सुभगा पञ्चमी नाटी वेलोयारी च गुर्ज्जरी ॥
कामोदा चापि कल्याणी कोड़ा केदारिका शुद्धा ।
कौमारी मायूरी चैव देशकारी च सिन्धुड़ा ॥
रामकेली च भूपाली रागिण्यश्चेति विश्रुतिः ।
आनन्दांशा इति प्रोक्ता गीयन्ते गानकोविदैः ॥
पुरवी कानड़ा गौरी रामकिरी च दीपका ।
आशावरी विभाषा च वड़ारी च गड़ा तथा ।
एताश्च नव रागिण्यो वीरांशे गानमुत्तमम् ॥
वेलावली च गान्धारी ललिता पटमञ्जरी ।
वैरागी रागिणी चापि मोरहाटी च पाहिड़ा ।
करुणांशा विजानीयात् समेता रागयोषितः ॥
रागेण रसभागेन षट्त्रिंशद्रागिणीषु च ।
करुणानन्दवीरेषु ज्ञापनार्थं मतत्रयम् ॥"
इति संगीतदामोदरे शिवनारदसंवादे १ । ३ अध्यायौ ॥ (तथा च संगीतदर्पणे ।

अथ रागाणामुत्पत्तिं दर्शयति ।
"शिवशक्तिसमायोगाद्रागाणां सम्भवो भवेत् ।
पञ्चास्यात् पञ्च रागाः स्युः षष्ठस्तु गिरिजा-मुखात् ॥
सद्योवक्त्रात्तु श्रीरागो वामदेवाद्वसन्तकः ।
अघोराद्भैरवोऽभूत् तत्पुरुषात् पञ्चमोऽभवत् ॥
ईशानाख्यान्मेघरागो नाट्यारम्भे शिवादभूत् ।
गिरिजायाः मुखाल्लास्ये नट्टनारायणोऽभवत् ॥"

अथ रागवेला ।

"मधुमाधवी च देशाख्या भूपाली भैरवी तथा ।
वेलावली च मल्लारी वल्लारी सोमगुर्ज्जरी ॥
धनाश्रीर्मालवश्रीश्च मेघरागश्च पञ्चमः ।
देशकारी भैरवश्च ललिता च वसन्तकः ॥
एते रागाः प्रगीयन्ते प्रातरारभ्य नित्यशः ।
गुर्ज्जरी कौशिकश्चैव सावेरी पटमञ्जरी ॥
रेवा गुणकिरी चैव भैरवी रामकिर्य्यपि ।
सौराटी च तथा गेया प्रथमप्रहरोत्तरम् ॥
वैराटी तोड़िका चैव कामोदी च कुड़ायिका ।
गान्धारी नागशब्दी च तथा देशी विशेषतः ।
शङ्कराभरणो गेयो द्वितीयप्रहरात् परम् ॥
श्रीरागो मालवाख्यश्च गौरी त्रिवणसंज्ञिका ।
नट्टकल्याणसंज्ञश्च सारङ्गनट्टको तथा ॥
सर्व्वे नाटाश्च केदारी कर्णाटाभीरिका तथा ।
वड़हंसी पहाड़ी च तृतीयप्रहरात् परम् ।
अर्द्धरात्रावधि ज्ञेया एते रागाः सुखप्रदाः ॥
यथोक्तकाल एवैते गेयाः पूर्व्वविधानतः ।
राजाज्ञया सदा गेया न तु कालं विचारयेत् ॥"
इति रागवेला ।

अथ ऋतवः ।

"श्रीरागो रागिणीयुक्तः शिशिरे गीयते बुधैः ।
वसन्तः ससहायस्तु वसन्तर्त्तौ प्रगीयते ॥
भैरवः ससहायस्तु ऋतौ ग्रीष्मे प्रगीयते ।
पञ्चमस्तु तथा गेयो रागिण्या सह शारदे ॥
मेघरागो रागिणीभिर्युक्तो वर्षासु गीयते ।
नट्टनारायणो रागो रागिण्या सह हैमने ॥
यथेच्छया वा गातव्याः सर्व्वर्त्तुषु सुखप्रदाः ॥"
इति रागाणां ऋतुनिर्णयः । इति सोमेश्वर-मतम् ॥ * ॥ )

**रागचूर्णः**, पुं, कामदेवः । खदिरवृक्षः । इति मेदिनी । णे, १०६ ॥ फलगुचूर्णम् । इति शब्द-रत्नावली ॥ लाक्षारसः । इति राजनिर्घण्टः ॥

**रागच्छन्नः**, पुं, ( रागेण छन्नः । ) कामदेवः । इति शब्दरत्नावली ॥ रागेणाच्छन्ने, त्रि ॥

**रागदः**, पुं, ( रागं ददातीति । दा + कः । ) तेरणीक्षुपः । इति राजनिर्घण्टः ॥ रागदातरि, त्रि ॥

**रागदालिः**, पुं, (रागदा रागप्रदा आलिः पङ्क्ति-र्यस्य ।) मसूरः । इति राजनिर्घण्टः ॥ (विवरण-मस्य मसूरशब्दे विज्ञेयम् ॥ )

रागपुष्पः, पुं, (रागविशिष्टं रक्तवर्णं पुष्पं यस्य ।) बन्धूकः । रक्ताम्लानः । इति राजनिर्घण्टः ॥
रागपुष्पी, स्त्री, ( रागयुक्तं पुष्पं यस्याः । ङीप् ।) जवा । इति राजनिर्घण्टः ॥ ( गुणादयोऽस्य जवाशब्दे ज्ञातव्याः ॥ )
रागप्रसवः, पुं, ( रागयुक्तो रक्तवर्णः प्रसवः पुष्पं यस्य । ) बन्धूकः । रक्ताम्लानः । इति राजनिर्घण्टः ॥
रागभुक्, [ ज् ] पुं, (रागेण भुज्यते इति । भुज् + क्विप् ।) माणिक्यम् । इति राजनिर्घण्टः । कस्मिंश्चित् पुस्तके रागहृक् इति पाठोऽपि विद्यते ॥
रागरज्जुः, पुं, ( रागो रज्जुरिव यस्य । नायकयोः परस्परानुरागबन्धनसाधनत्वात्त्वम् । ) कामदेवः । इति शब्दरत्नावली ॥
रागलता, स्त्री, (रागस्य जनिका लतेव ।) कामदेवपत्नी । इति जटाधरः ॥
रागवृन्तः, पुं, ( रागस्य वृन्त इव । ) कामदेवः । इति शब्दमाला ॥
रागषाडवः, पुं, दाडिमद्राक्षाद्युक्तसूपः । अस्य गुणाः । रुचिकारित्वम् । लघुपाकित्वम् । वातपित्तकफाविरोधित्वञ्च । इति राजवल्लभः ॥ ( यथा, सुश्रुते । १ । ४६ अध्याये कृतान्नवर्गे ।
"ज्ञेयः पथ्यतमश्चापि मुद्रयूषः कृताकृतः ।
स तु दाडिममृद्वीकायुक्तः स्याद्रागषाडवः ।
रुचिष्यो लघुपाकश्च दोषाणामविरोधकृत् ॥"
तथास्य गुणाः ।
"लघवो बृंहणा वृष्याः हृद्या रोचनदीपनाः ।
हृष्याजर्षाभिमर्हद्विश्रमघ्ना रागषाडवाः ॥"
इति च सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥ )
रागसूत्रं, क्ली, (रागयुक्तं रक्तवर्णं सूत्रम् ।) तुलासूत्रम् । पट्टसूत्रम् । इति मेदिनी । रे, २८४ ॥
रागाङ्गी, स्त्री, (रागविशिष्टमङ्गं यस्याः । ङीप् ।) मञ्जिष्ठा । इति राजनिर्घण्टः ॥
रागाढ्या, स्त्री, ( रागेण आढ्या । ) मञ्जिष्ठा । इति राजनिर्घण्टः ॥
रागान्धः, त्रि, आशया दृष्ट्या रागविसृष्टः । यथा,
"आशा बलवती दृष्ट्वा यो हन्ति पिशुनो जनः ।
स जीवन्नोऽपि रागान्धमूढो दासस्तु रातरि ॥"
इति शब्दमाला ।
रागाशनिः, पुं, ( रागेषु विषयवासनासु अशनिरिव । ) बुद्धः । इति त्रिकाण्डशेषः ॥
रागिणी, स्त्री, ( रागोऽस्त्यस्या इति । राग + इनिः । ङीप् । ) विदग्धा नारी । इति जटाधरः ॥ मेनकाया ज्येष्ठकन्या । यथा,—
"रागिणी नाम संजाता ज्येष्ठा मेनासुता मुने ।
शुभाङ्गी पद्मपत्राक्षी नीलकुञ्चितमूर्द्धजा ॥"
इति वामनपुराणे ४८ अध्यायः ॥
जयश्रीनाम्नी लक्ष्मीः । इति पुराणम् ॥ षड्रागाणां पत्नी । इति हलायुधः ॥ सा तु हनूमन्मते भरतमते च त्रिंशत्प्रकारा । सोमेश्वरमते कल्लिनाथमते च षट्त्रिंशत्प्रकारा ॥ आसां विवरणं रागशब्दे द्रष्टव्यम् ॥

रागी, [न्] त्रि, ( रञ्ज + "संपृचानुरुधेति ।" ३ । २ । १४२ । इति तच्छीलादिषु घिनुण् । यद्वा, रागोऽस्यास्तीति । राग + इनिः ।) अनुरक्तः । ( यथा, मार्कण्डेये । २१ । ४१ ।
"त्वय्यस्या हृदयं रागि भर्त्ता चान्यो भविष्यति ।
यावज्जीवमतो दुःखं सुरभ्या नान्यथा वचः ॥")
कामुकः । इति विश्वः ॥ रञ्जकः । इति मेदिनी ॥ ( विषयानुरागयुक्तः । स च द्विविधः । यथा, देवीभागवते । १ । १७ । ३७—३८ । ४१ ।
"द्वैविध्यं सर्व्वलोकेषु सर्व्वत्र द्विविधो जनः ।
रागी चैव विरागी च तयोश्चित्तं द्विधा पुनः ॥
विरागी त्रिविधः कामं ज्ञातोऽज्ञातश्च मध्यमः ।
रागी च द्विविधः प्रोक्तो मूर्खश्च चतुरस्तथा ॥"
"रागो यस्यास्ति संसारे स रागीत्युच्यते ध्रुवम् ।
दुःखं बहुविधं तस्य सुखञ्च विविधं पुनः ॥"
रक्तवर्णविशिष्टः । यथा, कथासरित्सागरे । २१ । ६ ।
"ईर्ष्यारसाभिभावेऽपि भङ्गुरभ्रुणि रागिणि ।
न सुखे तत्तयो राजन्नेत्रहृदिरक्तनिमायथौ ॥")
पुं, क्षुद्रधान्यविशेषः । तत्पर्य्यायः । लाञ्छनः २ बहुनरकणिशः ३ गुच्छकणिशः ४ । अस्य गुणाः । तिक्तत्वम् । मधुरत्वम् । कषायत्वम् । शीतत्वम् । पित्तापहारित्वम् । बल्यत्वञ्च । इति राजनिर्घण्टः ॥
राघ, ऋ ङ शक्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् । ) ऋ, अरराघत् । ङ, राघते । शक्तिः सामर्थ्यम् । इति दुर्गादास. ॥
राघवः, पुं, ( रघोरपत्यमिति । रघु + अण् । ) रामचन्द्रः । ( यथा, रघुः । १२ । ३२ ।
"रावणावरजा तत्र राघवं मदनातुरा ।
अभिपेदे निदाघार्त्ता व्यालीव मलयद्रुमम् ॥"
अजः । यथा, रघुः । ८ । १६ ।
"यतिपार्थिवलिङ्गधारिणौ
ददृशाते रघुराघवौ जनैः ॥"
दशरथः । यथा, रामायणे । २ । ६४ । १ ।
"वधमप्रतिरूपं तु महर्षेस्तस्य राघवः ।
विलपन्नेव धर्म्मात्मा कौशल्यामिदमब्रवीत् ॥"
रघुवंशीयमात्रम् । यथा, तत्रैव । २।६४।७५ ।
"अपि त्वद्य कुलं न स्याद्राघवाणां कुतो भवान् ॥")
समुद्र-महामत्स्यविशेषः । इति मेदिनी ॥ वे, ४८ ॥ (यथा, कादम्बर्य्यां प्रथमपादे दुर्गसिंहः ।
"अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः ।
तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः ॥")
राघवायणं, क्ली, ( राघवस्य रामस्य चरितान्वितं अयनं शास्त्रम् । ) रामायणम् । यथा,—
"सेतिहासपुराणानि राघवायणभारतम् ।
समाश्रितहितान्येव सन्ति तानि स्थलानि ते ॥"
इत्यग्निपुराणे वामनप्रादुर्भावनामाध्यायः ॥
राङ्कवः, पुं, दृषकस्तूरकः । इति हारावली ।६१ ॥

राङ्कवं, क्ली, ( रङ्कौ भवम् । रङ्कु + "रङ्कोरमनुष्येऽण् च ।" ४ । २ । १०० । इति अण् । ) मृगलोमजातवस्त्रादि । तत्पर्य्यायः । मृगरोमजम् २ । इत्यमरः । २ । ६ । १११ ॥ रङ्कुर्मृगभेदः तस्मो जातार्थे अण् । पशवोऽपि मृगा इति रूढ्या मेषादिलोमजमपि कम्बलादि राङ्कवम् । इति तट्टीकायां भरतः ॥ ( यथा, महाभारते । २ । ५० । २३ ।
"औरंष राङ्कवञ्चैव पट्टजं कीटजन्तथा ॥"
पुं, गौः । इति काशिका ॥ राङ्कवाजती, त्रि । यथा, महाभारते । ६ । ४४ । २६ ।
"क्रौञ्चपारावतनिभैर्व्वहनै राङ्कवैरपि ॥")
राङ्गं, क्ली, पुष्पविशेषः । रङ्गन् इति भाषा । अस्य गुणः । रक्तपित्तनाशित्वम् । इति द्रव्यगुणः ॥
राज, ऋ ञ ष दीप्तौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-उभ०-अक० सेट् । ) ऋ, अरराजत् । ञ, राजति राजते । ष, रेजतुः । इति दुर्गादासः ॥
राजकं, क्ली, (राज्ञां समूहः । राजन् + "गोत्रोक्षोष्ट्रोरभ्रराजेति ।" ४।२।३९ । इति वुञ् ।) नृपसमूहः । इत्यमरः । २ । ८ । ३ ॥ यथा, मार्कण्डेये । १०६ । ६ ।
"कृष्णपुरमतीवासीत् तस्मिन् राजन्यशेषतः ।
राजकं सकलं चोर्व्व्यां पौरजानपदो जनः ॥"
राजन् + स्वार्थे कन् । ) राजनि, पुं । ( यथा, हरिवंशे भविष्यपर्व्वणि । २४ । ६ ।
"तवाङ्गं तिलशः कृत्वा भक्ष्यो दास्यामि राजक ॥"
राज + ण्वुल् । ) दीप्तिकारके, त्रि ॥
राजकदम्बः, पुं, ( कदम्बानां राजा । राजदन्तादित्वात् परनिपातः । ) कदम्बविशेषः । यथा,—
"कादम्बर्य्यः प्रावृषेण्यो नीपो धूलीकदम्बकः ।
कदम्बप्रियकौ राजकदम्बोऽवल्करोऽपिकः ॥"
इति जटाधरः ॥
राजकन्या, स्त्री, (राज्ञः कन्येव ।) केविकापुष्पम् । इति राजनिर्घण्टः ॥ नृपसुता च ॥ (यथा, भागवते । ६ । ६ । ४१ ।
"हृतः स राजकन्याभिरेकः पञ्चाशता वरः ॥")
राजकर्कटी, स्त्री, चीनाकर्कटी । इति राजनिर्घण्टः ॥
राजकशेरुः, पुं, ( कशेरूणां राजा । राजदन्तादित्वात् परनिपातः । ) भद्रमुस्ता । इति राजनिर्घण्टः ॥
राजकीयः, त्रि, ( राज्ञ इदम् । राजन् + "राज्ञः क च ।" ४ । २ । १४० । इति छः ककारश्चान्तादेशः । ) राजसम्बन्धी । राजकस्यायं इत्यर्थे छीयप्रत्ययेन सिद्धः ॥ (यथा, कथासरित्सागरे । ६२ । २२८ ।
"ततस्तदर्थं राज्ञौ स राजकीयं सरो ययौ ॥")
राजकुमारः, पुं, ( राज्ञः कुमारः । ) राजपुत्रः । तस्य वर्णनीयानि यथा,—
"कुमारं शास्त्रशास्त्रश्रीकलावलगुणोच्छ्रयाः ।

एतेषां विजयं कृत्वा कार्य्यं भृत्यजयं ततः ।
कृत्वा भृत्यजयं सर्व्वं राजा जनपदं जयेत् ॥
कृत्वा तु विजयं तेषां शत्रून् बाह्यांस्ततो जयेत् ।
बाह्याश्च त्रिविधा ज्ञेयास्तुल्याभ्यन्तरकृत्रिमाः ॥
गुरवस्ते यथापूर्व्वं तेषु यत्नपरो भवेत् ।
पितृपैतामहं मित्रममित्रञ्च तथा रिपोः ॥
कृत्रिमञ्च महाभाग मित्रं त्रिविधमुच्यते ।
तथापि च गुरुः पूर्व्वं भवेत्तत्रापि चाहृतः ॥
स्वाम्यमात्यौ जनपदो दुर्गं सैन्यन्तथैव च ।
कोषो मित्रञ्च धर्म्मज्ञ सप्ताङ्गं राज्यमुच्यते ॥
सप्ताङ्गस्यापि राज्यस्य मूलं स्वामी प्रकीर्त्तितः ।
तन्मूलत्वात्तथाङ्गानां राजा रक्ष्यः प्रयत्नतः ।
षडङ्गरक्षा कर्त्तव्या तथा तेन प्रयत्नतः ॥
अङ्गेभ्यो यस्त्वेकस्य द्रोहमाचरतेऽल्पधीः ।
वधस्तस्य तु कर्त्तव्यः शीघ्रमेव महीक्षिता ॥
न राज्ञा मृदुना भाव्यं मृदुर्हि परिभूयते ।
न भाव्यं दारुणेनापि तीक्ष्णादुद्विजते जनः ॥
काले मृदुर्यो भवति काले भवति दारुणः ।
राजा लोकद्वयापेक्षी तस्य लोकद्वयं भवेत् ॥
भृत्यैः सह महीपालः परिहासं विवर्ज्जयेत् ।
भृत्याः परिभवन्तीह नृपं हर्षवशं गतम् ॥
व्यसनानि च सर्व्वाणि भूपतिः परिवर्ज्जयेत् ।
लोकसंग्रहणार्थाय कृतकव्यसनो भवेत् ॥
शौटीरस्य नरेन्द्रस्य नित्यमुद्धिक्तचेतसः ।
जना विरागमायान्ति सदा दुःसेव्यभावतः ॥
स्मितपूर्व्वाभिभाषी स्यात् सर्व्वस्यैव महीपतिः ।
वध्येष्वपि महाभाग भ्रुकुटीं न समाचरेत् ॥
भाव्यं धर्म्मभृतां श्रेष्ठ स्थूललक्ष्येण भूभुजा ।
स्थूललक्ष्यस्य वशगा सर्व्वा भवति मेदिनी ॥
अदीर्घसूत्रश्च भवेत् सर्व्वकर्म्मसु पार्थिवः ।
दीर्घसूत्रस्य नृपतेः कर्म्महानिर्ध्रुवं भवेत् ॥
रागे दर्पे च माने च द्रोहे पापे च कर्म्मणि ।
अप्रिये चैव कर्त्तव्ये दीर्घसूत्रः प्रशस्यते ॥
राज्ञा संवृतमन्त्रेण सदा भाव्यं द्विजोत्तम ।
तस्यासंवृतमन्त्रस्य ध्रुवाः सर्व्वापदो ध्रुवाः ॥
कृतान्येव तु कर्म्माणि ज्ञायन्ते यस्य भूपतेः ।
नारब्धानि महाभाग तस्य स्याद्वसुधा वशे ॥
मन्त्रमूलं सदा राज्यं तस्मान्मन्त्रं सुरक्षितम् ।
कर्त्तव्यं पृथिवीपालैर्मन्त्रभेदभयात् सदा ॥
मन्त्रवित् साधितो मन्त्रः संपदां सुखावहः ।
मन्त्रच्छलेन बहवो विनष्टाः पृथिवीक्षितः ॥
आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ।
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥
नयस्य कुशलस्तस्य वशे सर्व्वा वसुन्धरा ।
भवतीह महीभर्त्तुः सदा पार्थिवनन्दन ॥
नैकस्तु मन्त्रयेन्मन्त्रं न राजा बहुभिः सह ।
नारोहेद्विषमां नावं नापरीक्षितनाविकाम् ॥
ये चास्य भूमिं जयतो भवेयुः परिपन्थिनः ।
तानानयेद्वशं सर्व्वान् सामादिभिरुपक्रमैः ॥
यथा न स्यात् कृशीभावः प्रजानामनवेक्षया ।
तथा राज्ञा प्रकर्त्तव्यं स्वराष्ट्रपरिरक्षणम् ॥
मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया ।
सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ॥
भृतो वत्सो जातबलः कर्म्मयोग्यो यथा भवेत् ।
तथा राष्ट्रं महाभाग भृतं कर्म्मसहं भवेत् ॥
यो राष्ट्रमनुगृह्णाति राज्यं स परिरक्षति ।
संजातमुपजीवेत्तु विन्दते स महत् फलम् ॥
राष्ट्राद्धिरण्यं धान्यञ्च महीं राजा सुरक्षिताम् ।
महता तु प्रयत्नेन स्वराष्ट्रस्य च रक्षिता ॥
नित्यं स्वेभ्यः परेभ्यश्च यथा माता यथा पिता ।
गोपितानि सदा कुर्य्यात् स विभागी प्रियाणि च ॥
अजस्रमुपयोक्तव्यं फलं तेभ्यस्तथैव च ।
सर्व्वकर्म्मेदमायत्तं विधाने दैवमानुषे ।
तयोर्दैवमचिन्त्यं हि पौरुषे विद्यते क्रिया ॥
एवं महीं पालयतोऽस्य भर्त्तु-
र्लोकानुरागः परमो भवेच्च ।
लोकानुरागप्रभवा च लक्ष्मी-
र्लक्ष्मीवतश्चैव परा च कीर्त्तिः ॥”
इति मात्स्ये २०० अध्यायः ॥

**राजपुत्त्रिका,** स्त्री, ( राजपुत्त्री + संज्ञायां कन् । ) शरारिपक्षी । शरालो इति भाषा ॥ यथा,—
“शरारिराटिराडिश्च हापुत्त्री राजपुत्त्रिका ॥”
इति जटाधरः ॥
राजकन्या च ॥ ( यथा, हरिवंशे । २५ । ४६ ।
“उत्पादयामास ततः पुत्त्रं वै राजपुत्त्रिका ॥” )

**राजपुत्त्री,** स्त्री, ( राज्ञः पुत्त्रीव । ) कटुतुम्बी । रेणुका । जाती । राजरीतिः । छुछुन्दरी । इति राजनिर्घण्टः ॥ मालती । यथा,—
“अतिमुक्तश्च जातिर्मालती सुमना अपि ॥”
राजपुत्त्री मनोज्ञा——॥” इति जटाधरः ॥
राजकन्या च । ( यथा, महाभारते ।१।७४।१।
“सुव्यक्तं राजपुत्त्री त्वं यथा कल्याणि ! भाषसे ।
भार्य्या मे भव सुश्रोणि ! ब्रूहि किं करवाणि ते ॥” )

**राजपुष्पः,** पु, ( पुष्पाणां राजा । राजदन्तादित्वात् परनिपातः । ) नागकेशरपुष्पवृक्षः । यथा,—
“चाम्पेयः केशरो नागकेशरः काञ्चनाह्वयः ।
महौषधं राजपुष्पः फलकः खरवासनः ॥”
इति शब्दचन्द्रिका ॥

**राजपुष्पी,** स्त्री, ( राजप्रियं पुष्पमस्याः । ङीप् । ) करुणीवृक्षः । इति राजनिर्घण्टः ॥

**राजप्रिया,** स्त्री, ( राज्ञः प्रिया । ) करुणीवृक्षः । इति राजनिर्घण्टः ॥

**राजफणिज्झकः,** पुं, ( राजते इति । राज + अच् । राजा दीप्तिशाली फणिज्झकः । ) नागरङ्गवृक्षः । इति शब्दमाला ॥

**राजफलं,** क्ली, ( राजाभिधेयं फलम् । ) पटोलम् । इति त्रिकाण्डशेषः ॥

**राजफला,** स्त्री, ( राजप्रियं फलमस्याः । ) जम्बूः । इति राजनिर्घण्टः ॥

**राजबदरं,** क्ली, ( राज्ञो बदरमिव प्रियत्वात् । ) रक्तामलकम् । लवणम् । इति मेदिनी ॥

**राजबदरः,** पुं, ( बदराणां राजा । राजदन्तादित्वात् परनिपातः । ) उत्तमकोलिः । तत्पर्य्यायः । नृपश्रेष्ठः २ नृपबदरः ३ राजवल्लभः ४ पृथुकोलः ५ तनुबीजः ६ मधुरफलः ७ राजकोलः ८ । अस्य गुणाः । सुमधुरत्वम् । शिशिरत्वम् । दाहार्त्तिपित्तवातहरत्वम् । वृष्यत्वम् । वीर्य्यवृद्धिकरत्वम् । शोषभ्रमनाशित्वञ्च । इति राजनिर्घण्टः ॥

**राजबीजी,** [न्] त्रि, ( राजा बीजी कारणं यस्य । ) राजवंश्यः । इत्यमरः । २ । ७ । २ ॥

**राजभद्रिका,** स्त्री, हापुत्त्रीपक्षी । यथा,—
“गोभक्षीरः पक्वकीरो हापुत्त्री राजभद्रिका ॥”
इति जटाधरः ॥

**राजभद्रकः,** पुं, कुष्ठम् । निम्बः । इति राजनिर्घण्टः ॥ पारिभद्रकः । इति शब्दपाठः ॥

**राजभूयं,** क्ली, ( राज्ञो भावः । राजन् + भू + क्यप् । ) राजत्वम् । यथा,—
“स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ।
देवभूयादिकं तद्वत् ।” इत्यमरकोषदर्शनात् ॥

**राजभोग्यं,** क्ली, ( राज्ञा भोक्तुं योग्यम् । भुज + ण्यत् । कुत्वञ्च । ) जातीकोषम् । प्रियालवृक्षे, पुं । इति शब्दचन्द्रिका ॥

**राजमण्डूकः,** पुं, ( मण्डूकानां राजा । राजदन्तादित्वात् परनिपातः । ) हरण्डूकः । बड़ बेङ इति भाषा । तत्पर्य्यायः । महामण्डूकः २ पीताङ्गः ३ पीतमण्डूकः ४ वर्षाघोषः ५ महारवः ६ । इति राजनिर्घण्टः ॥

**राजमल्लः,** पु, राज्ञो मल्लः । राजार माल इति भाषा । तत्पर्य्यायः । उल्लिक्तः २ उल्लतः ३ । इति त्रिकाण्डशेषः ॥

**राजमार्गः,** पु, ( राज्ञो मार्गः । ) राजपथः । तद्विवरणं यथा,—
“राजमार्गं सौधयुक्तं यः करोति पतिव्रते ।
वर्षाणामयुतं सोऽपि शक्रलोके महीयते ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २४ अध्यायः ॥
अपि च ।
“त्रिंशद्धनूंषि विस्तीर्णो देवमार्गस्तु तैः कृतः ।
विंशं धनुर्ग्राममार्गः सीमामार्गो दशैव तु ॥
धनूंषि दश विस्तीर्णः श्रीमान् राजपथः कृतः ।
नृवाजिरथनागानामसम्बाधः सुसञ्चरः ॥
धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्म्मिताः ।
त्रिकरोपरथ्यास्तु द्विकरास्तूपरथ्यकाः ॥
जङ्घापथश्चतुष्पादस्त्रिपादश्च गृहान्तरम् ।
वृतीपादस्त्वर्द्धपादः प्राग्वंशः पादकः स्मृतः ।
अवकरः परीवारः पादमात्रः समन्ततः ॥”
इति देवीपुराणे गोपुरद्वारलक्षणं नामाध्यायः ॥
( अत्रामेध्योत्सर्गे दण्डविधानं कर्त्तव्यम् । यथा, मनुः । ९ । २८२ ।
“समुत्सृजेत् राजमार्गे यस्त्वमेध्यमनापदि ।
स द्वौ कार्षापणौ दद्यादमेध्याच्चाशु शोधयेत् ॥”
नीतिः । यथा, हरिवंशे भविष्यपर्व्वणि । ५४ । २ ।

"ध्यानविज्ञानसम्पन्नौ राजमार्गविशारदौ ।
युयुधाते महारङ्गे राज्यहेतोर्दुरात्मना ॥" )

राजमाषः, पुं, ( माषाणां राजा श्रेष्ठत्वात् । राजदन्तादित्वात् परनिपातः । ) वर्व्वटः । बरबटी कलाइ इति भाषा । तत्पर्य्यायः । नीलमाषः २ नृपमाषः ३ नृपोचितः ४ । अस्य गुणाः । कफपित्तहरत्वम् । रुच्यत्वम् । वातकारित्वम् । बलदायकत्वञ्च । इति राजनिर्घण्टः ॥ सारकत्वम् । शुक्राम्लपित्तहरत्वम् । सुस्वादुत्वम् । रूक्षत्वम् । कषायत्वम् । विशदत्वम् । लघुत्वञ्च । इति राजवल्लभः ॥ अन्यच्च ।
"राजमाषो महामाषश्चपलश्च बलः स्मृतः ।
राजमाषो गुरुः स्वादुस्तुवरस्तर्पणो रसः ।
रूक्षो वातकरो रुच्यः स्तन्यो भूरिमलप्रदः ॥"
इति भावप्रकाशः ॥ * ॥
कालविशेषे अस्याभक्ष्यत्वं यथा । नारदीये ।
"निष्पावान् राजमाषांश्च शृणु देवि जनार्दने ।
यो भक्षयति राजेन्द्र चाण्डालादधिको हि सः ॥
कार्त्तिके तु विशेषेण राजमाषांश्च वर्ज्जयेत् ।
निष्पावान् मुनिशार्दूल यावदाभूतसम्प्लवम् ॥"
इति तिथ्यादितत्त्वम् ॥

राजशुकः, पुं, ( शुकानां राजा । राजदन्तादित्वात् परनिपातः । ) सुकुवकः । इति हेमचन्द्रः । ४ । ४१० ॥

राजयक्ष्मा, [ न् ] पुं, ( राज्ञश्चन्द्रस्य क्षयकारको यक्ष्मा । राजा चासौ यक्ष्मा चेति वा । ) क्षयरोगः । इति हेमचन्द्रः ॥ अस्य पर्य्याय-निदानौषधादयो यक्ष्मशब्दे द्रष्टव्याः ॥ * ॥ ( असौ हि सर्व्वरोगाणामाकरः । यथा, माघे । २ । ९६ ।
"नावैति मदसावैको जेतव्यश्चेदिराडिति ।
राजयक्ष्मेव रोगाणां समूहः स महीभृताम् ॥"
"तथाह वाग्भटः ।
अनेकरोगानुगतो बहुरोगपुरःसरः ।
राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः ॥
नक्षत्राणां द्विजानाञ्च राज्ञोऽभूद् यदयं पुरा ।
यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥"
इति तट्टीकायां मल्लिनाथः ॥ )
महापातकचिह्नमप्ययम् । यथा, विष्णुः ।
अथ नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मानुष्ये लक्षणानि भवन्ति । कुष्ठ्यतिपातकी ब्रह्महा यक्ष्मी सुरापः श्यावदन्तकः सुवर्णहारी कुनखी गुरुतल्पगो दुश्चर्म्मा । इत्यादि कूर्म्मपुराणम् ॥
"क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।
यथेष्टाचरणस्याहुर्मरणान्तमशौचकम् ॥"
महारोगिणः पापरोगात्मकासाध्यतमरोगवतः । ते च उन्मादत्वग्दोषो राजयक्ष्मा श्वासो मधुमेहो भगन्दरः उदरोऽश्मरी इत्यष्टौ पापरोगा नारदोक्ताः । इति शुद्धितत्त्वम् ॥ * ॥
अस्योत्पत्तिरूपस्थानमपि यथा,—
"अथ कोपसमायुक्तो दक्षस्य सुमहात्मनः ।
निश्चक्राम तदा यक्ष्मा नासिकाग्राद्विभीषणः ॥
दंष्ट्राकरालवदनः कृष्णाङ्गारसमप्रभः ।
अतिदीर्घः स्वल्पकेशः कृशो धमनिसन्ततः ॥
अधोमुखो दण्डहस्तः कासं विभ्रच्च सन्ततम् ।
कुर्व्वाणो निम्ननेत्रश्च योषासम्भोगलोलुपः ॥
स चोवाच तदा दक्षं कुत्र यास्याम्यहं मुने ।
किं वा चाहं करिष्यामि तन्मे वद महामते ॥
ततो दक्षस्तु तं प्राह सोमं यातु द्रुतं भवान् ।
सोममत्तु भवानित्थं सोमे त्वं तिष्ठ सेच्छया ॥
मार्कण्डेय उवाच ।
इति तस्य वचः श्रुत्वा दक्षस्याथ महात्मनः ।
शनैः शनैस्ततः सोममाससाद स च द्रुतम् ॥
आसाद्य स तदा सोमं वल्मीकं पन्नगो यथा ।
प्रविवेशेन्दुहृदये छिद्रं प्राप्य महागदः ॥
तस्मिन् प्रविष्टे हृदये राजयक्ष्मणि ।
शुशोच चन्द्रस्तत्रैव तिमिरां प्राप्तवांस्ततः ॥
उत्पत्य प्रथमं यस्मात्सोमे राजन्यसौ गदः ।
राजयक्ष्मेति लोकेऽस्मिंस्तस्य ख्यातिरभूद्
द्विजाः ॥
ततस्तेनाभिभूतश्च यक्ष्मणा रोहिणीपतिः ।
क्षयं जगामानुदिनं ग्रीष्मे शुष्का नदी यथा ॥
तथा चन्द्रे क्षीयमाणे सर्व्वौषध्यः क्षयं गताः ।
क्षयं जातास्वोषधीषु न यज्ञः संप्रवर्त्तते ॥
यज्ञाभावात्तु देवानामन्नं सर्व्वं क्षयं गतम् ।
पर्य्यन्यश्च ततो नष्टास्ततो वृष्टिर्न चाभवत् ॥
हव्याभावे तु लोकानामाहारो चाल्पताङ्गतः ॥
दुर्भिक्षव्यसनोपेते सर्व्वलोके द्विजोत्तमाः ।
दानधर्म्मादिकं किञ्चिन्न लोकेषु प्रवर्त्तते ॥
सत्त्वहीनाः प्रजाः सर्व्वा लाभिनोपहतेन्द्रियाः ।
पापमेव तदा चक्रुर्धर्म्मत्रयत्रयस्तथा ॥
एतद्दृष्ट्वा तदा भावं दिक्पालाः सपुरन्दराः ।
जग्मुः क्षोभं परं देवाः सागराश्च ग्रहास्तथा ॥
ततो दृष्ट्वा जगत् सर्व्वं व्याकुलं दस्युपीडितम् ।
ब्रह्माणमगमन्देवाः सर्व्वे शक्रपुरोगमाः ॥
उपसङ्गम्य लोकेशं स्रष्टारं जगतां पतिम् ।
प्रणम्याथ यथायोग्यमुपविष्टास्ततः सुराः ॥
तान् म्लानवदनान् वीक्ष्य ब्रह्मा लोकपितामहः ।
अभिभूतान् परेणेव कृतस्वविषयानिव ।
पप्रच्छ सुरश्रेष्ठान् गुरुमिन्द्रं हुताशनम् ॥
ब्रह्मोवाच ।
स्वागतं भोः सुरगणाः किमर्थं यूयमागताः ।
दुःखोपहतदेहांश्च युष्मान् म्लानांश्च लक्षये ॥
निराधारान् निरातङ्कान् सुरान् सर्व्वांस्तु
कामगान् ।
तथा स्वविषये न्यस्तान् कथं पश्यामि दुःखिनान् ॥
यद्भूयो दुःखबीजं युष्मान् वा यत्तु बाधते ।
तत् कथ्यतामशेषेण सिद्धिं चाप्यवधार्य्यताम् ॥
मार्कण्डेय उवाच ।
ततो वृहस्पतिर्जीवः कृष्णवर्त्मा च लोकहृत् ।
उभावाकाशमूर्त्ती तस्मै सुराणां दुःखकारणम् ॥
इदमूचुः सर्व्वं जगत्कर्त्ता येन वयमागताः ।
यदस्माकं दुःखबीजं यतो म्लानश्रियो वयम् ।
न कश्चित् संप्रवर्त्तन्ते यज्ञा लोकपितामह ॥
देवा ऊचुः ।
निराधारा निरातङ्काः प्रजाः सर्व्वाः क्षयं
गताः ।
न च दानादिधर्म्मांश्च न तपांसि चितौ क्वचित् ॥
नैव वर्षति पर्ज्जन्यः क्षीणतोयाभवत् क्षितिः ।
क्षीणाः सर्व्वास्तथौषध्यः त्रस्ता लोकाः समाकुलाः ॥
दस्युभिः पीडिता विप्रा वेदवादान् कुर्व्वते ।
अन्नवैकल्यमासाद्य म्रियन्ते बहवः प्रजाः ॥
क्षीणेषु यज्ञभागेषु भोगहीनास्तथा वयम् ।
दुर्ब्बलाश्च श्रिया हीना नैव शान्तिं लभामहे ॥
रोहिण्या मन्दिरे चन्द्रो वक्रगत्या चिरं स्थितः ।
हयराशौ स च क्षीणो ज्योत्स्नाहीनश्च वर्त्तते ॥
सदैवान्विष्यते हंसैश्चन्द्रो नैषां पुरःसरः ।
कदाचिदपि देवानां समाजे वा सभाद्विषि ॥
कदाचिद्रोहिणीं त्यक्त्वा नैव क्व च न गच्छति ।
यद्यन्यः कोऽपि न भवेत्तदा चन्द्रो बहिर्भवेत् ।
दृश्यते स कलाहीनः कलामात्रावशेषितः ॥
इति सर्व्वत्र लोकेषु दृष्टः कर्म्मविपर्य्ययः ।
तं दृष्ट्वा कान्दिशीकास्तु वयं त्वां शरणं गताः ॥
पातालादुत्थायोत्थाय कालकञ्जादयोऽसुराः ।
नाशान् लोकेषु बाधन्ते तावत् पाहि साध्य-
सात् ॥
स्वयं प्रवर्त्तते कस्माज्जगतो वा व्यतिक्रमः ।
न जानीमस्तु तत् सर्व्वं विश्वं चापि कारणम् ॥
मार्कण्डेय उवाच ।
एतत् सुराणां वचनं दिव्यदर्शी पितामहः ।
श्रुत्वा क्षणमभिध्याय निजगाद सुरोत्तमान् ॥
ब्रह्मोवाच ।
शृण्वन्तु देवताः सर्व्वा यदयं लोकविप्लवः ।
प्रवर्त्ततेऽधुना येन शान्तिस्तस्य भविष्यति ॥
सोमो दाक्षायणीः कन्याः सप्तविंशतिसंख्यया ।
अश्विन्याद्या वरवधूर्भार्य्यार्थं परिणीतवान् ॥
परिणीय स ताः सर्व्वा रोहिण्यां सततं विधुः ।
प्रवर्त्ततानुरागेण न सर्व्वासु प्रवर्त्तते ॥
अश्विन्याद्यास्ततः सर्व्वा दौर्भाग्यज्वरपीडिताः ।
षड्विंशतिर्वरारोहाः पितरं प्रस्थिताः स्वकम् ॥
प्रवर्त्तते निशानाथो रोहिण्यां रागतो यथा ।
तथा न तासु भजते सद्भाव व्यवेदयन् ॥
ततो दक्षो महाबुद्धिः सान्त्वा संस्कृत्य विट्-
पतिम् ।
बहुशस्तमभाषत्स पुत्र्यर्थेऽनुरुरोध तम् ॥
अनुरुद्धो यथाकामं दक्षेण सुमहात्मना ।
समं प्रवर्त्तितं तासु समयं कृतवान् विभुः ॥
समयं लङ्घयते भावं तासु कर्त्तुं हिमांशुना ।
स्वं जगाम ततः स्थानं दक्षोऽपि सुमनस्तमः ॥
गते दक्षे मुनिश्रेष्ठे वैषम्यं तासु चन्द्रमाः ।
अकरोद् भावं ताः प्राप्य कुपिताः पितरं
गताः ॥
ततो दक्षः पुनश्चन्द्रमनुरुध्य सुताकारे ।

समदृष्टिं प्रतिश्राव्य वचनञ्चेदमब्रवीत् ॥
न समं वर्त्तसे चन्द्र सर्व्वास्वासु भवान् यदि ।
तदा शप्स्ये त्वहं तुभ्यं तस्मात् कुरु समञ्जसम् ॥
ततो गते पुनर्दक्षे न समं वर्त्तते यदा ।
तासु चन्द्रस्तदा दक्षं पुनर्गत्वाब्रुवन् तथा ॥
न ते वचः स कुरुते नैवास्मासु प्रवर्त्तते ।
वयं तपः करिष्यामः स्थास्यामश्च त्वदन्तिके ॥
तासामिति वचः श्रुत्वा कुपितस्य तदा मुनेः ।
श्वासाय चन्द्रस्य मनः शापायोत्सुकतां गतम् ॥
शापायोद्युक्तमनसः कुपितस्य महात्मनः ।
क्षयो नाम महारोगो नासिकायाद्विनिर्गतः ॥
प्रेषितः स च चन्द्राय दक्षेण मुनिना ततः ।
प्रविवेशास्य देहे च चलितस्तेन चन्द्रमाः ॥
क्षीणे चन्द्रे क्षयं याता ज्योत्स्ना तस्य महात्मनः ।
क्षीणासु सर्व्वज्योत्स्नासु सर्व्वौषध्यः क्षयं गताः ॥
ओषध्यभावाल्लोकेऽस्मिन् यज्ञाः संप्रवर्त्तते ।
यज्ञाभावादनाद्दुःखिताः सर्व्वप्रजाश्च याः ॥
यज्ञभागोपभोगेन हीनानां भवतां तथा ।
दुर्ब्बलत्वं समुत्पन्नं विकारश्च स्वगोचरे ॥
इति वः कथितं सर्व्वं यथाभूल्लोकविप्लवः ।
यत्नोपायेन तच्छान्तिस्तत्प्रयत्नं सुरोत्तमाः ॥"
इति कालिकापुराणे २० अध्यायः ॥ * ॥

ब्रह्मोवाच ।
"गच्छन्तु भोः सुरगणा दक्षस्य सदनं प्रति ।
तं प्रसाद्य चन्द्रार्थे स च पूर्णो भवेद्यथा ॥
पूर्णे चन्द्रे जगत् सर्व्वं प्रशान्तिस्थं भविष्यति ।
युष्माकञ्च भवेत् शान्तिरोषधीनाञ्च सम्भवः ॥

मार्कण्डेय उवाच ।
इति ब्रह्मवचः श्रुत्वा देवाः शक्रपुरोगमाः ।
प्रययुर्हृष्टमनसस्तदा दक्षनिवेशनम् ॥
यथान्यायमुपस्थाय सर्व्वे मुनिवरं सुराः ।
प्रोचुः प्रजापतिं दक्षं प्रणम्य श्लक्ष्णया गिरा ॥

देवा ऊचुः ।
प्रसीद सीदतां ब्रह्मन्नस्माकं बहुदुःखिनाम् ।
उद्धरस्व महाबुद्धे त्राहि नः शोकसागरात् ॥
यद्रूपं ब्रह्मसंज्ञन्तु स्थितिस्त्वपरमात्मनः ।
तदंशस्त्वं परं ज्योतिर्बिम्बरूपं नतोऽस्मि ते ॥
दक्षत्वात् सर्व्वजगतां प्रजापालनकारणात् ।
दक्षप्रजापतिस्त्वेति योगेशस्त्वन्नुमो वयम् ॥
दक्षाय सर्व्वजगतां दक्षाय कुशलात्मनाम् ।
दक्षायात्महितायास्तु नमस्तुभ्यं महात्मने ॥
सततं चिन्त्यमानस्य योगिभिर्नियतात्मभिः ।
सारस्य सारभूतस्त्वं दक्षाय परमात्मने ॥
योगविद्भिरनाधृष्यः पारगाणां परायणः ।
आद्यन्तमुक्तः सततं तस्मै नित्यं नमो नमः ॥
इति तेषां वचः श्रुत्वा दक्षो यज्ञभुजां तदा ।
प्राह प्रसन्नवदनः शक्रमाभाष्य सुव्रतः ॥

दक्ष उवाच ।
कुतः शक्र महाभाग भवतां दुःखमागतम् ।
दुःखहेतुं वद विभो श्रोतुमिच्छाम्यहन्तु तम् ॥
ममास्ति यदि कर्त्तव्यं भवतां दुःखहानये ।
तदहं यदि शक्नोमि करिष्यामि हितं परम् ॥

मार्कण्डेय उवाच ।
तत श्रुत्वा वचनं तस्य सहस्राक्षो महर्षिणः ।
जगाद गीष्पतिः शक्रो वीतिहोत्रोऽथ तं मुनिम् ॥
क्षयं यातो निशानाथस्तस्मिन् क्षीणे क्षयं गताः ।
सर्व्वौषध्यो द्विजश्रेष्ठ तद्धानिर्यज्ञहानितः ॥
यज्ञे विनष्टे सकलाः प्रजाः क्षुद्भयकातराः ।
हव्याभावाच्च दुःखं प्राप्य वयञ्च काश्यप ॥
क्षयोऽयं रात्रिनाथस्य यत्ते कोपात् प्रवर्त्तते ।
स सर्व्वजगतो नाशनभवार्थमुपस्थितः ॥
नाधुना त्रिभुवने यत्र सुखमस्तु किञ्चन ।
विप्लवं यान्ति विप्रेन्द्र सागराः स्थावराश्चराः ॥
न यज्ञाः संप्रवर्त्तन्ते न तपस्यन्ति तापसाः ।
आहारदुःखान्निर्लोकाः प्रजाः क्षीणा भयातुराः ॥
एवं प्रवृत्ते विप्रेन्द्र विप्लवेऽस्मात् रसातलात् ।
दैत्या न यावदुत्थाय बाधन्ते तावदुद्धर ॥
प्रसीद दक्ष सततं तं पूरय तपोबलात् ।
पूर्णे चन्द्रे जगत् सर्व्वं प्रशान्तिस्थं भविष्यति ॥

मार्कण्डेय उवाच ।
इति तेषां वचः श्रुत्वा प्रजापतिसुतस्तदा ।
उवाच तान् सुरगणान् हृदयाच्छल्यमुद्धरन् ॥

दक्ष उवाच ।
यन्मे वचो निशानाथे प्रवृत्तं शापकारणम् ।
न केनापि निदानेन मिथ्या कर्त्तुं तदुत्सहे ॥
किन्तु मद्वचनं यस्मान्नैकान्तेन मृषा भवेत् ।
चन्द्रोऽपि वर्द्धते यस्मात् तमुपायमपेक्षते ॥
तत्राप्ययमुपायोऽस्ति मासार्द्धं यातु चन्द्रमाः ।
क्षयं वृद्धिञ्च मासार्द्धं स्वयं भार्य्यासु वर्द्धताम् ॥
तस्य तद्वचनं श्रुत्वा तं प्रसाद्य प्रजापतिम् ।
सर्व्वे सुरगणास्तत्र गता यत्रास्ति चन्द्रमाः ॥
एवमुक्ते तु वचने दक्षेण मुनिना द्विजाः ।
अथ चन्द्रं समादाय भार्य्याभिः सहितं तदा ।
जग्मुस्ते ब्रह्मसदनं मुदिताः सुरसत्तमाः ॥
तत्र गत्वा महाभागा यथा दक्षेण भाषितम् ।
तत्सर्व्वं कथयामासुर्ब्रह्मणे परमात्मने ।
ब्रह्मा दक्षवचः श्रुत्वा देवानां सदनं तदा ।
चन्द्रभागं महाशैलं जगाम सहितः सुरैः ॥
तत्र गत्वा सुरश्रेष्ठः प्रजानां हितकाम्यया ।
स्नापयामास शुभ्रांशुं वृहल्लोहितपुष्करे ॥
भूतभव्यभवज्ज्ञानः पूर्व्वमेव पितामहः ।
एतदर्थं चकारात्र सरः पूर्णं जगत्प्रभुः ॥
तत्र स्नातस्य लोकस्य नीरोगत्वं प्रजायते ।
चिरायुष्यत्वञ्च सततं वृहल्लोहितसंस्पर्शे ॥
तत्र स्नातस्य चन्द्रस्य शरीरान् सत्वरं गदः ।
राजयक्ष्मा निःससार पूर्व्वरूपो यथोदितः ॥
निःसृत्य राजयक्ष्मा तु ब्रह्माणञ्च जगत्पतिम् ।
प्रणम्याहं किं करिष्ये क्व गच्छामीत्युवाच ह ॥
स्थानं मदीयं लोकेश ! कल्पं मम सदातनम् ।
निर्द्देशयानुरूपं मे स्रष्टा त्वं जगतां यतः ॥

मार्कण्डेय उवाच ।
ततो ब्रह्मापि तं पुष्टं निरीक्ष्येन्दुशरीरगैः ।
अष्टतैस्तैर्नालिसुक्तैः क्षीणञ्चापि निशापतिम् ॥
दोर्भिः स्वयं तं गृहीत्वा गिरौ निष्पिष्य वै मुहुः ।
अमृतं गालयामास शरीराद्राजयक्ष्मणः ॥
अमृतानि च गाल्यासु तदपूतं तदा जले ।
क्षीरोदस्य च चिक्षेप मध्ये रक्षन् लोककृत् ॥
तस्मादप्यमृतादिन्दोः कलाः क्षीणाः पुराश्च याः ।
तासां जग्राह लवणपूर्णां क्षीरोदसागरात् ॥
कलानामालयस्यास्य संसर्गाद्राजयक्ष्मणः ।
क्षीणाः कलाः पञ्चदश याः पूर्व्वममृतात्मिकाः ।
ता राजयक्ष्मगर्भस्थाश्चूर्णीभूतास्तु पीडया ।
तेजोज्योत्स्नाकलाभिस्तु निवद्धं यत् कलामतेः ।
शरीरं तच्चिधाभूतं गर्भस्थं राजयक्ष्मणः ॥
ज्योतिश्चूर्णमभूत् ज्योत्स्ना लीना रात्रादियक्ष्मणि ।
द्रवीभूताः सुधाः सर्व्वा गर्भे रोगस्य च स्थिताः ॥
यदा निर्गालयामास सुधां ब्रह्मा गदान्तरात् ।
तदा ज्योत्स्ना सुधा ज्योतिः सर्व्वं तस्माद्बहिर्गतम् ॥
क्षीरोदसागरे क्षिप्तं तत्सर्व्वं विधिना तदा ।
देवान् गिरौ परित्यज्य स्वयं गत्वा द्रुतं ततः ॥
ततोऽमृतानि प्रत्याप्य कलाचूर्णानि वारिधेः ।
ज्योत्स्नाञ्चाप्याजगामाशु गृहीत्वा तत्त्रयं गिरिम् ॥
क्षीरोदाद्गिरिमागम्य चन्द्रभागं तदा विधिः ।
देवमध्ये कलाचूर्णं सुधां ज्योत्स्नां न्यवीविशत् ॥
संस्थाप्य तत्त्रयं ब्रह्मा देवानां मध्यतस्ततः ।
जगाद राजयक्ष्माणं तत्स्थानानि निर्द्देशयन् ॥

ब्रह्मोवाच ।
सर्व्वदा यो दिवा रात्रौ सन्ध्यायां वनितारतः ।
सेवते सुरतं तस्मिन् राजयक्ष्मन् वसिष्यसि ॥
प्रतिश्यायश्वासकामयुक्तो यो मैथुनं चरेत् ।
स ते प्रवेश्यः सततं ब्रह्मघ्नश्च तथाविधः ॥
क्षयाख्या भूतपूर्व्वा या भवतः सदृशी गुणैः ।
सा तेऽस्तु भार्य्या सततं भवन्तमनुयास्यति ॥
क्षीणत्वं भवतः कृत्यं सततं विषये कुरु ।
द्रुतं गच्छ यथाकामं चन्द्रे त्वं विमुखो भव ॥

मार्कण्डेय उवाच ।
एवं विसृष्टो विधिना राजयक्ष्मा महागदः ।
पश्यतां सर्व्वदेवानामन्तर्द्धानं जगाम ह ॥
अन्तर्हिते महारोगे ब्रह्मा लोकपितामहः ।
चन्द्रं समर्पयामास कलापञ्चदशोधितम् ॥
तेन क्षीरोदधौतेन सुधापूर्णेन चात्मभूः ।
सज्योत्स्नैस्तु कलाचूर्णैः पूर्व्ववच्चाकरोद्विभुम् ॥
स शीतांशुः कलापूर्णः पूर्व्ववद्विबभौ तदा ।
चन्द्रस्तदा सर्व्वदेवाः सुमुदुस्तस्य दर्शनात् ॥
अथ चन्द्रस्तदा पूर्णः प्रणिपत्य पितामहम् ।
उवाचेदं सुरसदौ मध्यगो नातिहर्षितः ॥

सोम उवाच ।
न स्थानं पूर्ववद्ब्रह्मन् शरीरे मम वर्त्तते ।
न वीर्य्यं वा तथोत्साहो विशीर्णस्थक्षयस्वयः ॥
सोऽहं पूर्ववदेतो विधातुं सुखरामयम् ।
येनाहानि च प्रतिदिनं वर्त्तयं तेन लोककृत् ॥
ब्रह्मोवाच ।
यक्ष्मणा यक्ष्मणा सोम यद्भूद्क्षयस्वयः ।
पूर्व्वं विशीर्णं भवतस्तत्पूर्णमभवत्र हि ॥
अधुना भवतो देहपूर्णं निःसारितं मया ।
शरीरात् वान्तज्योत्स्ना अक्षता राज-
यक्ष्मकः ॥
तेषां प्रत्यावनविधौ जवश्री यत् स्थितं जले ।
ज्योत्स्नायाश्च सुधायाश्च तेन क्षीणो भवान्
यतः ।
ततोऽक्षयस्वयो राजंस्तव वीर्य्यस्ति साम्प्रतम् ॥
अथोपायं विधास्यामि यथा नाशं समेष्यति ।
प्राजापत्यः पुरोडाशो हवनीयः पुरोऽध्वरे ॥
ऐन्द्रस्ततोऽनु चाग्नेयः प्रदेयः सर्व्वतः क्रतौ ।
ततोऽनु भवतो भागः पुरोडाशो मया कृतः ॥
तेन भागेन सुक्तेन नित्यं यज्ञहुतेन हि ।
पूर्व्ववत् त्वमुत्साहः स्थानं वीर्य्यं भविष्यति ॥
यक्ष्मान्तकक्षालोये क्षीरोदस्य स्थिताश्च ये ।
शरीरपूर्णं यावन्ति ज्योत्स्नायाश्चापि ये कणाः ।
वृद्धिं यास्यन्ति सततं क्षीरसागरमध्यगाः ॥
स्वारोचिषेऽन्तरे प्राप्ते द्वितीये शङ्करांशजः ।
दुर्व्वासा भविता विप्रः प्रचण्डचण्डभास्करः ॥
स महेन्द्रस्याविनयात् शापं दत्त्वा सुदारुणम् ।
करिष्यति त्रिभुवनं निःश्रीकं ससुरासुरम् ॥
श्रिया हीने ततो लोके भविता लोकविप्लवः ।
यथा तव क्षयात् सोम प्रवृत्तो लोकविप्लवः ॥
तस्मात्तुपशमायैव तृतीये तु कृते युगे ।
भविष्यति स्थास्यति च यावद्युगचतुष्टयम् ॥
ततश्चतुर्थे सम्प्राप्ते सह देवैः कृते युगे ।
क्षीरोदं निर्म्मथिष्यामः शम्भुर्विष्णुरहं तथा ॥
मन्थानं मन्दरं कृत्वा सर्पराजं तथांशुकम् ॥
यज्ञभागेषु क्षीणेषु देवानार्थं वयं ततः ।
मथिष्यामः समं देवैः क्षीरोदं सह दानवैः ।
त्वच्छरीरान्तमिदं यत् स्थितं क्षीरसागरे ॥
तन्मन्थ मन्थिष्यामो राशीभूतं तथाक्षयम् ।
सर्व्वौषध्यन्तरे कृत्वा त्वच्छरीरं तदा वयम् ।
क्षेप्स्यामः सागरजले शरीरार्थं विधो तव ॥
निर्म्मथ्य सागरं पश्चात् समुत्थाप्य यदान्तकम् ।
तदा तव वपुस्तस्मिन्पूर्णं सम्भविष्यति ॥
ओजो वीर्य्यामृतं कान्तमक्षयञ्च सुधात्मकम् ।
दृढाङ्गसन्धिकं चारु भविष्यति वपुस्तव ॥
मार्कण्डेय उवाच ।
सुधांशुमेवमाभाष्य ब्रह्मा लोकपितामहः ।
विधोः क्षयाय मासार्द्धं वृद्धये यत्नवानभूत् ॥
यथा दर्शेन सहितं मासार्द्धं यातु चन्द्रमाः ।
क्षयं वृद्धिञ्च मासार्द्धं यत्नं तथाकरोद्विधिः ॥
यतः षोडशधा चन्द्रं सुरभ्यो विभक्तवान् ।
विभज्य च सुरान् सर्व्वान् समुत्पादितमद्भुतम् ॥

कलाः षोडश चन्द्रस्य तथैका शम्भुमूर्द्धनि ।
तिष्ठत्वद्यावधि परा: क्षयं यातु क्षयं विना ॥
क्षयेण यदि रोगेण मासार्द्धं दक्षवाक्यतः ।
क्षयाय पीयते चन्द्रो नोपशान्तिः सदा भवेत् ॥
किन्त्वस्य या कला शम्भौ ज्योत्स्ना गच्छन्तु तां
प्रति ।
चतुर्द्दशकलासंस्थाः प्रतिमासं सुरोत्तमाः ॥
चतुर्द्दशकलासंस्थास्यन्तानि पिबन्तु वै ।
प्रतिपत्तिथिमारभ्य भवन्तश्चाचतुर्द्दशीम् ॥
तेजोभागाः सूर्य्यबिम्बं चतुर्द्दशतिथौ क्रमात् ।
प्रविशन्तु क्षयं त्वेवं कृष्णपक्षे विधोर्भवेत् ॥
यातु शेषा कलादर्शे हरिनुपके पवायिता ।
तिष्ठतु प्रथमे भागे तिथौ तस्यां निशापतेः ॥
द्वितीये दर्शभागे तु रोहिण्या यातु मन्दिरम् ।
तृतीये तु सरस्वत्यां स्नात्वा सन्तुष्यतो विधुः ॥
चतुर्थे वत्सपूर्णास्तिथिभागे विभावसोः ।
मण्डलं यातु चन्द्रोऽयं सविस्मरयघोटकः ॥
यावत्कालेन हि कला प्रथमा क्षयमाप्नुयात् ।
एवमेवं कृष्णपक्षे तावत्स्या प्रतिपत् भवेत् ॥
द्वितीयादौ कृष्णपक्षे वृद्धिह्रासस्तथाविधः ।
तिथीनां वृद्धिहेतुश्च शुक्ले कृष्णे तथा भवेत् ॥
ततः पुनः शुक्लपक्षे यावत् पूर्णा कलोदिता ।
वृद्धिमेति भवेत्तावत् प्रतिपत्तिथिराहितः ॥
ततो द्वितीयभागस्य या ज्योत्स्ना हरमूर्द्धनि ।
स्थितायां वै कलायान्तु गता सा पुनरेष्यति ॥
सुधाभिस्तु भवेत् पेयमन्तं यद्दिने दिने ।
तद्द्वितीयादितिथिभिः पूर्णाभिः सदैव हि ॥
क्षयमुत्पत्स्यते चन्द्रो ज्योत्स्नायोगात् सुरो-
त्तमाः ।
यथा दिने दिने भागाः क्षयं यान्ति तथा
विधोः ॥
वृद्धिं गच्छन्त्वनुदिनं शुक्लपक्षेऽन्वहं सुराः ।
तेजोभागः सूर्य्यबिम्बात् पुनरेव समेष्यति ॥
प्रयास्यति कृष्णपक्षे यथाभागक्रमन्तथा ।
ज्योत्स्नाहरशिरश्चन्द्रात् प्रत्यहं पुनरेष्यति ॥
तेजोभागः सूर्य्यबिम्बादन्तनं वस्यते स्वयम् ।
एवं वृद्धिः शुक्लपक्षे सुधांशोः संभविष्यति ॥
पक्षयोः शुक्लकृष्णत्वं चन्द्रवृद्धिक्षयाद्भवेत् ।
यावत्कालेन यो भागं क्षयं वृद्धिञ्च यास्यति ॥
तावत्कालमभिव्याप्य तिथिः स्थास्यति सा पुनः ॥
चिरेण वृद्धिर्यदि वा क्षयो वा
द्रुतेन वृद्धिर्यदि वा क्षयो वा ।
द्रुतान्तिथीनां तु सदा क्षयः स्या-
च्चिरात्तु वृद्धिस्तिथिषु प्रवेशे ॥
क्षयं कायश्च चन्द्रेण विना न संभविष्यति ।
तस्मात् तयोः प्रवृत्त्यर्थं चन्द्रं रक्षन्तु देवताः ॥
आह्वादनीयः शुभांशुः कलाशेषोऽशुमाश्रितः ।
अमावास्यापराह्णे तु पितृभ्यो रोहिणीपदे ॥
तस्यैवाह्लादनात् क्षयं वृद्धिं यास्यति चान्वहम् ।
तेन कव्येन पितरस्तृप्तिं यास्यन्ति वै पराम् ॥
श्रीमार्कण्डेय उवाच ।
ततः सुरगणाः सर्व्वे यथोक्तं विधिना तथा ।

चक्रुर्लोकहितार्थाय चन्द्रस्य क्षयवृद्धये ॥
महादेवोऽपि चन्द्रार्द्धं स्वरूपं परमात्मनः ।
जग्राह देवैर्विधिना शिरसाभ्युदितो भृशम् ॥
यत्तेजः परमं नित्यमजमव्ययमक्षयम् ।
तत्स्वरूपाश्चन्द्रकलाः शापतस्तु क्षयं गताः ॥
प्रविशन्ति यदा ज्योतिरानन्दमजरं परम् ।
योगिनान्तु तदा तेषां चित्तं तल्लीनमेष्यति ॥
महादेवशिरःसंस्थे लीने चित्ते सुधानिधौ ।
चन्द्रद्वारा भवेन्मुक्तिरित्येवं वैदिकी श्रुतिः ॥
एतज्ज्ञात्वा महादेवः क्षयवृद्धया विना क्षतम् ।
हिताय सर्व्वलोकानां जग्राह शिरसा विधुम् ॥
चन्द्रज्योत्स्नासमायोगादोषध्यो यान्ति वृद्धये ।
सर्व्वौषधीषु सृष्टासु प्रवर्त्तन्ते ततोऽध्वराः ॥
अध्वरेषु प्रवृत्तेषु स्वान् स्वान् भागांस्तु देवताः ।
परिगृह्णन्ति पितरस्तथा कव्यानि भूरि च ॥
अन्तं ब्रह्मणा सृष्टं यद्देवेभ्यः पुरातनम् ।
तेन तृप्यन्ति होमा ये हव्यभागेन देवताः ॥
यज्ञेनाप्यायिते तत्र ज्योत्स्नाभिर्वृद्धिमेति वै ।
यज्ञज्योत्स्ना विना भूतं तत्र स्यात् क्षीण-
मन्यथा ॥
अतोऽन्तमस्य यज्ञस्य चन्द्रमाः कारणं स्वयम् ।
अतोऽस्य दक्षशापात् रक्षार्थे तत्रिकोर्त्तितम् ॥
अद्यापि कृष्णपक्षेऽपि सुधा संपीयते सुरैः ।
तेज. सूर्य्यं याति शम्भोश्चन्द्रार्द्धं ज्योत्स्निका तथा ।
पुनश्च शुक्लपक्षे तु शेषोदेति कला ततः ।
ज्योत्स्नाद्वितीयो भागस्तु तेजोभागो द्वितीयकः ॥
अन्वेतुप्रशिरश्चन्द्रात् सूर्य्यबिम्बाद्यथाक्रमम् ।
कलाः षोडश चन्द्रस्य तथैका शम्भुशेखरे ॥
सितासिताबुभौ पक्षौ शेषायासुदयक्षयौ ।
इति वः सर्व्वमाख्यातं विभक्तश्चन्द्रमा यथा ॥
ब्रह्मणा पर्व्वतस्थैष तथा तच्चन्द्रभागतः ।
यज्ञभागे स्थिते यस्माद्देवार्थमकरोद्विधुम् ।
कव्ये स्थितेऽपि पित्रर्थं तिथिवृद्धिक्षयौ यथा ॥
इदं पुण्यतमाख्यानं यः शृणोति सवत्सरः ।
राजयक्ष्मा तस्य कुले न कदाचिद्भविष्यति ॥
यक्ष्मणा परिभूतो यः शृणोति वचनं विधेः ।
अचिरात् यक्ष्मणा मुक्तः स भवेन्नरसत्तमः ॥
इदं स्वस्त्ययनं पुण्यं गुह्यात् गुह्यतरं परम् ।
यः शृणोत्येकचित्तः सन् स महापुण्यभाग्-
भवेत् ॥”
इति कालिकापुराणे २१ अध्यायः ॥

राजयोग्यः, त्रि, ( राज्ञो योग्यः । ) राजार्हः ।
नृपोचितः । यथा,—
“त्रिकोणकण्टके सौम्ये पापे चोपचयस्थिते ।
राजयोग्या भवेन्नारी सुन्दरी कुलवर्द्धिनी ॥”
इति जातकाभरणम् ॥

राजरत्नं, क्ली, ( राजयोग्यं रत्नम् । ) रजतम् ।
इति शब्दरत्नावली ॥

राजराजः, पुं, ( राज्ञामपि राजा धनाधिपत्वात् ।
“राजाहःसखिभ्यष्टच् ।” ५ । ४ । ९१ । इति
टच् । ) कुबेरः । इत्यमरः । १ । १ । ६९ ॥
( यथा, किरातार्ज्जुनीये । ५ । ५१ ।

"इत्युक्त्वा सपदि हितं प्रियं प्रियार्हे
धाम स्वं गतवति राजराजभृत्ये ।
सोत्कण्ठं किमपि पृथासुत: प्रदध्यौ
सन्धत्ते भृशमरतिं हि सद्वियोग: ॥" )
सार्व्वभौम: । ( यथा, रामायणे ।२।८९।१४।
"प्रयाणमिति च श्रुत्वा राजराजस्य धीमत: ।
छित्त्वा पाशानि यानानां भाण्डं पर्य्यवारयन्॥")
सुधाकर: । इति मेदिनी । जे, ४६ ॥

राजरीति:, स्त्री, पित्तलविशेष: । तत्पर्य्याय: । पाकतुण्डी २ राजपुत्री ३ महेश्वरी ४ ब्रह्माणी ५ ब्रह्मरीति: ६ कपिला ७ पिङ्गला ८ । अस्या गुणा: । तिक्तत्वम् । शीतलत्वम् । लवणत्वम् । शोधनत्वम् । पाण्डुवातक्रिमिप्लीहपित्तनाशित्वञ्च । इति राजनिर्घण्ट: ॥

राजर्षि:, पुं, ( राजा ऋषिरिव श्रेष्ठत्वात् । ) ऋतुपर्णादिराज: । इति त्रिकाण्डशेष: ॥ तस्य स्मरणं कलिनाशनम् । यथा,—
"कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षे: कीर्त्तनं कलिनाशनम् ॥"
इति महाभारतम् ॥

राजलक्ष्मा, [न्] पुं, (राज्ञो लक्ष्म चिह्नं यस्य ।) युधिष्ठिर: । इति धनञ्जयकोष: ॥ ( राजचिह्नयुक्ते, त्रि ॥ )

राजलक्ष्मी:, स्त्री, ( राज्ञो लक्ष्मी: । ) राजश्री: । यथा, ज्योतिस्तत्त्वे ।
"मन्त्रप्रभावनिपुण: प्रमदाविलास:
श्वेतातपत्रकुसुमपूजितदेवलाभ: ।
स्वप्नप्रलाभघनपूर्णमनोरथ: स्यात्
शौक्री दशा भवति निश्चलराजलक्ष्मी: ॥"

राजवंश्य:, त्रि, ( राजवंशे भव: । राजवंश + यत् । ) राजवंशोद्भव: । तत्पर्य्याय: । राजबीजी २ । इत्यमर: । २ । ८ । २ ॥

राजवर्त्म, [न्] क्ली, (राज्ञो वर्त्म यस्या: ।) राजपथ: । तत्पर्य्याय: । घण्टापथ: २ संसरणम् ३ श्रीपथ: ४ उपनिष्क्रमणम् ५ उपनिष्करम् ६ महापथ: ७ । इति हेमचन्द्र: । ४ । ५२ ॥

राजबला, स्त्री, ( राजते शोभते इति । राज् + अच् । राजा बला इति कर्म्मधारय: । ) भद्रबला । इत्यमर: । २ । ४ । १५१ ॥ गन्धभादालिया इति भाषा ॥

राजवल्लभ:, पुं, ( राज्ञां वल्लभ: । ) राजादनी । राजाम्र: । राजबदर: । इति राजनिर्घण्ट: ॥ नारायणदासकविराजकृतद्रव्यगुणग्रन्थविशेष: । यथा,—
"श्रीनारायणदासेन कविराजेन धीमता ।
प्रतिसंस्क्रियते द्रव्यगुणोऽयं राजवल्लभ: ॥"
इति तस्य द्वितीयश्लोक: ॥
नृपप्रिये, त्रि ॥ ( यथा, मार्कण्डेये । ४८ । ४८ ।
"दुष्प्रापो विना चौर्य्यै: परभूमिचरो बली ।
ग्राम स्वाम्निमीर्षङ्गो राजवल्लभसंश्रय: ॥")

राजवल्ली, स्त्री, ( राजप्रिया वल्ली । ) तोयवल्ली । इति रत्नमाला ॥ उच्छा इति भाषा ॥

राजवान्, [त्] त्रि, ( राजास्यास्तीति । राजन् + मतुप् । मस्य व: । ) राजमात्रयुक्तदेश: । यथा,—
"सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राजवान् ॥"
इत्यमर: । २ । १ । १३ ॥
( नृपविशिष्ट: । यथा, महाभारते ।५।१।७।
"रराज सा राजवती समृद्धा
ग्रहैरिव द्यौर्विमलैरुपेता ॥")

राजवाह:, पुं, (राजानं वहतीति । वह् + अण् ।) घोटक: । इति शब्दचन्द्रिका ॥

राजवाह्य:, पुं, ( राज्ञां वाह्य: । ) राजवाहकहस्ती । तत्पर्य्याय: । उपवाह्य: २ । इति हेमचन्द्र: ॥ विजयकुञ्जर: ३ । इति त्रिकाण्डशेष: ॥ राजवहनीये, त्रि ॥

राजवृक्ष:, पुं, (वृक्षाणां राजा । राजदन्तादित्वात् परनिपात: । ) आरग्वधवृक्ष: । इत्यमर: ॥ पियालवृक्ष: । इति मेदिनी ॥ लङ्काख्यो वृक्ष: । इति शब्दचन्द्रिका ॥ लङ्काविज् इति भाषा ॥

राजशय:, पुं, ( राज: शोभमान: शय: । ) पट्ट: । इति शब्दमाला ॥ पाट् इति भाषा ॥

राजशफर:, पुं, इल्लिशमत्स्य: । इति हारावली ॥

राजशय्या, स्त्री, ( राज्ञ: शय्या । ) राज्ञ: शयनीयम् । तत्पर्य्याय: । महाशय्या २ । इति हेमचन्द्र: ॥

राजशाक:, पुं, ( राजप्रिय: शाक: । शाकानां राजा इति वा । ) वास्तूकम् । इति राजनिर्घण्ट: ॥

राजशुक:, पुं, (शुकानां राजा । राजदन्तादित्वात् परनिपात: । ) पक्षिविशेष: । राजा सुगा इति हिन्दी भाषा । तत्पर्य्याय: । शाब: २ शतपत्र: ३ नृपप्रिय: ४ । इति राजनिर्घण्ट: ॥

राजशृङ्गं, क्ली, राजच्छत्रम् । तत्पर्य्याय: । कनकदण्डकम् २ । इति त्रिकाण्डशेष: ॥

राजशृङ्ग:, पुं, मद्गुरमत्स्य: । इति हेमचन्द्र: ॥

राजस:, त्रि, ( रजसो भव: । रजस् + अण् । ) रजोगुणोद्भव: । तल्लक्षणं यथा,—
"आरम्भरुचिताधैर्य्यमसत्कार्य्यपरिग्रह: ।
विषयोपसेवा चाजस्रं राजसं गुणलक्षणम् ॥"
आरम्भरुचिता फलार्थं कर्म्मानुष्ठानशीलता ॥ * ॥
संक्षेपतल्लक्षणं यथा,—
"येनास्मिन् कर्म्मणा लोके ख्यातिमिच्छति पुष्कलाम् ।
न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु राजसम् ॥"
तत्प्राप्तिर्यथा,—
"देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च राजसा: ।
तिर्य्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गति: ॥"
तद्गतिप्रकारा यथा,—
"झल्ला मल्ला नटाश्चैव पुरुषा: शस्त्रवृत्तय: ।
द्यूतपानप्रसक्ताश्च जघन्या राजसी गति: ॥
राजान: क्षत्रियाश्चैव राज्ञश्चैव पुरोहिता: ।
वादयुद्धप्रधानाश्च मध्यमा राजसी गति: ।
गन्धर्व्वा गुह्यका यक्षा विबुधानुचराश्च ये ।
तथैवाप्सरस: सर्व्वा राजसीषूत्तमा गति: ॥"
इति मानवे १२ अध्याय: ॥
राजसाहारा यथा,—
"कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिन: ।
आहारा राजसस्येष्टा दु:खशोकामयप्रदा: ॥"
राजसयज्ञो यथा,—
"अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥"
राजसतपो यथा,—
"सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥" * ॥
राजसदानं यथा,—
"यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुन: ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥"
इति श्रीभगवद्गीतायाम् १७ अध्याय: ॥
राजसत्यागो यथा, —
"दु:खमित्येव यत् कर्म्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥"
राजसज्ञानं यथा,—
"पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्व्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥"
राजसकर्म्म यथा,—
"यत्तु कामेप्सुना कर्म्म साहङ्कारेण वा पुन: ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥" * ॥
राजसकर्त्ता यथा,—
"रागी कर्म्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचि: ।
हर्षशोकान्वित: कर्त्ता राजस: परिकीर्त्तित: ॥"
राजसी बुद्धिर्यथा,—
"यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च ।
अयथावत् प्रजानाति बुद्धि: सा पार्थ राजसी ॥"
राजसी धृतिर्यथा,—
"यया तु धर्म्मकामार्थान् धृत्या धारयतेऽर्ज्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृति: सा पार्थ राजसी ॥"
राजससुखं यथा,—
"विषयेन्द्रियसंयोगात् यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥"
इति श्रीभगवद्गीतायाम् १८ अध्याय: ॥ * ॥
राजसपुराणानि यथा,—
"ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च ।
भविष्यं वामनं ब्राह्मं राजसानि निबोधत ॥" ॥
राजसस्मृतयो यथा,—
"व्यासकं याज्ञवल्क्यञ्च आत्रेयं दाक्षमेव च ।
कात्यायनं वैष्णवञ्च राजसा: स्वर्गदा मता: ॥"
इति पाद्मोत्तरखण्डे ४३ अध्याय: ॥

राजसदनं, क्ली, ( राज्ञ: सदनम् । ) राजगृहम् । तत्पर्य्याय: । सौध: २ । इत्यमर: । २ । २ । १० ॥ भूपालभवनम् ३ सुधामयम् ४ । इति शब्दरत्नावली ॥ तद्भेदा यथा,—
"सौधोऽस्त्री राजसदनमुपकार्य्योपकारिका ।

स्वस्तिकः सर्व्वतोभद्रो नन्द्यावर्त्तादयोऽपि च ।
विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् ॥"
इत्यमरः । २ । २ । १० ॥

राजसभा, स्त्री, राज्ञः सभा । ("सभा राजा-मनुष्यपूर्व्वा ।" २ । ४ । २३ । इत्यत्र राज-पर्य्यायस्यैव ग्रहणात् न क्लीवत्वम् ।) नृपति-सभाजः । इत्यमरः । ३ । ५ । ६ ॥ (वाचस्पत्ये नपुंसकलिङ्गतोक्तिस्तु प्रामादिकी ॥)

राजसर्पः, पुं, (सर्पाणां राजा । राजदन्तादि-त्वात् परनिपातः ।) सर्पविशेषः । तत्पर्य्यायः । भुजङ्गभोजी २ । इति हेमचन्द्रः । ४ । ३७० ॥

राजसर्षपः, पुं, (सर्षपाणां राजा श्रेष्ठत्वात् । पर-निपातः ।) सर्षपविशेषः । राजसर्षा इति भाषा । राइ इति केचित् ॥ तत्पर्य्यायः । क्षविका २ राजिका ३ क्षुरी ४ क्षुतकः ५ । क्षुतक इत्यत्र क्षवक इति वा पाठः । इति रत्नमाला ॥ क्षवः ६ क्षुताभिजननः ७ । क्षुताभिजनन इत्यत्र क्षुधाभिजनन इति वा पाठः । इति हेमचन्द्रः ॥ कृष्णा ८ तीक्ष्ण-कला ९ राजी १० कृष्णसर्षपाख्या ११ । अस्य गुणाः । तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । वात-शूलगुल्मकण्डूकुष्ठव्रणनाशित्वम् । पित्तदाह-प्रदत्वञ्च । इति राजनिर्घण्टः ॥ (चतुर्व्विंशति-त्रसरेणुपरिमित-परिमाणविशेषः । यथा, मनुः । ८ । १३३ ।
"त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।
ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥"
"त्रसेत्यादि । अष्टौ त्रसरेणवो लिक्षैका परि-माणेन ज्ञेया तास्तिस्रो लिक्षा राजसर्षपो ज्ञेयः । ते राजसर्षपास्त्रयो गौरसर्षपो ज्ञेयः ॥"
इति तट्टीकायां कुल्लूकः ॥)

राजसायुज्यं, क्ली, (राज्ञः सायुज्यम् ।) राजत्वम् ।
"स्यादृत्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ।
देवभूयादिकं तद्वत्—————— ॥"
इत्यमरदर्शनात् ॥

राजसारसः, पुं, (राजा सारस इव । राजः शोभाशाली सारस इव इति वा ।) मयूरः । इति शब्दमाला ॥

राजसी, स्त्री, (रजस इयमिति । रजस् + अण् । ङीप् ।) दुर्गा । इति शब्दरत्नावली ॥ रजो-गुणसम्बन्धिनी च ॥ (यथा, गीतायाम् ।
"यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥")

राजसूयः, पुं, ("राजा लतात्मकः सोमः सूयते ऽत्र ।" इत्यमरटीका ॥ सु + अधिकरणे क्यप् । "राज्ञा सोतव्यः राज्ञा वा इह सूयते ।" इति काशिका । "राजसूयसूर्य्येति ।" ३ । १ । ११४ । इति निपातनात् दीर्घः ।) राजकर्त्तव्य-यज्ञविशेषः । तत्पर्य्यायः । नृपाध्वरः २ क्रतु-राजः ३ क्रतूत्तमः ४ । इति शब्दरत्नावली ॥ (अमरमते क्लीवलिङ्गोऽप्ययम् । ३ । ५ । ३९ ॥ यथा, महाभारते । १ । १५७ । १६ ।
"यस्मिन् सगरवाणा निर्ज्जित्य पृथिवीमिमाम् ।
राजसूयाश्वमेधाद्यैः क्रतुभिर्भूरिदक्षिणैः ॥"
राजसूयमन्त्रादिकं वाजसनेयसंहितायाम् ९ अध्यायस्य ३५ कण्डिकामारभ्य १० अध्या-यस्य ३० कण्डिकापर्य्यन्तं द्रष्टव्यम् ॥ युधिष्ठिरस्य राजसूययज्ञविवरणन्तु महाभारते सभापर्व्वणि विशेषतो द्रष्टव्यम् ॥)

राजस्कन्धः, पुं, (राजः शोभाशाली स्कन्धो यस्य ।) घोटकः । इति त्रिकाण्डशेषः ॥

राजस्वं, पुं क्ली, (राज्ञे देयं स्वं धनम् ।) राज-धनम् । राजकरः । इति लोकप्रसिद्धम् ॥

राजस्वर्णः, पुं, (स्वर्णानां धुस्तूराणां राजा । राजदन्तादित्वात् परनिपातः ।) राजधुस्तू-रकः । इति राजनिर्घण्टः ॥

राजहंसः, पुं, (हंसानां राजा श्रेष्ठत्वात् । राज-दन्तादित्वात् परनिपातः ।) चञ्चुचरण-लोहितश्वेतवर्णहंसः । इत्यमरः । २ । ५ । २४ ॥ (यथा, कुमारे । १ । ३४ ।
"सा राजहंसैरिव सन्नताङ्गी
गतेषु लीलाञ्चितविक्रमेषु ।
व्यनीयत प्रत्युपदेशलुब्धै-
रादित्सुभिर्नूपुरशिञ्जितानि ॥")
कदम्बः । कालहंसः । नृपोत्तमः । इति मेदिनी ॥

राजहर्षणं, क्ली, (राजानमपि हर्षयतीति । हृष् + णिच् + ल्यु ।) तगरपुष्पम् । इति राजनिर्घण्टः ॥

राजहस्ती, [न्] पुं, (राज्ञो हस्ती ।) राज-गजः । तत्पर्य्यायः । मारीचः २ याजकगजः ३ मदोत्कटः ४ । इति हारावली । ४९ ॥

राजहासकः, पुं, (राजानमपि हासयतीति । हस् + णिच् + ण्वुल् ।) मत्स्यविशेषः । तत्-पर्य्यायः । कातरः २ कातलः ३ राजीवः ४ । इति शब्दरत्नावली ॥

राजक्षवकः, पुं, सर्षपः । इति राजनिर्घण्टः ॥ (अस्य शाकगुणाः ।
"संग्राहि शीतलञ्चापि लघुदोषाविरोधि च ।
राजक्षवकशाकन्तु वटशाकन्तु तद्विधम् ॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)

राजा, [न्] पुं, (राजते शोभते इति । राज् + "कनिन् युवृषितक्षिराजीति ।" उणा० १ । १५६ । इति कनिन् ।) प्रभुः । नृपतिः । (यथा-रघुः । ४ । १२ ।
"यथा प्रह्लादनात् चन्द्रः प्रतापात् तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥")
क्षत्रियः । (यथा, मनुः । २ । ३२ ।
"शर्म्मवद्ब्राह्मणस्य स्यात् राज्ञो रक्षासम-न्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥")
चन्द्रः । यक्षः । इन्द्रः । इति मेदिनी ॥ उत्तर-पदे चेत् श्रेष्ठार्थवाचकः ॥ अथ नृपतेः पर्य्यायः । राट् २ पार्थिवः ३ क्ष्माभृत् ४ नृपः ५ भूपः ६ महीक्षित् ७ । इत्यमरः ॥ नरपतिः ८ पार्थः ९ नृपतिः १० भूपालः ११ भूभृत् १२ महीपतिः १३ नाभिः १४ नाराट् १५ भूमीन्द्रः १६ नरेन्द्रः १७ नायकाधिपः १८ । इति शब्दरत्नावली ॥ प्रजेश्वरः १९ भूमिपः २० इनः २१ दण्डधरः २२ अवनीपतिः २३ स्कन्दः २४ स्कन्धः २५ भूमृक् २६ अर्थपतिः २७ । इति जटाधरः ॥ * ॥ अस्य व्युत्पत्तिर्यथा,—
"महता राजराज्येन पृथुर्वैण्यः प्रतापवान् ।
सोऽभिषिक्तो महातेजा विधिवद्धर्म्मकोविदैः ॥
पित्रापरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः ।
अनुरागात्ततस्तस्य नाम राजेत्यभाषत ॥"
इति विष्णुपुराणे १ अंशे १३ अध्यायः ॥
अपि च ।—
"रागी राजसिकं सर्व्वं कुरुते कर्म्म रागतः ।
रागान्धाच्च राजसिकात्तेन राजा प्रकीर्त्तितः ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३५ अध्यायः ॥ * ॥
तस्य सर्व्वपितृत्वं यथा,—
शम्भुरुवाच ।
"शृणु वत्स ! महाराज हे तात ! भयभञ्जन ।
भयत्राता च राजा च सर्व्वेषां पालकः पिता ॥
अरक्षीच्च महेन्द्रोऽद्य त्वञ्च सर्गे नृपोऽधुना ।
यो राजा स पिता पाता प्रजानामेव निश्चयः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ५९ अध्यायः ॥
पृथोरवादौ राजा इति संज्ञा आसीत । यथा,
"देवैर्विप्रैस्तथा सर्व्वैरभिषिक्तो महामनाः ।
राज्ञाश्चैवाधिकारे वै पृथुर्वैण्यः प्रतापवान् ॥
तदा पित्रा प्रजाः सर्व्वाः कदा नैवानुरञ्जिताः ।
तेनानुरञ्जिताः सर्व्वाः सुखैस्सुहृदि तदा ।
अनुरागात्तस्य वीरस्य नाम राजेत्यभाषत ॥"
इति पाद्मे भूखण्डे २९ अध्यायः ॥ * ॥
अथ राजलक्षणम् ।
"सोऽपि क्षणपटे बालं दृष्ट्वाशीविषपीडितम् ।
नरेन्द्रलक्षणोपेतं चिन्तामाप नरेश्वरः ॥
तस्यास्यं चन्द्रबिम्बाभं सुभ्रु रम्यं समुन्नतम् ।
नीलाः केशाः कुञ्चिताश्च समा दीर्घाश्च र-ञ्जिताः ॥
राजीवनेत्रयुगलो बिम्बोष्ठपुटसंहतः ।
चतुर्दंष्ट्रश्चतुष्किष्कुर्दीर्घास्यो दीर्घबाहुकः ॥
चतुर्लेखाकरो मत्स्ययवच्छत्रकपर्व्वकः ।
शिरालपादो गम्भीरः स्वल्पत्वक् विवलीधरः ॥"
इति मार्कण्डेयपुराणे हरिश्चन्द्रोपाख्याना-ध्यायः ॥ * ॥ अन्यच्च ।
"अस्वेदिनौ मृदुतरौ कमलोदरसन्निभौ ।
श्लिष्टाङ्गुली ताम्रनखौ पादावुष्णौ शिरोज्-ज्झितौ ।
कूर्म्मोन्नतौ गूढगुल्फौ सुपार्ष्णी नृपतेः स्मृतौ ॥
मृदुलोमा समा जङ्घा तथा करिकरप्रभा ।
उरवो मांसवत्तुल्याः नृपस्योपचिताः स्मृताः ॥
लोमगूढे नृपो दाघैर्भूम्येव धनवर्ज्जितः ।
समाभ्यां क्षितिपः प्रोक्तः प्रलम्बेन प्रताप्यवान् ॥
समुन्नतिः शब्दभूपाः स्युर्दरिद्राश्च मानवाः ।

एकद्वित्रिचतुःपञ्चषट्धारादिभिरेव च ॥
दक्षिणावर्त्तवलितमुख्याभिश्च नृपाः स्मृताः ।
नृपाः पुष्पगन्धिशुक्रा मधुगन्धे धनं बहु ॥
मांसलस्फिक् सुखी स्याच्च सिंहस्फिक् भूपतिः स्मृतः ।
भवेत् सिंहकटी राजा निःस्वः कपिकटिर्नरः ॥
नृपाश्चोन्नतकक्षाः स्युर्निम्ना विषमकक्षकाः ।
वलिमध्यगता नाभिः शूलधारां करोति हि ॥
अधो गवाढ्यं कुर्य्याच्च नृपत्वं पद्मकर्णिका ।
अनुन्नतैश्चुचुकैश्च भवन्ति सुभगा नराः ।
निःस्वा विषमैर्दीर्घैः पीनोपचितकैर्नृपाः ॥
समोन्नतञ्च हृदयमकम्प्यं मांसलं पृथु ।
नृपाणामधमानाञ्च खरलोम शिराजकम् ॥
कम्बुग्रीवश्च नृपतिर्लम्बकर्णोऽतिभक्षकः ।
आजानुलम्बिनौ बाहू वृत्तौ पीनौ नृपेश्वरे ॥
मणिबन्धैर्निगूढैश्च सुश्लिष्टसुसन्धिभिः ।
नृपा हीनैः करच्छेदसशब्दैर्धनवर्ज्जिताः ॥
निम्नाश्चकनखैस्तद्वर्णैश्च परतर्ककाः ।
ताम्रैर्भूपा धनाढ्याश्च अङ्गुष्ठैः सयवैस्तथा ॥
धनाङ्गुलिश्च सधनस्तिस्रो रेखाश्च यस्य वै ।
नृपतेः करतलगा मणिबन्धे समुत्थिताः ॥
शङ्खातपत्रशिविका गजपद्मोपमा नृपे ।
कुम्भाङ्कुशपताकाभा मृणालाभा निधीश्वरे ॥
दामाभाश्च गवाढ्यानां स्वस्तिकाभा नृपेश्वरे ।
चक्रासितोमरधनुःकुन्ताभा नृपतेः करे ॥
मांसलैश्च धनोपेता अवक्रैरधरैर्नृपाः ।
विम्बोपमैश्च स्फुटितैरोष्ठैः कृशैश्च खण्डितैः ॥
विवर्णैर्धनहीनाश्च दन्ताः स्निग्धा घनाः शुभाः ।
तीक्ष्णा दंष्ट्राः समाः श्रेष्ठा जिह्वा रक्ता समा शुभा ॥
श्लक्ष्णा दीर्घा च विज्ञेया तालु श्वेतं धनेश्वर ।
लघ्वा च पतना वक्त्रं समं सौम्यञ्च संवृतम् ॥
भूपानाममलं श्लक्ष्णं विपरीतञ्च दुःखिनाम् ।
शुकनासाश्च राजानो रोमकर्णाः शतायुषः ॥
कराः स्निग्धावनद्धैश्च चालम्बैर्मांसलैर्नृपाः ।
स्रोन्नत्युच्चपिटनास च्छत्री भाग्यवतां भवेत् ॥
अल्पच्छिद्रा सुपुटा च अवक्रा च नृपेश्वरे ।
संहतैश्च ललाटैश्च कृपणा उन्नतैर्नृपाः ॥
ललाटोपस्थिताभिस्त्रिस्रो रेखाः स्युः शतवर्षिणाम् ।
नृपत्वं स्याच्चतसृभिरायुः पञ्चनवत्यथ ॥
छत्राकारैः शिरोभिस्तु नृपा निम्नशिरा धनी ।
बहुमतचतुरस्रो रक्तः समस्वरो नृपः ॥”
इति गारुडे नरस्त्रीलक्षणं नाम ६६ अध्यायः ॥
अपि च ।
“पार्थिवस्य तु वक्ष्यामि भृत्यानाञ्चैव लक्षणम् ।
सर्व्वाणि यो महीपालः सम्यङ्नित्यं परीक्षयेत् ॥
राज्यं पालयते नित्यं सत्यधर्म्मपरायणः ।
निर्ज्जित्य परसैन्यानि क्षितिं धर्म्मेण पालयेत् ॥
पुष्पं पुष्पं विचिन्वीयान्मूलच्छेदं न कारयेत् ।
मालाकार इवारण्ये न यथाङ्गारकारकः ॥
दुग्धो क्षीरन्तु भुञ्जीत विक्रेतारो न भुञ्जते ।
परराष्ट्रं महीपालो कालबालांश्च दूषयेत् ॥
गोधङ्गिष्वात्तु यो धेन्वाः क्षीरार्थी लभते पयः ।
एवं राष्ट्रमयोगेन पीड्यमानं न वर्द्धते ॥
तस्मात् सर्व्वप्रयत्नेन पृथिवीमनुपालयेत् ।
पालकस्य भवेद्भूमिः कीर्त्तिरायुर्यशो बलम् ॥
अभ्यर्च्य विष्णुं धर्म्मात्मा गोब्राह्मणहिते रतः ।
प्रजाः पालयितुं शक्तः पार्थिवो यो जितेन्द्रियः ॥
ऐश्वर्य्यमध्रुवं प्राप्य राजा धर्म्मे मतिञ्चरेत् ॥”
इति गारुडे १११ अध्यायः ॥ * ॥
अथाभिषिक्तराजानो यथा,—
श्रीपराशर उवाच ।
“यदाभिषिक्तः स पृथुः पूर्व्वं राज्ये महर्षिभिः ।
ततः क्रमेण राज्यानि ददौ लोकपितामहः ॥
नक्षत्रग्रहविप्राणां वीरुधां चाप्यशेषतः ।
सोमं राज्ये दधाद्ब्रह्मा यज्ञानां तपसामपि ॥
राज्ञां वैश्रवणं राज्ये जलानां वरुणं तथा ।
आदित्यानां पतिं विष्णुं वसूनामथ पावकम् ॥
प्रजापतीनां दक्षन्तु वासवं मरुतामपि ।
दैत्यानां दानवानाञ्च प्रह्लादमधिपं ददौ ॥
पितॄणां धर्म्मराजानं यमं राज्येऽभ्यषेचयत् ।
ऐरावतं गजेन्द्राणामशेषाणां पतिं ददौ ॥
पतत्त्रिणाञ्च गरुडं देवानामपि वासवम् ।
उच्चैःश्रवसमश्वानां वृषभन्तु गवामपि ॥
शेषन्तु नागराजानं मृगाणां सिंहमीश्वरम् ।
वनस्पतीनां राजानं प्लक्षमेवाभ्यषेचयत् ॥
एवं विभज्य राज्यानि दिशां पालाननन्तरम् ।
प्रजापतिपतिर्ब्रह्मा स्थापयामास सर्व्वतः ॥
पूर्व्वस्यां दिशि राजानं वैराजस्य प्रजापतेः ।
दिशःपालं सुधन्वानं पुत्रं वै सोऽभ्यषेचयत् ॥
दक्षिणस्यां दिशि तथा कर्द्दमस्य प्रजापतेः ।
पुत्रं शङ्खपदं नाम राजानं सोऽभ्यषेचयत् ॥
पश्चिमायां दिशि तथा रजसः पुत्त्रमच्युतम् ।
केतुमन्तं महात्मानं राजानमभिषिक्तवान् ॥
तथा हिरण्यरोमाणं पर्ज्जन्यस्य प्रजापतेः ।
उदीच्यां दिशि दुर्द्धर्षं राजानमभिषिक्तवान् ॥
तैरियं पृथिवी सर्व्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशमद्यापि धर्म्मतः प्रतिपाल्यते ॥
एते सर्व्वे प्रवृत्तस्य स्थितौ विष्णोर्म्महात्मनः ।
विभूतिभूता राजानो ये चान्ये मुनिसत्तम ॥
ये भविष्यन्ति येऽतीताः सर्व्वभूतेश्वरा द्विज ।
ते सर्व्वे सर्व्वभूतस्य विष्णोरंशा द्विजोत्तम ॥”
इति श्रीविष्णुपुराणे प्रथमेऽंशे २२ अध्यायः ॥*
सूत उवाच ।
“एवं सृष्टासु सर्व्वासु स्थावरासु चरासु च ।
ब्रह्मा क्रमेण राज्यानि आदेष्टुमुपचक्रमे ॥
द्विजानां वीरुधाञ्चैव नक्षत्राणां ग्रहैः सह ।
यज्ञानां तपसाञ्चैव सोमं राज्येऽभ्यषेचयत् ॥
बृहस्पतिञ्च सर्व्वेषां ददावाङ्गिरसामपि ।
भृगूणामाधिपत्ये च काव्यं राज्येऽभ्यषेचयत् ॥
आदित्यानां पुनर्व्विष्णुं वसूनामथ पावकम् ।
प्रजापतीनां दक्षञ्च मरुतामथ वासवम् ॥
दैत्यानामथ राजानं प्रह्लादं दितिनन्दनम् ।
नारायणन्तु साध्यानां रुद्राणां वृषभध्वजम् ॥
मृगाणामथ शार्दूलं गरुडं पततां वरम् ।
गन्धर्व्वाणां चित्ररथं नागानामथ वासुकिम् ॥
यक्षाणां मरुतश्चैव भूतानाञ्च शरीरिणाम् ।
सर्व्वेषां दंष्ट्रिणां शेषं सर्पाणाञ्चैव तक्षकम् ॥
सागराणां नदीनाञ्च मेघानां वर्षितस्य च ।
आदित्यानामन्यतमं पर्ज्जन्यमभिषिक्तवान् ।
सर्व्वाप्सरोगणानाञ्च कामदेवं तथा प्रभुम् ॥
ऋतूनामधिमासानां दिवसानां तथैव च ।
पक्षाणाञ्च क्षपाणाञ्च मुहूर्त्ततिथिपर्व्वणाम् ॥
कलाकाष्ठाप्रमाणानां गतेरयनयोस्तथा ।
गणितस्याथ योगस्य चक्रे संवत्सरं प्रभुम् ॥
प्रजापतेर्व्विरजसः पूर्व्वस्यामभिषेचयत् ।
पुत्रं नाम्ना सुधामानं राजानञ्चाभ्यषेचयत् ॥
यथाप्रदेशं राजानं दक्षिणस्यां प्रजापतेः ।
कर्द्दमस्य शङ्खपदं पुत्रं राज्येऽभिषिक्तवान् ॥
पश्चिमस्यां दिशि तथा रजसः पुत्रमुत्तमम् ।
केतुमन्तं महात्मानं राजानं ह्यभ्यषेचयत ॥
तथा हिरण्यरोमाणं पर्ज्जन्यस्य प्रजापतेः ।
दिगुत्तरायां पुत्रन्तु राजानमभ्यषेचयत ॥
मानुषाणामधिपतिं चक्रे वैवस्वतं मनुम् ।
तैरेव पृथिवी सर्व्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशमद्यापि धर्म्मेण परिरक्ष्यते ॥
स्वायम्भुवेऽन्तरे पूर्व्वं ब्रह्मणा तेऽभिषेचिताः ।
इन्द्रादिलोकपालास्तु पुनर्व्वैवस्वतेऽन्तरे ॥
राजसूयेऽभिषिक्तस्तु पृथुः पूर्व्वं महर्षिभिः ।
मनुभिर्व्विधिना तद्वत् सोऽधिराजः प्रतापवान् ॥”
इत्याद्ये वह्निपुराणे वराहप्रादुर्भावनामाध्यायः ॥
राजकर्त्तव्यकर्म्माणि यथा,—
मदालसोवाच ।
“वत्स ! राज्याभिषिक्तेन प्रजारञ्जनमादितः ।
कर्त्तव्यमविरोधेन स्वधर्म्मस्य महीभृता ॥”
अविरोधेन धर्म्मशास्त्राविरोधेन ।
“व्यसनानि परित्यज्य सप्तमूलहराणि वै ।
आत्मा रिपुभ्यः संरक्ष्यो बहिर्म्मन्त्रविनिर्गमात् ॥
अष्टधा नाशमाप्नोति स्वचक्रस्यन्दनाद्यथा ।
तथा राजाप्यसन्दिग्धं बहिर्म्मन्त्रविनिर्गमात् ॥
दुष्टादुष्टांश्च जानीयादमात्यानरिदोषतः ।
चरैश्चरास्तथा शत्रोरन्वेष्टव्याः प्रयत्नतः ॥
विश्वासो न तु कर्त्तव्यो राज्ञा मित्राप्तबन्धुषु ।
कार्य्ययोगादमित्रेषु विश्वसीत नराधिपः ॥
स्थानवृद्धिक्षयज्ञेन षाड्गुण्यविदितात्मना ।
भवितव्यं नरेन्द्रेण न कामवशवर्त्तिना ॥
प्रागात्मा मन्त्रिणश्चैव ततो भृत्या महीभृता ।
जेयाश्चानन्तरं पौरा विरुध्येत ततोऽरिभिः ॥
यस्त्वेतानविजित्यैव वैरिणो विजिगीषते ।
सोऽजितात्मा जितामात्यः शत्रुवर्गेण बाध्यते ॥
तस्मात् कामादयः पूर्व्वं जेयाः पुत्र महीभृता ।
तज्जये हि जयो राज्ञो राजा नश्यति तैर्जितः ॥
कामः क्रोधश्च लोभश्च मदो मानस्तथैव च ।
हर्षश्च शत्रवो ह्येते नाशाय कुमहीभृताम् ।
कामप्रसक्तमात्मानं स्मृत्वा दत्तं निपातितम् ।

निवर्त्तयेत्तथा क्रोधादनुह्लादं हृतात्मजम् ।
हतमैलं तथा लोभाद्भराष्ट्रं द्विजैर्धनम् ।
मानादनायुषः पुत्रं वनं चर्षात् पुरञ्जयम् ॥
अभिविनैर्जितं सर्व्वं मरुत्तेन महात्मना ।
स्मृत्वा विवर्ज्जयेदेतान् षड्दोषांश्च महीपतिः ॥
काककोकिलभृङ्गाणां वकव्यालशिखण्डिनाम् ।
हंसाग्नीलोहकुक्कुटानां शिक्षेत चरितं नृपः ॥”
काकात् सर्व्वप्रवृत्तिता । कोकिलात् माधुर्य्यम् ।
भृङ्गात् प्रतीक्ष्या अर्थादानम् । वकात् प्रभु-
त्वादौ एकाग्रता । व्यालात् दुष्पर्शित्वम् ।
शिखण्डिनश्चिक्कनी सर्पग्रहणाय तत्कर्त्ता शोभा-
वाक्यगोपनञ्च । हंसस्य सारग्राहित्वम् । लोह-
कुक्कुटात् सन्धानम् ॥
“कौशिकस्य क्रियां कुर्य्याद्विपक्षे मनुजेश्वरः ।
चेष्टां पिपीलिकानाञ्च काले भूपः प्रदर्शयेत् ॥”
कौशिकस्य उलूकस्य रात्रौ काकावस्कन्दनम् ।
पिपीलिकानां सेनाबहुत्वं सर्पभक्षणञ्च ।
“ज्ञेयाग्निविस्फुलिङ्गानां बीजचेष्टा च शाल्मलेः ।
चन्द्रसूर्य्यस्वरूपञ्च नीत्यर्थे पृथिवीक्षिता ॥”
अग्निविस्फुलिङ्गात् दूरात् दाहः । बीजाच्च-
र्पनिर्व्वाहनम् । उष्णकाले चन्द्रः सुखदायी
शीतकाले न । एवं सूर्य्यः शीते सुखदायी
उष्णकाले न । एवं कालानुसारेण सुखदुःख-
दातृत्वम् ॥
“बन्धकात् पद्मशरभशूलिन्या गुर्व्विणीस्तनात् ।
प्रज्ञा नृपेण चादेया तथा चण्डालयोषितः ॥”
बन्धकात् निःशङ्कत्वम् । पद्मात् कण्टकगोपनं
जितमुखता च । शरभात् बल्यापि प्राज्ञ्
मोहितः । यथा शरभोऽष्टापदः परोन्नतिं न
सहते । शूलिन्या आभिष्यापनम् । गुर्व्विण्याः
स्तनात् कालेऽर्थादानम् । चण्डालयोषित
यौनकी छागशिरो दर्शयित्वा अन्यद्विक्रीणाति ।
“शक्रार्कयमसोमानां तद्वद्वायोर्महीपतिः ।
रूपाणि पञ्च कुर्व्वीत महीपालनकर्म्मणि ॥
यथेन्द्रश्चतुरो मासान् वार्य्यौघैरेव भूतलम् ।
आप्याययेत्तथा लोकान् परिहारैर्महीपतिः ॥”
परिहारैः धनदानादिभिः ।
“मासानष्टौ यथा सूर्य्यस्तोयं हरति रश्मिभिः ।
सूक्ष्मेणैवाभ्युपायेन तथा शुल्कादिना नृपः ॥
यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।
तथा प्रियाप्रियौ राजा दुष्टादुष्टे समो भवेत् ॥
पूर्णेन्दुमालोक्य यथा प्रीतिमान् जायते नरः ।
एवं यत्र प्रजाः सर्व्वा निर्वृतास्तच्छशिव्रतम् ॥
मारुतः सर्व्वभूतेषु निगूढश्चरते यथा ।
एवं चरेन्नृपश्चारैः पौरामात्यारिबन्धुषु ॥
न लोभार्थैर्न कामार्थैर्नार्थार्थैर्यस्य मानसम् ।
यदार्थैः कृष्यते धर्म्मान् स राजा स्वर्गमृच्छति ॥”
लोभादिप्रयोजनैः ।
“उत्पथग्राहिणो मूढान् स्वधर्म्माच्चलितान्नरान् ।
यः करोति निजे धर्म्मे स राजा स्वर्गमृच्छति ॥”
उत्पथग्राहिणः पापिनः ।
“वर्णधर्म्मा न सीदन्ति यस्य राष्ट्रे तथाश्रमाः ।
राजन्यस्य सुखं तात परत्रेह च शाश्वतम् ॥
एतद्राज्ञः परं कृत्यं तथैतद्वृद्धिकारकम् ।
स्वधर्म्मे स्थापनं नृणां चाल्यते न कुबुद्धिभिः ॥
पालनेनैव भूतानां कृतकृत्यो महीपतिः ।
सम्यक् पालयिता भागं धर्म्मस्याप्नोति वै यतः ॥
एवमाचरते राजा चातुर्व्वर्ण्यस्य रक्षणे ।
स सुखी विहरत्येष शक्रस्येति सलोकताम् ॥”
इति मार्कण्डेयपुराणे मदालसोपाख्यानाध्यायः
तट्टीका च । * । राजाभिषेकस्य विहित-
नक्षत्राणि यथा,—
“पुष्यानुराधा ज्येष्ठा च रोहिणी चोत्तरात्रयम् ।
हस्ताश्विनी रेवती च नृपाभिषेचनोत्तमाः ॥”
इति ज्योतिःसारसंग्रहः ॥
अस्य विवरणं अभिषेकशब्दे द्रष्टव्यम् । * ॥
राज्ञि वर्णनीयानि यथा,—
“नृपे कीर्त्तिप्रतापाज्ञादयाशक्तिविवेकिताः ।
धर्म्मोपायाप्तसंग्रामशूराद्याः सनयक्षमाः ॥
प्रजारागोऽरिशैलादिनाशोऽरिपुरशून्यता ।
औदार्य्यधैर्य्यगाम्भीर्य्यशौर्य्यमर्य्यादमादयः ॥”
इति कविकल्पलतायाम् १स्तबके ३कुसुमम् ॥*॥
राजान्नभक्षणे दोषो यथा,—
वाराह उवाच ।
“शुद्धा भागवता भूत्वा मम कर्म्मपरायणाः ।
ये तु भुञ्जन्ति राजान्नं लोभेन च भयेन च ॥
आपन्ना हि भुञ्जीत राजान्नन्तु वसुन्धरे ।
दशवर्षसहस्राणि पच्यन्ते नरके नराः ॥
भगवद्वचनं श्रुत्वा सा मही शंसितव्रता ।
उवाच मधुरं वाक्यं सर्व्वलोकसुखावहम् ॥
धरण्युवाच ।
श्रुत्वा तत्त्वेन मे देव हृदये हि व्यवस्थितम् ।
को नु दोषो हि राजान्ने तन्मे त्वं वक्तुमर्हसि ॥
ततो भूम्या वचः श्रुत्वा सर्व्वधर्म्मविदां वरः ।
प्राह नारायणो वाक्यं धर्म्मकामां वसुन्धराम् ॥
वाराह उवाच ।
शृणु सुन्दरि । तत्त्वेन गुह्यमेतदनिन्दिते ।
राजान्नन्तु न भोक्तव्यं शुभैर्भागवतैः सदा ॥
यद्यप्येष समत्वेन राजा लोके प्रवर्त्तते ।
राजसस्तामसो वापि कुर्व्वन् कर्म्म सुदारुणम् ॥
अपि वा गर्हितं तेन राजान्नन्तु वसुन्धरे ।
धर्म्मसंस्थापनार्थाय न तु मे रोचते शुचि ॥
ततोऽहं संप्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
यथा राजान्नं भोज्यं वै शुद्धैर्भागवतैः शुभे ॥
स्थापयित्वा तु मां देवि विधिदृष्टेन कर्म्मणा ।
धनधान्यप्रदानानि दत्त्वा भागवतैरपि ॥
चिह्नं भागवतैश्चाङ्कं मम प्रायश्चित्तकम् ।
सुस्नातस्तु वरारोहे न स पापेन लिप्यते ॥
एवं विष्णुवचः श्रुत्वा धरणी शंसितव्रता ।
वाराहरूपिणं देवं प्रत्युवाच वरानना ॥”*॥
तदन्नभोजनप्रायश्चित्तानि यथा,—
धरण्युवाच ।
“राजान्नन्तु ततो भुक्त्वा शुद्धो भागवतः शुचिः ।
कर्म्मणा केन शुद्धेत तन्मे ब्रूहि जनार्द्दन ॥
वाराह उवाच ।
शृणु तत्त्वेन मे देवि यथा त्वं भीरु भाषसे ।
तरन्ति मनुजा येन राजान्नस्योपभुञ्जकाः ॥
एवं चान्द्रायणं कृत्वा तप्तकृच्छ्रञ्च पुष्कलम् ।
कुर्य्यात् सान्तपनञ्चैकं शीघ्रं मुच्यति किल्विषात् ॥
भुक्त्वा वै राजोऽन्नानि इदं कर्म्म समारभेत् ।
न तस्यैवापराधोऽस्ति वसुधे वै वचो मम ॥
एवमेव न भोक्तव्यं राजान्नन्तु कदाचन ।
ममाश्च प्रियकामाय यदीच्छेत् परमां गतिम् ॥”
इत्यादि वाराहे राजान्नभक्षणप्रायश्चित्तं नामा-
ध्यायः ॥ * ॥ अपि च ।
“राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्च्चसम् ।
इत्याद्यभिधाय,—
भुक्त्वा चान्यतमस्यान्नममत्या क्षपणं त्र्यहम् ।
मत्या भुक्त्वा चरेत् कृच्छ्रं रेतो विण्मूत्रमेव च ॥”
इति प्रायश्चित्ततत्त्वम् ॥
( राजनम् । यथा, ऋग्वेदे । १० । ४९ । ४ ।
“अहं सुवं यजमानस्य राजनि ।”
“अहं यजमानस्य राजनि राजनार्थं सुवं
अभवं समर्थ इति शेषः ।” इति तद्भाष्ये
सायणः ॥ )

राजातनः, पुं, (राजानं अततीति । अत सातत्य-
गमने + “बहुलमन्यत्रापि ।” उणा० २ । ७८ ।
इति युच् । ) पियालवृक्षः । इति शब्दमाला ॥

राजादनं, क्ली, ( राजभिरद्यते इति । अद भक्षणे
+ कर्म्मणि ल्युट् । ) क्षीरिका । पियालः ।
किंशुकः । इति मेदिनी । ने, २०५ ॥ ( यथा,
सुश्रुते । १ । ४६ । फलवर्गे ।
“दाडिमामलकं द्राक्षा खर्ज्जूरं सपरूषकम् ।
राजादनं मातुलुङ्गं फलवर्गे प्रशस्यते ॥”
पुंलिङ्गान्तोऽपि दृश्यते । इत्यमरः । २ । ४ । ४५ ॥
हेमचन्द्रश्च । ४ । २०८ ॥ क्षीरिकार्थे पर्य्यायो
यथा,—
“राजादनः क्षीरवृक्षः पालाशो वानरप्रियः ॥”
इति वैद्यकरत्नमालायाम् ॥
किंशुकार्थे पर्य्यायो यथा,—
“वातपोथः पलाशः स्याद्वातमस्तश्च किंशुकः ।
राजादनो ब्रह्मवृक्षो हस्तिकर्णो दलोऽपरः ॥”)

राजानुजीवी, [ न् ] त्रि, ( राज्ञः अनुजीवी । )
राजोपजीवी । तस्य कर्म्माणि यथा,—
मत्स्य उवाच ।
“यथानुवर्त्तितव्यं स्यात् स्वामिनो राजोपजीविना ।
तथा ते कथयिष्यामि निबोध गदतो मम ॥
आज्ञा सर्व्वात्मना कार्य्या स्वशक्त्या रविनन्दन ।
आक्षिप्य वचनन्तस्य न वक्तव्यं तथा वचः ॥
अनुकूलं प्रियन्तस्य वक्तव्यं जनसंसदि ।
रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् ॥
परार्थमस्य वक्तव्यं स्वस्थे चेतसि भार्गव ।
स्वार्थः सुहृद्भिर्वक्तव्यो न स्वयन्तु कदाचन ॥
कार्य्यातिपातः सर्व्वेषु रक्षितव्यः प्रयत्नतः ।
न च हिंस्यं धनं किञ्चिन्नियुक्तेन च कर्म्मणि ॥
नोपेक्ष्यं भाग्यमानञ्च तथा राज्ञः प्रियो भवेत् ।

श्रीयुग्ममूर्त्तिं समाराध्य ध्यानपाद्यादिभिः क्रमात् ॥
भक्तैः सह सजातीयैः प्रज्ञानुसारवस्तुभिः।
तद्भक्तः पूजयेद्भक्त्या तौ सदा संयतेन्द्रियः॥"
अथ ध्यानम्।
"हेमेन्दीवरकान्तिमञ्जुलतरं श्रीमज्जगन्मोहनं
नित्याभिर्ललितादिभिः परिवृतं सन्नीलपीता-
म्बरम्।
नानाभूषणभूषणाङ्गमधुरं कैशोररूपं युगं
गान्धर्व्वाजनमव्ययं सुललितं नित्यं शरण्यं भजे॥
युग्मर्त्तिमिति ध्यात्वा शालग्रामेऽथवा पुनः।
साक्षात् शैलादिमूर्त्तौ वा मनोमय्यां समर्च्चयेत्॥
ततो मण्डलपूजाञ्च तयोः सम्मुखतः क्रमात्।
कुर्याद्भक्तः प्रयत्नेन ध्यानपाद्यादिभिः सदा॥
ललिता पश्चिमे पूज्या पीतवर्णदलेऽपरा।
चन्द्रावलीं शुक्लदले तद्वामे पूजयेत् सुधीः॥
वायव्ये श्यामलां देवीं कृष्णवर्णदलेऽर्च्चयेत्।
तद्वामे चित्ररेखाख्यां शुक्लवर्णदले ततः॥
उत्तरे श्रीमती लक्ष्यां रक्तवर्णदले तथा।
तद्वामपार्श्वे चन्द्राख्यां नीलवर्णदलेऽर्च्चयेत्॥
रक्तवर्णदलेऽभ्यर्च्या ईशाने श्रीहरिप्रिया।
तस्या वामे शुक्लदले पूज्या मदनसुन्दरी॥
पीतवर्णदले पूर्व्वे विशाखामर्च्चयेत्ततः।
प्रिया तस्या वामपार्श्वे शुक्लवर्णदलेऽर्च्चयेन॥
अग्निकोणे श्यामवर्णां दले शैव्यां समर्च्चयेत्।
तद्वामे श्रीमधुमतीं शुक्लवर्णदलेऽर्च्चयेत्॥
पूजयेद्दक्षिणे पद्मां रक्तवर्णदले तथा।
शशिरेखाञ्च तद्वामे नीलवर्णदलेऽर्च्चयेत्॥
पूजयेन्नैरृते भद्रां रक्तवर्णदले ततः।
रसप्रियाञ्च तद्वामे शुक्लवर्णदलेऽर्च्चयेन॥ * ॥
श्रीराधाप्रियसङ्गिनीं विधुमुखीं कृष्णप्रियां
प्रेयसीं
हेमाभां परिवादिनीं सुमधुरध्यानां सुवेशा-
म्बराम्।
सद्रत्नाभरणैर्मनोज्ञसुतनुं नित्यां जगन्मोहिनीं
वन्दे श्रीललितां कुरङ्गनयनीं पीताम्बरेणावृ-
ताम्॥ १॥
श्यामां श्यामपरायणां वरतनुं चामीकराङ्ग-
च्छटां
मञ्जीरैर्मधुरध्वनिं परिलसच्चन्द्राननां सुस्वराम्।
सद्रत्नाभरणां सरोजनयनीं शुक्लांशुकेनावृतां
ध्यायेत् श्रीललितासखीं सुचिबुकां चन्द्रावली-
मुत्तमाम्॥ २॥
कान्त्या काञ्चनसन्निभां सुललितां कृष्णाम्बरं
बिभ्रतीं
नानाभूषणमञ्जुलाञ्च सुदतीं मार्दङ्गिकीं सुन्द-
रीम्।
श्रीवृन्दाविपिनेश्वरीं प्रियसखीं भव्यां शशाङ्का-
ननां
वेणीचारुसुमल्लिकासजममन्दं नित्यं भजे
श्यामलाम्॥ ३॥
श्रीकृष्णप्रियवल्लभां शशिमुखीं सच्छन्दसन्ध्या-
न्वितां
शुक्लस्वर्णशरीरकान्तिमतुलां शुक्लाम्बरेणावृताम्।
स्वर्णाद्याभरणां सदा पुलकिनीं श्रीकृष्णभावेन वै
गायन्तीं मधुरस्वरैरविरतं श्रीचित्ररेखां
भजे॥४॥
कनकनिभशरीरां बिभ्रतीं रक्तवस्त्रं
ललितनलिननेत्रां चारुभूषाङ्गशोभाम्।
सुमधुरपिकवाक्यां चन्द्रवक्त्रां सुवेशां
मधुरिपुनिजदासीं श्रीमतीं तां हि वन्दे॥५॥
वृन्दावनेशनिजसेवनसौख्यदात्रीं
रम्यां सुनीलवसनां सुरवाद्ययन्त्राम्।
नानाविभूषिततनुं स्मरदम्भजात्रीं
चन्द्रां भजे सकलरागमनोज्ञगानाम्॥६॥
सुवर्णवर्णां शुकधारिणीं ता-
मुपाङ्गयन्त्रां मणिभूषणाङ्गीम्।
हरिप्रियां मञ्जुलपद्मनेत्रां
भजेऽहमीशां कनकाङ्गशोभाम्॥ ७॥
रबाबकलवादिनीं सकलरागसंगायिनीं
सुचारुमणिकुण्डलां शरदपूर्णचन्द्राननाम्।
सुरत्नवरभूषणां रुचिरशुभ्रपट्टाम्बरां
भजे मदनसुन्दरीं कनककान्तिदेहां शुभाम्॥८॥
सुतानज्ञां गीते भ्रमरकलकण्ठीं सुचतुरां
जगद्वन्द्यां नेत्रनलिननयनामिन्दुवदनाम्।
विशाखां गौराङ्गीं कलितमुरलीं पीतवसनां
भजे श्यामां सेव्यां सकलगुणपूर्णां सुखमयीम्॥९॥
सुचामीकराभूषणाढ्यां सुवेशां
सुसङ्गीतविद्यासुधारां वरेण्याम्।
सुवंशीसुगानां सुहेमाङ्गशोभां
भजे श्रीप्रियां शुक्लवस्त्रां मनोज्ञाम्॥१०॥
गान्धर्व्वानिजदासिकां सुनदवाद्ययन्त्रं सदा
बिभ्रतीं
मञ्जुस्वर्णविभूषितां वरतनुं पाथोजनेत्रां
वराम्।
ध्यायेत् कृष्णपदारविन्दमधुपीं कृष्णाम्बरेणा-
वृतां
संगीते मधुरस्वरामविरतं सेव्यां मनोहारि-
णीम्॥११॥
रुचिरमधुमतीं तां तप्तचामीकराभां
पिककलरवकण्ठीं शुक्लवस्त्रं दधानाम्।
तिलकुसुमसुनासां चारुहेमाङ्गभूषां
युगलचरणसेवातत्परामाभजेऽहम्॥१२॥
रत्नालङ्कारदेहां जितकुसुमशरश्रीमदङ्गलावण्य-
रूपै-
र्भव्यां सङ्गीतविद्यासुनिपुणरसिकां तानमानाति-
विज्ञाम्।
शारङ्गीयन्त्रगानां कनकनिभतनुं सर्व्वदा कृष्ण-
सेवीं
वन्दे पद्मां सुवेशां शशधरवदनां बिभ्रतीं रक्त-
वस्त्रम्॥ १३॥
शशिरेखां स्वरूपञ्च वादयन्तीं मुहुर्मुहुः।
रत्नालापश्रुतिरूपाञ्च रसप्रेमैकसंयुताम्॥१४॥
भव्यां श्रीशशिरेखिकां सुखमकां यन्त्रादि-
गानावरां
वन्देऽहं मधुरस्वरां परमिकां लावण्यसारा-
न्विताम्।
नानायन्त्रविशारदां वरतनुं पट्टाम्बरेणावृतां
फुल्लेन्दीवरलोचनामविरतं ध्याये जगन्मो-
हिनीम्॥१५॥
श्रीयन्त्रं स्वरमण्डलं कलरवं गाने सदा बिभ्रतीं
श्रीभद्रां मधुरस्वरां सुललितां सद्रक्तवस्त्रावृताम्।
राजत्स्वर्णरुचिं विभूषणवरैरङ्गैः सदा शोभितां
ध्याये श्रीयुगसेविकां परमिकां ज्ञानैकमग्नां
सदा॥१६॥
राधाकृष्णपदारविन्दमधुपीं सद्भृङ्गतुल्यार्थिनीं
नानाभूषणभूषिताङ्गरुचिरां सद्रक्तवस्त्रां
शुभाम्।
ध्याये सन्ततकृष्णभावललितां केयूरहेमाङ्गदां
स्वर्णाङ्गीञ्च रसप्रियां सुखमयीं सर्व्वाङ्गशोभा-
न्विताम्॥१७॥
मधुस्वरां कोकिलभृङ्गगानां
सतुम्बुरीयन्त्रविधारिणीञ्च।
वनप्रियां शुक्लसुचीनवस्त्रां
भजे हरिद्राङ्गसमञ्जुशोभाम्॥१८॥
एवं ध्यात्वा पूजयित्वा ललिताद्या यथाक्रमात्।
पाद्यादिभिः सोपचारैर्विधिवद्भक्तितत्परः॥
सङ्ख्यो ललितादीनां दलात्पश्चिमतो मुने!।
प्रणवादिनमोऽन्तेन संप्रदानपदेन वै।
तत्तन्नाम्ना तु मनुना पुष्पगन्धादिभिर्मुने!॥"
इति पाद्मे उत्तरखण्डे श्रीराधाजन्माष्टमीव्रत-
कथनमाहात्म्यं नाम १६२ अध्यायः॥
श्रीसदाशिव उवाच।
"प्रत्येकेऽष्टौ पूजयेद्वै क्रमतस्तु दले दले।
तासां नाम्ना कथ्यते तास्ताश्चाविंशाधिकं शतम्।
इन्दुमुखी रसज्ञा च सुभद्रा सुमुखी तथा।
वल्लवी चन्द्रिका चारुचतुरा च सुचञ्चला॥
मधुरा हस्तकमला तथा मधुरभाषिणी।
विलासिनी रसवती तथा खञ्जनलोचना॥
सुखदा चम्पकलिका रसदा रसमञ्जरी।
सदा सुमञ्जरी शीला चन्द्रा चन्द्रप्रभावती॥
वासन्ती मालती जाती चन्द्रकान्ती सकुन्तला।
रम्भा भ्रमरगम्भीरा सुशीला च सुवेशिनी॥
श्यामलकी सुधाकण्ठी शिवा च श्रीरतिप्रिया।
शुकप्रिया मधुकरी सुवेशा चान्द्रनोद्भवा॥
मुरलीवल्लभा वृन्दा पारिजातप्रिया शुभा।
पञ्चस्वरा रत्नमाला मदिरा रासवल्लभी॥
मातङ्गगमनी तारावती कुण्डलधारिणी।
केशरी मित्रवृन्दा च कावच्युतमालिका॥
मायावती कौशिकी च कोमलाङ्गी सुचन्द्रनी।
पीयूषभाषिणी सत्यवती च कुञ्जवासिनी॥
कपोतमालिका लोपामुद्रा च किंशुकप्रिया।
इलावती कुङ्कुमा च कमला च मदालसा॥
तिलोत्तमा च सावित्री मञ्जुला प्रियवादिनी।
मुक्तावली चित्ररेखा सुमित्रा लोलकुण्डला॥
अरुन्धती चित्रवती श्रीरक्ता पद्मगन्धिनी।
मेनका कलिका रङ्गकेलकी काममूर्च्छनी।

कुसुमप्रिया च तारखा तथा कुञ्जविलासिनी ।
चिरावती चारुकण्ठी चित्रमध्या सुलोचना ॥
नन्दया नन्दकलिका सुनन्दा नन्ददायिनी ।
सुरङ्गाक्षी च सुश्रोणी कौलिकोला प्रियंवदा ॥
श्यामाराध्या श्यामसेव्या कस्तूरी मानभञ्जिनी ।
विचित्रवसना रत्नमञ्जीरा मञ्जुशिञ्जिनी ॥
पिकस्वरा भङ्गगाना तथा रासविहारिणी ।
श्रीकृष्णदयिती पूज्या यत्नात् चन्द्रावली मतः ।
ध्यानपाद्यादिभिः सम्यक्प्रकारेण च पूजकैः ॥
श्यामाङ्गीं मधुरस्वरां विधुमुखीं गान्धर्वविद्या-
रतां
नानारत्नविभूषिताङ्गमधुरां नानीसुमञ्जीरकम् ।
वीणावेणुसुवादिनीं वरतनुं चित्राम्बरं बिभ्रतीं
ध्याये कृष्णपरायणां सुचिबुकां चन्द्रावलीं
मञ्जुलाम् ॥
एवं राधाजन्मतिथौ कुर्याज्जन्मपूजनम् ।
कार्य्यादीन् वैष्णवान् सर्व्वान् यत्नतः परि-
पूजयेत् ॥
एवं राधाकृष्णपूजां तयोर्मङ्गलपूजनम् ।
प्रकुर्य्याद्यत्नतः कुर्यात् कार्य्ये रासमहोत्सवे ॥
व्यूनातिरिक्तं देवर्षे ! न कर्त्तव्यं कदाचन ।
श्रीमत्कृष्णैकतानैर्भाव्यं तैरेव सर्व्वदा ॥
नाहूयेत् शैवशाक्तादीन् राधाजन्ममहोत्सवे ।
मायकान् पतितान् लोकानन्यांश्च विमन्त्रयेत् ॥
विना भागवतांल्लोकान् च तत्र प्रवेशयेत् ।
गन्धपुष्पादिभिर्माल्यैश्चन्दनैश्चानिवेदितैः ॥
नानापराधभीतस्तु भक्तांस्तांश्च चार्च्चयेत् ।
ततश्चन्द्राप्रसादैश्च भक्ष्यपेयादिभिस्तथा ॥
ततश्चन्द्रपूजायाः कार्य्यो नान्यांश्च भोजयेत् ।
वहिर्मेस्थान् श्रीकृष्णस्य गान्धर्व्वाभक्तितत्परः ॥
कार्य्यादीन् वैष्णवान् भक्त्या भोजयेत् पूजयेत्तथा ।
सन्नैवेद्यैर्गन्धपुष्पैर्माल्यैर्मलयजादिभिः ॥
सजातीयैर्भक्तवृन्दैः समं तत्र महोत्सवम् ।
दिवा कुर्य्यात् प्रयत्नेन राधाभक्तिपरायणः ॥
महाप्रसादं भुञ्जीत दिनान्ते चरणोदकम् ।
पूर्णां कृत्वा पिबेत् कार्य्यैः सार्द्धमानन्दितैस्ततः ॥
रात्रौ जागरणं कुर्य्याद्राधाकृष्णेति वा स्मरन् ।
पूजयेन्मूर्त्तिमारोप्य स्वर्णरत्नादिसंस्कृताम् ॥
श्रीकृष्णकथालापं पुराणाद्यनुकीर्त्तनम् ।
श्रवणीयं प्रयत्नेन नारीभिश्चान्यवैः सह ॥
यः करोति नरो भक्त्या राधाजन्माष्टमीं शुभाम् ।
वदन्ति विबुधाः सर्व्वे राधाभक्तोऽस्ति भूतले ॥
प्रहरे प्रहरे राधा गोलोकेश्वरी दिवानिशि ।
पूजयित्वा विधानेन श्रीकृष्णसहितां तथा ॥
सद्भक्तैः सहालापे राधाकृष्णस्तुतिं मुहुः ।
ततश्चन्द्रोत्सवं कृत्वा परमानन्दितो भवन् ॥
दृष्टवत् प्रणतिं कुर्य्याद्दण्डाङ्गविधिनोचिताम् ।
प्रत्यब्दमेव कुरुते राधाजन्ममहोत्सवम् ॥
यः पुमानथवा नारी राधाभक्तिपरायणा ।
भूत्वा वृन्दावने वासः श्रीराधाकृष्णसङ्गिनी ॥
व्रजवासी भवेत् सोऽपि राधाभक्तिपरायणः ।
तस्यालापप्रयोगाच्च मुक्तश्चो नरो भवेत् ॥

राधाराधेति यो ब्रूयात् स्मरणं कुरुते नरः ।
सर्व्वतीर्थेषु संस्कारात् सर्व्वविद्याप्रयत्नवान् ॥
राधाराधेति कुर्य्यात्तु राधाराधेति पूजयेत् ।
राधाराधेति यन्निष्ठा राधाराधेति जल्पति ॥
वृन्दारण्ये महाभागा राधासहचरी भवेत् ।
जगतां पृथिवी धन्या तत्र वृन्दावनं पुरी ।
तत्र धन्या सती राधा ध्येया या मुनिसत्तमैः ॥
ब्रह्मादीनां महाराध्या दूरतः सेवते सुरः ।
तां राधिकां यो भजते देवर्षे तं भजेमहि ॥
तदालापं कुरुष्वेव जपस्व मन्त्रमुत्तमम् ।
अहर्निशं महाभाग कुरु राधेति कीर्त्तनम् ॥
राधेति कीर्त्तनं कुर्य्यात् कृष्णेन सह यो जनः ।
तन्माहात्म्यं न शक्तोऽहं वक्तुं शेषोऽपि नैव च ॥
न गङ्गा न गया नित्यं न शिला च सरस्वती ।
कदाचिन्नैव विमुखा सर्व्वतीर्थफलप्रदा ॥
सर्व्वतीर्थमयी राधा सर्व्वैश्वर्य्यमयी पुनः ।
कदाचिद्विमुखा लक्ष्मीर्न भवेत्तु तदालये ॥
तस्यालये वसेत् लक्ष्मी राधया सह नारद ॥
राधाकृष्णेति यस्येष्टं तद्देतद्व्रतमुत्तमम् ।
तद्गेहे देहमनसोः कदाचिन्न चलेद्धरिः ॥
एतदेव वचः श्रुत्वा नारदो मुनिसत्तमः ।
प्रयतः पूजयामास गोलोकेश्वरीं यथोदितम् ॥
जन्माष्टमीव्रतकथां यः शृणोति च मानवः ।
श्रीराधायाः सुखी मानी धनी सर्व्वगुणान्वितः ॥
जपेद्व भक्तिसंयुक्तः पठेन्नाम्ना स्मरेन्नरः ।
धर्म्मार्थी लभते धर्म्ममर्थार्थी लभते धनम् ॥
कामार्थी लभते कामं मोक्षार्थी मोक्षमाप्नु-
यात् ॥
सर्व्वदानन्दपूरस्थः कार्य्यादिवैष्णवः सुखी ।
विवेकी च तथा निष्कामो यदा भक्तिमाप्नु-
यात् ॥”
इति पाद्मे उत्तरखण्डे श्रीसदाशिवनारदसंवादे
श्रीराधाजन्माष्टमीकथनमाहात्म्ये १६३अध्यायः॥
( तन्त्रमतेऽस्या उत्पत्त्यादिविवरणानि यथा,—
कात्यायन्युवाच ।
“वासुदेव महाबाहो मा भयं कुरु पुत्रक ।
मथुरां गच्छ तातेति तव सिद्धिर्भविष्यति ॥
गच्छ गच्छ महाबाहो पद्मिनीसङ्गमाचर ।
पद्मिनी मम देवेश अंशे राधा भविष्यति ।
अन्याश्च मातृकादेव्यः सदा तस्यानुचारिकाः ॥
वासुदेव उवाच ।
शृणु मातर्महामाये चतुर्वर्गप्रदायिनि ।
त्वां विना परमेशानि ! सिद्धासिद्धिर्न जायते ॥
पद्मिनीं परमेशानि ! शीघ्रं दर्शय सुन्दरि ! ।
प्रत्ययं मम देवेशि ! तदा भवति मानसम् ॥
इति श्रुत्वा वचस्तस्य वासुदेवस्य तत्क्षणात् ।
आविरासीत्तदा देवी पद्मिनी परसंस्थिता ॥
रक्तविद्युल्लताकारा पद्मगन्धसमन्विता ।
रूपेण मोहयन्ती सा सखीगणसमन्विता ॥
सहस्रदलपद्मान्तर्मध्यस्थानस्थिता सदा ।
सखीगणयुता देवी जपन्ती परमाक्षरम् ॥
एकाक्षरी महेशानि ! सा एव परमाक्षरा ।

कालिका या महाविद्या पद्मिन्या इष्टदेवता ।
वासुदेवो महाबाहुर्दृष्ट्वा विस्मयमागतः ॥
पद्मिन्युवाच ।
व्रजं गच्छ महाबाहो शीघ्रं हि भगवन् ! प्रभो ! ।
त्वया सह महाबाहो कुलाचारं करोम्यहम् ॥
वासुदेव उवाच ।
शृणु पद्मिनि मे वाक्यं कदा ते दर्शनं भवेत् ।
कृपया वद देवेशि ! जपं किंवा करोम्यहम् ॥
पद्मिन्युवाच ।
तवाग्रे देवदेवेश मम जन्म भविष्यति ।
गोकुले माथुरे पीठे वृषभानुगृहे ध्रुवम् ॥
दुःखं नास्ति महाबाहो मम संसर्गहेतुना ।
कुलाचारोपयुक्ता या सामग्री पञ्चलक्षणा ॥
मायायां तव देवेश सदा स्थास्यति नान्यथा ।
इत्युक्ता पद्मिनी सा तु सुन्दर्य्या दूतिका तदा ॥
अन्तर्धानं ततो गत्वा मायायां सहसा ययौ ।
वासुदेवोऽपि तां दृष्ट्वा चीराब्धिं प्रययौ ध्रुवम् ॥
त्यक्त्वा काञ्चीपुरं रम्यं महापीठं सुराधरम् ।
प्रययौ माथुरं पीठं पद्मिनी परमेश्वरी ॥
यत्र कात्यायनी दुर्गा महामायास्वरूपिणी ।
नारदाद्यैर्मुनिश्रेष्ठैः पूजिता संस्तुता सदा ॥
कात्यायनी महामाया यमुनाजलसंस्थिता ।
यमुनाया जलं तत्र साक्षात् कालीस्वरूपिणी ॥
बहुपद्मयुतं रम्यं सुक्षपीतं महाप्रभम् ।
रक्तं कृष्णं तथा चित्रं हरितं सर्व्वमोहनम् ।
कालिन्द्याख्या महेशानि यत्र कात्यायनी परा ॥
कालिन्दी कालिका माता जगतां हित-
काम्यया ।
साराधास्ते महेशानि ! देवर्षिसंस्तुता परा ।
अष्टदलपद्मान्तर्मध्ये माथुरमण्डलम् ॥
केशवन्दे महेशानि ! यत् पद्मं सततं स्थितम् ।
पद्ममध्ये महेशानि ! केशपीठं मनोहरम् ॥
केशवाख्यं महेशानि ! व्रजं माथुरमण्डलम् ।
यत्र कात्यायनी माया महामाया जगन्मयी ॥
व्रजं वृन्दावनं देवि ! नानाशक्तिसमन्वितम् ।
शक्तिस्तु परमेशानि ! कलारूपेण साक्षिणी ।
शक्तिं विना परं ब्रह्म न भाति शवरूपवत् ॥”
इति वासुदेवरहस्ये राधातन्त्रे षष्ठः पटलः ॥
देव्युवाच ।
“व्रजं गत्वा महादेवाकरोत् किं पद्मिनी तदा ।
कस्य वा भवने सा तु जाता वा पद्मिनी परा ॥
तत् सर्व्वं परमेशान विस्तारादद शङ्कर ।
यदि नो कथ्यते देव विमुञ्चामि तदा तनुम् ॥
ईश्वर उवाच ।
पद्मिनी पद्मगन्धा सा वृषभानुगृहे प्रिये ! ।
आविरासीत्तदा देवी कृष्णस्य प्रथमं प्रिया ।
चैत्रे मासि सिते पक्षे नवम्यां पुष्यसंयुते ॥
कालिन्दीजलकल्लोले नानापद्मगणावृते ।
आविरासीत्तदा पद्मा मायाशिवसुमाश्रिता ॥
छिन्नीभूत्वा तदा पद्मा स्थिता कनकमध्यतः ।
कोटिचन्द्रप्रतीकाशं छिन्नं मायासमन्वितम् ॥
पुष्पयुक्तनवद्यां वै स्थिताहं पद्ममध्यतः ।

आविरासीत्तदा पद्मा रक्तिमा कुसुमप्रभा ॥
तरुणादित्यसङ्काशे पद्मे परमकामिनी ।
वृषभानुपुरं देवि ! कालिन्दीपारमेव च ।
नाम्ना मधुपुरं रम्यं चतुर्व्वर्गसमन्वितम् ॥
दिव्यज्योतिर्म्मयेशानि ! महदादित्यसन्निभम् ।
तत्प्रसादात् परमेशानि माढ़कान्तविनाशकृत् ॥
वृषभानुर्महात्मा च कालिन्दीतटमास्थितः ।
महाविद्यां महाकालीं सततं प्रजपेत्सुधीः ॥
आविरासीन्महामाया तदा कात्यायनी परा ।
उवाच पुत्र महाबाहो वृषभानो महीधर ।
सिद्धोऽसि पुत्रश्रेष्ठ वरं वरय साम्प्रतम् ॥

वृषभानुरुवाच ।

सिद्धोऽहं सततं देवि ! त्वत्प्रसादात् सुरेश्वरि ! ।
त्वत्प्रसादान्महामाये यथा मुक्तो भवाम्यहम् ॥
त्वत्प्रसादान्महामाये असाध्यं नास्ति भूतले ।
आत्मनः सदृशाकारां कन्यामेकां प्रयच्छ मे ॥
तच्छ्रुत्वा परमेशानि ! तदा कात्यायनी परा ।
मेघगम्भीरया वाचा प्रदाह वृषभानवे ॥
तच्छृणुष्व महेशानि ! पीयूषसदृशं वचः ।
भक्त्या त्वदीयया तस्तु तुष्टाहं त्वयि सुन्दरि ! ॥
एतद्धि वचनं वत्स ! तव भक्त्या सुयुज्यते ।
इत्युक्त्वा सहसा तत्र महामाया जगन्मयी ॥
प्रददौ परमेशानि ! तस्मै दिव्यं मनोहरम् ।
वृषभानुर्महात्मा च तत्क्षणाद्गृहमाययौ ॥
भार्य्या तस्य विद्यालाक्षी विशालकटिमोहिनी ।
रत्नप्रदीपमाभाय रत्नपर्य्यङ्कमास्थिता ॥
तस्या हस्ते तदा भानुः प्रददौ दिव्यमोहनम् ।
तं दृष्ट्वा परमेशानि ! विस्मयं परमं गता ॥
हस्ते कृत्वा तु दिव्यं वै निरीक्ष्य च पुनः पुनः ।
नानागन्धयुतं दिव्यं सर्व्वशक्तिसमन्वितम् ॥
नानाज्योतिर्म्मयं दिव्यं तत्क्षणाच्च द्विधाभवत् ।
तत्रापश्यन्महाकन्यां पद्मिनीं लक्ष्यमोहिनीम् ॥
रक्तविद्युल्लताकारां सर्व्वसौभाग्यवर्द्धिनीम् ।
तां दृष्ट्वा परमेशानि सहसा विस्मयं गता ॥

कीर्त्तिदोवाच ।

हे मातः पद्मिनीरूपे रूपं संहर संहर ।
ततस्तु परमेशानि ! तद्रूपं तत्क्षणात् प्रिये ! ॥
संहृत्य सहसा देवी सामान्यं रूपमास्थिता ।
ततस्तु कीर्त्तिदा देवी रूपन्तस्या व्यलोकयत् ॥
रक्तिमा कुसुमाकारा रक्तविद्युत्समप्रभा ॥

कन्योवाच ।

हे मातः कीर्त्तिदे भद्रे क्षीरं पायय सुन्दरि ! ।
स्तनं देहि स्तनं देहि तव कन्या भवाम्यहम् ॥
तच्छ्रुत्वा वचनं तस्याः पद्मिन्याः कमलेक्षणे ।
अपाययत् स्तनं तस्यै पद्मिन्यै गजगामिनि ॥
चकार नाम तस्यास्तु भानुः कीर्त्तिदयान्वितः ।
रक्तविद्युत्प्रभा देवी धत्ते यस्मात् शुचिस्मिते ।
तस्मात्तु राधिका नाम सर्व्वलोकेषु गीयते ॥

ईश्वर उवाच ।

दिने दिने वर्द्धमाना वृषभानुगृहे प्रिये ! ।
एवं माथुरपीठे च चकार ब्रजवासिनी ॥
तस्माद्भाद्रपदे मासि जाताऽभूत् कमलेक्षणा ॥

महादेव उवाच ।

श्रूयतां पद्मपत्राक्षि रहस्यं पद्मिनीमतम् ।
सम्प्राप्ते परमेशानि ! द्वितीये वत्सरे तदा ॥
कुर्य्यादृषभवेन देवेशि ! शिवलिङ्गप्रपूजनम् ।
प्रजपेत् परमां विद्यां कालीं ब्रह्माण्डरूपिणीम् ॥
पूजयेद्विविधैः पुष्पैर्गन्धैश्च सुमनोहरैः ।
चतुर्व्विधैश्च नैवेद्यैः पूजयेत् परमेश्वरीम् ॥

पद्मिन्युवाच ।

कात्यायनि महामाये महायोगिन्यधीश्वरि ! ।
देहि देहि महामाये विद्यासिद्धिमनुत्तमाम् ॥
सिद्धिश्च वासुदेवस्य देहि मातर्नमोऽस्तु ते ।
त्वां विना ब्रह्म निःशब्दं निश्चलं सततं सदा ॥
शरीरस्थं हि ज्ञानस्य ज्ञानं ज्योतिर्म्मयं सदा ।
विना देहं परं ब्रह्म शवरूपवदीरितम् ॥
अतएव महामाये ब्रह्मणः कारणं परा ।
एवं प्रार्थ्य महेशानि ! सततं परमेश्वरीम् ॥
संपूज्य परया भक्त्या लब्ध्वा चाप्तु मानवम् ।
वरं प्राप्ता महेशानि कात्यायन्याः समीपतः ॥

कात्यायन्युवाच ।

पद्मिनि शृणु मद्वाक्यं शीघ्रं प्राप्स्यसि केशवम् ।
इत्युक्त्वा परमेशानि ! तत्रैवान्तरधीयत ॥
कात्यायनी महामाया सदा वृन्दावनेश्वरी ।
वृषभानुसुता राधा सर्व्वाङ्गसुन्दरा सदा ॥
वर्द्धमाना सदा राधा यथा चन्द्रकला प्रिये ! ।
सर्व्वशृङ्गारवेशाढ्या स्फुरत्कमललोचना ॥
सर्व्वालङ्कारसंयुक्ता साक्षात् श्रीरिव पार्व्वति ।
चचार गहने घोरे पद्मिनी परसुन्दरी ॥
या राधा परमेशानि ! पद्मिनी परमेश्वरी ।
पद्मस्य वनमाश्रित्य सदा तिष्ठति कामिनी ॥
अन्यमूर्त्तिं महेशानि ! दृष्ट्वा चैवात्मसन्निभाम् ।
आत्मनः सदृशाकारां राधामन्यां ससर्ज सा ॥
या सा तु कृत्रिमा राधा वृषभानुगृहे सदा ।
अयोनिसम्भवा यास्तु पद्मिनी सा परात्परा ॥
कृत्रिमा या महेशानि ! तस्यास्तु चरितं
शृणु ।
वृषभानुर्महात्मा च तस्या वैवाहिकीं क्रियाम् ॥
कारयामास यत्नेन पञ्चवर्षे तु सुन्दरि ! ।
तस्यास्तु चोभयं वंशं सावधानावधारय ॥
श्वशुरस्य वृकस्यापि वंशं परमसुन्दरम् ।
श्वश्रूस्तु जटिला ख्याता पतिर्म्मान्योऽतिमन्युकः ॥
ननान्दा कुटिलानाम्नी देवरो दुर्म्मदाभिधः ।
तिलकं स्मरमदाख्यं हरोहरिमनोहरः ॥
रोचनो रत्नताड़ङ्कौ द्युमियुक्तप्रभाकरौ ।
कुम्भं दृष्ट्वा प्रतिच्छायं पद्मस्य मदनाभिधम् ॥
स्यमन्तकाख्यपर्य्यायः शङ्खचूड़शिरोमणिः ।
पुष्पवन्तोऽपि पदकः सौभाग्यमणिरच्यते ॥
काञ्ची काञ्चनचित्राङ्गि नूपुरे चित्रगोपुरे ।
मधुसूदनमावेद्या ययोः सिञ्जितमाधुरी ॥
वासो मेघाम्बरं नाम कुरुविन्दनिभं सदा ।
आद्यं सुप्रियमभावं रक्तमन्त्रं हरेः प्रियम् ॥
सुवर्णाक्षो दर्पणश्यो दर्पणो मणिबान्धवः ।
शलाका नर्म्मदा हैमी स्वस्तिका नाम कङ्कतिः ॥

कन्दर्पकुहरी नाम कलिका पुष्पभूषिता ।
सर्व्वसुखोलङ्घिनी कुञ्जा ख्याता चकुशलः ॥
नीपा नदीतटे यस्य रहस्यकथनस्थली ।
मन्दारश्च वसुः ख्यातो रागोऽस्त्युभयमन्दगौ ॥
क्षणिकं दयिता नित्यं वल्लभा वरवन्दकी ।
सख्यः ख्याताः सदा मनोवाद्यचन्द्रावलीमुखाः ॥
गन्धर्व्वास्तु कलाकण्ठी सुकण्ठी पिककण्ठिका ।
कलावती रसोल्लासा गुणवत्यादयः स्मृताः ॥
या विशाखालतागीतिसर्व्वस्य सुखदा हरेः ।
नादयन्त्यत्र सुषिरं ताललयघनन्त्वपि ॥
माणिक्या नर्म्मदा प्रेमवती कुसुमपेशलाः ।
दिवाकीर्त्तिसुते तु सुगन्धानलिनीसुमे ॥
मञ्जिष्ठा रङ्गवल्लाख्ये रजकस्य किशोरिके ।
पालिन्धिसमवैरिन्ध्री वृन्दाकन्दलतादयः ॥
धनिष्ठा गुणवत्याद्या धन्वेश्वरगेहगाः ।
कामधा नामधा प्रेष्ठा सखीभावविशेषभाक् ॥
लवङ्गमञ्जरी रागमञ्जरी गुणमञ्जरी ।
सुभानुसख्यनुपमा सुप्रिया रतिमञ्जरी ॥
रागलेखा कलाकेली भूरिदाद्याश्च नायिकाः ।
नान्दीमुखी बिन्दुमुखी आद्याः सन्धिविधा-
यिकाः ॥
सुहृत्पक्षतया ख्याताः श्यामला मङ्गलादयः ।
प्रतिपक्षतया श्रेष्ठा राधाचन्द्रावलीमुखे ॥
यमूथास्तु ययोः सन्ति कोटिसंख्यातमृगीदृशाम् ।
तयोरप्युभयोर्म्मध्ये सर्व्वमाधुर्य्यतोऽधिका ॥
श्रीराधा त्रिपुराकूती पुराणपुरुषप्रिया ।
असमानगुणोदर्य्या धूर्य्यो गोपेन्द्रनन्दनः ॥
यस्याः प्राकपराहीर्ना पराद्वीरतिवल्लभः ।
श्रेष्ठा सा मातृकादिभ्यश्च गोपेन्द्रगेहिनी ।
वृषभानुः पिता यस्या वृषभानुरिवो महान् ।
रत्नगर्भा क्षितौ ख्याता जननी कीर्त्तिदा यथा ॥
उपास्यो जगतां चक्षुर्भगवान् पद्मबान्धवः ।
जप्यः स्वाभीष्टसंसिद्ध्यै कात्यायन्या महामनुः ॥
पौर्णमासी भगवती सर्व्वसौभाग्यवर्द्धिनी ।
पितामहो महीभानुर्व्विन्दुर्मातामहो मतः ॥
मातामहीपितामह्यौ सुखदामोक्षदाभिधे ।
रत्नभानुः सुभानुश्च भानुश्च भ्रातरः पितुः ॥
भद्रकीर्त्तिर्महाकीर्त्तिः कीर्त्तिचन्द्रश्च मातुलः ।
स्वसा कीर्त्तिमती मातुर्भानुमुद्रा पितृष्वसा ॥
पितृष्वसृपतिः काशो मातृष्वसृपतिः कुशः ।
मातुली मेनकामेना षष्ठी धात्री तु धातकी ॥
श्रीदामा पूर्व्वजो भ्राता कनिष्ठानङ्गमञ्जरी ।
परमप्रेष्ठसख्यस्तु ललिता च विशाखिका ॥
चित्रा च चम्पकलता रङ्गदेवी सुदेविका ।
तुङ्गवेद्यङ्गलेखा च इत्यष्टौ च गणा मताः ॥
प्रियसख्यः कुरङ्गाक्षी मण्डली मानकुण्डला ।
मालती चन्द्रलतिका माधवामदनालसा ॥
मञ्जुमेधा शशिकला सुमध्या मधुमेक्षणा ।
कमला कामलतिका कान्तचूड़ा वराङ्गना ॥
मधुरी चन्द्रिका प्रेममञ्जरी तनुमध्यमा ।
कन्दर्पसुन्दरी मञ्जुकेशी चाद्यास्तु कोटिशः ॥
रक्ताशीर्षितपाख्याता कलिका केलिसुन्दरी ।

कादम्बरी शशिमुखी चन्द्ररेखा प्रियंवदा ।
मदोन्मादा मधुमती वासन्ती कलभाषिणी ।
रत्नवेणी मालवती कर्पूरतिलकादयः ॥
एता वृन्दावनेश्वर्य्याः प्रायः सारूप्यमागताः ।
नित्यसख्यस्तु कस्तूरी मनोज्ञा मणिमञ्जरी ॥
सिन्दूरा चन्दनवती कौमुदी मुदितादयः ।
कानना दिगताश्चास्या विहारार्थं कृता इव ॥
अथ तस्याः प्रकीर्त्त्यन्ते प्रेयस्यः परमाद्भुताः ।
वनादिष्वप्युरुप्रेमसौन्दर्य्यभरभूषिताः ॥
चन्द्रावली च पद्मा च श्यामा सैका च भद्रिका ।
तारा चित्रा च गन्धर्व्वी पालिका चन्द्रमालिका ॥
मङ्गला विमला नीला भवनाक्षी मनोरमा ।
कल्पलता तथा मञ्जुभाषिणी मञ्जुमेखला ॥
कुमुदा कैरवी पारी शारदाक्षी विशारदा ।
शङ्करी कुसुमा कृष्णा सारङ्गी प्रविलासिनी ॥
तारावती गुणवती सुमुखी केलिमञ्जरी ।
हारावली चकोराक्षी भारती कामिनीति च ॥
आसां यूथानि शतशः ख्यातान्यन्यानि सुभ्रुवाम् ।
लक्षसंख्यास्तु कथिता यूथे यूथे वराङ्गनाः ॥
मुख्यास्तु तेषु यूथेषु कान्ताः सर्व्वगुणोत्तमाः ।
राधा चन्द्रावली भद्रा श्यामला पालिकादयः ॥
जन्मनाचाथ सा ख्याता मधुमासि विशेषतः ।
पुष्यर्क्षे च नवम्यां वै शुक्लपक्षे शुचिस्मिते ॥
जाता राधा महेशानि स्वयं प्रकृतिपद्मिनी ।
तासु रेमे महेशानि स्वयं कृष्णः शुचिस्मिते ।
इमथं वासुदेवस्य मन्त्रसिद्धेस्तु कारणम् ॥
देव्युवाच ।
भो देव तापसां श्रेष्ठ विस्ताराद्वद ईश्वर ।
कथं सा पद्मिनी राधा सदा पद्मवने स्थिता ॥
पितरं मातरं त्यक्त्वा आत्मतुल्यां ससर्ज्ज सा ।
पद्ममाश्रित्य देवेश वृन्दावनविलासिनी ।
तदाख्याहि महेशानि एतद्गुह्यं वद प्रभो ! ॥"
इति वासुदेवरहस्ये राधातन्त्रे सप्तमः पटलः ॥
ईश्वर उवाच ।
"या राधा जगद्धात्राम्बि ! पद्मिनी विष्णुवल्लभा ।
महामाया जगद्धात्री त्रिपुरा परमेश्वरी ॥
तस्या दूती महेशानि पद्मिनी पद्मगन्धिनी ।
कृष्णस्य दृढभक्ता तु पद्मिनी तस्य वल्लभा ॥
वृषभानोर्म्महेशानि दृढभक्तिः शुचिस्मिते ।
दुहितृत्वं गता देवी पद्मिनी गन्धमालिनी ॥
ज्ञात्वा तु जनपार्श्वं हि राधामन्यां ससर्ज्ज सा ।
पद्मवनं समाश्रित्य यमुनाजलमध्यतः ॥
महाकाल्या महामन्त्रं प्रजपेन्निर्ज्जने वने ।
अन्या चन्द्रावली राधा वृषभानुगृहे स्थिता ॥
पूर्व्वोक्तं यद्गुणं देवि पद्मिनी कमलेक्षणे ।
तत् सर्व्वं पद्मिनीदत्तं नान्यथा परमेश्वरि ॥
राधिका त्रिविधा प्रोक्ता चन्द्रा तु पद्मिनी तथा ।
न पश्येत् परमेशानि चन्द्रकृष्णं शुचिस्मिते ॥
मानवानां महेशानि वराकाणां हि का कथा ।
आत्मनोऽपह्नवं ज्ञात्वा पद्मिनी पद्ममाश्रिता ।
त्रिपुराया महेशानि पद्मिनी अनुचारिणी ॥"
इति वासुदेवरहस्ये राधातन्त्रे अष्टमः पटलः ॥)

अस्याः सहस्रनामानि यथा,—
पार्व्वत्युवाच ।
"देवदेव जगन्नाथ भक्तानुग्रहकारक ।
यद्यस्ति मयि कारुण्यं यद्यस्ति मयि ते दया ॥
यद्यत् त्वया प्रगदितं तत् सर्व्वं मे श्रुतं प्रभो ।
गुह्यात् गुह्यतरं यत्तु यत्ते मनसि काङ्क्षते ॥
त्वया न गदितं यत्तु यस्मै कस्मै कदाचन ।
तन्मां कथय देवेश सहस्रं नाम चोत्तमम् ॥
श्रीराधाया महादेव्या गोप्या भक्तिप्रसाधनम् ।
ब्रह्माण्डकर्त्री हर्त्री सा कथं गोपीत्वमागता ॥
महादेव उवाच ।
शृणु देवि ! विचित्रार्थां कथां पापहरां शुभाम् ।
नास्ति जन्मानि कर्म्माणि तस्या नूनं महेश्वरि ! ॥
यदा हरिश्चरित्राणि कुरुते कार्य्यगौरवात् ।
तदा विधत्ते रूपाणि हरिसान्निध्यसाधिनी ॥
तस्या गोपीत्वभावस्य कारणं गदितं पुरा ।
इदानीं शृणु देवेशि ! नाम्नां चैव सहस्रकम् ॥
यन्मया कथितं नैव तन्त्रेष्वपि कदाचन ।
तव स्नेहात् प्रवक्ष्यामि भक्त्या धार्य्यं मुमुक्षुभिः ॥
मम प्राणसमा विद्या भाव्यते मे त्वहर्निशम् ।
शृणुष्व गिरिजे नित्यं पठस्व च यथामति ॥
यस्याः प्रसादात् कृष्णस्तु गोलोकेशः परः प्रभुः । * ।
अस्या नामसहस्रस्य ऋषिर्नारद एव च ॥
देवी राधा परा प्रोक्ता चतुर्व्वर्गप्रसाधिनी ।
श्रीराधा राधिका कृष्णवल्लभा कृष्णसंयुता ॥
वृन्दावनेश्वरी कृष्णप्रिया मदनमोहिनी ।
श्रीमती कृष्णकान्ता च कृष्णानन्दप्रदायिनी ॥
यशस्विनी यशोगम्या यशोदानन्दवल्लभा ।
दामोदरप्रिया गोपी गोपानन्दकरी तथा ॥
कृष्णाङ्गवासिनी हृद्या हरिकान्ता हरिप्रिया ।
प्रधाना गोपिका गोपकन्या त्रैलोक्यसुन्दरी ॥
वृन्दावनविहारी च विस्फूर्ज्जितमुखाम्बुजा ।
गोपकुलानन्दकर्त्री गोकुलानन्ददायिनी ॥
गतिप्रदा गीतगम्या गमनागमनप्रिया ।
विष्णुप्रिया विष्णुकान्ता विष्णोरङ्गनिवासिनी ॥
यशोदानन्दपत्नी च यशोदानन्दगेहिनी ।
कामारिकान्ता कामेशी कामलालसविग्रहा ॥
जयप्रदा जया जीवा जीवानन्दप्रदायिनी ।
यशोदानन्दपत्नी च वृषभानुसुता शिवा ॥
गणाध्यक्षा गवाध्यक्षा गवां गतिरनुत्तमा ।
काञ्चनाभा हेमगात्री काञ्चनाङ्गदधारिणी ॥
अशोका शोकरहिता विशोका शोकनाशिनी ।
गायत्री वेदमाता च वेदातीता विदुत्तमा ॥
नीतिशास्त्रप्रिया नीतिगतिर्म्मतिरभीष्टदा ।
वेदप्रिया वेदगर्भा वेदमार्गप्रवर्त्तिनी ॥
वेदगम्या वेदपरा विचित्रकनकोज्ज्वला ।
तथोज्ज्वलप्रदा नित्या तथैवोज्ज्वलगात्रिका ॥
नन्दप्रिया नन्दसुता राधानन्दप्रदा शुभा ।
शुभाङ्गी विमलाङ्गी च विलासिन्यपराजिता ॥
जननी जन्मशून्या च जन्ममृत्युजरापहा ।
गतिर्गतिमतां धात्री धात्रानन्दप्रदायिनी ॥
जगन्नाथप्रिया शैलवासिनी हेमसुन्दरी ।
विचित्रवासिनी चित्रवासिनी चित्ररूपिणी ॥
निर्गुणा सुकुलीना च निष्कुलीना निराकुला ।
गोकुलान्तरगेहा च योगानन्दकरी तथा ॥
वेणुवाद्या वेणुरतिर्व्वेणुवाद्यपरायणा ।
गोपालस्य प्रिया सौम्या रम्या सौम्यकुलोद्भवा ॥
अतिसौम्यातिमोहा च गतिरिष्टा गतिप्रदा ।
गीर्व्वाणवन्द्या गीर्व्वाणा गीर्व्वाणगणसेविता ॥
ललिता च विशोका च विशाखा चित्र-मालिनी ।
जितेन्द्रिया शुद्धसत्त्वा कुलीना कुलदीपिका ॥
दीपप्रिया दीपदात्री विमला विमलोदका ।
कान्तारवासिनी कृष्णा कृष्णचन्द्रप्रिया मतिः ॥
अनुत्तरा दुःखहन्त्री दुःखकर्त्री कुलोद्भवा ।
मतिर्ल्लक्ष्मीर्धृतिर्लज्जा कान्तिः पुष्टिः स्मृतिः क्षमा ॥
क्षीरोदशायिनी देवी देवारिकुलमर्द्दिनी ।
वैष्णवी च महालक्ष्मीः कुलपूज्या कुलप्रिया ॥
संहर्त्री सर्व्वदैत्यानां सावित्री वेदगामिनी ।
वेदातीता निरालम्बा निरालम्बगणप्रिया ॥
निरालम्बजनैः पूज्या निरालोका निराश्रया ।
एकाङ्गी सर्व्वगा सेव्या विष्णोः पत्नी सरस्वती ॥
रासप्रिया रासगम्या रासाधिष्ठातृदेवता ।
रसिका रसिकानन्दा स्वयं रासेश्वरी परा ॥
रासमण्डलमध्यस्था रासमण्डलशोभिता ।
रासमण्डलसेव्या च रासक्रीड़ामनोहरा ॥
पुण्डरीकाक्षनिलया पुण्डरीकाक्षगेहिनी ।
पुण्डरीकाक्षसेव्या च पुण्डरीकाक्षवल्लभा ॥
सर्व्वजीवेश्वरी सर्व्वजीववन्द्या परात्परा ।
प्रकृतिः शम्भुकान्ता च सदाशिवमनोहरा ॥
क्षुत् पिपासा दया निद्रा भ्रान्तिः श्रान्तिः क्षमा कुला ।
विधुरूपा गोपपत्नी भारती सिद्धयोगिनी ॥
सत्यरूपा नित्यरूपा नित्याङ्गी नित्यगेहिनी ।
स्थानदात्री तथा धात्री महालक्ष्मीः स्वयंप्रभा ॥
सिन्धुकन्या स्थानदात्री द्वारकावासिनी तथा ।
बुद्धिः स्थितिः स्थानरूपा सर्व्वकारणकारणम् ॥
भक्तप्रिया भक्तगम्या भक्तानन्दप्रदायिनी ।
भक्तकल्पद्रुमातीता तथातीतगुणा तथा ॥
मनोऽधिष्ठातृदेवी च कृष्णप्रेमपरायणा ।
निरामया सौम्यदात्री तथा मदनमोहिनी ॥
एकानंशा शिवा क्षेमा दुर्गा दुर्गतिनाशिनी ।
ईश्वरी सर्व्ववन्द्या च गोपनीया शुभङ्करी ॥
पालिनी सर्व्वभूतानां तथा कामाङ्गहारिणी ।
सद्योमुक्तिप्रदा देवी वेदसारा परात्परा ॥
हिमालयसुता सर्व्वा पार्व्वती गिरिजा सती ।
दक्षकन्या देवमाता मन्दलज्जा हरेस्तनुः ॥
वृन्दारण्यप्रिया वृन्दा वृन्दावनविलासिनी ।
विलासिनी वैष्णवी च ब्रह्मलोकप्रतिष्ठिता ॥
रुक्मिणी रेवती सत्यभामा जाम्बवती तथा ।
सुलक्ष्मणा मित्रविन्दा कालिन्दी जह्नुकन्यका ॥

परिपूर्णा पूर्णतरा तथा हैमवती गतिः ।
अपूर्वा ब्रह्मरूपा च ब्रह्माण्डपरिपालिनी ॥
ब्रह्माण्डभाण्डमध्यस्था ब्रह्माण्डभाण्डरूपिणी ।
अण्डरूपाण्डमध्यस्था तथाण्डपरिपालिनी ॥
अण्डबाह्याण्डसंहर्त्री शिवब्रह्महरिप्रिया ।
महाविष्णुप्रिया कल्पवृक्षरूपा निरन्तरा ॥
सारभूता स्थिरा गौरी गौराङ्गी शशिशेखरा ।
श्वेतचम्पकवर्णाभा शशिकोटिसमप्रभा ॥
मालतीमाल्यभूषाढ्या मालतीमाल्यधारिणी ।
कृष्णस्तुता कृष्णकान्ता वृन्दावनविलासिनी ॥
तुलस्यधिष्ठातृदेवी संसारार्णवपारदा ।
सारदा शारदा गोपनन्दिनी सर्वसिद्धिदा ॥
अतीतगमना गौरी परानुग्रहकारिणी ।
करुणार्णवसंपूर्णा करुणार्णवधारिणी ॥
माधवी माधवमनोहारिणी श्यामवल्लभा ।
अन्धकारभयध्वस्ता मङ्गल्या मङ्गलप्रदा ॥
श्रीगर्भा श्रीप्रदा श्रीशा श्रीनिवासाच्युतप्रिया ।
श्रीरूपा श्रीहरा श्रीदा श्रीकामा श्रीस्वरूपिणी ॥
श्रीदामानन्ददात्री च श्रीदामेश्वरवल्लभा ।
श्रीनितम्बा श्रीगणेशा श्रीस्वरूपाश्रिता श्रुतिः ॥
श्रीक्रियारूपिणी श्रीला श्रीकृष्णभजनान्विता ।
श्रीराधा श्रीमतिः श्रेष्ठा श्रेष्ठरूपा श्रुतिप्रिया ॥
योगेशा योगमाता च योगातीता युगप्रिया ।
योगप्रिया योगगम्या योगिनीगणवन्दिता ॥
जवाकुसुमसङ्काशा दाडिमीकुसुमोपमा ।
नीलाम्बरधरा धात्री धैर्यरूपा धरा धृतिः ॥
रत्नसिंहासनस्था च रत्नकुण्डलभूषिता ।
रत्नालङ्कारसंयुक्ता रत्नमाल्यधरा परा ॥
रत्नेन्द्रसारहाराढ्या रत्नमालाविभूषिता ।
इन्द्रनीलमणिन्यस्तपादपद्मा शुभा शुचिः ॥
कार्त्तिकी पौर्णमासी च अमावस्या भयापहा ।
गोविन्दराजगृहिणी गोविन्दराजपूजिता ॥
गोविन्दार्पितचित्ता च गोपीजनगणान्विता ।
वैकुण्ठनाथगृहिणी गोविन्दपरमानसा ॥
गोविन्ददेवदेवाढ्या तथा वैकुण्ठसुन्दरी ।
मानदा या वेदवती सीता साध्वी पतिव्रता ॥
अन्नपूर्णा सदानन्दरूपा कैवल्यसुन्दरी ।
कैवल्यदायिनी श्रेष्ठा गोपीनाथमनोहरा ॥
गोपीनाथेश्वरी चण्डी नायिका नयनान्विता ।
नायका नायकप्रीता नायकानन्दरूपिणी ॥
शेषा शेषवती शेषरूपा चैव जगन्मयी ।
गोपालपालिका माया नन्दजाया तथा परा ॥
कुमारी यौवनानन्दी युवती गोपसुन्दरी ।
गोपमाता जानकी च जनकानन्दकारिणी ॥
कैलासवासिनी रम्भा हरतोषणतत्परा ।
हरेश्वरी रामरता रामरामेश्वरी रमा ॥
श्यामला चित्रलेखा च तथा भुवनमोहिनी ।
सुगोप्या गोपवनिता गोपराज्यप्रदा शुभा ॥
आनन्दपूर्णा माहेशी मत्स्यराजसुता सती ।
कौमारी नारसिंही च वाराही नवदुर्गिका ॥
चञ्चलाचञ्चला मोदा नारी भुवनसुन्दरी ।
दक्षयज्ञहरा दाक्षी दक्षकन्या सुलोचना ॥

रतिरूपा रतिप्रीता रतिश्रेष्ठा रतिप्रदा ।
रतिलक्ष्मणगेहस्था विरजा भुवनेश्वरी ॥
शङ्खास्पदा हरेर्जाया जामातृकुलवन्दिता ।
बकुला बकुलामोदधारिणी यमुना जया ॥
विजया जयपत्नी च यमलार्जुनभञ्जिनी ।
वक्रेश्वरी वक्ररूपा वक्रवीणावरोचिता ॥
अपराजिता जगन्नाथा जगन्नाथेश्वरी मतिः ।
खेचरी खेचरसुता खेचरत्वप्रदायिनी ॥
विष्णुवक्षःस्थलस्था च विष्णुभावनतत्परा ।
चन्द्रकोटिसुगात्रा च चन्द्राननमनोहरा ॥
सेव्यसेव्या शिवा क्षेमा तथा क्षेमङ्करी वधूः ।
यादवेन्द्रवधूः शैव्या शिवभक्ता शिवान्विता ॥
केवला निष्कला सूक्ष्मा महाभीमा भयप्रदा ।
जीमूतरूपा जैमूती जिता मित्रप्रमोदिनी ॥
गोपालवनितानन्दा कुलजेन्द्रनिवासिनी ।
जयन्ती यमुनाङ्गी च यमुनातोषकारिणी ॥
कलिकल्मषभङ्गा च कलिकल्मषनाशिनी ।
कलिकल्मषरूपा च नित्यानन्दकरी कृपा ॥
कृपावती कुलवती कैलासाचलवासिनी ।
वामदेवी वामभागा गोविन्दप्रियकारिणी ॥
नगेन्द्रकन्या योगेशी योगिनी योगरूपिणी ।
योगसिद्धा सिद्धरूपा सिद्धक्षेत्रनिवासिनी ॥
क्षेत्राधिष्ठातृरूपा च क्षेत्रातीता कुलप्रदा ।
केशवानन्ददात्री च केशवानन्ददायिनी ॥
केशवा केशवप्रीता केशवी केशवप्रिया ।
रासक्रीडाकरी रासवासिनी राससुन्दरी ॥
गोकुलान्वितदेहा च गोकुलत्वप्रदायिनी ।
लवङ्गनाम्नी नारङ्गी नारङ्गकुलमण्डना ॥
एलालवङ्गकर्पूरमुखवासमुखान्विता ।
मुख्या मुख्यप्रदा मुख्यरूपा मुख्यप्रदायिनी ॥
नारायणी कृपा राधा करुणा करुणामयी ।
कारुण्या करुणाकर्णी गोकर्णा नागकर्णिका ॥
सर्पिणी कौलिनी क्षेत्रवासिनी च जगन्मयी ।
जटिला कुटिला नीला नीलाम्बरधरा शुभा ॥
नितम्बिनी रूपवती युवती कृष्णपीवरी ।
विभावरी वेदवती संकटा कुटिलालका ॥
नारायणप्रिया शैला सृक्वणीपरिमोहिता ।
दृक्पातमोहिता प्रातराशितनवनीतिका ॥
नवीना नवनारी च नारङ्गफलशोभिता ।
हैमी हेममुखी चन्द्रमुखी शशिसुशोभना ॥
अर्द्धचन्द्रधरा चन्द्रवल्लभा रोहिणी तिमिः ।
तिमिङ्गिलकुलामोदमत्स्यरूपाङ्गहारिणी ॥
कारणी सर्वभूतानां कार्य्यातीता किशोरिणी ।
किशोरवल्लभा केशकारिका कामकारिका ॥
कामेश्वरी कामकला कालिन्दीकूलदीपिका ।
कलिन्दतनयातीरवासिनी तीर्थगेहिनी ॥
कादम्बरीपानपरा कुसुमामोदधारिणी ।
कुमुदा कुमुदानन्दा कृष्णेशी कामवल्लभा ॥
तर्काली वैजयन्ती च निम्बदाडिमरूपिणी ।
बिल्ववृक्षप्रिया कृष्णाम्बरा बिल्वोपमस्तनी ॥
बिल्वात्मिका बिल्ववपुर्बिल्ववृक्षनिवासिनी ।
तुलसी तोषिका चैव तैतिलानन्दकारिणी ॥

गजेन्द्रगामिनी श्यामलतानङ्गलता तथा ।
योषिच्छक्तिस्वरूपा च योषिदानन्दकारिणी ॥
प्रेमप्रिया प्रेमरूपा प्रेमानन्दतरङ्गिणी ।
प्रेमहरा प्रेमदात्री प्रेमशक्तिमयी तथा ॥
कृष्णप्रेमवती धन्या कृष्णप्रेमतरङ्गिणी ।
प्रेमार्थदायिनी सर्वश्वेता नित्यतरङ्गिणी ॥
हावभावान्विता रौद्रा रुद्रानन्दप्रकाशिनी ।
कपिला शृङ्खला केशपाशसम्बन्धिनी घटी ॥
कुटीरवासिनी धूम्रा धूम्रकेशा जलोदरी ।
ब्रह्माण्डगोचरा ब्रह्मरूपिणी भवभाविनी ॥
संसारनाशिनी शैवा शैवानन्दप्रदायिनी ।
शिशिरा हेमरागाढ्या मेघरूपातिसुन्दरी ॥
मनोरमा वेगवती वेगाढ्या वेदवादिनी ।
दयान्विता दयाधारा दयारूपा सुसेविनी ॥
किशोरसङ्गसंसर्गा गौरचन्द्रानना कला ।
कलाधिनाथवदना कलानाथाधिरोहिणी ॥
विरागकुशला हेमपिङ्गला हेममण्डला ।
भाण्डीरतालवनगा कैवर्त्ती पीवरी शुकी ॥
शुकदेवगुणातीता शुकदेवप्रियासखी ।
विकलोत्कर्षिणी कोषा कौषेयाम्बरधारिणी ॥
कोषावरी कोषरूपा जगदुत्पत्तिकारिका ।
सृष्टिस्थितिकरी संहारिणी संहारकारिणी ॥
केशशैवालधात्री च चन्द्रगात्रा सुकोमला ।
पद्माङ्गरागसंरागा विन्ध्याद्रिपरिवासिनी ॥
विन्ध्यालया श्यामसखी सखी संसाररागिणी ।
भूता भविष्या भव्या च भव्यगात्रा भवातिगा ॥
भवनाशान्तकारिण्याकाशरूपा सुवेशिनी ।
रतिरङ्गपरित्यागा रतिवेगा रतिप्रिया ॥
तेजस्विनी तेजरूपा कैवल्यपथदा शुभा ।
मुक्तिहेतुर्मुक्तिहेतुलङ्घिनी लङ्घना क्षमा ॥
विशालनेत्रा वैशाली विशालकुलसम्भवा ।
विशालगृहवासा च विशालबदरीरतिः ॥
भक्त्यतीता भक्तिगतिर्भक्तिवाच्या भवाकृतिः ।
वामाङ्गहारिणी विष्णोः शिवभक्तिसुखा-
न्विता ॥
विजिताविजिता मोदगणा च गणतोषिता ।
हयास्या हेरम्बसुता गणमाता सुखेश्वरी ॥
दुःखहन्त्री दुःखहरा सेवितेप्सितसर्वदा ।
सर्वाङ्गाशुविधात्री च कुलक्षेत्रविनाशिनी ॥
लवङ्गा पाण्डवसखी सखीमध्यविलासिनी ।
ग्राम्यगीता गया गम्या गमनातीतनिर्भरा ॥
सर्वाङ्गसुन्दरी गङ्गा गङ्गाजलमयी तथा ।
गङ्गेरिता पूतगात्रा पवित्रकुलदीपिका ॥
पवित्रगुणशीलाढ्या पवित्रानन्ददायिनी ।
पवित्रगुणसीमाढ्या पवित्रकुलपाविका ॥
गतिस्था गीतकुशला दनुजेन्द्रनिवारिणी ।
निर्व्याजदात्री नैवाली हेतुयुक्तागमोत्तरा ॥
पर्वताधिनिवासा च निवासकुशला तथा ।
सन्न्यासधर्मकुशला सन्न्यासी फलदा शुभा ॥
शरच्चन्द्रमुखी श्यामहारा क्षेत्रनिवासिनी ।
वसन्तरागा सुश्रोणी वसन्तवसनाकृतिः ॥
चतुर्भुजा षड्भुजा च द्विभुजा गौरविग्रहा ।

चन्द्राख्या विशाखा च शुभाख्या शुभदायिनी।
प्राणप्रिया प्राणरूपा प्राणरूपिण्युपाहृता ।
कृष्णप्रीता कृष्णरता कृष्णतोषणतत्परा ॥
कृष्णप्रेमवती कृष्णभक्ता भक्तफलप्रदा ।
कृष्णप्रेमप्रेमभक्ता हरिभक्तिप्रदायिनी ॥
चैतन्यरूपा चैतन्यप्रिया चैतन्यरूपिणी ।
उग्ररूपा शिवक्रोडा कृष्णक्रोडा जलोदरी ॥
महोदरी महादुर्गकान्तारस्थनवासिनी ।
चन्द्रावली चन्द्रकेशी चन्द्रप्रेमतरङ्गिणी ॥
समुद्रान्तररूपा च समुद्रजलवासिका ।
केशपाशरता निद्रा क्षुधा प्रेमरसात्मिका ॥
दूर्वादलश्यामतनुर्दूर्वादलतनुच्छविः ।
नागरा नागरीराज्ञा नागरानन्दकारिणी ॥
नागरालिङ्गनपरा नागराङ्गनमङ्गला ।
उच्चनीचा हैमवती प्रियाकृष्णतरङ्गिणी ॥
प्रेमालिङ्गनसिद्धाङ्गी सिद्धसाध्यविलासिका ।
मङ्गला मोदजननी मेखला मोदधारिणी ॥
रत्नमञ्जीरभूषाङ्गी रत्नभूषणभूषणा ॥
जम्बालमालिका कृष्णप्राणा प्राणविमोचना ॥
सत्यप्रदा सत्यवती सेवकानन्ददायिका ।
जगद्योनिर्जगद्बीजा विचित्रमणिभूषणा ॥
राधारमणकान्ता च राध्याराधनरूपिणी ।
कैलासवासिनी कृष्णप्राणसर्वस्वदायिनी ॥
कृष्णावतारनिरता कृष्णभक्तफलार्थिनी ।
याचका याचकानन्दकारिणी याचकोज्ज्वला ॥
हरिभूषणभूषाढ्या नन्दयुक्ता कृपापगा ।
हैहैतालधरा थैथैशब्दशक्तिप्रकाशिनी ।
हेहेशब्दस्वरूपा च हीहीवाक्यविशारदा ॥
जगदानन्दकर्त्री च सान्द्रानन्दविशारदा ॥
पण्डिता पण्डितगुणा पण्डितानन्दकारिणी ।
परिपालनकर्त्री च तथा स्थितिविनोदिनी ॥
तथा संहारशब्दाढ्या विद्वज्जनमनोहरा ।
विदुषां प्रीतिजननी विद्वत्प्रेमविवर्द्धिनी ॥
नादेशी नादरूपा च नादबिन्दुविधारिणी ।
शून्यस्थानस्थिता शून्यरूपा पादपवासिनी ॥
कार्तिकव्रतकर्त्री च वसनाहारिणी खरा ।
जलशया जलतलगी शिलातलनिवासिनी ॥
क्षुद्रकीटाङ्गसंसर्गसङ्गदोषविनाशिनी ।
कोटिकन्दर्पलावण्या कन्दर्पकोटिसुन्दरी ॥
कन्दर्पकोटिजननी कामबीजप्रदायिनी ।
कामशास्त्रविनोदा च कामशास्त्रप्रकाशिनी ॥
कामप्रकाशिका कामिन्यणिमाद्यष्टसिद्धिदा ।
यामिनी यामिनीनाथवदना यामिनीश्वरी ॥
योगेश्वरी हरयोगमुक्तिदात्री हिरण्यदा ।
कपालमालिनी देवी धामधामस्वरूपदा ॥
कृपान्वितगुणा गौण्या गुणातीता फलप्रदा ।
कुष्माण्डभूतवेतालनाशिनी शारदान्विता ॥
शीताशीता च सरला लीलालावण्यमङ्गला ।
विद्यार्थिविद्या माया च विद्याविद्यास्वरूपिणी ॥
आन्वीक्षिकी शास्त्ररूपा शास्त्रसिद्धान्त-
कारिणी ।
नागेन्द्राणी नागमाता क्रीडाकौतुकरूपिणी ॥
हरिभावनशीला च हरितोषणतत्परा ।
हरिप्राणा हरप्राणा शिवप्राणा शिवान्विता ॥
नरकार्णवसंहन्त्री नरकार्णवनाशिनी ।
नरेश्वरी नरातीता नरसेव्या नराङ्गना ॥
यशोदानन्दिनीक्रीडा यशोदाक्रोडवासिनी ।
यशोदानन्दनप्राणा यशोदानन्दनार्थदा ॥
वत्सला कोशला काला करुणार्णवरूपिणी ।
स्वर्गलक्ष्मीर्भूमिलक्ष्मीर्द्रौपदी पाण्डवप्रिया ॥
तथार्जुनसखी भौमी भीमा भैमी भयानका ।
विजयक्षोभिणी क्षीणा प्राणाधिकतरा तथा ॥
पानार्थिनी पानपात्रा पानपानन्ददायिनी ।
दुग्धमन्थनकर्माढ्या दधिमन्थनतत्परा ॥
दधिभाण्डार्थिनी कृष्णक्रोधिनी नन्दनाङ्गना ।
घृतलिप्ता तक्रयुक्ता यमुनापारकौतुका ॥
विचित्रकर्मिका कृष्णहास्यभावनतत्परा ।
गोपाङ्गनावेष्टिता च कृष्णसङ्गार्थिनी तथा ॥
रासयुक्ता रासरतिरासवासक्तवासना ।
हरिद्रा हरितारूपा हरार्पितचेतना ॥
निश्चेतना च निश्चिन्ता तथा दारुहरिद्रिका ।
सुबलस्य स्वसा चैव कृष्णभार्यातिवेगिनी ॥
श्रीदामस्य सखी दामदामिनी दामधारिणी ।
मल्लिकोल्लासिनी केशी हरिदम्बरधारिणी ॥
हरिवाञ्छितदात्री च हरिकौतुकमङ्गला ।
हरिप्रदा हरिप्राणा यमुनाजलवासिनी ॥
तपःप्रदा जितार्था च चतुरा चातुरीतमी ।
तमिस्रा तपरूपा च रौद्ररूपा यशोऽर्थिनी ॥
कृष्णकामा कृष्णभक्ता कृष्णानन्दप्रदायिनी ।
कृष्णार्थवासना कृष्णरागिणी भाविनी तथा ॥
कृष्णार्थरहिता भक्ता भक्ताभक्तसुभक्तिदा ।
श्रीकृष्णरहिता दीना विरहिणी हरेः प्रिया ॥
मथुरा मधुराराजगेहभावनभाजना ।
श्रीकृष्णभावनामोदा तस्योन्मादविधायिनी ॥
कृष्णार्थव्याकुला कृष्णसारचर्मधरा शुभा ।
अलकेश्वरपूज्या च कुबेरेश्वरवल्लभा ॥
धनधान्यविधात्री च जया काया हया हयी ।
प्रणवा प्रणवेशी च प्रणवार्थस्वरूपिणी ॥
ब्रह्मविष्णुशिवार्द्धाङ्गहारिणी शैवशिंशपा ।
राक्षसीनाशिनी भूतप्रेतप्राणविनाशिनी ॥
सकलेप्सितदात्री च शची साध्वी अरुन्धती ।
पतिव्रता पतिप्राणा पतिवाक्यविनोदिनी ॥
अशेषसाधिनी कल्पवासिनी कल्परूपिणी ॥
इत्येतत् कथितं देवि ! राधानामसहस्रकम् ।
यः पठेत् पाठयेद्वापि तस्य तुष्यति माधवः ॥
किं तस्य यमुनाभिर्वा नदीभिः सर्व्वतः प्रिये ।
कुरुक्षेत्रादितीर्थेन यस्य तुष्टो जनार्द्दनः ॥
स्तोत्रस्यास्य प्रसादेन किं न सिध्यति भूतले ॥
ब्राह्मणो ब्रह्मवर्च्चस्वी क्षत्रियो जगतीपतिः ।
वैश्यो निधिपतिर्भूयात् शूद्रो मुच्येत जन्मतः ॥
ब्रह्महत्या सुरापानमित्यादीन्यतिपापतः ।
सद्यो मुच्येत देवेशि ! सत्यं सत्यं न संशयः ॥
राधानामसहस्रस्य समानं नास्ति भूतले ।
स्वर्गे वाप्यथ पाताले गिरौ वा जलतोऽपि वा ॥
नातः परं शुभं स्तोत्रं तीर्थं नातः परं परम् ।
एकादश्यां शुचिर्भूत्वा यः पठेत् सुसमाहितः ॥
तस्य सर्व्वार्थसिद्धिः स्यात् शृणुयाद्वा सुशोभने ।
द्वादश्यां पौर्णमास्यां वा तुलसीसन्निधौ शिवे ! ॥
यः पठेत् शृणुयाद्वापि तस्य तत्तत् फलं शृणु ।
अश्वमेधं राजसूयं बार्हस्पत्यं तथाविधम् ॥
अतिरात्रं वाजपेयं अग्निष्टोमं तथा शुभम् ।
कृत्वा यत्फलमाप्नोति श्रुत्वा तत्फलमाप्नुयात् ॥
कार्त्तिके चाष्टमीं प्राप्य पठेद्वा शृणुयादपि ।
सहस्रयुगकल्पान्तं वैकुण्ठवसतिं लभेत् ॥
ततश्च ब्रह्मभवने शिवस्य भवने पुनः ।
सुराधिनाथभवने पुनर्याति सलोकताम् ॥
गङ्गातीरं समासाद्य यः पठेत् शृणुयादपि ।
विष्णोः स्वरूपतां याति सत्यं सत्यं सुरेश्वरि ! ॥
मम वक्त्रगिरेर्जाता पार्व्वतीवदनाश्रिता ।
राधानामसहस्राख्या नदी त्रैलोक्यपावनी ॥
पठ्यतेऽहि मयानित्यं भक्त्या शक्त्या यथोचितम् ।
मम प्राणसमं ह्येतत् तव भक्त्या प्रकाशितम् ॥
नाभक्ताय प्रदातव्यं पाषण्डाय कदाचन ।
नास्तिकाय विरागाय रागयुक्ताय सुन्दरि ! ॥
तथा देयं महास्तोत्रं हरिभक्ताय शङ्करि ! ।
वैष्णवेषु यथाशक्तिदात्रे पुण्यार्थशालिने ॥
राधानामसुधावारि मम वक्त्रं महाखनिः ।
उद्धृतं हि मया यत्नात् पाता सद्वैष्णवा-
जनाः ॥

विशुद्धसत्त्वाय यथार्थवादिने
द्विजस्य सेवानिरताय मन्त्रिणे ।
दाने यथाशक्ति सुभक्तिमानसे
राधापदध्यानपराय शोभने ॥

हरिपादाब्जमधुपमनोभूताय मानसि ।
राधापादसुधास्वादशालिने वैष्णवाय च ॥
दद्यात् स्तोत्रं महापुण्यं हरिभक्तिप्रसाधनम् ।
जन्मान्तरं न तस्यास्ति राधाकृष्णपदार्थिनः ॥
मम प्राणा वैष्णवा हि तेषां रक्षार्थमेव हि ।
शूलं मया धार्य्यते हि नान्यथा मैत्रकारणम् ॥
हरिभक्तिद्विषामर्थे शूलं संधार्य्यते मया ।
शृणु देवि यथार्थं मे गदितं त्वयि सुव्रते ! ॥
भक्तासि मे प्रियासि त्वमतः स्नेहात् प्रका-
शितम् ।
कदापि नोच्यते देवि मया नामसहस्रकम् ॥
किं परं त्वां प्रवक्ष्यामि प्राणतुल्यं मम प्रिये ।
स्तोत्रं मन्त्रं राधिकाया मन्त्रं कवचमेव हि ॥”
इति नारदपञ्चरात्रे राधिकासहस्रनामसमा-
प्तोऽध्यायः ॥*॥ ( राधातन्त्रोक्तसहस्रनामस्तोत्रं
यथा,—

ईश्वर उवाच ।

“इति ते कथितं देवि किमन्यत् कथयामि ते ।
श्रोत्री त्वं परमेशानि अहं वक्ता च शाश्वतः ॥

देव्युवाच ।

कियदन्यन्महादेव पृच्छामि यदि रोचते ।
हृदये तव देवेश नामानन्तानि सन्ति वै ॥
नामानन्तानि मन्त्राणि रहस्यानि पृथक् पृथक् ।

बहूनि तव देवेश श्रुतानि देव सुव्रत।
कृपया परमेशान कथयस्व दयानिधे॥

ईश्वर उवाच।

पद्मिन्या: परमेशानि रहस्यं नास्ति सुन्दरी।
अपि सर्वं महेशानि कथितं परमेश्वरि॥
किञ्चिदन्यन्महेशानि नास्ति मे गोचरे प्रिये।
यद्यदस्ति महेशानि रहस्यं कथितं मया॥

देव्युवाच।

पद्मिन्या: परमेशान रहस्यं कथय प्रभो।
यदि नो कथ्यते देव त्यजामि विग्रहं तदा॥

ईश्वर उवाच।

शृणु प्रिये वरारोहे एतत् प्रौढं कथं तव।
प्रौढत्वं यदि चार्वङ्गि रहस्यं कथयामि ते॥
रहस्यं शृणु चार्वङ्गि स्तोत्रं परमदुर्लभम्।
स्तोत्रं सहस्रनामाख्यं उपविद्यासु सम्मतम्॥
उपविद्यासु देवेशि अतिगुह्यं मनोहरम्।
एतत् स्तोत्रं महेशानि पद्मिनीसम्मतं सदा॥
एतत्तु पद्मिनीस्तोत्रमाश्चर्य्यं परमाद्भुतम्।
यत्रोक्तं सर्वतन्त्रेषु तव भक्त्या प्रकाशितम्॥

अस्य श्रीपद्मिनीसहस्रनामस्तोत्रस्य श्रीकृष्णऋषिर्म्महेश्वरमहिम्नाधिष्ठात्री देवता गायत्रीच्छन्दो महाविद्यासिद्ध्यर्थे विनियोग:। ॐ ह्रीं ऐं पद्मिन्यै राधिकायै। राधा रमणीरूपा निरुपमरूपवती रूपधन्या वत्सा वामा रजोगुणा।

रक्ताङ्गी रक्तपुष्पाभा राधा रासपरायणा।
रम्भावती रूपशीला रमणी रङ्गिणी रति:॥
रतिप्रिया रमणीया रसपूर्णा रसायना।
रासमध्ये रासरूपा रसवेशा रसोत्सुका॥
रसवती रसोल्लासा रसिका रसभूषणा।
रत्नमालाधरी रङ्गी रत्नछत्रपरिच्छदा॥
कमला कमलालिका कुलव्रतपरायणा।
कामिनी कमला कुन्ती कलिकल्मषनाशिनी।
कुलिना कुलवती कामी कामचन्दीमणी तथा॥
कौमारी कलवनिता कामार्त्ता कामरूपिणी।
कातुकी कमुकन्नी च कुलश्री कुलपण्डिता॥
लावण्या लग्नाङ्गी च लावण्यपरिच्छदा।
कान्ता कामस्वरूपा च कामरूपा लपावती॥
खेमा खमामती चैव खेलतृष्णागगामिनी।
खञ्जा खगा खगस्थात्री खगमध्य विहारिणी॥
गरिष्ठा गरिमा गङ्गा गया गोदावरी गति:।
गान्धारी गुणिनी गौरी गङ्गा गोकुलवासिनी॥
गान्धर्व्वी गानकुशला गुणा गुणविलासिनी।
घर्घरा घर्मदा घर्मा घनदा घनवासिनी॥
घृणा घृणावती घोरा घोरकर्मविवर्ज्जिता।
चन्द्रा चन्द्रप्रभा चैव चन्द्रमूर्तिपरिच्छदा॥
चन्द्ररूपा च चन्द्राख्या चपला चारुभूषणा।
चतुरा चारुशीला च चम्पा चम्पावती तथा॥
चन्द्ररेखा चन्द्रकला चारुवेशा विनोदिनी।
चन्द्रचन्दनभूषाङ्गी चार्व्वङ्गी चन्द्रभूषणा॥
चित्रिणी चित्ररूपा च चित्रमूर्तिधरा सदा।
छद्मरूपा छद्मवेशी चेतश्छलविधारिणी॥

छलालया च छलाङ्गी छलशी छलघातिनी।
छुरिकाकलधारीया छद्मवेशनिवासिनी॥
छटोज्ज्वलमरालीया छटोज्ज्वलविभूषिता।
जयन्ती च जगन्माता जननी जन्मदायिनी॥
जया जैत्री च जरती जीवनी जगदम्बिका।
जीवा जीवस्वरूपा च जाड्यविध्वंसकारिणी॥
जगज्जनिर्ज्जनमेता जगद्भीतुर्ज्जगज्जयी।
जगदानन्दजननी जयिनी जगदाश्रया॥
झङ्कारवादिनी झञ्झा झङ्कारनिर्झरावती।
टङ्कारटङ्किनी टङ्का टङ्किता टङ्करूपिणी॥
डम्बरा डम्बरा डम्बा डमरुका च डम्बुरा।
ढौकिताशेषनिर्व्वाणा ढक्कढौकितलोचना॥
तापिनी त्रिपथा तीर्थवासिनी त्रिदशेश्वरी।
त्रिलोकजयी त्रैलोक्यतरणी तरणे तव:॥
तापहन्त्री तपा तापा तपनीया तपावती।
तापिनी त्रिपुरादेवी त्रिपुराज्ञाकरी सदा॥
त्रिलक्षा तारिणी तारा तारामायकमोहिनी।
त्रैलोक्यगमना तीर्था तुष्टिता त्वरिता त्वरा॥
त्वष्टा तरङ्गिणी तीर्था त्रिविक्रमविहारिणी।
तमोमयी तामसी च तपस्या तपस: फला॥
त्रैलोक्यव्यापिनी तुष्टा त्वभिस्तुष्टा तुला तथा।
त्रैलोक्यमोहिनी तूर्णा त्रैलोक्यविभवप्रदा॥
त्रिपदी च तथा तथ्या तिमिरध्वंसचन्द्रिका।
तेजोरूपा तप:पारा त्रिपुरा त्रिपदर्च्चिता॥
त्रयी तन्वी तापहरा तपनाङ्गजवासिनी।
तरिकारविनाशया तपिता तरुणीप्रिया॥
तीव्रपापहरातुल्यातुलपापसमन्वपात्।
दारिद्र्यनाशिनी दात्री दम्भा देया दयावती॥
दिव्या दिव्यस्वरूपा च दीप्यादत्या दया दया।
दिव्यरूपा दिव्यमूर्तिर्दैत्येन्द्रप्राणनाशिनी॥
दुता च दुतरूपा च दन्दशूकविनाशिनी।
दुर्म्मारादमनीया च देवकार्यकरी सदा॥
देवप्रिया देवमान्या देवा देवधिया सदा।
दिक्पालपददात्री च दीर्घाद्या दीर्घलोचना॥
दुष्टदेवकामदुघा दोग्ध्री दूषणवर्ज्जिता।
दुग्धा शुभदग्धाभावा दिव्या दिव्यगतिप्रिया॥
दुन्दुदी दीनप्ररक्षा दिव्या देवविहारिणी।
दुर्गमा दर्शिमा दामा दूरघ्नी दूरवासिनी॥
दुर्व्विगाह्या दयाधारा दूरसन्तापनाशिनी।
दुराश्रया दुराधारा द्राविणी दुहितसुता॥
दैत्यशुद्धिकरी देवी वराहाननवन्दिता।
दुर्बुद्धिनाशिनी देवी सततं दानदायिनी॥
दानदात्री च देवेशी द्यावाभूमिविलासिनी।
दरिद्रा दरिफलदा देवतावृन्दसंस्थिता॥
दीर्घव्रतकरी दीर्घा दीर्घजन्मा दयावती।
दक्षिणी दक्षनीतिश्च दीप्तदक्षधरार्च्चिता॥
दानार्च्चिता द्रवनया द्रव्यैकनियमा परा।
दुष्टसन्तापशाखा च दात्री दयपुरोधिणी॥
देवी दिव्या धनवती दान्ता दान्तजनप्रिया।
दारिमाद्रितटा दुर्गा दुर्गारण्यप्रचारिणी॥
धर्म्मरूपा धर्म्मधुरा धेनुरूपा धृतिर्ध्रुवा।
धेनुदाना धुवताऱ्या धर्म्मकामार्थमोक्षदा॥

धर्म्मिणी धर्म्ममाता च धर्म्मदात्री धनुर्द्धरा।
धात्री ध्येया धरा धर्म्मधारिणी धृतकाञ्चनी॥
धनदा धर्म्मदा धन्या धन्यदा धान्यदा धना।
धन्या धनाधिरूपा च धरिणी धनपूरिता॥
धारणा धनरूपा च धर्म्मा धर्म्मप्रचारिणी।
धर्म्मिणी धर्म्मलब्धाख्या धर्म्मिज्ञामलकेशिनी॥
धर्म्मप्रचारनिरता धर्म्मरूपा धुरन्धरी।
धनुर्व्विद्याधरी धात्री धनुर्व्विद्याविशारदा॥
निरानन्दा निरीहा च निर्व्वाणद्वारसंस्थिता।
निर्व्वाणपदवी दात्री नन्दिनी नाकनायिका॥
नारायणी निविघ्नघ्नी निजरूपप्रकाशिनी।
नमस्या निर्वैधा नन्दयन्ता नूतनरूपिणी॥
निर्म्मला निर्म्मलाभासा निरत्या निरपत्रपा।
नित्यानन्दमयी नित्यानित्या नतनिवन्दा॥
निरीहा नीतिधेया च निर्व्वाणपददीपिका।
नि:शङ्का च निरातङ्का निर्व्वाहितमहामना:॥
निर्म्मला नन्दजननी निर्म्मलज्ञानवेशिनी।
निरवद्यगुणस्थ्री नित्यानन्दस्वरूपिणी॥
निर्भया निर्भयत्राता निविघ्नकर्म्मवर्ज्जिता।
नित्योत्सवा नित्यतप्ता नमस्कार्य्या निरञ्जना॥
निष्ठावती निरातङ्का निर्लेपा निश्चलात्मिका।
निरवद्या निरीशा च निरञ्जनपुरस्थिता॥
पुण्यप्रदा पुण्यकरी पुण्यगर्भा पुरातनी।
पुण्यरूपा पुण्यदेहा पुण्यशीला च पावनी॥
पूजा पवित्रा परमा परा पुण्यविभूषणा।
पुण्यदात्री पुण्यधरा पुण्या पुण्यप्रवाहिनी॥
पुण्यदेहा पुण्यवती पूर्णिमा पूर्णचन्द्रमा।
पौर्णमासी परा पद्मा पद्मजा पद्मगन्धिनी॥
पद्मिनी पद्मवक्त्रा च पद्ममालाधरा सदा।
पद्मोद्भवा परध्या च परमानन्दरूपिणी॥
प्रकाश्या परमाचर्य्या पद्मगर्भनिवासिनी।
पावनी च तथा पूता पवित्रा परमाकला॥
पद्मार्च्चिता पद्मसंस्था पद्ममाला पुरातनी।
पद्मासनगता नित्या पद्मासनपरिच्छदा॥
शुक्लपद्मासनगता रक्तपद्मासना तथा।
पीतपद्मासनगता कृष्णपद्मस्थिता तथा॥
पदार्थदायिनी पद्मवनवासपरायणा।
प्रकाशिनी प्रगल्भा च पुण्यश्लोका च पावनी॥
फलदात्री फलहरा फलिनी फलरूपिणी।
फुल्लेन्दीवरलोचना फुल्ला फुल्लकोरकगन्धिनी॥
फलिनी फालिनी फेणा फुल्लच्छायाटिनपालका।
विश्वमाता च विश्वेशी विश्वा विश्ववरप्रिया॥
ब्रह्मस्था ब्राह्मणी ब्राह्मी ब्रह्मज्ञा विमलामला।
बकुला वाकुला बली बल्लरी वनदायिनी॥
विक्रान्ता विक्रमाभाजा बहुभाग्यविलोचना।
विश्वामित्रा विष्णुसखी मैत्रावी विष्णुवल्लभा॥
विरूपाक्षप्रिया देवी विभूतिर्विश्वतोमुखी।
वेदवेदरता वाणी वेदाक्षरसमन्विता॥
विद्या विद्यावती वन्द्या बृहती ब्रह्मवादिनी।
वरदा विप्ररूपा च वरिष्ठा च विशोधिनी॥
विद्याधरी वसुमती विप्ररूढा विशोधिता।
व्योमस्थानावती वामा विधात्री विबुधप्रिया॥

शुद्धिर्विनाशिनी विला ब्रह्मरूपा वरानना ।
वाचिनी ब्रह्मजननी ब्रह्मचलापचारिणी ॥
ब्रह्मविष्णुस्वरूपा च सदा विभववर्द्धिनी ।
विभाविनी चापिनी च चापिका परिचारिका ॥
विपदार्त्तिहरा देवी विनयव्रतचारिणी ।
विपच्छोकसंहर्त्री विपञ्चीवाद्यतत्परा ॥
वेणुवाद्यपरा देवी वेणुस्तुतिपरायणा ।
वर्द्धिनी बलकरी बलप्रदा विचक्षणी ॥
विपाशा विशिखा चैव विकल्पपरिवर्जिता ।
शुद्धिदा दयवती देवी विधिविच्छिन्नसंशया ॥
विचित्राङ्गी विचित्राभा विचक्षा विभववर्द्धिनी ।
विजया विनया धन्या वामदेवी वरप्रदा ॥
विवर्त्ती च विद्याकोशी विज्ञानविलसालिनी ।
भद्रा भोगवती भव्या भवानी भयनाशिनी ॥
भूतधात्री भयहरी भक्तवश्या भयापहा ।
भक्तिदा भवदा भैरीभक्तस्वर्गप्रदायिनी ॥
भागीरथी भानुमती भाग्यदा भवनिर्जिता ।
भवप्रिया भूतशुद्धिर्भूतिदा भूतभूषणा ॥
भोगवती भूतिमती भव्यरूपा भ्रमिर्भ्रमा ।
भूरिदा भक्तिसुलभा भाग्यवृद्धिकरी सदा ॥
भिक्षुमाता भिक्षुनिभा भव्या भवस्वरूपिणी ।
महामाया मातृप्रिया महानन्दा महोदरी ॥
मतिर्मुक्तिर्मनोज्ञा च महामङ्गलदायिनी ।
महापुण्या महादात्री मैथुनप्रियलालसा ॥
मनोज्ञा मालिनी मान्या मणिमाणिक्यधारिणी ।
मुनिस्तुता मोहकरी मोहहन्त्री मदोत्कटा ॥
मधुपानरता मत्ता मदाघूर्णितलोचना ।
मधुपानप्रमत्ता च मधुलुब्धा मधुव्रता ॥
माधवी मालिनी माध्वी मनोरथपथातिगा ।
मोक्षैश्वर्यप्रदानेशा महापद्मवनाश्रिता ॥
महाप्रभावा महती मृगाक्षी मीनलोचना ।
महाकान्तिसम्पूर्णा महाक्षी महती कला ॥
स्तुतिरूपा महास्तुता मणिमाणिक्यभूषणा ।
मुक्ताफलविचित्राङ्गी मुक्तारञ्जितनासिका ॥
महापातकराशिघ्नी मनोनयननन्दिनी ।
महामाणिक्यरचिता महाभूषणभूषिता ॥
मायावती मोहहन्त्री महाविद्याविधारिणी ।
महामेधा महाभूतिर्महामाया प्रिया सखी ॥
मनोहरी महोपाया महामणिविभूषिता ।
महामोहप्रशमिनी महामङ्गलदायिनी ॥
यशस्विनी यशोदा च यमुनावारिचारिणी ।
योगसिद्धिकरी यज्ञा यज्ञेशपत्निप्रिया ॥
यज्ञेशी यज्ञफलदा यजनीया यशस्करी ।
योगयोनिर्योगसिद्धा योगिनी योगबुद्धिदा ॥
योगयुक्ता यमाद्यष्टसिद्धिपञ्चैकधारिणी ।
यमुनाजलशीता च यमुनाजलहारिणी ॥
यामिनी यमुना याम्या यमलोकनिवासिनी ।
लोकालोकविलासा च लोकसुखलोकमालिका ॥
लोकाक्षी लोकमाता च लोकानन्दप्रदायिनी ।
लोकबन्धुर्लोकसाक्षी लोकालोकनिवासिनी ॥
लोकबन्धविनाशा च अक्षयाक्षयलक्षिता ।
लीलालोका च लावण्या लघिमा लसदीक्षणा ॥

वासुदेवप्रिया वामा वसन्तसमयप्रिया ।
वासन्ती वसुदा वन्द्या वेणुवाद्यपरायणा ॥
वीणावाद्यप्रमत्ता च वीणानादविभूषणा ।
वेणुवाद्यरता चैव वंशीनादविभूषणा ॥
शुभा शुभरतिः शान्तिः शैव्या शान्तिविग्रहा ।
शीतला शोभिता शोभा शुभदा शुभदायिनी ॥
शिवप्रिया शिवानन्दा शिवपूजासु तत्परा ।
शिवस्तुत्या शिववन्द्या शिवनित्यपरायणा ॥
श्रीमती श्रीनिवासा च श्रुतिरूपा शुभव्रता ।
शुद्धविद्याजयकरी शुभकर्त्री शुभाश्रया ॥
श्रुतानन्दा श्रुतिः श्रोत्री शिवप्रेमपरायणा ।
शोषणी शुभवार्त्ता च शालिनी प्रियवर्त्तनी ॥
षड्गुणाश्रयदाकान्ता षडङ्गश्रुतिरूपिणी ।
सरसा सुप्रभा सिद्धा सिद्धसिद्धिप्रदायिनी ॥
सेव्यासक्ता सती सत्ता सक्तिरूपा सदाप्रिया ।
सम्यग्दा स्तुतिः स्तुत्या स्तवनीया स्तवप्रिया ॥
स्त्रैणेशा स्त्रैणगा सौम्या स्त्रैणसौभाग्यदायिनी ।
स्वच्छरूपा सुधा स्वाहा सुधालेपप्रमोदिनी ॥
स्वर्गप्रिया सहस्राभा सर्वपातकनाशिनी ।
संसारतारिणी राधा सौभाग्यवर्द्धिनी सदा ॥
हरप्रिया हिरण्याभा हरिणाक्षी हिरण्मयी ।
हंसरूपा हरिद्राभा हरिवर्णा शुचिस्मिते ॥
क्षेमदा क्षालिता क्षेमा क्षुद्रघण्टाविधारिणी ।
अपरैकं प्रवक्ष्ये प्रौढ़ि चराचरसमन्वितम् ॥
स्तोत्रं सहस्रनामाख्यं स्वरव्यञ्जनसंयुतम् ।
अजया अतुलानन्दा अनन्तानन्ददायिनी ॥
अमदाना अशोका च अलका अत्यम्भवा ।
अनाथवत्सलानन्दा अयोनिसम्भवा प्रिये ॥
अव्यक्तलक्षणास्तुत्या विच्छिन्नाचापराजिता ।
अनाथानामभीष्टार्थसिद्धिदानन्दवर्द्धिनी ॥
अणिमादिगुणाधारा अग्रगण्यालिकचारिणी ।
अचिन्त्यशक्तिवलयाद्भुतरूपा च हारिणी ॥
अद्रिराजसुता दूती अष्टयोगसमन्विता ।
अच्युता अनवच्छिन्ना अक्षयशक्तिधारिणी ॥
अनन्ततीर्थरूपा च अनन्तानन्दरूपिणी ।
अनन्तमहिमा पारा अनन्तसुखदायिनी ॥
अर्थदा अन्नदा अर्था सदा अनन्तवर्षिणी ।
अविद्याजालशमनी अप्रतर्कगतिप्रदा ॥
अशेषविघ्नसंहर्त्री अशेषगुणगुम्फिता ।
अज्ञाननाशिनी देवी अनन्तसिद्धिदायिनी ॥
अशेषपापसंहर्त्री अशेषदेवतामयी ।
अघोरा अच्युता देवी अज्ञानतिमिरप्रदा ॥
अहन्त्वपरा देवी अभिरामविनोदिनी ।
अनवद्यपरिच्छन्ना अखण्डाकलङ्किनी ॥
आरोग्यदात्री आनन्दा आपन्नार्त्तिविनाशिनी ।
आश्चर्यरूपा आद्यस्था आप्तविद्या सदा प्रिया ॥
आप्यायिनी च आराध्या आपदाशान्तप्रदा ।
इष्टारतिरिष्टदात्री इष्टपूर्त्तफलप्रदा ।
इतिहासश्रुतिः श्वेता इष्टाङ्गफलप्रदा ।
इला च इष्टरूपा च इन्द्रादिपरिवन्दिता ॥
इन्दिरा इतराधीश इलङ्कार इधारिणी ।
इन्द्रानीसेवितपदा इन्द्रप्रीतिप्रदायिनी ॥

ईश्वरी ईशजननी ईशत्वैश्वर्यदायिनी ॥
उग्रशक्तिसंयुक्ता उपमानविवर्जिता ।
उत्तमश्लोकसंसेव्या उत्तमोत्तमरूपिणी ॥
उष्णा उषा उषाराधा उर्मिला च शुचिस्मिते ।
ऊहा ऊहवितर्का च ऊर्ध्वधारा च ऊर्ध्वगा ॥
ऊर्ध्वधारा ऊर्ध्वयोनी उपपापविनाशिनी ।
ऋषिवृन्दस्तुता ऋद्धिकरबन्धनाशिनी ॥
ऋतम्भरा ऋद्धिदात्री ऋक्रूपा ऋक्षस्वरूपिणी
ऋतुप्रिया ऋजुमाता ऋत्वार्चिसंस्थमार्गगा ॥
ऋतुजन्यस्वरूपा च ऋतुमार्गप्रवर्षिणी ।
एधिताखिलसर्वज्ञा एकैकाद्भुतदायिनी ॥
ऐश्वर्यतत्त्वरूपा च ऐतिरैन्द्रशिरोमणिः ।
ओजस्विनी ओषधी च ओजोनादीश्वदायिनी ॥
ओङ्कारजननी देवि ओङ्कारप्रतिपादिता ।
औदार्यप्रकरा भद्रे औपम्यौषधिविग्रहा ॥
अंशवत्या च अन्तता अम्बा अम्बालिका तथा ।
अम्बुजाक्षी च अम्बाना अम्बुजिन्याम्बुजानना ॥
अंशुमाली अंशुमती अंशोऽंशप्रसन्नभा ।
अन्तनामितवा भद्रे अनन्तशोभनस्वरा ॥
अर्थेशा अर्थदात्री च अर्थरूपा अनाहता ।
श्रृणु नामान्तरं भद्रे ककारादि वरानने ! ॥
अत्यन्तसुन्दरं गुह्यं निर्मलोत्पलगन्धिनी ।
कृष्णा कमला कान्ता कर्मजालविनाशिनी ॥
कमला कल्पलतिका कलिकल्मषनाशिनी ।
कमनीयकला कर्त्री कपर्द्दिपूजनप्रिया ॥
कदम्बकुसुमाभासा सदा कोकनदेक्षणा ।
कालिन्दीकेलिकलिता कन्या कादम्बमालिका ॥
कान्तालोकनया कन्या काम्यरूपा मनोहरा ।
खड्गिनी खड्गधाराभा खगा खगेन्दुधारिणी ॥
खेखेलगामिनी खड्गा खड्गेन्दुतलकाङ्किता ।
खेचरी खेचरी विद्या खगतिः ख्यातिदायिनी ॥
खण्डिपाशेषपापौघा खलबुद्धिविनाशिनी ।
ख्यातेन कन्दसन्दोहा खड्गखट्वाङ्गधारिणी ॥
खरसन्तापशमनी खरदुःखनिकृन्तनी ।
गुहागम्यमतिर्गौरी गन्धर्वनगरप्रिया ॥
गूढ़रूपा गुणवती गुर्व्वी गौरवरङ्गिणी ।
गृहपीड़ाहरा गुप्ता गदविध्वंसना प्रिया ॥
चाम्पेयलोचना चारु चार्वङ्गी चारुरूपिणी ।
चन्दचन्दनलिप्ताङ्गी चर्चनीया चिरस्थिता ॥
चारुचम्पकमालाढ्या चलिताशेषदुष्कृता ।
चारिताशेषवृजिना चावताशेषसंस्तुता ॥
रक्तचन्दनलिप्ताङ्गी रक्ताङ्गी रक्तमालिका ।
शुक्लचन्दनलिप्ताङ्गी शुक्लाङ्गी शुक्लमालिका ॥
पीतचन्दनलिप्ताङ्गी पीताङ्गी पीतमालिका ।
श्यामचन्दनलिप्ताङ्गी श्यामाङ्गी श्याममालिका ॥
शुक्लवस्त्रपरीधाना शुक्लवस्त्रोत्तरीयिका ।
रक्तवस्त्रपरीधाना रक्तवस्त्रोत्तरीयिका ।
पीतवस्त्रपरीधाना पीतवस्त्रोत्तरीयिका ।
श्यामपट्टपरीधाना श्यामपट्टोत्तरीयिका ॥
वृन्दावनेश्वरी राधा श्यामाकार्यप्रकाशिनी ।
पद्मिनी नागिनी गोपी कालिन्दी अवगाहिनी ॥
गोपीश्वरप्रिया भव्या सदा मनस्मोहिनी ।

लुप्तायुक्तानां ग्रामखर्वसंस्थितानां संक्षिप्य लिख्यते।
ज्ञतपाल:मागादि:।

'उपोष्य नवमीमद्य यामेष्वष्टसु राघव।
तेन प्रीतो भव त्वं भो संसाराद्राहि मां हरे॥'
इति निवेद्य॥

'कौसल्याङ्कं विशालाक्षमिन्द्रनीलसमप्रभम्।
हस्तिकाये दशरथं पुत्रावेक्षणतत्परम्॥
एकतो भरतं देवं चण्डवं कनकप्रभम्।
पार्श्वे भरतशत्रुघ्नौ तालहस्तकराङ्गभौ।
अग्रे व्यग्रं हनूमन्तं रामानुग्रहकाङ्क्षिणम्॥'
एवं ध्यात्वा श्रीरामं पूजयेत्। आवाहनमन्त्रस्तु।
'इहोऽपि त्वं समायेन मैथिलो यत्कोऽपि न:।
कुबेर ईशो सर्वाविरिदं यातु: व्यापयन्तु ते॥'
व्यञ्जिदवक्तु:। कौशल्यां पूजयेत्। मन्त्रस्तु।
'रामस्य जननी चासि राममयमिदं जगत्।
अतस्त्वां पूजयिष्यामि लोकमातर्नमोऽस्तु ते॥'
तथा।
'नमो दशरथायेति पूजयेत् पितरं तत:।
ततोऽङ्गन्यास्य देवेशं परिवारान् समर्चयेत्।
पूर्ववट्कोणकोणेषु हृदयादीनि च क्रमात्॥'
हृदयादीनि यथा। रां हृदयाय नम:। रीं शिरसे स्वाहा। रूं शिखायै वषट्। रैं कवचाय हुम्। रौं नेत्राभ्यां वौषट्। र: अस्त्राय फट्। तथा,—
'हनूमन्तं ससुग्रीवं भरतं सविभीषणम्।
लक्ष्मणाङ्गदशत्रुघ्नं जाम्बवन्तं दलादिषु॥
धृष्टं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्द्धनम्।
अशोकं धर्मपालाख्यं सुमन्त्रं दलमध्यत:।
इन्द्रादि लोकपालांश्च तदस्त्राणि तदन्तत:॥'
लोकपाला इन्द्रादयो दश। तदस्त्राणि वज्रशक्तिदण्डखड्गपाशाङ्कुशगदाशूलपद्मचक्राणि।
मध्याह्ने जन्म भावयेत्।
'उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुदिने मेषं गते पूषणि।
निर्दग्धुं निखिला: पलाशसमिधो मेध्यादयोध्यारणे-
राविर्भूतमभूदपूर्वविभवं यत्किञ्चिदेकं मह:॥'
पञ्चाग्रा राघवा:।
'मत्तैव वादवेदाग्राणर्यं दयाग्रागत्वेति:।
ववृतुश्चानुसंपूर्णं दधीत्वा मुकुन्तमम्।
अशोकदलकुसुमैर्युक्तं च तुलसीदलै:॥'
मन्त्रस्तु।
'दशाननवधार्थाय धर्मसंस्थापनाय च।
दानवानां विनाशाय दैत्यानां निधनाय च॥
परित्राणाय साधूनां रामो जात: स्वयं हरि:।
गृहाणार्घ्यं मया दत्तं भ्रातृभि: सहितो मम॥
पुष्पाञ्जलिं पुनर्दत्त्वा नामे नामेमलङ्कृत:।
पूजयेद्विविधयत्नात् दिवारात्रं नयेद्बुध:॥'
तदयं संक्षेप:। शुद्धायां नवम्युक्तायां विवादाभाव:। विद्धायान्तु दशमीदिने इत्यमी सारकयोगा न चेत् तदा अष्टमीयोगा-

योगेऽपि अष्टमीविद्धायाम्। सारकयोगा चेत् तदा अष्टमीविद्धां त्यक्त्वा परेऽहनि कुर्यात्।"
इति तिथ्यादितत्त्वम्॥

रामपूग:, पुं, (रामो रमणीय: पूग:।) गुवाकविशेष:। तत्पर्याय:। कामीय: २ सुविपूग: ३ सुरेष्ट: ४। इति शिवाकाण्डीय:॥

रामबाण:, पुं, (रामस्य बाण इव अथवत्वात्।) औषधविशेष:। यथा। रसेन्द्रचिन्तामणौ।
"पारदाऽमृतबलगन्धकं
भागयुग्ममरिचेन मिश्रितम्।
तत्र जातिफलमर्द्धभागिकं
तिन्तिडीफलरसेन मर्दितम्॥
वह्निमान्द्यदशवक्त्रनाशनो
रामबाण इति विश्रुतो रस:।
संग्रहग्रहणीकुम्भकर्णक-
मामवातखरदूषणं जयेत्॥
दीपयेत् तु जठराग्नि-सम्भव:
तद एव जठराग्निदीपन:।
रोचक: कफकुलान्तकारक:
श्वासकासवमिजन्तुनाशन:॥"
पाराभाग: १ विषभाग: १ लवङ्गभाग: १ गन्धकभाग: १ मरिचभाग: ८ जायफलभाग: १। रामबाणो रसोऽजीर्णे। इति भावप्रकाश:॥
(शरविशेष:। इति राजनिर्घण्ट:॥ रामशरश्च॥)

रामभद्र:, पुं, (राम एव भद्रो मङ्गलजनकत्वात्।) श्रीराम:। इति शब्दरत्नावली॥ (यथा, कथासरित्सागरे। १४। २३६।
"लोकस्य सर्वदा रक्ष्यतत्प्रवादेन किं पुरा।
रामभद्रेण शुद्धापि त्यक्ता देवी न जानकी॥")

रामलवणं, क्ली, (रामं रमणीयं लवणम्।) शाम्भरिलवणम्। तत्पर्याय:। रोमकम् २ पाक्याकारसम्भवम् ३। इति रत्नमाला॥

रामवल्लभं, क्ली, (रामं रमणीयं वल्लभञ्च।) त्वचम्। इति राजनिर्घण्ट:॥ (रामस्य वल्लभम्।) रामप्रिये, त्रि॥

रामवीणा, स्त्री, (रामा रमणीया वीणा।) वीणाविशेष:। यथा, शब्दरत्नावली॥
"कुब्जी च कच्छपीवीणा वीणा तुम्बुरुसारदी।
सारस्वती कोकिलका रामवीणा वलाविता॥"

रामशर:, पुं, (रामस्य शर इव।) शरविशेष:। तत्पर्याय:। रामकाण्ड: २ रामबाण: ३ रामेषु: ४ अपर्षदक: ५ दीर्घ: ६ वृषप्रिय: ७। तस्य गुणा:। ईषदुष्णत्वम्। रुचिप्रदत्वम्। रसे अम्लत्वम्। कषायत्वम्। पित्तकारित्वम्। कफवातनाशित्वञ्च। इति राजनिर्घण्ट:॥ (रामबाणोऽ नाम्नोऽपि॥)

रामशीतला, स्त्री, आरामशीतला। इति राजनिर्घण्ट:॥

रामसखा:, पुं, (रामस्य सखा। "राजाह:सखिभ्यष्टच्।" ५।४।९१। इति टच्।) सुग्रीव:। इति शब्दरत्नावली॥

रामसेनक:, पुं, भूनिम्ब:। (अस्य पर्यायो यथा,—
"किरातलिक्त: कैरात: कटुतिक्त: किरातक:।
काण्डतिक्तो नार्यतिक्तो भूनिम्बो रामसेनक:॥"
इति भावप्रकाशस्य पूर्वखण्डे प्रथमेभागे॥)
कट्फल:। इति राजनिर्घण्ट:॥

रामा, स्त्री, (रमते रमयतीति वा। रम+ज्वलादित्वात् ण:। टाप्। रमतेऽनयेति। करणे घञ् वा।) स्त्रीविशेष:। इत्यमर:। २। ६। ४॥ गीतकलाभी रमते रामा। इति भरत:॥ (यथा, भागवते। ३। २१। ३३।
"विमृज्य नवयाज्ञानां मानवीं सुरतोत्सुकाम्।
रामां निरमयन् रेमे वर्षपूगान् मुहूर्तवत्॥")
सीता। (यथा, रघु:। ५। ४६।
"स चिह्नमश्वरहतगुल्मरूपं
भयावपर्यन्तरयं चकार।
रामापरित्याणविहितकोपं
शिलानिवेशं मुकलं चकार॥")
हिङ्गु। नदी। इति मेदिनी॥ हिङ्गुलम्। इति शब्दरत्नावली॥ श्वेतकण्टकारी। श्वेतकवा। आरामशीतला। अशोक:। गोरोचना। इति राजनिर्घण्ट:॥ वाला। गैरिकम्। इति शब्दचन्द्रिका॥

रामायणं, क्ली, (रामस्य चरिताश्रितं अयनं शास्त्रम्।) रामेण रावणवधकाव्यम्। इति शिवाकाण्डीय:॥ तच्च शतकोटिसंख्यकम्। यथा। स्कान्दे पातालखण्डे अयोध्यामाहात्म्ये सर्वतीर्थाभिगमनप्रकारे।
"प्राचेतसा कृति सम्पन्नं प्राचेतसमकल्मषम्।
प्रोवाच वचनं ब्रह्मा तत्रागत्य सुसत्तम:॥
न विषाद: त्वं वै रामो अस्याद्योऽनुमागत:।
तस्य संवर्णनेनैव सुश्लोक्यं भविष्यसि॥
इत्युक्त्वा तं जगामाशु ब्रह्मलोकं सनातन:।
तत: संवर्णयामास राघवं ग्रन्थकोटिभि:॥"
कोटिभि: शतकोटिभि:। चरितं रघुनाथस्य शतकोटिप्रविस्तरमित्यन्यत्रोक्ते:। तच्च संपूर्णं ब्रह्मलोके इतिसिद्धम्॥ इह तु कुशलवोपदिष्टा चतुर्विंशतिसाहस्रीसंहितम्। इति रामायणटीकायां नागोजीभट्ट:॥ *॥ तथा हि।
"प्राग्राज्यस्य रामस्य वाल्मीकिर्भगवानृषि:।
चकार चरितं कृत्स्नं विचित्रपदमर्थवत्॥
चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषि:।
तथा सर्गशतान् पञ्च षट् काण्डानि तथोत्तरम्॥"
इति रामायणे वाल्मीकीये बालकाण्डे ४ सर्ग:॥
संक्षिप्तरामचरितं यथा,—
"रामायणमथो वक्ष्ये श्रुतं पापविनाशनम्।
विष्णुनाभ्यब्जजो ब्रह्मा मरीचिस्तत्सुत: सुत:॥
मरीचे: कश्यपस्तस्मात् सूर्यस्तस्मात् मनु: सुत:।
मनोरिक्ष्वाकुरस्त्वस्मादभूद्वंशे राजा रघु: सुत:॥
रघोरजस्ततो जातो राजा दशरथो बली।
तस्य पुत्रास्तु चत्वारो महाबलपराक्रमा:॥
कौशल्यायामभूद्रामो भरत: केकयीसुत:।
सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायां बभूवतु:॥

रामो गतः पितुर्मातुर्विश्वामित्रादवाप्तवान् ।
अस्त्रग्रामं ततो यज्ञे ताड़कां प्रजघान ह ॥
विश्वामित्रस्य यज्ञे तु सुबाहुं जघ्नवान्हली ।
जनकस्य क्रतुं गत्वा उपयेमेऽथ जानकीम् ॥
उर्म्मिलां लक्ष्मणो वीरो भरतो माण्डवीं सुताम् ।
शत्रुघ्नो वै श्रुतकीर्त्तिं कुशध्वजसुते च ते ॥
पित्रादिभिरयोध्यायां गत्वा रामादयः स्थिताः ।
युधाजितो मातुलस्य शत्रुघ्नभरतौ गतौ ॥
गतयोर्नृपवर्य्येण राज्यं दातुं समुद्यतम् ।
रामाय च्छेदितुमाय कैकेय्या प्रार्थितं तदा ।
चतुर्दश समा रामो वने राज्यं चाभिसृतः ॥
रामः पितृहितार्थञ्च लक्ष्मणेन च सीतया ।
राज्यञ्च तृणवत्त्यक्त्वा शृङ्गवेरपुरं गतः ।
रथं त्यक्त्वा प्रयागञ्च चित्रकूटं गिरिं गतः ॥
रामस्य तु वियोगेन राजा स्वर्गं समाश्रितः ।
संस्कृत्य भरतश्चागात् रामं मातृबलान्वितः ॥
अयोध्यान्तु समागम्य राज्यं कुरु महामते ।
स नैच्छत् पादुके दत्त्वा राज्याय भरताय तु ॥
विसर्ज्जितोऽथ भरतो रामराज्यमपालयत् ।
नन्दिग्रामे स्थितो भक्त्या ह्ययोध्यां नाविशद्व्रती ॥
रामोऽपि चित्रकूटाच्च अत्रेराश्रममाययौ ।
नत्वा सुतीक्ष्णं चागस्त्यं दण्डकारण्यमागतः ॥
तत्र शूर्पणखा नाम राक्षसीतात्तुमागता ।
निकृत्य कर्णौ नासे च रामेणाथ पराजिता ॥
तत्प्रेरितः खरश्चागाद्दूषणस्त्रिशिरा राक्षसा ।
चतुर्दशसहस्रैश्च रक्षसान्तु बलेन च ॥
रामोऽपि प्रेषयामास बाणैर्यमपुरञ्च तान् ।
राक्षस्या प्रेरितोऽभ्यागात् रावणो हरणाय हि ॥
मृगरूपं स मारीचं कृत्वाग्रेऽथ त्रिदण्डधृक् ।
सीतया प्रेरितो रामो मारीचं प्रजघान ह ॥
म्रियमाणः स च प्राह हा सीते लक्ष्मणेति च ।
सीतोक्तो लक्ष्मणोऽप्यागाद्रामश्चाशु ददर्श तम् ॥
उवाच राक्षसी माया नूनं सीता हृतेति सा ।
रावणोऽन्तरमासाद्य अङ्केनादाय जानकीम् ॥
जटायुषं विनिर्भिद्य ययौ लङ्कां ततो बली ।
अशोकवृक्षच्छायायां रक्षितां तामधारयत् ॥
आगत्य रामः शून्याञ्च पर्णशालां ददर्श ह ।
शोकं कृत्वाथ जानक्या मार्गणं कृतवान् प्रभुः ॥
जटायुषञ्च संस्कृत्य तदुक्तो दक्षिणां दिशम् ।
गत्वा सख्यं ततश्चक्रे सुग्रीवेण च राघवः ॥
सप्त तालान् विनिर्भिद्य शरेणानतपर्व्वणा ।
बालिनञ्च विनिर्भिद्य किष्किन्ध्यायां हरीश्वरम् ॥
सुग्रीवं कृतवान् रामो ऋष्यमूके स्वयं स्थितः ।
सुग्रीवः प्रेषयामास वानरान् पर्व्वतोपमान् ॥
सीताया मार्गणं कर्त्तुं पूर्व्वाद्यैः सुमहाबलान् ।
प्रतीचीमुत्तरां प्राचीं दिशं गत्वा समागताः ॥
दक्षिणान्तु दिशं ये च मार्गयन्तोऽथ जानकीम् ।
वनानि पर्व्वतान् द्वीपान् नदीनां पुलिनानि च ॥
जानकीं ते त्वपश्यन्तो मरणे कृतनिश्चयाः ।
सम्पातिवचनात् गत्वा हनूमान् कपिकुञ्जरः ॥
शतयोजनविस्तीर्णं पुप्लुवे मकरालयम् ।
अपश्यज्जानकीं तत्र अशोकवनिकास्थिताम् ॥
भर्त्सितां राक्षसीभिश्च रावणेन च रक्षसा ।
भव भार्य्येति वदता विलपन्तीञ्च राघवम् ॥
अङ्गुलीयं कपिर्दत्त्वा सीतां कौशल्यमब्रवीत ।
रामस्य तस्य दूतोऽहं शोकं मा कुरु मैथिलि ॥
अभिज्ञानञ्च मे देहि येन रामः करिष्यति ।
तत् श्रुत्वा प्रददौ सीता वेणी रत्नं हनूमते ॥
यथा रामो नयेत् शीघ्रं तथा वाच्यं त्वया गते ।
तथेत्युक्त्वा तु हनुमान् वनं दिव्यं बभञ्ज तत ॥
हत्वाक्षं राक्षसांश्चान्यान् बन्धनं स्वयमागतः ।
सर्व्वैरिन्द्रजितो बाणैर्दृष्ट्वा रावणमब्रवीत ॥
रामदूतोऽस्मि हनुमान् देहि रामाय मैथिलीम् ।
एतत् श्रुत्वा प्रकुपितो दीपयामास पुच्छकम् ॥
कपिर्ज्वलितलाङ्गूलो लङ्कागेहे महाबलः ।
दग्ध्वा लङ्कां समायातो रामपार्श्वं स वानरः ।
जग्ध्वा फलं मधुवने दृष्टा सीतेत्यवेदयत् ।
मणिरत्नञ्च रामाय रामो लङ्कां ययौ पुरीम् ॥
ससुग्रीवः सहनुमानङ्गदाद्यः सलक्ष्मणः ।
विभीषणोऽपि संप्राप्तः शरणं राघवं प्रति ॥
लङ्कैश्वर्य्येऽभ्यषिञ्चद्रामस्तं रावणानुजम् ।
रामो नलेन सेतुञ्च कृत्वाब्धौ चोत्तितायतम् ॥
सुवेलावस्थितश्चैव पुरीं लङ्कां ददर्श ह ।
अथ ते वानरा वीरा नीलाङ्गदनलादयः ॥
धूम्रधूम्राक्षवर्य्येन्द्रा जाम्बवत्प्रमुखास्तदा ।
मैन्दद्विविदमुख्यास्ते पुरीं लङ्कां बभञ्जिरे ॥
राक्षसांश्च महाकायान् कालाञ्जनचयोपमान् ।
रामः सलक्ष्मणो हत्वा सकपिः सर्व्वराक्षसान् ॥
विद्युज्जिह्वञ्च धूम्राक्षं देवान्तकनरान्तकौ ।
महोदरमहापार्श्वावतिकायं महाबलम् ॥
कुम्भं निकुम्भं मत्तञ्च मकराक्षं त्वकम्पनम् ।
प्रहस्तं वीरमुन्मत्तं कुम्भकर्णं महाबलम् ॥
रावणिं लक्ष्मणश्छित्त्वा त्वस्त्राद्यै राघवो बली ।
निकृत्य बाहू वक्त्राणि रावणन्तु अपातयत् ॥
सीतां शुद्धां गृहीत्वाथ विमाने पुष्पके स्थितः ।
सवानरः समायातो ह्ययोध्याप्रवरं पुरम् ॥
तत्र राज्यं चकाराथ पुत्रवत् पालयन् प्रजाः ।
दशाश्वमेधानाहृत्य गयाशिरसि पातनम् ॥
पितृणां विधिवत् कृत्वा दत्त्वा दानानि राघवः ।
कुशौ कुशलवौ दृष्ट्वा तौ च राज्येऽभ्यषेचयत् ॥
एकादशसहस्राणि रामो राज्यमकारयत् ।
शत्रुघ्नो लवणं हत्वा शैलूषं भरतः स्थितः ॥
अगस्त्यादीन् मुनीन् नत्वा श्रुत्वोत्पत्तिञ्च रक्षसाम् ।
स्वर्गं गतो जनैः सार्द्धमयोध्या वैकुण्ठस्थकः ॥”
इति गारुडे १४८ अध्यायः ॥ * ॥
एतद्व्यतिरिक्तं वाल्मीकिप्रणीतं सप्तविंशतिसर्गयुक्तं सहस्रश्लोकात्मकं सीताकर्तृकसहस्रस्कन्धरावणवधकाण्डरूपाद्भुतोत्तरकाण्डमस्ति। तस्य प्रथमसर्गीयश्लोका यथा,—
“तमसातीरनिलयं सर्व्वेषां तपसां गुरुम् ।
वक्तॄणां प्रथमं आद्यं वाल्मीकिं मुनिपुङ्गवम् ॥
विनयावनतो भूत्वा भारद्वाजो महामुनिः ।
पप्रच्छ प्रणतः शिष्यः कृताञ्जलिपुटो यथौ ॥
रामायणमितिख्यातं शतकोटि प्रविस्तरम् ।
प्रणीतं भवता यच्च ब्रह्मलोके प्रतिष्ठितम् ॥
श्रूयते ब्रह्मणा नित्यमृषिभिः पितृभिः सुरैः ।
पञ्चविंशतिसाहस्रं रामायणमिदं भुवि ॥
तदाकर्णितमस्माभिः सावशेषं महामुने ।
शतकोटिप्रविस्तारे रामायणमहार्णवे ।
किं गीतमिह यन्नास्ति तन्मे कथय सुव्रत ॥
आकर्ण्येरितः एवं भरद्वाजस्य वै मुनिः ।
हस्तामलकवत् सर्व्वं ददर्श शतकोटिकम् ॥
ओमित्युक्त्वा मुनिः शिष्यं प्रोवाच वदतां वरः ।
भारद्वाज चिरं जीव साधु ज्ञापितमद्य नः ॥
शतकोटिप्रविस्तारे रामायणमहार्णवे ।
रामस्य चरितं सर्व्वमाश्चर्य्यं समुदीरितम् ॥
पञ्चविंशतिसाहस्रं नृलोके यत् प्रतिष्ठितम् ।
नृणां हि सदृशं रामचरितं वर्णितं मया ।
सीतामाहात्म्यसारं यत् विशेषाद्य नोक्तवान् ।
प्रद्युम्नावहितो ब्रह्मन् काकुत्स्थचरितं महत् ।
सीताया मूलभूतायाः प्रकृतेश्चरितञ्च यत् ॥”
इत्यार्षे रामायणे वाल्मीकीये अद्भुतोत्तरकाण्डे आदिकाव्ये प्रथमः सर्गः॥ * ॥अन्यत् ब्रह्माण्डपुराणीयोत्तरखण्डान्तर्गतैकनवतितमाध्यायादिकहरपार्व्वती-संवादरूपाध्यात्म-रामायणमस्ति । तत्र अध्यात्मबालकाण्डे सर्गाः सप्तैव शम्भुनोदिताः अष्टोत्तरत्रिशतश्लोकाः मोक्षप्रदा नृणाम् १ । अध्यात्मरामचरिते अयोध्याकाण्डे नवात्र सर्गाणां सप्तशतानि श्लोकाः पुण्यमोक्षप्रदाः २ । काण्डेऽरण्येऽध्यात्माख्ये सर्गा दिपञ्च परिमिताः पञ्चशतानि श्लोकाः पापहराः पार्व्वतीप्रोक्ताः ३ । श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्ध्याकाण्डे नवमः सर्गः पञ्चशतानि श्लोकाः दुरितहरा पञ्चपञ्चाशत ४। सुन्दरकाण्डे सर्गाः पञ्चैवाध्यात्मिकशम्भुना प्रोक्ताश्चापि शतानि श्लोकास्त्रिभुवनपापहराः ५ । काण्डे युद्धात्मके सर्गा नवदश नीलकण्ठोक्ताः साद्धैकादशशतश्लोका मनुसंख्यायुताः पुण्याः ६ । अध्यात्मोत्तरकाण्डे सर्गाः नवसंख्यया प्रमिता ऋतुशतसंख्यश्लोकाः ७ ।
पुराणसंख्या च पुरा हरेणोक्ताः ।
“पार्व्वत्यै परमेश्वरेण गदिते ह्यध्यात्मरामायणे
काण्डैः सप्तभिरन्वितेऽतिशुभदे सर्गास्तु-
षष्टिकाः ।
श्लोकानान्तु शतद्वयेन सहिता युक्तानि चत्वारि सा-
हस्राण्येव समासतः श्रुतिमते उक्तानि तत्त्वार्थतः ॥”
इत्यध्यात्मरामायणम् ॥ * ॥
अपरं रामवशिष्ठसंवादरूपमोक्षोपायकदेवहूतीलवाशिष्ठनामकमहारामायणमस्ति । तत्र प्रथमाङ्के अष्टाविंशत्युत्तरशततसर्गाः । तत्र आद्यश्लोकौ यथा,—

श्रीवाल्मीकिरुवाच ।

"उपशमप्रकरणादनन्तरमिदं शृणु ।
तन्निर्व्वाणप्रकरणं ज्ञातं निर्व्वाणदायि यत् ॥१॥
अ इमं शृणुयाखिलं विधिं रामवशिष्ठयोः ।
सर्व्वाक्षोऽपि भवपारान्नयति तच्च चान्तति ॥२॥
उत्तरार्द्धे षोड़शोत्तरद्विशततमः । तस्या-
द्यन्तश्लोकौ यथा,—

श्रीराम उवाच ।

"नैष्कर्म्म्यात् कथयाकामात् तनुः पतति
रोहितः ।
कथमेतदसौ भगवन् कथयस्वाशु जीवतः ॥ १ ॥
यत् सर्व्वं खल्विदं ब्रह्म तज्ज्ञानमिति च स्फुटम् ।
श्रुत्वा यद्दीयते वाचि तस्मै ब्रह्मात्मने नमः ॥"२॥
अत्रादौ वैराग्यप्रकरणग्रन्थः । द्वितीयो मुमुक्षु-
ग्रन्थः । तृतीय उत्पत्तिग्रन्थः । चतुर्थः स्थिति-
ग्रन्थः । पञ्चमः उपशमग्रन्थः । षष्ठप्रक-
रणे निर्व्वाणग्रन्थः । पूर्व्वार्द्धे षट्कग्रन्थ-
संख्या १,६६०० । उत्तरार्द्धे षट्कग्रन्थसंख्या
२९९०० । इति श्रीमहारामायणे निर्व्वाणप्रक-
रणे वाल्मीकीये मोक्षोपाये देवदूतोक्ते द्वात्रिं-
शत्साहस्र्यां संहितायां वाशिष्ठे ब्रह्मदर्शने
उत्तरार्द्धे षोड़शोत्तरद्विशततमः सर्गः ।

रामालिङ्गनकामः, पुं, ( रामाया आलिङ्गनस्य
कामोऽभिलाषो यस्मात् । ) रक्ताम्लानः । इति
राजनिर्घण्टः ॥

रामावल्लोकोपमः,पुं,(रामावल्लोकयोः कोकनयो-
रुपमा यस्य ।) चक्रवाकः । इति राजनिर्घण्टः ।

रामिलः, पुं, रमणम् । कामः । इति मेदिनी ॥
ले, १२७ ॥

राम्भः, पुं, ( रम्भस्य विकारः । रम्भ+"पला-
शादिभ्यो वा ।" ४ । ३ । १४१ । इत्यण् । )
व्रती वेणुदण्डो दण्डः । रम्भो वेणुः तस्य
विकारः । इत्यमरभरतौ । २ । ७ । ४५ ॥

राय्यं, क्ली, पीड़ा । इति काचित् शब्दरत्ना-
वली ॥

रायभाटी, स्त्री, नदीस्रोतोविशेषः । आख्योड़्
इति भाषा । यथा,—
"पूर्व्वोढ़ि पावचञ्चारी रायभाटी समाकरे ।"
इति शब्दरत्नावली ॥

रालः, पुं, शालवृक्षनिर्यासः । धुना इति भाषा ।
तत्पर्य्यायः । सर्ज्जरसः २ रालः ३ कनक-
लोद्भवः ४ ललनः ५ शालनिर्यासः ६ देवेष्टः ७
शीतलः ८ बहुरूपः ९ शालरसः १० सर्ज्ज-
निर्य्यासकः ११ सुरभिः १२ सुरधूपः १३ यक्ष-
धूपः १४ अग्निवल्लभः १५ कलः १६ कल-
लः १७ । अस्य गुणाः । शिशिरत्वम् ।
स्निग्धत्वम् । कषायत्वम् । तिक्तत्वम् । संग्राह-
कत्वम् । वातपित्तस्फोटकव्रणकासघ्नत्वञ्च । अस्य
धावनोपगुणौ । शिशिरत्वम् । प्रदरामयशान्ति-
कारित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"रालस्तु शालनिर्य्यासस्तथा सर्ज्जरसः स्मृतः ।
देवधूपो यक्षधूपस्तथा सर्ज्जरसश्च सः ।
रालो हिमो गुरुस्तिक्तः कषायो ग्राहको हरेत् ।
दोषास्रस्वेदवीसर्पज्वरव्रणविपादिकाः ।
ग्रहभग्नाग्निदग्धांश्च शूलातीसारनाशनः ॥"
इति भावप्रकाशः ॥

रालकार्य्यः, पुं, ( रालस्य शालरसस्य कार्य्यं यत्र ।)
शालवृक्षः । इति राजनिर्घण्टः ॥

रावः, पुं, ( रवणमिति । रु ञ शब्दे+भावे
घञ् ।) शब्दः । इति शब्दरत्नावली ॥ ( यथा,
महाभारते । १ । २१ । १८ ।
"गम्भीरं तिमिमकरोग्रसङ्कुलं तं
गर्ज्जन्तं जलचररावरौद्रनादैः ।
विस्तीर्णं ददृशतुरम्बरप्रकाशं
तेऽगाधं निधिमुरुमम्भसामनन्तम् ॥" )

रावणः, पुं, ( रवणस्यापत्यमिति । रवण+
"शिवादिभ्योऽण् ।" ४ । १ । ११२ । इति
अण् । यद्वा, रावयति भीषयति सर्व्वानिति ।
रु+णिच्+ल्युः ।) लङ्काधिपतिः । तत्पर्य्यायः ।
पौलस्त्यः २ रक्षः ३ लङ्केशः ४ दशकन्धरः ५ ।
इति हेमचन्द्रः ॥ दशकण्ठः ६ निकषात्मजः ७
राक्षसेन्द्रः ८ लङ्केशः ९ पङ्क्तिग्रीवः १० दशा-
ननः ११ । इति शब्दरत्नावली ॥ लङ्कापतिः १२
दशास्यः १३ । इति जटाधरः ॥ ( अस्य
निरुक्तिर्यथा, रामायणे ।
"यस्माल्लोकत्रयं चैतद्रावितं भयमागतम् ।
तस्मात्त्वं रावणो नाम नाम्ना वीरो भवि-
ष्यसि ॥" )
तस्योत्पत्तिनाशौ यथा, —

सूत उवाच ।

"मानवस्य नरिष्यन्त आसीत् पुत्त्रो दमः किल ।
नवमस्तस्य दायादस्तृणबिन्दुरिति स्मृतः ॥
तस्य कन्या इड़विड़ा रूपेणाप्रतिमा भुवि ।
पुलस्त्याय स राजर्षिस्तां कन्यां प्रत्यपादयत् ॥
ऋषिरैड़विड़ो यस्यां विश्रवाः समपद्यत ।
तस्य पत्न्यश्चतस्रश्च पूर्व्वा वै देववर्णिनी ॥
ज्येष्ठं वैश्रवणं यस्तु कुरूपं देववर्णिनी ।
त्रिपादं सुमहाकायं स्थूलशीर्षं महाहनुम् ॥
अष्टदंष्ट्रं हरिश्मश्रुं शङ्कुकर्णं विलोहितम् ।
पिङ्गलं नाम संदृश्य पिता तस्याब्रवीत्ततः ॥
कुत्सायान्तु कुशब्दोऽयं शरीरं चेदमध्यते ।
कुशरीरत्वाच्च नाम्ना तेन वै स कुवेरकः ॥
तस्यां कुवेरो जनयद्विश्रुतं नलकूवरम् ॥
रावणं कुम्भकर्णञ्च कन्यां शूर्पणखां तथा ।
विभीषणं चतुर्थन्तु नैकष्यजनयत् सुतम् ॥
शङ्कुकर्णो दशग्रीवः पिङ्गलो रक्तमूर्द्धजः ।
चतुष्पाद्विंशतिभुजो महाकायो महाबलः ॥
कालाञ्जननिभो दंष्ट्री लोहितग्रीव एव च ।
निसर्गाद्दारुणः क्रूरः स रावण इति स्मृतः ॥
हिरण्यकशिपुस्त्वासीत् स राजा पूर्व्वजन्मनि ।
चतुर्युगानां राजा तु त्रयोदश स राक्षसः ॥
ताः पञ्चकोट्यो वर्षाणां संख्याताः संख्यया
द्विजैः ।
नियुतान्यष्टषष्टिः संख्याविद्भिर्यदाहृता ॥
षष्टिश्चैव सहस्राणि वर्षाणां हि स रावणः ।
देवतानां पितृणाञ्च घोरं कृत्वा प्रजागरम् ॥
त्रेतायुगे चतुर्थेऽस्मिन् रावणस्तपसः क्षयात् ।
रामं दाशरथिं प्राप्य सगणः क्षयमीयिवान् ॥"
इति वह्निपुराणे वाराहप्रादुर्भावनामाध्यायः ॥

रावणगङ्गा, स्त्री, (रावणेन कृता गङ्गा ।) सिंहल-
देशस्थनदीविशेषः । यथा,—

सूत उवाच ।

"दिवाकरस्तस्य महामहिम्नो
महासुरस्योत्तमरत्नबीजम् ।
अपहागृहीत्वा चरितं प्रतस्थे
निस्त्रिंशनीलेन नभस्तलेन ॥
लेभा सुराणां समरेष्वजय्यं
वीर्य्यावलेपोद्धतमावसेन ।
लङ्काधिपेनार्द्धपथं समेत्य
स्वर्भानुनेव प्रसभं निरुद्धम् ॥
तत सिंहलीचारुनितम्बबिम्ब-
विक्षोभितागाधमहाह्रदायाम् ।
पूगद्रुमावद्धतटद्वयायां
समोच तत्त्वं सरिदुत्तमायाम् ॥
ततः प्रभृति सा गङ्गा तुल्यपुण्यफलोदया ।
नाम्ना रावणगङ्गेति प्रथिमानमुपागता ॥
ये तु रावणगङ्गायां जायन्ते कुरुविन्दकाः ।
पद्मरागा घनं रागं बिभ्राणाः स्फटाचिषः ॥"
इति गारुडे ७० अध्यायः ॥

रावणारिः, पुं, ( रावणस्य अरिः शत्रुः । )
श्रीरामः । इति जटाधरः ॥ (यथा,—
"वन्दे लोकाभिरामं रघुकुलतिलकं राघवं
रावणारिम् ॥"
इति महानाटकम् ॥ )

रावणिः, पुं, ( रावणस्यापत्यमिति । रावण+
"अत इञ् ।" ४ । १ । ९५ । इति इञ् । )
रावणज्येष्ठपुत्त्रः । स च इन्द्रजित् । यथा,—
"रावणिः शक्रजिन्मेघनादो मन्दोदरीसुतः ॥"
इति हेमचन्द्रः । ३ । ३७० ॥
( यथा, महाभारते । ३ । २८७ । १२ ।
"रावणिस्तु यदा नैनं विशेषयति सायकैः ।
ततो गुरुतरं यत्नमातिष्ठद्बलिनां वरः ॥"
रावणपुत्त्रमात्रे । यथा, भट्टिः । १४ । ७८ ।
"तत्राद्रावयत प्राणान् सुदिना वालिसूनुना ।
प्राद्रवंस्ततः क्रुद्धाः सर्व्वे रावणयोऽङ्गदम् ॥" )

राश, ऋ ङ शब्दे । इति कविकल्पद्रुमः ॥ ( भ्वा०-
आत्म०-अक०-सेट् । ) दन्त्यान्तोऽयमिति गद-
सिंहः । रासभः खरः । दुर्गसिंहस्तु इमं
तालव्यान्तं मत्वा उणादौ ह्रस्वं कृत्वा रश्मि-
शब्दं व्युत्पादितवान् । ऋ, अरराशत् । ङ,
राशते । इति दुर्गादासः ॥

राशिः, पुं, ( राशते इति । राश शब्दे+इञ् ।
यद्वा, अश्नुते व्याप्नोतीति । अशू व्याप्तौ+"अशि-
पणाय्यो रुडायलुकौ च ।" उणा० ४ । १३२ ।
इति इञ् रुडागमश्च । ) धान्यादिस्तूपः ।
तत्पर्य्यायः । पुञ्जः २ उत्करः ३ कूटम् ४ ।

इत्यमरः । २ । ५ । ४२ ॥ समूहः । ५ सञ्चारः ६ । इति जटाधरः ॥ अश्नुते व्याप्नोति इति राशिः । अशू ञ व्याप्तिसंघातयोरित्यस्मात् नाम्नीति इञ् निपातनादिकारागमः । इति भरतः ॥ * ॥ ( यथा, शकुन्तलायाम् १ अङ्के ।
"न खलु न खलु बाणः सन्निपात्योऽयमस्मिन् मृदुनि मृगशरीरे तूलराशाविवाग्निः ॥" )
ज्योतिश्चक्रस्य द्वादशांशः । तस्योत्पत्तिर्यथा,—
"अथ वक्ष्ये मनश्चक्रे ब्रह्माण्डाकारमण्डितम् ।
मनश्चक्रसमा चक्रे सर्व्वोऽव्यक्तोऽव्ययो विधिः ॥
क्रमशः खं ततो वायुरग्निरापो धरा क्रमात् ।
सृष्टिकर्त्ता यथैव महाभूतानि जज्ञिरे ॥
अग्नीषोमौ भास्करेन्दू ततश्चाङ्गारकादयः ।
तेजोभूखाम्बुवातेभ्यः क्रमशः पञ्च जज्ञिरे ॥
पुनर्द्वादशधात्मानं विभज्य राशिसंज्ञकम् ।
नक्षत्ररूपिणं भूयः सप्तविंशात्मकं वशी ॥"
इति सूर्य्यसिद्धान्ते भूगोलाध्यायः ॥ * ॥
तस्य संस्थानं यथा,—
"विषुवत्क्रान्तिवलयात् पूर्व्वभागस्थिताः स्थिराः ।
मेषाद्या राशयः क्रान्तिवृत्तस्य पूर्व्वदिक्क्रमात् ॥"
इति मुनीश्वरकृतसार्व्वभौमसिद्धान्तः ॥ * ॥
अथ राश्यादिनिर्णयः ।
"मेषवृषमिथुनकर्कटसिंहाः कन्या तुलाथ वृश्चिकभम् ।
धनुरथ मकरः कुम्भो मीन इति च राशयः कथिताः ॥"
इति राशिकथनम् ॥ * ॥
"अश्विन्या सह भरणी कृत्तिकापादश्च कीर्त्तितो मेषः ॥ १ ॥
वृषभः कृत्तिकाशेषं रोहिण्यर्द्धञ्च मृगशिरसः ॥ २ ॥
मृगशिरसोऽर्द्धं चार्द्रा पुनर्व्वसोस्त्रिपादो मिथुनम् ॥ ३ ॥
पादः पुनर्व्वसोरन्त्यः पुष्योऽश्लेषा च कर्कटः ॥४॥
सिंहोऽथ मघा पूर्व्वफल्गुनी पाद उत्तरायाः ॥५॥
तच्छेषं हस्ता चित्रार्द्धञ्च कन्यकाख्यः ॥ ६ ॥
तौलिनि चित्रार्द्धं स्वाती विशाखायाः पादत्रयम् ॥ ७ ॥
अलिनि विशाखा पादस्तथानुराधान्विता ज्येष्ठा ॥ ८ ॥
मूलं पूर्व्वाषाढा प्रथमश्चाप्युत्तराशको धन्वी ॥९॥
मकरस्तत्परिशेषं श्रवणा चार्द्धं धनिष्ठायाः ॥१०॥
धनिष्ठार्द्धं शतभिषा पूर्व्वभाद्रपदपादत्रयं कुम्भः ॥ ११ ॥
पूर्व्वभाद्रपदाशेषमुत्तरा रेवती मीनः ॥"१२॥
इति राशिनक्षत्रभेदकथनम् ॥ * ॥
"राशिनामानि च चैवं भक्ष्यं ग्रहनाम च ।
मेषादीनाञ्च पर्य्यायं लोकादेव विचिन्तयेत् ॥"
इति राशिपर्य्यायकथनम् ॥ * ॥
"क्रियताबुरिजितुमकुलीरलेयपाथेयजूककौर्प्याख्याः ।
तौक्षिक आकोकेरो हृद्रोगश्चान्त्यभं चेत्थम् ॥"
इति मेषादीनां विशेषनामकथनम् ॥ * ॥
"अरुणसितहरितपाटलपाण्डुविचित्राः सितेतरपिशङ्गौ ।
पिङ्गलकर्ब्बुरबभ्रुमलिना रुचयो यथासंख्यम् ॥"
इति मेषादीनां वर्णभेदकथनम् ॥ * ॥
"मत्स्यौ घटी नृमिथुनं सगदं सवीणं
चापी नरोऽश्वजघनो मकरो मृगास्यः ।
तौली सशस्यदहना प्लवगा च कन्या
शेषाः स्वनामसदृशाः स्वचराश्च सर्व्वे ॥"
अश्वजघनोऽश्वाकारजघनो नतु अश्वारूढ़ इति अयनः । उत्तरत्र चतुष्पदत्वकथनात् । राशिविशेषस्वरूपकथनम् ॥ * ॥
"क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च
ओजोऽथ युग्मं विषमः समश्च ।
चरस्थिरद्व्यात्मकनामधेया
मेषादयोऽमी क्रमशः प्रदिष्टाः ॥"
इति राशीनां क्रूरसौम्यादिविवेकः ॥ * ॥
दैवज्ञमनोहरे ।
"पुरुषश्च पुष्करश्चैव आशाशाश्च तथैव च ।
क्रूरा हस्ता भवन्त्येते नित्यं द्वादश राशयः ॥"
इति पुरुषादिविवेकः ॥ * ॥
"मिथुनतुलाघटकन्या द्विपादाश्चापपूर्व्वभागश्च ।
मृगधनुरान्त्यार्द्धं वृषाजसिंहाश्चरकाः ॥"
इति द्विपदचतुष्पदराशिकथनम् ॥ * ॥
"कर्कटवृश्चिकमीना मकरान्त्यार्द्धञ्च कीटसंज्ञाः स्युः ।
वृश्चिकराशिर्मुनिभिः सरीसृपत्वेन निर्द्दिष्टः ॥"
इति कीटसरीसृपराशिकथनम् ॥ * ॥
"द्विपदपशुगाः सर्व्वे सिंहं विहाय चतुष्पदाः ।
सलिलनिलया भक्ष्या वश्याः सरीसृपजातयः ॥
मृगपतिरपि निहन्तीति विहाय सरीसृपान् ।
अकथितमपीत्युक्तं वश्यं जनव्यवहारतः ॥"
सरीसृपजातय इति बहुवचनात् कीटस्यापि परिग्रहः । राशीनां वश्यावश्यकथनम् ॥ * ॥
"ग्राम्या मिथुनतुलाख्यौ चापाद्यघटाः निशासु वृषमेषौ ।
मकरादिमार्द्धसिंहौ वन्यौ दिवसेऽजवृषभौ च ॥
जलजौ कर्कटमीनौ मकरान्त्यार्द्धञ्च शिवमतं कुम्भः ॥"
इति ग्राम्यारण्यजलजराशिकथनम् ॥ * ॥
"ह्रस्वाशिमिगोऽविघटा मिथुनधनुःकर्किमृगसुताश्च समाः ।
वृश्चिककन्यामृगपतिकलिजो दीर्घाः समाख्याताः ॥"
इति राशीनां ह्रस्वदीर्घकथनम् ॥ * ॥
"प्रागादिककुभां नाथा यथासंख्यं प्रदक्षिणम् ।
मेषाद्या राशयो मेषाद्विराशिपदिक्क्रमात् ॥"
इति दिगधिपकथनम् ॥ * ॥
"कुजशुक्रबुधेन्दुरवीन्दुसौम्यसितावनिभुवाम् ।
जीवार्किमार्कितौक्ष्याणां मेषादि स्वचरादयः ॥"
इति ग्रहाणां क्षेत्रकथनम् ॥ * ॥
"अजो गोमतियुग्मश्च कर्किधन्विमृगास्तथा ।
निशासंज्ञाः स्मृताश्चैते शेषाश्चान्ये दिनात्मकाः ॥
निशासंज्ञा विमिथुनाः स्मृताः पृष्ठोदयास्तथा ।
शिवाः शीर्षोदया ज्ञेया मीनश्चोभयसंज्ञकः ॥"
इति निशादिसंज्ञाकथनम् ॥ * ॥
"रविर्मासं निशानाथः सपादद्दिवसद्वयम् ।
पक्षत्रयं भूमिपुत्रो बुधोऽष्टादशवासरान् ॥
वर्षमेकं सुराचार्य्यश्चाष्टाविंशद्दिनं भृगुः ।
शनिः सार्द्धद्वयं वर्षं स्वर्भानुः सार्द्धवत्सरम् ॥
इत्थं प्रमाणात् कलनाः स्वराशिं मुञ्चते ग्रहाः ॥"
इति राशिभोगकथनम् ॥
इति ज्योतिस्तत्त्वम् ॥ * ॥ द्वादशराश्यात्मकशिवरूपं यथा,—
पुलस्त्य उवाच ।
"स्वरूपं त्रिपुरघ्नस्य वदिष्ये कालरूपिणः ।
अश्विनी भरणी चैव कृत्तिकाप्रथमांशकम् ॥
मेषकं शिर विजानीयात् कुजक्षेत्रमहाद्भुतम् ।
आग्नेयांशास्त्रयो ब्रह्मन् प्राजापत्यं कवेर्गृहम् ॥
सौम्यार्द्धं वृषनामेदं वदनं परिकीर्त्तितम् ।
मृगार्द्धमार्द्रादित्यांशास्त्रयः सौम्यगृहं त्विदम् ॥
मिथुनं भुजयोस्तस्य गगनस्थस्य शूलिनः ।
आदित्यांशश्च पुष्यञ्च अश्लेषा शशिनो गृहम् ॥
राशिः कर्कटको नाम पार्श्वे मखविनाशिनः ।
पित्र्यर्क्षं भगदैवत्यं उत्तरांशश्च केशरी ॥
सूर्य्यक्षेत्रं विभोर्ब्रह्मन् हृदयं परिकीर्त्तितम् ।
उत्तरांशास्त्रयः पाणिश्चित्रार्द्धं कन्यका स्मृतम् ॥
सोमपुत्रस्य सद्मैतद्द्वितीयं जठरं विभोः ॥
चित्रांशद्वितयं स्वाती विशाखायांशकत्रयम् ।
द्वितीयं शुक्रसदनं तुला नाभिरुदाहृता ॥
विशाखांशमनुराधा ज्येष्ठा भौमगृहं त्विदम् ।
द्वितीयं वृश्चिको राशिर्मेढ्रं कालस्वरूपिणः ॥
मूलं पूर्व्वोत्तरांशश्च देवाचार्य्यगृहं धनुः ।
ऊरुयुगलमीशस्य अमरर्षे प्रगीयते ॥
उत्तरांशास्त्रयो ऋक्षं श्रवणं मकरो मुने ।
धनिष्ठार्द्धं शनिक्षेत्रं जानुनी परिकीर्त्तिते ॥
धनिष्ठार्द्धं शतभिषा प्रौष्ठपदांशकत्रयम् ।
सौरं पद्मापरमिदं कुम्भो जङ्घे च विश्रुते ॥
प्रौष्ठपदांशमेकन्तु उत्तरा रेवती तथा ।
द्वितीयं जीवसदनं मीनस्तु चरणावुभौ ॥" * ॥
राशीनां वर्णस्वरूपादि यथा,—
नारद उवाच ।
"राशयः कथिता ब्रह्मन् ! त्वया द्वादश वै मम ।
तेषां विशेषतो ब्रूहि लक्षणानि स्वरूपतः ॥
पुलस्त्य उवाच ।
स्वरूपं तव वक्ष्यामि राशीनां शृणु नारद ।
मादृशा यत्र सञ्चारा यस्मिन् स्थाने वसन्ति हि ॥
सञ्चारस्थाननैकत्र धान्यरत्नाकरादिषु ।
नवशाद्वलसंच्छन्ने वसुधायाञ्च सर्व्वशः ॥
नित्यं चरति फुल्लेषु सरसां पुलिनेषु च ।
मेषः समानमूर्त्तिश्च अजाविकधनादिषु ॥

वृषः सद्वृषरूपेण चरते गोकुलादिषु ।
तस्याधिवासभूमिस्तु कृषीवलधराश्रया ॥
स्त्रीपुंसयोः समं भद्रशय्यासनपरिग्रहैः ।
वीणावाद्यधृङ्मिथुनं गीतनर्त्तकशिल्पिषु ॥
स्थितं क्रीडा रतिर्नित्यं विहारोऽवनिरस्य तु ।
मिथुनं नाम विख्यातं राशिर्द्विधात्मकः स्मृतः ॥
कर्किः कुलीरेण समः सलिलस्थः प्रकीर्त्तितः ।
केदारवापीपुलिनविविक्तावनिरेव च ॥
सिंहस्तु पर्व्वतारण्यदुर्गकन्दरभूमिषु ।
वसते व्याधपल्लीषु गह्वरेषु गुहासु च ॥
या हि प्रदीपकलिका नावारूढा च कन्यका ।
चरते स्त्रीरतिस्थाने वसते नड्वलेषु च ॥
तुलापाणिश्च पुरुषो वीथ्यापणविचारकः ।
नगराध्वनि शालासु वसते तत्र नारद ॥
श्वभ्रवल्मीकसञ्चारी वृश्चिको वृश्चिकाकृतिः ।
विषगोमयकीटोऽश्मपाषाणादिषु संस्थितः ॥
धनुस्तुरङ्गजघनो दीप्यमानो धनुर्द्धरः ।
वाजिशूरोऽस्त्रविद्वीरः स्थायी गजवनादिषु ॥
मृगास्यो मकरो ब्रह्मन् ! वृषस्कन्धः गजाङ्गदः ।
मकरोऽसौ नदीचारी वसते च महोदधौ ॥
रिक्तकुम्भश्च पुरुषः स्कन्धधारी जलाप्लुतः ।
द्यूतशालाचरः कुम्भः स्थायी शौण्डिकसद्मसु ॥
मीनद्वयमासक्तो मीनस्तीर्थाब्धिसञ्चरः ।
वसते पुण्यदेशेषु देवब्राह्मणपूजकः ॥
लक्षणं कथितं तुभ्यं मेषादीनां महामुने ।
न कस्यचित्त्वयाख्येयं गुह्यमेतत् पुरातनम् ॥
एतन्मया ते कथितं सुरर्षे
यथा त्रिनेत्रः प्रममाथ यज्ञं ।
पुण्यं पुराणं परमं पवित्रं
संशृण्वतां पापहरं शिवञ्च ॥”
इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे हरकालिनः पञ्चमोऽध्यायः ॥

**राशिचक्रं**, क्ली, ( राशीनां चक्रम् । ) मेषादिद्वादशराश्याश्रितद्युक्तवृत्तम् । तस्य नामान्तरं भचक्रं ज्योतिश्चक्रञ्च । यथा,—
“सप्तविंशतिभैर्ज्योतिश्चक्रं स्तिमितवायुगम् ।
तद्दशांशो भवेद्राशिर्नवर्क्षचरणाङ्कितः ॥”
इति दीपिका ॥ * ॥
तद्विवरणं यथा,—
“भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः ।
पर्य्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम् ॥
उपरिष्टस्य महती कक्षाल्पाधःस्थितस्य च ।
महत्या कक्षया भागा महान्तोऽल्पास्तथाल्पया ॥
कालेनाल्पेन भगणं भुङ्क्तेऽल्पभ्रमणाश्रितः ।
ग्रहः कालेन महता मण्डले महति भ्रमन् ॥
स्वल्पया तु बहून् भुङ्क्ते भगणान् शीतदीधितिः ।
महत्या कक्षया गच्छन् ततः स्वल्पं शनैश्चरः ॥
मन्दादधःक्रमेण स्युश्चतुर्था दिवसाधिपाः ।
वर्षाधिपतयस्तद्वत् तृतीयाः परिकीर्त्तिताः ॥
ऊर्द्ध्वक्रमेण शशिनो मासानामधिपाः स्मृताः ।
होरेशाः सूर्य्यतनयादधोऽधः क्रमशस्तथा ।
भवेद्भकक्षा तीक्ष्णांशोर्भ्रमणं षष्टिताडितम् ।
सर्व्वोपरिष्टाद्भ्रमति योजनैस्तैर्भमण्डलम् ॥”
तत्र कक्षाक्रममाह ।
“ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभिधीयते ।
तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा ॥
मन्दामरेज्यभूपुत्रसूर्य्यशुक्रेन्दुजेन्दवः ।
परिभ्रमन्त्यधोऽधःस्थाः सिद्धविद्याधरा घनाः ॥”
इति सूर्य्यसिद्धान्तः ॥ * ॥
ग्रहचयचक्रसंयोगे फलविशेषजनकं राशिचक्रं यथा,—
“राशिचक्रं प्रवक्ष्यामि कृपार्त्तो हितकाम्यया ।
रविर्जीवस्तथा सौम्यस्तेऽपि चक्रे समागते ।
जलपातो भवेत् सत्यमित्युक्तं विष्णुयामले ॥
रविर्जीवस्तथा शुक्रस्तेऽपि चक्रे समागते ।
वायुपातो भवेत् सत्यमित्युक्तं विष्णुयामले ॥
रविर्जीवस्तथा भौमस्तेऽपि चक्रे समागते ।
अग्निपातो भवेत् सत्यमित्युक्तं ब्रह्मयामले ॥
रविर्भौमस्तथा राहुस्तेऽपि चक्रे समागते ।
लोष्ट्रपातो भवेत् सत्यमित्युक्तं रुद्रयामले ॥
रवौ राहुस्तथा केतुस्तेऽपि चक्रे समागते ।
पाषाणपातोऽपि भवेदित्युक्तं भानुयामले ॥”
इति नरपतिजयचर्य्यायां तुम्बुरुचक्रे राशिचक्रम् ॥ * ॥ जातकराशिचक्रम् । यथा,—
“लग्नादिव्ययपर्य्यन्तं राशिचक्रं व्यवस्थितम् ।
तत्र दुष्टाश्मनयो जनयन्ति वृथा वृथा ॥”
इति पञ्चस्वरा ॥ * ॥
मन्त्रग्रहणोक्तराशिचक्रम् यथा । आगमकल्पद्रुमे ।
“रेखात्रयं पूर्व्वपरागतं स्यात्
तन्मध्यतो याम्यकुबेरभेदात् ।
एकैकमीशानजलाचरे तु
हुताशवाय्वोर्विलिखेत्ततोऽर्णान् ॥
वेदाग्निवह्नियुगलत्रयवाजिसंख्यान्
पञ्चेषुबाणशरपञ्चचतुष्टयार्णान् ।
मेषादितः प्रविलिखेत् सकलांस्तु वर्णान्
कन्यागतान् प्रविलिखेदथ शादिवर्णान् ॥”
तथा,—
“वाणं गौरं खरं शीघ्रं शमी शोभेति राशिषु ।
क्रमेण मिलिता वर्णाः कन्यायां शादयः स्मृताः ॥”
तेन अ आ इ ई मेषः । उ ऊ ऋ वृषः । ॠ ऌ ॡ मिथुनम् । ए ऐ कर्कटः । ओ औ सिंहः । अं अः श ष स ह क्षाः कन्याः । कवर्गस्तुला । चवर्गो वृश्चिकः । टवर्गो धनुः । तवर्गो मकरः । पवर्गः कुम्भः । यवर्गो मीनः । स्वराशीनामनुकूलं मन्त्रं भजेत् । तथा च ।
“स्वतारराशिकोष्ठानामनुकूलान् भजेन्मनून् ॥”
इति वचनात् ॥
“राशीनां शुद्धता येषां त्यजेच्छत्रुं मतिं त्रयम् ।
स्वराशेर्मन्त्रराश्यन्तं गणनीयं विचक्षणैः ॥”
यदा तु स्वराशेरज्ञानं तदा साधकनामाद्यक्षरवर्त्तिनं राशिं गृहीत्वा गणयेत् ।
“साध्याद्यक्षरराश्यन्तं गणयेत् साधकाक्षरम् ।”
इति रामार्च्चनचन्द्रिकाधृतवचनात् । तथा,
“अज्ञाते राशिनक्षत्रे नामाद्यक्षरराशितः ॥”
इति तन्त्रराजे ॥
“तेन मन्त्राद्यवर्णेन नामाद्याक्षरेण च ।
गणयेद्यदि षष्ठं वाष्टमं द्वादशन्तु वा ।
रिपुमन्त्राद्यवर्णः स्यात् तेन तस्याहितं भवेत् ॥
एक पञ्च नव बान्धवाः स्मृताः
द्वौ च षट् च दशमाश्च सेवकाः ।
वह्निसप्तमनवस्तु पोषकाः
द्वादशाष्टचतुरस्तु घातकाः ॥”
इति विष्णुविषयम् ॥
*रामार्च्चनचन्द्रिकाधृतत्वात् । शत्र्वादौ तु षष्ठं वर्ज्जनीयम् । तथा च ।
“षष्ठाष्टमद्वादशानि वर्ज्जनीयानि यत्नतः ॥”
इति वचनात् ॥
तन्त्रान्तरे ।
“लग्नं धनं भ्रातृबन्धुपुत्त्रशत्रुकलत्रकाः ।
मरणं धर्म्मकर्म्मायव्यया द्वादश राशयः ॥
नामानुरूपमेतेषां शुभाशुभफलं लभेत ॥
लग्ने सिद्धिस्तथा नित्यं धने धनसमृद्धिदः ।
भ्रातरि भ्रातृवृद्धिश्च शत्रौ शत्रुविवर्द्धनः ॥
पुत्त्रे पुत्त्रविवृद्धिः स्यात् बन्धौ बान्धववत् प्रियः ।
कलत्रे मध्यमा प्रोक्ता मरणे मरणं भवेत् ॥
धर्म्मे धर्म्मविवृद्धिः स्यात् सिद्धिदः कर्म्मसंस्थितः ।
आये च धनसम्पत्तिर्व्यये च कथितव्ययः ॥”
वैष्णवतन्त्रे तु शत्रुस्थाने बन्धुरिति पाठः । इति तन्त्रसारः ॥

**राशिव्यवहारः**, पुं, ( राशेर्व्यवहारः । ) धान्यराशिपरिमाणज्ञापकाङ्कः । तद्विवरणं यथा,—
अथ राशिव्यवहारे करणसूत्रं वृत्तम् ।
“अनणुषु दशमांशोऽण्वधान्ये कादशांशः
परिधिनवमभागः शूकधान्येषु वेधः ।
भवति परिधिषष्ठे वर्गिते वेधनिघ्ने
घनगणितकराः स्युर्मागधास्ताश्च खार्य्यः ॥”
उदाहरणम् ।
“समभुवि किल राशिर्यः स्थितः स्थूलधान्यः
परिधिपरिमितिः स्याद्धस्तषष्टिर्यदीया ।
प्रवद गणक खार्य्यः किंमिताः सन्ति तस्मिन्
अथ पृथगणुधान्यैः शूकधान्यैश्च शीघ्रम् ॥”

अथ स्थूलधान्यराशिमानावबोधनाय

परिधिः ६० । वेधः ६ । परिधेः षष्ठांशः १० । वर्गितः १०० । वेध ६ निघ्नः । जाताः खार्य्यः ६०० ।

अथाणुधान्यराशिमानानयनाय

न्यासः

परिधिः ६० । वेधः $\frac{६०}{११}$ । जातं फलम् ५४५ $\frac{५}{११}$ ।

अथ शूकधान्यराशिमानानयनाय

न्यासः

परिधिः ६० । वेधः $\frac{२०}{३}$ । खार्यः ६६६ $\frac{२}{३}$ ।

अथ भित्त्यन्तर्बाह्यकोणसंलग्नराशिप्रमाणानयने करणसूत्रं वृत्तम् ।

"द्विवेदसत्रिभागैकनिघ्नात्तु परिधेः फलम् ।
भित्त्यन्तर्बाह्यकोणस्थराशेः स्याद्गुणभाजितम् ॥"

उदाहरणम् ।

"परिधिर्भित्तिलग्नस्य राशेस्त्रिंशत्करः किल ।
अन्तःकोणस्थितस्यापि तिथितुल्यः करः सखे ॥
बहिः कोणस्थितस्यापि पञ्चघ्ननवसम्मितः ।
तेषामाचक्ष्व मे क्षिप्रं घनहस्तान् पृथक् पृथक् ॥"

अत्रापि शूकादिधान्यानां राशिमानाव-
बोधनाय पद्यमेतदवधम् ।

तथाहारायणशूकधान्यराशिमानबोधकं चित्रम् ।

न्यासः

अत्रादस्य परिधिः ३० । त्रिगुणः ६० । अन्यः १५ । चतुर्गुणः ६० । अपरः ४५ । सत्रि-भागैक $\frac{४}{३}$ निघ्नः ६० । एषां वेधः ६ । एभ्यः फलं तुल्यमेतावदेव खार्यः ६०० । एतत्-स्वस्वगुणेन भक्तं जातं पृथक् पृथक् फलम् २०० । १५० । ४५० ॥

अथाणुधान्यराशिमानानयनाय

न्यासः

पूर्ववत्त्रैराशिकयासंयुक्तगुणितपरिधिः ६० । वेधः $\frac{६०}{११}$ । फलानि २०२ $\frac{८}{११}$ । १३६ $\frac{४}{११}$ । ४०९ $\frac{१}{११}$ ।

अथ शूकधान्यराशिमानानयनाय

न्यासः

अत्रापि पूर्ववत् त्रैराशिकयासंयुक्तगुणितः परिधिः ६० । वेधः $\frac{२०}{३}$ । फलानि ३३३ $\frac{१}{३}$ । १६६ $\frac{२}{३}$ । ५०० ।

इति लीलावत्यां राशिव्यवहारः समाप्तः ॥

राष्ट्रं, पुं, क्ली, ( राजते इति । राज् + "सर्व्व-धातुभ्यः ष्ट्रन् ।" उणा० ४ । १५८ । इति ष्ट्रन् । व्रश्चेति षः । ) विषयः । ( यथा, मनुः । ९ । २५४ ।
"अष्टाङ्गसत्कारान् यस्तु बलिं गृह्णाति पार्थिवः ।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥")
उपद्रवः । इत्यमरः । ३ । ३ । १८३ ॥ विषयो जनपदः । उपद्रवो मरकादिः । इति भरतः ॥ ( राष्ट्रपालननियमादिकं महाभारते १२ । ८७ अध्याये द्रष्टव्यम् ॥ * ॥ पुं, पुरूरवोवंश-जातस्य काशेः पुत्रः । यथा, भागवते । ९ । १७ । ४ ।
"काश्यस्य काशिस्तत्पुत्त्रो राष्ट्रो दीर्घतमः पिता ॥")

राष्ट्रनिवासी, [ न् ] पुं, ( राष्ट्रे निवसतीति । नि + वस् + णिनिः । ) जानपदः । देशवासी । इति त्रिकाण्डशेषः ॥

राष्ट्रिका, स्त्री, ( राष्ट्रं उत्पत्तिस्थानत्वेनास्त्यस्या इति । राष्ट्र + ठन् । टाप् । ) कण्टकारिका । इत्यमरः । २ । ४ । ९३ ॥ ( पुं, राष्ट्रवासी । जानपदः । यथा, मनुः । १० । ६१ ।
"यत्र त्वेते परिध्वंसा जायन्ते वर्णदूषकाः ।
राष्ट्रिकैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति ॥"
राष्ट्रपतिः । यथा, हरिवंशे । १८३।२७—२८ ।
"कुम्भाण्ड ! मन्त्रिणां श्रेष्ठ ! प्रीतोऽस्मि तव सुव्रत ।
तुष्टस्त्वां विधास्यामि राष्ट्रिकोऽस्तु भवानिह ॥
महासिपत्रः सुतस्ते निर्वृतोऽस्तु भवानिह ।
राज्यश्च ते मया दत्तं चिरं जीव ममा-श्रयात् ॥")

राष्ट्रियः, पुं, ( राष्ट्रेऽभिजातः । राष्ट्र + "राष्ट्रा-वारपाराद्घखौ ।" ४ । २ । ९३ । इति घः । यद्वा, राष्ट्रे जातः । "तत्र जातः ।" ४ । ३ । २५ । इति घः । ) नाट्योक्तौ राजश्यालः । इत्यमरः । १ । ७ । १४ ॥ ( राष्ट्राध्यक्षः । यथा, महाभारते । १२ । ८५ । १२ ।
"ततः संप्रेषयेद्राष्ट्रे राष्ट्रियाय च दर्शयेत् ॥")

राष्ट्रीयः, पुं, ( राष्ट्रे भव इति । राष्ट्र + छः । ) नाट्योक्तौ राजश्यालः । इति हेमचन्द्रः । २ । २४ ॥ राष्ट्रसम्बन्धिनि, त्रि ॥ ( यथा, महा-भारते । १२ । ८७ । ९ ।
"धान्यं हिरण्यं भोगेन भोक्ता राष्ट्रीयसत्तमः ॥")

रास, ऋ ङ शब्दे । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-अक०-सेट् । ) ऋकारोऽदन्तस्याभावाय । दन्त्यान्तोऽयमिति गद-सिंहः । रासभः खरः । दुर्गसिंहमते तालव्यान्तं मत्वा उष्मादौ पठित्वा दृशिशब्दं कृत्वादितवान् । ऋ, अरराषत् । ङ, रासते । इति दुर्गादासः ॥

रासः, पुं, ( रासनमिति रासतेऽस्मिन्निति वा । रास शब्दे + भावे अधिकरणे वा घञ् । ) कोला-हलः । ध्वानः । भाषाशृङ्खलकः । गोपानां क्रीडाभेदः । इति मेदिनी । से, ११ ॥ तस्य विधिर्यथा,—
"कार्त्तिकीपूर्णिमायाञ्च कृत्वा तु रासमण्डलम् ।
गोपानां शतकं कृत्वा गोपीनां शतकन्तथा ॥
शिलायां प्रतिमायां वा श्रीकृष्णं राधया सह ।
भारते पूजयेत् कृत्वा चोपचाराणि षोडश ॥
गोलोके च वसेत् सोऽपि यावद्वै ब्रह्मणो वयः ।
भारतं पुनरागत्य हरिभक्तिं लभेद्ध्रुवम् ॥
क्रमेण सुदृढां भक्तिं लब्ध्वा मन्त्रं हरेरपि ।
देहं त्यक्त्वा च गोलोकं पुनरेव प्रयाति च ॥
ततः कृष्णस्य सारूप्यं संप्राप्य पार्षदो भवेत् ।
पुनस्तत्पतनं नास्ति जरामृत्युहरो महान् ॥"

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २५ अध्यायः ॥
विस्तारस्तु श्रीकृष्णजन्मखण्डे २८ अध्याये श्रीमद्भागवतीयरासपञ्चाध्यायेषु च द्रष्टव्यः ॥ * ॥ कस्यचिन्मते बल्पतरुयात्रेयम् । अस्य विधि-र्यथा,—
"कार्त्तिके पौर्णमास्यान्तु रासयात्रा महाविधिः ।
नन्दसूनोः प्रकर्त्तव्या महाविभवविस्तरैः ॥
इह लोके सुखं प्राप्य अन्ते विष्णुपुरं व्रजेत् ॥
पूजा कार्य्याहरात्रे तु भवेत् प्रेमं महोत्सवैः ।
गीतैर्नानाविधैर्वाद्यैर्वर्धमानाम्बरानकैः ॥
नृत्यैश्च रासरङ्गाद्यैः कृष्णनामानुकीर्त्तनैः ।

चन्दनागुरुकस्तूरीपुष्पधूपैर्विराजितैः ॥
विहरद्भिर्विष्णुभक्तैः कार्य्य एव महोत्सवः ।
ध्यायेद्वृन्दावने रम्ये यमुनापुलिने वने ॥
त्रिकुञ्जसदने रम्ये गोपीमण्डलमण्डितम् ।
रासमण्डलमध्यस्थं गोविन्दं कर्णिकागतम् ॥
द्वयोर्द्वयोर्गोपिकयोर्मध्ये कान्तमनेकधा ।
अपरं नटवेशेन मध्ये तं मुरलीधरम् ॥
गोपीजनमुखाम्भोजमधुपानमधुव्रतम् ।
कुलालचक्रप्रतिमं मण्डलं पङ्कजाकृतम् ॥
दलाष्टशोभितं कार्य्यं महिष्योऽष्टौ च सन्ति च ।
मध्ये मध्ये च गोविन्दं पार्श्वयोरष्टरूपकम् ॥
मुकुन्दं माधवं कृष्णं नटनागरमेव च ।
हरिं दामोदरं विष्णुं पूजयेत् कामरूपिणम् ॥
तदाष्टौ भूपुरे गोप्यः शतशोऽथ सहस्रशः ।
पूजनीयाः प्रयत्नेन नृत्यगीतपरायणाः ॥
असंख्या गोपिकास्तत्र मण्डलेऽष्टौ वराङ्गनाः ।
महिष्यस्ताः समाख्याताः सदाकृष्णसुनिव्रताः ॥
भक्तोत्सवाभिलाषेण कमला बहुरूपिणी ।
राधा विशाखा विमला सुमित्रा ललिता तथा ।
सुन्दरी कमला रम्भा महिष्योऽष्टौ प्रकीर्त्तिताः ॥
तारा राधा निराबाधा लक्ष्मा भेदमुपागताः ।
तासां ध्यानैर्न्यसनाद्यैः पूजा कार्य्या विशेषतः ॥
उत्तीर्णे सायं समये गोप्यो वृन्दावनं ययुः ।
रासक्रीडां ततश्चाभिचक्रे च जगदीश्वरः ॥
गोप्यो रासक्रीडां चक्रुः पौर्णमास्यां महा-
निशि ।
न तत्र पक्षिनिनदो न किञ्चिज्जनरवस्तथा ॥
महानिशा द्वे घटिके रात्रेर्मध्यमयामयोः ।
तद्यामौ च कर्त्तव्यं पौर्णमास्यां निशामुखे ॥
एवं रासक्रीडां यस्तु कारयेद्भुवि मानवः ।
स सर्व्वदुष्कृतं त्यक्त्वा निर्व्वाणमुक्तिमाप्नुयात् ॥”
इत्युत्कलकलिका ॥
( विलासः । यथा, भागवते । ५ । २ । १२ ।
“अस्मद्विधस्य मन उन्नयनौ बिभर्त्ति
वल्कलं सरसराससुधादिवक्त्रे ।”
“वक्षि च वल्कलं बिभर्षि किं तदाह । रसो मधुरालापः रासो विलासस्ताभ्यां सहिता सुधा अधरामृतम् । आदिशब्दात् स्मितकटाक्षादि ।” इति तत्र श्रीधरस्वामी ॥ क्रिया । यथा, भागवते । ५ । १३ । १७ ।
“तैर्वञ्चितो हंसकुलं समाविशन्
अरोचयन् शीलमुपैति वानरान् ।
तज्जातिरासेन सुनिर्वृतेन्द्रियः
परस्परोद्वीक्षणविस्मृतावधिः ॥”
“तैर्वञ्चितस्तत्र धनाभावे ज्ञात्वा हंसानां ज्ञानवतां कुलं पुनः प्रविशन् तेषां शीलं प्रायश्चित्तपूर्व्वकं पुनश्चरणमाचारमरोचयन् अप्रियं पश्यन् वानरतुल्यान् भ्रष्टाचारान् शूद्रप्रायानुपैति । तज्जातिरासेन वानरजातिक्रियया स्त्रिया मिथुनीभूय परस्परमुखोद्वीक्षणेन विस्मृतो जीवितावधिर्मरणकालो येन ।” इति तट्टीकायां श्रीधरस्वामी ॥ * ॥ )

रासभः, पुं, ( रासते शब्दायते इति । रास + “रासिवल्लिभ्याञ्च ।” उणा० ३ । १२५ । इति अभच् । ) गर्द्दभः । इत्यमरः । २ । ९ । ७८ ॥ ( अयं हि भक्षकः पञ्चमो जातः । यथा, मार्कण्डेये । ४८ । २६ ।
“पञ्चमाच्चाभवत् समातङ्गात् रासभान् ग्रसकान्
जगात् ।
उष्ट्राश्चाश्वतराश्चैव नानारूपाश्च जातयः ॥”
अश्वतरः । खच्चर इति भाषा । यथा, महाभारते । १ । १४५ । ७ ।
“स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना ।
वारणावतमद्यैव यथा यासि तथा कुरु ॥”)

रासभवन्दिनी, स्त्री, मल्लिका । इति शब्दचन्द्रिका ॥

रासभी, स्त्री, ( रासभ + ङीष् । ) गर्द्दभी । इति शब्दरत्नावली ॥ ( यथा, महाभारते । ११ । २७ । १४ ।
“एतत् श्रुत्वा मनुष्यस्तु रासभं रासभीपयः ।
अवतीर्य्य रथात्तूर्णं रासभीं प्रत्यभाषत ॥” )

रासमण्डलं, क्ली, ( रासस्य मण्डलम् । ) श्रीकृष्णस्य रासक्रीडास्थानम् । तद्विवरणम् । यथा,—
“तस्मादुपरि गोलोकः पञ्चाशत्कोटियोजने ।
वायुना धार्य्यमाणश्च विचित्रपरमाश्रयः ॥
अतीवरम्यनिर्म्माणो नित्यरूपो मदिच्छया ।
शतशृङ्गेण शैलेन पुण्यवृन्दावनेन च ॥
सुरासमण्डलेनापि नद्या विरजयावृतः ।
कोटियोजनविस्तीर्णा प्रस्थेन विरजा व्रज ॥
दैर्घ्ये तस्य शतगुणा परितः परमा शुभा ।
अमूल्यरत्ननिकरा हीरामाणिक्ययोस्तथा ॥
मणीनां कौस्तुभादीनामसंख्यानां मनोहरा ।
अमूल्यरत्ननिर्म्माणं तत्रापि प्रतिमन्दिरम् ॥
मनोहरञ्च प्राकारमतुलं विश्वकर्म्मणा ।
गोपीभिर्गोपनिकरैर्वेष्टितं कामधेनुभिः ॥
कल्पवृक्षैः पारिजातैरसंख्येयञ्च सरोवरैः ।
पुष्पोद्यानैः सुकोटिभिः संवृतं रासमण्डलम् ॥
वेष्टितं वेष्टितैर्गोपीमन्दिरैः शतकोटिभिः ।
रत्नप्रदीपयुक्तैश्च पुष्पतल्पसमन्वितैः ॥
सुगन्धिचन्दनामोदैः कस्तूरीकुङ्कुमान्वितैः ।
क्रीडोपयुक्तभोगैश्च ताम्बूलैर्वासितैर्जलैः ॥
धूपैः सुरभिरम्यैश्च माल्यैश्च रत्नदर्पणैः ।
रत्नेन रचितैः शश्वद्द्वारदासीभिः कोटिभिः ॥
अमूल्यरत्नाभरणैर्वह्निशुद्धांशुकैरपि ।
सप्तमसागरेन्द्राद्यां वेष्टितैश्च वनैः क्रमात् ॥
नवयौवनसम्पन्नै रूपैर्निरुपमैरपि ।
रम्यञ्च वर्त्तुलाकारं चन्द्रबिम्बं यथा व्रज ॥
अमूल्यरत्नरचितं दशयोजनविस्तृतम् ।
कस्तूरीकुङ्कुमै रम्यैः सुगन्धिचन्दनार्च्चितैः ॥
आवृतं मङ्गलघटैः फलपल्लवसंयुतैः ।
दधिलाजैश्च पर्णैश्च स्निग्धदूर्वाङ्कुरैः फलैः ॥
श्रीरामकदलीस्तम्भैरसंख्यैश्च मनोहरैः ।
पट्टसूत्रनिबद्धैश्च श्रीचन्दनपल्लवैः ॥
चन्दनागरुमाल्यैश्च भूषणैश्च विभूषितम् ।
अमूल्यरत्नरचितं शतशृङ्गं मनोहरम् ॥
कोटियोजनमूर्द्धञ्च दैर्घ्यं दशगुणोत्तरम् ।
शैलमध्यं परिमितं पञ्चाशत्कोटियोजनम् ॥
अतीवकमनीयञ्च वेदेऽनिर्व्वचनीयकम् ।
प्राकारमिव तस्यापि गोलोकस्य मनोहरम् ॥
परितो वेष्टितं रम्यं हीराहारसमन्वितम् ।
तत्र वृन्दावनं रम्यं युक्तं चन्दनपादपैः ॥
कल्पवृक्षैश्च रम्यैश्च मन्दारैः कामधेनुभिः ।
शोभितं शोभनाढ्यैश्च पुष्पोद्यानैर्मनोहरैः ॥
क्रीडासरोवरै रम्यैः सुरम्यै रतिमन्दिरैः ।
अतीवरम्यं रहसि रासयोग्यस्थलान्वितम् ॥
रचितं रत्नकै रम्यैरसंख्यैर्गोपिकागणैः ।
परितो वर्त्तुलाकारं त्रिंशद्योजनं वनम् ॥
षट्पदध्वनिसंयुक्तं पुंस्कोकिलरुतान्वितम् ।
तत्राक्षयवटो रम्यो रहस्येव हि विस्तृतः ॥
सहस्रयोजनोर्द्धश्च परितश्च चतुर्गुणः ।
गोपीनां कल्पवृक्षश्च सर्व्ववाञ्छाफलप्रदः ॥
क्रीडाश्रितैरावृतश्च राधादासीभिरन्वितैः ।
विरजातीरनारीणां यमुनाशीतलेन च ॥
पुष्पान्वितेन मान्द्येन पवनेन सुगन्धिना ।
दासीगणैरसंख्यैश्च वृन्दावनविनोदिनी ॥
तत्र क्रीडति सा राधा मम प्राणाधिदेवता ॥
सेयं श्रीदामशापेन वृषभानुसुताधुना ।
ब्रह्मादिदेवैः सिद्धेन्द्रैर्मुनीन्द्रैः पूजिता व्रज ॥”
इति ब्रह्मवैवर्त्ते भगवन्नन्दसंवादे श्रीकृष्णजन्मखण्डे ८४ अध्यायः ॥

रासयात्रा, स्त्री, ( रासस्य यात्रा उत्सवः । ) कार्त्तिकीपौर्णमासीकर्त्तव्यश्रीकृष्णस्योत्सवविशेषः । तद्विवरणं यात्राशब्दे द्रष्टव्यम् ॥ * ॥ शक्तिविषयकरासयात्रा यथा,—
“पौर्णमास्यां रासयात्रां देव्याः कुर्य्याद्वि-
शाङ्कके ।
पूर्व्वमन्त्रसमाख्याय देवीं देवासनं यजेत् ॥”
पौर्णमास्यां चैत्रपौर्णमास्याम् ।
“संमुखे रासस्थानं भैरवीभैरवान्वितम् ।
कृत्वा तान् पूजयित्वा च भ्रामयेत् कुम्भचक्रवत् ॥
कोलाहलं मृदङ्गादिवाद्यैर्नृत्यैः सुगीतकैः ।
कुर्य्यादानन्दहृदयः साधकः स्थिरमानसः ॥
वित्तशाठ्यं न कुर्व्वीत देवीयात्रा सुखप्रदा ॥”
इति वामकेश्वरतन्त्रे ५४ पटलः ॥

रासेरसः, पुं, ( रासे क्रीडाविशेषे यो रसः । अलुक्समासः । ) गोष्ठी । रासः । शृङ्गारः । रससिद्धिः । रसावासः । वल्लीनागरकः । इति मेदिनी । से, ६० ॥ उत्सवः । इति शब्दरत्नावली ॥ परिहासः । इति जटाधरः ॥

रासेश्वरी, स्त्री, ( रासस्य ईश्वरी । ) राधा । यथा,—
“राधा रासेश्वरी रासवासिनी रसिकेश्वरी ।”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १७ अध्यायः ॥

रास्ना, स्त्री, ( रस्यते इति । रस आस्वादने + “रास्नासास्नास्थूणावीणाः ।” उणा० ३ । १५ । इति नप्रत्ययेन साधुः । ) स्वनामख्यातलता-

विशेषः । रासन इति हिन्दी भाषा । तत्पर्य्यायः । नाकुली २ सुरसा ३ सुगन्धा ४ गन्धनाकुली ५ नकुलेष्टा ६ भुजङ्गाक्षी ७ छत्राकी ८ सुवहा ९ । इत्यमरः ॥ नाकुल्यादिपञ्चकं रास्नायाम् । नकुलेष्टादिचतुष्कं सर्पाक्ष्यामित्याहुः । इति तट्टीकायां भरतः ॥ रसा १० श्रेयसी ११ रसना १२ रसा १३ सुगन्धिमूला १४ रसाढ्या १५ अतिरसा १६ द्रोणगन्धिका १७ सर्पगन्धा १८ पलङ्कषा १९ । इति जटाधरः ॥ अस्या गुणाः । गुरुत्वम् । तिक्तत्वम् । उष्णत्वम् । विषवातास्रकासशोफकम्पोदरसर्व्वनाशित्वम् । पाचनत्वञ्च ।

"रास्ना तु त्रिविधा प्रोक्ता मूलं पत्रं तृणं तथा ।
श्रेष्ठौ मूलदलौ विद्धि तृणा रास्ना तु मध्यमा ॥"
इति राजनिर्घण्टः ॥

अपि च ।

"नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ।
नकुलेष्टा भुजङ्गाक्षी सर्पाक्षी विषनाशिनी ॥
नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत् ।
भोगिलूतावृश्चिकाखुविषज्वरकृमिव्रणान् ॥"
इति भावप्रकाशः ॥

रास्ना शोथामवातघ्नी । इति राजवल्लभः ॥ ओषधिविशेषः । कौंटा आमरुली इति भाषा । तत्पर्य्यायः । एलापर्णी २ सुवहा ३ युक्तरसा ४ । इत्यमरः ॥ अपि च ।

"रास्ना युक्तरसा रस्या सुवहा रसना रसा ।
एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा ॥
रास्नामपाचनी तिक्ता गुरूष्णा कफवातजित् ।
शोथश्वाससमीरास्रवातशूलोदरापहा ।
कासज्वरविषाशीतिवातिकामयहिध्महृत् ॥"
इति भावप्रकाशः ॥

(रशना । यथा वाजसनेयसंहितायाम् ।१।३०।
"अदित्यै रास्नासि ।"
"हे योक्त्र अदित्यै अदित्या भूम्यास्त्वं रास्नासि रशना असि ॥" इति तद्भाष्ये महीधरः ॥
व्रजपत्नीनामन्यतमा । यथा, ब्रह्मवैवर्त्ते । १ । ९ । १३—१४ ।

"नामानि व्रजपत्नीनां सावधानं निबोध मे ।
कला कलावती कान्ता कालिका कलहप्रिया ॥
कन्दली भीषणा रास्ना प्रबोधा भूषणा शुकी ।
एतासां बहवः पुत्रा बभूवुः शिवपार्षदाः ॥")

राहुः, पुं, (रह त्यागे + बहुलवचनात् उण् ।) त्यागः । इति संक्षिप्तसारोणादिवृत्तिः ॥ (रहति गृहीत्वा त्यजति चन्द्रमिति । रह त्यागे + बहुलवचनात् उण् । इत्युज्ज्वलः । १ । १ ।) ग्रहविशेषः । तत्पर्य्यायः । तमः २ स्वर्भानुः ३ सैंहिकेयः ४ विधुन्तुदः ५ । इत्यमरः ॥ अभ्रपिशाचः ६ ग्रहकल्लोलः ७ सैंहिकः ८ उपप्लवः ९ शीर्षकः १० उपरागः ११ सिंहिकासुतः १२ । इति शब्दरत्नावली ॥ तमवर्णः १३ कबन्धः १४ । इति जटाधरः ॥ अगुः १५ असुरः १६ । इति ज्योतिस्तत्त्वम् ॥ तस्योत्पत्त्यादिर्यथा,—

"सिंहिकायामथोत्पन्ना विप्रचित्तेश्चतुर्दश ।
शम्भः शम्बलनाभश्च बलः शक्रस्तथैव च ॥
इल्वलो नमुचिश्चैव वातापी श्वसृपो जिनः ।
नरकश्चकालनाभौ भौमश्च नरकस्तथा ॥
राहुर्ज्येष्ठश्च तेषां वै चन्द्रसूर्य्यप्रमर्द्दनः ।
इत्येते सिंहिकापुत्रा देवैरपि दुरासदाः ॥
दारुणाभिजनाः क्रूराः सर्व्वे ब्रह्मद्विषस्तु ते ।
दशान्यानि सहस्राणि सैंहिकेयो गणः स्मृतः ॥
निहतो जामदग्न्येन भार्गवेण बलीयसा ।
स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु शची सुता ॥"
इति वह्निपुराणे प्रजापतिसर्गनामाध्यायः ॥*॥

तस्य शिरश्छेदकारणं यथा,—

"देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि ।
प्रविष्टः सोममपिबत् चन्द्रार्काभ्याञ्च सूचितः ॥
चक्रेण क्षुरधारेण जहार पिबतः शिरः ।
हरिस्तस्य कबन्धस्तु सुधयाप्लावितोऽपतत् ॥
शिरस्त्वमरतां नीतमजो ग्रहमचीकॢपत् ।
यस्तु पर्व्वणि चन्द्रार्कावभिधावति वैरधीः ॥"
इति श्रीभागवते ८ स्कन्धे ९ अध्यायः ॥

स च मलयपर्व्वतजातः । शूद्रवर्णः । द्वादशाङ्गुलपरिमाणः । कृष्णवर्णः । कृष्णवस्त्रः । सिंहवाहनः । चतुर्भुजः । खड्गवरशूलचर्म्मधारी । सूर्य्यास्यः । अस्य अधिदेवता कालः । प्रत्यधिदेवता सर्पः । इति ग्रहयज्ञतत्त्वम् ॥ अस्य स्वरूपं शिरोवत् । स च चक्राकृतिः । सर्पाकृतिः । अस्तिस्वामी नैर्ऋतदिक्स्वामी च । इति ग्रहन्यासकादयः ॥ (राहुचारस्य फलाफलं बृहत्संहितायाः ५ अध्यायतो द्रष्टव्यम् ॥)

राहुग्रासः, पुं, (राहोर्ग्रासो ग्रहणं यत्र ।) चन्द्रसूर्य्ययोर्ग्रहणम् । यथा,—
"राहुग्रासोऽर्केन्द्वोर्ग्रह उपराग उपप्लवः ॥"
इति हेमचन्द्रः । २ । ३९ ॥
(अत्र राहुग्राह इत्यपि पाठो दृश्यते ॥)

राहुचक्रं, क्ली, (राहोश्चक्रम् ।) रव्यादिसप्तवारेषु अष्टगत्या यामार्द्धेन यामार्द्धं प्राप्य अष्टदिक्षु राहोर्गमनम् । यथा,—

"प्रचादर्के विधौ वह्नौ सौम्यां शौ वायवे कुजे ।
रक्षोदिशि भृगौ याम्यां गुरावैशे शनौ दिने ।
राहुर्भ्रमति यामार्द्धैरष्टगत्या च वामतः ॥
द्यूते युद्धे विवादे च यात्रायां सम्मुखं स्थितम् ।
राहुं विवर्ज्जयेद्यत्नाद्यदीच्छेत् कर्म्मणः फलम् ॥"
इति चतुष्कमुक्तावली ॥*॥

राहुकालानलचक्रं यथा,—

"तस्य चक्रं प्रवक्ष्यामि राहुकालानलात्मकम् ।
शलाकाष्टकं चक्रं ईशादौ त्रिशिकाङ्किता ॥
यत्र ऋक्षे स्थितो राहुर्वदनं तद्विनिर्द्दिशेत् ॥
मुखात् पञ्चदशे ऋक्षे तस्य पुच्छं व्यवस्थितम् ।
अष्टोत्तरशतं जाता जायन्ते यत्र केतवः ॥
आद्यं तस्याष्टमं गतं यद्ग्रहपाकैश्च मस्तिमः ।
राहुस्थानि ऋक्षाणि जीवपक्षे जयोदये ॥
जयोदये च भोग्यानि मृतपक्षे प्रकीर्त्तयेत् ।
मृतपक्षे मुखं तस्य गुदं जीवाङ्गमध्यगम् ॥
एवमङ्गद्वयो राहुर्ज्ञातव्यः स्वरपारगैः ।
जीवपक्षे जयार्थाय मृतपक्षे रवौ स्थिते ।
तस्मिन् काले शुभा यात्रा विपरीते तु
हानिदा ॥"
इति स्वरोदयः ॥

राहुच्छत्रं, क्ली, आर्द्रकम् । इति राजनिर्घण्टः ॥

राहुदर्शनं, क्ली, (राहोर्दर्शनं यत्र ।) राहोर्ग्रासग्रसनम् । ग्रहणमिति यावत् । यथा,—

"चक्षुषा दर्शनं राहोर्यत्तद्ग्रहणमुच्यते ।
तत्र कर्म्माणि कुर्व्वीत गम्यमानागतो नतु ॥
राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानमात्रन्तु कर्त्तव्यं दानश्राद्धविवर्ज्जितम् ॥"
इति तिथ्यादितत्त्वम् ॥

राहुभेदी, [न्] पुं, (राहुं भिनत्तीति । भिद् + णिनिः ।) विष्णुः । इति जटाधरः ॥

राहुमूर्द्धभित्, पुं, (राहोर्मूर्द्धानं भिनत्ति छिनत्तीति । भिद् + क्विप् ।) विष्णुः । इति त्रिकाण्डशेषः ॥

राहुरत्नं, क्ली, (राहुप्रियं रत्नम् । राहो रत्नमिति वा ।) गोमेदकः । इति राजनिर्घण्टः ॥

राहुसूतकः, पुं, ग्रहः । इति हेमचन्द्रः । २ । १५१ ॥

राहुबृहस्पतियोगः, पुं, (राहुणा बृहस्पतेर्योगो मेलनम् ।) एकराशिस्थितगुरुराहुः । गुरुचाण्डालयोग इति ख्यातः । तस्य कालाशुद्धिजनकत्वं यथा, भोजदेवव्यवहारसमुच्चये ।

"सर्व्वं कार्य्यं न कर्त्तव्यं गुरौ सिंहेऽस्तगेऽपि च ।
मलदोषे न कुर्व्वीत तमोयुक्ते बृहस्पतौ ॥"

तमोयुक्ते राहुयुक्ते । मलदोषे इति नित्येतरवैदिककर्म्मोपलक्षणम् । तथा च स्मृतिसारे ज्योतिषम् ।

"एकराशौ स्थितौ स्यातां यदि राहुबृहस्पती ।
विवाहव्रतयज्ञादि सर्व्वं तत्र परित्यजेत् ॥"

मलमासाद्युपक्रम्य भविष्ये ।

"मध्यमेऽप्येकराशौ सम्पर्कौ यदि तावयोः ।
गुरौ राहोरपि तथा व्रजेद्विहाय संशयः ॥"

अत्र गुरोर्ज्ज्वलत्वं हेतुः ।

"यत्र यत्र स्थितो जीवस्तमोयोगेन लभ्यते ।
उपद्रवाय किं न स्यात्तमःसङ्गो मनीषिणाम् ॥"
इति मलमासतत्त्वम् ॥*॥

अस्य प्रतिप्रसवो यथा,—

"कर्णाटनाटाङ्गकलिङ्गदेशे
बृहस्पती राहुयुतो विरुद्धः ।
शेषेषु देशेषु न चास्ति दोषः
सर्व्वत्र कार्य्यं मुनयो वदन्ति ॥"

इति बृहद्राजमार्त्तण्डवचनमिति केचिद्वदन्ति ॥

राहुस्पर्शः, पुं, (राहोः स्पर्शो यत्र ।) उपरागः । इति हलायुधः ॥

बभूव सुफला साध्वी ईश्वरी भुवनेश्वरी ।
ब्रतस्यास्य प्रभावेन सुपुत्रा त्वञ्च देवकि ! ॥
भविष्यसि त्रिलोकेशं पुत्रञ्च जनयिष्यसि ।
इत्येवं श्रावयित्वा च विरराम सुनिश्वरा ॥
जगाम मथुरां पार्थ मयाप्येवं तवोदितम् ।
याः स्त्रियः स्वाचरिष्यन्ति ब्रतमेतद्युधिष्ठिर ॥
कुक्कुटाख्यं ब्रवङ्गाख्यं देवक्याचरितं शुभम् ।
नासां सन्ततिविच्छेदो न कदाचिद्भविष्यति ॥
स्त्रियश्चैवाचरिष्यन्ति ब्रतमेतत् सुखप्रदम् ।
अस्मिन् लोके सुखं भुक्त्वा यास्यन्ति शिवमन्दि-
रम् ॥

या कुक्कुटीब्रतमिदं प्रवणीयमेतं
दोरं विभाव्य हृदये च गुरुं निधाय ।
भक्त्या करोति तनुयौवविधानदक्षं
साध्वी सदा भवति शोभनजीववत्सा ॥"

इति भविष्यपुराणे कुक्कुटीब्रतकथा समाप्ता ॥

लवं, क्ली, ( लू + अप् । ) लामज्जकम् । इति शब्दचन्द्रिका ॥ लवङ्गम् । लामज्जकम् । ईषत् । इति राजनिर्घण्टः ॥

लवः, पुं, ( लवनमिति । लू + अप् । ) लेशः । ( यथा, रघुः । १६ । ६६ ।
"बहुतरानिरलकैस्तथय-
श्यावमानान् वारिलवान् वमन्ति ॥" )
विनाशः । छेदनम् । रामपुत्त्रः । इति मेदिनी । वे, २२ ॥ अत्र विनाशस्थाने विलासः । इति विश्वः हेमचन्द्रश्च ॥ ( रामपुत्त्रस्य जन्मविवरणादिकं रामायणे उत्तरकाण्डतो ज्ञातव्यम् ॥ ) कालभेदः । यथा,—
"अष्टादशनिमेषास्तु काष्ठा काष्ठाद्वयं लवः ॥"
इति हेमचन्द्रः ॥
( यथा, भागवते । १ । १८ । १३ ।
"तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥")
लामज्जकम् । पक्षी । इति राजनिर्घण्टः ॥
( किञ्जल्कः । पक्षः । गोपुच्छलोम । इति रघुटीकायां मल्लिनाथधृतवैजयन्ती ॥ यथा, रघुः । १५ । ३२ ।
"स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया ।
कविः कुशलवावेव चकार किल नामतः ॥")

लवङ्गं, क्ली, ( लुनाति श्लेष्मादिकमिति । लू + "लस्यादिभ्यश्च ।" उणा० १ । ११८ । इति अङ्गच् । ) स्वनामख्यातवणिग्द्रव्यभेदः । तत्पर्य्यायः । देवकुसुमम् २ श्रीसंज्ञम् ३ । इत्यमरः ॥ श्रीप्रसूनम् ४ । इति भावप्रकाशः ॥ लवङ्गकम् ५ । इति शब्दरत्नावली ॥ लवङ्गकलिका ६ दिव्यम् ७ शेखरम् ८ लवम् ९ श्रीपुष्पम् १० वारिजम् ११ वारिसम्भवम् १२ भृङ्गारम् १३ गीर्व्वाणकुसुमम् १४ चन्दनपुष्पम् १५ । अस्य गुणाः । शीतलत्वम् । तिक्तत्वम् । चक्षुष्यत्वम् । भुक्तरोचकत्वम् । वातपित्तकफनाशित्वम् । तीक्ष्णत्वम् । श्लेष्मनाशत्वञ्च । इति राजनिर्घण्टः ॥ आध्माननाश-
कत्वम् । दीपनत्वम् । लघुत्वञ्च । इति राजवल्लभः ॥ अपि च ।
"लवङ्गं कटुकं तिक्तं लघु नेत्रहितं हिमम् ।
दीपनं पाचनं रुच्यं कफपित्तास्रनाशकृत् ॥
तृष्णां छर्द्दिं तथाध्मानं शूलमाशु विनाशयेत् ।
कासं श्वासञ्च हिक्काञ्च क्षयं क्षपयति ध्रुवम् ॥"
इति भावप्रकाशः ॥
( यथा,—
"विरहानलसन्तप्ता तापिनी कापि कामिनी ।
लवङ्गानि समुत्सृज्य मध्यमे राघवे ददौ ॥"
इत्युद्भटः ॥ )

लवङ्गकं, क्ली, ( लवङ्ग + स्वार्थे कन् । ) लवङ्गम् । इति शब्दरत्नावली ॥ ( लवङ्गशब्देऽस्य विवरणं विज्ञेयम् ॥ )

लवङ्गकलिका, स्त्री, लवङ्गम् । इति राजनिर्घण्टः ॥

लवङ्गलता, स्त्री, ( लवङ्गस्य लता । ) पुष्पलताविशेषः । यथा, जयदेवः ।
"ललितलवङ्गलतापरिशीलनकोमलमलय-
समीरे ।
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्ज-
कुटीरे ॥
विहरति हरिरिह सरसवसन्ते ।
नृत्यति युवतिजनेन समं सखि विरहिजनस्य
दुरन्ते ॥"
( यथा च ।
"अयि ! भ्रमर ! लवङ्गलतालये
पिब मधूनि विधूय मधुव्रताम् ।
इह वने हि वनचरसङ्कुले
नहि सतामसताञ्च विवेचना ॥" )
राधायाः सखीविशेषश्च ॥

लवणं, क्ली, ( लुनाति जाड्यमिति । लू + नन्द्यादित्वात् ल्युः । पृषोदरादित्वात् णत्वम् ।) क्षाररसयुक्तद्रव्यम् । तत्तु पञ्चविधं यथा । सौवर्च्चलम् १ सैन्धवम् २ विटम् ३ औद्भिदम् ४ सामुद्रम् ५ । तथा हि ।
"सामुद्रं यत्तु लवणमक्षीवं वसिरञ्च तत् ।
सैन्धवोऽस्त्री शीतशिवं माणिमन्थञ्च सिन्धुजे ॥
रौमकं वसुकं पाक्यं विडञ्च कृतके द्वयम् ॥"
सौवर्च्चलेऽक्षरुचके । इत्यमरः ॥ ( अस्य विवरणं यथा । "सैन्धवसामुद्रविडसौवर्च्चलरोमकौद्भिदप्रभृतीनि लवणानि यथोत्तरमुष्णानि वातहराणि कफपित्तकराणि यथापूर्व्वं स्निग्धानि स्वादूनि सृष्टमूत्रपुरीषाणि चेति ॥
"चक्षुष्यं सैन्धवं हृद्यं रुच्यं लघ्वग्निदीपनम् ।
स्निग्धं समधुरं वृष्यं शीतं दोषघ्नमुत्तमम् ॥
सामुद्रं मधुरं पाके नात्युष्णमविदाहि च ।
भेदनं स्निग्धमीषच्च शूलघ्नं नातिपित्तलम् ॥
सक्षारं दीपनं सूक्ष्मं शूलहृद्रोगनाशनम् ।
रोचनं तीक्ष्णमुष्णञ्च विडं वातानुलोमनम् ॥
लघु सौवर्च्चलं पाके वीर्य्योष्णं विशदं कटु ।
गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम् ॥
रौमकं तीक्ष्णमत्युष्णं व्यवायि कटुपाकि च ।
वातघ्नं लघु विष्यन्दि सूक्ष्मं विड्भेदि मूत्रलम् ॥
लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम् ।
सतिक्तं कटु सक्षारं विद्यादुत्कारिकौद्भिदम् ॥
कफवातक्रिमिहरं लेखनं पित्तकोपनम् ।
दीपनं पाचनं भेदि लवणं गुटिकाह्वयम् ॥
ऊषसूतं वालुकैलं शैलमूलाकरोद्भवम् ।
लवणं कटुकं छेदि तिक्तं कटु चोच्यते ॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥ * ॥
लू + भावे ल्युट् ।) छेदनम् । यथा । लवोऽभिलावो लवनम् । इति चामरः ( खड्गयुद्धप्रकारविशेषः । यथा, हरिवंशे भविष्यपर्व्वणि । ५१ । १७ ।
"आप्लुतं विप्लुतं स्थितं कुलवं लवणं प्लुतम् ॥")

लवणः, पुं, ( लुनातीति । लू + ल्युः । ) सिन्धुभेदः । ( यथा, महाभारते । ६ । ५ । १५ ।
"लवणेन समुद्रेण समन्तात् परिवारितः ॥")
राक्षसविशेषः । रसविशेषः । इति मेदिनी । णे, ७४ ॥ (यथा, भागवते । ३ । ३१ । ७ ।
"कट्वतीक्ष्णोष्णलवणक्षाराम्लादिभिरुल्बणैः ।
मातृभुक्तैरुपस्पृष्टः सर्व्वाङ्गोत्थितवेदनः ॥" )
पृथिव्यग्निगुणबाहुल्याल्लवणः । इति चक्रपाणिदत्तकृतद्रव्यगुणोपरि शिवदासीयटीका ॥ तत्पर्य्यायः । पटुः २ । तस्य गुणाः ।
"लवणो रुचिकृद्रसोऽभिदायी
पचनः स्वादुकरश्च सारकश्च ।
रमितो नितरां जरां च पित्तं
शिथिलाङ्गं ददाति कुष्ठकारी ॥"
इति राजनिर्घण्टः ॥
अपि च ।
"लवणः क्लेदनस्तीक्ष्णः पाचनो दीपनः सरः ।
स्निग्धो रुचिकरः स्यन्दी हृच्छूलकफहरो लघुः ॥"
अन्यच्च ।
"लवणः शोधनो रुच्यः पाचनः कफपित्तदः ।
पुंस्त्ववातहरः कायशैथिल्यमृदुताकरः ।
सोऽतियुक्तोऽक्षिपाकास्रपित्तकुष्ठक्षयापहृत् ॥"
इति राजवल्लभः ॥ * ॥
("लवणः स्तम्भसाङ्घातबन्धविध्मापनोऽग्निकृत् ।"
"लवणः स्तम्भसङ्घातबन्धविध्मापनोऽग्निकृत् ॥
स्नेहनः स्वेदनस्तीक्ष्णो रोचनश्छेदभेदकृत् ।
सोऽतियुक्तोऽस्रपवनं खलतिं पलितं वलिम् ॥
तृट्कुष्ठविषवीसर्पान् जनयेत् क्षपयेद्बलम् ॥"
इति वाग्भटे सूत्रस्थाने दशमेऽध्याये ॥
"लवणो रसः पाचनः क्लेदनः दीपनः च्यावनः छेदनः भेदनस्तीक्ष्णः सरो विकास्यधःस्रंसवकाशकरो वातहरः स्तम्भबन्धसङ्घातविधमनः सर्व्वरसप्रत्यनीकभूत आस्यं विस्रावयति कफं विष्यन्दयति मार्गान् शोधयति सर्व्वशरीरावयवान् मृदूकरोति रोचयत्याहारमाहारयोगी नात्यर्थगुरुः स्निग्ध उष्णश्च ।
स एवं गुणोऽप्येक एवात्यर्थमुपयुज्यमानः पित्तं कोपयति रक्तं वर्द्धयति तर्षयति मूर्च्छ-

यति तापयति दारयति कुष्णाति मांसानि प्रगालयति कुष्ठानि विषं वर्द्धयति शोफान् स्फोटयति दन्तान् च्यावयति पुंस्त्वमुपहन्ति इन्द्रियाण्युपरुणद्धि वलीपलितखालित्यमापादयति च लोहितपित्ताम्लपित्तवीसर्पवातरक्तविचर्च्चिकेन्द्रलुप्तप्रभृतीन् विकारानुपजनयति ।”

“प्रलीयन् क्लेदविष्यन्दमार्दवं कुरुते मुखे ।
यः शीघ्रं लवणो ज्ञेयः स विदाहान्मुखस्य च ॥”

इति चरके सूत्रस्थाने २६ अध्यायः ॥

“लवणः संशोधनः पाचनो विश्लेषणः क्लेदनः शैथिल्यकृदुष्णः सर्व्वरसप्रत्यनीको मार्गविशोधनः सर्व्वशरीरावयवमार्द्दवकरश्चेति स एवंगुणोऽप्येक एवात्यर्थमासेव्यमानो गात्रकण्डूकोठशोफवैवर्ण्यपुंस्त्वोपघातेन्द्रियोपतापान् तथामुखाक्षिपाकं रक्तपित्तवातशोणिताम्लीकाप्रभृतीनापादयति ॥”

“यो भक्तरुचिमुत्पादयति कफप्रसेकं जनयति मार्द्दवञ्चापादयति स लवणः ।” इति सुश्रुते सूत्रस्थाने ४२ अध्यायः ॥ * ॥ )

लवणासुरस्य विवरणं यथा,—

“पूर्व्वं कृतयुगे राजन् ! दैतेयः सुमहामतिः ।
लोलापुत्रोऽभवज्ज्येष्ठो मधुर्नाम महासुरः ॥
स मधुर्व्वीर्य्यसम्पन्नो धर्म्मे च सुसमाहितः ।
बहुमानाच्च रुद्रेण दत्तस्तस्याद्भुतो वरः ॥
शूलं शूलाद्विनिष्कृष्य महावीर्य्यं महाप्रभम् ।
ददौ महात्मा सुप्रीतो वाक्यं चैतदुवाच ह ॥
यावत् सुरैश्च विप्रैश्च न विरुध्येर्महासुर ! ।
तावच्छूलं तवेदं स्यादन्यथा नाशमेष्यति ॥
यश्च त्वामभियुञ्जीत युद्धाय विगतज्वरः ।
तं शूलो भस्मसात् कृत्वा पुनरेष्यति ते करम् ॥
एवं रुद्राद्वरं लब्ध्वा भूय एव महासुरः ।
प्रणिपत्य महादेवं वाक्यमेतदुवाच ह ॥
भगवन्मम वंशस्य शूलमेतदनुत्तमम् ।
भवेत्तु सततं देव सुराणामीश्वरो ह्यसि ॥
तं ब्रुवाणं मधुं देवः सर्व्वभूतपतिः शिवः ।
प्रत्युवाच महादेवो नैतदेवं भविष्यति ॥
माभूत्ते विफला वाणी मत्प्रसादकृता शुभा ।
भवतः पुत्त्रमेकन्तु शूलमेतद्भविष्यति ॥
यावत् करस्थः शूलोऽयं भविष्यति सुतस्य ते ।
अवध्यः सर्व्वभूतानां शूलहस्तो भविष्यति ॥
एवं मधुर्व्वरं लब्ध्वा देवात् सुमहदद्भुतम् ।
भवनं सोऽसुरश्रेष्ठः कारयामास सुप्रभम् ॥
तस्य पत्नी महाभागा प्रिया कुम्भीनसीति या ।
विश्वावसोरपत्यं साप्यनलायां महाप्रभा ॥
तस्याः पुत्त्रो महावीर्य्यो लवणो नाम दारुणः ।
बाल्यात् प्रभृति दुष्टात्मा पापान्येव समाचरत् ॥
तं पुत्त्रं दुर्व्विनीतन्तु दृष्ट्वा क्रोधसमन्वितः ।
मधुः स शोकमापेदे न चैनं किञ्चिदब्रवीत् ॥
स विहाय इमं लोकं प्रविष्टो वरुणालयम् ।
शूलं निवेश्य लवणे वरं तस्मै न्यवेदयत् ॥
स प्रभावेण शूलस्य दौरात्म्येनात्मनस्तथा ।
सन्तापयति लोकांस्त्रीन् विशेषेण च तापसान् ॥
आहारः सर्व्वसत्त्वानि विशेषेण च तापसाः ।
आचारो रौद्रता नित्यं वासो मधुवने तथा ॥
हत्वा बहुसहस्राणि सिंहव्याघ्रमृगाण्डजान् ।
मानुषांश्चैव कुरुते नित्यमाहारमाह्निकम् ॥
तच्छ्रुत्वा राघवो वाक्यमुवाच स महामुनीन् ।
घातयिष्यामि तद्रक्षो व्यपगच्छतु वो भयम् ॥
प्रतिज्ञाय तदा तेषां मुनीनामुग्रतेजसाम् ।
स भ्रातॄन् सहितान् सर्व्वानुवाच रघुनन्दनः ॥
को हन्ता लवणं वीरः कस्यांशः स विधीयताम् ।
भरतस्य महाबाहोः शत्रुघ्नस्य च धीमतः ॥
राघवेणैवमुक्तस्तु भरतो वाक्यमब्रवीत् ।
अहमेनं वधिष्यामि ममांशः स विधीयताम् ॥
भरतस्य वचः श्रुत्वा धैर्य्यशौर्य्यसमन्वितम् ।
लक्ष्मणावरजस्तस्थौ हित्वा सौवर्णमासनम् ॥
शत्रुघ्नस्त्वब्रवीद्वाक्यं प्रणिपत्य नराधिपम् ।
कृतकर्म्मा महाबाहुर्मध्यमो रघुनन्दन ! ॥
आर्य्येण हि पुरा शून्या त्वयोध्या परिपालिता ।
सन्तापं हृदये कृत्वा आर्य्यस्यागमनं प्रति ।
प्रेष्ये मयि स्थिते राजन् भूयः क्लेशमवाप्नुयात् ॥
तथा ब्रुवति शत्रुघ्ने राघवः पुनरब्रवीत् ।
एवं भवतु काकुत्स्थ क्रियतां मम शासनम् ॥
स त्वं हत्वा मधुसुतं लवणं पापनिश्चयम् ।
राज्यं प्रशाधि धर्म्मेण वाक्यं मे यद्यवेक्षसे ॥
यदा तु युद्धमाकाङ्क्षन् यदि कश्चित् समाह्वयेत् ।
तदा शूलं गृहीत्वा तु भस्म रक्षः करोति हि ॥
स त्वं पुरुषशार्दूल ! तमायुधविवर्जितम् ।
अप्रविष्टं पुरं पूर्व्वं द्वारि तिष्ठ धृतायुधः ।
अन्यथा क्रियमाणे तु अवध्यः स भविष्यति ॥
ततः प्रभाते विमले तस्मिन् काले स राक्षसः ।
निर्गतस्तु पुराद्वीरो भक्ष्याहारप्रचोदितः ॥
एतस्मिन्नन्तरे वीर उत्तीर्य्य यमुनां नदीम् ।
तीर्त्वा मधुपुरद्वारि धनुष्पाणिरतिष्ठत ॥
ततोऽर्द्धदिवसे प्राप्ते क्रूरकर्म्मा स राक्षसः ।
आगच्छद्बहुसाहस्रं प्राणिनां भारमुद्वहन् ॥
ततो ददर्श शत्रुघ्नं स्थितं द्वारि धृतायुधम् ।
तमुवाच ततो रक्षः किमनेन करिष्यसि ॥
तस्यैवं भाषमाणस्य हसतश्च मुहुर्मुहुः ।
शत्रुघ्नो वीर्य्यसम्पन्नो रोषादश्रूण्यवर्त्तयत् ॥
उवाच च सुसंक्रुद्धः शत्रुघ्नः स निशाचरम् ।
योद्धुमिच्छामि दुर्ब्बुद्धे द्वन्द्वयुद्धं त्वया सह ॥
तच्छ्रुत्वा भाषितं तस्य शत्रुघ्नस्य महात्मनः ।
क्रोधमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥
आहूतस्तु पुनस्तेन शत्रुघ्नेन महात्मना ।
लवणः क्रोधसंयुक्तो युद्धाय समुपस्थितः ॥
आकर्णात् स विकृष्याथ तद्धनुर्धन्विनां वरः ।
स मुमोच महावाणं लवणस्य महोरसि ॥
उरस्तस्य विदार्य्याशु प्रविवेश रसातलम् ।
पुनरेवागमत्तूर्णमिक्ष्वाकुकुलनन्दनम् ॥
शत्रुघ्नशरनिर्भिन्नो लवणः स निशाचरः ।
पपात सहसा भूमौ वज्राहत इवाचलः ॥
तच्च शूलं महद्दिव्यं हते लवणराक्षसे ।
पश्यतां सर्व्वदेवानां रुद्रस्य वशमन्वगात् ॥
हते तु लवणे देवाः सेन्द्राः साग्निपुरोगमाः ।
ऊचुः सुमधुरां वाणीं शत्रुघ्नं शत्रुतापनम् ॥
वरदास्तु महाबाहो सर्व्व एव समागताः ।
विजयाकाङ्क्षिणस्तुभ्यममोघं दर्शनं हि नः ॥
देवानां भाषितं श्रुत्वा शूरो मूर्द्ध्नि कृताञ्जलिः ।
प्रत्युवाच महाबाहुः शत्रुघ्नः प्रयतात्मवान् ॥
इयं मधुपुरी रम्या मधुरा देवनिर्म्मिता ।
निवेशं प्राप्नुयाच्छीघ्रमेष मेऽस्तु वरः परः ॥
तं देवाः प्रीतमनसो बाढमित्येव राघवम् ।
भविष्यति पुरी रम्या शूरसेना न संशयः ॥
ते तथोक्त्वा महात्मानो दिवमारुरुहुस्तदा ।
शत्रुघ्नोऽपि महातेजास्तां सेनां समुपानयत् ॥
सा सेना शीघ्रमागच्छत् श्रुत्वा शत्रुघ्नशासनम् ।
निवेशनञ्च शत्रुघ्नः श्रावणेन समारभत् ॥
तां पुरीं दिव्यसङ्काशां नानापण्योपशोभिताम् ।
निरीक्ष्य परमप्रीतः परं हर्षमुपागमत् ॥
तस्य बुद्धिः समुत्पन्ना निवेश्य मधुरां पुरीम् ।
रामपादौ निरीक्षेऽहं वर्षे द्वादश आगते ॥”

इति श्रीरामायणे उत्तरकाण्डे एकषष्ट्यादिसप्तषष्ट्यन्ताध्यायेभ्यः सङ्कलितम् ॥ * ॥ लवणसमुद्रस्योत्पत्तिर्यथा,—

“विरजा सा रजोयुक्ता धृत्वा वीर्य्यममोघकम् ।
सद्यो बभूव तत्रैव धन्या गर्भवती सती ।
तस्थौ तत्र सुखासीना सार्द्धं पुत्त्रैश्च सप्तभिः ॥
एकदा हरिणा सार्द्धं वृन्दारण्ये सुनिर्ज्जने ।
विजहार पुनः साध्वी शृङ्गारासक्तमानसा ॥
एतस्मिन्नन्तरे तत्र मातुः क्रोडं जगाम ह ।
कनिष्ठपुत्त्रस्तस्याश्च भ्रातृभिः पीडितो भिया ॥
भीतं स्वतनयं दृष्ट्वा तत्याज तां कृपानिधिः ।
क्रोडे चकार बालं सा कृष्णो राधागृहं ययौ ॥
प्रबोध्य बालं सा साध्वी न ददर्शाग्रतः प्रियम् ।
विललाप भृशं तत्र शृङ्गाराकृष्टमानसा ॥
शशाप स्वसुतं कोपात् लवणोदो भविष्यति ॥
कदापि ते जलं कश्चित् न खादिष्यन्ति जीविनः ॥
शशाप सर्व्वान् बालांश्च यान्तु मूढा महीतलम् ।
गच्छध्वं च महीं मूढा जम्बुद्वीपं मनोहरम् ।
स्थितिर्न्नैकत्र युष्माकं भविष्यति पृथक् पृथक् ।
द्वीपे द्वीपे स्थितिं कृत्वा तिष्ठन्तु सुखिनः सुताः ॥
द्वीपस्थाभिर्न्नदीभिश्च सह क्रीडन्तु निर्ज्जने ।
कनिष्ठो मातृशापाच्च लवणोदो बभूव ह ॥
कनिष्ठः कथयामास मातृशापञ्च बालकान् ।
आजग्मुर्दुःखिताः सर्व्वे मातृस्थानञ्च बालकाः ॥
श्रुत्वा विवरणं सर्व्वे प्रजग्मुर्धरणीतलम् ।
प्रणम्य मातुश्चरणं भक्तिनम्रात्मकन्धराः ॥
सप्तद्वीपे समुद्राश्च सप्त तस्थुर्विभागशः ।
कनिष्ठादुत्तरपर्य्यन्तं द्विगुणं द्विगुणं मुने ॥
लवणेक्षुसुरासर्पिर्द्दधिदुग्धजलार्णवाः ।
एतेषाञ्च जलं पृथ्वी ग्रस्तायैव भविष्यति ।
आसाः समुद्राः सप्तैव सप्तद्वीपां वसुन्धराम् ॥”

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३ अध्यायः ॥

लवणः, त्रि, ( लवणेन संस्कृतः । लवण+ठक् । "लवणात् लुक् ।" ४ । ४ । २४ । इति ठको लुक् । यद्वा, लवणो रसोऽस्यास्तीति । अर्श आद्यच् । ) लवणरसयुक्तः । इति मेदिनी । णे, ७५ ॥ ( यथा, सुश्रुते । १ । २१ ।
"मधुराम्लविदग्धः स्यादिदग्धो लवणः स्मृतः ॥")
लावण्ययुक्तश्च ॥

लवणकिंशुका, स्त्री, महाज्योतिष्मती । इति राजनिर्घण्टः ॥

लवणक्षारः पुं, (लवणस्य क्षारः ।) रोमकक्षारः । इति राजनिर्घण्टः ॥

लवणखानिः, स्त्री, ( लवणस्य खानिः खनिः । ) शाकम्भरिलवणोत्पत्तिस्थानम् । तत्पर्य्यायः । रुमा २ । इति हेमचन्द्रः । ४ । ७ ॥ लवणाकरमात्रञ्च ॥

लवणतृणं, क्ली, (लवणरसविशिष्टं तृणम् ।) तृणविशेषः । तत्पर्य्यायः । लोमशतृणम् २ तृणाम्लम् ३ पटुतृणकम् ४ अम्लकाण्डम् ५ । अस्य गुणाः । कठोरत्वम् । अम्लत्वम् । कषायत्वम् । अस्तन्यत्वम् । अश्वहृद्विकारत्वञ्च । इति राजनिर्घण्टः ॥

लवणत्रयं, क्ली, ( लवणानां त्रयम् । ) सैन्धवं विड् रुचकञ्च । इति राजनिर्घण्टः ॥

लवणधेनुः, स्त्री, (लवणनिर्म्मिता धेनुः ।) दानार्थलवणादिनिर्म्मितधेनुः । तद्विवरणं यथा,—

होतोवाच ।
"लवणधेनुं वक्ष्यामि तां निबोध महीपते ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ॥
धेनुं लवणमयीं कृत्वा षोडशप्रस्थसंयुताम् ।
वत्सं चतुर्भिं राजेन्द्र इक्षुपादांश्च कारयेत् ॥
शौवर्णशृङ्गाणि खुरा रौप्यमयास्तथा ।
मुखं गुडमयं तस्या दन्ताः फलमया नृप ॥
जिह्वा शर्करया राजन् घ्राणं गन्धमयन्तथा ।
नेत्रे रत्नमये कुर्य्यात् कर्णौ पत्रमयौ तथा ॥
श्रीखण्डं शृङ्गकोटौ च नवनीतमयाः स्तनाः ।
सूत्रपुच्छां ताम्रपृष्ठां दर्भरोमाञ्चितां पयस्विनीम् ॥
कांस्योपदोहां राजेन्द्र घण्टाभरणभूषिताम् ।
सुगन्धपुष्पधूपैश्च पूजयित्वा विधानतः ।
आच्छाद्य वस्त्रयुग्मेन ब्राह्मणाय निवेदयेत् ॥
अयने वाथ संक्रान्तौ व्यतीपाते तथायने ।
चन्द्रसूर्य्योपरागे तु सर्व्वकालं प्रदापयेत् ॥
द्विजाय साधुवृत्ताय कुलीनाय च धीमते ।
वेदवेदाङ्गविदुषे श्रोत्रियायाहिताग्नये ॥
दैवज्ञाय प्रदातव्या यथाशक्त्यपि वै नृप ।
आत्मनैव समस्तु पुत्रपौत्रैरिहान्वितः ॥
तत्रैव कीर्त्तयेत् देवीं सुभिक्षापर्य्ययेनमी ।
आच्छाद्य वस्त्रयुग्मेन दक्षिणां कनकं ददेत् ॥
पूर्व्वोक्तेन विधानेन ब्रह्मणा कनकेन तु ।
इमां गृहाण भो विप्र लवणरूपे नमोऽस्तु ते ॥
रसना सर्व्वभूतानां सर्व्वदेवनमस्कृता ।
कामं कामदुघे कामान् चारयेनो नमोऽस्तु ते ॥
दत्त्वा धेनुं लवणेन एकाहञ्चैव तिष्ठति ।
सर्व्वं निराहं विप्रेभ्य तथैव लवणाशिना ॥
अष्टसेन प्रतेनाथ ब्रह्मणा कनकेन तु ।
दत्त्वेमां स्वर्गमाप्नोति यत्र देवो वृषध्वजः ॥
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।
मुच्यते सर्व्वपापेभ्यो रुद्रलोकञ्च गच्छति ॥"
इत्यादि वाराहपुराणे श्वेतोपाख्याने लवणधेनुमाहात्म्यम् ॥

लवणमदः, पुं, ( लवणस्य मदः । ) रोमकक्षारः । इति राजनिर्घण्टः ॥

लवणा, स्त्री, ( लुनाति या । लू+ल्युः । टाप् । ) नदीभेदः । दीप्तिः । इति मेदिनीशब्दरत्नावल्यौ ॥ महाज्योतिष्मती । इति राजनिर्घण्टः ॥

लवणाचलः, पुं, (लवणनिर्म्मितः अचलः ।) दानार्थलवणादिनिर्म्मितपर्व्वतः । यथा,—
"अथातः संप्रवक्ष्यामि लवणाचलमुत्तमम् ।
यत्प्रदाता नरो लोकं प्राप्नोति शिवसंयुतम् ॥
उत्तमः षोडशद्रोणः कर्त्तव्यो लवणाचलः ।
मध्यमः स्यात्तदर्द्धेन चतुर्भिरधमः स्मृतः ॥
वित्तहीनो यथाशक्त्या द्रोणादूर्द्ध्वन्तु कारयेत् ।
चतुर्थांशेन विष्कम्भान् पर्व्वतान् कारयेत् पृथक् ॥
विधानं पूर्व्ववत् कुर्य्यात् ब्रह्मादीनाञ्च सर्व्वदा ।
तद्वद्धेमतरून् सर्व्वान् लोकपालान्निवेशयेत् ॥
सरांसि कामदेवादींस्तद्वदत्र निवेशयेत् ।
कुर्य्याज्जागरमत्रापि दानमन्त्रं निबोधत ॥
सौभाग्यरससम्भूतो यतोऽयं लवणो रसः ।
तदात्मकत्वेन च मां पाहि पापान्नगोत्तम ॥
यस्मादन्नरसाः सर्व्वे नोत्कटा लवणं विना ।
प्रियश्च शिवयोर्नित्यं तस्मात् शान्तिप्रदो भव ॥
विष्णुदेहसमुद्भूतं यस्मादारोग्यवर्द्धनम् ।
तस्मात् पर्व्वतरूपेण पाहि संसारसागरात् ॥
अनेन विधिना यस्तु दद्याल्लवणपर्व्वतम् ।
उमालोके वसेत् कल्पं ततो याति परां गतिम् ॥"
इति मात्स्ये ७७ अध्यायः ॥

लवणाब्धिजं, क्ली, ( लवणाब्धौ लवणसमुद्रे जायते इति । जन्+डः । ) सामुद्रलवणम् । इति राजनिर्घण्टः ॥

लवणासुरजं, क्ली, रोमकक्षारः । इति राजनिर्घण्टः ॥

लवणोत्तमं, क्ली, ( लवणेषु उत्तमम् । ) सैन्धवम् । इति रत्नमाला ॥

लवणोत्थं, क्ली, (लवणादुत्तिष्ठतीति । उत्+स्था+कः । ) रोमकक्षारः । इति राजनिर्घण्टः ॥

लवणोदः, पुं, ( लवणं उदकं यस्य । उत्तरपदस्य चोत्तरपदोदादेशः । ) लवणसमुद्रः । इत्यमरः ॥

लवनं, क्ली, ( लू+भावे ल्युट् । ) छेदनम् । इत्यमरः ॥

लवनी, स्त्री, फलवृक्षविशेषः । नोना इति भाषा ॥ तत्पर्य्यायः । थौल्लका २ अग्निमा ३ । इति शब्दचन्द्रिका ॥

लवली, स्त्री, ( लवं लेशं लातीति । ला+कः । गौरादित्वात् ङीष् । ) फलवृक्षविशेषः । नोयाडि इति भाषा । तत्पर्य्यायः । सुगन्धमूला २ पाण्डुः ३ कोमलवल्कला ४ । इति राजनिर्घण्टः ॥ तस्य फलगुणाः । रुच्यत्वम् । सुगन्धित्वम् । कफवातनाशित्वञ्च । इति राजवल्लभः ॥
"लवलीफलमम्लाग्रेवातपित्तहरं लघु ॥"
इति केचित् ॥
( यथा, राजेन्द्रकर्णपूरे । ४७ ।
"लब्ध्वा वेलापुलिनलवलीपक्वपण्यासगोष्ठीं
दिग्नागेन्द्राः समममु चरितोदग्धपाथः
पिबन्ति ॥")

लवाकः, पुं, (लवार्थं छेदनार्थं अकतीति । अक+अच् । ) छेदनद्रव्यम् । इत्युणादिकोषः ॥

लवाणकः, पुं, ( लूयतेऽनेनेति । लू+"आणको लूधूशिङ्घिधाञ्भ्यः ।" उणा० ३ । ८३ । इति आणकः । ) दात्रादिः । इत्युणादिकोषः ॥

लविः, त्रि, ( लूयतेऽनेनेति । लू+"अच इः ।" उणा० ४ । १३८ । इति इः । ) छिद्रः । इत्युणादिकोषः ॥

लवित्रं, क्ली, ( लूयतेऽनेनेति । लू+"अर्त्तिलूधूसूखनसहचर इत्रः ।" ३ । २ । १८४ । इति इत्रः । ) दात्रम् । इत्यमरः ॥

लश, क शिल्पयोगे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-अक०-सेट् । ) क, लाशयति कुशलो कृत्ये शिल्पं युनक्तीत्यर्थः । इति दुर्गादासः ॥

लशुनं, क्ली, ( अश्यते भुज्यते इति । अश्+"अशेर्लश च ।" उणा० ३ । ५७ इति उनन् । लशादेशश्च धातोः । ) रसुनः । तत्पर्य्यायः । महौषधम् २ गृञ्जनः ३ अरिष्टः ४ महाकन्दः ५ रसोनकः ६ । इत्यमरः ॥ रसोनः ७ म्लेच्छकन्दः ८ भूतघ्नः ९ उग्रगन्धः १० । अस्य गुणाः । अम्लरसेन ऊनत्वम् । गुरुत्वम् । उष्णत्वम् । कफवातनाशित्वम् । अरुचित्वम् । क्रिमिहृद्रोगशोथघ्नत्वम् । रसायनत्वञ्च । इति राजनिर्घण्टः ॥ * ॥ अपि च ।
"लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम् ।
अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः ॥
यदामृतं वैनतेयो जहार सुरसत्तमात् ।
तदा ततोऽपतद्विन्दुः स रसोनोऽभवद्भुवि ॥
पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्ज्जितः ।
तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः ॥
कटुकश्चापि मूलेषु तिक्तः पत्रेषु संस्थितः ।
नाले कषाय उद्दिष्टो नालाग्रे लवणः स्मृतः ॥
बीजे तु मधुरः प्रोक्तो रसस्तद्गुणवेदिभिः ।
रसोनो बृंहणो वृष्यः स्निग्धोष्णः पाचनः
सरः ॥
रसे पाके च कटुकस्तीक्ष्णो मधुरको मतः ।
भग्नसन्धानकृत् कण्ठ्यो गुरुः पित्तास्रवृद्धिदः ।
बलवर्णकरो मेधाहितो नेत्र्यो रसायनः ॥
हृद्रोगजीर्णज्वरकुक्षिशूल-
विबन्धगुल्मारुचिकासशोफान् ।
दुर्नामकुष्ठानलसादजन्तु-
समीरणश्वासकफांश्च हन्ति ॥

मद्यं मांसं तथाम्लञ्च हितं लशुनसेविनाम् ॥
व्यायाममातपं रोषमतिनीरं पयो गुडम् ।
रसोनमश्नन् पुरुषस्त्यजेदेतन्निरन्तरम् ॥"
इति भावप्रकाशः ॥ * ॥

अन्यच्च ।
"लशुनः क्षारमधुरः कषायो लघ्वो गुरुः सरः ।
भग्नसन्धानकृद्बल्यो रक्तपित्तप्रदूषकः ॥"
इति राजवल्लभः ॥

(तस्याचास्य गुणादिविषयो यथा,—
"कट्वम्लवीर्यो लशुनो हितश्च
स्निग्धो गुरुः स्वादुरसोऽथ वल्यः ।
वृष्यश्च मेधास्वरवर्णचक्षु-
र्भग्नास्थिसन्धानकरः सुतीक्ष्णः ॥
हृद्रोगजीर्णज्वरकुक्षिशूल-
प्रमेहहिक्कारुचिगुल्मशोफान् ।
दुर्नामकुष्ठानलसादजन्तु-
समीरणश्वासकफांश्च हन्ति ॥"
इति हारीते कल्पस्थाने लसोनाध्याये ॥
"शीतवातहिमदग्धतनूनां
स्तम्भकुब्जकुटिलक्षयितानाम् ।
भेषजस्य पवनोपहतानां
कथ्यते विधिरतो लशुनस्य ॥"
"शीलयेल्लशुनं शीते वसन्तेऽपि कफोल्वणः ।
घनोदयेऽपि वातार्त्तः सदा वा शौण्डशीलवत् ॥"
इति वाग्भटे उत्तरस्थाने ३९ अध्यायः ॥
"क्रिमिकुष्ठकिलासघ्नो वातघ्नो गुल्मनाशनः ।
स्निग्धश्चोष्णश्च वृष्यश्च लशुनः कटुको गुरुः ॥"
इति चरके सूत्रस्थाने २७ अध्यायः ॥ )

लशूनः, पुं, ( रसेन ऊनः रस्य लत्वम् । पृषो-
दरादित्वात् सस्य शः अकारलोपश्च ।) लशुनः ।
इति शब्दरत्नावली ॥

लष, क शिल्पयोगे । इति कविकल्पद्रुमः ॥
( चुरा०-पर०-अक०-सेट् । ) क, लाषयति
कुशलो दृढ्ये शिल्पं युनक्तीत्यर्थः । इति दुर्गा
दासः ॥

लष, ञ स्पृहि । इति कविकल्पद्रुमः ॥ ( भ्वा०-
उभ०-सक०-सेट् । ) ञ, लषति लषते । इति
दुर्गादासः ॥

लष, य ञ स्पृहि । इति कविकल्पद्रुमः ॥ ( दिवा०-
उभ०-सक०-सेट् । ) य ञ, लष्यति लष्यते ।
इति दुर्गादासः ॥

लष्वः, पुं, ( लाषयति दृढ्ये शिल्पं युनक्तीति ।
लष्+"सर्व्वनिघृष्वरिष्वेति ।" उणा० १।१५३ ।
इति वप्रत्ययेन साधुः । ) नर्त्तकः । इत्यु-
णादिकोषः ॥

लस, श्लिषि । क्रीड़े । इति कविकल्पद्रुमः ॥ ( भ्वा०-
पर०-अक०-सेट् । ) लसति । इति दुर्गादासः ॥

लस, क शिल्पयोगे । इति कविकल्पद्रुमः ॥ ( चुरा०-
पर०-अक०-सेट् । ) क, लासयति कुशलो
दृढ्ये शिल्पं युनक्तीत्यर्थः । इति दुर्गादासः ॥

लसा, स्त्री, ( लसतीति । लस्+अच् । )
हरिद्रा । इति शब्दरत्नावली । ६३ ॥

लसिका, स्त्री, ( लसतीति । लस्+अच् । ततः
स्वार्थे कन् ततष्टापि अत इत्वम् ।) लाला । यथा,—
"लालायां पिच्छिला ख्याता लसिका लालिका
तथा ॥"
इति शब्दचन्द्रिका ॥

लसीका, स्त्री, इक्षुरसः । त्वङ्मांसमध्यगरसः ।
इति केचित् ॥ ( यथा । "लसीका उदक-
विशेषः । यथाह चरकः । यत्तु मांसत्वगन्तरे
उदकं तल्लसीकाशब्दं लभते ।" इति विजय-
रक्षितकृतप्रमेहरोगव्याख्याने ॥
"यत्तु त्वगन्तरे व्रणगतं लसीकाशब्दं लभते ।"
इति चरके शारीरस्थाने सप्तमेऽध्याये ॥)

लस्ज, ई ओ ङ व्रीड़े । इति कविकल्पद्रुमः ॥
( भ्वा०-आत्म०-अक०-सेट् । निष्ठायामनिट् । )
क्विपि संयोगादिलोपे लक् । ई ओ, लग्नः । ङ,
लज्जते । इति दुर्गादासः ॥

लस्तः, त्रि, श्लिष्टः । क्रीडितः । शिल्पयुक्तः । लस-
धातोः क्तप्रत्ययेन निष्पन्नः । इति संक्षिप्तशब्द-
व्युत्पत्तौ भरतश्च ॥

लस्तकः, पुं, धनुषो मध्यभागः । इत्यमरः ॥

लस्तकी, [न्] पुं, ( लस्तकोऽस्यास्तीति । लस्तक+
इनिः । ) धनुः । इति शब्दमाला ॥

लहरिः, } स्त्री, महातरङ्गः । तत्पर्य्यायः ।
लहरी, } उल्लोलः २ कल्लोलः ३ । इति हेम-
चन्द्रः शब्दरत्नावली च ॥ ( यथा, आर्य्या-
सप्तशत्याम् । ६१४ ।
"सरित इव यस्य गेहे शुष्यन्ति विशाल-
गोत्रजा नार्य्यः ।
क्षाराब्धिरिव स तृप्यति जलनिधिलहरिषु जलद
इव ॥" )

ला, ल यते । इति कविकल्पद्रुमः ॥ ( अदा०-
पर०-सक०-अनिट् । ) ल, लाति । यत्नो ग्रह-
णम् । इति दुर्गादासः ॥

ला, स्त्री, ग्रहणम् । दानम् । इति मेदिनी । ले, १ ॥

लाक्षकी, स्त्री, सीता । यथा,—
"राघवत्वे इयं सीता वारकेशस्य रुक्मिणी ।
विष्णोऽवतारमात्रस्य लक्ष्मीर्या कमलालया ॥
वाराणस्यां विशालाक्षी विमला पुरुषोत्तमे ।
वैकुण्ठे तु महालक्ष्मी राधा वृन्दावने वने ॥
लक्षशः कमला रश्मो यस्याः सा लाक्षकी
मता ।
एवं शतसहस्राणामीश्वरी राधिकाम्बिका ॥"
इति पाद्मोत्तरखण्डे ५५ अध्यायः ॥

लाक्षणिकः, पुं, लक्षणया प्रतिपादकः । इति
साहित्यदर्पणम् ॥ लक्षणात्मकशक्तिमत्पदत्वं
लाक्षणिकत्वम् । इति सारमञ्जरी ॥ ( यथा,
विभक्तितत्त्वार्थवादे ।
"शक्तो लाक्षणिको रूढ़ो योगरूढ़श्च यौगिकः ।
क्वचित् यौगिकरूढ़श्च शब्दः षोढ़ा निगद्यते ॥"
(लक्षणमधीते वेद वा । लक्षण+"क्रतूक्थादि-
सूत्रान्तात् ठक् ।" ४ । २ । ६० । इति ठक् ।
लक्षणाभिज्ञे, त्रि ॥ )

लाक्षा, स्त्री, ( लक्ष्यतेऽनयेति । लक्ष्+"गुरोश्च
हलः ।" ३।३।१०३ । इति अः । टाप् । यद्वा,
"गाहुलकात् राजतेरपि षः । कपिलिकादित्वात्
वा लत्वम् ।" इत्युज्ज्वलः । ३ । ६२ । ) रक्त-
वर्णद्रवनिर्य्यासविशेषः । लाहा इति भाषा ॥
तत्पर्य्यायः । राक्षा २ जतु ३ यावः ४ अलक्तः ५
द्रुमामयः ६ । इत्यमरः ॥ खदिरिका ७ रक्ता ८
रक्तमाता ९ पलङ्कषा १० क्रिमिहा ११ द्रुम-
व्याधिः १२ अलक्तकः १३ पलाशी १४ सुरङ्गी
१५ दीप्तिः १६ जन्तुका १७ गन्धमादिनी १८
नीला १९ द्रवरसा २० पित्तारिः २१ । अस्याः
गुणाः । कटुत्वम् । तिक्तत्वम् । कषायत्वम् ।
श्लेष्मपित्तार्शःशोफविषरक्तविषमज्वरनाशित्वञ्च ।
इति राजनिर्घण्टः ॥ भग्नविसर्पव्रणशोषनाशि-
त्वम् । बल्यत्वञ्च । इति राजवल्लभः ॥ अपि च ।
"लाक्षा वर्ण्या हिमा बल्या स्निग्धा च तुवरा
लघुः ।
अनुष्णा कफपित्तास्रहिक्काकासज्वरप्रणुत् ॥
व्रणोरःक्षतवीसर्पक्रिमिकुष्ठगदापहा ।
अलक्तको गुणैस्तद्वद्विशेषाद्व्यङ्गनाशनः ॥"
इति भावप्रकाशः ॥
( शतपत्री । सेवती । गुलाब इति च । तत्-
पर्य्यायो यथा,—
"शतपत्री तरुण्युक्ता कर्णिका चारुकेशरा ।
महाकुमारी गन्धाढ्या लाक्षा लघ्वाति-
मञ्जुला ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

लाक्षातरुः, पुं, ( लाक्षोत्पादकतरुः । ) पलाश-
वृक्षः । इति शब्दमाला ॥ ( पलाशशब्देऽस्य
विशेषो ज्ञेयः ॥ )

लाक्षातैलं क्ली, ( लाक्षादिभिः पक्वं तैलम् । )
पक्वतैलविशेषः । लाक्षादितैलमिति ख्यातम् ।
तद्द्विविधं स्वल्पं बृहच्च । यथाक्रमं तत्प्रकारं
तद्गुणश्चाह ।
"लाक्षाहरिद्रामञ्जिष्ठाकल्कैस्तैलं विपाचितम् ।
षड्गुणेनारनालेन दाहशीतज्वरापहम् ॥"
इति स्वल्पलाक्षातैलम् ॥
बृहद्यथा,—
"लाक्षारसाढ़के प्रस्थं तैलस्य विपचेद्भिषक् ।
मस्त्वाढ़कसमायुक्तं पिष्ट्वा चात्र समावपेत् ॥
शतपुष्पाश्वगन्धाभ्यां हरिद्राद्वयमूर्व्वाः कुष्ठं चरेणुकाम् ।
कटुका मधुका रास्नामश्वगन्धाञ्च दारु च ॥
मुस्तकं चन्दनञ्चैव पृथगक्षसमांशकैः ।
अभ्यङ्गादस्य नश्यन्ति ज्वरा दाहं तथैव च ।
विषमाख्यान् ज्वरान् सर्व्वानाशन्वेव प्रशमं
नयेत् ।
कासं श्वासं प्रतिश्यायं कण्डूं दौर्गन्ध्यगौरवम् ॥
त्रिकपृष्ठग्रहं शूलं गात्राणां स्फुटनं तथा ।
पापालक्ष्मीप्रशमनं सर्व्वग्रहनिवारणम् ।
अश्विभ्यां निर्म्मितं सम्यक् तैलं लाक्षादिकं
महत् ॥"
इति बृहल्लाक्षातैलम् । इति सुखबोधः ॥

लाक्षाप्रसादः, पुं, ( लाक्षायाः प्रसादो यस्मात् । ) पट्टिकालोध्रः । इति राजनिर्घण्टः ॥

लाक्षाप्रसादनः, पुं, ( लाक्षां प्रसादयतीति । प्र + सद् + णिच् + ल्युः । ) रक्तलोध्रः । तत्पर्य्यायः । क्रमुकः २ पट्टिका ३ पट्टी ४ । इत्यमरः ॥ ( तथास्य पर्य्यायः ।
"द्वितीयः पट्टिकालोध्रः क्रमुकः स्थूलवल्कलः ।
जीर्णपत्रो बृहत्पत्रः पट्टी लाक्षाप्रसादनः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )

लाक्षावृक्षः, पुं, ( लक्षोत्पादको वृक्षः । ) कोषाम्रः । इति राजनिर्घण्टः ॥ पलाशवृक्षः । इति हारावली ॥

लाख, ऋ शोषालमर्थयोः । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-अक०-सेट् । ) ऋ, अललाखत् । इति दुर्गादासः ॥

लाघ, ऋ ङ शक्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् । ) ऋ, अललाघत् । ङ, लाघते । शक्तिः सामर्थ्यम् । इति दुर्गादासः ॥

लाघवं, क्ली, ( लघोर्भावः कर्म्म वा । लघु + "इगन्ताच्च लघुपूर्व्वात् ।" ५ । १ । १३१ । इति अण् ।) आरोग्यम् । इति राजनिर्घण्टः ॥ लघुत्वम् । लघोर्भाव इत्यर्थे अण्प्रत्ययेन निष्पन्नम् ॥ ( शीघ्रत्वम् । यथा, महाभारते ।५।१८३।७।
"तासां रूपं भारत नोत शक्यं
तेजस्वित्वात् लाघवाच्चैव वक्तुम् ॥"
अल्पत्वम् । यथा, मार्कण्डेये । ४१ । १७ ।
"अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् ।
नित्यस्वाध्याय इत्येते नियमाः सम्प्रकीर्त्तिताः ॥"
क्षेपम् । यथा, कुमारे । २ । २३ ।
"हतोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्व्वाणालातलाघवम् ॥")

लाङ्गलं, क्ली, ( लङ्गतीति । लगि गतौ + बाहुलकात् कलच् । वृद्धिश्च धातोः । इति उणादिवृत्तौ उज्ज्वलदत्तः । १ । १०८ । ) स्वनामख्यातभूमिकर्षणयन्त्रम् । तत्पर्य्यायः । हलम् २ गोदारणम् ३ सीरः ४ । इत्यमरः ॥ हलः ५ हालम् ६ हालः ७ शीरः ८ । इति भरतः ॥ ( यथा, वाजसनेयसंहितायाम् । १२ । ७१ ।
"लाङ्गलं पवीरवत्सुशेवꣳसोमपित्सरु ॥" )
लिङ्गः । इति त्रिकाण्डशेषः ॥ पुष्पविशेषः । तालवृक्षः । गृहदारु । इति मेदिनी । ले, १९८ ॥

लाङ्गलग्रहः, पुं, कृषकः । लाङ्गलं गृह्णाति य इत्यर्थे अच्प्रत्ययेन निष्पन्नः ॥ ("शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसंख्यानम् ।" ३ । २ । ९ । इत्यस्य वार्त्तिकोक्त्या अच् ॥)

लाङ्गलचक्रं, क्ली, ( लाङ्गलाकारं चक्रम् । ) कृषिकर्म्मणि शुभाशुभज्ञापक हलाकारचक्रविशेषः । यथा । अथ लाङ्गलचक्रं स्वरोदये ।
"लाङ्गलं हलिकाद्यपयोक्त्रयसमन्वितम् ।
हलिकादि लिखेत् भानि दिनेशाक्रान्तभादितः ॥
हलिकाग्रलयूपाग्रे त्रिषु स्थाने त्रिकं त्रिकम् ।
योक्त्रयोश्च त्रिकञ्चैव मध्ये पञ्चात्मकं त्रिकम् ॥
दक्षिणे च नवा वामेऽपि पञ्च स्वामिनो भयम् ।
लक्ष्मीर्लाङ्गलयोर्न्ने स्यात् चैकादशादिवर्गके ॥"
इति ज्योतिस्तत्त्वम् ॥

लाङ्गलदण्डः, पुं, ( लाङ्गलस्य दण्डः । ) लाङ्गलमध्यस्थकाष्ठम् । लाङ्गलेर ईष इति भाषा । तत्पर्य्यायः । ईषा २ । इत्यमरः ॥ ईषा ३ । इति शब्दरत्नावली ॥

लाङ्गलपद्धतिः, स्त्री, (लाङ्गलस्य पद्धतिः ।) लाङ्गलरेखा । सिराल इति भाषा । तत्पर्य्यायः । शीता २ । इत्यमरः ॥ सीता ३ । इति शब्दरत्नावली ॥

लाङ्गलिकः, पुं, ( लाङ्गलवत् आकृतिरस्यास्तीति । लाङ्गल + ठन् । ) स्थावरविषभेदः । इति हेमचन्द्रः ॥

लाङ्गलिका, स्त्री, (लाङ्गलमिवाकारोऽस्त्यस्या इति । लाङ्गल + ठन् । टाप् । ) लाङ्गलीवृक्षः । इति शब्दरत्नावली ॥ (यथा, गारुडे १९२ अध्याये ।
"करलाङ्गलिकामूलं हिङ्गुलस्य तथैव च ।
तेन प्रलेपनं लिङ्गे शल्यो निःसरति ध्रुवात् ॥")

लाङ्गलिकी, स्त्री, ( लाङ्गल + ठन् । ङीष् ।) वृक्षविशेषः । लाङ्गलिया इति विषलाङ्गलिया इति च भाषा । तत्पर्य्यायः । अग्निशिखा २ । इत्यमरः ॥ अग्निज्वाला ३ लाङ्गलिका ४ लाङ्गली ५ । इति शब्दरत्नावली ॥ गौरी ६ दीप्ता ७ हलिनी ८ गर्भघातिनी ९ अग्निजिह्वा १० इन्द्रपुष्पा ११ अग्निमुखी १२ वह्निशिखा १३ । इति रत्नमाला ॥ अस्या गुणः । कुष्ठदुष्टव्रणाशित्वम् । इति राजवल्लभः ॥ राजनिर्घण्टोक्तगुणपर्य्यायाः कलिकारीशब्दे द्रष्टव्याः ॥

लाङ्गली, [न्] पुं, ( लाङ्गलमस्यास्तीति । लाङ्गल + इनिः । ) बलरामः । इति शब्दरत्नावली ॥ ( यथा, हरिवंशे । ३८ । ३८ ।
"स्थापयित्वा विशालाक्षि यदून् लाङ्गलिना सह ।
शार्ङ्गधन्वा विशालाक्षु आनर्त्तं ददृशे ह ॥")
नारिकेलः । इत्यमरः ॥ (यथा,—
"नारिकेलो दृढफलो लाङ्गली कूर्च्चशीर्षकः ।
तुङ्गस्कन्धफलश्चैव तृणराजः सदाफलः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥) सर्पः । इति शब्दचन्द्रिका ॥ ( लाङ्गलविशिष्टे, त्रि । यथा, रामायणे । २ । ३२ । ३० ।
"तत्रासीत् पिङ्गलो गार्ग्यस्त्रिजटो नाम वै द्विजः ।
क्षतवृत्तिर्वने नित्यं फालकुद्दाललाङ्गली ॥"
तथा, महाभारते । १ । २२२ । ५३ ।
"रामः पाणिग्रहणिकं ददौ पार्थाय लाङ्गली ॥"
स्त्रियां ङीप् । नदीविशेषः । यथा, मार्कण्डेये । ५७ । २९ ।
"लाङ्गलिनी वंशकरा महेन्द्रप्रभवाः स्मृताः ॥")

लाङ्गली, स्त्री, ( लाङ्गलाकारोऽस्त्यस्या इति । लाङ्गल + अच् । ङीष् । ) लाङ्गलाकारपुष्पजलजशाकविशेषः । काँचड़ा इति भाषा । तत्पर्य्यायः । शारदी २ तोयपिप्पली ३ शकुलादनी ४ । इत्यमरः ॥ जलाग्नी ५ जलपिप्पलिः ६ । इति शब्दरत्नावली ॥ पिप्पला ७ श्यामादिनी ८ मत्स्यगन्धा ९ । इति जटाधरः ॥ कलिकारी १० । इति राजनिर्घण्टः ॥ (शाकपर्णी । तत्पर्य्यायो यथा,—
"स्थिरा विदारिगन्धा च शालपर्ण्यंशुमत्यपि ।
लाङ्गली कलशी चैव क्रोष्टुपुच्छा गुहा मता ॥"
इति गारुडे २०८ अध्यायः ॥ )

लाङ्गुलं, क्ली, पुच्छम् । इत्यमरटीकायां सारसुन्दरी ॥

लाङ्गूलं, क्ली, ( लङ्ग + "खर्ज्जिपिञ्जादिभ्य ऊरोलचौ ।" उणा० ४ । ९० । इति ऊलच् । बाहुलकात् वृद्धिश्च । ) पशुपश्चाद्भागस्थलम्बमानलोमयुक्तावयवविशेषः । ल्याज इति भाषा । तत्पर्य्यायः । पुच्छम् २ लूम ३ वालहस्तः ४ वालधिः ५ । इत्यमरः ॥ लाङ्गूलम् ६ लाङ्गुलम् ७ लुलामः ८ अवालः ९ । इति शब्दरत्नावली ॥ लक्षः १० पिच्छः ११ वालः १२ । इति जटाधरः ॥ ( यथा, कुमारे । १ । १३ ।
"लाङ्गूलविक्षेपविसर्पिशोभै-
रितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं
कुर्व्वन्ति वालव्यजनैश्चमर्य्यः ॥" )
गोलाङ्गूलजलमाहात्म्यं यथा,—
"लाङ्गूलेनोद्धृतं तोयं मूर्द्ध्नि गृह्णाति यो नरः ।
सर्व्वतीर्थफलं प्राप्य सर्व्वपापैः प्रमुच्यते ॥"
इति वाराहपुराणम् ॥
शेफः । इति मेदिनी । ले, १२७ ॥ क्रमूलः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

लाङ्गूलिका, स्त्री, ( लाङ्गूलाकृतिरस्त्यस्या इति । लाङ्गूल + ठन् । ) पृश्निपर्णी । इति राजनिर्घण्टः ॥

लाङ्गूली, [न्] पुं, ( प्रशस्तं लाङ्गूलमस्यास्तीति । लाङ्गूल + इनिः ।) वानरः । इति शब्दचन्द्रिका ॥ ऋषभनामौषधम् । इति राजनिर्घण्टः ॥

लाछ, इ लक्ष्मणि । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) इ, लाञ्छ्यते । लाञ्छति । इति दुर्गादासः ॥

लाज, भर्त्सने । भर्जे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) लाजति ॥

लाज, इ भर्त्सने । भर्ज्जे । इति कविकल्पद्रुमः ॥ ( भ्वा० पर०-सक० सेट् । ) इ द्वितीय-

रूढ़िणी । लाजति । इ, लाञ्छति । भर्त्सन एव केचित् पठन्ति । भर्त्सं भर्त्सनम् । इति दुर्गादासः ॥

लाजं, क्ली, (लाज् + अच् ।) उशीरम् । इति मेदिनी । जे, १५ ॥ (भृष्टधान्यम् । खइ इति भाषा ॥

"येषां तुषकणाकाशानि धान्यानि सतु-
षाणि च ।
भृष्टानि स्फुटिताम्यानुर्लाजानीति मनीषिणः ॥
लाजाः स्युर्मधुराः शीता लघवो दीपनाश्च ते ।
स्वल्पमूत्रमला रूक्षा बल्याः पित्तकफच्छिदः ।
छर्द्यतीसारदाहास्रमेहमेदस्तृषापहाः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

लाजः, पुं, (लाज् + अच् ।) आर्द्रतण्डुलः । इति मेदिनी । जे, १५ ॥

लाजा, स्त्री, अक्षतम् । इति मेदिनी । जे, १५ ॥ (यथा, सुश्रुते । ४ । १६ ।
"पैत्तिकं शर्करालाजामधुकैः शारिवा-
युतैः ॥")

लाजाः, पुं भूम्नि, (लाज्यन्ते ये ते । लाज् + घञ् ।) भृष्टधान्यम् । लाजोयो इति खइ इति च भाषा । (यथा, रामायणे । २ । ४१ ।१६ ।
"कदा प्रेक्षिष्यसास्यि राजमार्गे ममात्मजौ ।
लाजैरवकरिष्यन्ति प्रविशन्तावरिन्दमौ ॥")
तत्पर्य्यायः । अक्षतम् २ । इत्यमरः ।२।९।४७। लाजा ३ अक्षताः ४ । इति भरतः ॥ अस्य गुणाः । तृष्णाच्छर्द्यतीसारप्रमेहमेदःकफनाशित्वम् । कासपित्तोपशमनत्वम् । अग्निकारित्वम् । लघुत्वम् । शीतलत्वञ्च । अस्य मण्डगुणाः । अग्निकारित्वम् । दाहतृष्णाज्वरातीसारनाशित्वम् । अग्निदोषामपाचनत्वञ्च । तस्य पेयागुणाः । श्रामकफस्य शमनत्वम् । क्षुधाढ्यात्वाग्निदीप्तिकृच्छ्ररोगनाशित्वञ्च । इति राजवल्लभः ॥ * ॥ अपि च ।
"एते च व्रीहयो भृष्टास्ते लाजा इति
संज्ञिताः ।
यवादयश्च ये भृष्टास्ते धानाः परिकीर्त्तिताः ॥
लाजाश्च यवधानाश्च तर्पणाः पित्तनाशनाः ।
गोधूमयावनालोत्थाः किञ्चिदुष्णाश्च दीपनाः ॥
तृष्णातीसारशमनो धातुसाम्यकरः परः ।
मन्दाग्निविषमाग्नीनां बालस्थविरयोषिताम् ।
इयञ्च सुकुमाराणां लाजमण्डः सुसंस्कृतः ॥"
इति राजनिर्घण्टः ॥ * ॥
तस्य चूर्णगुणाः ।
"द्राक्षादाडिमखर्ज्जूरकदलीमधुशर्करम् ।
लाजचूर्णं समध्वाज्यं तर्पणमुदाहृतम् ॥"
लाजचूर्णं द्राक्षादिजलशर्करामध्वाज्यसहितं तर्पणसंज्ञमित्यर्थः । लाजसक्तुगुणाश्च गुणग्रन्थे ।
"लाजानां सक्तवः शीता मधुराः शुक्ला विशेषतः ।
छर्द्यतीसारदाहविषमूर्च्छाज्वरापहाः ॥"
चरकश्च ।
"तत्र तर्पणमेवादौ प्रदेयं लाजसक्तुभिः ।
ज्वरापहैः फलरसैर्युक्तं समधुशर्करम् ॥"
इति भावप्रकाशः ॥

लाञ्छनं क्ली, (लाञ्छ + ल्युट् ।) नाम । चिह्नम् । इति मेदिनी । ने, १९१ ॥ (यथा, कुमारे । ७ । ३५ ।
"दिवापि निष्ठ्यूतमरीचिभासा
बाल्यादनाविष्कृतलाञ्छनेन ।
चन्द्रेण नित्यं प्रतिभिन्नमौलेः
चूडामणेः किं ग्रहणं हरस्य ॥")

लाञ्छनः, पुं, (लाञ्छतीति । लाञ्छ + ल्युः ।) राजीधान्यम् । इति राजनिर्घण्टः ॥ क्वचित् पुस्तके लाञ्छनीति च पाठः ॥

लाटः, पुं, देशान्तरम् । (यथा, कथासरित्सागरे । ७८ । ११६ ।
"ददौ तस्मै वपुष्याय प्रीत्या वीरवराय च ।
लाटदेशे ततो राज्यं स कर्णाटपती नृपः ॥")
वस्त्रम् । इति मेदिनी । टे, २७ ॥ जीर्णभूषणादि । इति शब्दरत्नावली ॥

लाड, तु क क्षेपे । इति कविकल्पद्रुमः ॥ (अदन्त-चुरा० पर०-सक०-सेट् ।) लाडयति अलालाडत् । इति दुर्गादासः ॥

लापः, पुं, कथनम् । लपधातोर्भावे घञ्प्रत्ययेन निष्पन्नम् ॥

लाप्यं, त्रि, (लप्यते इति । लप् + ण्यत् ।) कथनीयम् । लपधातोः कर्म्मणि घ्यण्प्रत्ययेन निष्पन्नम् । इति मुग्धबोधव्याकरणम् ॥

लाभः, पुं, (लभ + घञ् करणे ।) मूलधनादधिकं वाणिज्योपार्ज्जितं धनम् । तत्पर्य्यायः । फलम् २ । इत्यमरभरतौ ॥ लभ्यम् ३ वृद्धिः ४ । इति शब्दरत्नावली ॥ (यथा, रामायणे । २ । २२ । २२ ।
"सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ ।
यच्च किञ्चित्तथाभूतं ननु दैवस्य कर्म्म तत् ॥")
प्राप्तिः । इति लभधात्वर्थदर्शनात् ॥ (सप्तधर्म्म्यवित्तागमेषु अन्यतमः । यथा, मनुः । १० । ११५ ।
"सप्त वित्तागमा धर्म्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च ॥")

लाभ्यं, क्ली, (लभ + ण्यत् ।) लाभः । इति शब्दरत्नावली ॥

लामज्जकं, क्ली, वीरणमूलम् । इत्यमरः ॥ अस्य पर्य्यायगुणादुशीरशब्दे द्रष्टव्यौ । उशीरवत् पीतच्छविलघ्वाविशेषः । तत्पर्य्यायः । सुनालम् २ अमृणालम् ३ लवम् ४ लघु ५ इष्टकापथिकम् ६ शीघ्रम् ७ दीर्घमूलम् ८ जलाशयम् ९ । अस्य गुणाः । हिमत्वम् । तिक्तत्वम् । वातपित्तकृच्छ्रदाहश्रममूर्च्छातिरक्तज्वरापहत्वञ्च । इति राजनिर्घण्टः ॥

लालनं, क्ली, (लल + णिच् + ल्युट् ।) अत्यन्तस्नेहकरणम् । प्रेमपूर्व्वकबालकादरणम् । सोहाग इति भाषा । तत्र कोमलैव उपसेव इव अत्यन्तलालनम् । क, लालयेत् पञ्च वर्षाणि पुत्रमिति अत्र लडयोरेकत्वाल्लत्वम् । इति कविकल्पद्रुमटीकायां दुर्गादासः ॥ तथा हि ।
"लालने बहवो दोषास्ताडने बहवो गुणाः ।
तस्मात् पुत्रञ्च शिष्यञ्च ताडयेन्न तु लालयेत् ॥"
अपि च ।
"लालयेत् पञ्च वर्षाणि दशवर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥"
इति चाणक्यशतकम् ॥

लालसा, पुं स्त्री, (लस् + यङ् । ततः "अ प्रत्ययात् ।"३।३।१०२। इति अः । टाप् ।) महाभिलाषः । इत्यमरः ॥ औत्सुक्यम् । याच्ञा इति मेदिनी । से, ३४ ॥ दोहदम् । यथा,—
"दोहदं दौहृदं श्रद्धा लालसा कथिताविह तु ।"
इति हेमचन्द्रः ॥
लोलः । इति नानार्थे स एव ॥ (लोलुपे, त्रि । इति यादवः ॥ यथा, माघे । ४ । ६ ।
"छायां निजस्त्रीचटुलालसानां
मदेन किञ्चित् चटुलालसानाम् ।
कुर्व्वाणमुत्पिञ्जरजातपत्त्रै-
र्विहङ्गमानां जलजातपत्त्रैः ॥"
तथा च कुमारे । ७ । ५६ ।
"तस्मिन् मुहूर्त्ते पुरसुन्दरीणा-
मीशानसन्दर्शनलालसानाम् ॥")

लालसीकं, क्ली, पिच्छलम् । इति शब्दरत्नावली ॥

लाला, स्त्री, (लल + णिच् + अच् । टाप् ।) मुखभवजलम् । लाल इति भाषा । तत्पर्य्यायः । सृणिका २ स्यन्दिनी ३ । इत्यमरः ॥ आस्रिका ४ सृणीका ५ । इति शब्दरत्नावली ॥ मुखस्रावः । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते । ४ । २२ ।
"हीनच्छेदात् भवेच्छोफो लालानिद्राश्रम-
क्लमः ॥")

लालाटिकः, त्रि, (ललाटं पश्यतीति । ललाट + "संज्ञायां ललाटकुक्कुट्यौ पश्यति ।" ४।४।४६ । इति ठक् । दूरस्थित्वा प्रभोर्ललाटं पश्यति न तु कार्य्येषूपतिष्ठते इत्यर्थः ।) प्रभोर्भावदर्शी । कार्य्याक्षमः । इत्यमरः ॥ यः सेवकः क्रोधप्रसादचिह्नज्ञानाय प्रभोर्ललाटमेव पश्यति । यश्च प्रभोः कार्य्येऽक्षमोऽशक्तस्तौ लालाटिकौ पृथग् वाक्यः । केचित्तु कार्य्याक्षम इति भावदर्शिन एव विशेषणमुक्त्वा एकमेव लालाटिकमाहुर्न तु द्वाविति । भावदर्शीति च पाठः लालाटिकः सदालस्ये प्रभुभावनिदर्शिनि । इत्यजयः ॥ इति तट्टीकायां भरतः ॥ आर्म्भगणविशेषे, पुं । इति मेदिनी । के, २२१ ॥ ललाटसम्बन्धिनि, त्रि । यथा । प्राप्तिस्तु लालाटिकीत्यादि ॥

लालामेहः, पुं, (लालावत् मेहतीति । मिह + अच् ।) प्रमेहविशेषः । यथा,—
"लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ।"
प्रमेहतीति शेषः । अस्यौषधम् ।
"गुडूच्याः स्वरसः पेयो मधुना सर्व्वमेहजित् ।"

हरिद्राचूर्णयुक्तो वा रसो धात्र्याः समा-
क्षिकः ॥"

अपि च ।
"चन्द्रप्रभा वचा मुस्ता भूनिम्बं सुरदारु च ।
हरिद्रातिविषा दार्व्वी पिप्पलीमूलचित्रकम् ॥
धन्याकं त्रिफला चव्यं विडङ्गं गजपिप्पली ।
व्योषं माक्षिकधातुश्च द्वौ क्षारौ लवणत्रयम् ॥
एतानि टङ्कमात्राणि संगृह्णीयात् पृथक् पृथक् ।
त्रिवृद्दन्तीपत्रकञ्च त्वगेला वंशलोचना ।
प्रत्येकं कर्षमात्राणि कुर्य्यादेतानि बुद्धिमान् ॥
द्विकर्षं हतलौहं स्याच्चतु:कर्षा सिता भवेत् ॥
शिलाजत्वष्टकर्षं स्यादष्टौ कर्षाश्च गुग्गुलोः ।
विधिना योजितैरेभिः कर्त्तव्या गुटिका शुभा ॥
चन्द्रप्रभेति विख्याता सर्व्वरोगप्रणाशिनी ।
निहन्ति विंशतिं मेहान् कृच्छ्रमष्टविधं तथा ॥"
इत्यादि भावप्रकाशः ॥

( तथाच चक्रपाणिदत्तम् ।
"तन्तुबद्धमिवाजस्रं पिच्छिलं यः प्रमेहति ।
लालामेहिनमेवाहुस्तं नरं श्लेष्मकोपतः ॥"
इति चरके निदानस्थाने चतुर्थेऽध्याये ॥ )

लालायितः, त्रि, लालाविशिष्टः । कातर इति
यावत् । लालाशब्दात् नमस्तपोवरिव: कण्ड्वा-
दिभ्यः क्यः क्तौ इति मुग्धबोधव्याकरणस्थैव
क्यप्रत्यये क्ते सप्रत्ययान्निष्पन्नः । यथा । अत्र
लालायितः पक्षी । इति अनन्तदेवोक्तगर्भोप-
निषत्पाणिनिव्याकरणीयमहाभाष्यम् ॥
अपि च ।
"परिखावलयच्छलेन या
न परेषां ग्रहणस्य गोचरः ।
फणिभाषितभाष्यफक्किका
विषमा कुण्डलनामवापिता ॥"
इति पूर्व्वनैषधे २ सर्गः ॥
परिखेति । ग्रहणं ग्रहणगोचरो नैवमिति
मत्वा परिखावलयव्याजेन या पुरी कुण्डलनां
प्रापिता विद्यावेति शेषः । फणिना भाषिता
या महाभाष्यफक्किका तद्वद्विषमा सापि परेषां
ज्ञानगोचरो नैवमिति मत्वा अत्र लालायितः
पक्षीत्येवं कुण्डलनां प्रापिता पण्डितैरिति
शेषः । इति भवदत्तकृतटीका ॥

लालाविषः, पुं, (लालायां विषं यस्य ।) लूतादिः ।
इति हेमचन्द्रः । ४ । ३७६ ॥

लालास्रावः, पुं, ( लालां स्रावयतीति । स्रु+णिच्
+अच् । ) ऊर्णनाभः । इति हेमचन्द्रः ॥
( लालास्रावके, त्रि । यथा, सुश्रुते । २ । १६ ।
"लालास्रावी च विज्ञेयः कफजात् शौषिरो
मदः ॥" )

लालिकः, पुं, महिषः । इति हेमचन्द्रः ।४।३४८॥

लालित्यं, क्ली, (ललित+ष्यञ् ।) ललितस्य भावः ।
यथा,—
"प्रीतिं भक्तजनस्य यो जनयते विघ्नं विनिघ्नन्
स्मृत-
स्तं वृन्दारकवृन्दवन्दितपदं नत्वा मतङ्गाननम् ।
पाटीं सद्गणितस्य वच्मि चतुरप्रीतिप्रदां
प्रस्फुटां
संक्षिप्ताक्षरकोमलामलपदैर्लालित्यलीला-
वतीम् ॥"
इति लीलावती ॥

ला(वा)वः, पुं स्त्री, पक्षिविशेषः । लाब्वीया इति
भाषा । इत्यमरभरतौ ॥ ( यथा, सुश्रुते ।४।८।
"ग्राम्यानुपौदकैर्मांसैर्लावाद्यैर्वापि विष्किरैः ॥")
अस्य मांसगुणाः । लघुत्वम् । कटुत्वम् । मल-
सङ्ग्रहकारित्वम् । स्वादुत्वम् । शीतत्वम् । त्रिदोष-
नाशित्वञ्च । इति राजवल्लभः ॥ ( तथा च ।
"संग्राही दीपनश्चैव कषायो मधुरो लघुः ।
लावः कटुविपाकश्च सन्निपाते च पूजितः ॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)
( यथाच गुणपर्य्यायौ ।
"लावा विष्किरवर्गेषु ते चतुर्धा मता बुधैः ।
पांशुलो गौरकोऽन्यस्तु पौण्ड्रकोदर्भरस्तथा ॥
लावा वह्निकराः स्निग्धा सरसा ग्राहिका
हिताः ॥
पांशुलः श्लेष्मलस्तेषु वीर्य्योष्णोऽनिलनाशनः ।
गौरो लघुतरो रूक्षो वह्निकारी त्रिदोषजित् ॥
पौण्ड्रकः पित्तकृत् किञ्चिल्लघुर्वातकफापहः ।
दर्भरो रक्तपित्तघ्नो हृदामयहरो हिमः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)

ला(वा)वकः, पुं, (लाव एव । स्वार्थे कन् ।) लाव-
पक्षी । तत्पर्य्यायः । लघुनखः २ । इति
त्रिकाण्डशेषः ॥ (तथास्य मांसगुणाः ।
"पथ्यश्च महाश्रेष्ठो लावको जाङ्गलात्मकः ।
संग्राही दीपनः प्रोक्तः कषायो मधुरो लघुः ।
तथा विपाके मधुरः सन्निपातेऽतिपूजितः ॥"
इति हारीते प्रथमे स्थाने एकादशेऽध्याये ।
यथा, सुश्रुते । ४ । १९ ।
"विरिक्तवान्तैर्हरिणैणलावकाः
शशश्च सेव्यः समयूरतित्तिरिः ॥"
लुनातीति । लू+ण्वुल् । छेदकः । यथा, मार्क-
ण्डेये । ४६ । २६ ।
"यथा ग्रामव्यापकः क्षेत्री पालको लावक-
स्तथा ॥")

लावणं, त्रि, (लवण+अण् ।) लवणेन संस्कृतम् ।
यथा,—
"सार्पिष्कं दाधिकं सर्पिर्दधिभ्यां संस्कृतं क्रमात् ।
लवणोदकाभ्यामुदकं लावणिकमुदश्वित्ति ।
औदश्वितमौदश्वित्कं लवणं स्यात्तु लावणम् ॥"
इति हेमचन्द्रः ॥
लवणसम्बन्धि च । ( यथा, हरिवंशे ।५३।२० ।
"स मां परिभवन्नेव स्वां वेलां समुपाक्रमन् ।
प्लावयामास चपलैर्लावणैरम्बुविप्लवैः ॥")
नस्ये, स्त्री । इति रत्नमाला ॥

लावणिकं, त्रि, ( लवण+ठञ् । ) लवणेन संस्कृ-
तम् । इति हेमचन्द्रः ॥ लवणसम्बन्धि च ।
लवणविक्रेतरि, पुं । ( यथा, माघे । १० ।
३८ ।
"लीलयैव सुतनोस्तुलयित्वा
गौरवाढ्यमपि लावणिकेन ॥" )
लवणपात्रे, स्त्री । इति केचित् ॥

लावण्यं, क्ली, ( लवण+ष्यञ् । ) लवणत्वम् ।
लवणस्य भाव इत्यर्थे ष्यञ्प्रत्ययेन निष्पन्नम् ।
( लवणा त्विट् विद्यते यस्येति लवणः । अर्श-
आदिभ्योऽच् । तस्य भावः । दृढादित्वात्
ष्यञ् । यद्वा, लवणा त्विट् सैव । चतुर्वर्णादि-
त्वात् स्वार्थे ष्यञ् । ) सौन्दर्य्यविशेषः । तस्य
लक्षणं यथा,—
"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥"
इत्युज्ज्वलनीलमणिः ॥
तथा हि ।
"नीतिर्भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां
धृति-
र्दम्पत्योः शिशवो गृहस्य कविता बुद्धेः प्रसादो
गिराम् ।
लावण्यं वपुषः स्मृतिस्तु मनसा शान्तिर्द्विजस्य
क्षमा
शक्तस्य द्रविणं गृहाश्रमवतां स्वास्थ्यं सतां
मण्डनम् ॥"
इति नवरत्नान्तर्गतामरसिंहः ॥
( शीलनैपुण्यादि । अस्य प्रमाणं लावण्यार्जित-
शब्दे द्रष्टव्यम् ॥ )

लावण्यार्जितं, क्ली, (लावण्येन अर्जितम् ।) विवाह-
कालीनं श्वशुराभ्यां दत्तं धनम् । यथा,—
"शीला दत्तञ्च यत्किञ्चित् श्वश्र्वा वा श्वशुरेण
वा ।
पादवन्दनिकं यत्तल्लावण्यार्जितमुच्यते ॥"
इति विवादचिन्तामणिधृतकात्यायनवचनम् ॥
लावण्यं शीलनैपुण्यादि । तथा च पादप्रणतायै
शीलादिमत्यै या स्त्रियै श्वशुरादिना दत्तं
तदीयं स्त्रीधनमित्यर्थः । इति तद्व्याख्यानम् ॥

लावा, स्त्री, (लाव+टाप् ।) पक्षिविशेषः । तत्-
पर्य्यायः । लावकः २ लावः ३ लवः ४ । अस्या
मांसगुणाः । पथ्यत्वम् । पाचित्वम् । लघुत्वञ्च ।
इति राजनिर्घण्टः ॥

लाबुः, } स्त्री, अलाबुः । इति शब्दरत्नावली ॥
लाबूः, }

लाषः, पुं, ( लष्+घञ् । ) नृत्यमात्रम् । स्त्रीणां
नृत्यम् । इति शब्दरत्नावली ॥ ( यथा, ऋतु-
संहारे । ६ । २१ ।
"मदनवनितलास्यैर्हृष्टपातैर्वनान्तान्
स्तनभरनतनार्य्यः कामयन्ति प्रशान्तान् ॥")
यूषः । इति शब्दचन्द्रिका ॥

लासकं, क्ली, (लसतीति । लस+ण्वुल् ।) भट्टकम् ।
इति हारावली ॥ भट्का इति भाषा ॥

लासकः, पुं, ( लसतीति । लस+ण्वुल् । ) लास्य-
कारी । मयूरः । नर्तकः । इति मेदिनी । के, ॥
शैवः । इति धरणिः ॥ ( दीप्तिकारकः । यथा,
ऋतुसंहारे । २ । २६ ।

"नवजलकणसिक्ताच्छीततामादधानः
कुसुमभरनतानां लासकः पादपानाम् ।")

लासकी, स्त्री, नर्त्तकी । इत्यमरः ॥

लासिका, स्त्री, ( लासोऽस्त्यस्या इति । लास + ठन् । ) नर्त्तकी । इत्यमरः ॥

लास्फोटनी, स्त्री, आस्फोटनी । वेधनिका । इत्यमरटीकायां रायमुकुटः ॥

लास्यं, क्ली, (लस् + "ऋहलोर्ण्यत् ।" ३।१।१२४ । इति ण्यत् ।) नृत्यम् । इत्यमरः ॥ तौर्य्यत्रिकम् । इति मेदिनी ॥ भावाश्रयं नृत्यम् । ताललयाश्रयं नृत्यम् । इति भरतः ॥
"पुंनृत्तं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते ।"
इति सङ्गीतनारायणे नारदसंहिता ॥
( यथा, महाभारते । १ । ६८ । १० ।
"संयोगविप्रयोगार्थैर्भावलास्यमनोहरैः ।
राजानं रमयामास तथा रेमे तथैव सः ॥")

लास्यः, पुं, ( लास्यमस्त्यस्येति । लास्य + अच् । ) नर्त्तकः । इति शब्दरत्नावली ॥

लास्यकं, क्ली, (लास्यमेव । स्वार्थे कन् ।) नृत्यम् । इति शब्दरत्नावली ॥

लास्या, स्त्री, ( लास्यमस्त्यस्या इति । लास्य + अच् । टाप् । ) नर्त्तकी । इति शब्दरत्नावली ॥

लिकुचं, क्ली, ( लक्यते आस्वाद्यते इति । लक + बाहुलकात् उचः । पृषोदरादित्वात् इत्वम् । ) फलम् । इति राजनिर्घण्टः ॥ ( लकुचः । अस्य गुणा यथा,—
"पित्तश्लेष्मप्रकोपीणि कर्कन्धुलिकुचान्यपि ।"
इति चरके सूत्रस्थाने २७ अध्याये ॥ )

लिकुचः, पुं, लकुचः । इत्यमरः ॥

लिक्का, स्त्री, लिक्षा । इति शब्दरत्नावली ॥

लिक्षा, स्त्री, ( लिश गतौ + बाहुलकात् सः । सच किन् । इत्युणादिवृत्तौ उज्ज्वलः । ३ । ६६ । ) यूकाण्डम् । इत्यमरः ॥ लिकि इति भाषा । इत्यमरभरतौ ॥ तत्पर्य्यायः । लिक्का २ लीचा ३ लीक्षा ४ लिखिका ५ । इति शब्दरत्नावली ॥ ( यथा,—
"बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ॥"
इति वाभटे निदानस्थाने चतुर्द्दशेऽध्याये ॥ )
परिमाणविशेषः । यथा,—
"जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
तैश्चतुर्भिर्भवेल्लिक्षा लिक्षाषड्भिश्च सर्षपः ॥"
इति शब्दचन्द्रिका ॥
षयकारकवर्गद्वितीयवतीत्यपि पाठः ॥

लिख, इ खपि । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) इ, लिङ्खति । खपि गतौ । इति दुर्गादासः ॥

लिख, श लेखने । इति कविकल्पद्रुमः ॥ ( तुदा०-पर०-सक०-सेट् । ) श, लिखति पुस्तकं लेखकः । अयं विभाषया कुटादिरिति केचित् । तेन लिखितं लिखत्वोऽपि प्रक्रियासिद्धिरिति । लिखितव्यं लेखितव्यं लिखनं इत्यादि चिन्त्यम् । इति दुर्गादासः ॥

लिखः, त्रि, (लिखतीति । लिख + "इगुपधज्ञेति ।" ३ । १ । १३५ । इति कः ।) लेखकः । इति लिखधातोः अर्थदर्शनेन निष्पन्नम् ॥

लिखनं, क्ली, लेखनम् । लिपिः । इत्यमरटीकायां सारसुन्दरी ॥ ( यथा, मार्कण्डेये । ५१ । २२ ।
"प्रलिखन्ननलिखनात् ब्रह्मचर्य्याद्विधारणात् ।
विमुक्तगेहावसथात्तथायासाच्च वै द्विज ॥")
विधिलिपिरलङ्घनीया यथा,—
"यस्य यल्लिखनं पूर्व्वं यच्च काले निरूपितम् ।
तदेव खण्डितुं शक्तो ब्रह्मा नाहञ्च को विधिः ॥
विधातुश्च विधाताहं येषां यल्लिखनं कृतम् ।
ब्रह्मादीनाञ्च क्षुद्राणां न तत्खण्ड्यं कदाचन ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १५ अध्यायः ॥

लिखितं, क्ली, ( लिख + भावे क्तः । ) लिपिः । इत्यमरः ॥ लेखनम् । इति भरतः ॥ ( लिख + कर्म्मणि क्तः । ) लिखितपत्रादौ, त्रि । यथा,—
"प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति
कीर्त्तितम् ॥"
इति मिताक्षरायां याज्ञवल्क्यः ॥
मुनिविशेषे, पुं । यथा, आह्निकतत्त्वे याज्ञवल्क्यः ॥
"पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः ॥"

लिख्या, स्त्री, परिमाणविशेषः । यथा,—
"जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
तैश्चतुर्भिर्भवेल्लिख्या लिख्याषड्भिश्च सर्षपः ॥"
इति शब्दचन्द्रिका ॥

लिग, इ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् । ) इ, लिङ्गति । इति दुर्गादासः ॥

लिग, इ क चित्रे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् । ) इ क, लिङ्गयति शब्दं स्त्रीपुंसकैः शाब्दिकः चिह्नं करोतीत्यर्थः । इति दुर्गादासः ॥

लिगु, क्ली, ( लिङ्गति विषयात् विषयान्तरं गच्छतीति । लिग + "खरशङ्कुपीयुनीलङ्गुलिगु ।" उणा० १ । ३७ । इति कुप्रत्ययेन साधु ।) मनः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

लिगुः, पुं, ( लिग + कुः ।) मूर्खः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ भूप्रदेशः । मृगः । इति नानार्थरत्नमाला ॥

लिङ्गं, क्ली, ( लिङ्ग्यते अनेन इति । लिङ्ग + घञ् । अभिधानात् क्लीबलिङ्गत्वम् ।) चिह्नम् । (यथा, महाभारते । १ । २ । १२ ।
"येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते ।
तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः ॥" )
शेफः । इत्यमरः ॥ अनुमानम् । सांख्योक्तप्रकृतिः । ( यथा, सांख्यकारिकायाम् । ५५ ।
"तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः
पुरुषः ।
लिङ्गस्याविनिवृत्तेस्तस्माद्दुःखं स्वभावेन ॥"
प्रकृतिकार्य्ये लिङ्गशरीरे । यथा, तत्रैव । १० ।
"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं
लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥"
विशेषस्तु तत्र द्रष्टव्यः ।) शिवमूर्त्तिविशेषः । इति मेदिनी । गे,१३ ॥ आद्यम् । व्यक्तम् । पुंस्त्वादिः । इति विश्वप्रकाशः ॥ (यथा, मनुः । ५ । १३६ ।
"एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश ।
उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥")
सामर्थ्यम् । यथा,—
"यावन्तामेव धातूनां लिङ्गं रूढिगतं भवेत् ।
अर्थश्चैवाभिधेयस्तु तावद्भिर्गुणविग्रहः ॥"
इति तिथ्यादितत्त्वे शब्दकारिकाकारिकायां रघुनन्दनः ॥ * ॥ अथ शिवार्थस्य लिङ्गस्य पर्य्यायः ।
शिश्नः २ स्मरस्तम्भः ३ उपस्थः ४ मदनाङ्कुशः ५ कन्दर्पमुषलः ६ शेफः ७ मेहनम् ८ शेपः [स]९ मेढ्रः १० लाङ्गुः ११ ध्वजः १२ रागलता १३ धनुः १४ । इति शब्दरत्नावली ॥ लाङ्गूलम् १५ साधनम् १६ शेफः १७ कामाङ्कुशः १८ । इति जटाधरः ॥ * ॥ लिङ्गमध्ये वादिलान्तवर्णयुक्तस्वाधिष्ठाननामकषड्दलपद्ममस्ति । यथा,—
"मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके ।
मध्ये स्वयम्भुलिङ्गन्तु कोटिसूर्य्यसमप्रभम् ॥
तदूर्द्ध्वे प्रेमवर्णाभं व स पर्य्यन्तषड्दलम् ।
तदूर्द्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम् ॥
वादिलान्तषड्वर्णेन युक्तस्वाधिष्ठानसंज्ञकम् ।
मूलमूर्द्धन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥"
इति तन्त्रम् ॥*॥
अस्याधिष्ठातृदेवतादिर्यथा ।
"प्रजनः सर्व्वभूतानामुपस्थोऽध्यात्ममुच्यते ।
अधिभूतं तथा शुक्रं दैवतञ्च प्रजापतिः ॥"
इति महाभारते आश्वमेधिकपर्व्व ॥ * ॥
अस्य शुभाशुभलक्षणं यथा,—
"स्थूले लिङ्गे च धनवान् स्याच्च पुत्त्रादि-
वर्ज्जितः ।
स्थूललिङ्गो दरिद्रः स्याद्दुःखितद्वयो भवेत् ॥"
इति गारुडे ६३ अध्यायः ॥ * ॥
अपि च ।
"महद्भिरायुराख्यानं ह्रस्वलिङ्गो धनी नरः ।
अपत्यरहितश्चैव स्थूललिङ्गो धनोज्झितः ॥"
महद्भिर्जानुभिरिति शेषः ।
"मेढ्रे वामनते चैव सुतार्थरहितो भवेत् ।
वक्रेऽन्यथा पुत्त्रवान् स्यात् दारिद्र्यं विनते
त्वधः ॥
अल्पे तु तनयो लिङ्गे शिरालेऽथ सुखी नरः ।
स्थूलग्रन्थियुते लिङ्गे भवेत् पुत्त्रादिवर्ज्जितः ॥"
इति गारुडे ६६ अध्यायः ॥
अन्यच्च ।
"दीर्घलिङ्गेन दारिद्र्यं स्थूललिङ्गेन निर्द्धनः ।
लघुलिङ्गेन सौभाग्यं ह्रस्वलिङ्गेन भूपतिः ॥
कर्कशैः कठिनैर्लिङ्गैः परदाररतः सदा ।
रमते च सदा दासीं निर्द्धनो भवति ध्रुवम् ॥
लघुलिङ्गेन सुख्याय रक्तलिङ्गेन भूपतिः ।
परस्त्रीं रमते नित्यं नारीणां वल्लभो भवेत् ॥
लघुलिङ्गेन रक्तेन लभते चोत्तमाङ्गनाम् ।

(यथा, महाभारते । ३ । १३२ । १२ ।
"स वै तथा वक्र एवाभ्यजाय-
दष्टावक्रः प्रथितो वै महर्षिः ॥" )

वक्राणि यथा । अनलः १ भालः २ भ्रूः ३ नखचिह्नम् ४ अङ्कुशः ५ कुञ्चिका ६ मयकङ्कणम् ७ बालेन्दुः ८ दात्रम् ९ कुद्दालः १० चक्रकः ११ शुकास्यम् १२ पलाशपुष्पम् १३ पिशुनः १४ कटाक्षः १५ शुकचञ्चुः १६ वक्रा १७ प्रबोधः १८ करः १९ हस्तिदन्तः २० शूकरदन्तः २१ सिंहनखादिः २२ । इति कविकल्पलता ॥ क्रूरः । इति मेदिनी । रे, ६५ ॥

वक्रकण्टः, पुं, ( वक्राः कण्ठाः कण्टका यस्य । ) बदरवृक्षः । इति राजनिर्घण्टः ॥ ( वक्रः कण्टः । ) कुटिलकण्टकश्च ॥

वक्रकण्टकः, पुं, ( वक्राः कण्टका अस्य ।) खदिरवृक्षः । इति राजनिर्घण्टः ॥ ( विवृतोऽस्य खदिरशब्दे विशेषः ॥ )

वक्रखड्गः पुं, ( वक्रः खड्गः । ) करवालः । इति राजनिर्घण्टः ॥

वक्रग्रीवः, पुं, ( वक्रा ग्रीवास्य । ) उष्ट्रः । इति त्रिकाण्डशेषः ॥

वक्रचञ्चुः, पुं, ( वक्रा चञ्चुर्यस्य । ) शुकपक्षी । इति शब्दरत्नावली ॥

वक्रनालं, क्ली, ( वक्रं नालं यत्र । ) वाद्यविशेषः । तत्पर्य्यायः । सुखवाद्यम् २ । वक्रनालमिति वा पाठः । इति त्रिकाण्डशेषः ॥

वक्रनाली, स्त्री, ( वक्रनाल + गौरादित्वात् ङीष् ।) सुखवाद्यम् । इति शब्दरत्नावली ॥

वक्रतुण्डः, पुं, ( वक्रन्तुण्डं यस्य । ) शुकपक्षी । इति शब्दरत्नावली ॥ ( वक्रोष्ठे, त्रि । यथा, भागवते । ६ । १ । २८ ।
"स पाशहस्तांस्त्रीन् दृष्ट्वा पुरुषानतिदारुणान् ।
वक्रतुण्डानूर्द्ध्वरोम्ण आत्मानं नेतुमागतान् ॥" )

वक्रदंष्ट्रः, पुं, ( वक्रा दंष्ट्रा यस्य । ) शूकरः । इति केचित् ॥

वक्रनक्रः, पुं, ( वक्रः कुटिलः नक्र इव हिंसकः । ) पिशुनः । शुकपक्षी । इति मेदिनी । रे, २८५ ॥

वक्रनालं, क्ली, सुखवाद्यम् । इति सुभाषितचिकाण्डशेषः ॥

वक्रनासिकः, पुं, (वक्रा नासिका यस्य ।) पेचकः । इति त्रिकाण्डशेषः ॥ कुटिलनासायुक्ते, त्रि ॥

वक्रपुच्छः, पुं, स्त्री, ( वक्रं पुच्छं यस्य । ) कुक्कुरः । इति त्रिकाण्डशेषः ॥ सलोमकुटिललाङ्गूलश्च ॥

वक्रपुष्पः, पुं, ( वक्राणि पुष्पाण्यस्य । ) बकवृक्षः । इति शब्दरत्नावली ॥ पलाशवृक्षः । इति राजनिर्घण्टः ॥

वक्रबालधिः, पुं, ( वक्रो बालधिः केशयुक्तलाङ्गूलं यस्य । ) कुक्कुरः । इति हेमचन्द्रः । ४ । ३४४ ॥ कुटिलपुच्छश्च ॥

वक्रभणितं, क्ली, ( वक्रं कुटिलं भणितम् । ) कुटिलवाक्यम् । तत्पर्य्यायः । द्विरुक्तिः २ । इति त्रिकाण्डशेषः ॥

वक्रमः, पुं, ( अवक्रमणमिति । अव + क्रम + भावे घञ् । अल्लोपः । ) पलायनम् । इति शब्दरत्नावली ॥

वक्रलाङ्गूलः, पुं, ( वक्रं लाङ्गूलं यस्य । ) कुक्कुरः । इति राजनिर्घण्टः ॥ कुटिलपुच्छे, त्रि ॥

वक्रवक्त्रः, पुं, ( वक्रं वक्त्रं मुखमस्य । ) शूकरः । इति शब्दरत्नावली ॥ कुटिलमुखविशिष्टे, त्रि ॥

वक्रशल्या, स्त्री, ( वक्रं शल्यमिव पत्रादिकं यस्याः । ) कुटुम्बिनीक्षुपः । इति राजनिर्घण्टः ॥

वक्राग्रं, क्ली, ( वक्रमग्रं यस्य । ) कवाटवक्रदण्डः । इति रत्नमाला ॥ ॥ कुटिलाग्रभागश्च ॥

वक्राङ्गः, पुं, ( वक्रमङ्गं यस्य । ) हंसः । इति हेमचन्द्रः ॥ कुटिलावयवे, क्ली ॥ ( कुटिलावयवविशिष्टे, त्रि । यथा, हरिवंशे । १०२ । ३८ ।
"तरङ्गविषमापीडा चक्रवाकोन्नतस्तनी ।
वेगगम्भीरवक्राङ्गी अस्तमीनविभूषणा ॥" )

वक्रिः, त्रि, मिथ्यावादी । वकधातोः क्रिन्प्रत्ययेन निष्पन्नः ॥

वक्री, [ न् ] पुं, ( वक्रो वक्रतास्यास्तीति । इनिः । वैदिकधर्म्मविरुद्धवादित्वादस्य तथात्वम् ।) बुद्धः । इति शब्दरत्नावली । वक्रताविशिष्टे, त्रि । यथा,
"लग्नेशो यदि वक्री स्यात् पुंसः कार्य्येषु
वक्रता ।
लग्नेशोऽस्तं गते मर्त्यो दुःखादिव्याधिसंयुतः ॥"
इति ज्योतिस्तत्त्वम् ॥

वक्रोक्तिः, स्त्री, ( वक्रा कुटिला उक्तिः । ) काकूक्तिः । यथा, कामधेनुकल्पतरुधृतब्रह्मपुराणम् ।
"अथ हृष्टे हृषीकेशे रामा वक्रोक्तिभिः पदैः ।
आज्ञयागाच्च यत् किञ्चित् मयोत्सृष्टन्तु
निर्जने ॥
तत् कश्चिदन्यो न नयेत विभाव्यं यथाक्रमम् ।
न वाद्यं न च तत् चौरं पातव्यं केनचित्
क्वचित ॥"
तत्त्वप्रदीपेऽप्येवम् । वक्रोक्तिभिः काकूक्तिभिः । इति मुक्तितत्त्वम् ॥ * ॥ कुटिलोक्तिः । यथा,
"वादी व्याकरणं विनैव विदुषां धृष्टः प्रविष्टः
सभां
जल्पन्नल्पमतिः स्मयात् पटुवटुभ्रूभङ्गवक्रो-
क्तिभिः ।
ह्रीणः सन्नुपहासमेति गणको गोलानभिज्ञस्तथा
ज्योतिर्विित्सदसि प्रगल्भगणकः प्रश्नप्रपञ्चो-
क्तिभिः ॥"
इति सिद्धान्तशिरोमणौ गोलाध्यायः ॥
( वक्रा अर्थान्तरप्रकाशेन कुटिला उक्तिः । शब्दालङ्कारप्रभेदः । तल्लक्षणादिकं यथा, साहित्यदर्पणे दशमपरिच्छेदे ।
"अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद् यदि ।
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा ॥
द्विधेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च । क्रमेणोदाहरणं यथा,—
"के यूयं स्थल एव सम्प्रति वयं प्रश्नो विशेषाश्रयः
किं ब्रूते विहगः स वा फणिपतिर्यत्रास्ति सुप्तो
हरिः ।
वामा यूयमहो विडम्बरसिकः कीदृक् स्मरो
वर्त्तते
येनास्मासु विवेकशून्यमनसः पुंस्वेव योषिद्
भ्रमः ॥"
अत्र विशेषपदस्य विः पक्षी शेषो नाग इति अर्थद्वययोगात् सभङ्गः श्लेषः । अन्यत्र तु अभङ्गः ।
"काले कोकिलवाचाले सहकारमनोहरे ।
कृतागसः परित्यागात् तस्याश्चेतो न दूयते ॥"
अत्र कयाचित् सख्या निषेधार्थे नियुक्तो नञ् अन्यथा काक्वा दूयत एवेति विध्यर्थे घटितः ॥")

वक्रोष्ठिका, स्त्री, ( वक्रोष्ठोऽस्त्यस्या इति । ठन् । ईषद्धसनेन हि ओष्ठस्य वक्रता जायते अतोऽस्यास्तथात्वम् । यद्वा, वक्र ओष्ठो यस्याः । ततः स्वार्थे कन् । टापि अत इत्वम् ।) अट्टहासात्यम् । ईषद्धास्यम् । तत्पर्य्यायः । स्मितम् २ । इति हेमचन्द्रः ॥

वक्ष, रोषसंहत्योः । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-रोषे अक०-संहतौ सक०-सेट् ।) वक्षति । इति दुर्गादासः ॥

वक्षः, [स्] क्ली, ( उच्यतेऽनेनेति । वच + "पचिवचिभ्यां सुट् च ।" उणा० ४ । २१९ । इति असुन् सुट । वक्षतेरसुन् इति रमानाथः । भानुदीक्षितश्च ।) अङ्गविशेषः । स तु हृदयोपरिकण्ठादधोभागः । बुक् इति भाषा । तत्पर्य्यायः । क्रोडम् २ भुजान्तरम् ३ उरः ४ वत्सम् ५ । इत्यमरः ॥ अङ्कः ६ उत्सङ्गः ७ । इति जटाधरः ॥ वक्षणम् ८ गात्रपीठकम् ९ । इति शब्दचन्द्रिका ॥ अपि च ।
"अथ वक्षश्च वत्सं स्यादुरो वक्षस्थले अयम् ।"
इति शब्दरत्नावली ॥
तस्य शुभाशुभलक्षणं यथा,—
"असमान् समवक्षाः स्यात् पीवैर्व्वक्षोभि-
रूर्ज्जितः ।
वक्षोभिर्व्विषमैर्निस्वः शस्त्रेण निधनस्तथा ॥"
इति गारुडे ६६ अध्यायः ॥
( पुं, वहतीति । वह + "वहियुभ्यां णित् ।" उणा० ४ । २२० । इति असुन् । सुट् च । अनड्वान् । इत्युज्ज्वलदत्तः ॥")

वक्षणं, क्ली, ( वक्षत्यनेनेति । वक्षरोषसंहत्योः + ल्युट् । ) वक्षः । इति शब्दचन्द्रिका ॥ (वाहके, त्रि । यथा, ऋग्वेदे । ६ । २३ । ६ ।
"क्रियास्म वक्षणानि यज्ञैः ।"
"वक्षणानि वाहकानि स्तोत्राणि क्रियास्म करवाम ।" इति तद्भाष्ये सायणः ॥)

वक्षोजं, क्ली, (वक्षसि जायते इति । जन् + डः । ) स्तनः । इति शब्दरत्नावली ॥ (यथा, साहित्यदर्पणे ३ परिच्छेदे ।
"मध्यस्य प्रथिमानमेति जघनं वक्षोजयोर्मन्दता
दूरं यात्युदरञ्च रोमलतिका नेत्रार्ज्जवं धावति ।

कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणात्

अङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः॥")

वक्षोरुहः पुं, (वक्षसि रोहतीति। वक्षस्+रुह+कः।) स्तनः। इति त्रिकाण्डशेषः॥ (यथा, आर्य्यासप्तशत्याम्। ४४६।

"मा मुचरस्तवति पीवरवक्षोरुहयोर्भरेण भज गर्व्वम्।

निर्म्मोकैरपि शोभा ययोर्भुजङ्गीभिरुन्मुक्तैः॥")

वक्ष्यमाणः, त्रि, भविष्यत्कथनीयविषयः। वच-धातोः स्यमानप्रत्ययेन निष्पन्नः। यथा। अत्र वक्ष्यमाणवचनात् मध्यराक्प्रागावेव ,जयन्ती-त्वम्। इति तिथ्यादितत्त्वम्॥ अपि च।

"तत्रैव द्वादशीमध्ये पारणं श्रवणोऽधिके।

वक्ष्यमाणञ्च वटसेऽन्यथा प्राग्विहिता व्रतम्॥"

इति श्रीहरिभक्तिविलासे १५ विलासः॥

वख, ऋपि। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) वखति। ऋपि गतौ। इति दुर्गादासः॥

वखि, इ ऋपि। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्। इदित्।) इ, वङ्खति। ऋपि गतौ। इति दुर्गादासः॥

वग, इ खञ्जे। इति कविकल्पद्रुमः॥ (भ्वा० पर०-अक०-सेट्।) इ, वङ्गति। इति दुर्गादासः॥

वगला } स्त्री, दशमहाविद्यान्तर्गतदेवी-
वगलामुखी } विशेषः। तदुक्तं तन्त्रान्तरे।

"अथाहं संप्रवक्ष्यामि सद्यःप्रत्ययकारकम्।

साधकानां हितार्थाय स्तम्भनाय च वैरि-णाम्॥

यस्याः स्मरणमात्रेण पवनोऽपि स्थिरायते।

प्रणवं स्थिरमायाञ्च ततश्च वगलामुखि॥

तदन्ते सर्व्वदुष्टानां ततो वाचं मुखं पदम्॥

स्तम्भयेति ततो जिह्वां कीलयेति पदद्वयम्॥

बुद्धिं नाशय पश्चात्तु स्थिरमायां समालिखेत्।

लिखेच्च पुनरोङ्कारं स्वाहेति पदमन्ततः॥

षट्त्रिंशदक्षरी विद्या सर्व्वसम्पत्करी मता॥"

स्थिरमाया ह्लीँ। तथा च।

"वह्निह्नीनेन्दुमायायुक् स्थिरमाया प्रकीर्त्तिता॥

ॐ ह्लीँ वगलामुखी सर्व्वदुष्टानां वाचं मुखं स्तम्भय जिह्वां कीलय कीलय बुद्धिं नाशय ह्लीँ ॐ स्वाहा॥ *॥ तन्त्रान्तरे।

"वह्निह्नीनेन्दुमायायुक् वगलामुखि सर्व्वयुक्।

दुष्टानां वाचमित्युक्त्वा मुखं स्तम्भय कीर्त्तयेत्॥

जिह्वां कीलय बुद्धिं तत् विनाशय पदं वदेत्।

पुनर्व्वीजं ततस्तारं वह्निजायावधिर्भवेत्।

ताराद्यिका चतुस्त्रिंशदक्षरा वगलामुखी॥"

ॐ ह्लीँ वगलामुखि सर्व्वदुष्टानां वाचं मुखं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीँ ॐ स्वाहा। इत्यपि मन्त्रान्तरम्॥ *॥ अनयोः पूजा। प्रातःकृत्यादिप्राणायामान्तं विधाय ऋष्यादिन्यासं कुर्य्यात्। यथा, शिरसि नारद-ऋषये नमः। मुखे त्रिष्टुप्छन्दसे नमः। हृदि वगलामुख्यै देवतायै नमः। गुह्ये ह्लीँ वीजाय नमः। पादयोः स्वाहाशक्तये नमः।

"नारदोऽस्य ऋषिं मूर्द्ध्नि त्रिष्टुप् छन्दश्च तन्मुखे।

श्रीवगलामुखीं देवीं हृदये विन्यसेत्ततः।

ह्लीँ वीजं गुह्यदेशे तु स्वाहाशक्तिस्तु पादयोः॥"

ततः कराङ्गन्यासौ। ॐ ह्लीँ अङ्गुष्ठाभ्यां नमः। वगलामुखि तर्ज्जनीभ्यां स्वाहा। सर्व्वदुष्टानां मध्यमाभ्यां वषट्। वाचं मुखं स्तम्भय अनामिकाभ्यां हुँ। जिह्वां कीलय कीलय कनिष्ठाभ्यां वौषट्। बुद्धिं नाशय ह्लीँ ॐ स्वाहा करतलपृष्ठाभ्यां फट्। एवं हृदयादिषु। तथा च दिङ्मन्त्रे।

"युग्मवाणयुगसप्तशिरोमार्णैश्च मन्त्रवित्।

करशाखासु तलयोः कराङ्गन्यासमाचरेत्॥"

ततो मूलान्ते आत्मतत्त्वव्यापिनीवगलामुखीश्री-पादुकां पूजयामि इति मूलाधारे। मूलान्ते विद्यातत्त्वव्यापिनीवगलामुखीश्रीपादुकां पूजयामि शिरसि। मूलान्ते शिवतत्त्वव्यापिनी-वगलामुखीश्रीपादुकां पूजयामि सर्व्वाङ्गे। ततश्च।

"मूर्द्ध्नि भाले दृशोः श्रोत्रे गण्डयोर्नासयोः पुनः।

ओष्ठयोर्द्दशने च दक्षिणांशे च कूर्परे॥

मणिबन्धेऽङ्गुलीमूले गले च कुचयोर्हृदि।

नाभौ कट्यां गुह्यदेशे वामांशे कूर्परे तथा॥

मणिबन्धेऽङ्गुलीमूले मतश्च विन्यसेत् पुनः।

दक्षवामे चोरुजान्वोर्गुल्फयोरङ्गुलिस्तयोः।

क्रमेण मन्त्रवर्णांस्तु न्यस्य ध्यायेत् यथाविधि॥"*॥

ततो ध्यानम्।

"मध्ये सुधाब्धिमणिमण्डपरत्नवेदी-

सिंहासनोपरिगतां परिपीतवर्णाम्।

पीताम्बराभरणमाल्यविभूषिताङ्गीं

देवीं स्मरामि धृतमुद्गरवैरिजिह्वाम्॥

जिह्वाग्रमादाय करेण देवीं

वामेन शत्रुं परिपीडयन्तीम्।

गदाभिघातेन च दक्षिणेन

पीताम्बराढ्यां द्विभुजां नमामि॥"

एवं ध्यात्वा मानसैः सम्पूज्य वहिःपूजामार-भेत्॥ *॥ तत्र प्रथमतोऽर्घ्यस्थापनम्। यथा। अष्टाङ्गुलं चतुरस्रं विधाय ईशानादिकोणेषु पूर्व्वादिदिक्षु च कुसुमाक्षतरक्तचन्दनैर्ग्लौं गणपतये नमः इत्यनेन गणदानेन संपूज्य तेन मधुना वा अर्घ्यपात्रमापूरयेत्। ततो वारत्रयं विद्यया संपूज्य अङ्गानि विन्यसेत। ततो धेनु-योनिमुद्रे प्रदर्श्य तेनोदकेन आत्मानं पूजोप-करणञ्चाभ्युक्षयेत्॥ *॥ अस्या यन्त्रम्। त्र्यस्रं षड्स्रं वृत्तमष्टदलं भूपुराक्रान्तम्। ततो मूल-मुच्चार्य ॐ आधारशक्तिकमलासनाय नमः। एवं शक्तिपद्मासनाय नमः। पूर्व्ववत् ध्यात्वा पीठे आवाह्य षडङ्गानि न्यसेत्। ततो मुद्रां प्रदर्श्य पुरतः षडङ्गेन मण्डलं यजेत्। ततो मूलेन सन्तर्प्य धेनुयोनिमुद्रे प्रदर्श्य आत्म-विद्यान्निवेदनान्ते निजहृदयं मुखे चिन्मुद्रा तर्जन्य-ङ्गुष्ठयोगेन वाङ्गावरणां वगलामुखीं तर्पयेत्। ततो यथासम्भवमुपचारैः संपूज्य आवरणपूजा-मारभेत्। षट्कोणेषु पूर्व्वे ॐ सुभगायै नमः एवमग्निकोणे भगसर्पिण्यै। ईशाने भगव-हायै। पश्चिमे भगसिद्धायै। नैर्ऋते भग-मालिन्यै। वायौ भगमालिन्यै। ततोऽष्टदल-पत्रेषु ब्राह्म्याद्याः पूज्याः। पत्राग्रेषु ॐ जयायै नमः। एवं विजयायै। अजितायै। अपरा-जितायै। स्तम्भिन्यै। जम्भिन्यै। मोहिन्यै। आकर्षिण्यै। ततो द्वारेषु ॐ भैरवाय नमः। तद्वाह्ये इन्द्रादीन् वज्रादीन् पूजयेत्। ततो मूलेन धूपादिकं दत्त्वा यथाशक्ति जपं विधाय त्रिमूलमुद्रां प्रदर्श्य पुष्पाञ्जलित्रयं दत्त्वा देवी-योनिमुद्रां प्रदर्शयेत्। ततो भैरवाय वलिं दद्यात्। ततो विसर्जनान्तं कर्म्म समापयेत्॥ अस्य पुरश्चरणं लक्षजपः। तथा च।

"पीताम्बरधरो भूत्वा पूर्व्वाशाभिमुखस्थितः।

लक्षमेकं जपेन्मन्त्रं हरिद्राग्रन्थिमालया॥

ब्रह्मचर्य्यरतो नित्यं प्रयतो ध्यानतत्परः।

प्रियङ्गुकुसुमेनापि पीतपुष्पेण होमयेत्॥"*॥

द्वितीयमन्त्रस्य तु न्यासादिकं सर्व्वं पूर्व्ववत्। ध्यानन्तु।

"गम्भीराञ्च मदोन्मत्तां स्वर्णकान्तिसमप्रभाम्।

चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम्॥

मुद्गरं दक्षिणे पाशं वामे जिह्वाञ्च वज्रकम्।

पीताम्बरधरां देवीं दृढपीनपयोधराम्।

हेमकुण्डलभूषाञ्च स्वर्णसिंहासनस्थिताम्॥"*॥

अथ प्रयोगः।

"कुरुते यामिनीस्तम्भं दुष्टानां बुद्धिनाशनम्।

जपहोमप्रयोगे च मन्त्रं चाप्ययुतं जपेत्॥

हरिद्राहरितालाभ्यां लवणं जुहुयान्निशि।

स्तम्भयेत् परसैन्यानि नात्र कार्य्या विचारणा॥

अथवा पीतपुष्पैश्च त्रिमध्वक्तैश्च होमयेत्।

स्तम्भनेषु च सर्व्वेषु प्रयोगः प्रत्ययावहः॥"*॥

यन्त्रम्।

"ॐकारयोः संमुखयोरूर्द्ध्वाधःशिरसोर्लिखेत्।

मध्यगं नाम साध्यस्य तद्वाह्ये चाक्षरद्वयम्॥

वीजं द्वितीयवर्गस्य तृतीयं विन्दुभूषितम्।

चतुर्द्दशस्वरोपेतं संलिखेत् पृथिवीगतम्॥

ठकारेण समावेष्ट्य चतुष्कोणपुटं वहिः।

तत्कोणरेखासंसक्तैः शूलैरष्टाष्टकं लिखेत्॥

त्रिशूलमध्यरेखायाः पृष्ठे वीजानि पार्श्वयोः।

अष्टस्वपि च कोणेषु तद्दिक्षु वगलां लिखेत्॥

पृथिव्यन्तरितं वाह्ये मातृकापरिमण्डलम्।

आवेष्ट्य चाष्टधा पश्चात्तद्वाह्ये स्थिरमायया॥

निर्द्धाङ्कुशवीजेन मायासंमिलिताङ्घ्रिणा।

लिखेत् पूर्व्ववदावेष्ट्य पश्चाच्च वगलामुखीम्॥

मङ्गे पाषाणपट्टे वा हरिद्राक्षततालकैः।

द्विरक्षं मुखसप्ते लिखित्वा गाढमाक्रमेत्॥

विवादे समरमालिख्य भूर्ज्जे तैरेव वस्तुभिः।

कुम्भकारस्य चक्रस्य भ्रमतो विपरीततः॥

ज्वलिता वसुधाराय यवभं कारयेत्ततः ।
कलं तस्योपरि न्यस्य तालकेन विलिप्य च ॥
तन्मायायां विनिःक्षिप्य पीतरज्जुं निधे सुधी ।
अर्चयेत् चतुष्कालं नित्यं पीतोपचारतः ।
दुष्टस्य स्तम्भयत्येव मुखं वाचस्पतेरपि ॥”

इति वगलापरिच्छेदः ॥ * ॥

विश्वसारे ।

“काली तारा महाविद्या षोडशी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥
बगला सिद्धविद्या च मातङ्गी कमलात्मिका ।
एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः ॥”

अथ बगलामुखीस्तोत्रम् ।

“मध्ये सुधाब्धिमणिमण्डपरत्नवेदी-
सिंहासनोपरिगतां परिपीतवर्णाम् ।
पीताम्बराभरणमाल्यविभूषिताङ्गीं
देवीं भजामि धृतमुद्गरवैरिजिह्वाम् ॥
जिह्वाग्रमादाय करेण देवीं
वामेन शत्रून् परिपीडयन्तीम् ।
गदाभिघातेन च दक्षिणेन
पीताम्बराढ्यां द्विभुजां भजामि ॥
चलत्कनककुण्डलोल्लसितचारुगण्डस्थलीं
लसत्कनकचम्पकद्युतिमदिन्दुबिम्बाननाम् ।
गदाहतविपक्षकां कलितलोलजिह्वाञ्चलां
स्मरामि बगलामुखीं विमुखवाङ्मनःस्तम्भिनीम् ॥
पीयूषोदधिमध्यचारुविलसद्रक्तोत्पले मण्डपे
सत्सिंहासनमौलिपातितरिपुप्रेतासनाध्यासि-
नीम् ।
स्वर्णाभां करपीडितारिरसनां भ्राम्यद्गदां वि-
भ्रमा-
मित्थं ध्यायति यान्ति तस्य विलयं सद्योऽथ
सर्व्वापदः ॥
देवि त्वच्चरणाम्बुजार्च्चनकृते यः पीतपुष्पाञ्जलीन्
भक्त्या वामकरे निधाय च मनुं मन्त्री मनो-
ज्ञाक्षरम् ।
पीठध्यानपरोऽथ कुम्भकवशात् बीजं स्मरेत्
पार्थिवं
तस्यामित्रमुखस्य वाचि हृदये जाड्यं भवेत्
तत्क्षणात् ॥
वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः
शीतति
क्रोधी शाम्यति दुर्ज्जनः सुजनति क्षिप्रानुगः
खञ्जति ।
गर्व्वी खर्व्वति सर्व्वविच्च जडति त्वन्मन्त्रिणा-
यन्त्रितः
श्रीनित्ये बगलामुखि प्रतिदिनं कल्याणि तुभ्यं
नमः ॥
मन्त्रस्तावदलं विपक्षदलने स्तोत्रं पवित्रञ्च ते
यन्त्रं वादिनियन्त्रणं त्रिजगतां जैत्रञ्च चित्रञ्च
न ते ।
मातः श्रीबगलेति नाम ललितं यस्यास्ति
जन्तोर्मुखे

त्वन्नामग्रहणेन संसदि मुखस्तम्भो भवेद्-
वादिनाम् ॥
दुष्टस्तम्भनमुग्रविघ्नशमनं दारिद्र्यविद्रावणं
भूभृद्भीशमनं चलन्मृगदृशां चेतःसमाकर्षणम् ।
सौभाग्यैकनिकेतनं मम दृशोः कारुण्यपूर्णामृतं
मृत्योर्मारणमाविरस्तु पुरतो मातस्त्वदीयं वपुः ॥
मातर्भञ्जय मे विपक्षवदनं जिह्वाञ्चलां कीलय
ब्राह्मीं मुद्रय नाशयाशु धिषणामुग्रां गतिं
स्तम्भय ।
शत्रूंश्चूर्णय देवि तीक्ष्णगदया गौराङ्गि
पीताम्बरे
विघ्नौघं बगले हर प्रणमतां कारुण्यपूर्णेक्षणे ॥
मातर्भैरवि भद्रकालि विजये वाराहि विश्वा-
श्रये
श्रीविद्ये समये महेशि बगले कामेशि रामे रमे ।
मातङ्गि त्रिपुरे परात्परतरे स्वर्गापवर्गप्रदे
दासोऽहं शरणागतः करुणया विश्वेश्वरि
त्राहि माम् ॥
संरम्भे चौरसङ्घे प्रहरणसमये बन्धने व्याधिमध्ये
विद्यावादे विवादे प्रकुपितनृपतौ दिव्यकाले
निशायाम् ।
वश्ये वा स्तम्भने वा रिपुवधसमये निर्ज्जने वा
वने वा
गच्छंस्तिष्ठंस्त्रिकालं यदि पठति शिवं प्राप्नुया-
दाशु धीरः ॥
नित्यं स्तोत्रमिदं पवित्रमिह यो देव्याः
पठत्यादरा-
द्धृत्वा यन्त्रमिदं तथैव समरे बाहौ करे वा
गले ।
राजानोऽप्यरयो मदान्धकरिणः सर्पा मृगेन्द्रा-
दिका-
स्ते वै यान्ति विमोहिता रिपुगणा लक्ष्मीः
स्थिराः सिद्धयः ॥
त्वं विद्या परमा त्रिलोकजननी विघ्नौघ-
संछेदिनी
योषाकर्षणकारिणी जनमनःसम्मोहसन्दायिनी ।
स्तम्भोत्सारणकारिणी पशुमनःसम्मोहसंदायिनी
जिह्वाकीलनभैरवी विजयते ब्रह्मादिमन्त्रो यथा ॥
विद्या लक्ष्मीः सर्व्वसौभाग्यमायुः
पुत्त्रैः पौत्त्रैः सर्व्वसाम्राज्यसिद्धिः ।
मानं भोगो वश्यमारोग्यसौख्यं
प्राप्तं तत्तद्भूतलेऽस्मिन् नरेण ॥
यत् कृतं जपसन्नाहं गदितं परमेश्वरि ।
दुष्टानां निग्रहार्थाय तद्गृहाण नमोऽस्तु ते ॥
ब्रह्मास्त्रमिति विख्यातं त्रिषु लोकेषु विश्रुतम् ।
गुरुभक्ताय दातव्यं न देयं यस्य कस्यचित् ॥
पीताम्बरां द्विभुजाञ्च त्रिनेत्रां गात्रकोमलाम् ।
शिलामुद्गरहस्ताञ्च स्मरेत्तां बगलामुखीम् ॥
प्रातर्मध्याह्नकाले स्तवपठनमिदं कार्य्यसिद्धिप्रदं
स्यात् ॥”

इति रुद्रयामले बगलामुखीस्तोत्रं समाप्तम् ।
इति तन्त्राणञ्चागमतत्त्वसारः ॥

वगाहः, पुं, ( अव + गाह + भावे घञ् । अलोपः ।) अवगाहः । इति मुग्धबोधव्याकरणं भरतश्च ॥

वग्नुः, पुं, (वक्ति इति । वच् + “वचेर्गश्च ।” उणा० ३ । ३३ । इति नुः गश्चान्तादेशः । ) वक्ता । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ वावदूकः । इति संक्षिप्तसारोणादिवृत्तिः ॥ ( शब्दः । यथा, ऋग्वेदे । ७ । १०३ । २ ।
“गवामह न मायुर्वत्सिनीनां
मण्डूकानां वग्नुरत्रा समेति ॥”
“मण्डूकानां वग्नुः शब्दः समेति सङ्गच्छते ॥”
इति तद्भाष्ये सायणः ॥ )

वघ, इ ङ गतिनिन्दारम्भजवेषु । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-सक०-जवे अक० च-सेट् । ) इ, वंघ्यते । ङ, वंघते । जवे एव केचित् पठन्ति । इति दुर्गादासः ॥

वङ्कः, पुं, (वङ्कतीति । वङ्क + अच् । ) नदीवक्रम् । इत्यमरटीकायां भरतः ॥

वङ्का, स्त्री, ( वङ्क + टाप् ।) पल्याणभागः । तत्पर्य्यायः । पल्ययनम् २ । इति त्रिकाण्डशेषः ॥

वङ्किलः, पुं, ( वङ्कति इति । वङ्क + इलच् । ) कण्टकः । इति त्रिकाण्डशेषः ॥

वङ्क्यः, त्रि, ( वञ्च् + ण्यत् । “वञ्चेर्गतौ ।” ७ । ३ । ६३ । इति अगत्यर्थे कुत्वञ्च । ) वक्रम् । यथा, वङ्क्यं काष्ठम् । इति मुग्धबोधव्याकरणम् ॥

वङ्क्रि, स्त्री, ( वङ्कते इति । वकि कौटिल्ये + “वङ्क्र्यादयश्च ।” उणा० ४ । ६६ । इति क्रिन्प्रत्ययेन निपातितम् ।) पार्श्वास्थि । तत्पर्य्यायः । पर्शुकम् २ । इति हेमचन्द्रः । ३ । २८९ ॥

वङ्क्रिः, पुं, स्त्री, ( वङ्कते इति । वकि कौटिल्ये + “वङ्क्र्यादयश्च ।” उणा० ४ । ६६ । इति क्रिन्प्रत्ययेन निपात्यते । ) वाद्यभेदः । इत्युणादिकोषः । गृहदारु । पार्श्वास्थि । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

वङ्क्षणः, पुं, ( वक्षति संहतो भवतीति । वक्ष + ल्युः । पृषोदरादित्वात् नुम् । ) ऊरुसन्धिः । इत्यमरः । २ । ६ । ७३ ॥ कुँचकी इति भाषा ॥ (यथा, सुश्रुते शारीरस्थाने ५ अध्याये ।
“चतुर्द्दशास्थ्नां संघाताः । तेषां त्रयो गुल्फजानुवङ्क्षणेषु ॥” )

वङ्क्षुः, स्त्री, ( वहतीति । वह + बाहुलकात् क्सुः । नुम् च । ) गङ्गाशाखानदीविशेषः । यथा,—
“तस्याः स्रोतसि सीता च वङ्क्षुभद्रा च
कीर्त्तिता ॥”
सा च केतुमालवर्षस्था गङ्गा । यथा । एवं माल्यवच्छिखरान्निष्पतन्ती ततः उपरतवेगा केतुमालमभिचक्षुः प्रतीच्यां दिशि सरित्पतिं प्रविशति । इति श्रीभागवते ५ स्कन्धे १७ अध्यायः ॥ (यथा च महाभारते । १३ । १६५ । २२ ।
“गोदावरी च वेण्णा च कावेरी तथा दिशा ।
इक्षुमती च कावेरी वङ्क्षुर्मन्दाकिनी तथा ॥”)

वङ्गं, क्ली, (वङ्गतीति । वगि गतौ + अच् ।) धातुविशेषः । राँ इति भाषा ॥ तत्पर्य्यायः । त्रपु २ स्वर्णजम् ३ नागजीवनम् ४ चक्रकम् ५ रङ्गम् ६ गुरुपत्रम् ७ पिच्चटम् ८ चक्रसंज्ञम् ९ तमरम् १० नागजम् ११ कस्तीरम् १२ आलीनकम् १३ सिंहलम् १४ । इति हेमचन्द्रः । ४ । १०८ ॥ स्वर्णजम् १५ नागम् १६ अपु १७ । इति शब्दरत्नावली ॥ अस्य गुणाः । तिक्तत्वम् । मधुरत्वम् । मेहित्वम् । पाण्डुत्वम् । लमिवातनाशित्वम् । तीक्ष्णत्वम् । किञ्चित्पित्तकारित्वञ्च । इति राजवल्लभः ॥ (अथ वङ्गस्य नामलक्षणगुणाः ।
"रङ्गवङ्गं त्रपु प्रोक्तं तथा पिच्चटमित्यपि ।
खुरकं मिश्रकञ्चापि द्विविधं वङ्गमुच्यते ॥
उत्तमं खुरकं तत्र मिश्रकन्त्ववरं मतम् ।
रङ्गं लघु सरं रूक्षमुष्णं मेहकफक्रिमीन् ॥
निहन्ति पाण्डुं सश्वासं चक्षुष्यं पित्तलं मनाक् ।
सिंहो यथा हस्तिगणं निहन्ति
तथैव वङ्गोऽखिलमेहवर्गम् ।
देहस्य सौख्यं प्रबलेन्द्रियत्वं
नरस्य पुष्टिं विदधाति नूनम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
अस्य शोधनमारणविधिर्यथा,—
"वङ्गं चूर्णोदके क्षिप्तं यामार्द्धेन विशुध्यति ॥"
इति वङ्गशुद्धिः ॥
"वङ्गं सतालमर्कस्य पिष्ट्वा दुग्धेन संपुटेत् ।
शुष्काश्वत्थभवैर्वह्नेः समधा भस्मतां नयेत् ॥"
मतान्तरम् ।
"वङ्गं खर्परके लत्वा चुल्ल्यां संस्थापयेत् सुधीः ।
द्रवीभूते पुनस्तस्मिन् चूर्णान्येतानि दापयेत् ॥
प्रथमं रजनीचूर्णं द्वितीये च यमानिका ।
तृतीये जीरकञ्चैव ततश्चिञ्चात्वगुद्भवम् ॥
अश्वत्थवल्कलोत्थञ्च चूर्णं तत्र विनिःक्षिपेत् ।
एवं विधानतो वङ्गं म्रियते नात्र संशयः ॥
वङ्गं तिक्ताम्लकं रूक्षं किञ्चिद्वातप्रकोपनम् ।
मेदःश्लेष्मामयघ्नञ्च क्रिमिघ्नं मेहनाशनम् ॥"
इति वङ्गमारणम् । इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधिकारे ॥) अन्यद्रङ्गशब्दे द्रष्टव्यम् ॥ * ॥ सीसकम् । देशविशेषे पुं भूम्नि । इति मेदिनी । गे, २२ ॥ (एकवचनान्तोऽपि । यथा, महाभारते । १ । १०४ । ५० ।
"अङ्गस्याङ्गो भवेद्देशो वङ्गो वङ्गस्य च
स्मृतः ॥")
स तु प्राचीदेशान्तर्गतदेशविशेषः । यथा,—
"अङ्गवङ्गा मद्गुरका अन्तर्गिरिबहिर्गिराः ॥"
इत्युपक्रम्य ।
"प्राच्या मागधगोनर्द्दाः प्राच्यां जनपदाः
स्मृताः ॥"
इत्यन्तं मत्स्यपुराणवचनम् ॥
मतान्तरं यथा,—
"आग्नेय्यामङ्गवङ्गोपवङ्गत्रिपुरकोशलाः ।
कलिङ्गौड्रान्ध्रकिष्किन्ध्याविदर्भशबराश्रयः ॥"
इति ज्योतिस्तत्त्वधृतकूर्म्मचक्रवचनम् ॥
तस्य सीमा यथा,—
"रत्नाकरं समारभ्य ब्रह्मपुत्रान्तगं शिवे ! ।
वङ्गदेशो मया प्रोक्तः सर्व्वसिद्धिप्रदर्शकः ॥"
इति शक्तिसङ्गमतन्त्रे ७ पटलः ॥
वङ्गः, पुं, चन्द्रवंशीयबलिराजपुत्रः । यथा,—
"बलेः सुतपसो जज्ञे अङ्गवङ्गकलिङ्गकाः ।
सुह्मपौण्ड्राश्च बालेया अनपानस्तथाङ्गतः ॥"
इति गारुडे १४४ अध्यायः ॥ * ॥
(स च वङ्गो दीर्घतमस औरसो बलेः क्षेत्रजश्च । यथा, महाभारते । १ । १०४ । ४७-५१ ।
"ततः प्रसादयामास पुनस्तमृषिसत्तमम् ।
बलिः सुदेष्णां भार्य्यां स्वां तस्मै तां प्राहिणोत्
पुनः ॥
तां स दीर्घतमाङ्गेषु स्पृष्ट्वा देवीमथाब्रवीत् ।
भविष्यन्ति कुमारास्ते तेजसादित्यवर्च्चसः ॥
अङ्गो वङ्गः कलिङ्गश्च पुण्ड्रः सुह्मश्च ते सुताः ।
तेषां देशाः समाख्याताः स्वनामकथिता भुवि ॥
अङ्गस्याङ्गो भवेद्देशो वङ्गो वङ्गस्य च स्मृतः ।
कलिङ्गविषयश्चैव कलिङ्गस्य च स स्मृतः ॥
पुण्ड्रस्य पुण्ड्राः प्रख्याताः सुह्माः सुह्मस्य च
स्मृताः ।
एवं बलेः पुरा वंशः प्रख्यातो वै महर्षिजः ॥")
वार्त्ताकुः । कार्पासः । इति मेदिनी । गे, २५ ॥
वङ्गजं, क्ली, (वङ्गात् धातुविशेषात् जायते इति । जन् + डः ।) सिन्दूरम् । इति रत्नमाला ॥ वङ्गदेशजाते, त्रि ॥
वङ्गनः, पुं, (वङ्गतीति । वगि + ल्युः ।) वार्त्ताकुः । इति शब्दरत्नावली ॥ वेगुन इति भाषा ॥ (गुणादयोऽस्य वार्त्ताकुशब्दे ज्ञातव्याः ॥)
वङ्गला, स्त्री, रागिणीविशेषः । इति हलायुधः ॥ वङ्गालीति च नामान्तरम् ॥
वङ्गशुल्वजं, क्ली, (वङ्गशुल्वाभ्यां रङ्गताम्राभ्यां जायते इति । जन + डः ।) कांस्यम् । इति हेमचन्द्रः । ४ । ११५ ॥
वङ्गसेनः, पुं, बकवृक्षः । यथा,—
"वङ्गसेनस्तामलिप्तः शुकनाशो मुनिद्रुमः ।
अगस्तिः कुमली ॥" इति त्रिकाण्डशेषः ॥
वङ्गसेनकः, पुं, (वङ्गसेन + स्वार्थे कन् ।) बकवृक्षः ।
यथा, —
"रक्तपुष्पो मुनितरुरगस्तिर्वङ्गसेनकः ॥"
इति रत्नमाला ॥
अस्य पुष्पगुणाः ।
"वासकस्य च पुष्पाणि वङ्गसेनस्य चैव हि ।
कटुपाकानि तिक्तानि कासक्षयकराणि च ॥"
इति राजवल्लभः ॥
वङ्गारिः, पुं, (वङ्गस्य रङ्गधातोररिः । अस्य वङ्गधातुजारकत्वात् तथात्वम् ।) हरितालम् । इति हेमचन्द्रः ॥
वङ्गालः, पुं, भैरवरागस्य पुत्त्रः । यथा,—
"वङ्गालः पञ्चमः षष्ठो मधुरो हर्षकस्तथा ।
देशाख्यो माधवः विभुर्भैरवपुत्राः प्रकीर्त्तिताः ॥"
अस्य ध्यानम् ।
"कच्छानिवेशितकरः कवरत्नपाणि
भास्वत्त्रिशूलधरिमण्डितवामहस्तः ।
भस्मोज्ज्वलो निविडबद्धजटाकलापो
वङ्गाल इत्यभिहितस्तरुणार्कवर्णः ॥
वाड्वो देववङ्गालो षड्जांशन्यासमध्यमः ।
प्रश्रवे विनियोक्तव्यः प्रोक्तोऽयं मुनिना स्वयम् ॥"
इति सङ्गीतरत्नाकरः ॥
वङ्गाली, स्त्री, भैरवरागस्य रागिणी । यथा,—
"भैरवी कौशिकी चैव भाषा वेलावली तथा ।
वङ्गाली चेति रागिण्यो भैरवस्यैव वल्लभाः ॥"
इति सङ्गीतदामोदरः ॥
अस्या मूर्त्तिः ।
"मनोज्ञमुक्तागुणभूषिताङ्गी
मुर्द्ध्ना दधाना धरणीधरस्या ।
प्रांशुः कुमारी कमनीयमूर्त्ति-
र्वङ्गालिकेयं सुचिताङ्गगीता ॥"
इति सङ्गीतरत्नाकरः ॥
"वङ्गाली औडवा ज्ञेया षड्जांशन्यासषड्जभाक् ।
ऋषभहीना च विज्ञेया मूर्च्छना प्रथमा मता ।
पूर्णा वा मध्यमोपेता कल्लिनाथेन भाषिता ॥"
इति सङ्गीतदर्पणम् ॥
वच, औ वाचि । सन्देशे । इति कविकल्पद्रुमः ॥ (अदा०-पर०-सक०-अनिट् ।) औ, वक्ता । अयं सेम् (सेट्) इत्येके । न वचत्यप्रियं वचः । इति हलायुधः । इति दुर्गादासः ॥
वच, क सन्देशे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) सन्देशो वचनविशेषः । क, वाचयत्यखिलां लिपिमिति हलायुधः । इति दुर्गादासः ॥
वच, ल औ वाचि । इति कविकल्पद्रुमः ॥ (अदा०-पर०-द्विक०-सेट् ।) ल, वक्ति । औ, वक्ता । अस्मादन्तिविभक्तिर्न प्रयोज्या । इत्यालङ्कारिकाः । इति दुर्गादासः ॥ (यथा,—
"बधिरान्मन्दकर्णाद्भिः प्रयोगो नाभिधीयते ।
अयतमोऽस्ति पचत्या उत्तमः पुरुषः क्वचित् ॥"
इति वसुवल्लतम ॥)
वचः, पुं, (वक्तीति । वच् + अच् ।) शुकपक्षी । इति मेदिनी । चे, ६ ॥
वचः, [स्] क्ली, (उच्यते इति । वच् + "सर्व्वधातुभ्योऽसुन् ।" उणा० ४ । १८८ । इत्यसुन् ।) वाक्यम् । इत्यमरः । १ । ६ । १ ॥ (यथा, रघौ । २ । ४१ ।
"इति प्रगल्भं पुरुषाधिराजो
मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावा-
दात्मन्यवज्ञां शिथिलीचकार ॥")
वचक्नुः, पुं, (वक्तीति । वच् + "वचिभ्योऽस्त्वभ्यासश्च क्नुच् ।" उणा० ३ । ८१ । इति क्नुच् ।) ब्राह्मणः । इति मेदिनी । ने, १२० ॥

वचक्नुः, त्रि, (वक्तीति । वच् + “ग्रसुवचिभ्यः इति ।” उणा० ३ । ८१ । इत्यक्नुः ।) वावदूकः । इति मेदिनी । नै, १२७ ।

वचक्नी, स्त्री, ब्राह्मिका । यतिः । शब्दभेदः । इति शब्दरत्नावली ॥ मेदिन्यां वचक्ना इति वरक्ना इति च पाठः ॥

वचनं, क्ली, (उच्यतेऽनेनेति । भावनाप्रकरणादस्य नबाध्यम् । वच् + ल्युट् ।) शुण्ठी । इति शब्दचन्द्रिका ॥ वाक्यम् । तत्पर्य्यायः ।
“इरा सरस्वती ब्राह्मी भाषा वाणी च शारदा ।
गिरा गीश्च गिरो देवी गीर्देवी भारती-
श्वरी ॥
वाग्वाणी वचनामोघा वाग्देवी वर्णमातृका ।
वचनं भाषितं चोक्तिर्व्याहारो लपितं वचः ॥
वाग्देवीवक्त्रयोरेव पर्य्यायः परिकीर्त्तितः ।
यथाख्यानं यथायोग्यं भेद उक्तो मनीषिभिः ॥”
इति शब्दरत्नावली ॥ * ॥
(यथा, हितोपदेशे ।
“अविदितपरदारमहरविरहणम् ।
अनुकूलीववचनं धन्यं कस्यापि जीवनम् ॥”)
तत्तु त्रिविधम् । यथा,—
वशिष्ठ उवाच ।
“वचनं त्रिविधं प्रोक्तं लौकिकं वैदिकं तथा ।
सर्व्वं जानाति शास्त्रज्ञो निर्म्मलज्ञानचक्षुषा ॥
असत्यमहितं पश्चात् साम्प्रतं श्रुतिसुन्दरम् ।
सुबुद्धिस्तद्वदति नहि तेषां कदाचन ॥
आःपदः प्रीतिजनकं परिणामसुखावहम् ।
दयालुर्धर्म्मशीलश्च बोधयत्येव बान्धवम् ॥
श्रुतिमात्रात् सुधातुल्यं सर्व्वकाले सुखावहम् ।
सत्यं सारं हितकरं वचनं श्रेष्ठमीप्सितम् ॥
एवं च त्रिविधं प्रोक्तं नीतिशास्त्रनिरूपितम् ।
कथयतां विप्रमध्ये किं वदामि वाक्यमीप्सि-
तम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४१ अध्यायः ॥
विभक्तिः । सा तु स्यादिस्त्यादिश्च । यथा ।
“त्रिरेकैकं वचनं क्रमात् बहुत्वसंज्ञं स्यात् ।” इति मुग्धबोधव्याकरणम् ॥ तद्वैदिकपर्य्यायः । श्लोकः १ धारा २ इळा ३ गौः ४ गौरी ५ गान्धर्व्वी ६ गभीरा ७ गम्भीरा ८ मन्द्रा ९ मन्द्राजनी १० वाशी ११ वाणी १२ वाणीची १३ वाणः १४ पविः १५ भारती १६ धमनिः १७ नाळी. १८ मेना १९ मेळिः २० सूर्य्या २१ सरस्वती २२ निवित् २३ स्वाहा २४ वग्नुः २५ उपब्दिः २६ मायुः २७ काकुत् २८ जिह्वा २९ घोषः ३० स्वरः ३१ शब्दः ३२ स्वनः ३३ ऋक् ३४ होत्रा ३५ गीः ३६ गाथा ३७ गणः ३८ धेना ३९ ग्नाः ४० विपा ४१ नना ४२ कशा ४३ धिषणा ४४ नौः ४५ अक्षरम् ४६ मही ४७ अदितिः ४८ शची ४९ वाक् ५० अनुष्टुप् ५१ धेनुः ५२ वल्गुः ५३ गल्दा ५४ सरः ५५ सुपर्णी ५६ बेकुरा ५७ । इति सप्तपञ्चाशत् वाङ्नामानि । इति वेदनिघण्टौ । १ । ११ ॥

वचनग्राही [न्], त्रि, (वचनं गृह्णातीति । ग्रह + णिनिः ।) वचने स्थितः । इत्यमरटीकायां रमानाथः ॥

वचनीयः, त्रि, (वच् + अनीयर् ।) कथनीयः । इति वचधातोः कर्म्मणि अनीयप्रत्ययेन निष्पन्नः ॥ (निन्दायां, क्ली । यथा, कुमारे । ४ । २१ ।
“मदनेन विना कृता रतिः
क्षणमात्रं किल जीवितेति मे ।
वचनीयमिदं व्यवस्थितं
रमण ! त्वामनुयामि यद्यपि ॥”
“इति वचनीयं निन्दा मे मम व्यवस्थितम् ॥” इति तट्टीकायां मल्लिनाथः ॥)

वचनीयता, स्त्री, (वचनीयस्य भावः । वचनीय + तल् ।) लोकापवादः । यथा,—
“जनप्रवादः कौलीनं विगानं वचनीयता ॥”
इति हेमचन्द्रः । २ । १८४ ॥
(तथा, मृच्छकटिकनाटके तृतीयाङ्के ।
“कामं नीचमिदं वदन्तु पुरुषाः स्वप्ने च
यद्वर्द्धते
विश्वस्तेषु च वञ्चनापरिभवश्चौर्य्यं न शौर्य्यं
हि तत् ।
स्वाधीना वचनीयतापि हि वरं बद्धो न
सेवाञ्जलि-
र्मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्व्वं कृतो
द्रौणिना ॥”)

वचनेस्थितः, त्रि, (वचने तिष्ठति स्मेति । स्था + “गत्यर्थेति ।” ३।४।७२ । इति क्तः । “तत्पुरुषे कृति बहुलम् ।” ६।३।१४। इति सप्तम्या अलुक् ।) वचने तिष्ठति यः । वचनस्थः । तत्पर्य्यायः । विधेयः २ विनयग्राही ३ आश्रवः ४ । इत्यमरः । ३ । १ । २४ ॥ वश्यः ५ प्रणेयः ६ । इति केचिदिति भरतः ॥

वचनोपक्रमः, पुं, (वचनस्य उपक्रमः ।) वाक्यारम्भः । इति भरतशब्दरत्नावल्यौ ॥ तत्पर्य्यायः । उपन्यासः २ वाङ्मुखम् ३ । इत्यमरः ॥

वचरः, पुं, (अवान्तरे चरतीति । अव + चर + अच् । अल्लोपः ।) कुक्कुटः । शठः । इति मेदिनी ॥

वचसुः, पुं, प्राज्ञः । यथा,—
“पुंसि मनुः सुप्रणुश्च वचसुर्बालसुस्तथा ।
भरणुश्च शरणुः स्यादमिन्ने त्विणिरित्यपि ॥”
इति शब्दमाला ॥

वचसाम्पतिः, पुं, (वचसां वाचां पतिः ।) बृहस्पतिः । यथा,—
“जीवोऽङ्गिराः सुरगुरुर्व्वचसाम्पतीज्यौ ।”
इति दीपिका ॥

वचस्करः, त्रि, (करोतीति । कृ + अच् । वचसः करः ।) वचने स्थितः । इति केचित् ॥

वचा, स्त्री, (वाचयतीति । वच् + णिच् + अच् । निपातनात् ह्रस्वः । यद्वा, अन्तर्भावितण्यर्थात् वचः अच् ।) औषधविशेषः । वच् इति भाषा । तत्पर्य्यायः । उग्रगन्धा २ षड्ग्रन्था ३ गोलोमी ४ शतपर्व्विका ५ । इत्यमरः । २ । ४ । १०२ ॥ तीक्ष्णा ६ जटिला ७ मङ्गल्या ८ विजया ९ उग्रा १० रक्षोघ्नी ११ । इति रत्नमाला ॥ वच्या १२ लोमशा १३ । इति जटाधरः ॥ भद्रा १४ । अस्या गुणाः । अतितीक्ष्णत्वम् । कटुत्वम् । उष्णत्वम् । कफामग्रन्थिशोथवातज्वरातिसारनाशित्वम् । वान्तिकारित्वञ्च । इति राजनिर्घण्टः ॥ * ॥ अपि च ।
“वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्व्विका ।
क्षुद्रपत्री च मङ्गल्या जटिलोग्रा च लोमशा ॥
वचोग्रगन्धा कटुका तिक्तोष्णा वान्तिवह्निकृत् ।
विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी ॥
अपस्मारकफोन्मादभूतजन्त्वनिलान् हरेत् ॥”
अथ खुरासानी वचा ।
“पारसीकवचा शुक्ला प्रोक्ता हैमवतीति सा ।
हैमवत्युदिता तद्वत् भूतं हन्ति विशेषतः ॥”
अथ महाभरी वचा । यस्या लोके कुलीजन इति नामान्तरम् ।
“सुगन्धाप्युग्रगन्धा च विशेषात् कफकासनुत् ।
सुस्वरत्वकरी रुच्या हृत्कण्ठमुखशोधिनी ॥”
अपरा सुगन्धा स्थूलग्रन्थिर्यस्या लोके महाभरा इति नाम ।
“स्थूलग्रन्थिः सुगन्धान्या ततो हीनगुणा स्मृता ॥”
अथ चोपचीनीति लोके प्रसिद्धा । तस्या गुणाः ।
“द्वीपान्तरवचा किञ्चित् तिक्तोष्णा वह्निदीप्तिकृत् ।
विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी ॥
वातव्याधीनपस्मारमुन्मादं तनुवेदनाम् ।
व्यपोहति विशेषेण फिरङ्गामयनाशिनी ॥”
इति भावप्रकाशः ॥ * ॥
अपरञ्च ।
“वचायुग्मा वातकफघ्नाग्नी स्मृतिवर्द्धिनी ॥”
इति राजवल्लभः ॥ * ॥
अन्यच्च ।
“अक्षिर्व्वा पयसाज्येन मासमेकन्तु सेविता ।
वचा कुर्य्यान्नरं प्राज्ञं श्रुतिधारणसंयुतम् ॥
चन्द्रसूर्य्यग्रहे पीतं पलमेकं पयोऽन्वितम् ।
वचायास्तत्क्षणं कुर्य्यान्महाप्रज्ञान्वितं नरम् ॥”
इति गारुडे १९८ अध्यायः ॥

वचोग्रहः, पुं, (गृह्णातीति । ग्रह + अच् । वचसां ग्रहः ।) कर्णः । इति राजनिर्घण्टः ॥

वज, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) वजति । इति दुर्गादासः ॥

वज, क संस्कृतौ । गतौ । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) अयं मार्गणसंस्कारे इति प्राञ्चः । मार्गणस्य शरस्य पश्चादिना संस्कारो मार्गणसंस्कारः । क, वाजयति मार्गणं काण्डकारः । इति रमानाथः ॥ मार्गणसंस्कारयोरिति कश्चित् । इति दुर्गादासः ॥

वज्रं, पुं, क्ली, (वजतीति । वज गतौ + “ऋज्रेन्द्राग्रवज्रविप्रेति ।” उणा० २ । २८ । इति रन्प्रत्ययेन निपातितः ।) इन्द्रस्यास्त्रविशेषः । बाज इति भाषा ॥ तत्पर्य्यायः । ह्लादिनी २ कुलिशम् ३

भिदुरम् ४ पविः ५ शतकोटिः ६ स्वरुः ७ शम्बः ८ दम्भोलिः ९ अशनिः १० । इत्यमरः । १।१।५० ॥ कुलिशम् ११ भिदिरम् १२ भिदुः १३ स्वरुस् १४ सम्बः १५ संवः १६ अशनी १७ वज्राशनिः १८ । इति तट्टीका ॥ जम्भारिः १९ त्रिदशायुधम् २० शतधारम् २१ शतारम् २२ आपोथम् २३ अक्षजम् २४ । इति पुरुषोत्तमः ॥ गिरिकण्टकः २५ गौः २६ अच्छोत्थम् २७ मेघभूतिः २८ गिरिज्वरः २९ । इति शब्दरत्नावली ॥ आम्रविः ३० दम्भः ३१ । इति जटाधरः ॥ भिद्रः ३२ अम्बुजम् ३३ । इति त्रिकाण्डशेषः ॥ ( यथा, ऋग्वेदे ।१।३२।२।

"अहन्नहिं पर्व्वते शिश्रियाणं
त्वष्टास्मै वज्रं स्वर्य्यं ततक्ष ॥")

वज्रोत्पत्तिर्यथा,—

"तथेत्युक्तः स रविणा भ्रमौ कृत्वा दिवाकरम् ।
पृथक् चकार तत्तेजश्चक्रं विष्णोरकल्पयत् ॥
त्रिशूलञ्चापि रुद्रस्य वज्रमिन्द्रस्य चाधिकम् ।
दैत्यदानवसंहर्त्तुः सहस्रकिरणात्मकम् ॥
रूपञ्च प्रतिमञ्चक्रे त्वष्टा पादादृते महत् ।
न शशाकाथ तद्द्रष्टुं पादरूपं रवेः पुनः ॥
अर्च्चास्वपि ततः पादौ न कश्चित् कारयेत् क्वचित् ।
यः करोति स पापिष्ठां गतिमाप्नोति निन्दिताम् ॥
कुष्ठरोगमवाप्नोति लोकेऽस्मिन् दुःखसंयुतम् ।
तस्मान्न धर्म्मकामार्थी चित्रेष्वायतनेषु च ।
न कश्चित् कारयेत् पादौ देवदेवस्य धीमतः ॥"

इति मात्स्ये ११ अध्यायः ॥ * ॥

अपि च ।

"प्रविश्य जठरं शुद्धो दैत्यमातुः पुरन्दरः ।
ददर्शोर्द्ध्वमुखं बालं कटिन्यस्तकरं महत् ॥
तस्यैवास्तेऽथ ददृशे पेशीं मांसस्य वासवः ।
शुद्धस्फाटिकसंकाशां कराभ्यां जगृहेऽथ ताम् ॥
ततः कोपसमाध्मातो मांसपेशीं शतक्रतुः ।
कराभ्याममर्द्दयामास ततः सा कठिनाभवत् ॥
ऊर्द्ध्वमार्द्धञ्च ववृधे अधोऽर्द्धं ववृधे तथा ।
शतपर्व्वा च कुलिशः संजातो मांसपेशितः ॥"

इति वामने ६८ अध्यायः ॥ * ॥

वृत्रासुरवधार्थं दधीचिमुनेरस्थ्ना इन्द्राज्ञया विश्वकर्म्मणा निर्म्मितवज्रस्य प्रमाणं यथा,—

"एवं कृतव्यवसितो दध्यङ्ङाथर्व्वणस्तनुम् ।
परे भगवति ब्रह्मण्यात्मानं सन्नयन् जहौ ॥
यताक्षासुमनोबुद्धिस्तत्त्वदृग्ध्वस्तबन्धनः ।
आस्थितः परमं योगं न देहं बुबुधे गतम् ॥
अथेन्द्रो वज्रमुद्यम्य निर्म्मितं विश्वकर्म्मणा ।
मुनेः शक्तिभिरुत्सिक्तो भगवत्तेजसान्वितः ॥
वृतो देवगणैः सर्व्वैर्गजेन्द्रो पर्य्यशोभत ।
स्तूयमानो मुनिगणैस्त्रैलोक्यं हर्षयन्निव ॥"

इति श्रीभागवते ६ स्कन्धे १० अध्यायः ॥ * ॥

तन्निर्घोषवारकविधिर्यथा,—

"प्रचण्डपवनाघाते मेघेषु स्तनितेषु यः ।
त्रिः पठेज्जैमिनीयोऽस्मि प्राङ्मुखो वाप्युदङ्मुखः ॥
तस्य माभूद्भयं घोरं विद्युतीयोऽब्रवीदिति ॥"

इत्याह्निकतत्त्वधृतब्रह्मपुराणम् ॥

"मुनेः कल्याणमित्रस्य जैमिनेश्चापि कीर्त्तनात् ।
विद्युदग्निभयं नास्ति पठिते च गृहोदरे ॥"

लिखिते च गृहोदरे । इति वा पाठः ।

"जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च ।
पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवारकाः ॥"

इति पुराणम् ॥ * ॥ * ॥

रत्नविशेषः । हीरा इति भाषा । तत्पर्य्यायः । इन्द्रायुधम् २ हीरम् ३ भिदुरम् ४ कुलिशम् ५ पविः ६ अभेद्यम् ७ अशिरम् ८ रत्नम् ९ दृढम् १० भार्गवकम् ११ षट्कोणम् १२ बहुधारम् १३ शतकोटिः १४ । अस्य गुणाः । षड्रसोपेतत्वम् । सर्व्वरोगापहारकत्वम् । सर्व्वाघशमनत्वम् । सौख्यत्वम् । देहदार्ढ्यकरत्वम् । रसायनत्वञ्च । तद्विशेषो यथा,—

"स्वच्छं विद्युत्प्रभं स्निग्धं सौन्दर्य्यं लघु लेखनम् ।
षडास्त्रोच्चधारञ्च सुश्राव्यारं श्रियं दिशेत् ॥"

तस्य कुलक्षणं यथा,—

"भस्माभं काकपादञ्च रेखाक्रान्तञ्च वर्त्तुलम् ।
आधारमलिनं बिन्दुसंत्रासं स्फुटितं तथा ।
नीलाभं चिपिटं रूक्षं वज्रं दोषदं त्यजेत् ॥"

वज्रस्य चातुर्व्वर्ण्यलक्षणं यथा,—

"श्वेतालोहितपीतमेचकतया छायाश्चतस्रः क्रमाद्-
विप्रादित्वमिहास्य यत् सुमनसः शंसन्ति सत्वं ततः ।
स्त्रीणां कीर्त्तिमनुत्तमां श्रियमिदं दत्ते यथा संभृतं
मर्त्यानामयथायथं तु कुलिशं पथ्यं हितं जायते ॥" * ॥

तस्य परीक्षा यथा,—

"यत् पाषाणतले निकाषनिकरे नोद्धृष्यते निष्ठुरे
यच्चान्योपललोहमुद्गरमुखैर्लेखाञ्च यात्याहतम् ।
यच्चान्यं निजलीलयैव दलयेद्वज्रेण वा भिद्यते
तज्जातं कुलिशं वदन्ति कुशलाः श्लाघ्यं महार्घञ्च तत् ॥" * ॥

तस्य वर्णगुणौ यथा,—

"विप्रः सोऽपि रसायनेषु बलवानष्टाङ्गसिद्धिप्रदो
राजन्यस्तु नृणां बलीपलितजिन्मृत्युं जयेरञ्जसा ।
धनाकर्षणसिद्धिदस्तु सततं वैश्योऽथ शूद्रो भवेत्
सर्व्वव्याधिहरस्तदेष कथितो वज्रस्य वर्णो गुणः ॥"

इति राजनिर्घण्टः ॥ * ॥

अपि च ।

अथ वज्रस्य नामलक्षणगुणाः ।

"हीरकः पुंसि वज्रोऽस्त्री चन्द्रो मणिवरश्च सः ।
स तु श्वेतः स्मृतो विप्रो लोहितः क्षत्रियो मतः ।
पीतो वैश्योऽसितः शूद्रश्चतुर्व्वर्णात्मकश्च सः ॥
रसायने मतो विप्रः सर्व्वसिद्धिप्रदायकः ।
क्षत्रियो व्याधिविध्वंसी जरामृत्युहरः परः ॥
वैश्यो धनप्रदः प्रोक्तस्तथा देहस्य दार्ढ्यकृत् ।
शूद्रो नाशयति व्याधीन् वयस्तम्भं करोति च ।
पुंस्त्रीनपुंसकानीति लक्षणीयानि लक्षणैः ॥
सुवृत्ताः फलसंपूर्णास्तेजोयुक्ता बृहत्तराः ।
पुरुषास्ते समाख्याता रेखाबिन्दुविवर्ज्जिताः ॥
रेखाबिन्दुसमायुक्ताः षडस्रास्ते स्त्रियः स्मृताः ॥"

षडस्राः षट्कोणाः ।

"त्रिकोणाश्च सुदीर्घाश्च ते विज्ञेया नपुंसकाः ॥
तेऽपि स्युः पुरुषाः श्रेष्ठा रसबन्धनकारिणः ।
स्त्रियः कुर्व्वन्ति कायस्य कान्तिं स्त्रीणां सुखप्रदाः ॥
नपुंसकास्त्ववीर्य्याः स्युरकामाः सत्त्ववर्ज्जिताः ।
स्त्रियः स्त्रीभ्यः प्रदातव्याः क्लीबं क्लीबे प्रयोजयेत् ।
सर्व्वेभ्यः सर्व्वदा देयाः पुरुषा वीर्य्यवर्द्धनाः ॥
अशुद्धं कुरुते वज्रं कुष्ठं पार्श्वव्यथां तथा ।
पाण्डुतां पङ्गुताञ्च तस्मात् संशोध्य मारयेत् ॥"

मारितस्य वज्रस्य गुणाः ।

"आयुः पुष्टिं बलं वीर्य्यं वर्णं सौख्यं करोति च ।
सेवितं सर्व्वरोगघ्नं मृतं वज्रं न संशयः ॥"

इति भावप्रकाशः ॥

(अथ वज्रमारणम् ।

"त्रिवर्षारूढकार्पासमूलमादाय पेषयेत् ।
त्रिवर्षनागवल्ल्यास्तु निजद्रावैः प्रपेषयेत् ॥
तद्गोलके क्षिपेद्वज्रं रुद्ध्वा गजपुटे पचेत् ।
एवं सप्तपुटैनैव म्रियते कुलिशं ध्रुवम् ॥"

मतान्तरम् ।

"कांस्यपात्रे तु भेकस्य मूत्रे वज्रन्तु निःक्षिपेत् ।
त्रिःसप्तत्वः सन्तप्तं वज्रमेवं मृतं भवेत् ॥"

अथान्यः ।

"त्रिःसप्तत्वः सन्तप्तं खरमूत्रेण सेचयेत् ।
मत्कुणैस्तालकं पिष्ट्वा तद्गोले कुलिशं क्षिपेत् ॥
प्रध्मातं वाजिमूत्रेण सिक्तं पूर्व्वक्रमेण तु ।
भस्मी भवति तद्वज्रं वज्रवत् कुरुते तनुम् ॥
आयुष्यं सौख्यजननं बलरूपप्रदन्तथा ।
रोगघ्नं मृत्युहरं वज्रभस्म भवत्यलम् ॥"

इति वज्रमारणम् । इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधिकारे । * ॥ ) अस्त्रञ्च । अथ वज्रगणना । विष्णुधर्म्मोत्तरे ।

"वज्रं मरकतञ्चैव पद्मरागञ्च मौक्तिकम् ।
इन्द्रनीलं महानीलं वैदूर्य्यं गन्धशस्यकम् ॥
चन्द्रकान्तं सूर्य्यकान्तं स्फाटिकं वालकं तथा ।
कर्केतनं पुष्परागं तथा ज्योतीरसं द्विज ॥
स्फाटिकं राजपट्टञ्च तथा राजमयं शुभम् ।
सौगन्धिकं तथा गञ्जं शङ्खब्रह्ममयं तथा ॥
गोमेदं रुधिराख्यञ्च तथा भल्लातकं द्विज ।
धूलीमरकतञ्चैव तुत्थकं सीसमेव च ॥

पौण्ड्रं प्रवालकञ्चैव गिरिवज्रञ्च भार्गव ।
भुजङ्गमामणिश्चैव तथा वज्रमणिः शुभः ॥
तित्तिरञ्च तथा पीतं भ्रामरञ्च तथोत्पलम् ।
रत्नान्येतानि सर्व्वाणि धार्य्याण्येव महीभृता ॥
सुवर्णप्रतिबद्धानि श्रियारोग्यसम्पदे ॥"
इति युक्तिकल्पतरुः ॥
तस्योत्पत्तिपरीक्षाप्रशस्त्यादि यथा,—
"वज्रमिपरीक्षां रत्नानां बलो नामासुरोऽभवत् ।
इन्द्राद्या निर्ज्जितास्तेन निर्ज्जेतुं तैर्न शक्यते ॥"
इत्युपक्रम्य ।
"महाप्रभावं विबुधैरेकस्यास्थ्नः समुदाहृतम् ।
वज्रपूर्व्वा परीक्षेयं ततोऽस्माभिः प्रकीर्त्यते ॥
तस्यास्थिलेशो निपपात येषु
भुवः प्रदेशेषु कथञ्चिदेव ।
वज्राणि वज्रायुधनिर्जिगीषो-
र्भवन्ति नानाकृतिमन्ति तेषु ॥
हैममातङ्गसौराष्ट्राः पौण्ड्रकालिङ्गकोशलाः ।
वेणातटाः ससौवीरा वज्रस्याष्टाविमाकराः ॥
आताम्रा हिमशैलजाश्च शशिभा वेणातटीयाः स्मृताः
सौवीरे तु सितासमेघसदृशास्ताम्राश्च सौराष्ट्रजाः ।
कालिङ्गाः कनकावदातरुचिराः पीतप्रभाः कोशले
श्यामाः पुण्ड्रभवा मतङ्गविषये नात्यन्तपीतप्रभाः ॥
अत्यर्थं लघु वर्णतश्च गुरुवत् पार्श्वेषु सम्यक् समं
रेखाबिन्दुकलङ्ककाकपदकत्रासादिभिर्वर्जितम् ।
लोकेऽस्मिन् परमाणुमात्रमपि यत् वज्रं क्वचिद् दृश्यते
तस्मिन् देवसमाश्रयो ध्रुवितपक्तीक्ष्णाग्रधारं यदि ॥
वर्णेषु वर्णयुक्त्या देवानामपि परिग्रहः प्रोक्तः ।
वर्णेभ्यश्च विभागः कार्य्यो वर्णाश्रयादेव ॥
हरितसितपीतपिङ्गश्यामाताम्राः स्वभावतो रुचिराः ।
हरिवरुणशक्रहुतवहपितृपतिमरुतां स्वका वर्णाः ॥
विप्रस्य शङ्खकुमुदस्फटिकावदातः
स्यात् क्षत्रियस्य शशबभ्रुविलोचनाभः ।
वैश्यस्य कान्तकदलीदलसन्निकाशः
शूद्रस्य धौतकरवालसमानदीप्तिः ॥
द्वौ वज्रवर्णौ पृथिवीपतीनां
सद्भिः प्रदिष्टौ न तु सार्व्वजन्यौ ।
यः स्याज्जवाविद्रुमभङ्गशोणो
यो वा हरिद्रारससन्निकाशः ॥
ईशत्वात् सर्व्ववर्णानां गुणवत् सार्व्ववर्णिकम् ।
कामतो धारयेद्राजा न त्वन्योऽन्यत् कथञ्चन ॥
अधरोत्तरवृत्त्या हि मात्रक् स्याद्वर्णसङ्करः ।
तत्र कष्टतरो वर्णो वर्णानां सङ्करो मतः ॥

न च सार्व्वविभागमात्रकृता
विदुषा वज्रपरिग्रहो विधेयः ।
गुणवद्गुणसम्पदां विभूति-
र्विपरीतो व्यसनोदयस्य हेतुः ॥
एकमपि यस्य शृङ्गं
विदलितमवलोक्यते विशीर्णं वा ।
गुणवदपि तन्न धार्य्यं
वज्रं श्रेयोऽर्थिभिर्भवने ॥
स्फुटिताग्रविशीर्णशृङ्गदेशं
मलवर्णैः पृषतैरुपेतमध्यम् ।
नहि वज्रभृतोऽपि वज्रमाशु
श्रियमस्याश्रयलालसां न कुर्य्यात् ॥
यस्यैकदेशः क्षतजावभासो
यद्वा भवेल्लोहितवर्णचित्रम् ।
न तत्र कुर्य्याद्धि यमाशमाशु
स्वच्छन्दमृत्योरपि जीवितान्तम् ॥
कोणः पार्श्वानि धाराश्च षडष्टौ द्वादशेति च ।
उत्तुङ्गसमतीक्ष्णाग्रा वज्रस्याकरजा गुणाः ॥
षट्कोटिशुद्धममलं स्फुटतीक्ष्णधारं
वर्णान्वितं लघु सुपार्श्वमपेतदोषम् ।
इन्द्रायुधांशुविसृतिस्फुरितान्तरीक्ष-
मेवंविधं भुवि भवेत् सुलभं न वज्रम् ॥
तीक्ष्णाग्रं विमलमपेतसर्व्वदोषं
धत्ते यः प्रयततनुः सदैव वज्रम् ।
वृद्धिस्तं प्रतिदिनमेति यावदायुः
स्त्रीसम्पत्सुतधनधान्यगोपशूनाम् ॥
व्यालवह्निविषव्याघ्रतस्कराम्बुभयानि च ।
दूरात्तस्य निवर्त्तन्ते कर्म्माण्याथर्व्वणानि च ॥
यदि वज्रमपेतसर्व्वदोषं
बिभृयात्तण्डुलविंशतिं गुरुत्वे ।
मणिशास्त्रविदो वदन्ति तस्य
द्विगुणं रूपकलक्षमग्र्यमूल्यम् ॥
त्रिभागहीनार्द्धतदर्द्धशेषं
त्रयोदशं त्रिंशदतोऽर्द्धभागाः ।
अशीतिभागोऽथ शतांशभागः
सहस्रभागोऽल्पसमानयोगः ॥
यत्तण्डुलैर्द्वादशभिः कृतस्य
वज्रस्य मूल्यं प्रथमं प्रदिष्टम् ।
द्वाभ्यां क्रमाद्धानिमुपागतस्य
त्रिकावसानस्य विनिश्चयोऽयम् ॥
न चापि तण्डुलैरेव वज्राणां धारणक्रमः ।
अष्टाभिः सर्षपैर्गौरैस्तण्डुलं परिकल्पयेत् ॥
यत्तु सर्व्वगुणैर्युक्तं वज्रं तरति वारिणि ।
रत्नवर्गे समस्तेऽपि तस्य धारणमिष्यते ॥
अनेनापि हि दोषेण सुस्थालक्ष्येण दूषितम् ।
स्वमूल्यात् दशमं भागं वज्रं लभति मानवः ॥
प्रकटानेकदोषस्य स्वल्पस्य महतोऽपि वा ।
स्वमूल्याच्छतशो भागो वज्रस्य न विधीयते ॥
स्फुटदोषमलङ्कारे वज्रं यद्यपि दृश्यते ।
रत्नानां परिकर्म्मार्थं मूल्यं तस्य भवेल्लघु ॥
प्रथमं गुणसम्पदाभ्युपेतं
प्रतिबद्धं समुपैति यच्च दोषम् ।

अलमाभरणेन तस्य राज्ञो
गुणहीनोऽपि मणिर्न भूषणाय ॥
नार्य्या वज्रमधार्य्यं गुणवदपि सुतप्रसूतिमिच्छन्त्या ।
अन्यच्च दीर्घचिपिटञ्चास्याद्गुणैर्विसृतात्र ॥
अयसा पुष्परागेण तथा गोमेदकेन च ।
वैदूर्य्यस्फटिकाभ्याञ्च काचैश्चापि पृथग्विधैः ॥
प्रतिरूपाणि कुर्व्वन्ति वज्रस्य कुशला जनाः ।
परीक्षा तेषु कर्त्तव्या विद्वद्भिः सुपरीक्षकैः ॥
क्षारोल्लेखनशाणाभिस्तेषां कार्य्यं परीक्षणम् ।
पृथिव्यां यानि रत्नानि ये चान्ये लोहधातवः ॥
सर्व्वाणि विलिखेद्वज्रं तच्च तैर्न विलिख्यते ।
गुरुता सर्व्वरत्नानां गौरवाधारकारणम् ।
वज्रे तद्वैपरीत्येन सूरयः परिचक्षते ॥
जातिरजातिं विलिखन्ति वज्रकुरुविन्दाः ।
वज्रैर्वज्रं विलिखन्ति नान्येन लिख्यते वज्रम् ।
वज्राणि मुक्ता मणयो ये च केचन जातयः ।
न तेषां प्रतिबद्धानां भा भवत्यूर्द्ध्वगामिनी ॥
तिर्य्यक्क्षतत्वात् केषाञ्चित् कथञ्चिद्यदि दृश्यते ।
तिर्य्यगालोक्यमानानां सा पार्श्वेष्वपि नश्यति ॥
यद्यपि विशीर्णकोटिः
सबिन्दुरेखान्वितो विवर्णो वा ।
तदपि धनधान्यपुत्रान्
करोति सेन्द्रायुधो वज्रः ।
सौदामिनीविस्फुरिताभिरामं
राजा यथोक्तं कुलिशं दधानः ।
पराक्रमाक्रान्तपरप्रताप-
स्समस्तसामन्तभुवं भुनक्ति ॥"
इति गारुडे ६८ अध्यायः ॥
वज्रार्थे वैदिकपर्य्यायो यथा । दिद्युत् १ नेमिः २ हेतिः ३ नमः ४ पविः ५ सृकः ६ वृकः ७ वधः ८ वज्रः ९ अर्कः १० कुत्सः ११ कुलिशः १२ तुजः १३ तिग्मम् १४ मेनिः १५ स्वधितिः १६ सायकः १७ परशुः १८ । इत्यष्टादश वज्रनामानि । इति वेदनिघण्टौ । २ । २० ॥
वज्रं, क्ली, (वज गतौ + ऋज्रेन्द्रेति रन् ।) बालकः । धात्री । इति मेदिनी । रे, ६ ॥ काञ्जिकम् । इति भरतः ॥ वज्रपुष्पम् । इति शब्दरत्नावली ॥ लौहविशेषः । स च बहुविधो यथा । नीलपिण्डम् १ अरुणाभम् २ मोरकम् ३ नागकेशरम् ४ तित्तिराङ्गम् ५ स्वर्णवज्रम् ६ शैवालवज्रम् ७ शोणवज्रम् ८ रोहिणी ९ काण्डीरम् १० ग्रन्थिवज्रकम् ११ मदनाख्यम् १२ इत्यादि । तेषां नामानुरूपं चिह्नम् । इति पुराणम् ॥ अभ्रविशेषः । तस्योत्पत्त्यादि यथा,—
"पुरा वधाय वृत्रस्य वज्रिणा वज्रमुद्धृतम् ।
विस्फुलिङ्गास्ततस्तस्य गगने परिसर्पिताः ॥
ते निपेतुर्घनध्वानाच्छिखरेषु महीभृताम् ।
तेभ्य एव समुत्पन्नं तत्तद्गिरिषु चाभ्रकम् ॥
तद्वज्रं वज्रजातत्वादभ्रमभ्ररवोद्भवात् ।

गगनात् स्खलितं यस्मात् गगनञ्च ततो मतम् ॥
पिनाकं दर्द्दुरं नागं वज्रञ्चेति चतुर्विधम् ।
वज्रन्तु वज्रवत् तिष्ठेत् तथाग्नौ विकृतिं व्रजेत् ॥
सर्व्वाभ्रेषु वरं वज्रं व्याधिवार्द्धक्यमृत्युहृत् ॥”

इति भावप्रकाशः ॥

वज्रः, पुं, ( वज्+रन् । ) कोकिलाक्षवृक्षः । श्वेतकुशः । इति राजनिर्घण्टः ॥ * सेहुण्ड-वृक्षः । इति भावप्रकाशः ॥ श्रीकृष्णप्रपौत्रः । यथा,—

“अनिरुद्धात् सुभद्रायां वज्रो नाम नृपोऽभवत् ।
प्रतिबाहुर्व्वज्रसुतस्तस्य सुतोऽभवत् ॥”

इति गारुडे १४४ अध्यायः ॥

अपि च ।

“प्रद्युम्न आसीत् प्रथमः पितृवद्रुक्मिणीसुतः ।
स रुक्मिणो दुहितरमुपयेमे महारथः ॥
तस्यां ततोऽनिरुद्धोऽभूत् नागायुतबलान्वितः ।
स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ॥
वज्रस्तस्याभवद्यस्तु मौषलादवशेषितः ।
प्रतिबाहुरभूत्तस्मात् सुबाहुस्तस्य चात्मजः ॥”

इति श्रीभागवते १० स्कन्धे ९० अध्यायः ॥ * ॥

( विश्वामित्रपुत्रविशेषः । यथा, महाभारते ।१३। ४ । ५३ ; ५९ ।

“बभ्रुश्चैव महाभागो गालवश्च महामुनिः ।
ऋषिर्व्वज्रस्तथाख्यातः शालङ्कायन एव च ॥”
“विश्वामित्रात्मजाः सर्व्वे मुनयो ब्रह्मवादिनः ॥”)

विष्कम्भादिसप्तविंशतियोगान्तर्गतपञ्चदशयोगः । तस्याधिपदेवता वरुणः । यथा,—

“वज्रादौ पञ्च विष्कम्भे सप्त शूले च नाडिकाः ।
गण्डव्याघातयोः षट् च नव हर्षणवज्रयोः ॥
वैधृतिव्यतिपातौ च समस्तौ परिवर्ज्जयेत् ।
एवं यथार्थनामानो योगाः कार्य्येषु शोभनाः ॥”

इति ज्योतिस्तत्त्वम् ॥

अत्र जातफलं यथा,—

“सुखी सुवक्त्रो बलवान् महौजाः
सद्रत्नवस्त्रादिपरीक्षकः स्यात् ।
वज्राभिधाने यदि चेत् प्रसूतो
वज्रोपमः स्यादिषुकामिनीनाम् ॥”

इति कोष्ठीप्रदीपः ॥

वज्रकं, क्ली, (वज्र+संज्ञायां कन् ।) वज्रक्षारम् । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते चिकित्सित-स्थाने ९ अध्याये । तैलं वज्रकमभ्यङ्गार्थं ॥) सर्व्वतोभद्रचक्रान्तर्गतनक्षत्रवेधविशेषात्मक उपग्रहः । यथा,—

“सूर्य्यभात् पञ्चमं धिष्ण्यं विद्युन्मुखा-
भिधम् ।
शूलमष्टमगं प्रोक्तं सन्निपातं चतुर्द्दशम् ॥
केतुमष्टादशं प्रोक्तमुल्का स्यादेकविंशतिः ।
द्वाविंशतितमं कम्पं त्रयोविंशच्च वज्रकम् ।
निर्घातश्च चतुर्व्विंशत्युक्ता अष्टावुपग्रहाः ॥”

इति ज्योतिस्तत्त्वम् ॥

वज्रकङ्कटः, पुं, ( वज्रः कङ्कटो देहावरणमस्य । ) हनूमान् । इति हेमचन्द्रः । ३ । ३७० ॥

वज्रकण्टकः, पुं, ( वज्रस्य कण्टकमिव तद्वार-कत्वात् ।) स्नुहीवृक्षः । इति जटाधरः ॥ कोकिलाक्षवृक्षः । इति राजनिर्घण्टः ॥

वज्रकन्दः, पुं, (वज्राकारः कन्दोऽस्य ।) वज्रकर्णः । इति रत्नमाला ॥ वज्रकन्द आलु इति भाषा ॥

वज्रकपाणी, [ न् ] पुं, ( वज्रकपाणोऽस्त्यस्येति । इनिः । ) बुद्धविशेषः । तत्पर्य्यायः । देवतः १ दैवकः ३ वज्रधरः ४ देवः ५ निशुम्भीशः ६ शशिशेखरः ७ वज्रटीकः ८ । इति हेमचन्द्रः ॥

वज्रकालिका, स्त्री, ( वज्रोपलक्षिता कालिका । ) मायादेवी । इति हेमचन्द्रः ॥

वज्रकेतुः, पुं, ( वज्रं केतुश्चिह्नमस्य ।) नरकराजः । यथा,—

“गते वशिष्ठे नरकः शीघ्रं विस्मयसंयुतः ॥”

इत्युपक्रम्य ॥

“इति याबीनलितस्य वज्रकेतोस्तदा नृपा ।
दूतश्च प्राहिणोत् भक्तं बाणस्य नगरं प्रति ॥”

इति कालिकापुराणे ३८ अध्यायः ॥

वज्रक्षारं, क्ली, ( वज्रसंज्ञकं क्षारमिति ।) क्षार-विशेषः । तत्पर्य्यायः । वज्रकम् २ क्षार-श्रेष्ठम् ३ विदारकम् ४ क्षारः ५ चन्द्रकारः ६ धूमोत्थम् ७ धूमजालकम् ८ । अस्य गुणाः । अत्युष्णत्वम् । तीक्ष्णत्वम् । क्षारत्वम् । रेचनत्वम् । गुल्मोदरादिविष्टम्भामप्रशमनत्वम् । सरत्वञ्च । इति राजनिर्घण्टः ॥ (भक्षणीयौषध-विशेषः । तद्यथा,—

“सामुद्रं सैन्धवं काचं यवक्षारं सुवर्च्चलम् ।
टङ्कणं सर्ज्जिका क्षारं तुल्यं सर्व्वं विचूर्णयेत् ॥
अर्कक्षीरैः स्नुहीक्षीरैरातपे भावयेत् त्र्यहम् ।
तेन लिप्तार्कपत्रञ्च रुद्धा भाण्डः पुटे पचेत् ॥
तत् क्षारं चूर्णयेत् पश्चात् त्र्यूषणाश्चिपलारजः ।
जीरकं रजनी वह्निं नवभागं समं समम् ॥
क्षारार्द्धमेवं कुर्य्याच्च एकीकृत्य प्रयोजयेत् ।
वज्रक्षारमिदं सिद्धं स्वयं प्रोक्तं पिनाकिना ॥
सर्व्वोदरेषु गुल्मेषु शूलदोषेषु योजयेत् ।
अग्निमान्द्येऽप्यजीर्णेऽपि भक्ष्यं निष्कद्वयं दयम् ॥
वाताधिके जलं कोष्णं घृतं वा पैत्तिके हितम् ।
कफे गोमूत्रसंयुक्तमारनालं त्रिदोषजे ॥”

इति वैद्यकरसेन्द्रसारसंग्रहे प्लीहाधिकारे ॥ * ॥)

वज्रचर्म्मा, [न्] पुं, ( वज्रवत् दुर्भेद्यं चर्म्म यस्य । ) खड्गी । गण्डकम् । इति राजनिर्घण्टः ॥

वज्रजित्, पुं, (वज्रं जयति तत्प्रहारसहनेनेति । जि+क्विप् । “ह्रस्वस्य पिति कृति तुक् ।” ६ । १ । ७१ । इति तुगागमश्च । ) गरुडः । इति हेमचन्द्रः । २ । १४५ ॥

वज्रज्वाला, स्त्री ( वज्रस्य ज्वाला । ) वज्राग्निः । इति हलायुधः ॥ ( यथा, माघे । १२९ । १४ । “वज्रज्वालान्तरगतः शाल्मलान्तरालकत् ॥”)

वज्रटीकः, पुं, ( वज्रेण वज्रकपाणेन टीकते प्रका-शते इति । टीक+कः ।) वज्रकपाणी नामक-बुद्धः । इति त्रिकाण्डशेषः ॥

वज्रतुण्डः, पुं, ( वज्रं वज्रतुल्यं कठिनतुण्डं यस्य । ) गरुडः । मशकः । इति त्रिकाण्डशेषः ॥ गृध्रः । मशकः । इति राजनिर्घण्टः ॥ ( वज्रतुण्डधरे, त्रि । यथा, भागवते । ५ । २६ । ३५ ।

“अतिथीन् वा अभ्यागतान् वा गृहपति-रसकृदुपगतमन्युर्दिधक्षुरिव पापेन चक्षुषा निरीक्षते तस्य चापि निरये पापदृष्टेरक्षिणी वज्रतुण्डा गृध्रकङ्ककाकवटादयः प्रसह्योरुबला-दुत्पाटयन्ति ॥” )

वज्रदन्तः, पुं, ( वज्रमिव कठिना दन्ता यस्य । ) शूकरः । मूषिकः । इति शब्दमाला ॥

वज्रदशनः, पुं, ( वज्रमिव कठिनं दशनमस्य । ) मूषिकः । इति हेमचन्द्रः । ४ । ३६६ ॥

वज्रद्रुः, पुं, ( वज्रकारको द्रुः । ) स्नुहीवृक्षः । इत्यमरः ॥

वज्रद्रुमः, पुं, ( वज्रकारको द्रुमः । ) स्नुहीवृक्षः । इति शब्दरत्नावली ॥ ( तथास्य पर्य्यायः ।

“सेहुण्डः सिंहतुण्डः स्याद्वज्री वज्रद्रुमोऽपि च ।
सुधासमन्तदुग्धा च स्नुक्स्त्रियां स्यात् स्नुही-
गुडा ॥”

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

वज्रधरः पुं, ( धरतीति । धृ+अच् । वज्रस्य धरः । ) इन्द्रः । इति हलायुधः ॥ (यथा, महा-भारते । ३ । ११२ । २३ ।

“अरुन्धती वा सुभगा वशिष्ठं
लोपामुद्रा वापि यथा ह्यगस्त्यम् ।
नलस्य वा दमयन्ती यथाभूद्
यथा शची वज्रधरस्य चैव ॥” )

जिनविशेषः । इति त्रिकाण्डशेषः ॥ ( वज्रा-पुराधिपतिराजविशेषः । यथा, राजतरङ्गि-ण्याम् । ८ । ५४० ।

“उपरागे गते तस्मिन् पार्व्वतीयाश्रयी नृपाः ।
चाम्पेयो जासटो वज्रधरो वज्रापुराधिपः ॥” )

वज्रनिर्घोषः, पुं, (वज्रस्य निर्घोषः ।) वज्रजनित-शब्दः । इति हलायुधः ॥

वज्रनिष्पेषः, पुं, ( वज्राणां निष्पेषः संघर्षध्वनिः ।) वज्रनिर्घोषः । तत्पर्य्यायः । स्फूर्ज्जथुः २ । इत्य-मरः । १ । ३ । १० ॥ “द्वे वज्रजनितशब्दे । अन्योन्यसंघट्टनात् भग्नं सायिमेघखण्डं वज्रमिव वज्रं तस्य साटोपध्वनौ द्वयमिति केचित् ॥ द्वे स्फूर्ज्जौ वज्रनिष्पेषे । निष्पेषः संघट्टध्वनिः । अभ्याघात इत्येके । निष्पेषपूर्व्वकं साटोप-ध्वनिश्च इह तु ध्वनिरभिप्रेतः । मुक्ता विस्फु-र्ज्जथुप्रख्यं निनादं परिदेविनीति भट्टिः । स्फूर्ज्ज-थुरिति ह्रस्वः विभावनात् दीर्घः । स्फूर्ज्ज-थुरिति दीर्घादि पदस्थम् । केचित्तु दीर्घ-मिच्छन्ति । केचिद्विभाषया दीर्घमिच्छन्ति । वज्रस्य निष्पेषो वज्रनिष्पेषः धौ पिष व चूर्णने घञ् । निष्पेषो द्विकर्म्मः ।” इति भरतः ॥

वज्रपाणिः, पुं, ( वज्रं पाणौ यस्य । ) इन्द्रः । इति त्रिकाण्डशेषः ॥ ( यथा, महाभारते ।३।१६०।७। “एष ब्रवीमि ते सूतं राजसत्तम दुर्ज्जयम् ।

उपयेमे भ्रमिं नाम तत्सुतौ वत्सवत्सरौ ॥")

वत्सरान्तकः, पुं, ( वत्सरस्यान्ते कायति शोभते इति । कै+कः । यद्वा, वत्सरस्यान्तो नाशो यस्मात् ।) फाल्गुनमासः । इति राजनिर्घण्टः ॥

वत्सलः, त्रि, ( वत्से पुत्रादिस्नेहपात्रे कामोऽस्यास्तीति । वत्स+"वत्सांसाभ्यां कामबले ।" ५ । २ । ९८ । इति लच् । ) स्नेहयुक्तः । तत्पर्य्यायः । स्निग्धः २ । इत्यमरः । ३ । १ । १४ ॥ (यथा, भागवते । १ । ५ । ३० ।
"ज्ञानं गुह्यतमं यत्तत् साक्षात् भगवतोदितम् ।
अन्ववोचन् गमिष्यन्तः कृपया दीनवत्सलाः ॥"
वत्सं लाति गृह्णातीति । ला+कः । वत्सकामुके च ॥ )

वत्सलः, पुं, ( वत्स+लच् । ) शृङ्गारादिदशरसान्तर्गतरसविशेषः । तत्पर्य्यायः । वात्सल्यम् २ । इति जटाधरः ॥ (अस्य लक्षणोदाहरणे तु रसशब्दे ज्ञातव्ये ॥*॥ स्कन्दानुचरविशेषः । यथा, महाभारते । ९ । ४५ । ६८ ।
"वत्सलो मधुवर्णश्च कलसोदर एव च ॥" )

वत्सला, स्त्री, ( वत्से कामोऽस्त्यस्या इति । लच् । यद्वा, वत्सं लातीति । ला+कः ।) वत्सकामा गौः । इति हेमचन्द्रः । ४ । ३२७ ॥ ( यथा, रामायणे । २ । ४३ । १८ ।
"साहं गौरिव सिंहेन विवत्सा वत्सला कृता ।
कैकेय्या पुरुषव्याघ्र बालवत्सेव गौर्बलात् ॥")

वत्साक्षी, स्त्री, (वत्सस्याक्षीव शाखाचिह्नं यस्याः । षच् समासे । ) गोडुम्बा । इति जटाधरः ॥

वत्सादनः, पुं, ( अत्तीति । अद्+ल्युः । वत्सानां अदनो भक्षकः ।) वृकः । इति राजनिर्घण्टः ॥

वत्सादनी, स्त्री, ( वत्सैरद्यते प्रियत्वादिति । अद् ल्युट् । ङीप् ।) गुडूची । इत्यमरः ।२।४।८९ ॥

व(ब)द, इ ङ स्तुत्यभिवादयोः । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-सक०-सेट् । ) अभिवादो नमस्कारः । इ, वन्द्यते । ङ, वन्दते गुरुं लोकः । नमस्करोति स्तौति वा इत्यर्थः । इति दुर्गादासः ॥

व(ब)द, ऐ वाचि । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) ऐ, उद्यात् । इति दुर्गादासः ॥ ("क्विपि वंवन् दन्त्योष्ठ्यात् पश्चे सानुनासिको वकारः स्यात् यस्तु मन्यते नायं संप्रसारिणो वदेः प्रयोगः किन्तर्हि वद स्थैर्य्य इत्यस्य ओष्ठ्यवकारादेः तस्मात् मकारवदपि स्यादिति वर्णदेशना ।" इति मनोरमा ॥)

वद, क वाक्सन्देशयोः । इति कविकल्पद्रुमः ॥ ( चुरा०-पर०-सक०-आत्म०-इत्येके-सेट् । ) क, वादयति । सन्देशो वचनविशेषः । अयमात्मनेपदीत्येके । इति दुर्गादासः ॥

वद, ञ ङ वाक्सन्देशयोः । इति कविकल्पद्रुमः ॥ ( भ्वा०-उभ०-आत्म०-इत्येके-सक० सेट् ।) ञ, वदति वदते । ङ, वदते । अयमात्मनेपदीत्यन्ये । इति दुर्गादासः ॥

वदः, त्रि, ( वदति वक्तीति । वद्+पचाद्यच् । ) वक्ता । इत्यमरः । ३ । १ । ३५ ॥

वदनं, क्ली, ( वदत्यनेनेति । वद्+करणे ल्युट् ।) मुखम् । इत्यमरः ॥ (यथा, आर्य्यासप्तशत्याम् । २७६ ।
"दर्पणविनीतमाना गृहिणी दर्पोल्लसत्कपोलतलम् ।
चुम्बनविधिमिषतो वदनं पिदधाति पाणिभ्याम् ॥"
लक्षणया अग्रभागः । यथा, सुश्रुते । १ । ७ ।
"नौराण्यानि ( यन्त्राणि ) नानावदनानि नौण्यकुशवदनानि बहुवाचिकर्म्मस्वभिप्रेतानि ॥"
वद्+भावे ल्युट् । कथनम् ॥ )

वदनासवः, पुं, ( वदनस्य आसवः । ) अधरमधु । इति भूरिप्रयोगः ॥

वदन्तिः, वदन्ती, स्त्री, ( वद्+"वदेश्च ।" इत्युज्ज्वलदत्तोक्त्या झिच्प्रत्ययः ।३।५०॥ कृदिकारादिति वा ङीष् । ) कथा । इति सिद्धान्तकौमुदी ॥ विसर्गशून्यं वदन्तिपदं क्रियापदं भवति ॥ ( यथा, मनुः । १२ । ११५ ।
"यं वदन्ति तमोभूता मूर्खा धर्म्ममतद्विदः ॥")

वदन्यः, त्रि, वदान्यः । इत्यमरटीकासारसुन्दरी ॥

वदान्यः, त्रि, (वदति सर्व्वेभ्य एव दास्यामीति मनोहरवाक्यमिति । वद्+"वदेरान्यः ।" उणा० ३ । १०४ । इति आन्यः । ) बहुप्रदः । ( यथा, रघुः । ५ । २४ ।
"गतो वदान्यान्तरमित्ययं मे
माभूत् परीवादनवावतारः ॥" )
वल्गुवाक् । इत्यमरः । ३ । १ । ६ ॥ ( स्वनामख्यात ऋषिविशेषे, पुं । यथा, महाभारते । १३ । १९ । ११ ।
"निवेष्टुकामस्तु पुरा अष्टावक्रो महातपाः ।
ऋषेरथ वदान्यस्य वव्रे कन्यां महात्मनः ॥")

वदामं, क्ली, फलविशेषः । बादाम इति भाषा ॥ तत्पर्य्यायः । सुफलम् २ वातवैरिः ३ नेत्रोपमम् ४ । अस्य गुणाः । उष्णत्वम् । सुस्निग्धत्वम् । वातघ्नत्वम् । गुरुत्वम् । शुक्रकारित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"वातादो वातवैरी स्यान्नेत्रोपमफलस्तथा ।
वातादः उष्णः सुस्निग्धो वातघ्नः शुक्रलो गुरुः ॥
वातादमज्जा मधुरो वृष्यः पित्तानिलापहः ।
स्निग्धोष्णकफकृत् श्रेष्ठो रक्तपित्तविकारिणाम् ॥"
इति भावप्रकाशः ॥

वदालः, पुं, ( वद+घञर्थे कः । वदेन वदनेन अलति पर्य्याप्नोतीति । वद+अल्+अच् । ) मत्स्यविशेषः । बोयालि इति भाषा । तत्पर्य्यायः । पाठीनः २ । इति त्रिकाण्डशेषः ॥ हव्यकव्ययोस्तस्योपयोगित्वं यथा, मनुः ।
"पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ॥"

वदालकः, पुं, ( वदाल एव । स्वार्थे कन् । ) पाठीनमत्स्यः । इति भूरिप्रयोगः ॥

वदावदः, त्रि, ( अत्यन्तं वदतीति । वद्+अच् । "चरिचलीति ।" ६।१।१२४। इत्यस्य वार्त्तिकोक्त्या निपातितम् ।) वक्ता । इत्यमरः ।३ । १ । ३५ ॥

वधः, पुं (हननमिति । हन्+अप् । वधादेशः ।) प्राणवियोगफलकव्यापारः । तत्पर्य्यायः । प्रमापणम् २ निवर्हणम् ३ निकारणम् ४ निशारणम् ५ प्रवासनम् ६ परासनम् ७ निषूदनम् ८ निहिंसनम् ९ निर्व्वासनम् १० संज्ञपनम् ११ निर्ग्रन्थनम् १२ अपासनम् १३ निस्तर्हणम् १४ निहननम् १५ क्षणनम् १६ परिवर्ज्जनम् १७ निर्व्वापणम् १८ विशसनम् १९ मारणम् २० प्रतिघातनम् २१ उद्वासनम् २२ प्रमथनम् २३ क्रथनम् २४ उज्जासनम् २५ आलम्भः २६ पिञ्जः २७ विशरः २८ घातः २९ उन्माथः ३० । इत्यमरः ॥ हिंसा ३१ घातनम् ३२ विदारणम् ३३ पिञ्जकम् ३४ घातः ३५ परिघः ३६ परिघातनम् ३७ कदनम् ३८ निवारणम् ३९ समाघातः ४० निर्ग्रन्थनम् ४१ मारिः ४२ मारी ४३ उत्पातः ४४ मारकः ४५ मरकः ४६ मारः ४७ संघातः ४८ । इति शब्दरत्नावली ॥*॥ पुण्यप्रदवधो यथा,—
"एकस्य यत्र निधने प्रवृत्ते दुष्टकारिणः ।
बहूनां भवति क्षेमं तस्य पुण्यप्रदो वधः ॥
ब्रह्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
आत्मानं घातयेद्यस्तु तस्य पुण्यप्रदो वधः ॥"
इति कालिकापुराणे २० अध्यायः ॥
अपि च ।
"कथं नु स्त्रीवधं कुर्य्यां महापातकिनामपि ।
स्त्रीवधे तु महापापं यथा ब्रह्मवधे स्मृतं ॥
इति रामवचः श्रुत्वा विश्वामित्रस्तमाह वै ॥
यस्यास्तु बहवो मासान् म्रियन्तेऽपि द्विजन्मनः ।
न पापं विद्यते तेन न दोषो नृपनन्दन ॥
यस्यास्तु निधनाद्राम जनाः स्युः सुखिनो भृशम् ।
भवन्ति सततं नरास्तस्याः पुण्यप्रदो वधः ॥"
इत्यग्निपुराणम् ॥ * ॥
अपि च ।
"नैकस्यार्थे बहून् हन्यादिति शास्त्रेषु निश्चयः ।
एकं हन्याद्बहूनां हि न पापी तेन जायते ॥"
इति वामनपुराणे ५५ अध्यायः ॥ * ॥
"नाततायिवधे दोषो हन्तुर्भवति कश्चन ।"
इति गीतायाः १ । ३६ श्लोकटीकायां स्वामी ॥
पापजनकवधः प्रायश्चित्तशब्दे द्रष्टव्यः ॥ * ॥
वधबन्धौ पूर्व्वकर्म्मवशौ यथा,—
"न कश्चिन्नाथ केनापि वध्यते हन्यतेऽपि वा ।
वधबन्धौ पूर्व्वकर्म्मवशौ नृपतिनन्दन ॥"
इति वामनपुराणे ६५ अध्यायः ॥ * ॥
पारिभाषिकवधो यथा,—
"वपनं द्रविणादानं देशान्निर्यापनन्तथा ।
एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः ॥"
इति महाभारते सौप्तिकपर्व्व ॥
( वधप्रकारो वधित्वभेदादिकञ्च वधितनिशब्दे द्रष्टव्यम् ॥ )

वधकः, पुं, (हन्तीति । हन्+क्वुन् । "हनो वध च ।" उणा० २ । ३६ इति वधादेशः । ) वधकर्त्ता ।

हिंसः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ व्याधिः । मृत्युः । इति संक्षिप्तसारोणादिवृत्तिः ॥

वधकर्म्म, क्ली, ( वधः एव कर्म्म । ) प्राणवियोगफलकव्यापारः । तद्वैदिकपर्य्यायः । दभ्नोति १ श्नथति २ आरति ३ धूर्व्वति ४ दयति ५ वृश्चति ६ तायति ७ क्लमति ८ श्नसिति ९ नमते १० अहृयति ११ क्षुणाति १२ चेद्दयति १३ यातयति १४ स्फुरति १५ स्फुलति १६ निपयन्तु १७ अवतिरति १८ वियातः १९ आतिरत् २० तळ्हित् २१ आखण्डलः २२ द्रुणाति २३ श्नाति २४ ध्वनाति २५ ध्रुणाति २६ दयीवर्हि २७ ताळ्हि २८ नितोशते २९ निवर्हयति ३० मिनाति ३१ मिनोति ३२ धमति ३३ । इति त्रयस्त्रिंशद्वधकर्म्माणः । इति वेदनिघण्टौ । २ । १९ ॥

वधत्रं, क्ली, (वध्यतेऽनेन इति । वध + "अमिनक्षियजिवधिपतिभ्योऽत्रन् ।" उणा० ३।१०५। इति अत्रन् ।) अस्त्रम् । इत्युणादिकोषः ॥

वधस्थली, स्त्री, (वधाय वधस्य वा स्थली स्थानम् ।) प्राणिवधस्थानम् । मशान इति भाषा । तत्पर्य्यायः । आघातः २ । इति त्रिकाण्डशेषः ॥ प्रघातः ३ वधस्थानम् ४ । इति शब्दरत्नावली ॥ आघातनम् ५ । इति हारावली ॥

वधस्थानम्, क्ली, ( वधाय वधस्य वा स्थानं भूमिः । ) वधस्थली । इति हारावली । १९६ ॥

व(ब)धाङ्गकं, क्ली, ( वधः बन्धनं एवाङ्गं यस्य । ततः कन् ।) कारावेश्म । इति त्रिकाण्डशेषः ॥

वधार्हः, त्रि, ( वधं अर्हतीति । अर्ह + अण् ।) वध्यः । हननयोग्यः । यथा, दक्षस्मृतिः ।

"वधार्हः सुवर्णशतं दमं दाप्यस्तु पूरुषः ।
अङ्गच्छेदार्हकस्त्वर्द्धं सन्दंशार्हस्तदर्द्धकम् ॥"

सन्दंशो हस्ताङ्गुलितर्ज्जन्योश्छेदः । इति प्रायश्चित्तविवेकः ॥

वधी, [ न् ] त्रि, ( प्राणवियोगफलकव्यापारो वधः स निष्पाद्यत्वेन निरूपितनिष्पादकत्वेनास्त्यस्येति । वध + इनिः ।) वधकर्त्ता । प्राणवियोगफलकव्यापारो वधः तन्निष्पादकत्वञ्च साक्षात् परम्परोदासीनं स्मृतिकारपरिगणितं वधित्वम् । तच्च पञ्चविधं स्मृतिस्वरसात् कर्त्ता प्रयोजकोऽनुमन्तानुग्राहको निमित्ती चेति । नरान्तरव्यापारव्यवधानेन वधनिष्पादकः कर्त्ता । १ । यः कर्त्तारं कारयति स प्रयोजकः । २ । स च द्विविधः । एकः स्वतोऽप्रवृत्तमेव प्रवृत्तिं वेतनादिना प्रेरयति । अपरः स्वतः प्रवृत्तमेव मन्त्रोपायोपदेशादिना प्रोत्साहयति । अनुमतिदाताऽनुमन्ता । ३ । अनुमतिश्च द्विविधा एका यद्विरोधाद्धननं न भवति तस्य विरोधिनो मया निरोधः कर्त्तव्य इति प्रयुक्तिरनुमतिः । अपरा एनं हन्मीति वचने प्रश्नव्याप्रतिषेध एव । अनुग्राहकोऽपि द्विविधः । एको वध्यप्रतिरोधकः । अपरः स्वयंप्रहर्त्ता । ४ । उद्देश्यत्वे सति हननसंभूतपादको निमित्ती । ५ । अत्र प्रयोजकस्य कर्तृप्रयुक्तिद्वारेण वधकारणत्वम् । अनुमन्तुश्च हन्तुर्निर्भयत्वेन दृढतरप्रहारोत्पत्तिद्वारेण । अनुग्राहकस्य पलायनाद्यसम्भवेन हननीयस्थैर्य्यं कुर्व्वतः प्रहारस्वरूपोत्पत्तिद्वारेण वा कारणत्वम् । निमित्तिनो हन्तुर्मन्युत्पादनद्वारेणेति । प्रयोजकादीनां चतुर्णां वधजनितहननकारणतामवान्तरभेदाद्भेदः । अतः पञ्चविधं वधित्वम् । इति प्रायश्चित्तविवेकः ॥

वधोद्यतः, त्रि, ( वधाय उद्यतः । ) परवधायोद्युक्तः । तत्पर्य्यायः । समद्यः २ आततायी ३ । इत्यमरः ॥ आततायिवधापवादमाह स्मृतिः ।

"नाततायिवधे हन्ता प्राप्नुयात् किल्बिषं क्वचित् ।
विनाशार्थिनमायान्तं घातयन्नापराध्नुयात् ॥"

कात्यायनः ।

"आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयात न तेन ब्रह्महा भवेत् ॥"

जिघांसीयात् हन्तुमिच्छेदित्यर्थः । देवलः ।

"उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् ।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् ॥"

भ्रूणो ब्राह्मणविशेषः । दोषदर्शनं नियमार्थम् । मनुरपि ।

"गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥"

एवकारो नियमार्थः । तथा ।

"नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वाप्रकाशं वा मन्युस्तन्मन्युमृच्छति ॥"

यस्माद्धन्तुर्मन्युर्हन्यमानमन्युं नाशयति न पुनः पुरुषो हन्ति हन्यते वेति हननविधेरपवादः । आततायिनमाह वशिष्ठः ।

"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहारी च षडेते आततायिनः ॥"

विष्णुकात्यायनौ ।

"उद्यतासिविषाग्निञ्च शापोद्यतकरं तथा ।
आथर्व्वणेन हन्तारं पिशुनञ्चैव राजसु ॥
भार्य्यातिक्रमिणञ्चैव विद्यात् सप्ताततायिनः ।
यशोवित्तहरानन्यानाहुर्धर्म्मार्थहारकान् ॥"

विशेषमाह कात्यायनः ।

"अनाक्षारितपूर्व्वो यस्त्वपराधे प्रवर्त्तते ।
प्राणद्रव्यापहारे च प्रवृत्तस्याततायिना ॥"

अनाक्षारितोऽनपकृतः । तेन पूर्व्वकृतापराधस्य मारणोद्यतस्य नाततायिता । एतेन प्रत्यपकारिवधे दोष एव । ननु आततायिनोऽपि गोब्राह्मणयोर्हनने दोषमाह सुमन्तुः ।

"आततायिवधे न दोषोऽन्यत्र गोब्राह्मणात् यदा हन्यात् प्रायश्चित्तं कुर्य्यात् ।" तथा भविष्ये ।

"स्त्रुवाणामपि गोविप्रं न हन्याद्वै कदाचन ॥"

अतः पूर्व्ववचनविरोधः । अत्र व्यवस्थामाह कात्यायनः ।

"आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः ।
वधस्तत्र तु नैव स्यात् पापे हीने वधो भृगुः ॥"

जन्मपदेन जातिकुलयोर्ग्रहणम् । तेन हन्त्रपेक्षया तपोविद्याजातिकुलैरुत्कृष्टो नाततायी वध्यः तदन्यो वध्य एव । भगवद्गीतायाम् । १ । ३६ । यथा,—

"पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥"

इति ।

एतान् भीष्मादीनत्युत्कृष्टगुणानित्यर्थः । एवम्भूताततायिनश्चाहनने फलमप्याह स्मृतिः ।

"आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम् ।
यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत् ॥"

यद्यपि गुरुं बहुश्रुतं हन्यादिति श्रूयते तथापि गुरोः सकाशात् कुलविद्यातपोभिः शिष्यस्याप्युत्कर्षसम्भवादेव बहुश्रुतादपि । यद्वा अधमवर्णस्य उत्तमवर्णो न वध्यः पूर्व्वापराधकृतविषयं वा मनुवचनम् । गौराततायपि न वध्यः ।

"नखिनां शृङ्गिणाञ्चैव दंष्ट्रिणाञ्चाततायिनाम् ।
हस्त्यश्वानां तथान्येषां वधे हन्ता न दोषभाक् ॥"

इति कात्यायनवचनं गोव्यतिरिक्तशृङ्गिविषयम् ॥ विशेषमाह कात्यायनः ।

"उद्यतानान्तु पापानां हन्तुर्दोषो न विद्यते ।
निवृत्तास्तु यदारम्भादुपहन्ता न वधः स्मृतः ॥"

इति प्रायश्चित्तविवेकः ॥

वध्यः, त्रि, (वधमर्हतीति । वध + यत् ।) वधार्हः । तत्पर्य्यायः । शीर्षच्छेद्यः २ । इत्यमरः । ३।१।४५॥

"किन्त्वथा न श्रुतं लोके अवध्याः प्रमदोत्तमाः ।
हीनवर्णोपभुक्ता या त्याज्या वध्यापि वा भवेत् ॥"

इति प्रायश्चित्ततत्त्वम् ॥

अवध्या यथा,—

"गोब्राह्मणं वृद्धमथापि सुप्तं
बालं स्वबन्धुं ललनां सुदुष्टाम् ।
कृतापराधानपि नैव वध्या-
दाचार्य्यमुख्या गुरवस्तथैव ॥"

इति वामनपुराणे ५५ अध्यायः ॥

वध्यपालः, पुं, ( वध्यं बन्धनस्थानं कारागारं पालयतीति । वध्य + पाल + अण् ।) कारागृहरक्षकः । यथा,—

"साध्वीविक्रयकृद्वध्यपालः केशादिविक्रयी ।
तप्तलौहे तु पच्यन्ते यश्च भक्तं परित्यजेत् ॥"

इति विष्णुपुराणे । २ । ६ । ११ ॥

वन, सम्भक्तिशब्दयोः । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) वनति । संभक्तिः सेवनम् । इति दुर्गादासः ॥

वन, उ म याचने । इति कविकल्पद्रुमः । (भ्वा०-पर०-अक०-सेट् । उदित्वात् क्त्वावेट् ।) उ, वनित्वा वत्वा । म, प्रवनयति । मित्त्वेऽपि अस्य णौ ज्वलह्वलेत्यादिना केवलस्य वृद्धिविकल्पनात् सोपसर्गस्यैव नित्यं ह्रस्वः । वनयति वानयति । याचनिर्व्यापारः । अयन्तु कठेवत् क्रियामात्र इत्यन्ये । इति दुर्गादासः ॥

वन, कि उपकृतिश्रद्धाबालप्रश्नोपतापेषु। इति कविकल्पद्रुमः॥ (चुरा०-पक्षे भ्वा०-पर०-सक०-अक०च-सेट्।) कि, वानयति वनति। अयं केश्चिन्न मन्यते। इति दुर्गादासः॥

वन, द ङ उ याचे। इति कविकल्पद्रुमः॥ (तना०-आत्म०-द्विक०-सेट्। उदित्त्वात् क्त्वावेट्।) द ङ, वनुते। उ, वनित्वा वत्वा। इति दुर्गादासः॥

वनं, क्ली स्त्री, (वनतीति। वन्+पचाद्यच्। यद्वा, वन्यते सेव्यते इति। "पुंसि संज्ञायां घः प्रायेण।" ३।३।११८। इति घः।) बहुवृक्षयुक्तस्थानम्। (यथा, मनुः। ८। ३५६।
"परस्त्रियं योऽभिवदेत्तीर्थेऽरण्ये वनेऽपि वा।
नदीनां वापि सम्भेदे स संग्रहणमाप्नुयात्॥"
स्त्रियान्तु यथा, साहित्यदर्पणे आर्य्यसप्तशत्याम्।
"कालो मधुः कुपित एष च पुष्पधन्वा
धीरा वहन्ति रतिखेदहराः समीराः।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु
दूरे पतिः कथय किं करणीयमद्य॥")
तत्पर्य्यायः। अटवी २ अरण्यम् ३ विपिनम् ४ गहनम् ५ काननम् ६। इत्यमरभरतौ॥ दावः ७ दवः ८ अटविः ९ भीरुकम् १० झाटम् ११ गुहिनम् १२। इति शब्दरत्नावली॥ शष्पम् १३ ससजम् १४ प्रान्तरम् १५ विक्रम् १६॥ इति जटाधरः॥ कान्तारम् १७। इति राजनिर्घण्टः॥ *॥ गृहसमीपकर्त्तव्यवनं यथा,—
"शिविराभ्यन्तरे भद्रा स्थापिता तुलसी शुभाम्।
धनपुत्त्रप्रदात्री च पुण्यदा हरिभक्तिदा।
प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत्॥
मालती यूथिका कुन्दं माधवी केतकी तथा।
नागेश्वरं मल्लिका च काञ्चनं बकुलं शुभम्॥
अपराजिता च शुभदा तेषामुद्यानमीप्सितम्।
पूर्व्वे च दक्षिणे चैव शुभदं नात्र संशयः॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०२ अध्यायः॥
मथुरायां द्वादश वनानि यथा,—
"प्रथमं मधुवनं नाम विष्णुस्थानमनुत्तमम्।
यद्दृष्ट्वा मनुजो देवि सर्व्वान् कामानवाप्नुयात्॥
वनं तालवनञ्चैव द्वितीयं वनमुत्तमम्।
तत्र स्नात्वा नरो देवि कृतकृत्यो हि जायते॥
तृतीयं कुमुदं नाम वनं श्रेष्ठोत्तमं तथा।
तत्र गत्वा नरो देवि कृतकृत्यो हि जायते॥
एकादश्यां कृष्णपक्षे मासि भाद्रपदे हि या।
तत्र स्नातो नरो देवि रुद्रलोके महीयते॥
चतुर्थं काम्यकवनं वनानां वनमुत्तमम्।
तत्र गत्वा नरो देवि मम लोके महीयते॥
विमलस्य च कुण्डे तु सर्व्वैः पापैः प्रमुच्यते।
यस्तु प्रमुञ्चते प्राणान् मम लोकं स गच्छति॥
पञ्चमं बहुलवनं वनस्थानमनुत्तमम्।
तत्र गत्वा नरो देवि अग्निस्थानं स गच्छति॥
यमुनायाः परे पारे देवानामपि दुर्लभम्।
अस्ति भद्रवनं नाम षष्ठं वनमनुत्तमम्॥
तत्र गत्वा तु वसुधे मद्भक्तो मत्परायणः।
तद्वनस्य प्रभावेण नागलोकं स गच्छति॥
सप्तमन्तु वनं भूमे खादिरं लोकविश्रुतम्।
तत्र गत्वा नरो भद्रे मम लोकं स गच्छति॥
महावनं चाष्टमन्तु सदैव तु मम प्रियम्।
तस्मिन् स्नात्वा तु मनुजो इन्द्रलोके महीयते॥
लोहजं दशमं नाम लोहजङ्घेन रक्षितम्।
नवमन्तु वनं देवि महापातकनाशनम्॥
वनं विल्ववनं नाम दशमं देवपूजितम्।
तत्र गत्वा तु मनुजो ब्रह्मलोके महीयते॥
एकादशन्तु भाण्डीरं योगिनां प्रियमुत्तमम्।
तस्य दर्शनमात्रेण नरो गर्भं न गच्छति।
भाण्डीरं समनुप्राप्य वनानां वनमुत्तमम्॥
वासुदेवं ततो दृष्ट्वा पुनर्जन्म न विद्यते॥
वृन्दावनं द्वादशमं वृन्दया परिरक्षितम्।
मम चैव प्रियं भूमे महापातकनाशनम्॥
वृन्दावनस्थं गोविन्दं ये पश्यन्ति वसुन्धरे।
न ते यमपुरं यान्ति वैकुण्ठं प्राप्नुयुर्नराः॥"
इति वाराहे मथुरातीर्थवनद्वादशकवर्णनं नामाध्यायः॥ *॥ वनविशेषे मरणफलं यथा,—
"यदेव कथितं पुण्यं मया ब्रह्ममुखाच्युतम्।
तत् समग्रं भवेत्तस्य अरण्येष्वपरेषु च॥
अरण्यानि प्रवक्ष्यामि तथा चैवोत्तराणि च।
सैन्धव दण्डकारण्यं नैमिषं कुरुजाङ्गलम्॥
उपलावृतमारण्यं जम्बुमार्गोऽथ पुष्करम्।
हिमवानस्ततोऽरण्य उत्तमः परिकीर्त्तितः॥
नवस्वेतेष्वरण्येषु यस्तु प्राणान् परित्यजेत्।
ब्रह्मलोकातिथिर्भूत्वा स याति परमं पदम्॥"
इति देवीपुराणे अरण्यादिप्रशंसा॥ *॥
अरण्ये वर्णनीयानि यथा,—
"अरण्येऽहिवराहेभमहिषसिंहादयो द्रुमाः।
शुककाककपोताद्या भिल्लभल्लूकदावदयः॥"
उद्याने वर्णनीयानि यथा,—
"उद्याने सरितः सर्व्वफलपुष्पलताद्रुमाः।
पिकालिकेकिहंसाद्याः क्रीडावाप्यध्वगस्थितिः॥"
इति कविकल्पलतायाम् १ स्तवके ३ कुसुमम्॥ (शङ्कराचार्य्यशिष्यस्य हस्तामलकस्य शिष्याणामुपाधिविशेषे, पुं। यदुक्तं प्राणतोषिण्यामवधूतप्रकरणे।
"सुरम्ये निर्झरे देशे वने वासं करोति यः।
आशापाशविनिर्मुक्तो वननामा स उच्यते॥")

वनं, क्ली, (वन्यते सेव्यते इति। वन्+"पुंसि संज्ञायां घः प्रायेण।" ३।३।११८। घः। इति निघण्टौ देवराजयज्वा। १।१२।९।) जलम्। (यथा, रघुः। ९। २९।
"नमयति स्म स केवलमुन्नतं
वनमुचे नमुचेररये शिरः॥")
निवासः। आलयः। इति मेदिनी। ने, १९॥ (चमसः। यथा, ऋग्वेदे। २।१४।९।
"अध्वर्य्यवः कर्म्मणा शुष्टिमस्मै वने निपूतं वन उन्नयध्वम्॥"
"वने संभजनीये वने उदके निपूतमाप्यायनेन शोधितं सोमसुन्नयध्वमूर्द्धं नयत। यद्वा वने तद्विकारे चमसे निपूतं दशापवित्रेण शोधितं सोमं वने चमसे उन्नयध्वम्।" इति तद्भाष्ये सायणः॥) प्रस्रवणम्। इति हेमचन्द्रः॥ (रश्मिः। इति निघण्टुः। १।५।८॥ "वन षण सम्भक्तौ भ्वादिः परस्मैपदी। पुंसि संज्ञायां घः। वन्यते सेव्यते शीतादिनिवारणाय। अथवा वनतिर्हिंसार्थः। वन्यते हिंस्यतेऽनेन तमः। यद्वा, वनु याचने तनादिरात्मने भाषा। वन्यते याच्यते दृष्टिप्रदानाय। यद्वा, वनशब्दे भ्वादिः परस्मैपदी वनति शब्दते क्वायते क्लोऽस्मिन्।" इति तत्र देवराजयज्वा॥ यथा, ऋग्वेदे। १।२४।७।
"अबुध्ने राजा वरुणो वनस्य॥")

वनकदली, स्त्री, (वनोद्भवा कदली।) काष्ठकदली। इति राजनिर्घण्टः॥ (विवृतिरस्याः काष्ठकदलीशब्दे ज्ञातव्या॥)

वनकन्दः, पु, (वनजातः कन्दः।) वनशूरणः। धरणीकन्दः। इति राजनिर्घण्टः॥

वनकार्पासी, स्त्री, (वनोद्भवा कार्पासी।) वनोद्भवकार्पासः। तत्पर्य्यायः। भिण्डी २ भारद्वाजी ३ वनोद्भवा ४। इति रत्नमाला॥

वनकोलिः, स्त्री, (वनोद्भवा कोलिः।) वनजबदरी। तत्पर्य्यायः। कर्कन्धिका २ फलकर्कशा ३। इति कौशिकागरम्॥

वनगोचरः, पुं, (वनं गोचरो देशो यस्य।) व्याधः। इति केचित्॥ (वनं जलं गोचरो निवासस्थानं यस्य। नारायणः। इति भागवतटीकायां श्रीधरस्वामी। ३।१८।३॥ त्रि, जलचरः। यथा, भागवते। ३।१८।७।
"मृगान्तमस्त्या स्वरुचोऽनुगामिया
जहास चाहो वनगोचरो मृगः॥"
काननविहारी। यथा, मनुः। ८। २५९।
"सामन्तानामभावे तु मौलानां सीम्नि साक्षिणाम्।
इमानप्युपयुञ्जीत पुरुषान् वनगोचरान्॥")

वनगौः, स्त्री, (वनस्य गौः।) गवयः। इति राजनिर्घण्टः॥

वनचन्दनं, क्ली, (वनजातं चन्दनम्।) अगुरु। देवदारु। इति विश्वः॥

वनचन्द्रिका, स्त्री, (वने चन्द्रिका ज्योत्स्नेव।) मल्लिका। इति राजनिर्घण्टः॥

वनचम्पकः, पुं, (वनजातश्चम्पकः। शाकपार्थिववत् समासः।) वनजचम्पकपुष्पवृक्षः। तत्पर्य्यायः। वनदीपः २ हेमाङ्कः ३ सुकुमारः ४। अस्य गुणाः। कटुत्वम्। उष्णत्वम्। वातकफनाशित्वम्। वर्ण्यत्वम्। चक्षुष्यत्वम्। व्रणदीपनत्वम्। वयःस्तम्भकारित्वञ्च। इति राजनिर्घण्टः॥

वनच्छागः, पुं, (वनस्य छागः ।) अरण्यच्छागलः । तत्पर्य्यायः । शकुकः २ शिशुवाहकः ३ । इति त्रिकाण्डशेषः ॥ (वने छाग इव ।) शूकरः । इति शब्दमाला ॥

वनजं, क्ली, (वने जले जायते इति । जन + डः ।) अम्बुजम् । इति मेदिनी । जे, २८ ॥ (यथा, रघुः । ५ । ७३ ।

"दीर्घिकासु नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्ष ! वनायुदेश्याः ।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥"

जलजाते वनोद्भवे च त्रि । यथा, रामायणे । २ । ५४ । ७ ।

"शक्यन्ति परिभिन्नानि वनजैरुपजीविभिः ॥")

वनजः, पुं, (वने जले अरण्ये वा जायते इति । जन + डः ।) मुस्तकः । इति मेदिनी । जे, २८ ॥ गजः । इति विश्वः ॥ वनमूरणः । इति राजनिर्घण्टः ॥ (तुम्बुरुफलम् । तत्पर्य्यायो यथा,—
"तुम्बुरुः सौरभः सौरो वनजः मातुलोऽन्धजः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

वनजा, स्त्री, (वने जायते इति । जन + डः । टाप् ।) मुद्गपर्णी । इति मेदिनी । जे, २८ ॥ अरण्यकार्पासी । वन्योपोदकी । अश्वगन्धा । गन्धपत्रा । मिश्रेया । ऐन्द्रम् । इति राजनिर्घण्टः ॥

वनजीरः, पुं, (वनोद्भवो जीरः ।) वनोद्भवजीरकः । तत्पर्य्यायः । ह्रस्वपाली २ स्वल्पपत्रः ३ अरण्यजीरः ४ कणः ५ । अस्य गुणाः । कटुत्वम् । शीतत्वम् । व्रणनाशित्वञ्च । इति राजनिर्घण्टः ॥

वनतिक्तः, पुं, (वनेषु वनोद्भवेषु तिक्तः ।) हरीतकी । इति शब्दमाला ॥

वनतिक्ता, स्त्री, (वनेषु वनोद्भवेषु मध्ये तिक्ता ।) वनतिक्तिका । इति रत्नमाला ॥

वनतिक्तिका, स्त्री, (वनतिक्ता + कन् । टापि अत इत्वम् ।) पाठा । इत्यमरः । २ । ४ । ८४ ॥ (गुणादिकमस्याः पाठाशब्दे ज्ञेयम् ॥)

वनदः, पुं, (वनं जलं ददातीति । दा + कः ।) मेघः । इति शब्दमाला ॥ वनदातरि, त्रि ॥

वनदमनः, पुं, (वनजातो दमनः ।) अरण्यदमनः । इति राजनिर्घण्टः ॥

वनदीपः, पुं, (वनस्य दीप इव ।) वनचम्पकः । इति राजनिर्घण्टः ॥

वनधेनुः, पुं, (वनस्य धेनुरिव ।) गवयी । इति राजनिर्घण्टः ॥

वनपल्लवः, पुं, (वनमिव विविक्तः पल्लवो यस्य ।) शोभाञ्जनवृक्षः । इति जटाधरः ॥ अरण्यपल्लवश्च ॥

वनपांशुलः, पुं, (वने पांशुलः पापिष्ठः ।) व्याधः । इति शब्दरत्नावली ॥

वनपिप्पली, स्त्री, (वनोद्भवा पिप्पली ।) वनोद्भवपिप्पली । तत्पर्य्यायः । सूक्ष्मपिप्पली २ क्षुद्रपिप्पली ३ वनकणा ४ । अस्या गुणाः । कटुत्वम् । उष्णत्वम् । तीक्ष्णत्वम् । रुच्यत्वम् । दीपनत्वम् । सा आमा गुणाढ्या । शुष्का स्वल्पगुणा । इति राजनिर्घण्टः ॥

वनपुष्पा, स्त्री, (वनमिव निविडं पुष्पं यस्याः । टाप् ।) शतपुष्पा । इति राजनिर्घण्टः ॥ (शतपुष्पाशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

वनपूरकः, पुं, (वनजातः पूरको बीजपूरकः ।) वनबीजपूरकः । इति राजनिर्घण्टः ॥

वनप्रियं, क्ली, (वनेषु वनजातेषु मध्ये प्रियम् ।) त्वचम् । इति राजनिर्घण्टः ॥

वनप्रियः, पुं, (वनं प्रियं यस्य ।) कोकिलः । इत्यमरः । २ । ५ । १९ ॥ (यथा,—

"अयि वनप्रिय निष्ठुर एव किं
बलिभुजो निवसन् भवनाधुना ।
यदनयैव कुहूरिति विद्यया
न पततस्त्वरणौ धरणौ तव ॥"

इत्युद्भटः ॥)

अरण्यप्रियमात्रे, त्रि ॥

वनबीजः, पुं, (वनस्य वनोद्भवो वा बीजो बीजपूरकः ।) वनबीजपूरकः । इति राजनिर्घण्टः ॥

वनबीजकः, पुं, (वनबीज + स्वार्थे कन् ।) वनबीजपूरकः । इति राजनिर्घण्टः ॥

वनबीजपूरकः, पुं, (वनोद्भवो बीजपूरकः ।) अरण्यजातबीजपूरः । तत्पर्य्यायः । वनजः २ वनबीजकः ३ वनबीजः ४ अत्यम्ला ५ गन्धाढ्या ६ वनोद्भवा ७ देवदूती ८ पीता ९ देवदासी १० देवेष्टा ११ मातुलुङ्गिका १२ पवनी १३ महाफला १४ । अस्य गुणाः । अम्लत्वम् । कटुत्वम् । उष्णत्वम् । रुचिप्रदत्वम् । वातामदोषकृमिकफश्वासनाशित्वञ्च । इति राजनिर्घण्टः ॥

वनभद्रिका, स्त्री, (वने भद्रं यस्याः । ततः टापि अत इत्वम् ।) भद्रबला । इति केचित् ॥

वनभुक्, [ज्] पुं, (वनं भुङ्क्ते इति । वन + भुज + क्विप् ।) ऋषभौषधम् । इति शब्दचन्द्रिका ॥

वनमक्षिका, स्त्री, (वनस्य मक्षिका ।) दंशः । इत्यमरः । २ । ५ । २७ ॥

वनमल्ली, स्त्री, (वनोद्भवा मल्ली ।) वनोद्भवमल्लिका । इति शब्दरत्नावली ॥

वनमाला, स्त्री, (वनोद्भवपुष्परचिता माला । मध्यपदलोपिसमासः ।) श्रीकृष्णस्य माला । तत्स्वरूपं यथा,—

"आजानुलम्बिनी माला सर्व्वर्त्तुकुसुमोज्ज्वला ।
मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्त्तिता ॥"

इति शब्दमाला ॥

(वनपुष्पस्रक् । यथा, रघुः । ९ । ५१ ।

"ग्रथितमौलिरसौ वनमालया
तरुपलाशसवर्णतनुच्छदः ॥")

वनमालिनी, स्त्री, (वनमाला अस्त्यस्यामिति । इनिः । ङीप् ।) द्वारकापुरी । इति त्रिकाण्डशेषः ॥ वाराही । इति राजनिर्घण्टः ॥

वनमाली, [न्] पुं, (वनमाला अस्त्यस्येति । इनिः ।) श्रीकृष्णः । इत्यमरः । १ । १ । २१ ॥ (नारायणः । यथा, प्रद्युम्नविजये । ३ अङ्के ।

"कमलयामलया वनमालिनं
गिरिजया गिरिशञ्च निशा विधुम् ।
सुविरता परियोजयतो विधे-
श्चतुरता शुभरूपसमागमे ॥")

वनमुक्, [च्] पुं, (वनं जलं मुञ्चतीति । मुच् + क्विप् ।) मेघः । इति शब्दरत्नावली ॥ (जलवर्षिणि, त्रि । इति रघुः । ६ । २२ ॥)

वनमुद्गः, पुं, (वनोद्भवो मुद्गः ।) मुकुष्टकः । इत्यमरः । २ । ९ । १७ ॥ तत्पर्य्यायः । वरकः २ निगूढकः ३ कुलीनकः ४ खण्डी ५ । इति हेमचन्द्रः । ४ । २३९ ॥ अस्य अन्यपर्य्यायगुणौ मुकुष्टमकुष्टकशब्दयोर्द्रष्टव्यौ ॥ (यथा, सुश्रुते । १ । ४६ ।
"वनमुद्गकलायमकुष्टमसूरमङ्गल्यचणकसतीनत्रिपुटकहरेणुआढकीप्रभृतयो वैदलाः ॥")

वनमुद्गा, स्त्री, (वनमुद्ग + टाप् ।) मुद्गपर्णी । इति राजनिर्घण्टः ॥

वनमूतः, पुं, मेघः । वनं जलं मूतं बद्धं अनेन वनं मुष्णाति इति वा मनीषादिः । इत्यमरटीकायां भरतधृतजीमूतशब्दव्युत्पत्तिदर्शनात् ॥

वनमूर्द्धजा, स्त्री, (वनस्य मूर्द्धि जायते इति । जन् + डः ।) वनबीजपूरकः । इति राजनिर्घण्टः ॥

वनमोचा, स्त्री, (वनोद्भवा मोचा ।) काष्ठकदली । इति राजनिर्घण्टः ॥

वनरः, पुं, (वानरः । पृषोदरादित्वात् ह्रस्वे साधुः ।) वानरः । इति भरतद्विरूपकोषः ॥

वनराजः, पुं, (वनस्य वने वा राजा । "राजाहःसखिभ्यष्टच् ।" ५ । ४ । ९१ । इति टच् ।) सिंहः । इति शब्दमाला ॥ वनस्य राजा च ॥

वनलक्ष्मीः, स्त्री, (वनस्य लक्ष्मीः शोभा ।) कदली । इति राजनिर्घण्टः ॥

वनवर्व्वरः, पुं, (वनोद्भवो वर्व्वरः ।) कृष्णार्जकः । इति राजनिर्घण्टः ॥

वनवर्व्वरिका, स्त्री, (वनजाता वर्व्वरिका ।) अरण्यजवर्व्वरी । बनबाबुइ इति भाषा । तत्पर्य्यायः । सुगन्धिः २ सुपत्रकः ३ दीर्घमञ्जरी ४ विषघ्नः ५ सुमुखः ६ सूक्ष्मपत्रकः ७ निद्रालुः ८ शोफहारी ९ सुवक्त्रः १० । अस्य गुणाः । उष्णत्वम् । सुगन्धित्वम् । पित्ताश्ववान्तिभूतघ्नत्वम् । घ्राणसन्तर्पणत्वञ्च । इति राजनिर्घण्टः ॥

वनवल्लरी, स्त्री, (वनोद्भवा वल्लरी ।) निःश्रेणिकातृणम् । इति राजनिर्घण्टः ॥

वनवह्निः, पुं, (वनस्य वनोद्भवो वा वह्निः ।) दावानलः । इति हेमचन्द्रः । ४ । १६७ ॥ (यथा, कथासरित्सागरे । ५६ । ३४३ ।

"कृष्णारुणप्रभाजालजटिलं वनवह्निना ।
गृहीतमिव तमोच्छेतिहस्तेन नर्त्तनि ॥")

वनवासनः, पुं, (वनं वासयति गन्धेनेति । वासि + ल्युः ।) खट्टाशः । इति त्रिकाण्डशेषः ॥

वनवासी, [न्] पुं, (वनं वासयति सुरभीकरोतीति । वासि + णिनिः । ) ऋषभनामौषधम् । सुष्ककन्दः । वाराहीकन्दः । शाल्मलीकन्दः । नीलमहिषकन्दः । इति राजनिर्घण्टः ॥ (वने वसतीति । वस् + णिनिः ।) वनवासकर्त्तरि, त्रि ॥ ( यथा, मनुः । ६ । २७ ।
"तापसेष्वेव विप्रेषु यात्रिकं भैक्ष्यमाहरेत् ।
गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ॥")

वनवृन्ताकी, स्त्री, ( वनस्य वृन्ताकी वार्त्ताकी । ) वृहती । इति राजनिर्घण्टः ॥

वनव्रीहिः, पुं, ( वनस्य व्रीहिः । ) नीवारः । इति हेमचन्द्रः । ४ । २४२ ॥

वनशूकरी, स्त्री, (वनस्य शूकरीव रोमशत्वात् मांसलत्वाच्च ।) कपिकच्छुः । इति राजनिर्घण्टः ॥ (वनस्य शूकरी ।) आरण्यवराही च ॥

वनशूरणः, पुं, (वनजातः शूरणः ।) वनोद्भवोलः । वन ओल इति भाषा । तत्पर्य्यायः । सितशूरणः २ वन्यः ३ वनकन्दः ४ अरण्यशूरणः ५ वनजः ६ श्वेतशूरणः ७ वनकन्दलः ८ । अस्य गुणाः । रुच्यत्वम् । कटुत्वम् । उष्णत्वम् । क्रिमिगुल्मशूलादिदोषसर्व्वारोचकनाशित्वञ्च । इति राजनिर्घण्टः ॥

वनशृङ्गाटः, पुं, ( वनस्य शृङ्गाट इव कण्टकाढ्यत्वात् ।) गोक्षुरकः । इत्यमरः । २ । ४ । ९९ ॥ (अस्य पर्य्यायो यथा,—
"गोक्षुरः क्षुरकोऽपि स्यात् त्रिकण्टः स्वादुकण्टकः ।
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ॥
पलङ्कषा श्वदंष्ट्रा च तथा स्यादिक्षुगन्धिका ।"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

वनशृङ्गाटकः, पुं, ( वनशृङ्गाट + स्वार्थे कन् । ) गोक्षुरकः । इति राजनिर्घण्टः ॥

वनशोभनं, क्ली, (वनं जलं शोभयतीति । शुभ + णिच् + ल्युः । ) पद्मम् । इति शब्दचन्द्रिका ॥ वनस्य शोभाकर्त्तरि, त्रि ॥

वनश्वा, [न्] पुं, ( वनस्य वने वा श्वा कुक्कुरः । ) गन्धमार्जारः । वृकः । व्याघ्रः । इति मेदिनी । ने, २०७ ॥

वनसङ्कटः, पुं, ( वने सङ्कटो वाहुल्यं यस्य । ) मसूरः । इति शब्दचन्द्रिका ॥

वनसमूहः, पुं, ( वनानां समूहः । ) अरण्यसंहतिः । तत्पर्य्यायः । वन्या २ । इत्यमरः । २ । ४ । ४ ॥ वान्या ३ । इति शब्दरत्नावली ॥ जलसमूहश्च ॥

वनसरोजिनी, स्त्री, ( वनस्य सरोजिनी पद्मिनीव शोभाकरत्वात् । ) वनकार्पासी । इति शब्दरत्नावली ॥

वनस्थः, पुं, (वने तिष्ठतीति । स्था + कः ।) मृगः । इति शब्दचन्द्रिका ॥ (वानप्रस्थः । यथा, मनुः । ५ । १३७ ।
"एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं स्याद्वनस्थानां यतीनान्तु चतुर्गुणम् ॥")

वनवासिनि, त्रि ॥ (यथा, हरिवंशे । १५२ । २१ ।
"प्रवृत्तचक्रो नृपतिर्वनस्थान्
गजान् गजैः स्वैरिव वीर्य्यदीप्तान् ॥")

वनस्था, स्त्री, ( वने तिष्ठति या । स्था + कः । टाप् । ) अश्वत्थीवृक्षः । इति राजनिर्घण्टः ॥

वनस्पतिः, पुं, ( वनस्य पतिः । पारस्करादित्वात् सुट् । ) विना पुष्पं फलितद्रुमः । ( यथा, मनुः । १ । ४७ ।
"अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः ॥")
वृक्षमात्रम् । इति मेदिनी । ते, २१६ ॥ (यथा, महाभारते । १ । १४१ । २६ ।
"कथं नु शाखाच्छिन्नैरङ्गैर्विभ्रमन्ते वनस्पतौ ॥")
श्योनाकवृक्षः । इति राजनिर्घण्टः ॥ ( अस्य पर्य्यायो यथा,—
"मन्दाक्षोऽस्त्यभेदः प्रोक्तो गजपादपः ।
श्योनाकः पयतरुः क्षीरी च स्याद्वनस्पतिः ॥"
इति भावप्रकाशे । १ । १ ॥
घृतपृष्ठस्य पुत्रविशेषः । यथा भागवते । ५ । २० । २१ ॥ "आमो मधुरुहो मेघपृष्ठः सुधामा भ्राजिष्ठो लोहितवर्णो वनस्पतिरिति घृतपृष्ठसुताः ॥" वटवृक्षः ॥ तत्पर्य्यायो यथा,—
"वटो रक्तफलः शृङ्गी न्यग्रोधः स्कन्धजो ध्रुवः ।
क्षीरी वैश्रवणावासो बहुपादो वनस्पतिः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

वनहरिद्रा, स्त्री, ( वनोद्भवा हरिद्रा । ) अरण्यजहरिद्रा । तत्पर्य्यायः । शोली २ शोलिका ३ वनार्द्रा ४ । अस्या गुणाः । कटुत्वम् । गौल्म्यत्वम् । रुच्यत्वम् । तिक्तत्वम् । दीपनत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"अरण्यहलदीकन्दः कुष्ठवातास्रनाशनः ॥"
इति भावप्रकाशः ॥

वनहासः, पुं, ( वनस्य हास इव प्रकाशकत्वात् । ) काशतृणम् । इति त्रिकाण्डशेषः ॥ कुन्दवृक्षः । इति राजनिर्घण्टः ॥

वनहासकः, पुं, ( वनहास + स्वार्थे कन् ।) काशतृणम् । इति शब्दरत्नावली ॥

वनाखुः, पुं, ( वनस्याखुः । ) शशकः । इति त्रिकाण्डशेषः ॥

वनाखुकः, पुं, मुद्गः । इति त्रिकाण्डशेषः ॥

वनाजः, पुं, ( वनस्य अजः । ) वनच्छागः । तत्पर्य्यायः । रङ्गिकः २ शिशुवाहकः ३ एडमूकः ४ । इति हेमचन्द्रः । ४ । ३४४ ॥

वनाटुः, पुं, वर्व्वणा । नीलमक्षिका । इति शब्दचन्द्रिका ॥

वनामलः, पुं, ( वनस्य आमल आमलक इव । ) कृष्णपाकफलः । इति शब्दमाला ॥

वनाम्रः, पुं, ( वनस्य आम्र इव । ) कोशाम्रः । इति राजनिर्घण्टः ॥ ( गुणादिविशेषोऽस्य कोशाम्रशब्दे ज्ञेयः ॥ )

वनायुः, पुं, देशविशेषः । यथा,—
"गजा गयश्च वानायुर्वनायुर्यदुसात्वतम् ।"
इति शब्दरत्नावली ॥
( यथा, महाभारते । ८ । ७ । ११ ।
"आजानेयैः सैन्धवैः पार्व्वतीयै-
र्नदीजकाम्बोजवनायुबाह्लिकैः ॥"
दानवविशेषः । यथा, महाभारते । १ । ६५ । ३० ।
"गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः ॥")

वनायुजः, पुं, ( वनायौ देशे जायते इति । जन + डः । ) वनायुदेशोद्भवघोटकः । अस्य रूपान्तरं वानायुजः । इति शब्दरत्नावली ॥

वनार्द्रा, स्त्री, ( वनजाता आर्द्रेव । ) वनहरिद्रा । इति राजनिर्घण्टः ॥

वनार्च्चकः, पुं, ( वनस्य अर्च्चक इव । नियतपुष्पचायित्वात् तथात्वम् । ) पुष्पजीवी । मालाकारः । इति जटाधरः ॥

वनार्द्रका, स्त्री, ( वनोद्भवा आर्द्रका । ) वनभवार्द्रकम् । इति राजनिर्घण्टः ॥ अस्याः पर्य्यायगुणौ वनार्द्रकशब्दे द्रष्टव्यौ ॥

वनालिका, स्त्री, (वनं जलमलति भूषयतीति । अल + ण्वुल् । टापि अत इत्वम् । ) हस्तिशुण्डी । यथा,—
"वक्रवल्लास्रसंहारी हस्तिशुण्डी वनालिका ।"
इति हारावली । ६५ ॥

वनाश्रयः, पुं, ( वनमेव आश्रयो यस्य । ) द्रोणकाकः । इति जटाधरः ॥ (अरण्याश्रयिणि, त्रि । यथा, मार्कण्डेये । १०६ । ४३ ।
"सौदिव्यत्यखिलो लोकस्त्वयि भूप । वनाश्रये ॥")

वनाहिरः, पुं, ( वनस्य आहिरः । ) शूकरः । इति त्रिकाण्डशेषः ॥

वनिः, पुं, अग्निः । खनि कषि अजि असि वसि सनि ध्वनि ग्रन्थि चलिभ्यश्च । इत्यनेन वनधातोः पूर्व्वानुवृत्त-इप्रत्ययेन निष्पन्नः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः । ४ । १३८ ॥

वनितः, त्रि, ( वन + क्तः । ) याचितः । सेवितः । इति मेदिनी । ते, १४८ ॥

वनिता, स्त्री, (वन + क्त । टाप् ।) जातरागस्त्री । स्त्रीसामान्यम् । इति मेदिनी । ते, १४८ ॥ ( यथा, रघुः । २ । १९ ।
"वशिष्ठधेनोरनुयायिनं त-
मावर्त्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपङ्क्ति-
रुपोषिताभ्यामिव लोचनाभ्याम् ॥")

वनी, स्त्री, वनम् । इत्यमरटीकायां भरतः ॥ (यथा, साहित्यदर्पणे । २ ।
"कैलीवनीयमपि वञ्जुलकुञ्जमञ्जुः ॥")

वनी, [न्] पुं, (वनं आश्रयत्वेनास्त्यस्येति । वन + इनिः । ) वानप्रस्थः । यथा,—
"गृहमेधी शरदसम्पन्नः शौचिवपाध्यां वनेन वनी वर्षासु श्यामाकैरापत्कल्पेऽम्भः पुरातनैर्व्वा ।" इति आह्निकचिन्तामणौ हारीतः ॥

वनीकः, त्रि, याचकः । इत्यमरटीकायां सारसुन्दरी ॥

वनीयकः, त्रि, ( वनिं याचनमिच्छतीति । क्यच् । ततो ण्वुल् ।) याचकः । इत्यमरः । ३ । १ । ४८ ॥

वनेक्षुद्रा, स्त्री, (वने क्षुद्रा । अलुक्समासः ।) करञ्जः । इति रत्नमाला ॥
वनेचरः, त्रि, (वने चरतीति । चर + "चरेष्टः ।" इति टः । तत्पुरुषे कृतीत्यलुक् ।) अरण्यचारी । यथा,—
"वनेचराणां वनितासखानां
दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्या-
मतैलपूराः सुरतप्रदीपाः ॥"
इति कुमारसम्भवे १ सर्गः ॥
वनेज्यः, पुं, (वने इज्यः पूज्यः ।) वङ्गरसालः । इति राजनिर्घण्टः ॥
वनेसर्ज्जः, पुं, (वने सर्ज्ज इव ।) असनवृक्षः । इति रत्नमाला ॥
वनोद्भवा, स्त्री, (वने उद्भवो यस्याः ।) वनकार्पासी । इति रत्नमाला ॥
वनौकाः, [स्] पुं, (वनमेव ओको गृहं यस्य ।) वानरः । इत्यमरः । २ । ५ । ३ ॥ (वनवासिनि, त्रि । यथा, भागवते । ४ । ९ । २१ ।
"धर्म्मोऽग्निः कश्यपः शुक्रो मुनयो ये वनौ-
कसः ।
चरन्ति दक्षिणीकृत्य भ्रमन्तो यत् सतारकाः ॥")
वन्दका, स्त्री, वन्दा । यथा,—
"वन्दाका शेखरी सेव्या वन्दा च वन्दकेष्यते ॥"
इति भरतधृतरुद्रः ॥
वन्दथः, पुं, (वन्दते स्तौति वन्द्यते स्तूयते इति वा । वन्द + "शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ।" इत्यत्र वञ्चीत्यस्य स्थाने वन्दीति पाठोऽपि बहुसम्मतः इत्यतोऽथः ।) स्तोता । स्तुत्यः । वन्दिधातोरथप्रत्ययेन निष्पन्नः । इति सिद्धान्तकौमुदी ॥
वन्दनं, क्ली, (वन्दतेऽनेनेति । वन्द + करणे ल्युट् ।) वदनम् । इति शब्दचन्द्रिका ॥ (वन्द + भावे ल्युट् ।) प्रणामः । स तु षोडशधाभक्त्यन्तर्गतभक्तिविशेषः । यथा । पाद्मोत्तरखण्डे शिवपार्व्वतीसंवादे ।
"आद्यं तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनं हरेः ।
धारणञ्चोर्द्ध्वपुण्ड्राणां तन्मन्त्राणां परिग्रहः ॥
अर्च्चनञ्च जपो ध्यानं तन्नामस्मरणं तथा ।
कीर्त्तनं श्रवणञ्चैव वन्दनं पादसेवनम् ॥
तत्पादोदकसेवा च तन्निवेदितभोजनम् ।
तदीयानाञ्च संसेवा द्वादशीव्रतनिष्ठता ॥
तुलसीरोपणं विष्णोर्द्देवदेवस्य शार्ङ्गिणः ।
भक्तिः षोडशधा प्रोक्ता भवबन्धविमुक्तये ॥"
इति हरिभक्तिविलासे ११ विलासः ॥
षोडशोपचारपूजान्तर्गतशेषोपचारः । यथा,—
"आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्काचमनस्नानवसनाभरणानि च ।
गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा ॥"
इत्याह्निकतत्त्वे आचारचिन्तामणिः ॥ * ॥
अथ वन्दनम् ।
"प्रणमेद्य साष्टाङ्गं तन्मुद्राञ्च प्रदर्शयेत् ।
पठेत् प्रतिप्रणामञ्च प्रसीद भगवन्निति ॥"
तदुक्तमेकादशे श्रीभगवता ।
"स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ।
स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥"
अथ प्रणामविधिः । कालिकापुराणे ।
"यः स्वयं गन्धपद्माभ्यां घटिताभ्यां नमस्कृतिम् ।
शिरो मत्पादयोः कृत्वा बाहुभ्याञ्च परस्परम् ।
प्रपन्नं पाहि मामीश भीतं मृत्युमहार्णवात् ॥"
किञ्चागमे ।
"दोर्भ्यां पद्भ्याञ्च जानुभ्यामुरसा शिरसा दृशा ।
मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥
जानुभ्याञ्चैव बाहुभ्यां शिरसा वचसा धिया ।
पञ्चाङ्गकः प्रणामः स्यात् पूजासु प्रवराविमौ ॥"
इति ॥
"गरुडं दक्षिणे कृत्वा कुर्य्यात्तत्पृष्ठतो बुधः ।
अवश्यञ्च प्रणामांस्त्रीन् शक्तश्चेदधिकाधिकान् ॥"
तथा च नारदपञ्चरात्रे ।
"अग्निं वीक्ष्य हरिं चाग्रे गुरून् स्वगुरुमेव च ।
द्विचतुर्विंशदथवा चतुर्विंशतदर्द्धकम् ।
नमेत्तदर्द्धमथवा तदर्द्धं सर्व्वथा नमेत् ॥"
विष्णुधर्म्मोत्तरे ।
"देवार्च्चादर्शनादेव प्रणमेन्मधुसूदनम् ।
स्नानापेक्षा न कर्त्तव्या दृष्ट्वा द्विजसत्तमाः ।
देवार्च्चादृष्टपूतं हि शुचि सर्व्वं प्रकीर्त्तितम् ॥"
अथ नमस्कारमाहात्म्यम् । नारसिंहे ।
"नमस्कारः स्मृतो यज्ञः सर्व्वयज्ञेषु चोत्तमः ।
नमस्कारेण चैकेन नरः पूतो हरिं व्रजेत् ॥"
स्कान्दे ।
"दण्डप्रणामं कुरुते विष्णवे भक्तिभावितः ।
रेणुसंख्यं वसेत् स्वर्गे शतमन्वन्तरं नरः ॥"
तत्रैव श्रीकृष्णनारदसंवादे ।
"प्रणम्य दण्डवद्भूमौ नमस्कारेण योऽर्च्चयेत् ।
स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥
नमस्कारेण चैकेन नरः पूतो हरिं व्रजेत् ॥"
तत्रैव शिवोमासंवादे ।
"भूमिमापीड्य जानुभ्यां शिर आरोप्य वै भुवि ।
प्रणमेत् यो हि देवेशं सोऽश्वमेधफलं लभेत् ॥"
तत्रैवान्यत्र ।
"तीर्थकोटिसहस्राणि तीर्थकोटिशतानि च ।
नारायणप्रणामस्य कलां नार्हन्ति षोडशीम् ॥
शाठ्येनापि नमस्कारं कुर्व्वतः शार्ङ्गधन्विने ।
शतजन्मार्ज्जितं पापं तत्क्षणादेव नश्यति ॥
रेणुगुण्ठितगात्रस्य कणा देहे भवन्ति ये ।
तावद्वर्षसहस्राणि विष्णुलोके महीयते ॥"
विष्णुधर्म्मोत्तरे ।
"अभिवाद्य जगन्नाथं कृतार्थश्च तथा भवेत् ।
नमस्कारक्रिया तस्य सर्व्वपापप्रणाशिनी ॥
जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः ।
कृत्वा प्रणामं देवस्य सर्व्वान् कामानवाप्नुयात् ॥"
ब्रह्मपुराणे ।
"अनादिनिधनं देवं दैत्यदानवदारणम् ।
ये नमन्ति नरा नित्यं नहि पश्यन्ति ते यमम् ॥
ये जना जगतां नाथं नित्यं नारायणं द्विजाः ।
नमन्ति नहि ते विष्णोः स्थानादन्यत्र गामिनः ॥"
नारदीये ।
"एकोऽपि कृष्णस्य कृतप्रणामो
दशाश्वमेधावभृथैर्न तुल्यः ।
दशाश्वमेधी पुनरेति जन्म
कृष्णप्रणामी न पुनर्भवाय ॥"
भक्तिसुधोदये ।
"विष्णोर्द्देवप्रणामार्थं भक्तेन पतता भुवि ।
पातितं पातकं कृत्स्नं नोत्तिष्ठति पुनः सह ॥
अपि पापं दुराचारं नरं त्वत्प्रणतं हरे ।
नेक्षन्ते किङ्करा याम्या उलूकास्तपनं यथा ॥"
श्रीविष्णुपुराणे । श्रीयमस्य निजभटानुशासने ।
"हरिममरगणार्च्चिताङ्घ्रिपद्मं
प्रणमति यः परमार्थतो हि मर्त्त्यः ।
तमपगतसमस्तपापबन्धं
व्रज परिहृत्य यथाग्निमाज्यसिक्तम् ॥"
ब्रह्मवैवर्त्ते ।
"शरणागतरक्षणोद्यतं
हरिमीशं प्रणमन्ति ये नराः ।
न पतन्ति भवाम्बुधौ स्फुटं
पतितानुद्धरति स्म तानसौ ॥"
अष्टमस्कन्धे च बलिवाक्ये ।
"अहो प्रणामाय कृतः समुद्यमः
प्रपन्नभक्तार्थविधौ समाहितः ।
यल्लोकपालैस्त्वदनुग्रहोऽमरै-
रलब्धपूर्व्वोऽपसदेऽसुरेऽर्पितः ॥"
अतएव नारायणव्यूहस्तवे ।
"अहो भाग्यमहो भाग्यमहो भाग्यं नृणा-
मिदम् ।
येषां हरिपदाब्जाग्रे शिरो न्यस्तं यथा तथा ॥"
किञ्च नारसिंहे श्रीयमोक्तौ ।
"तस्य वै नारसिंहस्य विष्णोरमिततेजसः ।
प्रणामं ये प्रकुर्व्वन्ति तेषामपि नमो नमः ॥"
भविष्योत्तरे च जलधेनुप्रसङ्गे ।
"विष्णोर्द्देवजगद्धातुर्ज्जनार्द्दनजगत्पतेः ।
प्रणामं ये प्रकुर्व्वन्ति तेषामपि नमो नमः ॥"
इत्यादि ॥ * ॥
अथ प्रणामनित्यता । बृहन्नारदीये तु रुक्मो-पाख्यानारम्भे ।
"सकृद्वा न नमेद्यस्तु विष्णवे शर्म्मकारिणे ।
शवोपमं विजानीयात् कदाचिदपि नालपेत् ॥"
किञ्च पाद्मे । वैशाखमाहात्म्ये यमब्राह्मणसंवादे ।
"प्रणमन्तो भगवद्द्वारं नामश्रवपरिच्छदम् ।
अकृत्वा तत्प्रणामादि यान्ति ते नरकौकसः ॥"
अथ नमस्कारनिषिद्धानि । विष्णुस्मृतौ ।
"जन्मप्रभृति यत्किञ्चित् पुमान् वै धर्म्ममाचरेत् ।
सर्व्वं तन्निष्फलं याति एकहस्ताभिवादनात् ॥"
वाराहे ।
"वस्त्रप्रावृतदेहस्तु यो नरः प्रणमेत माम् ।
श्वित्री स जायते मूर्खः सप्तजन्मनि भामिनि ॥"

विधानञ्च ।
"जपे एवं वामभागे समीपे गर्भमन्दिरे ।
जपहोमनमस्कारान् न कुर्य्यात् केशवालये ॥"
अपि च ।
"सकृद्भूमौ निपतितो न शक्तः प्रणमेत्सकृत् ।
उत्थायोत्थाय कर्त्तव्यं दण्डवत् प्रणिपातनम् ॥
ततः प्रदक्षिणां कुर्य्यात् भक्त्या भगवतो हरेः ।
नामानि कीर्त्तयन् शक्तौ नाथ चाष्टाङ्गवन्द-
नाम् ॥"
इति हरिभक्तिविलासे ८ विलासः ॥ * ॥
अन्यत् नमस्कारशब्दे प्रणामशब्दे च द्रष्टव्यम् ॥
(विषविशेषः । यथा, ऋग्वेदे । ७ । ५१ । २ ।
"यदिन्नामन् पदवि वन्दनं भुवत् ॥"
असुरः । रक्षोविशेषः । इति ऋग्भाष्ये
सायणः । ७ । ११ । ५ ॥ )
वन्दनमाला, स्त्री, ( वन्दनायां माला यत्र सा । )
तोरणम् । इति हलायुधः । २ । १४६ ॥
( वन्दनायां माला इति कर्म्मधारये । ) रम्भा-
स्तम्भचतुष्टयवेष्टिताम्रपत्ररचितमाला । यथा,
"कुर्य्याद्वन्दनमालां यो रम्भास्तम्भैः सुशोभनैः ।
चतुष्कोद्भवैः पत्रैर्गारे चक्रपाणिनः ॥
युगानि पत्रसंख्यानां स्वर्गे तस्योत्सवो भवेत् ।
पूज्यते वासवाद्यैश्च क्रीडते चाप्सरोगणैः ॥"
इति हरिभक्तिविलासे १३ विलासः ॥
वन्दनमालिका, स्त्री, (वन्दनमाला + स्वार्थे कन् ।)
बहिर्द्वारोपरि शुभदा माला । यथा,—
"तोरणोर्द्ध्वे तु मङ्गल्यं दामवन्दनमालिका ॥"
इति हेमचन्द्रः ।४।७४॥
वन्दना, स्त्री, ( वन्द + "घट्टिवन्दिविदिभ्यश्चेति
वाच्यम् ।" ३ । ३ । १०७ । इत्यस्य वार्त्तिकोक्त्या
युच् । टाप् ।) स्तुतिः । तत्पर्य्यायः । वर्णना २ ।
इति त्रिकाण्डशेषः ॥ होमभस्मना तिलकम् ।
यथा,—
"ऐशान्यामाहरेद्भस्म स्रुचा वाथ स्रुवेण वा ।
वन्दनां कारयेत्तेन शिरःकण्ठांशकेषु च ।
कश्यपस्येतिमन्त्रेण यथानुक्रमयोगतः ॥"
इति तिथ्यादितत्त्वे वशिष्ठवचनम् ॥
वन्दनी, स्त्री, ( वन्द + ल्युट् । ङीप् । ) गतिः ।
जीवातुः । वटी । याचनकर्म्म । इति मेदिनी ।
ने, ६७॥ क्वचित् पुस्तके वटीस्थाने कटी याचन-
कर्म्मस्थाने आचनकर्म्म इति च पाठः । तत्र तु
पवर्गीयबकारादौ लिखितोऽयं शब्दः । किन्तु
वदि ङ स्तुत्यभिवादयोरित्यस्मात् अनट्प्रत्यय-
निष्पन्नत्वात् अन्तःस्थवकारादौ लिखितः ॥
वन्दनीयः, त्रि, ( वदि + अनीयर् । ) स्तवनीयः ।
वन्द्यः । वन्दितव्यः । वदधातोरनीयप्रत्ययेन
निष्पन्नः ॥ ( यथा, महाभारते । ७।८०।३० ।
"ततः शुक्लाम्बरमाल्याढ्य जानुभ्यां भूतले स्थितः ।
शिरसा वन्दनीयं तमभिवन्द्य जगत्पतिम् ॥")
वन्दनीयः, पुं, ( वन्दते भेषजार्थं स्तूयते इति ।
वदि + अनीयर् ।) पीतभृङ्गराजः । इति राज-
निर्घण्टः ॥



वन्दनीया, स्त्री, ( वदि + कर्म्मणि अनीयर् ।
टाप् । ) गोरोचना । इति त्रिकाण्डशेषः ॥
( विवृतिरस्या गोरोचनाशब्दे विज्ञेया ॥ )
वन्दा, स्त्री, ( वन्दते अपरवृक्षमिति । वदि +
अच् । टाप् । ) वृक्षोपरिवृक्षः । बाँदु इति
परगाछा । इति च भाषा । तत्पर्य्यायः । वृक्षा-
दनी २ वृक्षरुहा ३ जीवन्तिका ४ । इत्यमरः ॥
वन्दाका ५ शेखरी ६ सेया ७ वन्दका ८ ।
इति भरतधृतचन्द्रः ॥ वन्दकः ९ नीलवल्ली १०
इति रत्नमाला ॥ वन्दाकी ११ परवासिका १२
इति शब्दरत्नावली ॥ वशिनी १३ पुष्पिणी १४
वन्ध्या १५ परपुष्टा १६ पराश्रया १७ । इति
शब्दचन्द्रिका ॥ लताविशेषः । भिक्षुकी । इति
मेदिनी । दे, १०॥ अस्याः पर्य्यायान्तरं गुणाश्च
वन्दाकशब्दे द्रष्टव्याः ॥
वन्दाकः, पुं, वृक्षोपरिवृक्षः । बाँदा इति हिन्दी
भाषा । तत्पर्य्यायः । पादपरुहा २ शिखरी ३
तरुरोहिणी ४ वृक्षादनी ५ वृक्षरुहा ६ काम-
वृक्षः ७ शेखरी ८ केशरूपा ९ तरुरुहा १०
तरुस्था ११ गन्धमादनी १२ कामिनी १३
तरुभुक् १४ श्यामा १५ उपरी १६ । अस्य
गुणाः । तिक्तत्वम् । शिशिरत्वम् । कफपित्त-
श्रमापहत्वम् । वश्यादिसिद्धिदत्वम् । वृष्यत्वम् ।
कषायत्वम् । रसायनत्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।
"वन्दाकः स्याद्धिमस्तिक्तः कषायमधुरो रसे ।
मङ्गल्यः कफवातास्ररक्षोव्रणविषापहः ॥"
इति भावप्रकाशः ॥
वन्दाका, स्त्री, वन्दा । इति भरतधृतचन्द्रः ॥
वन्दाकी, स्त्री, वन्दा । इति शब्दरत्नावली ॥
वन्दारुः, त्रि, ( वन्दते स्तौति अभिवादयतीति ।
वन्द + "शृवन्द्योरारुः ।" ३ । २ । १७३ । इति
आरुः । ) वन्दनशीलः । तत्पर्य्यायः । अभि-
वादकः २ । इत्यमरः । ३ । १ । २८ ॥ अभि-
वादयिता ३ । इति शब्दरत्नावली ॥ ( यथा,
ऋग्वेदे । १ । १४७ । २ ।
"पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते
तन्वं वन्दे अग्ने ॥"
स्तोता, स्त्री । इति ऋग्वेदभाष्ये सायणः । ४ ।
४३ । १ ॥ )
व(ब)न्दिः, स्त्री, ( वन्दते स्तौति कृपादिकं समु-
ल्लर्षयतिमिति । वदि + "सर्व्वधातुभ्य इन् ।" उणा०
४ । ११७ । इति इन् ।) आक्रम्यमनुष्यग्रहादिः ।
कयेदी इति भाषा । तत्पर्य्यायः । प्रग्रहः २
उपग्रहः ३ वन्दी ४ । इत्यमरभरतौ ॥ वन्दिका
५ । इति शब्दरत्नावली ॥ सोपानकः । इत्यु-
णादिकोषः ॥ ( स्तवः । यथा, भागवते । ६ ।
२ । २९ ।
"बन्दीभिः कैतवैश्चौर्य्यैर्गर्हिता वृत्तिमाश्रितः ॥"
पुं, स्तुतिपाठकः । यथा, हरिवंशे । ११२ ।
५० ।
"सूतमागधवन्दीनामेकैकस्य बहुविकम् ॥")

व(ब)न्दिग्राहः, पुं, (वन्दिमिव गृहस्थं गृह्णातीति ।
ग्रह + अण् । ) अस्त्रागारदेवतागारभेदकः ।
( डाकात इति भाषा ॥ ) यथा,—
"वन्दिग्राहांस्तथा वाजिकुञ्जराणाञ्च हारिणः ।
प्रसह्यघातिनश्चैव शूलामारोपयेन्नरान् ॥
वन्दिग्राहादीन् बलावष्टम्भेन घातकांश्च नरान्
शूलामारोपयेत् । अयञ्च वधप्रकारविशेषो-
पदेशः ।
"अस्त्रागारायुधागारदेवतागारभेदकान् ।
हस्त्यश्वरथहर्त्तॄंश्च हन्यादेवाविचारयन् ॥"
इति मनुस्मरणात् । इति मिताक्षराव्यवहार-
काण्डे दण्डप्रकरणम् ॥
व(ब)न्दिचौरः, पुं, (वन्दिमिव विधाय चौरः अप-
हारकः । गृहस्थं वन्दिमिव कृत्वा तस्य धना-
दीनामपहारकत्वादस्य तथात्वम् ।) वन्दिग्राहः ।
तत्पर्य्यायः । मारुकः २ । इति हारावली ।
१४५ ॥ वन्दीकारः ३ । इति त्रिकाण्डशेषः ॥
व(ब)न्दिपाठः, पुं, ( वदि + भावे इन् । वन्दिः
स्तुतिस्तस्याः पाठो यत्र । ) स्तुतिपाठः । तत्-
पर्य्यायः । भोगावली २ । इति त्रिकाण्डशेषः ॥
व(ब)न्दी, स्त्री, ( वन्दि + "कृदिकारादक्तिनः ।"
इति ङीष् ।) वन्दिः । इत्यमरटीकायां भरतः ॥
( यथा, कुमारे । २ । ५२ ।
"गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो वन्दीमिव जयश्रियम् ॥")
व(ब)न्दी [न्], पुं, ( वन्दते स्तौति नृपादीनिति ।
वदि स्तुतौ + णिनिः । ) राजादीनामग्रे
शौर्य्यादिस्तुतिकारकः । तत्पर्य्यायः । स्तुति-
पाठकः २ । इत्यमरः ॥ मागधः ३ मगधः ४ ।
इत्यन्ये । इति तट्टीकायां भरतः ॥ ( यथा,
रघुः । ४ । ६ ।
"परिकल्पितसान्निध्या काले काले च वन्दिषु ।
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ॥")
अस्योत्पत्तिर्यथा,—
"क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः ।
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥"
इति मानवे १० अध्यायः ॥ * ॥
श्राद्धोत्तरमस्मै शक्तितो दानस्याकरणे निन्दा
यथा,—
"वन्दिभ्यश्चैवमर्थिभ्योऽनाथिभ्यश्चप्रमर्थिनः ।
यदि तत्र न दद्यात्तु विफलं शक्तितो भवेत् ॥"
वन्दिनो वीर्य्यस्तोतारः । अर्थिनः स्मृ यदि
तेभ्योऽन्नं न दद्यात् श्राद्धं विफलं भवेदित्यर्थः ।
"सूताः पौराणिकाः प्रोक्ता मागधा वंश-
शंसकाः ।
वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः ॥"
इत्युक्तेः । इत्यत्र श्राद्धोत्तरदाननिषेधात् श्राद्धे
वन्दिप्रभृतिभ्यो दानाकरणे निन्दाश्रवणाच्च
श्राद्धात् पूर्व्वं तदर्थं भोज्यादिकं उत्सृजेत ।
इति श्राद्धतत्त्वम् ॥ ( भृत्यः । यथा, भागवते ।
११ । ४ । १५ ।
"श्रीमिवादेशमादाय मत्वा तं सुरवन्दिनः ।

ऊर्ध्वश्रीमघरःश्रेष्ठो पुरस्कृत्य दिवं ययुः ॥"
"सुरवन्दिनो देवभृत्याः ।" इति तट्टीकायां श्रीधरस्वामी ॥ )

व(ब)न्दीकारः, पुं, ( बन्दीवत् ग्रहणं करोतीति । कृ + "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् । ) बन्दिग्राहः । डाकाइत इति भाषा । तत्पर्य्यायः । मायकः २ प्रसह्यचौरः ३ पिशाचः ४ । इति त्रिकाण्डशेषः ॥

वन्द्या, स्त्री, ( वन्द्यते स्तूयते इति । वदि + ण्यत् । ) बन्दा । इति शब्दचन्द्रिका ॥ गोरोचना । इति भावप्रकाशः ॥ ( वन्दनीये, त्रि । यथा, साहित्यदर्पणे १ परिच्छेदे ।

"आशीः परम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥"

यथा च भागवते । ४ । १२ । २६ ।

"आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदम् ॥" )

वन्द्रं, क्ली, ( वन्द्यते स्तूयते इति । वदि स्तुतौ + "स्फायितञ्चीति ।" उणा० २ । १३ । इति रक् । ) कल्याणम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

वन्द्रः, त्रि, ( वन्दते स्तौति देवादीन् पूजाकाले इति । वदि + रक् । ) पूजकः । इत्युणादिकोषः ॥

वन्यं, क्ली, ( वने भवम् । वन + यत् । ) त्वचम् । इति राजनिर्घण्टः ॥ ( कुटन्नटम् । तत्पर्य्यायो यथा,—

"कुटन्नटं परं वन्यं सुखाभञ्च परीलवम् ॥"
इति वैद्यकरत्नमालायाम् ॥)

वन्यः, त्रि, ( वने भवः । वन + यत् । ) वनोद्भूतः । इति मेदिनी । ये, ५३ ॥ ( यथा, रघुः । १ । ४५ ।

"हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥")

वन्यः, पुं, ( वन + यत् । ) वनसूरणः । वाराहीकन्दः । ईकनलः । इति राजनिर्घण्टः ॥ (क्षीरविदारी । तत्पर्य्यायो यथा,—

"क्षीरी शुक्लपयस्याख्या कुक्कुरः कुलनाशनः ।
वन्यो मूलकमूलाभः स्वस्कन्दः स च कञ्चुकी ॥"
इति वैद्यकरत्नमालायाम् ॥ )

वन्या, स्त्री, ( वनानामरण्यानां जलानां वा संहतिः । वन + "पाशादिभ्यो यः ।" ४ । २ । ४९ । इति यः । ) वनसमूहः । इत्यमरः । २ । ४ । १ ॥ जलसंहतिः । इति मेदिनी । ये, ५३ ॥ मुद्गपर्णी । ( तत्पर्य्यायो यथा, रत्नमालायाम् ।

"मुद्गपर्णी क्षुद्रसहा कासमर्दा सिंहपर्णिका ।
वन्या मार्ज्जारगन्धेति सूर्य्यपर्ण्यावुभे च ते ॥")

गोपालकर्कटी । गुञ्जा । मिश्रेया । भद्रमुस्ता । गन्धपत्रा । इति राजनिर्घण्टः ॥ (अश्वगन्धा । तत्पर्य्यायो यथा,—

"हयगन्धाश्वगन्धाख्या वाजिगन्धाश्वगन्धकः ।
वन्या तुरगगन्धा च कञ्चुकाश्वावरोहकः ॥"
वन्या क्वचित् दृश्यते । इति वैद्यकरत्नमालायाम् ॥ )

वन्योपोदकी, स्त्री, ( वन्या वनोद्भूता उपोदकी । ) लताविशेषः । वनपुँइ इति भाषा । तत्पर्य्यायः । वनजा २ वनशाकजा ३ । अस्या गुणाः । तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । रोचनत्वञ्च । इति राजनिर्घण्टः ॥

वनुः, पुं, ( वनति भागमर्हतीति । वन सम्भक्तौ + "ऋत्वेकाग्रसच्चेति ।" उणा० २ । १८ । इति रनुप्रत्ययः । ) अंशी । भागी । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

वप, औ ञ डु ऐ मुण्डनबीजोप्त्योः । इति कविकल्पद्रुमः ॥ ( भ्वा०-उभ०-सक०-अनिट् ।) औ, वप्ता । ञ, वपति वपते । डु, उप्त्रिमम् । मुण्डो मुण्डनकरणम् । वपति मस्तकं नापितः । वपति तन्तुं तन्तुवायः । यदि वपति कृषाणः क्षेत्रमासाद्य बीजम् । इति दुर्गादासः ॥

वपः, पुं, ( वप् + घः । ) केशमुण्डनम् । बीजवपनम् । इति वपधातोर्भावेऽल्प्रत्ययेन निष्पन्नः ॥

वपनं, क्ली, ( वप् + भावे ल्युट् । ) केशमुण्डनम् । ( यथा, मनुः । ५ । १४० ।

"शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम् ॥")

बीजाधानम् । इति मेदिनी । ने, १२२ ॥

वपनी, स्त्री, (उप्यते मस्तकादिकमस्यामिति । वप् + अधिकरणे ल्युट् । ङीप् । ) नापितशाला । इति हेमचन्द्रः । ४ । ६६ ॥ ( तन्तुवायशाला । इति तन्धात्वर्थदर्शनात् ॥ )

वपा, स्त्री, (उप्यतेऽनेनेति । वप् + भिदाद्यङ् । टाप् ।) छिद्रम् । ( यथा, शतपथब्राह्मणे । ६ । ३ । ३ । ५ ।

"अथ वल्मीकवपा सुषिरा वर्षे निहिता भवति ॥" ) मेदः । इत्यमरः । २ । ६ । ६४ ॥ ( यथा, रामायणे । १ । १४ । ३६ ।

"पतत्रिणस्तस्य वपामुद्धृत्य नियतेन्द्रियः ।
ऋत्विक् परमसम्पन्नः श्रपयामास शास्त्रतः ॥"

सा च हृदयस्थधातुः । यथा । "त्वक् च शोणितञ्च मांसञ्च मेदश्च नाभिश्च हृदयञ्च क्लोम च यकृच्च प्लीहा च वृक्कौ च वस्तिश्च पुरीषाधानञ्चामाशयश्च पक्वाशयश्चोत्तरगुदञ्चाधरगुदञ्च क्षुद्रान्त्रञ्च वपा च वपावहनञ्चेति मातृजानि ।" इति चरके शारीरस्थाने तृतीयेऽध्याये ॥ )

वपिलः, पुं, ( वपति बीजमिति । वप् + इलच् । ) पिता । इत्युणादिकोषः ॥

वपुः, [ स् ] क्ली, ( उप्यन्ते देहान्तरभोगसाधकबीजीभूतानि कर्म्माण्यत्रेति । वप् + "अर्त्तिपृवपियजीति ।" उणा० २ । ११८ । इति उसिः । ) शरीरम् । इत्यमरः । २ । ६ । ७० ॥ ( यथा, रघुः । २ । ४७ ।

"एकातपत्रं जगतः प्रभुत्वं
नवं वयः कान्तमिदं वपुश्च ॥" )

प्रशस्ताकृतिः । इति मेदिनी । से, ३६ ॥ (अंशः । यथा, मनुः । ५ । ९६ ।

"अष्टानां लोकपालानां वपुर्धारयते नृपः ॥"
"वपुरंशः ।" इति मेधातिथिः ॥ स्त्री, स्वनामख्याता दक्षकन्या । सा तु धर्म्मराजस्य पत्नी । यथा, मार्कण्डेये । ५० । २१ ।

"बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्त्तिस्त्रयोदशी ।
पत्न्यर्थं प्रतिजग्राह धर्म्मो दाक्षायणीः प्रभुः ॥" )

वपुःस्रवः, पुं, ( वपुषः शरीरात् स्रवः क्षरणं यस्य । ) शरीरस्थरसधातुः । इति राजनिर्घण्टः ॥

वपुनः, पुं, ( वप + उनन् । वयुन + पृषोदरादित्वात् यस्य पः इति केचित् । ) देवता । इति शब्दरत्नावली ॥

वपुषा, स्त्री, हपुषा । इति भावप्रकाशः ॥ ( रूपे, क्ली । यथा, ऋग्वेदे । ३ । २ । १५ ।

"रथं न चित्रं वपुषाय दर्शतं
मनुर्हितं सदमिद्राय ईमहे ॥"

"वपुषाय रूपाय दर्शतं दर्शनीयम् ।" इति तद्भाष्ये सायणः ॥ )

वपुष्टमा, स्त्री, पद्मचारिणी । इति जटाधरः ॥ ( काशीराजस्य कन्या । जनमेजयस्य पत्नी । सा तु रम्भा नामाप्सरा । जनमेजयकृताश्वमेधकाले इन्द्रेणाश्वमध्यप्रविष्टेन धर्षितावेदती जनमेजयेनेयं परित्यक्तापि पुनर्गन्धर्व्वराजविश्वावसुवाक्येन गृहीता । एतद्विवरणन्तु हरिवंशे १८८ अध्याये द्रष्टव्यम् ॥ )

वप्ता, [ ऋ ] पुं, ( वपति बीजमिति । वप् + तृच् । ) जनकः । इति मेदिनी ॥ कविः । इति जटाधरः ॥ (नापितः । यथा, ऋग्वेदे । १० । १४२ । ४ ।

"यदा ते वातो अनुवाति शोचि-
र्वप्तेव श्मश्रु वपसि प्र भूम ॥"

"यथा वप्ता नापितो वपति मुण्डयति तथा भूम भूमिं प्रवपसि प्रकर्षेण मुण्डयसि ॥" इति तद्भाष्ये सायणः ॥ )

वप्ता, [ ऋ ] त्रि, ( वपतीति । वप् बीजोप्तौ + तृच् । ) वापकः । इति मेदिनी ॥ ( कर्षकः । यथा, मनुः । ३ । १४२ ।

"यथेरिणे बीजमुप्त्वा न वप्ता लभते फलम् ।
तथाऽनृचे हविर्दत्त्वा न दाता लभते फलम् ॥")

वप्रं, क्ली, पुं, ( उप्यतेऽस्मिन्निति । वप + "ऋषिवपिभ्यां रन् ।" उणा० २ । २७ । इति रन् । ) दुर्गनगरे परिखाया उद्धृतमृत्तिकास्तूपस्तदुपरि प्राकारो निवेश्यते तत् । तथा चार्थशास्त्रम् । खातादुद्धृतमृदा वप्रं कारयेत् तस्योपरि प्राकारमिति । तत्पर्य्यायः । चयः २ । इत्यमरभरतौ ॥ मृत्तिकास्तूपः ३ । इति शब्दरत्नावली ॥ ( यथा, आर्य्यासप्तशत्याम् । ५०५ ।

"नयं नयने सख्याः सुविशाले कलितकरि-
करकीर्त्ते ।
वप्रे वक्षं द्विपमिव शृङ्गारस्ते विभूषयति ॥")

महावप्रो यथा,—

"महोद्यानां महावप्रां महागारशताभिताम्।
प्राकारमहसम्बाधामिन्द्रस्येवामरावतीम्॥"

महान् वप्रो यस्याः।

"प्राकाराधारभूता खनिमोच्छ्रिता भूमि
र्वप्रसंज्ञा॥"

इति विष्णुपुराणे ५ अंशे २३ अध्याये॥ *॥

वपति बीजमत्र। चेत इति भाषा। तत्-पर्य्यायः। केदारः २ क्षेत्रम् ३। इत्यमरभरतौ॥ निष्कुटः ४ वनवम् ५ वाजिका ६ पाटीरः ७। इति जटाधरः॥ (यथा, हहत्संहितायाम्। २६।१६।

"प्रालीष्वप्यपि धरा धरणीधराभ-
धाराधरोज्झितपयः परिपूर्णवप्रा॥")

रेणुः। तटः। इति मेदिनीकरहेमचन्द्रौ॥ (यथा, किराते। ७।११।

"तत् पूर्व्वं प्रतिविदधे सुरापगाया
वप्रान्तस्खलितविवर्त्तनं पयोभिः॥"

पर्व्वतसानुः। यथा, किराते। ५।३६।

"नानारत्नज्योतिषां सन्निपाते-
श्छन्नेष्वन्तः सानुवप्रान्तरेषु॥")

वप्रं, क्ली, (वप्+"ऋधिवपिभ्यां रन्।" उणा० २।२७। इति रन्) सीसकम्। इति हेमचन्द्रः। ४।१०६॥ (तथास्य पर्य्यायान्तरम्।

"सीसं वप्रञ्च वप्रञ्च योगेष्टं नागनामकम्॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

वप्रः, पुं, (वपति बीजमिति। वप्+रन्।) तातः। इति मेदिनी। रे, ८२॥ प्राकारः। इति विश्वः॥ प्रजापतिः। इति संक्षिप्तसारो-णादिवृत्तिः॥

वप्रा, स्त्री, (वप्+रन्। टाप्।) मञ्जिष्ठा। इति राजनिर्घण्टः॥ (विवरणमस्या मञ्जिष्ठा-शब्दे ज्ञातव्यम्॥)

वप्रिः, पुं, (वपति बीजमत्र। वप्+"वहिश्रि-श्रुयु।" उणा० ४।५१। इति क्रिन्प्रत्ययेन साधुः।) क्षेत्रम्। इति सिद्धान्तकौमुद्या-मुणादिवृत्तिः॥ दुर्गतिः। समुद्रः। इति संक्षिप्त-सारोणादिवृत्तिः॥

वप्री, स्त्री, (वल्मी+पृषोदरादित्वात् साधुः।) वल्मीकः। इति हलायुधः॥

वब:, पुं, एकादशकरणान्तर्गतप्रथमकरणम्। अस्याधिपतिरिन्द्रः। तत्र विहितानि यथा,—

"पौष्टिकस्थिरशुभानि ववाख्ये।"

इति ज्योतिस्तत्त्वम्॥

अथ जातफलम्।

"ववाभिधाने जननं हि यस्य
शूरोऽतिधीरो मनुजः सती स्यात्।
मधुलया तत्त्विमये विवासं
करोति नित्यं सुचिरायुः स्यात्॥"

इति कोष्ठीप्रदीपः॥

दाक्षिणात्यमते अस्य शब्दस्य प्रथमवकारः पवर्गीयः शेषवकारोऽन्तःस्थः॥

वभ्र, गत्याम्। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) वकारादिः। ओष्ठ्यवर्गचतुर्थो-पधः। वभ्रति। इति दुर्गादासः॥

वम्, अ, (उ+अ+म्।) शिवपूजान्ते कपोल-वाद्यविशेषः। तत्तु उकाराकारमकारात्मकं शिवप्रणवस्वरूपम्। यथा,—

"डिम् डिम् डिम् डिम् डिडिम् डिम् डिडिमरु
डमरु वादयन् कण्ठनादं
वम् वम् वम् वम् ववम् वम् अमितदशशिरा-
ज्वालमानेन नृत्यन्।
कर्पूराविस्फुरद्भस्मापटितपटुजटाजालविद्राक्ष-
माली
मायायोगी दयाब्धी रघुरमणपुरः प्राङ्गणे
प्रादुरासीत्॥"

इति रामलीलामृतकाव्यम्॥ *॥

वरुणबीजम्। यथा। नासापुटौ धृत्वा वमिति वरुणबीजस्य चतुःषष्टिवारजपेन कुम्भकं कृत्वा नकारात् ललाटस्थचन्द्रामृतसुधया मातृका-वर्णात्मिकया समस्तं देहं विरचय्य लमिति पृथ्वीबीजस्य द्वात्रिंशद्वारजपेन देहं सुदृढं विचिन्त्य दक्षिणेन वायुं रेचयेत्। इति भूत-शुद्धिप्रकरणे तन्त्रसारः॥

वम, उ ञ टु उद्गिरि। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) वकारादिः। अ, वेमतुः ववमतुः। अन्ये तु ततकार्य्यविधायक-सूत्रे फणादौ वेमं न पठन्ति वैतच्च केचिदुधिर-मित्यादिसाधनाय ममतत्वे दन्त्यवकारादिवर्ण्ण-स्यानित्यतां स्वीकुर्व्वन्ति। केचित् 'पुनर्व्वर्ग्य-वकारादिरयमन्तरमप्यस्ति' इति प्रलपन्ति। ञ, वामः वमः। उ, वमित्वा वान्त्वा। टु, वमथुः। उद्गिरि वान्तौ। वमति अन्नमजीर्ण-वान्। वामन्तोऽपि णौ ज्वलह्मल इत्यादिना केवलस्य ह्रस्वविकल्पनात् सोपसर्गस्य नित्यं ह्रस्वः। वमयति वामयति प्रवमयति। इति दुर्गादासः॥

वमः, पुं स्त्री, वमनम्। इति वमधातोरच्प्रत्ययेन निष्पन्नम्। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

वमथुः, पुं, (वमनमिति। वम्+"ट्वितोऽथुच्।" ३।३।८९। इति अथुच्।) वमिः। (यथा, सुश्रुते उत्तरतन्त्रे ४५ अध्यायः।

"दौर्ब्बल्यश्वासकासज्वरवमथुमदाः पाण्डुता-
दाहमूर्च्छाः॥")

हस्तिशुण्डनिर्गतजलकणा। तत्पर्य्यायः। कर-शीकरः २। इत्यमरः। २।८।५५॥ (यथा, नैषधे। १८।६।

"रजनिषमभुशालेयाम्भः कलाकलसंभृतैः
कुशकिशलयस्याग्रैरग्रैरवैरदविन्दुभिः॥")

वमनं, क्ली, (वम्+भावे ल्युट्।) छर्द्दनम्। (यथा, सुश्रुते। १।१२।

"मधुराणी रसौ वापि वमनाय प्रदापयेत्॥"

वमनद्रव्यमपि। यथा, कथासरित्सागरे। ६४।१७।

"स दत्त्वा वमनं तस्मात् स्तनकल्पमनी-
वयत्॥")

अर्द्दनम्। इति मेदिनी। ने, १२३॥ आहुतिः। इति विश्वः॥ (आहरणम्। यथा, रघुः। १५।२९।

"सा सौहार्द्दप्रकाशाभिर्बभौ पौरविभूतिभिः।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता॥" *॥

अथ वमनकल्पीयविधिः।

"वमने मदनं श्रेष्ठं त्रिवृन्मूलं विरेचने।
नित्यमन्यस्य तु व्याधि विशेषेण विशिष्यते॥
फलानि तानि पाकानि न चातिहरितान्यपि।
आदायाहि प्रशस्तर्क्षे मध्ये ग्रीष्मवसन्तयोः॥
प्रमृज्य कुशमुत्तोल्यां क्षिप्त्वा बद्धा प्रलेपयेत्।
गोमयेनानुसुप्तानीं धान्यमध्ये निधापयेत्॥
मृदुभूतानि मध्विष्टगन्धानि कुशवेष्टनात्।
निष्कृष्य निर्गतोऽष्टाहे शोषयेत्तान्ययातपे॥
तेषां ततः सुशुष्काणामुद्धृत्य फलपिप्पलीः।
दधिमध्वाज्यपललैर्म्मृदित्वा शोषयेत् पुनः॥
ततः सुगुप्तं संस्थाप्य कार्य्यकाले प्रयोजयेत्।
अथादाय ततो मात्रां जर्ज्जरीकृत्य वासयेत्॥
शर्व्वरीं मधुयष्ट्या वा कोविदारस्य वा जले।
कर्व्वुदारस्य विम्ब्या वा नीपस्य विदुलस्य वा॥
शणपुष्प्याः सदा पुष्प्याः प्रत्यक्पुष्प्युदकेऽथवा।
ततः पिबेत् कषायं तं प्रातर्मृदितगालितम्॥
सर्व्वादितेन विधिना साधु तेन तथा वमेत्।
सेद्यज्वरप्रतिश्यायगुल्मान्तर्व्विद्रधीषु च॥"

"पित्ते कफस्थानगते जीमूतादिजलेन तत्।
क्षुद्राद्रेऽधोऽक्षपित्ते च क्षीरं तत्पिप्पली
फलम्॥
धारेय्यां वा कफच्छर्द्दिप्रतिश्यायमकेषु च।
इक्ष्वाकुरं वा दधि वा तत्सुतक्षीरभावनम्॥
फलादिजातकल्काभ्यां सिद्धं तत् विषहृद्गुल्म
जम्।
सर्पिः कफाभिभूतेऽग्नौ शुष्यद्देहे च वा मतम्॥"

"वत्सकादिप्रतीवापः कषाय. फलमज्जनः।
निम्बार्काल्यतरकादिसमायुक्तो वियच्छति॥
बहुमूलानपि व्याधीन् सर्व्वान् सन्तर्पणोद्भवान्।
वाटपुष्पसमस्त्यापूर्णमाल्यं सुखाचितम्॥
वमेत्तत्र वसादौ च लभो जिघ्रन् सुखं सुखी॥"

"इक्ष्वाकुर्व्वमने शस्तः प्रताम्यति च मानवे।
कफदुष्टविदीर्णस्य प्रवालेपस्य वाधिनम्।
पित्तश्लेष्मज्वरे क्षीरं पित्तोद्रिक्ते प्रयोजयेत्॥"

"धत्तूरभिर्व्वा पिबेन्मर्त्यं तुम्बीस्वरसभाविते।
कफोद्भवे ज्वरे कासे गलरोगेष्वरोचके॥
गुल्मे ज्वरे प्रसक्ते च कल्कं मांसरसैः पिबेत्।
नरः साधु वमत्येवं न च दौर्ब्बल्यमश्नुते॥"

"जीवकर्षभकौ वीरा कपिकच्छूः शतावरी।
काकोलीश्रावणी मेदा महामेदा मधूलिका॥
तज्जोभिः पृथग्लेहा धामार्गवरजोऽन्विताः।
कासे हृदयदाहे च शस्ता मधुसितायुताः॥"

"सर्षपाणां मधूकानां तोयेन लवणस्य वा।
पाययेत् कौटजं बीजं युक्तं तगरयाथवा॥

समाहं वार्कदुग्धाक्तं तच्चूर्णं पाययेत् पृथक् ।
फलजीमूतकेक्ष्वाकु जीवन्तीजीवकोदनैः ।।
वमनौषधमुख्यानामिति कल्पदिगीरिता ।
बीजेनानेन मतिमानन्यान्यपि च कल्पयेत् ।।”
इति वाभटे कल्पस्थाने प्रथमेऽध्याये ।।)

वमनः, पुं, ( वमनीव मुखवर्णमिति । वम् + ल्युः ।) शणः । इति राजनिर्घण्टः ।।

वमनी, स्त्री, ( वमन + ङीप् । ) जलौका । इति राजनिर्घण्टः ।। ( विवृतिरस्या जलौकाशब्दे ज्ञातव्या ।। )

वमनीया, स्त्री, ( वमयतीति । वम् + अर्थविवक्षायाम् । अभिधानात् कर्त्तरि अनीयर् ।) मक्षिका । इति राजनिर्घण्टः ।। वमनयोग्ये, त्रि ।।

वमिः, स्त्री, ( वमनमिति । वम् + सर्व्वधातुभ्य इन् । उणा० ४ । ११७ । ) प्रच्छर्द्दिका । इत्यमरः । २।६।५५ ।। (अस्याः सनिदानलक्षणचिकित्सितं पथ्यापथ्यञ्च यथा,—
“आमवी सूलरोगार्त्तिः पर्व्वभेदो भ्रमः श्रमः ।
शोषः शिरोव्यथा क्लेदो नेत्रे गम्भीरमिच्छति ।।
रक्तौ वा चेतना वापि अजीर्णाज्जायते वमिः ।
गम्भीरनेत्रो वमति विह्वलो वातिसार्य्यते ।।
गात्रे रक्तौ करं शूलं तथा शोषोऽतिमूर्च्छता ।
विकलाङ्गो भ्रमार्त्तश्च भ्रमतीव जगत् ।।
शिरोऽतिवेपतेऽत्यर्थं करपादौ हिमोपमौ ।
एतैर्लिङ्गैस्तु संयुक्तां छर्द्दिं दूरे परित्यजेत् ।।”
चिकित्सा ।
“स पञ्चमूलीक्वथितः कषायः
सबैल्वधात्रीफलकश्च कल्कः ।
क्वाथं पिबेत्त्रिफलपिप्पलीकं
स वातछर्द्दिर्विनिवारणाय ।।”
“आमलक्या रसेनाथ घृतं चन्दनकं मधु ।
गुटिकामलमानेन लेहो हन्ति वमिं ध्रुवम् ।।
चित्रककटुकरजनीदयश्च फलत्रिकं मधुना च
चावमूकश्च ।
समस्तमिति चूर्णमेतन्मधुना युतं वमिं निवारयति ।।”
“काकोली काकमाची च क्वाथं शर्करया युतम् ।
लाजाशर्करसंयुक्तं हन्ति पित्तवमिं नृणाम् ।।
मातुलुङ्गरसश्चैव पथ्याशर्करया युतः ।
हन्ति क्वाथं पित्तभवं वमिं शीघ्रं नियच्छति ।।
दृष्ट्वा पित्तवमिं घोरां महाश्रमदायिनीम् ।
मखारञ्चपत्राणि मधुशर्करयान्वितम् ।।
क्षीरपाकं प्रशस्तं वा गुलाशर्करयान्वितम् ।”
“जम्ब्वाम्रयोः प्रवालानि दाडिमामलकत्वचा ।
मधुनोपोषितं पानं हन्याच्छर्द्दिवमिं नृणाम् ।।
मज्जार्जुनं बदरबकुलकौलचूर्णं
शुष्का च लाजसहितं सगुडं प्रदद्यात् ।
क्षेप्योद्भवं वमनमाशु निहन्ति पुंसां
शुक्तीकया मधुविमिश्रयुतोऽपि लेहः ।।”
“ऊर्द्ध्वभागगते दोषे विरेको हि प्रशस्यते ।
तस्मिन् जातेऽप्यधोभागं वमनं शाम्यति ध्रुवम् ।।
अथ द्विभागमात्रञ्चेत्तदा देयाभया मधु ।
क्रिमिजं वमनं ज्ञात्वा क्रिमीणां शमनक्रिया ।।
न चोष्णं नातिचाम्लञ्च न तीक्ष्णं न तथा कटु ।
तक्रसौवीरकाम्लं वा न मद्यं काञ्जिकं न तु ।।
वमिदोषे च कथितं पथ्यञ्चाथ प्रयुज्य मे ।
आनूपं शालिभक्तञ्च घृतयुक्ता च वास्तुकम् ।।
आढ़्की मुद्गयूषञ्च दधि सर्पिर्गुडान्वितम् ।
अङ्गारपक्वका चाथ वमौ पथ्यं प्रशस्यते ।।
यथाबलं यथाकालं यथारोगं यथानलम् ।
तथा दृष्ट्वा प्रकुर्व्वन्ति पथ्यानां समुपक्रमम् ।।
दिवानिद्रां प्रयुञ्जीत वमौ श्वासेऽतिसारके ।
हिक्काशोषे तथा जीर्णे वमिक्लेदेऽथवा पुनः ।।
न चोष्णतोयपानञ्च नातिभोजनमेव च ।
नवान्नञ्च कर्त्तव्यं वर्ज्जयेद्वमनार्द्दिते ।।”
इति वैद्यके ।। )

अथ छर्द्यधिकारः । तत्र छर्द्दिविप्रकृष्टसन्निकृष्टनिदानं पूर्व्वरूपं संप्राप्तिञ्चाह ।
“अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरपि ।
अकाले चातिमात्रैश्च तथा सात्म्यैश्च भोजनैः ।।
आमाद्वयात्तथोद्वेगादजीर्णात् क्रमिदोषतः ।
नार्य्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः ।।
दुष्टदोषैः पृथक् सर्व्वैर्वीभत्सालोकनादिभिः ।
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लिश्यते बलात् ।।”
आमात् अपक्वपक्वाद्रसात् । अजीर्णात् यथास्थितान्नात् । आपन्नसत्त्वायाः गर्भिण्याः । अन्यैर्बीभत्सैर्विकृतैर्हेतुभिः कृष्याकारिभिः अनिष्टश्रवणस्पर्शनदर्शनभक्षणघ्राणैरुत्क्लिश्यमानमूर्द्ध्वं नीता सुखादुच्छर्द्दिः क्रियते ।। * ।। पूर्व्वरूपमाह ।
“हृल्लासोद्गाररोधौ च प्रसेको लवणास्यता ।
द्वेषोऽन्नपाने च भृशं वमीनां पूर्व्वलक्षणम् ।।”
छर्द्देः सामान्यलक्षणमाह ।
“छादयन्नाननं वेगैरर्द्दयन्नङ्गभञ्जनैः ।
निरुच्यते छर्द्दिरिति दोषो वक्त्रं प्रधावितः ।।
छादयन् पूरयन् अङ्गभञ्जनैः अङ्गभेदैः अर्द्दयन् अङ्गानि पीड़यन् । वक्त्रं प्रधावितः वक्त्रं प्रति धावितः दोषः छर्द्दिर्निरुच्यते ।।” * ।। वातजाया लक्षणमाह ।
“हृत्पार्श्वपीड़ामुखशोषशीर्ष-
नाभ्यर्त्तिकासस्वरभेदतोदैः ।
उद्गारशब्दप्रबलं सफेनं
विच्छिन्नकृष्णं तनुकं कषायम् ।।
कृच्छ्रेण चाल्पं महता च वेगे-
नार्त्तोऽनिलाच्छर्द्दयतीह दुःखम् ।।”
कषायं कषायरसम् । दुःखं दुःखमिव छर्द्दयति । * । पित्तजामाह ।
“मूर्च्छापिपासामुखशोषमूर्द्ध-
ताल्वक्षिसन्तापतमोभ्रमार्त्तः ।
पीतं भृशोष्णं हरितञ्च तिक्तं
धूम्रञ्च पित्तेन वमेत् सदाहम् ।।” * ।।
कफजामाह ।
“तन्द्रास्यमाधुर्य्यकफप्रसेक-
सन्तोषनिद्रारुचिगौरवार्त्तः ।
स्निग्धं घनं स्वादु कफाद्विशुद्धं
सलोमहर्षोऽल्परुजं वमेत्तु ।।”
सन्तोषस्तृप्तिः ।। * ।। त्रिदोषजामाह ।
“शूलाविपाकारुचिदाहतृष्णा-
श्वासप्रमोहप्रबलाप्रसक्तम् ।
छर्द्दिस्त्रिदोषाल्लवणाम्लनील-
सान्द्रोष्णरक्तं वमतां नृणां स्यात् ।।”
आगन्तुजामाह ।
“असात्म्यजा च क्रिमिजामजा च
बीभत्सजा दौहृदजा च या हि ।
सा पञ्चमी तां च विभावयेच्च
दोषोच्छ्रयेणैव यथोक्तमादौ ।।”
एताः पञ्चागन्तुत्वेन साध्याद्येकैव अतएव सा आगन्तुजा पञ्चमी विभावयेत् अनुबन्धयेत् ।। * ।।
उपद्रवानाह ।
“कासः श्वासो ज्वरस्तृष्णा हिक्का वैचित्त्यमेव च ।
हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्द्देरुपद्रवाः ।।
वैचित्त्यं विक्षतचित्तत्वम् । तमकोऽत्र तमः । श्वासभेदेन तमकाख्यस्यापि श्वासस्योक्तत्वात् ।।
असाध्यां साध्याञ्चाह ।
“क्षीणस्य या छर्द्दिरतिप्रसक्ता
सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिका तां प्रवदेदसाध्यां
साध्यां चिकित्सेत् निरुपद्रवाञ्च ।।”
सचन्द्रिका मयूरपिच्छचन्द्रिकाप्रभायुक्ता ।। * ।।
अथ छर्द्दिचिकित्सा ।
“आमाशयोत्क्लेशभवा हि सर्व्वा-
श्छर्द्यो मता लङ्घनमेव तस्मात् ।
विधीयते मारुतजां विना तु
संशोधनं वा कफपित्तहारि ।।”
अत्र द्वितीयपादे छर्द्दीशब्दः ।।
“हन्यात् क्षीरोदकं पीतं छर्द्दिं पवनसम्भवाम् ।
मुद्गामलकयूषो वा ससर्पिष्कः ससैन्धवः ।।”
क्षीरोदकं नारिकेलस्य क्षीरस्य उदकम् ।। २ ।।
“गुडूचीत्रिफलानिम्बपटोलैः क्वथितं जलम् ।
पिबेन्मधुयुतं तेन छर्द्दिर्नश्यति पित्तजा ।। ३ ।।
हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम् ।
अधोमार्गीकृते दोषे छर्द्दिः शीघ्रं निवर्त्तते ।।४।।
विडङ्गत्रिफलाविश्वाचूर्णं मधुयुतं पिबेत् ।
विडङ्गयवशुण्ठीनां चूर्णं वा कफजां वमिम् ।।”
यवं केवलीसुतम् । गुड़ची इति लोके ।। ५ ।।
“पिष्ट्वा धात्रीफलं लाजान् शर्करां च पलोन्मिताम् ।
दद्यान्मधुपलञ्चापि कुडवं सलिलस्य च ।
वाससा गालितं पीतं हन्ति छर्द्दिं त्रिदोषजाम् ।।६।।
गुड़ूच्या रचितं हन्ति हिमं मधुसमन्वितम् ।
दुर्न्निवारामपि च्छर्द्दिं त्रिदोषजनितां बलात् ।।७
एलालवङ्गगजकेशरकोलमज्ज-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा

छर्द्दिं निहन्ति कफमारुतपित्तजाताम् ॥”

इति एलादिचूर्णम् ॥ ८ ॥

“अश्वत्थवल्कलं शुष्कं दग्धं निर्व्वापितं जले ।
तज्जलं पानमात्रेण छर्द्दिं जयति दुर्ज्जयाम् ॥९॥
पथ्याभिकटुधान्याकजीरकाणां रजो लिहन् ।
मधुना नाशयेच्छर्द्दिमथवापि त्रिदोषजाम् ॥१०॥
त्रिफलात्वचो गुडूच्या वा क्वाथः क्षौद्रेण संयुतः ।
छर्द्दिं त्रिदोषजां हन्ति पर्प्पटः पित्तजां

तथा ॥११॥

आम्रास्थिबिल्वनिर्यूहः पीतः समधुशर्करः ।
निहन्यात् छर्द्दितीसारं वैश्वानर इवाहुतिम् ॥”

इति निर्यूहकाथः ॥१२॥

“जम्ब्वाम्रपल्लवक्वाथं लाजजलसंयुतं शीतम् ।
शमयति मधुना युक्तं वमिमतिसारं तृषार्त्ति-

युताम् ॥१३॥

वीभत्सजां हृद्यतमैरिष्टैर्हृदजां फलैः ।
तृष्णोदामजां छर्द्दिं जयेत् लाक्षारसाम्भ-

जाम् ॥१४॥

कृमिहृद्रोगवद्व्याप्त वमिं कृमिसमुद्भवाम् ।
तत्र तत्र यथादोषं क्रियां कुर्य्यात् चिकित्-

सकः ॥”१५॥

इति छर्द्द्यधिकारः । इति भावप्रकाशः ॥

वमिः, पुं, ( वमति उद्गिरति धूमादिकमिति । टु वम उद्गिरणे + “इक् कृष्यादिभ्यः ।”इतीक् ।) अग्निः । इति मेदिनी । मे, २९ ॥ धूर्त्तः । इति शब्दरत्नावली ॥

वमितः, त्रि, ( वम् + क्तः । ) वान्तः । (यथा,—
“वमितं लङ्घयेत् प्राज्ञो लङ्घितं नतु वामयेत् ।
वमनं श्लेष्मबाहुल्यात् कुर्य्यात्लङ्घनकर्षितम् ॥”

रत्नकूटः ।”)

वमनकृतवस्तु । इति मुग्धबोधव्याकरणम् ॥

वम्रः, पुं, वंशः । इति शब्दरत्नावली ॥

वम्रीकूटः, पुं, वल्मीकः । इति हेमचन्द्रः ॥

वय, ङ गत्याम् । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-सक०-सेट् । ) ङ, वयते । इति दुर्गादासः ॥

वयं, त्रि, अस्मदादिः । आमरा इति भाषा । अस्मच्छब्दस्य बहुवचने जसि रूपोऽयम् । इति व्याकरणम् ॥ ( यथा,—

“एको भवामि स्म भवेऽहमादौ
द्वारैरथोभौ स्म भवाव आवाम् ।
वयं भवामो बहवः स्म पुत्त्रे-
ष्वस्माद्भवाद्याचि विभो प्रसीद ॥”

इति मुग्धबोधव्याकरणम् ॥)

वयः, [स्] क्ली, ( वयते वेति अजतीति वा । वय इ गतौ वीगतौ अजगतौ वा + असुन् । अजर्वीभावः । ) पक्षी । ( यथा, विष्णुपुराणे । १ । ५ । ४६ ।

“ततः स्वच्छन्दतोऽन्यानि वयांसि वयसो-

ऽसृजत् ॥”)

बाल्यादिः । इत्यमरः । ३ । ३ । २२९ ॥ (यथा, महाभारते । ३ । ६८ । २३ ।

“तुल्यशीलवयोयुक्तां तुल्याभिजनसंयुताम् ।
नैषधोऽर्हति वैदर्भीं तथेयमसितेक्षणा ॥”

अन्नम् । इति निघण्टुः । २ । ७ ॥ यथा, ऋग्वेदे । २ । २० । १ ।

“वयं ते वय इन्द्र विद्धि षुणः प्रभरामहे वाजयु-

र्न्नरथम् ॥”)

यौवनम् । इति मेदिनी । से, ३५ ॥ * ॥ वयोविशेषे कर्त्तव्यानि यथा,—

“शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥”

इति रघुवंशे १ सर्गः ॥*॥

अपि च ।

“प्रथमेनार्ज्जिता विद्या द्वितीये नार्ज्जितं धनम् ।
तृतीये नार्ज्जितं पुण्यं चतुर्थे किं करिष्यति ॥”

इति चाणक्यशतकम् ॥

वयोविशेषाणां नियमा यथा,—

“कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।
कैशोरमापञ्चदशात् यौवनञ्च ततः परम् ॥”

इति प्रायश्चित्ततत्त्वधृतवचनम् ॥*॥

अपि च ।

“आषोड़शाद्भवेद्बालस्तरुणस्तत उच्यते ।
वृद्धः स्यात् सप्ततेरूर्द्ध्वं वर्षीयान् नवतेः परम् ॥”

इति भरतधृता स्मृतिः ॥*॥

अन्यच्च ।

“बाल्ये वृद्धिर्वयो रूपं चक्षुश्चक्र शौक्रमेव च ।
दशकेन निवर्त्तन्ते मन, सर्व्वेन्द्रियाणि च ॥”

इति महाभारतम् ॥*॥

(“कालप्रमाणविशेषापेक्षिणी हि शरीरावस्था वयोऽभिधीयते । तद्वयो यथा स्थूलभेदेन त्रिविधम् । बालं मध्यं जीर्णमिति । तत्र बालमपरिपक्वधातुमजातव्यञ्जनं सुकुमारमक्लेशसहमसम्पूर्णबलं श्लेष्मधातुप्रायं आषोड़शवर्षम् । विवर्द्धमानधातुगुणं पुनः प्रायेणानवस्थितसत्त्वमात्रिंशद्वर्षमुपदिष्टम् । मध्यं पुनः समत्वागतबलवीर्य्यपौरुषपराक्रमग्रहणधारणस्मरणवचनविज्ञानसर्व्वधातुगुणं पित्तधातुप्रायमाषष्टिवर्षमुद्दिष्टम् । अतःपरं परिहीयमानधात्विन्द्रियबलपौरुषपराक्रमग्रहणधारणस्मरणवचनविज्ञानं भ्रश्यमानधातुगुणं वातधातुप्रायं क्रमेण जीर्य्यमुच्यते आवर्षशतम् ।”इति चरके विमानस्थानेऽष्टमेऽध्याये ॥

“वयस्तु त्रिविधं बालं मध्यं वृद्धमिति । तत्रोनषोड़शवर्षा बालास्तेऽपि त्रिविधाः क्षीरपाः क्षीरान्नादा अन्नादा इति । तेषु संवत्सरपराः क्षीरपा द्विसंवत्सरपराः क्षीरान्नादाः परतोऽन्नादा इति ॥ षोड़शसप्तत्योरन्तरे मध्यं वयस्तस्य विकल्पो वृद्धिर्यौवनं सम्पूर्णता हानिरिति । तत्राविंशतेर्वृद्धिरात्रिंशतो यौवनमाचत्वारिंशतः सर्व्वधात्विन्द्रियबलवीर्य्यसम्पूर्णता । अत ऊर्द्ध्वमीषत्परिहाणिर्यावत् सप्ततिरिति ॥ सप्ततेरूर्द्ध्वं क्षीयमाणधात्विन्द्रियबलवीर्य्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्व्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते ॥ तत्रोत्तरोत्तरासु वयोऽवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्त्यृते च परिहाणे स्तत्राद्यापेक्षया प्रतिकुर्व्वीत । भवन्ति चात्र ।

बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु ।
भूयिष्ठं वर्द्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत् ॥
अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्ज्जयेत ।
तत्साध्येषु विकारेषु मृद्वीं कुर्य्यात् क्रियां

शनैः ॥”

इति सुश्रुते सूत्रस्थाने ३५ अध्यायः ॥

वयःस्थः, त्रि, ( वयसि यौवने तिष्ठतीति । वयस् + स्था + कः । ) युवा । इति हेमचन्द्रः । ३ । ३ ॥ ( यथा, महाभारते । १ । ४२ । ४ ।

“पिता पुत्त्रो वयःस्थोऽपि सततं वाच्य एव तु ॥”)

वयस्थः, त्रि, युवा । इत्यमरः । २ । ६ । ४२ ॥ वयसि यौवने तिष्ठति इति वयस्थः स्थः, निपातात् विसर्गस्य वा लुक् वयःस्थश्च ॥ वयःपञ्चमि बाल्यादौ वयौ यौवनमात्रके । इति विश्वः । इति भरतः ॥

वय(यः)स्था, स्त्री, (वयो यौवनं स्थापयतीति । वयस् + स्था + णिच् + कः । निपातनात् वा विसर्गस्य लोपः ।) आमलकी । हरीतकी । सोमवल्लरी । इत्यमरः । २ । ४ । १३७ ॥ गुडूची । सूक्ष्मैला । काकोली । ब्राह्मी । इति मेदिनी । थ, ३२ ॥ शाल्मलिः । इति हेमचन्द्रः ॥ क्षीरकाकोली । इति भावप्रकाशः ॥ अत्यम्लपर्णी । ( यथा, सुश्रुते उत्तरतन्त्रे । ३२ ।

“वचा वयस्था गोलोमी हरितालं मनःशिला ।
कुष्ठं सर्ज्जरसश्चैव तैलार्थे वर्ग इष्यते ॥”)

मत्स्याक्षी । युवती । इति राजनिर्घण्टः ॥

वयस्यः, पुं, ( वयसा तुल्यः । वयस् + “नौवयोधर्म्मेति ।” ४ । ४ । ९१ । इति यत् । ) समानवयस्कः । तत्पर्य्यायः । स्निग्धः २ सवयाः ३ । इत्यमरः । ० । ८ । १२ ॥ ( यथा, आर्य्यासप्तशत्याम् । ४०३ ।

“बहुयोषिति लाक्षारुणशिरसि वयस्येन इयित

उपहसिते ।

तत्कालकलितलज्जा पिशुनयति सखीषु सौभा-

ग्यम् ॥”)

वयस्या, स्त्री, ( वयस्य + टाप् ) सखी । इत्यमरः । २ । ६ । १२ । ( यथा, कथासरित्सागरे ।१०। १४५ ।

“अद्यैव सा च दृष्ट्वा त्वां जायते मदनातुरा ।
तां भजस्व वयस्यां मे ततः क्षेममवाप्स्यसि ॥”

इष्टका । यथा, शतपथब्राह्मणे । १०।४।३।१५।

“एकया न विंशतिर्व्वयस्यास्ता एकचत्वारिंशद्द्वितीया चितिः ।” तथाच, वाजसनेयसंहिताभाष्ये । १४ । ९ ।

“वयस्यासंज्ञका इष्टका उपदधात्येकोनविंशतिसङ्ख्या इत्यर्थः ॥” )

वयुनं, क्ली, (वीयते गम्यते प्राप्यते विषया अनेनेति । अज गतौ + “अजियमिशीङ्भ्यश्च ।”

उणा० ३ । ६१ । इति उनन् । स च कित् । अतोऽल्लोपाभावः । ) ज्ञानम् । यथा,—

"इत्थाव्याजै रचयति विधिं पीठकोदूखलाद्यै-श्छिद्रं ह्यन्तर्निहितवयुनः शिक्यभाण्डेषु तद्वित् ।"

इति श्रीभागवते १० स्कन्धे ८ अध्यायः ॥

शिक्यभाण्डेषु अन्तर्निहितदध्यादौ वयुनं ज्ञानं यस्य सः । इति तट्टीकायां श्रीधरस्वामी ॥

वयुनः, पुं, ( वीयते गम्यते ऽत्रेति । अज गतौ + उनन् । ) देवतागारम् । इत्युणादिकोषः । ( एतदर्थे क्लीवलिङ्गः । इति उज्ज्वलदत्तः । ३ । ६१ ॥ विश्वागर्भजातः कृशाश्वस्य पुत्रः । यथा, भागवते । ६ । ६ । २० ।

"कृशाश्वोऽर्च्चिषि भार्य्यायां धूमकेतुमजीजनत् । धिषणायां वेदशिरं देवलं वयुनं मनुम् ॥" )

वयोधाः, [स्] पुं, (वयो यौवनं दधातीति । वयस् + धा + "वयसि धाञः ।" उणा० ४ । २२८ । इति असिः । स च डित् । ) युवा । इत्युणादिकोषः ॥ ( अन्नम् । यथा, वाजसनेयसंहितायाम् । १५ । ७ ।

"वयोधसाधीतेनाधीतं जिन्व ।"

"वयोधसा वयो दधाति पुष्णाति वयोधा अन्नं तेनाधीतेनाध्ययनायोपहिताधीतं जिन्व ॥" इति तद्भाष्ये महीधरः ॥ आयुर्दातरि, त्रि । यथा, वाजसनेयसंहितायाम् । २८ । २४ ।

"अग्निमिन्द्रं वयोधसम् ॥"

"दैव्यो होता अग्निं वयोधसमिन्द्रञ्च यजतु वय आयुर्दधाति वयोधास्तमायुषो दातारं धारयितारं वा ।" इति तद्भाष्ये महीधरः ॥ )

वयोवस्थं, क्ली, ( वयसा वस्त्रमिव । ) सीसकम् । इति राजनिर्घण्टः ॥

वर, त् क ईप्से । इति कविकल्पद्रुमः ॥ ( अदन्त-चुरा०-पर०-सक०-सेट् । ) रेफोपधः । वरयति । इति दुर्गादासः ॥

वरं, क्ली, ( व्रियते इति । वृ + कर्म्मणि अप् । ) कुङ्कुमम् । मनाक्प्रियम् । इत्यमरः । तथा च ।

"वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरति-र्वरं मौनं कार्य्यं न च वचनमुक्तं यदनृतम् । वरं क्लीवं भाव्यं न च परकलत्राभिगमनं वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥"

इति वामनपुराणे ५६ अध्यायः ॥

त्वचम् । चालकम् । आर्द्रकम् । इति राजनिर्घण्टः ॥

वरं [ म ] व्य, मनाक्प्रियम् । यथा,—

"मनागिष्टे वरं क्लीवं केचिदाहुस्तदव्ययम् ॥"

इति मेदिनी । वे, ६३ ॥

वरंवरा, स्त्री, ( वरं वृणोतीति । वृ + अच् । मुम् च । ) चक्रपर्णी । इति शब्दचन्द्रिका ॥ चाकुलिया इति भाषा ॥

वरः, पुं, ( वृ + अप् । ) वरणम् । तत्पर्य्यायः । वृतिः २ । इत्यमरः । ३ । २ । ८ ॥ वै वेदने । प्रार्थनाविशेषे इत्यन्ये । इति भरतः ॥ देवादृतः । देवतकाशात् याचितः । यदाह ।

"तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः ॥"

इति च भरतः ॥

जामाता । ( यथा, रघुः । ६ । ८६ ।

"प्रमुदितवरपक्षमेकतस्तत् क्षितिपतिमण्डलमन्यतो वितानम् ॥" )

विटः । इति मेदिनी । रे, ६२ ॥ गुग्गुलुः । इति शब्दरत्नावली ॥ पतिः । इति हेमचन्द्रः ।३।१८०॥ ( निग्रहः । यथा, ऋग्वेदे । १ । १४३ । ५ ।

"न यो वराय मरुतामिव स्वनः सेनेव सृष्टा दिव्या यथाशनिः ॥"

"योऽग्निर्वराय वरणाय निग्रहाय शक्यो न भवति ॥" इति तद्भाष्ये सायणः ॥ )

वरः, त्रि, (वृ + अप् । ) श्रेष्ठः । इत्यमरः । ३ । १ । १७२ ॥ ( यथा, विष्णुपुराणे । १ । ११ । १८ ।

"राजासनं राजच्छत्रं वराश्वा वरवारणाः । यस्य पुण्यानि तस्यैते मत्वैतत् शाम्य पुत्रक ॥" )

वरकं, क्ली, ( व्रियते अनेन । वृ + अप् । ततः संज्ञायां कन् । ) पोताच्छादनम् । इति हारावली । ४८ ॥ धौताधौतसाधारणवस्त्रम् । इति शब्दरत्नावली ॥

वरकः, पुं ( व्रियते लोकैरिति । वृ + अप् । ततः कन् । ) वनमुद्गः । इति हेमचन्द्रः । ४ । २४६ ॥ पर्प्पटः । इति राजनिर्घण्टः ॥ तृणधान्यभेदः । चीना इति भाषा । तत्पर्य्यायः । स्थूलकङ्गुः २ रूक्षः ३ स्थूलप्रियङ्गुः ४ । अस्य गुणाः । मधुरत्वम् । रूक्षत्वम् । कषायत्वम् । वातपित्तकारित्वञ्च । इति राजनिर्घण्टः ॥ (वर + स्वार्थे कन् । प्रार्थनाविशेषः । यथा, महाभारते । ३ । १०७ । ५३ ।

"स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात् । द्वितीयं वरकं वव्रे पितृणां पावनेच्छया ॥" )

वरक्रतुः, पुं, ( वराः श्रेष्ठाः क्रतवो यस्य शताश्वमेधित्वात् तथात्वम् । यद्वा, वरः क्रतुर्यस्मात् । पूतक्रतुत्वात् तथात्वम् । ) इन्द्रः । इति हेमचन्द्रः । २ । ८७ ॥

वरचन्दनं, क्ली, ( वरं श्रेष्ठं चन्दनम् । ) कालीयम् । देवदारु । इति मेदिनी । ने, १४२ ॥

वरटं, क्ली, ( व्रियते इति । वृ + "शकादिभ्योऽटन् ।" उणा० ४ । ८१ । इति अटन् । ) कुन्दपुष्पम् । इति शब्दरत्नावली ॥

वरटः, पुं, ( वरति सेवते सरोवरमिति । वृ ञ सेवायाम् + "शकादिभ्योऽटन् ।" उणा० ४ । ८१ । इति अटन् । ) हंसः । इति मेदिनी । टे, ५१ ॥ कीटविशेषः । बोलता इति भाषा । तत्पर्य्यायः । गन्धोली २ वरटा ३ । इत्यमरः ॥ गन्धोलिः ४ वरला ५ । इति शब्दरत्नावली । वरली ६ । इति जटाधरः ॥ सुदा ७ क्रूरा ८ सुमधल्या ९ । इति राजनिर्घण्टः ॥

वरटा, स्त्री, ( वरट + टाप् । ) हंसी । ( यथा, नैषधे । १ । १३५ ।

"मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी ॥" )

वरला । इत्यमरः । २ । ५ । २५ ॥ कुसुम्भबीजम् । इति भावप्रकाशः ॥ ( अस्या गुणा यथा,—

"वरटा मधुरा स्निग्धा रक्तपित्तकफापहा । कषाया शीतला गुर्व्वी स्यादवृष्यानिलापहा ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )

वरटी, स्त्री, ( वरट + जातौ ङीष् । ) हंसी । इति मेदिनी । टे, ५१ ॥ गन्धोली । इति त्रिकाण्डशेषः ॥ ( यथा, सुश्रुते कल्पस्थाने ८ अध्याये ।

"तुण्डिकेरी चिटिङ्गवरटीशत पदीसूत्रकवलभिकाशृङ्गीभ्रमराः मूकसूक्तविषाः ॥" )

वरण्डिका, स्त्री, कुसुम्भबीजम् । तत्पर्य्यायः । वरटा २ । अस्या गुणाः । मधुरत्वम् । स्निग्धत्वम् । रक्तपित्तकफापहत्वम् । कषायत्वम् । शीतलत्वम् । गुरुत्वम् । अवृष्यत्वम् । अनिलापहत्वञ्च । इति भावप्रकाशः ॥

वरणं, क्ली, ( वृ + भावे ल्युट् । ) कन्यादिवरणम् । ( यथा, महाभारते । १ । १९० । ७ ।

"न च विप्रेष्वधीकारो विद्यते वरणं प्रति । स्वयंवरः क्षत्रियाणामितीयं प्रथिता श्रुतिः ॥" )

वेष्टनम् । इति मेदिनी । णे, ६५ ॥ पूजनादि । इति शब्दरत्नावली ॥ * ॥ अथ वरणविधिः । तेषामाचार्य्यादीनां होममध्ये कर्म्मणि होमारम्भात् पूर्व्वमानत्यर्थं यजमानेन स्वयं वरणं कार्य्यम् । दानवाचनाचारम्भवरणव्रतशमाणिषु यजमानं प्रतीयात् । इति हरिशर्म्मधृतकात्यायनसूत्रात् । तत्र ब्रह्मवरणं प्रथमतः । ज्योतिष्टोमे । ब्रह्मोद्गातृहोत्रध्वर्य्युत्यार्त्विक्समवृत्तिमान्यत्वाकाङ्क्षया इष्टपरिकल्पनाया आद्यत्वात् । शूगमिसोपानप्रभृतयोऽप्येवम् । वरणन्तु गन्धादिदानद्वारा प्रीतिमुत्पाद्य कर्म्मकरणायप्रेरणम् । तत्र च । सर्व्वत्र प्राङ्मुखो दाता ग्रहीता च उदङ्मुखः । इति वचनात् यजमानस्य प्राङ्मुखत्वं आचार्य्यादीनामुदङ्मुखत्वं प्रतीयते । वरणविधिमाह कात्यायनः । आसनमाहार्य्य आह साधु भवानास्तामर्च्चयिष्यामो भवन्तमिति । आसनमाहार्य्यानीय संस्थाप्याह साधु भवानास्तामिति । साध्वहमासे इति प्रतिवचनम् । अर्च्चयिष्यामो भवन्तमिति पुनरुक्ते अर्च्चय इति प्रतिवचनं सामर्थ्यात् । इति हरिशर्म्मा । इति संस्कारतत्त्वम् ॥ * ॥ मेदिनीमते पवर्गीयवकारादिशब्दोऽयम् । किन्तु अन्तःस्थवकारादिवृधातोरनट्प्रत्ययेन निष्पन्नत्वादत्र लिखितः ॥

वरणः, पुं, ( व्रियते अनेन वृणोतीति वा । वृ + "सुयुरुवृञो युच् ।" उणा० २ । ७४ ॥ इति युच् । ) प्राकारः । वरणद्रुमः । इत्यमरः । २ । २ । ३ । ( यथा, किराते । ५ । २५ ।

"इह सिन्धवश्च वरणावरणाः करिणां मुदे सनलदानलदाः ॥" )

उष्ट्रः । इति हारावली । ८१ ॥ संक्रमः । इति हलायुधः ॥ साँको इति भाषा ॥

वरणसी, स्त्री, वाराणसी । इति शब्दरत्नावली ॥

वरणा, स्त्री, ( वरण+टाप् । ) नदीविशेषः । इति शब्दरत्नावली ॥ सा तु वाराणस्युत्तरसीमा । तस्या उत्पत्तिर्यथा,—

हरिरुवाच ।

"महेश्वर शृणुष्वेमां मम वाचं कलस्वनाम् ।
ब्रह्महत्यापहरणीं शुभदां पुण्यवर्द्धिनीम् ॥
योऽसौ प्राक्पुरुषो पुण्ये मदंशप्रभवोऽव्ययः ।
प्रयागे वसते नित्यं योगशायी तु विश्रुतः ॥
चरणाद्दक्षिणात्तस्य विनिर्याता सरिद्वरा ।
विश्रुता वरणेत्येवं सर्व्वपापहरा शुभा ॥
सव्यादन्या द्वितीया च असिरित्येव विश्रुता ।
ते उभे च सरिच्छ्रेष्ठे लोकपूज्ये बभूवतुः ॥
ताभ्यां मध्ये तु यो देशस्तत् क्षेत्रं योगशायिनः ।
त्रैलोक्यप्रवरं तीर्थं सर्व्वपापप्रमोचनम् ॥
न तादृशोऽस्ति गगने न भूम्यां न रसातले ।
तत्रास्ति नगरी पुण्या ख्याता वाराणसी शुभा ।
यस्यान्तु भोगिनो यान्ति प्रयान्ति भवतो लयम् ॥"

इति वामने ३ अध्यायः ॥

वरण्डः, पुं, ( वृणोतीति । वृ+"अण्डन्कृसृभृ-वृञः ।" उणा० १ । १२८ । इति अण्डन् । ) अन्तरावेदिः । समूहः । मुखरोगः । स तु व्रण इति वयस् फोड़ा इति च भाषा । इति मेदिनी । डे, ३३ ॥ सन्धते पवर्गीयबकारादिरयं किन्तु अन्तःस्थवकारादिवृञ्धातोरौणादिक अण्डन् प्रत्ययनिष्पन्नत्वादत्र लिखितः ॥

वरण्डकः, पुं, ( वरण्ड+स्वार्थे संज्ञायां वा कन् । ) मातङ्गवेदिः । हातीर हाओदा इति भाषा । यौवनकण्टकः । वयस् फोड़ा इति भाषा, वर्त्तुलः । गोल इति ख्यातः । इति मेदिनी । के, २०३ ॥ भित्तिः । इति हेमचन्द्रः ॥ मेदिनीकारेण अयं पवर्गीयबकारादौ लिखितः । किन्तु हेमचन्द्रेण वृञ्धातुनिष्पन्नत्वात् अन्तःस्थवकारादौ परिगणितः ॥

वरण्डकः, त्रि, ( वरण्ड+कन् । ) विशालः । भयसम्पन्नः । लघवः । इति शब्दरत्नावली ॥

वरण्डा, स्त्री, (वरण्ड+टाप् ।) सारिका । वर्त्तिः । शस्त्रभेदः । इति मेदिनी । ते, ६६ ॥

वरण्डालुः, पुं, ( वरण्ड इव आलुरत्र । ) एरण्डवृक्षः । इति त्रिकाण्डशेषः ॥

वरतिक्तः पुं, ( वरः श्रेष्ठस्तिक्तरसो यस्य । ) कुटजवृक्षः । इति राजनिर्घण्टः ॥ ( पर्प्पटकः । तत्पर्य्यायो यथा,—

"पर्प्पटो वरतिक्तश्च स्मृतः पर्प्पटकश्च सः ।
कथितः पांशुपर्य्यायस्तथा कवचनामकः ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

वरतिक्तिका, स्त्री, (वरतिक्त+स्वार्थे कन् । टाप् । अत इत्वम् ।) पाठा । इति राजनिर्घण्टः ॥ आकनादि इति भाषा ॥ ( तथास्याः पर्य्यायः ।

"पाठाम्बष्ठाम्बष्ठकीच प्राचीना पापचेलिका ।
एकष्ठीला रसा प्रोक्ता पाठिका वरतिक्तिका ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

वरत्करी, स्त्री, रेणुकानामगन्धद्रव्यम् । इति शब्दचन्द्रिका ॥

वरत्रा, स्त्री, ( व्रियतेऽनयेति वृ+"वृञश्चित् ।" उणा० ३।१०७ । इति अत्रन् । टाप् ।) हस्तिकक्षरज्जुः । काछदड़ी इति ख्याता । तत्पर्य्यायः । चूषा २ कक्ष्या ३ कथा ४ । चर्म्मरज्जुः । तत्पर्य्यायः । नद्धी २ वद्ध्री ३ वर्द्ध्री ४ वाद्ध्री ५ । इत्यमरभरतौ ॥ ( यथा, ऋग्वेदे । १० । ६० । ८ ।

"यथायुगं वरत्रया नह्यन्ति धरुणाय कम् ॥")

वरत्वचः, पुं, ( वरा हितकरी त्वचा यस्य । ) निम्बवृक्षः । इति रत्नमाला ॥

वरदः, त्रि, ( वरं ददातीति । दा+"आतोऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः । ) अभीष्टदाता । तत्पर्य्यायः । समर्द्धकः २ । इत्यमरः । ३ । १ । ७ ॥ समर्द्धः ३ वाञ्छितार्थदः ४ । इति शब्दरत्नावली ॥ ( यथा, महाभारते । १ । २ । २१७ ।

"वरदं तं वरं वव्रे साहाय्यं क्रियतां मम ।
शल्यस्तस्मै प्रतिश्रुत्य जगामोद्दिश्य पाण्डवान् ॥")

प्रसन्नः । इति मेदिनी । दे, ३७ ॥

वरदा, स्त्री, ( वरद+टाप् । ) कन्या । इति मेदिनी । दे, ३७ ॥ आदित्यभक्ता । इति राजनिर्घण्टः ॥ ( पर्य्यायो यथा,—

"सुवर्च्चला सूर्य्यभक्ता वरदा बदरापि च ।
सूर्य्यावर्त्ता रविप्रोक्ता परा ब्रह्मसुवर्च्चला ॥"

इति च भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥) अश्वगन्धा । इति भावप्रकाशः ॥ वरदात्री च । ( यथा, भागवते । ३ । १६ । २२ ।

"धर्म्मस्य ते भगवतस्त्रियुगत्रिभिः स्वैः
पद्भिश्चराचरमिदं द्विजदेवतार्थम् ।
नूनं भृतं तदभिघाति रजस्तमश्च
सत्त्वेन नो वरदया तनुवा निरस्य ॥" )

वरदाचतुर्थी, स्त्री, ( वरदाख्या चतुर्थी । ) माघशुक्लचतुर्थी । तस्यां गौरी पूज्या । यथा । भविष्योत्तरे माघशुक्लपक्षमधिकृत्य ।

"चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता ।
सौभाग्यमतुलं कुर्य्यात् पञ्चम्यां श्रीरपि श्रियम् ॥"

इति तिथ्यादितत्त्वम् ॥

वरदारुः, पुं, ( ददातीति । दा+रुन् । वरस्य दारुः । ) वृक्षविशेषः । भूइसह इति हिन्दी भाषा । तत्पर्य्यायः । भूमीसहः २ दारदारुः ३ खरच्छदः ४ । अस्य गुणौ । शिशिरत्वम् । रक्तपित्तप्रसादनत्वञ्च । इति भावप्रकाशः ॥

वरपर्णाख्यः, पुं, ( वराणि पर्णान्यस्य । वरपर्णेति आख्या यस्य । ) क्षीरकञ्चुकीवृक्षः । इति रत्नमाला ॥

वरप्रदा, स्त्री, (वरं प्रददातीति । प्र+दा+कः ।) लोपामुद्रा । इति हेमचन्द्रः । २ । ३७ ॥ वरदातरि, त्रि ॥

वरफलः, पुं, ( वरं फलमस्य । ) नारिकेलवृक्षः । इति शब्दचन्द्रिका ॥ तत्फले श्रेष्ठफले च क्ली ॥

वरमुखी, स्त्री, ( वरं मुखमस्याः । ङीष् । ) रेणुकानामगन्धद्रव्यम् । इति शब्दचन्द्रिका ॥

वरयिता, [ऋ] पुं, ( वृ+णिच् । तृच् । ) भर्त्ता । इति हेमचन्द्रः ॥ वरणकारयिता च ॥

वररुचिः, पुं, ( वरा रुचिरस्य । ) कविविशेषः । तत्पर्य्यायः । पुनर्व्वसुः २ । इति त्रिकाण्डशेषः ॥ स च विक्रमादित्यराजसभास्थनवरत्नान्तर्गतरत्नविशेषः यथा,—

"धन्वन्तरिः क्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥"

इति नवरत्नम् ॥

वरलः, पुं स्त्री, ( वृणातीति । वृ+अलच् । ) वरटः । वोलता इति भाषा । यथा,

"विषदष्टो भ्रमरोली वरलस्तृणषट्पदः ॥"

इति शब्दमाला ॥

वरलब्धः, पुं, ( वरः उत्कर्षो लब्धः पुष्पेषु येन । ) चम्पकवृक्षः । इति त्रिकाण्डशेषः ॥ ( वरो लब्धः । ) वरप्राप्ते, त्रि ॥

वरला, स्त्री, ( वृ+अलच्+टाप् । ) हंसी । इति मेदिनी । ले, ११६ ॥ तत्र पवर्गीयबकारादौ पठितोऽयम् । वरटा च ॥

वरली, स्त्री, ( वरल+ङीष् । ) वरटा । इति जटाधरः ॥

वरवत्सला, स्त्री, ( वरे जामातरि वत्सला । ) श्वश्रूर्भार्य्या । इति शब्दमाला ॥

वरवर्णिनी, स्त्री, ( वरः श्रेष्ठो वर्णः प्रशस्तः पीतादिर्वास्त्यस्या इति । वरवर्ण+इनिः । ङीप् । ) अत्युत्तमा स्त्री । तत्पर्य्यायः । वरारोहा २ मत्तकाशिनी ३ उत्तमा ४ । इत्यमरः । २ । ६ । ४ ॥ मत्तकाशिनी ५ । इति भरतः ॥ ( यथा, विष्णुपुराणे । १ । १५ । ७ ।

"रत्नभूता च कन्येयं वार्क्षेयी वरवर्णिनी ।
भविष्यत् जानता पूर्व्वं मया गोभिर्व्विवर्द्धिता ॥")

लाक्षा । हरिद्रा । रोचना । फलिनी । साध्वी स्त्री । इति मेदिनी । ने, २४३ । गौरी ॥ ( यथा, महाभारते । ६ । २२ । २१ ।

"भद्रकालि । नमस्तुभ्यं महाकालि नमोऽस्तु ते ।
चण्डि । चण्डे । नमस्तुभ्यं तारिणि । वरवर्णिनि । ॥" )

सरस्वती । लक्ष्मीः । इति शब्दरत्नावली ॥

वरवाह्लीकं, क्ली, कुङ्कुमम् । इत्यमरटीका ॥

वरवृद्धः, पुं, ( वरः श्रेष्ठो वृद्धः पुरातनः ।) शिवः । इति त्रिकाण्डशेषः ॥

वरा, स्त्री, ( वृ+अप्+टाप् । ) फलत्रिकम् । इति मेदिनी । रे, ६३ ॥ रेणुकानामगन्धद्रव्यम् । इति शब्दचन्द्रिका ॥ गुडूची । मेदा । ब्राह्मी । विडङ्गम् । पाठा । हरिद्रा । इति राजनिर्घण्टः ॥ श्रेष्ठा च ॥

वराकः, पुं, ( वृणोति तच्छील इति । वृ+"जल्पभिक्षकुट्टलुण्टवृङः षाकन् ।" ३ । २ । १५५ ।

इति शाकम् ।) शिवः । इति मेदिनी । के, १२६ ॥ शुङ्गम् । इति हेमचन्द्रः ॥

वराकः, त्रि, ( वृ + “जल्पभिक्षेति ।” ३ । २ । १५५ । इति षाकन् ।) शोचनीयः । इति मेदिनी । के, १२६ ॥ अधरः । इति शब्दमाला ॥ (यथा, मुकुन्दमालायाम् । १७ ।
“नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा सेव्ये स्वस्य पदस्य दातरि परे नारायणे तिष्ठति ।
यं कञ्चित् पुरुषाधमं कतिपयग्रामेशमल्पार्थदं सेवायै मृगयामहे नरमहो मूढा वराका वयम् ।”)

वराङ्गं, क्ली, (वरमङ्गानाम् ।) मस्तकम् । गुह्यम् । इत्यमरः । ३ । ३ । २६ ॥ गुडत्वक् । योनिः । इति त्रिकाण्डशेषः ॥ श्रेष्ठावयवे च ॥ ( वराण्यङ्गान्यस्य ।) तद्युक्ते, त्रि ॥ (चोचम् । यथा,
“त्वक्पत्रञ्च वराङ्गं स्याद्भृङ्गञ्चोचं तथोत्कटम् ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )

वराङ्गः, पुं, ( वराणि स्थूलान्यङ्गानि यस्य । ) हस्ती । इति त्रिकाण्डशेषः ॥ विष्णुः । यथा,—
“सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ॥”
इति तस्य सहस्रनामस्तोत्रम् ॥

वराङ्गकं, क्ली, ( वरमङ्गमस्य । कप् । ) गुडत्वक् । इत्यमरः । २।४।१३४ ॥ श्रेष्ठावयवयुक्ते, त्रि ॥

वराङ्गना, स्त्री, ( वरा श्रेष्ठा अङ्गना । ) अतिप्रशस्ताङ्गयुक्ता स्त्री । यथा,—
“शिरः सपुष्पं चरणौ सुपूजितौ
वराङ्गनासेवनमल्पभोजनम् ।
अनग्नशायित्वमपर्व्वमैथुनं
चिरप्रनष्टां श्रियमानयन्ति षट् ॥”
इति लक्ष्मीचरित्रम् ॥

वराङ्गरूपोपेतः, त्रि, ( अङ्गानां रूपाणि अङ्गरूपाणि । वराणि अङ्गरूपाणि तैरुपेतः । ) श्रेष्ठरूपयुक्तः । सुन्दर इत्यर्थः । तत्पर्य्यायः । सिंहसंहननः १ । इत्यमर ॥

वराङ्गी, स्त्री, ( वरमङ्गमन्तरवयवो यस्याः । ) हरिद्रा । इति राजनिर्घण्टः ॥

वराङ्गी, [ न् ] पुं, ( वराङ्गमस्त्यस्येति । इनिः । ) अम्लवेतसः । वराङ्गश्चाम्लवेतसः इति वा पाठः । इति रत्नमाला । श्रेष्ठाङ्गयुक्ते, त्रि ॥

वराटः, पुं, ( वरं मन्दमटतीति । अट् + कर्म्मणि अण् । ) कपर्द्दकः । इति राजनिर्घण्टः ॥ ( अस्य शोधनादिविषयो यथा,—
“भूगर्त्ते च समे शुद्धे पचनीं स्थापयेत् सुधीः ।
तुषैश्च पूरयेत्तस्याः किञ्चिन्मध्यं भिषग्वरः ॥
वराटैः पूरितां मूषां तन्मध्ये विनिवेशयेत् ।
करीषाग्निं ततो दद्यात् मालिका यन्त्रसुत्तमम् ।
अनेन म्रियते नूनं वराटः सर्व्वरोगजित् ।”॥
अन्यच्च ।
“वराटं तप्त चाङ्गेरी जम्बीराणां रसेन वा ।
अन्येषामपि चाम्लानां यावत् पीतं न गच्छति ।
पश्चादुद्धृत्य प्रक्षाल्य गृह्णीयाच्च वराटकम् ॥”
इति वराटशुद्धिः ॥ * ॥
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधिकारे ॥ ) रज्जुः । यथा । रज्जुः शुल्बा वराटो ना । इति स्त्रीकाण्डे रत्नकोषः । इत्यमरटीकायां भरतः ॥

वराटकः, पुं स्त्री, ( वराट् + स्वार्थे कन् । ) कपर्द्दकः । इत्यमरः ॥ कडि इति भाषा । तस्य संख्याभेदेन संज्ञाभेदा यथा,—
“वराटकानां दशकद्वयं यत्
सा काकिणी ताश्च पणश्चतस्रः ।
ते षोडश द्रम्म इहावगम्यो
द्रम्मैस्तथा षोडशभिश्च निष्कः ॥”
इति लीलावती ॥ * ॥
अपि च । तास्रिकः कार्षिकः पणः । इति याज्ञवल्क्यवचनेन शुल्बाः पणाद्यमाषकस्ते षोडशाख्यः कर्षाख्यः स्त्री । इत्यमरसिंहोक्तेन च अशीतिरत्तिकापरिमिततास्रे पणशब्दः सङ्केतितः स च तावत्संख्यकवराटकैर्लभ्यते इति वराटकेष्वपि तथा व्यवहारः । एतन्मूलकं भविष्यमत्स्यमन्त्रयोर्व्वचनं यथा, —
“अशीतिभिर्व्वराटकैः पण इत्यभिधीयते ।
तैः षोडशैः पुराणं स्याद्रजतं सप्तभिस्तु तैः ॥”
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
ते च दक्षिणार्थं विधीयन्ते । यथा,—
“हतमश्रोत्रियं दानं हतो यज्ञस्त्वदक्षिणः ।
तस्मात् पणं काकिणीं वा फलं पुष्पमथापि वा ।
प्रदद्यात् दक्षिणां यज्ञे तथा च सफलो भवेत् ॥”
इति शुद्धितत्त्वम् ॥

वराटकः, पुं, ( वराट एव । स्वार्थे कन् । ) रज्जुः । पद्मबीजम् । इति मेदिनी । के, २०२ ॥

वराटकरजाः, [ स् ] पुं, ( वराटक इव रजो यत्र । ) नागकेशरवृक्षः । इति शब्दमाला ॥

वराटिका, स्त्री, ( वराट् + स्वार्थे कन् । टाप् । अत इत्वञ्च । ) कपर्द्दकः । इत्यमरटीकायां भरतः राजनिर्घण्टश्च ॥ ( यथा, नैषधे । २ । ८८ ।
“बहुकम्बुमणिर्व्वराटिका
गणनाटत्करकर्कटोत्करः ॥”)
तुच्छवाचिका च । यथा,—
“प्रयागे मृत्यते येन तस्य गङ्गा वराटिका ॥”
इत्युद्भटः ॥

वराणः, पुं, ( व्रियते इति । वृ + युच् । पृषोदरात् दीर्घः । ) इन्द्रः । इति त्रिकाण्डशेषः ॥ वरुणवृक्षः । इति शब्दरत्नावली ॥

वराणसी, स्त्री, (वाराणसी पृषोदरादित्वात् साधुः ।) काशी । यथा,—
“काशी वराणसी वाराणसी शिवपुरी च सा ॥”
इति हेमचन्द्रः ॥

वरादनं, क्ली, ( वरैः राजभिरद्यते इति । अद् + ल्युट् । ) राजादनम् । इति शब्दचन्द्रिका ॥

वराभिधः, पुं, अम्लवेतसः । इति राजनिर्घण्टः ॥ ( वरा अभिधा यस्य । ) श्रेष्ठनामा च ॥

वराम्लः, पुं, ( वरः श्रेष्ठः अम्लोऽम्ल । रसः लवम् । ) करमर्द्दः । इति रत्नमाला ॥ कराम्ल इति वा पाठः ॥

वरारकं, क्ली, (वरं श्रेष्ठं धनिनं ऋच्छति गच्छति । ऋ + ण्वुल् ।) हीरकम् । इति हेमचन्द्रः । ४ । १३१ ॥ (गुणादयोऽस्य हीरकशब्दे ज्ञातव्याः ॥)

वरारोहः, पुं, ( हस्तिन उन्नतात् आसनपृष्ठात् वर आरोहो यस्य ।) हस्त्यारोहः । अश्वारोहः । इति विश्वः ॥

वरारोहा, स्त्री, (वर आरोहो नितम्बो यस्याः ।) उत्तमा स्त्री । इत्यमरः । २ । ६ । ४ ॥ ( यथा, महानिर्व्वाणतन्त्रे । ४ । ४७ ।
“यदा तु वैदिकी दीक्षा दीक्षा पौराणिकी तथा ।
न स्यास्यति वरारोहे । तदैव प्रबलः कलिः ॥”)
कटिः । इति हेमचन्द्रः ॥

वरालिका, स्त्री, ( वरा आलिका सखी जयादिर्यस्याः । ) दुर्गा । इति त्रिकाण्डशेषः ॥

वराशिः, पुं, स्थूलवस्त्रम् । मोटा कापड़ इति भाषा । तत्पर्य्यायः । स्थूलशाटकः २ । इत्यमरः ॥ वराशिः ३ स्थूलशाटकम् ४ स्थूलशाटिका ५ । इति तट्टीकायां भरतः ॥ स्थूलपट्टाकः ६ । इति शब्दरत्नावली ॥ वराशि ७ । क्लीवमिति जटाधरः ॥

वरासनं, क्ली, ( वरायै दुर्गायै अस्यते क्षिप्यते दीयते इति यावत् । अस् + ल्युट् । ) ओड्रपुष्पम् । इति शब्दमाला ॥ (वरमासनमिति ।) उत्तमासनञ्च ॥

वरासनः, पुं, ( वरां स्त्रीयां नारीं अस्यति क्षपणोति । अस् + ल्युः । ) षिड्गः । ( वरानपि जनान् अस्यति दूरीकरोतीति । ) द्वारपालः । इति विश्वः ॥

वरासिः, पुं, ( वरैः श्रेष्ठैः अस्यते क्षिप्यते इति । अस् + इन् । ) स्थूलशाटकः । (वरोऽसिर्यस्य ।) खड्गधरः । इति धरणिः ॥

वरासी, स्त्री, स्नानवासः । इति शब्दमाला ॥

वराहः, पुं, ( वरान् आहन्ति इति दुर्गः । उण० ४ । ३ । ४६ । हन् + डः । ) पशुविशेषः । वरा इति भाषा । तत्पर्य्यायः । शूकरः २ घृष्टिः ३ कोलः ४ पोत्री ५ किरिः ६ किटिः ७ दंष्ट्री ८ घोणी ९ स्तब्धरोमा १० क्रोडः ११ भूदारः १२ । इत्यमरः ॥ किरः १३ मुस्तादः १४ मुखलाङ्गूलः १५ । इति जटाधरः ॥ स्थूलनासिकः १६ दन्तायुधः १७ बलवक्त्रः १८ दीर्घतरः १९ आखनिकः २० भूक्षित् २१ बहुकः २२ । इति शब्दरत्नावली ॥ अस्य मांसस्य गुणाः । गुरुत्वम् । वातघ्नत्वम् । बलवर्द्धनत्वञ्च । इति राजवल्लभः ॥ बहुमूत्रत्वम् । विड्घ्नत्वञ्च । इति तत्रैव पाठान्तरम् । अन्यत् शूकरशब्दे द्रष्टव्यम् ॥ * ॥

तन्मांसं विष्णवे न देयम्। यथा। "नाभक्ष्यं नैवेद्यार्थे भक्ष्येष्वप्यजामहिषीक्षीरं पञ्चनखमत्स्यवराहमांसानि चेति।" इत्याह्निक-तत्त्वधृतविष्णुसूत्रम् ॥ * ॥ वराहमांसं भुक्त्वा विष्णुपूजादिनिषेधो यथा,—

वराह उवाच।

"भुक्त्वा वाराहमांसन्तु यो वै मामुपसर्पति।
पतनं तस्य वक्ष्यामि यथा भवति सुन्दरि! ॥
वराहो दश वर्षाणि भूत्वा तु चरते वने।
व्याधो भूत्वा महाभागे समाः सप्त च सप्ततिः ॥
क्रिमिर्भूत्वा समाः सप्त तिष्ठते तस्य पुष्कले।
अयोचर्म्मविष्ठो भूत्वा वर्षाण्याष्ट चतुर्दश ॥
एकोनविंशवर्षाणि यातुधानश्च जायते।
शुक्लकस्त्वष्टवर्षाणि जायते भवने बहु ॥
चास्त्रिंशतिवर्षाणि जायते पिशिताशनः।
एष संसारिताख्यात वाराहामिषभक्षकः ॥
जायते विपुले सिद्धे कुले भागवतस्तथा।
क्षमीके प्रवचः श्रुत्वा सर्व्वसम्पूर्णलक्षणम् ॥
शिरसा चाञ्जलिं कृत्वा वाक्यमेतदुवाच ह।
एतन्मे परमं गुह्यं तव भक्तसुखावहम्।
वाराहमांसभक्षास्तु येन मुच्यन्ति किल्बि-
षात् ॥

वाराह उवाच।

तरन्ति मानवा येन तिर्य्यक्संसारसागरात्।
गोमयेन दिनं पञ्च कणाहारेण सप्त वै ॥
पानीयन्तु ततो भुक्त्वा तिष्ठेत् सप्तदिनं ततः।
अक्षारलवणं सप्त शक्तुभिश्च तथा त्र्यः ॥
तिलभक्षो दिनान् सप्त सप्त पायसभक्षकः।
पयो भुक्त्वा दिनं सप्त कारयेच्छुद्धिमात्मनः ॥
शान्तदान्तपराः कृत्वा अहङ्कारविवर्ज्जिताः।
दिनान्येकोनपञ्चाशच्चरेत् कृतनिश्चयः ॥
प्रमुक्तः सर्व्वपापेभ्यः सवंशो विगतज्वरः।
कृत्वा तु मम कर्म्माणि मम लोकाय गच्छति ॥"
इति वाराहमांसभक्षणापराधप्रायश्चित्तम्।
इति वाराहपुराणम् ॥ * ॥

वन्यवराहमांसं श्राद्धादौ विहितम्। यथा अत्रन्नौशनसौ हारीतः। महारण्यवासि-नश्च वराहाश्चेति। एवञ्च विवदन्त्यत्रा-न्यसूकराश्चेति वशिष्ठोक्तं श्वेतान्वितया व्य-वस्थितम्। कल्पतरुस्तु। श्राद्धे नियुक्तानि युक्त-तयेति। विष्णुपासकस्य सर्व्वथा निषेधः। यथा वाराहे भगवद्वाक्यम्।
"भुक्त्वा वाराहमांसन्तु यस्तु मामुपसर्पति।
वराहो दशवर्षाणि भूत्वा वै चरते वने ॥"
इत्येकादशीतत्त्वम् ॥ * ॥

याज्ञवल्क्यः।
"हविष्यान्नेन वै मासं पायसेन च वत्सरम्।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम्।
मासवृद्ध्याभितृप्यन्ति दत्तैरिह पितामहाः ॥"
इति श्राद्धतत्त्वम् ॥ * ॥

विष्णोरवतारविशेषः। यथा,—

स्वायम्भुव उवाच।

"कुत्र प्रजाः स्थास्यन्ति पृथिवी तावत् प्रलया-र्णवे मग्ना तस्या उद्धरणे यत्नं कुरु। इति श्रुत्वा ब्रह्मा भगवन्तं ध्यातवान्। ध्यायतस्तस्य नासा विवरात् अङ्गुष्ठप्रमाणो वराहपोतो निरगात्। स च आकाशस्थः सन् क्षणमात्रेण पर्व्वतोपमो बभूव। तं विष्णुं मत्वा ब्रह्मा तुष्टाव। स च तेन स्तुतः प्रलयार्णवजलमध्ये प्रविश्य दन्ताग्रेण पृथ्वीमुद्धृत्य निजधारणशक्त्या संस्थाप्य अन्त-र्हितो बभूव। ततः पृथिव्यां राजा स्वायम्भुव-मनुरासीत्।" इति श्रीभागवतमतम् ॥ * ॥ तद-वतारकर्तृकहिरण्याक्षवधो यथा,—

"वराहपर्व्वतो नाम यः पुरा हरिनिर्म्मितः।
स एव भूत्वा भगवानाजगामासुरान्तकम् ॥
ततश्चन्द्रप्रतीकाशममरश्लाघ्यमुत्तमम्।
सहस्रारं ततश्चक्रं सूर्य्यवह्निसमप्रभम् ॥
यो वैकुण्ठः सुरेन्द्राणामनन्तो भोगिनामपि।
विष्णुर्यो योगविदुषां यो यज्ञो यज्ञकर्म्मणाम् ॥
विश्वे यस्य प्रसादेन सवनस्था दिवौकसः।
आज्यं महर्षिभिर्दत्तमश्नुवन्ति सुधाहुतम् ॥
ततो दैत्यद्रवकरं पुराणं शङ्खमुत्तमम्।
यश्चेव दध्मौ वेगेन विनिपत् दैत्यजीवितम् ॥
ततः संरक्तनयनो हिरण्याक्षो महासुरः।
कोऽयमित्यति वदन् रोषान्नारायणमुदैक्षत ॥
वाराहरूपिणं देवं स्थितं पुरुषविग्रहम्।
शङ्खचक्रोद्यतकरं देवानामार्त्तिनाशनम् ॥
रराज शङ्खचक्राभ्यां ताभ्यामसुरसूदनः।
सूर्य्याचन्द्रमसोर्मध्ये पौर्णमास्यामिवाम्बुदः ॥
ततो हिरण्याक्षमुखाश्च सर्व्वे
समाद्रवन् दैत्यगणाः सुरेशम्।
निहन्तुकामाः सहसा वराहं
गृहीतशस्त्रा बलपूर्णदर्पाः ॥
तैर्बध्यमानोऽतिशयेन शस्त्रै-
र्दैत्यासुरैर्दानवपुङ्गवैश्च।
नासौ चचालासुरवृन्दहा वै
मेघैः सुदृढा इव मन्दराद्रिः ॥
दैत्यस्ततोऽसौ नृवराहमाहवे
निपातयामास यथा ज्वलन्तीम्।
शक्तिं यथा विद्युतमाशु कुक्षौ
प्रवर्षमाणोऽपि गिरिं सुमेघः ॥
स हन्यमानो गदयाप्रमेयः
प्रोवाच दैत्यं नृवराहमूर्त्तिः।
प्रजापतेः सेतुमिमं निहत्य
क्वेदानीं क्व यास्यसि यथा सुरेन्द्रः ॥
बलं समासाद्य परैरजेयं
विनाशयिष्याम्यहमेवमाजौ।
दैत्यात्मया साकमतो हि देवान्
हृतस्वकीयान् सुनयोपपन्नान् ॥
संस्थापयिष्यामि न संशयोऽत्र
दैत्येन्द्रदर्पः क्व नु सम्प्रतीपे ॥
एवं ब्रुवति वाक्यन्तु विष्णोर्वक्षस्यपातयत्।
स बाहुशक्तमुद्यम्य सर्व्वप्रहरणं रणे ॥
दानवाश्चापि समरे मयतारपुरोगमाः।
उद्यतायुधनिस्त्रिंशाः सर्व्वे तं समुपाद्रवन् ॥
स ताड्यमानोऽतिबलैर्दैत्यैः सर्व्वायुधोद्यतैः।
न चचाल वराहस्तु मैनाक इव पर्व्वतः ॥
क्रोधसंरक्तनयनः शङ्खचक्रधरो हरिः।
अवद्रुत स वेगेन आप्लुवन् सर्व्वतो दिशम् ॥
तं जयायासुरेन्द्राणां वर्द्धमानं नभस्तले।
ऋषयः सह गन्धर्व्वैस्तुष्टुवुर्मधुसूदनम् ॥
दीप्ताग्निसदृशं घोरं दर्शनीयसुदर्शनम्।
सुवर्णरेणुपर्य्यन्तं वज्रनाभं भयावहम् ॥
मेदोऽस्थिमज्जारुधिरैः सिक्तं दानवसम्भवैः।
अद्वितीयं प्रहारेषु क्षुरपर्य्यन्तमण्डलम् ॥
स्रग्दाममालाविततं कामगं कामरूपिणम्।
चक्रमुद्यम्य समरे वाराहः स्वेन तेजसा ॥
चिच्छेद बाहुं चक्रेण हिरण्याक्षस्य वै तदा।
स छिन्नबाहुर्विशिरा न प्राकम्पत दानवः।
कबन्धवत्स्थितः संख्ये विशाख इव पादपः ॥
ततः स्थितस्यैव शिरस्तस्य भूमावपातयत।
हिरण्मयं यज्ञचिह्नं मेरोः शृङ्गमिवोत्तमम् ॥
हिरण्याक्षे हते दैत्या ये शेषाश्चैव दानवाः।
सर्व्वे तस्य भयात् भक्ता जग्मुरार्त्ता दिशो
दश ॥"

इति वह्निपुराणम् ॥

अथ वराहावतारकारणम्। शरभरूपिमहा-देवकर्तृकतच्छरीरनाशश्च।

"त्रैलोक्यमखिलं दग्धं यदा कालाग्निना तदा।
अनन्तः पृथिवीं त्यक्त्वा विष्णोरन्तिकमागतः ॥
तेन त्यक्ता तु पृथिवी जलमाश्रादधोगता।
ततो वराहरूपेण निमग्नां पृथिवीं जले।
मग्नां समुद्धारास्तु न्यधात् तत्सलिलोपरि ॥
वराहोऽपि स्वयं गत्वा लोकालोकाह्वयं गिरिम्।
वाराह्या सह रेमे स पृथिव्या चारुरूपया ॥
स तया रममाणस्तु सुचिरं पर्व्वतोत्तमे।
नावाप तोषं लोकेशः पोत्री परमकामुकः ॥
पृथिव्याः पोत्रिरूपाया रमयन्त्यास्ततः सुताः।
त्रयो जाता द्विजश्रेष्ठास्तेषां नामानि वै शृणु ॥
सुवृत्तः कनको घोरः सर्व्व एव महाबलाः।
स तैः पुत्रैः परिवृतो वाराहो भार्य्यया सह ॥
रममाणस्तदा कायत्यागं नैवागमत् क्रिया।
इतस्ततश्च शिशुभिः क्रीडद्भिः पोत्रिभिस्तदा ॥
भग्नानि तत्र भवनानि मही कल्पतरुस्तथा।
ततो देवगणाः सर्व्वे बाधिता दैत्ययोनिभिः ॥
शक्रेण सहिता मन्त्रं चक्रुः सम्यक् जगाहितम् ॥
ततो निश्चित्य ते सर्व्वे शक्राद्या मुनिभिः सह।
शरण्यं शरणं जग्मुर्नारायणमजं विभुम् ॥
तं समासाद्य गोविन्दं वासुदेवं जगत्पतिम्।
प्रणम्य सर्व्वे विप्रास्तुष्टुवुर्गरुडध्वजम् ॥

देवा ऊचुः।

नमस्ते देवदेवेश। जगत्कारणकारण।
कालस्वरूपिन् भगवन् प्रधानपुरुषात्मक ॥
इति स्तुतो देवदेवो भूतभावनभावनः।
देवेन्द्रैर्वगणैरूपे तान् सर्व्वान् मेघनिस्वनः ॥

श्रीभगवानुवाच ।
यदर्थमागता यूयं यच्च वो भयमुपस्थितम् ।
यच्च यज्ञा मया कार्य्यं तद्देवाः श्रूयतामिताम् ॥
देवा ऊचुः ।
क्षोभ्यते वसुधा नित्यं क्रीडया यज्ञपोत्रिणः ।
लोकाश्च सर्व्वे संक्षुब्धा नाप्नुवन्त्युपशान्तिताम् ॥
इति तेषां निगदतां श्रुत्वा वाक्यं जनार्द्दनः ।
उवाच शङ्करं देवं ब्रह्माणञ्च विशेषतः ॥
यत् पृच्छते देवताः सर्व्वाः प्रजाश्च सकला इमाः ।
प्राप्नुवन्ति महद्दुःखं क्षोभ्यते सकलं जगत् ॥
वाराहं तदहं कायं त्यक्तुमिच्छामि शङ्कर ।
निर्द्देशयतां तत् त्यक्तुं स्वेच्छया नहि शक्यते ॥
त्वं नाशयस्व तत् कायं ममाज्ञा शङ्कराधुना ।
त्वमाप्यायस्व तेजोभिर्भवन् शारभरं तनुः ॥
आप्याययन्तु तदा देवाः शङ्करो यत्नु पोत्रिकम् ।
इनककायाः संयमीन् विप्राणां मारणात् तथा ॥
कायः पापकरो भूतस्तं त्यक्तुं युज्यतेऽधुना ।
प्रायश्चित्तैस्तपोभिर्वै प्रायश्चित्तमहं ततः ।
चरिष्यामि तदर्थं वै तद्यत्नेन पाल्यताम् ॥
घना पाल्या मम तदा या हि सीदति निश्चयः ।
मनुते प्रत्यहं तस्मात् त्यक्ष्ये कायं प्रजाहते ॥
श्रीमार्कण्डेय उवाच ।
इत्युक्तौ वासुदेवेन तदा च भवशङ्करौ ।
तथा यथोक्तं तत् कार्य्यमिति गोविन्दमूचतुः ॥
वासुदेवोऽपि तान् सर्व्वान् विसृज्य त्रिदशा-
स्तदा ।
वाराहं तेजसा हर्त्तुं स्वयं ध्यानपरोऽभवत् ॥
शनैः शनैर्यदा तेज आहरत्येव माधवः ।
तदा देवन्तु वाराहं सत्त्वहीनं व्यजायत ॥
ब्रह्माद्यास्त्रिदशाः सर्व्वे महादेवमुपागतम् ।
चतुर्भुजस्तथा तेन आधातुं शरणागते ॥
ततः सर्व्वैर्देवमयैः स्वं स्वं तेजो ह्यवध्यते ।
आस्थाय तेन बलवान् योऽतीव समजायत ॥
ततः शरभरूपी च तनुवशाद्गिरिशोऽभवत् ।
जटाधोभागतश्चाष्टपादयुक्तः सुभैरवः ॥
हिमचयोजनोच्छ्रायः सार्द्धलक्षैकविस्तृतः ॥
ऊर्द्धं वराहकायस्तु लक्षयोजनविस्तृतः ॥
लक्षार्द्धविस्तृतः पार्श्वे वर्द्धमानस्तदाभवत् ।
तमायान्तं ततो दृष्ट्वा क्रोधाद्धावन्तमञ्जसा ।
सुवृत्तः कनको घोर आवेतुः क्रोधमूर्च्छिताः ।
उच्चैर्विघृष्टं युगपत् पोत्रघातैर्महाबलाः ।
ततस्तुण्डप्रहारेण शरभः कण्ठमध्यतः ।
भित्वा वपुर्वराहस्य पातयामास तत्क्षणे ॥
तं पातयित्वा प्रथमं सुवृत्तं कनकं तथा ।
घोरञ्च कण्ठदेशेषु भित्वा भित्वा जघान ह ॥
व्यक्तप्राणास्तु ते सर्व्वे पेतुस्तोये महार्णवे ।
जगद्ध्वंसं विमन्वानाः कालानलसमार्चिषः ॥
पतितेषु वराहेषु ब्रह्मा विष्णुहरस्तथा ।
वराहं चिन्तयामासुः पुनरेव समागताः ॥"
इति कालिकापुराणीयाष्टाविंशत्रिंशाध्याया-
न्ततः सङ्कलितः ॥ * ॥ विष्णुः । मानभेदः ।
पर्व्वतभेदः । मुस्ता । इति मेदिनी । हे, २९ ॥

( पर्व्वतार्थे उदाहरणम् । यथा, महाभारते । २ । २१ । २ ।
"वैहारो विपुलः शैलो वराहो वृषभस्तथा ।
तथा ऋषिगिरिस्तात शुभाश्चैत्यकपञ्चमाः ॥")
शिशुमारः । वाराहीकन्दः । इति राजनिर्घण्टः ॥ अष्टादशद्वीपान्तर्गतक्षुद्रद्वीपविशेषः । यथा,—
"गन्धर्व्वो वरुणः सौम्यो वराहः कङ्क एव च ।
कुमुदश्च कशेरुश्च नागो भद्रारकस्तथा ॥
चन्द्रक्रमलयाः शङ्खयवाङ्गकगभस्तिमान् ।
ताम्राङ्गश्च कुमारी च तत्र द्वीपाः दशाष्टभिः ॥"
इति शब्दमाला ॥
( छायापिच्छोरः । तत्पर्य्यायो यथा,—
"वराहः छायापिच्छोरः छायापिच्छीलकस्तु सः ॥"
इति वैद्यकरत्नमालायाम् ॥)

वराहकन्दः, पुं, ( वराहप्रियः कन्दो यस्य । ) वाराही । इति राजनिर्घण्टः ॥

वराहकान्ता, स्त्री, (वराहस्य कान्ता प्रियेति ।) वाराहीकन्दः । इति शब्दरत्नावली ॥

वराहकाली, [न्] पुं ( वराहवत् कलति इति । कल् + णिनिः । ) सूर्य्यमणिपुष्पवृक्षः । तत्पर्य्यायः । सूर्य्यावर्त्तः २ । इति हारावली । ९४ ॥

वराहक्रान्ता, स्त्री, ( वराहेण क्रान्ता अतिप्रियत्वात् । ) क्षुपविशेषः । इति शब्दमाला ॥ तत्पर्य्यायः । लज्जालुः २ शमङ्गा ३ जलकारिका ४ वराहनामा ५ वररा ६ शूकरी ७ रक्तगन्धिका ८ नमस्कारी ९ गण्डकाली १० खदिरी ११ । इति रत्नमाला ॥ लज्जालुका १२ अञ्जलिकारिका १३ लताञ्जलिः १४ गण्डकारी १५ समोच्छदा १६ । इति मन्थान्तरम् ॥ वाराही । चामारालु इति ख्याते । इति सुभूतिः । इत्यमरटीकायां भरतः ॥

वराहनामा, [न्] पुं, ( वराहस्य नाम इव नाम यस्य । ) वाराहीकन्दः । इति शब्दमाला ॥

वराहिका, स्त्री, कपिकच्छुः । इति राजनिर्घण्टः ॥

वराही, स्त्री, ( वराहो भक्षकत्वेनास्त्यस्येति । अच् । गौरादित्वात् ङीष् । ) भद्रमुस्ता । शूकरकन्दः । इति राजनिर्घण्टः ॥

वरिवसितः, त्रि, ( वस् + "नमोवरिवश्चित्रङः क्यच् ।" ३ । १ । १९ । इति क्यच् । ततः क्तः । "क्यस्य विभाषा ।" ६ । ४ । ५० । इति पक्षे यलोपः । ) उपासितः । इत्यमरः । ३ । १ । १०२ ॥

वरिवस्या, स्त्री, ( वरिवसः पूजायाः करणम् । वरिवस् + "नमोवरिवश्चित्रङः क्यच् ।" ३ । १ । १९ । इति क्यच् । "अ प्रत्ययात् ।" ३ । ३ । १०२ । इत्यः । टाप् । ) शुश्रूषा । इत्यमरः । २ । ७ । ३५ ॥ ( यथा, ऋग्वेदे । १ । ८२ । ९ ।
"धुवे सदो वरिवस्या समानो
विश्वामेषं वृजनं जीरदानुम् ॥")

वरिवस्यितः, त्रि, ( वरिवस्या संजाता अस्य तारकादित्वादितच् । यद्वा, वरिवस्य + क्तः । "क्यस्य विभाषा ।" ६।४।५० । इति पक्षे यलोपाभावः । ) उपासितः । इत्यमरः । ३।१।१०२ ॥

वरिशी, स्त्री, वड़िशी । इति शब्दरत्नावली ॥

वरिषं, क्ली, ( वृ + षः । बाहुलकात् इट् । ) वत्सरः । इति शब्दरत्नावली ॥ ( "वर्षः स्यात् वरिषोऽपि च ।" इत्युज्ज्वलदत्तधृतवचनम् । ३ । ६२ ॥ )

वरिषाः, स्त्री भूम्नि, ( वृ + षः । बहुवचनात् इट् । ) वर्षाः । इति भरतद्विरूपकोषः ॥

वरिषाप्रियः, पुं, ( वरिषा वर्षा प्रिया यस्य । ) चातकपक्षी । इति शब्दरत्नावली ॥

वरिष्ठं, क्ली, ( अतिशयेन वरम् । वर + इष्ठन् । ) ताम्रम् । इत्यमरः । ३ । २ । १११ ॥ (यथा,—
"दत्तं वरिष्ठं विख्यातं ताम्रं शुल्बमुदुम्बरम् ॥"
इति वैद्यकरत्नमालायाम् ॥)
मरिचम् । इति मेदिनी । ठे, १५ ॥

वरिष्ठः, त्रि, ( अयमेषामतिशयेन वर उरुर्वा अतिशायने इष्ठन् । प्रियस्थिरेति वरादेशः । ) इति व्याकरणम् ॥ वरतमः । ( यथा, भागवते । १ । १० । १ ।
"हत्वा स्वरिक्थस्पृध आततायिनो
युधिष्ठिरो धर्म्मभृतां वरिष्ठः ॥")
उरुतमः । इति मेदिनी । ठे, १५ ॥ ( यथा, ऋग्वेदे । ४ । ५६ । १ ।
"यत्सीं वरिष्ठे बृहती विमिन्वन्
रुवद्धोक्षा पप्रथानेभिरेवैः ॥" )
वस्तः । इत्यजयः ॥

वरिष्ठः, पुं, ( वर + इष्ठन् । ) तित्तिरिपक्षी । इति मेदिनी । ठे, १५ ॥ नारङ्गवृक्षः । इति राजनिर्घण्टः ॥ ( चाक्षुषमनुपुत्रः । यथा, महाभारते । १३ । १८ । २० ।
"वरिष्ठो नाम भगवांश्चाक्षुषस्य मनोः सुतः ॥"
धर्म्मसावर्णिमन्वन्तरस्य ऋषिविशेषः । यथा, मार्कण्डेये । ९४ । १९ ।
"हविष्मांश्च वरिष्ठश्च ऋष्टिरन्यस्तथारुणिः ।
निश्चरश्चानघश्चैव रिष्टिश्चान्यो महामुनिः ।
सप्तर्षयोऽन्तरे तस्मिन्नग्निदेवश्च सप्तमः ॥"
दैत्यविशेषः । यथा, हरिवंशे । २४२ । ११ ।
"वरिष्ठश्च गविष्ठश्च भूतलोन्मथनो विभुः ।
सुप्रभावः किरीटी च कवचीवक्त्रो महासुरः ॥")

वरिष्ठा, स्त्री, ( वरिष्ठ + टाप् । ) आदित्यभक्ता । इति राजनिर्घण्टः ॥

वरी, स्त्री, ( वृणोतीति । वृ + पचाद्यच् । गौरादित्वात् ङीष् । ) शतावरी । इत्यमरः । २ । ४ । १०० ॥ सूर्य्यपत्नी । इति त्रिकाण्डशेषः ॥

वरीयान्, [स्] त्रि, ( अयमनयोरतिशयेन उरुः वरो वा । ईयसुन् । प्रियस्थिरेति वरादेशः । ) श्रेष्ठः । ( यथा, भागवते । २ । १ । १ ।
"वरीयानेष ते प्रश्नः कृतो लोकहितो नृप ! ॥")
वरिष्ठः । अनिमुखा । इति मेदिनी । ठे, १५ ॥

## वर्णाः

गो गौरी गौरवो गङ्गा गणेशो गोकुलेश्वरः ।
शार्ङ्गी पञ्चान्तको गाथा गन्धर्वः सर्वगः
स्मृतिः ॥
सर्व्वसिद्धिः प्रभा धूम्रा शिवात्मा शिवदर्शनः ।
विश्वात्मा गौः पृथग्रूपा बालबद्धत्रिलोचनः ॥
गीतं सरस्वती विद्या भोगिनी नन्दनो धरा ।
भोगवती च हृदयं ज्ञानं जालन्धरो लवः ॥
लवस्थाने नव इति वा पाठः । गः ॥
घः खड्गी घुर्घुरो घण्टो घण्टीशक्तिपुरा-
न्तकः ।
वायुः शिवोत्तमः चण्डा किङ्किणी वीरनायकः ॥
मरीचिर्विघ्नको मेधा कालरूपी च दाम्भिकः ।
लम्बोदरा ज्वालमुखं नन्दीशो हननं ध्वनिः ।
ङ्केशोत्थविद्या संहर्त्ता कामाक्षमनसामयः॥घः॥
ङः शङ्खी भैरवश्चण्डो बिन्दूत्तंसः शिशुप्रियः ।
एकरुद्रो दमनकः खर्परो विषयस्पृहा ॥
कान्तिः श्वेतारुणो घोरो शिवात्मा ज्वालिनी
वियत् ।
मन्त्रशक्तिश्च मदनो विघ्नेशी चात्मनायकः ॥
एकनेत्रो महानन्दो दुर्द्धरश्चन्द्रमा यतिः ।
शिवयोषा नीलकण्ठः कामेशी च मर्याशुकी ॥
॥ङः॥
चः पुष्करी चली वाणी चात्मशक्तिः सुदर्शनः ।
चर्मतुण्डधरी भूत्वा महिमाचारसम्भिनी ॥
भूत्वास्थाने भौम इति च पाठः ।
एकरूपो रुचिः कूर्म्मश्चामुण्डा दीर्घबालुकः ।
वामबाहुर्मलमाया चतुर्दिक्स्वरूपिणी ॥
द्वयितश्च छिन्नश्च लक्ष्मीश्चित्तलोचनः ।
चन्दनं चन्द्रमा देवश्च तनो दक्षको बुधः ॥
देवी कैटसुखे ज्वाला कौमारपूर्वफल्गुनी ।
अनङ्गमेखला वायुर्मादनी च सुलावनी ॥ चः ॥
छः छन्दनं सुमुखा च पशुः पशुपतिर्ल्लतिः ।
निर्म्मलं तरलं वह्निर्भूतमाता विलासिनी ॥
एकनेत्रश्च दुर्बली छिन्नशिरा वामकूर्परः ।
गोकर्णा लाङ्गली वामकाममत्ता सदाशिवः ॥
माता निशाचरः पाशुर्व्विश्वनः स्थितिशब्दकः ॥
॥छः॥
जः शमी वानरः सूली भोगदा विजया स्थिरा ।
लम्बदेवो जयी जेता धातकी सुमुखी विभुः ॥
लम्बोदरी स्मृतिः शाखा सुप्रभा कर्त्तृका धरा ।
दीर्घबाहु रविर्हंसो नन्दी तेजाः सुराशिवः ॥
अजनो वेगितो वामी मानवाख्यः मदात्मकः ।
कुम्भकर्णेश्वरी वेगी चामोदा मदविह्वलः ॥जः॥
झो झङ्कारी गुहो झञ्झावायुः सव्यः षडुन्नतः ।
अजेशो द्राविणी नादः पाशो जिह्वा जलं
स्थितिः ॥
विराजेन्द्रो धनुर्हस्तः कर्केशो नादजः कुजः ।
दीर्घबाहुबलो रूपमाकाञ्चितः सुचञ्चलः ॥
दुर्मुखो नष्ट आत्मा वाम् विकटा कुचमण्डलः ।
कलहंसप्रिया वामा अङ्गुलीमध्यपर्व्वकः ।
दक्षहस्ताङ्गुष्ठश्च पाशात्मा अञ्जनः खरः ॥
॥झः॥

## वर्णाः

ञकारो बोधनी विश्वा कुण्डली मखदो वियत् ।
कौमारी नागविज्ञानी सव्याङ्गुलनखरो बकः ॥
कर्कटीस्थाने कुण्डली मखदस्थाने सुखद इति
वा पाठः ।
सर्व्वेशवर्त्तिता बुद्धिः स्वर्गात्मा घर्घरध्वनिः ।
धर्म्मैकपादो सुमुखो विरजा चन्द्रमेश्वरी ॥
बुद्धिस्थाने सिद्धिः स्वर्गस्थाने वर्गं इति वा
पाठः ।
गायनः पुष्पधन्वा च रामात्मा च वरा-
शिणी ॥ञः॥
टङ्कारः कपाली च सोमवाः खेचरी ध्वनिः ।
मुकुन्दो विनदा पृथ्वी वैष्णवी वारुणी नवः ॥
सोमवा स्थाने सोमेश इति क्वचित् पाठः ।
दक्षाङ्गार्द्धचन्द्रश्च जरा भूतिः पुनर्भवः ।
वृहस्पतिर्धनुश्चित्रा प्रमोदा विमला कटिः ।
राजा गिरिर्महाधनुर्नामात्मा सुमुखी
मरुत् ॥ टः ॥
ठः शून्यो मञ्जरी बीजः पाणिनी लाङ्गली
क्षमा ।
वनजो नन्दनो जिह्वा सुनन्दघर्णकः सुधा ॥
वर्त्तुलः कुण्डलो वह्निरमृतं चन्द्रमण्डलः ।
दक्षजानुभावश्च देवभक्षो बृहद्ध्वनिः ॥
एकपादो विभूतिश्च ललाटं सर्व्वमित्रकः ।
वृषघ्नो नलिनी विष्णुर्म्महेशो ग्रामणीः
शशी ॥ ठः ॥
डः स्मृतिर्दारुको नन्दिरूपिणी योगिनी
प्रियः ।
कौमारी शङ्करस्त्रासशिववक्त्रो गरुको ध्वनि ॥
दुरूहो जटिलो भीमा द्विजिह्वः पृथिवी सती ।
कोरगिरिः क्षमा कान्तिर्नाभिः स्वामी च
लोचनम् ॥
जटिलीस्थाने जटिल इति कान्तिस्थाने शान्ति-
रिति वा पाठः ॥ डः ॥
ढो ढक्का निर्णयः पूर्णो यक्षेशादनदेश्वरः ।
अर्द्धनारीश्वरस्तोयमीश्वरो शिविरस्थो नवः ॥
यक्षेशादनदेश्वर इत्यत्र यक्षेशो धनदेश्वर
इत्यपि पाठः ।
दक्षपादाङ्गुलीमूलं सिद्धिदश्चो विनायकः ।
प्रहासा निर्दरा वह्निनिर्गुणो निधनो ध्वनिः ॥
प्रहासा स्थाने प्रहास इति वा पाठः ।
विनेशः पालिनी तक्षधारिणी क्रोडपुच्छकः ।
एलापुरं त्वगात्मा च विशाखा श्रीर्म्मनो रतिः ॥
तक्षस्थाने त्वक्ष इति वा पाठः ॥ ढः ॥
णो निर्गुणं रतिर्ज्ञानं जम्भनः पक्षिवाहनः ।
जया शम्भो नरकजित् निष्कला योगिनीप्रियः ॥
द्विमुखं कोटवी श्रोत्रं समृद्धिर्बोधनी मता ।
त्रिनेत्रो मानुषी व्योमदक्षपादाङ्गुलैर्मुखम् ॥
माधवः शङ्खिनी वीरो नारायणश्च निर्णयः ॥
मुखस्थाने नखं इति वा पाठः ॥ णः ॥
तः पूतना हरिः शुद्धिः शक्ती शक्तिजटी ध्वजा ।
वामस्फिग्वामकर्णौ च कामिनी मध्य-
कर्णकः ॥

## वर्णाः

हरिस्थाने हविः इति वा पाठः ।
आषाढी तक्षसुखश्च कामिका पृष्ठपुच्छकः ।
रत्नकश्च श्याममुखी वाराही मकरोऽक्षरा ॥
आषाढीतक्षसुखश्चस्थाने आषाढाभ्रसुखश्च
इति रत्नकश्चस्थाने रत्नकञ्च इति वा पाठ. ।
सुगतोऽर्द्धसुखा बुद्धजानुश्च क्रोडपुच्छकः ।
गन्धो विश्वामकरूपश्चानुराधा च वीरकः ॥
बुद्धस्थाने बुद्ध इति वीरकस्थाने सेविक इति वा
पाठ. ।
जयन्ति पुलको भ्रान्तिरनङ्गमदनातुरा ॥ तः ॥
थः स्थिरामी महाग्रन्थिर्ग्रन्थिग्राही भयानकः ।
शिली शिरसिजो दण्डी भद्रकाली शिलोचयः ॥
दण्डो वृद्धिर्विकर्म्मा च दक्षनासाधिपोऽमरः ।
वरदा भोगदा केशो वामजानु रमोऽनलः ॥
दण्डो वृद्धिविकर्म्मा स्थाने दण्डो वह्निर्विकर्मा
इति वा पाठः ।
लोलीजन्ययिनी ग्रन्थः शरचन्द्रो विदारकः ॥
लोली इत्यादिस्थाने लोलोज्ज्वयिनीपूर्णग्रन्थार-
चन्द्रदिवाकरौ इति वा पाठः । थः ॥
दोऽद्राशो धातकिर्धाता दाता दलं कलत्रकम् ।
दीनं ज्ञानञ्च दानञ्च भक्तिदाक्षायणी धरा ॥
दाता दलं स्थाने दानादत्त इति वा पाठः ।
सुषुम्ना योगिनी सद्यः कुण्डली वामगुल्फकः ।
कात्यायनी शिवा दुर्गा लक्ष्मणा नाभि
कण्टकी ॥
लक्ष्मणास्थाने मक्ष्मणा कण्टकीस्थाने कटकी
इति वा पाठः ।
स्वस्तिकः कुटिला रूपः क्षमाधीमाजितेन्द्रियः ।
धर्म्महृद्रामदेवश्च भ्रमा बहुसुचञ्चला ॥
धर्म्महृत्स्थाने धर्म्मकृत् बहुस्थाने बह इति वा
पाठ ।
हरिदा पुरमथो च दक्षपाणिस्त्रिरेखकः ॥ दः ॥
धो धनार्थो रुचिः स्थाणुः शाश्वतो योगिनी-
प्रियः ।
मीनेशः शङ्खिनी तीर्थं नागेशो विश्वपावनी ॥
धनार्थस्थाने धनाढ्य इति वा पाठः ।
धिषणा धरणा चिन्ता नेत्रयुग्मं प्रियो मतिः ।
पीनवासा त्रिवर्णा च धाता धर्म्मत्रवक्रम. ॥
धरणाचिन्तास्थाने धरणी चिन्ता इति वा
पाठ ।
मन्देशो मोहनी लज्जा वञ्जुला धनं धरा ।
वामपादाङ्गुलीमूलं ज्येष्ठा सुरपुरं भवः ।
स्वधात्मा दीर्घजङ्घा च धनेशो धनसञ्चयः ॥धः॥
नो गर्ज्जिनी क्षमा सौरिर्व्वारुणी विश्वपावनी ।
मेघश्च सविता नेत्रं दन्तुरो नारदोऽञ्जनः ॥
वारुणीस्थाने वरुणा इति वा पाठः ।
ऊर्द्धगामी द्विरण्डश्च वामपादाङ्गुलीमुखम् ।
वैनतेयस्तुतिर्वर्णं नरकिर्यातिरागमः ॥
वामनो ज्वालिनी दीर्घो निरीहः सुगतिर्व्वियत् ।
शब्दात्मा दीर्घघोणा च हस्तिनापुरमेचकौ ।
गिरिनायकनीलौ च शिवो नादिर्म्महा-
मनिः ॥ नः ॥

प: पुरप्रियता तीक्ष्णा लोहित: पञ्चमो रमा ।
गुह्यकर्त्ता निधि: शेष: कालरात्रि: सुबाहिता ॥
तपन: पालन: पाता पद्मरेणुर्निरञ्जन: ॥
सावित्री पालिनी पानं वीरतन्त्रो धनुर्द्धर: ॥
पालनस्थाने पावन इति तन्त्रस्थाने तत्त्व इति वा पाठ: ।
दक्षपार्श्वश्च सेनानी मरीचि: पवन: शनि: ।
उड्डीशं जयनी कुम्भोऽलसं रेखा च मोक्षक: ॥
कुम्भस्थाने कान्ता इति रेखास्थाने रेषा इति वा पाठ: ।
वृत्ता द्वितीयमिश्राक्षी लोकाक्षी मन आत्मन: ॥
आत्मन:स्थाने आत्मक इति वा पाठ: । प: ॥
फ: सखी दुर्गिणी धूम्रा वामपार्श्वो जनार्द्दन: ।
जया पाद: शिखा रौद्री फेत्कार: शाखिनी प्रिय: ॥
उमा विहङ्गम: कालकुब्जिनीप्रियपावकौ ।
प्रलयाग्निर्नीलपादोऽक्षर: पशुपति: शशी ॥
फुत्कारी यामिनी व्यक्ता पावनी मोहवर्द्धन: ।
निष्फलवागहङ्कार: प्रयागो ग्रामणी: फलम् ॥
व्यक्तास्थाने भक्ता इति प्रयागस्थाने प्रयाग इति वा पाठ: । फ: ॥
बो वनी भूधरी मार्गो घर्घरी लोचनप्रिय: ।
प्रचेता: कलस: पक्षी स्थगाख्य: कपर्द्दिनी ॥
पृष्ठवंशो भया मातु: शिखिवाहो युगन्धर: ।
सुखबिन्दुर्ज्वलो घण्टा योद्धा त्रिलोचनप्रिय: ॥
सुखबिन्दुस्थाने सुखबिन्दुरिति वा पाठ: ।
क्लेदिनी तापिता भूमि: सुगन्धिवलिप्रिय: ।
सुरभिर्मुखविष्णुश्च संहारो वसुधाधिप: ॥
सुगन्धिस्थाने सुगन्धिश्चेति वा पाठ: ।
वक्षो पुरश्च पेटा च मोदको गगनं प्रति ।
पूर्व्वाषाढ़ामध्यलिङ्गौ शनि: कुम्भस्तोयकौ ॥ ब: ॥
भ: क्लिन्ना भ्रमरी भीमी विश्वमूर्त्तिर्निशातवम् ।
हिरण्यो भूधरो मूलं यज्ञसमस्य वाचक: ॥
निशातवस्थाने निशाभयं इति वा पाठ: ।
नक्षत्रं भ्रमणा दीप्तिर्वयो भूमि: पयो नभ: ।
नाभिभद्रं भद्रबाहुर्विश्वमूर्त्तिर्विलासक: ॥
वय:स्थाने भय इति विलासकस्थाने विमूर्त्तक इति वा पाठ: ।
प्राणात्मा तापिनी वज्रा विश्वरूपी च चन्द्रिका ।
भीमसेन: सुधासेन: सुखं मायापुरं हर: ॥
वज्रस्थाने वक्रा इति सुखस्थाने सुख इति वा पाठ: । भ: ॥
म: कालो क्लेशित: कालो महाकालो महान्तक: ।
वैकुण्ठो वसुधा चन्द्री रवि: पुरुषराजक: ॥
वसुधास्थाने वसुदा इति वा पाठ: ।
कालभद्रो जया मेधा विश्वदा दीप्तसंज्ञक: ।
जठरश्च भ्रमानागं लक्ष्मीमातोग्रबन्धनी ॥
दीप्तस्थाने दीप्र इति वा पाठ: ।
विर्षिं शिवो महावीर: शशिप्रभा जनेश्वर: ।
प्रमत्त: प्रियक रुद्र: सर्व्वाङ्गी वह्निमण्डलम् ॥
मातङ्गमालिनी बिन्दु: अवयाभरणो विषम् ॥
रथस्थाने मख इति वा पाठ: । म: ॥
यो वायो वसुधा वायुर्विकृति: पुरुषोत्तम: ।
युगान्त: श्वसन: शीघ्रो धूमार्चि: प्राणिसेवक: ॥
युगान्तस्थाने युगाभ इति वा पाठ: ।
शङ्खा भ्रमो जटी लोला वायुवेगी यशस्करी ।
सङ्कर्षण: क्षमा बालो हृदयं कपिला प्रभा ॥
आग्नेयो व्यापकाख्यागो होमो यानं प्रमा सुखम् ।
चण्ड: सर्व्वेश्वरी धूमचामुण्डा सुमुखेश्वरी ॥
प्रमास्थाने प्रभा इति वा पाठ: ।
त्वगात्मा मलयो माता हंसिनी भृङ्गिनायक: ।
तनम: शोषको मोमो धनिष्ठानङ्गवेदिनी ॥
त्वगात्मास्थाने विगात्मा इति तनमस्थाने येमन इति वा पाठ: ।
मेढ्र. मोम: पक्षिनामा पापघ्ना प्राणसंज्ञक: ॥
मेढ्रस्थाने मेद इति वा पाठ: । य: ।
रो रक्त: क्रोधिनी रेफ: पावकश्चौजसो मल: ।
प्रकाशा दर्शनो दीपो रतक्षणा परं बली ॥
ओजसस्थाने तेजस इति रतक्षणास्थाने रक्त-क्षणा इति वा पाठ: ।
भुजङ्गेशो मति: सूर्यो धाम रक्त: प्रकाशक: ।
व्यापको रेवती दासं कुक्षंशो वह्निमण्डलम् ॥
दासस्थाने दाममिति कुक्षंशस्थाने दक्षांश इति वा पाठ: ।
उग्ररेखा ज्वलद्रक्तो वेदकण्ठपला पुरा ।
प्रकृति: सुगलो ब्रह्मशब्दश्च गायको धनम् ॥
वेदकण्ठपलास्थाने वेदकचपला इति वा पाठ: ।
श्रीकण्ठ उग्रा हृदयं सुक्ष्मी त्रिपुरसुन्दरी ।
सविन्दुर्योनिजो ज्वाला श्रीशैलो विश्वतोमुखी ॥
श्रीशैलस्थाने श्रीशोभा इति वा पाठ: । र: ।
लश्चन्द्र: पूतना पृथ्वी माधव: शक्रवाचक: ।
बलानुज: पिनाकीशो व्यापको मांससंज्ञक: ॥
माधवस्थाने माधवी इति वा पाठ: ।
खड्गी नादोऽन्तं ऐन्द्री लवणं वारुणी पति: ।
शिखा वामी क्रिया माता भामिनी कामिनी प्रिया ॥
अन्तस्थाने अन्तमिति लवणस्थाने मरणमिति वा पाठ: ।
ज्वालिनी वेगिनी नाद: प्रद्युम्न: श्रीघनो हरि: ।
विश्वात्मामन्तो बली चैतो मेरुगिरि: कला रस: ॥
मन्तस्थाने मन्त्र इति कलास्थाने कथा इति वा पाठ: । ल: ।
वो बालो वारुणी सूक्ष्मा वरुणो मेदसंज्ञक: ।
खड्गीशो ज्वालिनी वक्र: कलसध्वनिवाचक: ॥
वक्रस्थाने रक्त इति कलसध्वनिस्थाने कलसंरवि इति वा पाठ: ।
उत्कारीशस्तु ना वीतो वत्सा सिकत् सागर: शुचि: ।
त्रिधातु: शङ्कर: श्वेतो विशेषो यमसादनम् ॥ व: ॥
श: सवश्च कामरूपी कामरूपो महामति: ।
सौख्यनामा कुमारोऽपि श्रीकण्ठो वृषकेतन: ॥
वृषघ्न: शयनं शान्ता सुभगा विस्फुलिङ्गिनी ।
मृत्युर्देवो महालक्ष्मीर्महेश: कुलकौलिनी ॥
बाहुहंसो वियद्वक्त्रं हृदनङ्गाङ्कुश: खल: ।
वामोरु: पुण्डरीकाक्षा कान्ति: कल्याणवाचक: ।
हंसस्थाने हिंसा इति वा पाठ: । श: ॥
ष: श्वेतो वासुदेवश्च पीता प्रज्ञा विनायक: ।
परमेष्ठी वामबाहु: श्रेष्ठो गर्भविमोचन: ॥
पीतास्थाने प्रीता इति प्रज्ञास्थाने मज्जा इति वा पाठ: ।
लम्बोदरो यमौजेश: कामधुक् कामधूमक: ।
सुश्रीरथ्या वृषो लज्जा मदङ्गस्थ: प्रिय: शिव: ।
कामधूमकस्थाने कालधूमक इति वा पाठ: ।
सूर्यात्मा जठर: कोपो मत्ता वक्षोविदारिणी ।
कलकण्ठो मध्यभिन्ना शुक्लात्मा मलपू: शिव: ॥ ष: ॥
सो हंस: सुयशा विद्युद्वीश्चन्द्रसंज्ञक: ।
जगद्वीजं शक्तिनामा मोहं वेदवती भृगु: ॥
सुयशास्थाने सुजन इति मोहस्थाने सोऽहं इति वा पाठ: ।
प्रकृतिरीश्वर: शुक्लो प्रभा श्वेता कुलोज्ज्वल: ।
दक्षपादो व्रतं साक्षी परमात्मा परोऽक्षर: ॥
सुरूपा च गुणेशो गौ: कलकण्ठो वृकोदरी ।
प्राणाद्याश्च पुरादेवी लक्ष्मी: सोमो हिरण्यपु: ॥
दुर्गोत्तारिणि सन्धोहाताजीवो मतिर्मनोहर: ॥
दुर्गोत्तारिणिस्थाने दुर्गोत्तारिणी इति सन्धो-हातृस्थाने सन्धोहा इति मनोहरस्थाने मनोयव इति वा पाठ: । स: ।
ह: शिवो गगनं हंसो नागलोकोऽम्बिकापति: ।
नकुलीशो जगत्प्राण: प्राणेश: कपिला मल: ॥
मलस्थाने मत इति वा पाठ: ।
परमात्मात्मजो जीवो यवाक: शान्तिदोऽङ्कन: ।
त्रणो भयो नकुलाख्याश्च कुटकूपविरावण: ॥
यवाकस्थाने वराक इति अङ्कनस्थाने अङ्कुल इति कुटकूपविरावणस्थाने कूटकोपरिवारण इति वा पाठ: ।
लक्ष्मीर्मविहर: शम्भु: प्राणशक्तिर्ललाटज: ।
सकोपवारण: शूली चैतन्यं पादपूरण: ॥
मविहरस्थाने हरिहर इति सकोपस्थाने सकोप इति वा पाठ. ।
महालक्ष्मी: परं वादी मेघनादो हरिश्चल: ।
विष्णुदुर्गा प्रिया देवी मेघश्यामेश्वर: पुमान् ॥
दक्षपाद: सदाशम्भु: शाखोट: सोममण्डलम् ॥ ह: ॥
ळ: पृथ्वी विमला मोघोऽनन्तो हयवहा सिता ।
व्यापिनी शिवदा सेतुजगत्सारतरं वट: ॥
ज्योत्स्नाङ्गानी च वेदार्थ: वादी नारायण: स्वयम् ।
जठरी नकुलि: पीता शिवेशोऽनङ्गमालिनी ॥ ळ: ॥
क्ष: कोपस्तुम्बक: कालो क्षय: संवर्त्तक: पर: ।
नृसिंहो विद्युता माया महातेजा युगान्तक: ॥
स्तुम्बकस्थाने स्तुबुक इति क्षयस्थाने पथ्यमिति परस्थाने पय इति वा पाठ: ।
परात्मा क्रोधसंहारी वलान्तो मेघवाचक: ।
सर्व्वाङ्ग: सागर: काम: संयोगान्त्यक्षिपूरक: ॥

वर्णान्तस्थाने गलान्त इति सर्व्वान्तस्थाने सर्व्वाग इति वा पाठः ।
क्षेमपालो मन्त्राचोभी मातृकाल्लालबक्षकः ।
सुखं कथयत्वानन्ता कालभिक्षा गणेश्वरः ।
छायापुरुष संघातो मलय: श्रीललाटकः ॥”चः॥
इति नन्दनभट्टाचार्य्यविरचितं वर्णाभिधानं समाप्तम् ॥

वर्णकं, क्ली, ( वर्णयतीति । वर्ण + ण्वुल् । ) हरितालम् । इति रत्नमाला ॥ गात्रानुलेपनयोग्य पिष्टं द्रव्यं वा सुगन्धिद्रव्यम् । इत्यमरः ॥ चन्दनम् । इति शब्दरत्नावली ॥

वर्णकः, पुं, क्ली, (वर्ण + स्वार्थे संज्ञायां वा कन् ।) विलेपनम् । चन्दनम् । इति मेदिनी । के, १५२ ॥ ( यथा, महाभारते । १३ ।१११।१०७ ।
“वर्णकादींस्तथा गन्धांश्चोरयित्वेह मानवः ।
छुच्छुन्दरित्वमाप्नोति राजन् ! लोभपरायणः ॥”)

वर्णकः, पुं, क्ली, (वर्ण्यते रज्यतेऽनेनेति । वर्ण + घञ् । स्वार्थे कन् ।) हिङ्गुलहरितालकाचनीलीकादिः । इत्यमरभरतौ ॥ ( यथा, आर्य्यासप्तशत्याम् । १९८ ।
“कस्तां निन्दति लुम्पति कः शरदम्बुजकस्य वर्णकं सुग्ध: ।
को भवति रत्नकण्टकमन्दतो कस्याचिरदे टेन ॥”)

वर्णकः, पुं, ( वर्णयति नृत्यादीन् विस्तारयतीति । वर्ण + ण्वुल् । ) चारणः । इति मेदिनी । के, ५० । मण्डलम् । इति शब्दरत्नावली ॥

वर्णकविः, पुं, कुबेरपुत्रः । इति त्रिकाण्डशेषः ॥

वर्णकूपिका, स्त्री, ( वर्णानां कूपिकेव । ) मस्याधारः । यथा,—
“मसीधानी मलिमशिर्मेलान्धुर्वर्णकूपिका ॥”
इति त्रिकाण्डशेषः ॥

वर्णचारकः, त्रि, ( वर्णान् नीलादीन् चारयति विस्तारयतीति । चर + णिच् + ण्वुल् ।) चित्रकारः । इति शब्दमाला ॥

वर्णज्येष्ठः, पुं, ( वर्णेषु चतुर्षु मध्ये ज्येष्ठः प्रथमोत्पन्नात् गुणोत्कृष्टत्वाच्च । ) ब्राह्मणः । इति त्रिकाण्डशेषः ॥

वर्णज्येष्ठः, त्रि, ( वर्णेन ज्योतिषोक्तपारिभाषिकवर्णेन ज्येष्ठः श्रेष्ठः । ) स्ववर्णापेक्षोत्तमवर्णः । पारिभाषिकहीनवर्णकर्त्तृकपारिभाषिकवर्णज्येष्ठकन्याविवाहनिषेधो यथा,—
“मीनकर्कटवृश्चिकविप्राः
सिंहतुलाधनुः क्षत्रिय उक्तः ।
कुम्भनरद्वयमेषविशः स्यु-
र्मकरवृषकन्या कथिताऽवरजातिः ॥
वर्णज्येष्ठा च या नारी वर्णहीनश्च यः पुमान् ।
तयोर्विवाहे मृत्युः स्यात् यद्यन्यासामसंभवः ॥”
इति ज्योतिस्तत्त्वे वर्णकूटम् ॥

वर्णतूलिः, स्त्री, ( वर्णानां तूलिरिव । ) लेखनी । इति शब्दरत्नावली ॥

वर्णतूलिका, स्त्री, ( वर्णानां तूलिकेव । ) लेखनी । इति हारावली । २१२ ॥

वर्णतूली, स्त्री, (वर्णानां तूलीव ।) लेखनी । इति त्रिकाण्डशेषः ॥

वर्णदं, क्ली, ( वर्णं ददातीति । दा + “आतोऽनुपसर्गे कः ।” ३ । २ । ३ । इति कः ।) कालीयकम् । इति जटाधरः ॥ वर्णदातरि, त्रि ॥

वर्णदात्री, स्त्री, ( वर्णं ददातीति । दा + तृच् + ङीप् । ) हरिद्रा । इति राजनिर्घण्टः ॥ वर्णदातरि, त्रि ॥

वर्णदूतः, पुं, ( वर्णा एव दूता यत्र । ) लिपिः । तत्पर्य्यायः । लेखः २ वाचिकहारकः ३ स्वस्तिमुखः ४ । इति त्रिकाण्डशेषः ॥

वर्णधर्म्मः, पुं,क्ली, (वर्णानां ब्राह्मणादीनां धर्म्मः ।) ब्राह्मणक्षत्रियवैश्यशूद्राणां कर्त्तव्यं कर्म्म । तद्यथा, —
“यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः ।
अध्यापनं चाध्ययनं षट्कर्म्माणि द्विजोत्तमाः ॥
दानमध्ययनं यज्ञो धर्म्मः क्षत्रियवैश्ययोः ।
दण्डो युद्धं क्षत्रियस्य कृषिर्वैश्यस्य शस्यते ॥
शुश्रूषैव द्विजातीनां शूद्राणां धर्म्मसाधनम् ।
कारुकर्म्म तथाजीवः पाकयज्ञोऽपि धर्म्मतः ॥
क्षमा दमो दया दानमलोभस्त्याग एव च ।
आर्ज्जवं चानसूया च तीर्थानुसरणं तथा ॥
सत्यं सन्तोष आस्तिक्यं श्रद्धा चेन्द्रियनिग्रहः ।
देवताभ्यर्च्चनं पूजा ब्राह्मणानां विशेषतः ॥
अहिंसा प्रियवादित्वमपैशुन्यमकल्कता ।
समासिकमिमं धर्म्मं चातुर्व्वर्ण्येऽब्रवीन्मनिः ॥
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ।
स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वपलायिनाम् ॥
वैश्यानां मारुतं स्थानं स्वधर्म्ममनुवर्त्तताम् ।
गान्धर्व्वं शूद्रजातीनां परिचारे तु वर्त्तताम् ॥”
इति कौर्म्मे २ अध्यायः ॥*॥

अपि च ।

मार्कण्डेय उवाच ।
“हारीतस्त्वनुवाचाथ तैरेवं चोदितो मुनिः ।
शृण्वन्तु मुनयः सर्व्वे धर्म्मान् वक्ष्यामि शाश्वतान् ॥
वर्णानामाश्रमाणाञ्च योगशास्त्रञ्च सत्तमाः ।
यज्ज्ञात्वा मुनयो नित्यं मुच्यते जन्मबन्धनात् ॥
ब्रह्मणो ब्राह्मणेनैव उत्पन्नो ब्राह्मणः स्मृतः ।
तस्य धर्म्मं प्रवक्ष्यामि तं योग्यं देशमेव च ॥
कृष्णसारो मृगो यत्र स्वभावात् प्रवर्त्तते ।
तस्मिन् देशे वसन् धर्म्मं कुरुते ब्राह्मणोत्तमः ॥
अध्यापनं चाध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव कर्म्मषट्कमिहोच्यते ॥
अध्यापनञ्च त्रिविधं धर्म्मार्थं चार्थकारणम् ।
शुश्रूषाकारणञ्चेति त्रिविधं परिकीर्त्तितम् ॥
नैषामन्यतमो वापि दृश्यते यत्र मानवे ।
तत्र विद्या न दातव्या पुरुषेण हितैषिणा ॥
योग्यानध्यापयेच्छिष्यान् यज्ञानपि च याजयेत् ।
विहिताम् प्रतिगृह्णीयाद्गृहधर्म्मप्रसिद्धये ॥
वेदमेवाभ्यसेन्नित्यं शुचौ देशे समाहितः ।
यजेद्दद्यात् यथाशक्त्या दद्याद्धित्ताद्युपायतः ॥
नित्यं नैमित्तिकं धर्म्मं कर्म्म कुर्य्यात् प्रयत्नतः ।
गुरुशुश्रूषणञ्चैव यथान्यायमतन्द्रितः ॥
सायं प्रातरुपासीत विधिनाग्निं द्विजोत्तमः ।
स्नात्वा च प्रकुर्व्वीत वैश्वदेवं दिने दिने ॥
अतिथिञ्चागतं भक्त्या पूजयेच्छक्तितो गृही ।
अन्यानभ्यागतान् विप्रान् पूजयेदविरोधतः ॥
स्वदारनिरतो नित्यं परदारविवर्ज्जितः ।
सत्यवादी जितक्रोधः स्वधर्म्मनिरतो भवेत् ॥
अकर्म्मणि च संप्राप्ते प्रमादे नैव रोचयेत् ।
प्रियां हितां वदेद्वाचं परलोकाविरोधिनीम् ॥
एष धर्म्मः समुद्दिष्टो ब्राह्मणस्य सनातनः ।
धर्म्ममेवन्तु यः कुर्य्यात् स याति ब्रह्मणः पदम् ॥

हारीत उवाच ।

क्षत्रादीनां प्रवक्ष्यामि यथावदनुपूर्व्वशः ।
येन येन प्रवर्त्तन्ते विधिना क्षत्रियादयः ॥
राजा च क्षत्रियश्चैव प्रजा धर्म्मेण पालयेत् ।
कुर्य्यादध्ययनं सम्यक् युगयुक्तो यथाविधि ॥
दद्याद्दानं द्विजातिभ्यो धर्म्मबुद्धिसमन्वितः ।
देवताश्रयभक्तश्च पितृकार्य्यपरस्तथा ॥
धर्म्मेण वै जयाकाङ्क्षी अधर्म्मस्य विवर्ज्जयेत् ।
उत्तमां गतिमाप्नोति क्षत्रियो ह्येवमाचरन् ॥*॥
गोरक्षां कृषिवाणिज्यं कुर्य्याद्वैश्यो यथाविधि ।
दानं धर्म्मं यथाशक्त्या द्विजशुश्रूषणं तथा ॥
लोभदम्भविनिर्म्मुक्तः सत्यवागनसूयकः ।
स्वदारनिरतो दान्तः परदारविवर्ज्जितः ॥
धनैर्विप्रान् समभ्यर्च्य यज्ञकाले त्वयाचितः ।
अप्रमत्तः स्वधर्म्मेषु वर्त्तेत देहपातनात् ॥
यज्ञाध्ययनदानानि कुर्य्यान्नित्यमतन्द्रितः ।
पितृकार्य्यञ्च तत्काले नारसिंहार्च्चनं तथा ॥
एतद्वैश्यस्य कर्म्मोक्तं स्वधर्म्ममनुतिष्ठतः ।
एतदासेवमानस्तु मुक्तः स्यान्नात्र संशयः ॥*॥
वर्णत्रयस्य शुश्रूषां कुर्य्यात् शूद्रः प्रयत्नतः ।
दासवत् ब्राह्मणानान्तु विशेषेण समाचरेत् ॥
अयाचितः प्रदाता स्यात् कृषिं वृत्त्यर्थमाश्रयेत् ।
पाकयज्ञविधानेन यजेद्देवानतन्द्रितः ॥
शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम् ।
धारणं जीर्णवस्त्रस्य विप्रस्योच्छिष्टभोजनम् ॥
स्वदारेषु रतिश्चैव परदारविवर्ज्जितः ।
पुराणश्रवणं विप्रान्नारसिंहस्य पूजनम् ॥
तथा विप्रनमस्कारस्तथा सर्व्वं दिने दिने ।
सत्यं सम्भाषणं चैव रागद्वेषविवर्ज्जनम् ॥
इत्थं कुर्व्वंस्तथा शूद्रो मनोवाक्कायकर्म्मभिः ।
स्थानमैन्द्रमवाप्नोति नष्टपापः प्रपुण्यकृत् ॥”
इति नारसिंहे ५३ ।५४ अध्यायौ ॥ * ॥

अन्यच्च ।

मदालसोवाच ।
“दानमध्ययनं यज्ञो ब्राह्मणस्य त्रिधोदितः ।
धर्म्मो नान्यश्चतुर्थोऽस्ति धर्म्मस्तस्यापदं विना ॥
याजनाध्यापने शुद्धे तथा पूत प्रतिग्रहः ।

एतत् सम्यक् समाख्यातं त्रितयं चास्य जीविका ॥
दानमध्ययनं यज्ञः क्षत्त्रियस्याप्ययं त्रिधा ।
धर्म्मः प्रोक्तः क्षितौ रक्षा शस्त्राजीवश्च जीविका ॥
दानमध्ययनं यज्ञो वैश्यस्यापि त्रिधैव सः ।
वाणिज्यं पाशुपाल्यञ्च कृषिश्चैवास्य जीविका ॥
दानं यज्ञोऽथ शुश्रूषा द्विजातीनां त्रिधा मया ।
व्याख्यातः शूद्रधर्म्मोऽपि जीविका कारुकर्म्मणा ॥
तद्वद्द्विजातिशुश्रूषा पोषणं क्रयविक्रयैः ।
वर्णधर्म्मास्त्विमे प्रोक्ताः श्रूयतामाश्रमाश्रयः ॥”
इति मार्कण्डेयपुराणे मदालसानुशासनाध्यायः ॥
अपरञ्च ।
“ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्म्मण्यवस्थिताः ।
ते सम्यगुपजीवेयुः षट्कर्म्माणि यथाक्रमम् ॥
अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव षट् कर्म्माण्यग्रजन्मनः ॥
षण्णान्तु कर्म्मणामस्य त्रीणि कर्म्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥
त्रयो धर्म्मा निवर्त्तन्ते ब्राह्मणात् क्षत्त्रियं प्रति ।
अध्यापनं याजनञ्च तृतीयश्च प्रतिग्रहः ॥
वैश्यं प्रति तथैवैते निवर्त्तेरन्निति स्थितिः ।
न तौ प्रति हि तान् धर्म्मान् मनुराह प्रजापतिः ॥
शस्त्रास्त्रभृत्त्वं क्षत्त्रस्य वणिक्पशुकृषिर्विशः ।
आजीवनार्थं धर्म्मस्तु दानमध्ययनं यजिः ॥
वेदाभ्यासो ब्राह्मणस्य क्षत्त्रियस्य च रक्षणम् ।
वार्त्ताकर्म्मैव वैश्यस्य विशिष्टानि स्वकर्म्मसु ॥
अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्म्मणा ।
जीवेत् क्षत्त्रियधर्म्मेण स ह्यस्य प्रत्यनन्तरः ॥
उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत् ।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम् ॥
वैश्यवृत्त्यापि जीवंस्तु ब्राह्मणः क्षत्त्रियोऽपि वा ।
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्ज्जयेत् ॥
कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्विगर्हिता ।
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम् ॥
इदन्तु वृत्तिवैकल्यात् त्यजतो धर्म्मनैपुणम् ।
विट्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्द्धनम् ॥
सर्व्वान् रसानपोहेत कृतान्नञ्च तिलैः सह ।
अश्मनो लवणञ्चैव पशवो ये च मानुषाः ॥
सर्व्वञ्च तान्तवं रक्तं शाणक्षौमाविकानि च ।
अपि चेत् स्युररक्तानि फलमूले तथौषधीः ॥
अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्व्वशः ।
क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ॥
आरण्यांश्च पशून् सर्व्वान् दंष्ट्रिणश्च वयांसि च ।
मद्यं नीलीञ्च लाक्षाञ्च सर्व्वांश्चैकशफांस्तथा ॥
काममुत्पाद्य कृष्यान्तु स्वयमेव कृषीवलः ।
विक्रीणीत तिलान् शुद्धान् धर्म्मार्थमचिरस्थितान् ॥
भोजनाभ्यञ्जनाद्दानाद्यदन्यत् कुरुते तिलैः ।
कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति ॥
सद्यः पतति मांसेन लाक्षया लवणेन च ।
त्र्यहेण शूद्रीभवति ब्राह्मणः क्षीरविक्रयात् ॥
इतरेषान्तु पण्यानां विक्रयादिह कामतः ।
ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति ॥
रसा रसैर्निमातव्या न त्वेव लवणं रसैः ।
कृतान्नञ्चाकृतान्नेन तिला धान्येन तत्समाः ॥
जीवेदेतेन राजन्यः सर्व्वेणाप्यनयङ्गतः ।
न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित् ॥
यो लोभादधमो जात्या जीवेदुत्कृष्टकर्म्मभिः ।
तं राजा निर्द्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥
वरं स्वधर्म्मो विगुणो न पारक्यः स्वनुष्ठितः ।
परधर्म्मेण जीवन् हि सद्यः पतति जातितः ॥
वैश्योऽजीवन् स्वधर्म्मेण शूद्रवृत्त्यापि वर्त्तयेत् ।
अनाचरन्नकार्य्याणि निवर्त्तेत च शक्तिमान् ॥
अशक्नुवंस्तु शुश्रूषां शूद्रः कर्त्तुं द्विजन्मनाम् ।
पुत्त्रदारात्ययं प्राप्तो जीवेत् कारुककर्म्मभिः ॥
यैः कर्म्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः ।
तानि कारुककर्म्माणि शिल्पानि विविधानि च ॥
वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः ।
अवृत्तिकर्षितः सीदन्निमं धर्म्मं समाचरेत् ॥
सर्व्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयङ्गतः ।
पवित्रं दुष्यतीत्येतत् धर्म्मतो नोपपद्यते ॥
नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् ।
दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते ॥
जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
आकाशमिव पङ्केन न स पापेन लिप्यते ॥
अजीगर्त्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः ।
न चालिप्यत पापेन क्षुत्प्रतीकारमाचरन् ॥
श्वमांसमिच्छन्नार्त्तोऽत्तुं धर्म्माधर्म्मविचक्षणः ।
प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान् ॥
भरद्वाजः क्षुधार्त्तस्तु सपुत्त्रो विजने वने ।
बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः ॥
क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम् ।
चण्डालहस्तादादाय धर्म्माधर्म्मविचक्षणः ॥
प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि ।
प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः ॥
याजनाध्यापने नित्यं क्रियेते संस्कृतात्मनाम् ।
प्रतिग्रहस्तु क्रियते शूद्रादप्यन्त्यजन्मनः ॥
जपहोमैरपैत्येनो याजनाध्यापनैः कृतम् ।
प्रतिग्रहनिमित्तन्तु त्यागेन तपसैव च ॥
शिलोञ्छमप्याददीत विप्रोऽजीवन् यतस्ततः ।
प्रतिग्रहाच्छिलः श्रेयांस्ततोऽप्युञ्छः प्रशस्यते ॥
सीदद्भिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः ।
याच्यः स्यात् स्नातकैर्विप्रैरदित्संस्त्यागमर्हति ॥
अकृतञ्च कृतात् क्षेत्राद्गौरजाविकमेव च ।
हिरण्यं धान्यमन्नञ्च पूर्व्वं पूर्व्वमदोषवत् ॥
सप्तवित्तागमा धर्म्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च ॥
विद्या शिल्पं भृतिः सेवा गोरक्षं विपणिः कृषिः ।
धृतिर्भैक्षं कुसीदञ्च दश जीवनहेतवः ॥
ब्राह्मणः क्षत्त्रियो वापि वृद्धिं नैव प्रयोजयेत् ।
कामन्तु खलु धर्म्मार्थं दद्यात् पापीयसेऽल्पिकाम् ॥
चतुर्थमाददानोऽपि क्षत्त्रियो भागमापदि ।
प्रजा रक्षन् परं शक्त्या किल्बिषात् प्रतिमुच्यते ॥
स्वधर्म्मो विजयस्तस्य नाहवे स्यात् पराङ्मुखः ।
शस्त्रेण वैश्यान् रक्षित्वा धर्म्म्यमाहारयेद्बलिम् ॥
धान्येऽष्टमं विशां शुल्कं विंशं कार्षापणावरम् ।
कर्म्मोपकरणाः शूद्राः कारवः शिल्पिनस्तथा ॥
शूद्रस्तु वृत्तिमाकाङ्क्षन् क्षत्त्रमाराधयेद्यदि ।
धनिनं वाप्युपाराध्य वैश्यं शूद्रो जिजीविषेत् ॥
स्वर्गार्थमुभयार्थं वा विप्रानाराधयेत्तु सः ।
जातब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता ॥
विप्रसेवैव शूद्रस्य विशिष्टं कर्म्म कीर्त्यते ।
यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम् ॥
प्रकल्प्या तस्य तैर्वृत्तिः स्वकुटुम्बाद्यथार्हतः ।
शक्तिञ्चावेक्ष्य दाक्ष्यञ्च भृत्यानाञ्च परिग्रहम् ॥
उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च ।
पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः ॥
न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति ।
नास्याधिकारो धर्म्मेऽस्ति न धर्म्मात् प्रतिषेधनम् ॥
धर्म्मेप्सवस्तु धर्म्मज्ञाः सतां वृत्तिमनुष्ठिताः ।
मन्त्रवर्ज्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥
यथा यथाहि सद्वृत्तमातिष्ठत्यनसूयकः ।
तथा तथेमञ्चामुञ्च लोकं प्राप्नोत्यनिन्दितः ॥
शक्तेनापि हि शूद्रेण न कार्य्यो धनसञ्चयः ।
शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते ॥
एते चतुर्णां वर्णानामापद्धर्म्माः प्रकीर्त्तिताः ।
यान् सम्यगनुतिष्ठन्तो व्रजन्ति परमां गतिम् ॥
एष धर्म्मविधिः कृत्स्नश्चातुर्व्वर्ण्यस्य कीर्त्तितः ।
अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम् ॥”
इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां दशमोऽध्यायः ॥ * ॥ अन्यत् वर्णशब्दे द्रष्टव्यम् ॥

**वर्णनं**, क्ली, (वर्ण स्तुतौ विस्तारे इत्यादि + ल्युट् ।) स्तवनम् । (यथा, भागवते । १० । ७४ । ३० ।
“इत्थं निशम्य दमघोषसुतः स्वपीठा-
दुत्थाय कृष्णगुणवर्णनजातमन्युः ।
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी
संश्रावयन् भगवते परुषाण्यभीतः ॥”)
विस्तरणम् । शुक्लादिवर्णयोजनम् । दीपनम् । इति वर्णधातोर्भावेऽनट्प्रत्ययेन निष्पन्नम् ॥

**वर्णना**, स्त्री, (वर्ण + णिच् + युच् । टाप् ।) गुणकथनम् । तत्पर्य्यायः । ईडा २ स्तवः ३ स्तोत्रम् ४ स्तुतिः ५ नुतिः ६ श्लाघा ७ प्रशंसा ८ अर्थवादः ९ । इति हेमचन्द्रः । २ । १६३ ॥ (यथा, कथासरित्सागरे । ३२ । १६६ ।
“विदग्धा अपि वर्ण्यन्ते विटवर्णनया स्त्रियः ॥”)

**वर्णनीयं**, त्रि, (वर्ण + कर्म्मणि अनीयर् ।) वर्ण्यम् । वर्णितव्यम् । (यथा, साहित्यदर्पणे ६ परिच्छेदे ।

"वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ।")

वर्ण्याः पदार्था यथा,—
"अथ वर्ण्यानि कथ्यन्ते तानि यानि कवी-श्वरैः ।
महाकाव्यप्रभृतिषु प्रबन्धेषु बबन्धिरे ॥
राजा राजवधूपुरोहितकुमारामात्यसेनाधिपाः
देशग्रामपुरीसरोऽम्बुधिसरिदुद्यानाद्रयश्चा-श्रमाः ।
मन्त्रो दूतरणप्रयाणमृगयाश्वेभर्त्तवोऽन्द्रर्या
वीवाहौ विरहः स्वयंवरसुरा पुष्पावचेला इतम् ॥"

इति कविकल्पलतायाम् १ स्तवके ३ कुसुमम् ॥ (स्तवार्थः । वर्णधात्वर्थदर्शनात् । यथा, भागवते । ३ । २० । ३७ ।
"एतत्ते आदिराजस्य मनोश्चरितमद्भुतम् ।
वर्णितं वर्णनीयस्य तदपत्योदयं शृणु ॥")

**वर्णपात्रं**, क्ली, (वर्णस्य पात्रम् ।) चित्रकारस्य नील्यादिरागस्याधारः । यथा,—
"मल्लिका वर्णपात्रं स्यात् तूलिका लेख्य-कूर्चिका ॥"
इति शब्दमाला ॥

**वर्णपुष्पकः**, पुं, (वर्णवन्ति नानावर्णानि पुष्पाणि यस्य । कप् ।) राजतरुणीपुष्पवृक्षः । इति राजनिर्घण्टः ॥

**वर्णपुष्पी**, स्त्री, (वर्णवन्ति पुष्पाणि यस्याः । ङीप् ।) क्षुद्रकारवेल्लीपुष्पवृक्षः । इति राजनिर्घण्टः ॥

**वर्णप्रसादनं**, क्ली, (वर्णस्य प्रसादनं यस्मात् ।) अगुरु । इति राजनिर्घण्टः ॥

**वर्णमाता**, स्त्री, (वर्णस्य मातेव ककाराद्यक्षरप्रसूत्वात् ।) लेखनी । इति हारावली ॥

**वर्णमातृका**, स्त्री, (वर्णानां वर्णमालानां मातृकेव ।) सरस्वती । इति शब्दरत्नावली ॥

**वर्णमाला**, स्त्री, जातिमाला । (वर्णानां माला समूहः ।) अक्षरश्रेणी । तत्र संस्कृतवर्णाः ५० जपमालायाम् ५१ । इङ्गरेजीयवर्णाः २६ । फरासीयाः २३ । हिब्रूक अर्थात् इहुदीयाः २२ । आरबीयाः २८ । पारसीयाः ३१ । तुरस्कीयाः ३३ । रुषीयाः ४१ । ग्रिक् अर्थात् इयुनानीयाः २४ । लाटिन्देशीयाः २२ । जन् अर्थात् ओलन्दाजीयाः २६ । स्पानुदेशीयाः २७ । इटालिदेशीयाः २० । तातारीयाः २०२ । ब्रह्मदेशीयाः १९ । चीनदेशीयवर्णाः शब्दात्मकाः तत्सङ्ख्यासंख्याः ८०००० ॥ * ॥ अकारादिक्षकारान्तवर्णरूपैकपञ्चाशज्जपमाला । यथा, सनत्कुमारसंहितायाम् ।
"क्रमोत्क्रमगतैर्माला मातृकार्णैः सबिन्दुकैः ।
सबिन्दुकैः साष्टवर्णैरन्तर्यजनकर्म्मणि ॥"
आदि क च ट त प य शवोऽष्टौ वर्गाः प्रकीर्त्तिताः । अकारादिवर्णान् सबिन्दून् प्रत्येकं कृत्वा एतं संजप्य अकारादीनां वर्गा-दीनाञ्च वर्णानां अन्तिमवर्णं सानुस्वारं कृत्वा पूर्वसुमार्गे सञ्जपः कार्यः । अनेन प्रकारेणाष्टोत्तरशतसंख्यो जपो भवति । अस्यार्थस्य पोषकमिदमुपलभ्यते ।
"सबिन्दुं वर्णमुच्चार्य पश्चात् मन्त्रं जपेत् सुधीः ।
अकारादिक्षकारान्तं बिन्दुयुक्तं विभाव्य च ॥
वर्णमाला समाख्याता अनुलोमविलोमिका ।
क्षकारं मेरुमेवात्र तत्र मन्त्रं जपेन्नहि ॥"
इति नारदीयवचनात् ॥

प्रकारान्तरं विशुद्धेश्वरे ।
"अनुलोमविलोमेन वर्गाष्टकविभेदतः ।
मन्त्रेणान्तरितान् वर्णान् वर्णेनान्तरितान् मनून् ॥
कुर्य्याद्वर्णमयीं मालां सर्व्वतन्त्रप्रकाशिनीम् ।
चरमार्णं मेरुरूपं लङ्घनं नैव कारयेत् ॥"
इति तन्त्रसारः ॥

अपि च ।
"अनुलोमविलोमेन कॢप्तया वर्णमालया ।
आदिलान्तलादि आन्तक्रमेण परमेश्वरि ! ।
क्षकारं मेरुरूपञ्च लङ्घयेन्न कदाचन ॥"
इति मुण्डमालातन्त्रम् ॥

**वर्णरेखा, वर्णलेखा**, स्त्री, (वर्णा लिख्यन्तेऽनयेति । लिख + करणे घञ् । रलयोरैक्यम् ।) कठिनी । इति त्रिकाण्डशेषः ॥

**वर्णलेखिका**, स्त्री, (वर्णलेखा + स्वार्थे कन् । टापि अत इत्वम् ।) कठिनी । इति रत्नमाला ॥

**वर्णवती**, स्त्री, (वर्णोऽस्त्यस्यामिति । वर्ण + "इसादिभ्यश्च ।" ५ । २ । ९५ । इति मतुप् । मस्य वः ।) हरिद्रा । इति जटाधरः ॥ वर्णविशिष्टे, त्रि ॥

**वर्णविलोडकः**, पुं, (वर्णान् विलोडयतीति । वि + लोडि + ण्वुल् ।) श्लोकस्तेनः । सन्धिचौरः । इति मेदिनी । के, २३६ ॥

**वर्णसङ्करः**, पुं, (वर्णतो ब्राह्मणादिभ्यः वर्णानां वा सङ्करो मिश्रणं यत्र ।) मिश्रितजातिः । तद्विवरणं यथा,—
"बभूवुर्मुखतो विप्रा ब्रह्मणो ब्राह्मणजातयः ।
ब्रह्मणो बाहुदेशाच्च जाताः क्षत्रियजातयः ॥
ऊरुदेशाच्च वैश्याश्च पादतः शूद्रजातयः ।
तासां सङ्करजातेन बभूवुर्वर्णसङ्कराः ॥
गोपनापितभीलाश्च तथा मोदककूवरौ ।
ताम्बूलिस्वर्णकारौ च तथा वणिकजातयः ॥"
भीलस्थाने भाला इति कूवरस्थाने कुवर इति च पाठः ।
"इत्येवमाद्या विप्रेन्द्र ! सच्छूद्राः परिकीर्त्तिताः ।
शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः ॥
विश्वकर्म्मा च शूद्रायां वीर्य्याधानं चकार सः ।
ततो बभूवुः पुत्राश्च नवैते शिल्पकारिणः ॥
मालाकारः कर्म्मकारः शङ्खकारः कुविन्दकः ।
कुम्भकारः कांस्यकारः षडेते शिल्पिनां वराः ॥
सूत्रधारश्चित्रकरः स्वर्णकारस्तथैव च ।
पतितास्ते ब्रह्मशापादयाज्या वर्णसङ्कराः ॥"
अयाज्या इत्यत्र अयाज्या इत्यपि पाठः ।
"स्वर्णकारः स्वर्णचौर्य्यात् ब्राह्मणानां द्विजोत्तम ।
बभूव सद्यः पतितो ब्रह्मशापेन कर्म्मणा ॥
सूत्रधारो द्विजातीनां शापेन पतितो भुवि ।
शीघ्रञ्च यज्ञकाष्ठञ्च न ददौ तेन हेतुना ॥
व्यतिक्रमेण चित्राणां सद्यश्चित्रकरस्तथा ।
पतितो ब्रह्मशापेन ब्राह्मणानाञ्च कोपतः ॥
कश्चिद्वणिग्विशेषश्च संसर्गात् स्वर्णकारिणः ।
स्वर्णचौर्य्यादिदोषेण पतितो ब्रह्मशापतः ॥
कुलटायाञ्च शूद्रायां चित्रकारस्य वीर्य्यतः ।
बभूवाट्टालिकाकारः पतितो जारदोषतः ॥
अट्टालिकाकारवीर्य्यात् कुम्भकारस्य योषिति ।
बभूव कोटिकः सद्यः पतितो गृहकारकः ॥
कुम्भकारस्य वीर्य्येण सद्यः कोटिकयोषिति ।
बभूव तैलकारश्च कुटिलः पतितो भुवि ।
सद्यः क्षत्रियवीर्य्येण राजपुत्रस्य योषिति ।
बभूव तीवरश्चैव पतितो जारदोषतः ॥
तीवरस्य तु वीर्य्येण तैलकारस्य योषिति ।
बभूव पतितो दस्युर्लेटश्च परिकीर्त्तितः ॥
लेटस्तीवरकन्यायां जनयामास षट्सुतान् ।
माल्लं मल्लं मातरञ्च भड्ं कोलञ्च कन्दरम् ॥"
कन्दरस्थाने कलन्दर इति वा पाठः ।
"ब्राह्मण्यां शूद्रवीर्य्येण पतितो जारदोषतः ।
सद्यो बभूव चाण्डालः सर्व्वस्मादधमोऽशुचिः ॥
तीवरेणैव चाण्डाल्यां चर्म्मकारो बभूव ह ।
चर्म्मकार्य्याञ्च चाण्डालात् मांसच्छेदो बभूव ह ॥
मांसच्छेद्यां तीवरेण कोँचश्च परिकीर्त्तितः ।
कोँचकन्यायान्तु कैवर्तात् कर्त्तारः परिकीर्त्तितः ॥
सद्यश्चाण्डालकन्यायां लेटवीर्य्येण शौनक ! ।
बभूवतुस्तौ द्वौ पुत्रौ हड्डिकश्चौण्डिकौ तथा ॥"
हड्डिकशौण्डिकावित्यत्र दुष्टौ हड्डिडमौ इत्यपि पाठः ।
"क्रमेण हड्डिकन्यायां सद्यश्चाण्डालवीर्य्यतः ।
बभूवुः पञ्चपुत्राश्च अष्टा वनचराश्च ते ॥
लेटात्तीवरकन्यायां गङ्गातीरे च शौनक ।
बभूव सद्यो यो बालो गङ्गापुत्रः प्रकीर्त्तितः ॥
गङ्गापुत्रस्य कन्यायां वीर्य्येण वेशधारिणः ।
बभूव वेशधारी च पुत्रो युङ्गी प्रकीर्त्तितः ॥
वैश्यात्तीवरकन्यायां सद्यः शुण्डी बभूव ह ।
शुण्डीयोषिति वैश्यात्तु पौण्ड्रकश्च प्रकीर्त्तितः ॥
क्षत्रात् करणकन्यायां राजपुत्रो बभूव ह ।
राजपुत्र्यान्तु करणादागरीति प्रकीर्त्तितः ॥
क्षत्रवीर्य्येण वैश्यायां कैवर्तः परिकीर्त्तितः ।
कलौ तीवरसंसर्गाद्धीवरश्च प्रकीर्त्तितः ॥"
प्रकीर्त्तित इत्यत्र पतितो भुवि इति वा पाठः ।
"तीवर्य्यां धीवरात् पुत्रो बभूव रजकः स्मृतः ।
रजक्यां तीवराच्चापि कोयाली च बभूव ह ॥
नापिताद्गोपकन्यायां सर्व्वस्वी तस्य योषिति ।
क्षत्राद्बभूव व्याधश्च बलवान् मृगहिंसकः ॥
तीवरात् शुण्डिकन्यायां बभूवुः सप्त पुत्रकाः ।
ते कलौ हड्डिसंसर्गाद्बभूवुर्दस्यवः सदा ॥

ब्राह्मण्यामृषिवीर्य्येण ऋतो: प्रथमवासरे ।
कुत्सितश्चोदरे जात: कुदरस्तेन कीर्त्तित: ॥
तदशौचं विप्रतुल्यं पतित ऋतुदोषत: ।
सद्य: कोटकसंसर्गादधमो जगतीतले ॥
क्षत्रवीर्य्येण वैश्यायामृतो: प्रथमवासरे ।
जात: पुत्रो महादस्युर्बलवांश्च धनुर्द्धर: ॥
चकार वागतीतञ्च क्षत्रियो वारितस्तया ।
तेन जात्या स पुत्रश्च वागतीत: प्रकीर्त्तित: ॥
क्षत्रवीर्य्येण शूद्रायामृतुदोषेण पापत: ।
बलवन्तो दुरन्ताश्च बभूवुर्म्लेच्छजातय: ॥
अविद्धकर्णा: क्रूराश्च निर्भया रणदुर्ज्जया: ।
शौचाचारविहीनाश्च दुर्द्धर्षा धर्म्मवर्ज्जिता: ॥
म्लेच्छात् कुविन्दकन्यायां जोलाजातिर्बभूव ह ।
जोलात् कुविन्दकन्यायां शराक: परिकीर्त्तित: ॥
वर्णसङ्करदोषेण बह्व्यश्च पठजातय: ।
तासां नामानि संख्याश्च को वा वक्तुं द्विज
क्षम: ॥
वैद्योऽश्विनीकुमारेण जातश्च विप्रयोषिति ।
वैद्यवीर्य्येण शूद्रायां बभूवुर्बहवो जना: ॥
ते च ग्राम्यगुणज्ञाश्च मन्त्रौषधिपरायणा: ।
तेभ्यश्च जाता: शूद्रायां ते व्यालग्राहिणो
भुवि ॥”

इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्याय: ॥*॥

अपि च ।

“अयं द्विजैर्हि विद्वद्भि: पशुधर्म्मो विगर्हित: ।
मनुष्याणामपि प्रोक्तो वेणे राज्यं प्रशासति ॥
स महीमखिलां भुञ्जन् राजर्षिप्रवर: पुरा ।
वर्णानां सङ्करं चक्रे कामोपहतचेतन: ॥
तत: प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थं तं विगर्हन्ति साधव: ॥*॥
ब्राह्मण: क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातय: ।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चम: ॥
सर्व्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते ॥
स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान् ।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥
अनन्तरासु जातानां विधिरेष सनातन: ।
द्व्येकान्तरासु जातानां धर्म्यं विद्यादिमं
विधिम् ॥
ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते ।
निषाद: शूद्रकन्यायां य: पारशव उच्यते ॥
क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान् ।
क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते ॥
विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयो: ।
वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदा: स्मृता: ॥*
क्षत्रियाद्विप्रकन्यायां सूतो भवति जातित: ।
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥
शूद्रादायोगव: क्षत्ता चण्डालश्चाधमो नृणाम् ।
वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्करा: ॥
एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ यथा स्मृतौ ।
क्षत्तृवैदेहकौ तद्वत् प्रातिलोम्येऽपि जन्मनि ॥*॥
पुत्रा येऽनन्तरस्त्रीजा: क्रमेणोक्ता द्विजन्मनाम् ।



ताननन्तरनाम्नस्तु मातृदोषात् प्रचक्षते ॥
ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ।
आभीरोऽम्बष्ठकन्यायामायोगव्यान्तु धिग्वण: ॥
आयोगवश्च क्षत्ता च चण्डालश्चाधमो नृणाम् ।
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रय: ॥
वैश्यान्मागधवैदेहौ क्षत्रियात् सूत एव तु ।
प्रतीपमेते जायन्ते परेऽप्यपसदास्त्रय: ॥
जातो निषादाच्छूद्रायां जात्या भवति पुक्कस: ।
शूद्राज्जातो निषाद्यान्तु स वै कुक्कुटक: स्मृत: ॥
क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते ।
वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते ॥
द्विजातय: सवर्णासु जनयन्त्यव्रतांस्तु यान् ।
तान् सावित्रीपरिभ्रष्टान् व्रात्या इति विनि-
र्द्दिशेत् ॥
व्रात्यात्तु जायते विप्रात् पापात्मा भूर्जकण्टक: ।
आवन्त्यवाटधानौ च पुष्पध: शैख एव च ॥
झल्लो मल्लश्च राजन्यात् व्रात्यान्निच्छिविरेव च ।
नटश्च करणश्चैव खसो द्रविड एव च ॥
वैश्यात्तु जायते व्रात्यात् सुधन्वाचार्य्य एव च ।
कारुषश्च विजन्मा च मैत्र: सात्वत एव च ॥
व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्म्मणाञ्च त्यागेन जायन्ते वर्णसङ्करा: ॥*॥
सङ्कीर्णयोनयो ये तु प्रतिलोमानुलोमजा: ।
अन्योन्यव्यतिषक्ताश्च तान् प्रवक्ष्याम्यशेषत: ॥
सूतो वैदेहकश्चैव चण्डालश्च नराधम: ।
मागध: क्षत्तृजातिश्च तथायोगव एव च ॥
एते षट् सदृशान् वर्णान् जनयन्ति स्वयोनिषु ।
मातृजात्यां प्रसूयन्ते प्रवरासु च योनिषु ॥
यथा त्रयाणां वर्णानां द्वयोरात्मास्य जायते ।
आनन्तर्य्यात् स्वयोन्यान्तु तथा बाह्येष्वपि क्रमात् ॥
ते चापि बाह्यान् सुबहूंस्ततोऽप्यधिकदूषि-
तान् ।
परस्परस्य दारेषु जनयन्ति विगर्हितान् ॥*॥
यथैव शूद्रो ब्राह्मण्यां बाह्यं जन्तुं प्रसूयते ॥
तथा बाह्यतरं बाह्यश्चातुर्वर्ण्ये प्रसूयते ।
प्रतिकूलं वर्त्तमाना बाह्या बाह्यतरान् पुन: ।
हीना हीनान् प्रसूयन्ते वर्णान् पञ्चदशैव तु ॥
प्रसाधनोपचारज्ञमदासं दासजीवनम् ।
सैरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे ॥
मैत्रेयकन्तु वैदेहो माधूकं संप्रसूयते ।
नॄन् प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये ॥
निषादो मार्गवं सूते दासं नौकर्म्मजीविनम् ।
कैवर्त्तमिति यं प्राहुरार्य्यावर्त्तनिवासिन: ॥
मृतवस्त्रभृत्सु नारीषु गर्हितान्नाशनासु च ।
भवन्त्यायोगवीष्वेते जातिहीना: पृथक्त्रय: ॥
कारावरो निषादात्तु चर्म्मकार: प्रसूयते ।
वैदेहकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ ॥
चण्डालात् पाण्डुसोपाकस्त्वक्सारव्यवहारवान् ।
आहिण्डिको निषादेन वैदेह्यामेव जायते ॥
चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान् ।
पुक्कस्यां जायते पाप: सदा सज्जनगर्हित: ॥
निषादस्त्री तु चण्डालात् पुत्रमन्त्यावसायिनम् ।



श्मशानगोचरं सूते बाह्यानामपि गर्हितम् ॥
सङ्करे जातयस्त्वेता: पितृमातृप्रदर्शिता: ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्या: स्वकर्म्मभि: ॥
स्वजातिजानन्तरजा: षट्सुता द्विजधर्म्मिण: ।
शूद्राणान्तु सधर्म्माण: सर्व्वेऽपध्वंसजा: स्मृता: ॥
तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे ।
उत्कर्षञ्चापकर्षञ्च मनुष्येष्विह जन्मत: ॥
शनकैस्तु क्रियालोपादिमा: क्षत्रियजातय: ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चोड्रद्रविडा: काम्बोजा यवना: शका: ।
पारदा: पह्लवाश्चीना: किराता दरदा: खशा: ॥
मुखबाहूरुपज्जानां या लोके जातयो बहि: ।
म्लेच्छवाचश्चार्य्यवाच: सर्व्वे ते दस्यव: स्मृता: ॥
ये द्विजानामपसदा ये चापध्वंसजा: स्मृता: ।
ते निन्दितैर्वर्त्तयेयुर्द्विजानामेव कर्म्मभि: ॥*॥
सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सितम् ।
वैदेहकानां स्त्रीकार्य्यं मागधानां वणिक्पथ: ॥
मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्य च ।
मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम् ॥
क्षत्त्रुग्रपुक्कसानान्तु बिलौकोवधबन्धनम् ।
धिग्वणानां चर्म्मकार्य्यं वेणानां भाण्डवादनम् ॥
चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च ।
वसेयुरेते विज्ञाता वर्त्तयन्त: स्वकर्म्मभि: ॥*॥
चण्डालश्वपचानान्तु बहिर्ग्रामात् प्रतिश्रय: ।
अपपात्राश्च कर्त्तव्या धनमेषां श्वगर्द्दभम् ॥
वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम् ।
कार्ष्णायसमलङ्कार: परिव्रज्या च नित्यश: ॥
न तै: समयमन्विच्छेत् पुरुषो धर्म्ममाचरन् ।
व्यवहारो मिथस्तेषां विवाह: सदृशै: सह ॥
अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने ।
रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥
दिवा चरेयु: कार्य्यार्थं चिह्निता राजशासनै: ।
अबान्धवं शवञ्चैव निर्हरेयुरिति स्थिति: ॥
वध्यांश्च हन्यु: सततं यथाशास्त्रं नृपाज्ञया ।
वध्यवासांसि गृह्णीयु: शय्याश्चाभरणानि च ॥
वर्णापेतमविज्ञातं नरं कलुषयोनिजम् ।
आर्य्यरूपमिवानार्य्यं कर्म्मभि: स्वैर्विभावयेत् ॥
अनार्य्यता निष्ठुरता क्रूरता निष्क्रियात्मता ।
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥
पित्र्यं वा भजते शीलं मातुर्व्वोभयमेव वा ।
न कथञ्चन दुर्य्योनि: प्रकृतिं स्वां नियच्छति ॥
कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसङ्कर: ।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥
यत्र त्वेतेऽपरिध्वंसा जायन्ते वर्णदूषका: ।
राष्ट्रिकै: सह तद्राष्ट्रं क्षिप्रमेव विनश्यति ॥
ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृत: ।
स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम् ॥
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रह: ।
एतं सामासिकं धर्म्मं चातुर्व्वर्ण्येऽब्रवीन्मनु: ॥*॥
शूद्रायां ब्राह्मणाज्जात: श्रेयसा चेत् प्रजायते ।
अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात् ॥
शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।

क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च ॥
अनार्य्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया ।
ब्राह्मण्यामप्यनार्य्यात्तु श्रेयस्त्वं क्वेति चेद्भवेत् ॥
जातो नार्य्यामनार्य्यायामार्य्यादार्य्यो भवेद्-
गुणैः ।
जातोऽप्यनार्य्यादार्य्यायामनार्य्य इति निश्चयः ॥
तावुभावप्यसंस्कार्य्याविति धर्म्मो व्यवस्थितः ।
वैगुण्याज्जन्मनः पूर्व्व उत्तरः प्रतिलोमतः ॥
सुबीजञ्चैव सुक्षेत्रे जातं सम्पद्यते यथा ।
तथार्य्याज्जात आर्य्यायां सर्व्वं संस्कारमर्हति ॥
बीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः ।
बीजक्षेत्रे तथैवान्ये तत्रेयन्तु व्यवस्थितिः ॥
अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति ।
अबीजकमपि क्षेत्रं केवलं स्थण्डिलं भवेत् ॥
यस्माद्बीजप्रभावेण तिर्य्यग्जा ऋषयोऽभवन् ।
पूजिताश्च प्रशस्ताश्च तस्माद्बीजं प्रशस्यते ॥
अनार्य्यमार्य्यकर्म्माणमार्य्यञ्चानार्य्यकर्म्मिणम् ।
सम्प्रधार्य्याब्रवीद्धाता न समौ नासमाविति ॥"
इति मानवे ६ । १० अध्यायौ ॥ * ॥

वर्णसङ्करस्य कारणं दोषाश्च यथा,—
"अधर्म्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥
सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥
दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः ॥
उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्द्दन ! ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥"
इति श्रीभगवद्गीतायाम् १ अध्यायः ॥

वर्णसि:, पुं, (वृणोति व्यक्तमिति । वृञ् आवरणे + "नामन्सिमन्व्योमरोमलोमपाप्मध्याम्नामपत्रनीति ।" उणा० ४ । १०७ । इति असि: धातोर्नुक् च ।) जलम् । इत्युणादिकोषः ॥

वर्णा, स्त्री, ( वर्ण्यते भक्ष्यते इति । वर्ण भक्षणे + कर्म्मणि घञ् । ततष्टाप् । ) आढ़की । इति हेमचन्द्रः ॥

वर्णाङ्गा, स्त्री, ( वर्णो अङ्गमस्याः इति । अङ्ग + करणे घञ् । ततष्टाप् । ) लेखनी । इति शब्दरत्नावली ॥

वर्णाटः, पुं, ( वर्णान् अटतीति । अट + अच् । ) गायनः । चित्रकरः । स्त्रीधनजीवनः । इति मेदिनी । टे, ५५ ॥

वर्णात्मा, [ न् ] पुं, ( वर्णः अक्षरं आत्मा स्वरूपं यस्य । ) शब्दः । इति जटाधरः ॥

वर्णाधिपः, पुं, ( वर्णानां ब्राह्मणादीनामधिपः । ) ब्राह्मणक्षत्रियवैश्यशूद्राणामधिपतिग्रहः । यथा,
"ब्राह्मणौ शुक्रवागीशौ क्षत्रियौ भौमभास्करौ ।
चन्द्रो वैश्यो बुधः शूद्रे पतिर्म्लेच्छोऽन्त्यजो शनि ॥"
इति ॥
"स्वाध्याये वेद वर्णाधिप इह शुभदे स्त्रीरभे बाहितौ च ।"
इति च ज्योतिस्तत्त्वम् ॥

वर्णार्हः, पुं, (वर्णमर्हतीति । अर्ह + अच् ।) मुद्गः । इति राजनिर्घण्टः ॥

वर्णि, स्त्री, ( वर्ण्यते स्तूयते इति । वर्ण स्तुतौ + इन् । ) स्वर्णम् । इति सिद्धान्तकौमुदी ॥ ("वर्णेर्वेलिश्चाहिरण्ये ।" उणा० ४ । १२४ । इत्युक्तेः अहिरण्ये तु वर्णिरिवेत्यर्थः । क्वचित् पुंलिङ्गोऽपि ।)

वर्णिकः, पुं, ( वर्णा लेखनेन सन्ति अस्येति । वर्ण + ठन् । ) लेखकः । यथा,—
"लेखकेऽक्षरपुर्वाः स्युर्व्याजीवकचणकः ।
वर्णिको लिपिकरश्चाक्षरन्यासे लिपिर्लिबिः ॥"
इति हेमचन्द्रः । ३ । १४८ ॥

वर्णिका, स्त्री, ( वर्णा अक्षराणि लेखनेन सन्त्यस्या इति । वर्ण + ठन् + टाप् । ) कठिनी । यथा,—
"लेखन्यां कर्णिकापि स्यात् कठिन्यामपि वर्णिका ॥"
इति हारावली । २६६ ॥
मषिः । इति त्रिकाण्डशेषः ॥ काव्यस्य उत्कर्षः । यथा,—
"वर्णिकाक्षरयोरस्त्री तु चन्दने च विलेपने ।
स्वर्णादिषु स्त्री स्यादुत्कर्षे काव्यस्य च ॥"
इति मेदिनी । णे, १५२ ॥

वर्णितः, त्रि, ( वर्ण + क्त । ) स्तुतियुक्तः । तत्पर्य्यायः । ईलितः २ शस्तः ३ पणायितः ४ पनायितः ५ प्रणुतः ६ पणितः ७ पनितः ८ गीर्णः ९ अभिष्टुतः १० ईडितः ११ स्तुतः १२ । इत्यमरः । ३ । २ । ११० ॥ नुतः १३ । इति जटाधरः ॥ (विस्तारितः । यथा, महाभारते । १ । २ । २०९ ।
"चतुर्थमेतद्विपुलं वैराटं पर्व्व वर्णितम् ॥"
कथितः । यथा, कथासरित्सागरे । १६ । ३६ ।
"अभर्त्तुश्च न मया दरिद्रस्यापि वर्णितम् ॥")

वर्णिनी, स्त्री, (वर्णोऽस्त्यस्या इति । वर्ण + इनिः । ङीप् ।) हरिद्रा । इति राजनिर्घण्टः ॥ वनिता । इति हेमचन्द्रः । ३ । १६८ ॥

वर्णी, [न्] पुं, ( वर्णा अक्षराणि लेखनेन सन्त्यस्येति । वर्ण + इनिः । ) लेखकः । ( वर्णा नील पीतादयः लेखनेन सन्त्यस्येति । इनिः ।) चित्रकरः । ( यथा, महाभारते । १२ । ३६ । ५७ ।
"अङ्गारकूपसूत्राणां पत्राणाञ्चित्रवर्णिनाम् ।
अवसेक्त्रनदिष्टानां कारयेत च अक्षयान् ॥" * ।
वर्ण + "वर्णाद्ब्रह्मचारिणि ।" ५ । २ । १३४ ।" इति इनिः । ) ब्रह्मचारी । यथा,—
"वर्णी स्यात् लेखके चित्रकरेऽपि ब्रह्मचारिणि ॥"
इति मेदिनी । ने, १२७ ॥
( यथा, कुमारे । ५ । ५२ ।
"सखी तदीया तमुवाच वर्णिनं
निबोध साधो ! तव चेत् कुतूहलम् ॥")

वर्णिलिङ्गि, त्रि । (वर्णोत्तरपदात् तु "धर्म्मशील-वर्णान्ताच्च ।" ५ । २ । १३२ । इति इनिः स्यात् । यथा, कामन्दकीये नीतिसारे । २ । १६ ।
"याजनाध्यापने शुद्धे विशुद्धाच्च प्रतिग्रहः ।
वृत्तित्रयमिदं प्राहुर्मुनयो ज्येष्ठवर्णिनः ॥"
ज्येष्ठवर्णिनो ब्राह्मणस्येत्यर्थः । )

वर्णुः, पुं, ( वृङ् संभक्तौ + "भजिहरीभ्यो णिच ।" उणा० ३ । ३८ । इति णुः । स च नित् । ) नदविशेषः । इत्युणादिकोषः ॥ आदित्यः । इति संक्षिप्तसारोणादिवृत्तिः ॥ ( देशविशेषः । इत्युज्ज्वलदत्तः ॥ )

वर्त्तकं, क्ली, ( वर्त्तते इति । वृत् + ण्वुल् । ) वर्त्तलोहम् । इति हेमचन्द्रः ॥ विदरि इति भाषा ॥ ( पूजके, त्रि । यथा, गो० रामायणे । २ । १०७ । १२ ।
"निवेश सेना भरतः पद्मश्री माद्वतां वरः ।
अभिगन्तुं स काकुत्स्थमियेष गुरुवर्त्तकः ॥")

वर्त्तकः, पुं, ( वृत् + ण्वुल् । ) पक्षिविशेषः । भारुइ इति भाषा ॥ ( यथा, महाभारते । १३ । १११ । १०३ ।
"कौशिकन्तु ततो हत्वा नरो जायति वर्त्तकः ॥"
अस्य पर्य्यायो गुणाश्च यथा,—
"वर्त्तीको वर्त्तिकाश्चैवस्ततोऽन्या वर्त्तकाः स्मृताः ।
वर्त्तकोऽग्निकरः शीतो ज्वरदोषत्रयापहः ।
सुरुच्यः शुक्रदो बल्यो वर्त्तिकाल्पगुणास्ततः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)
अश्वस्य खुरः । इत्यमरः । ३ । ३ । ११ ॥

वर्त्तका, स्त्री, ( वर्त्तक + टाप् । "वर्त्तका शकुनौ प्राचाम् ।" इति वार्त्तिकोक्त्या न अत इत्वम् ।) वर्त्तकपक्षी । इत्यमरटीकायां रायमुकुटः ॥

वर्त्तजन्मा, [ न् ] पुं, ( वर्त्तनि आकाशपथे जन्म यस्य । ) मेघः । इति शब्दमाला ॥

वर्त्तनं, क्ली, ( वर्त्ततेऽनेनेति । वृत् + करणे ल्युट् ।) वृत्तिः । इत्यमरः । २ । ९ । १ ॥ ( यथा, भागवते । ७ । ११ । २६ ।
"सम्मार्ज्जनोपलेपाभ्यां गृहमण्डनवर्त्तनैः ।
स्वयञ्च मण्डिता नित्यं परिमृष्टपरिच्छदा ॥")
आधारस्थापनम् । इति शब्दरत्नावली ॥

वर्त्तनं, क्ली स्त्री, ( वर्त्ततेऽनेनेति । वृत् + ल्युट् । ) तूलनाला । तर्कुपीठः । जीवनम् । इति मेदिनी । ने, १०६ ॥ (यथा, मार्कण्डेये । ५० । ७१ ।
"देवतापितृभर्त्तॄणामतिथीनाञ्च वर्त्तनम् ।
यस्यावशिष्टेनान्नेन पुंसस्तस्य गृहं त्यज ॥" )

वर्त्तनः, पुं, ( वर्त्तते इति । वृत् + "अनुदात्तेतश्च हलादेः ।" ३ । २ । १४९ । इति युच् । ) वामनः । इति मेदिनी । ने, १२५ ॥ वर्त्तिष्णौ, त्रि । इत्यमरः । ३ । १ । २९ ॥ ( यथा, भागवते । ३ । ११ । २६ ।
"एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्त्तनः ।
तिर्य्यङ्नृपितृदेवानां सम्भवो यत्र कर्म्मभिः ॥" )

वर्त्तनिः, पुं, पूर्व्वदेशः । इति त्रिकाण्डशेषः ॥ (स्त्री, वर्त्ततेऽनयेति । वृत् + "वर्त्तेश्च ।" उणा० २ । १०७ । इति अनिः । पन्थाः । इत्युज्ज्वलदत्तः ॥ )

वर्त्तनी, स्त्री, (वर्त्तनि + कृदिकारादिति पक्षे ङीष् ।) पन्थाः । पेषणम् । इति शब्दरत्नावली ॥

वर्त्तमानः, पुं, (वर्त्तते इति । वृत्+शानच् । मुक् ।) प्रयोगाधिकरणीभूतकालः । इति वैयाकरणाः ॥ तत्कालवृत्ति, त्रि । तयोः पर्य्यायौ । अद्यतनः २ अधुनातनः ३ । इति राजनिर्घण्टः ॥ वैयाकरणमते तु । आरब्धापरिसमाप्तिर्व्वर्त्तमानः कालः । यथा । महाभारतं पठति । स तु चतुर्व्विधः । यथा,—

"प्रवृत्तोपरतश्चैव वृत्ताविरत एव च ।
नित्यप्रवृत्तः सामीप्यो वर्त्तमानश्चतुर्व्विधः ॥"

क्रमेणोदाहरणानि । मांसं न खादति आदौ प्रवृत्तं मांसभोजनं निवर्त्तयति इत्यर्थः । इह कुमाराः क्रीडन्ति तदानीन्तनक्रीडनाभावेऽपि पूर्व्वक्रीडायां वृत्तौ वर्त्तमानत्वात् । पर्व्वतास्तिष्ठन्ति नित्यप्रवृत्तत्वात् । किञ्च पर्व्वतानां स्थितत्वे वर्त्तमानत्वेऽपि भूतभविष्यत्कालाभ्यां सम्बन्धविवक्षया पर्व्वतास्तस्थुः स्थास्यन्ति इत्यपि स्यात् । सामीप्यो द्विविधः । भूतसामीप्यो भविष्यत्सामीप्यश्च । भूतसामीप्ये यथा । कदा आगतोऽसि इति प्रश्ने अव्यवच्छेदाद्वर्त्तमानत्वात् एषोऽहमागच्छामि इति आगतोऽपि वदति । भविष्यत् सामीप्ये यथा । कदा गमिष्यसि इति प्रश्ने एषोऽहं गच्छामि इति गमनक्रियमाणोद्यमोऽपि वदति । इति मुग्धबोधटीकायां दुर्गादासः ॥

वर्त्तरूकः, पुं, (वर्त्तो वर्त्तनं राति गृह्णातीति । रा+बाहुलकात् ऊकः ।) नदीभेदः । काकनीडः । जलावटः । इति मेदिनी । के, २१२ ॥ द्वारपालः । यथा,—

"मन्त्री सन्धिवदोऽमात्यो द्वाःस्थितो वेत्रधारकः ।
दौःसाधिको वर्त्तरूको गन्धोटो दण्डवासिनि ॥"
इति त्रिकाण्डशेषः ॥

वर्त्तलोहं, क्ली, (वर्त्तते इति । वृत्+अच् । ततः कर्म्मधारयः ।) लौहविशेषः । विद्रि इति भाषा । इति केचित् ॥ तत्पर्य्यायः । वर्त्तलौहम् २ वर्त्तकम् ३ लोहसङ्करम् ४ नीलकम् ५ नीललोहम् ६ नीलजम् ७ वर्त्तलोहकम् ८ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । शिशिरत्वम् । कफदाहपित्तनाशित्वम् । मधुरत्वम् । पित्तदाहश्रमनत्वञ्च । इति राजनिर्घण्टः ॥

वर्त्तिः, स्त्री, (वर्त्ततेऽनया इति । वृत्+"कृपिपिवहिवृतिविदिच्छिदिकीर्त्तिभ्यश्च ।" उणा० ४ । ११८ । इति इन् ।) भेषजनिर्म्माणम् । नयनाञ्जनम् । लेखः । गात्रानुलेपनी । दीपदशा । (यथा, भागवते । ५ । ११ । ८ ।

"यथा प्रदीपो घृतवर्त्तिमश्नन्
शिखाः सधूमा भजति ह्यन्यदा स्वम् ॥")

दीपः । इति मेदिनी । ते, ५५ ॥ * ॥ वर्त्तिविशेषो यथा,—

"वातकस्य फलं प्राज्ञः सैन्धवं व्यूषणं तथा ।
पैष्टी रसाञ्जनं क्षौद्रं त्रिकटूनि मनःशिला ।
एषा वर्त्तिर्हन्ति काचं तिमिरं पटलं तथा ॥"
इति गारुडे १९८ अध्यायः ॥

(वर्त्ततेऽनयेति । वृत्+"वृतेश्छन्दसि ।" उणा० ४ । १४० । इति इः । बाहुलकात् लोकेऽपि । योगकर्म्मत्वम् । इत्युज्ज्वलदत्तः ॥)

वर्त्तकः, पुं, पक्षिविशेषः । बटेर इति हिन्दी भाषा । तत्पर्य्यायः । वार्त्तिकः २ वर्त्ती ३ शाखिकायः ४ । अस्य मांसगुणाः ।

"तद्वच्च वार्त्तकं मांसं निर्द्दोषं वीर्य्यपुष्टिदम् ।"

तद्वत् तित्तिरवत् । इति राजनिर्घण्टः ॥

वर्त्तिका, स्त्री, वर्त्तकपक्षी । इत्यमरः ॥ वर्त्तनि वर्त्मनि इत्यच् वर्त्तः । स्वार्थे कः वर्त्तकः । भारद इति ख्यातः । हतिअतिभ्यां तिकः वर्त्तिका स्त्रीलिङ्गा । वाटभार इति ख्याता । नामद्वयमिदमित्यमरदीपिका । वर्त्तिकेति स्त्रियामोत्वप्रतिषेधार्थं द्वयोरुपादानमिति माधवी । रूपभेदप्रदर्शनार्थमिति रायमुकुटः । इति तट्टीका सारसुन्दरी ॥ सा च वटेर पक्षी इति भाषा ख्याता । अस्या मांसगुणाः ।

"वर्त्तिका मधुरा रूक्षा कफमारुतनाशिनी ॥"
इति राजवल्लभः ॥

अजशृङ्गी । इति राजनिर्घण्टः ॥ (वर्त्ति+स्वार्थे कन् । टाप् ।) वर्त्तिः । वाति इति प्रलिता इति पलिता इति च भाषा । इत्यादिकोषः ॥ * ॥ सा पञ्चविधा । यथा,—

"पद्मसूत्रभवा दर्भगर्भसूत्रभवाथवा ।
शाणजा बादरी वापि फलकोषोद्भवाथवा ।
वर्त्तिका दीपकृत्येषु सदा पञ्चविधा स्मृता ॥"
इति कालिकापुराणे ६८ अध्यायः ॥

वर्त्तिष्णुः, त्रि, (वर्त्तते इति । वृत्+"अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ।" ३ । २ । १३६ । इति इष्णुच् ।) वर्त्तनशीलः । तत्पर्य्यायः । वर्त्तनः । इत्यमरः । ३ । १ । २९ ॥ वर्त्ती । इति हेमचन्द्रः । ३ । ५३ ॥ (यथा, भट्टौ । ५ । १ ।

"निराकरिष्णु वर्त्तिष्णु वर्द्धिष्णु परितो रणम् ।
उत्पतिष्णु सहिष्णु च चेरतुः खरदूषणौ ॥")

वर्त्तिष्यमाणः, त्रि, (वृत्+भविष्यति स्यमानप्रत्ययः ।) भविष्यत्कालादिः । वर्त्तमानप्रागभावाश्रयः । इति राजनिर्घण्टः ॥ (यथा, साहित्यदर्पणे । ६ । ३०८ ।

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥")

वर्त्ती, स्त्री, (वर्त्ति+कृदिकारादिति ङीष् ।) वर्त्तिः । इत्यमरटीका ॥ (यथा, महाभारते । ४ । २१ । ७३ ।

"आसीदभ्यधिका चास्य श्रीः श्रियं प्रमुमुचतः ।
निर्व्वाणकाले दीपस्य वर्त्तीमिव दिधक्षतः ॥")

वर्त्ती, [न्] (वर्त्तते इति । वृत्+णिनिः ।) वर्त्तिष्णुः । इति हेमचन्द्रः । ३ । ५३ ॥

वर्त्तुलं, त्रि, (वर्त्तते इति । वृत्+बाहुलकात् उलच् ।) गोलवस्तु । तत्पर्य्यायः । निस्तलम् २ वृत्तम् ३ । इत्यमरः । ३ । १ । ६८ । मण्डलाचितम् ४ । इति शब्दरत्नावली ॥ * ॥ (यथा, भागवते । ५ । १६ । ५ ।

"यो वा अयं द्वीपः कुवलयकमलकोशाभ्यन्तरनियुतयोजनविशालः समवर्त्तुलो यथा पुष्करपत्रम् ॥") सम्पूर्णगर्भवृत्तानि यथा,—

"सम्पूर्णगर्भवृत्तानि सुखपद्मेन्दुदर्पणाः ।
चक्रावर्त्तकुलिसकन्दरकुपुटशायकाः ॥
आवर्त्तः कमठो जूमायञ्च कूपमपूपकम् ।
आलवालमहीपालचर्क्कं शालकादयः ॥" * ॥

वृत्तानि यथा,—

"वृत्तानि बाहुनारङ्गस्कन्धघण्टिकमोदकाः ।
रथाङ्गजावककर्णकुम्भकुम्भाण्डकादयः ॥
कर्णपाशभुजापाशालवालचापबद्धाननम् ।
मुद्रिकापरिखायोगपट्टहारखगादयः ॥"

इति कविकल्पलतायाम् २ स्तबके ३ कुसुमम् ॥

वर्त्तुलं, क्ली, गृञ्जनम् । इति राजनिर्घण्टः ॥

वर्त्तुलः, पुं, कलायविशेषः । वाटुला । इति भाषा । यथा,—

"कलायस्य त्रयो भेदा त्रिपुटो वर्त्तुलोऽङ्कुटी ।"
इति शब्दमाला ॥

वर्त्तुला, स्त्री, (वर्त्तुल+टाप् ।) तर्कुपीठी । इति हारावली । २१३ ॥ टेकोर बाँटुल इति भाषा ॥

वर्त्तुली, स्त्री, (वर्त्तुल+गौरादित्वात् ङीष् ।) गजपिप्पली । इति राजनिर्घण्टः ॥ (विवरणमस्या गजपिप्पलीशब्दे ज्ञातव्यम् ॥)

वर्त्म, [न्] क्ली, (वर्त्ततेऽनेनास्मिन् वेति । वृत्+मनिन् ।) पन्थाः । इत्यमरः । २ । १ । १५ ॥ (यथा, ऋग्वेदे । १ । ८५ । ३ ।

"गोमातरो यच्छुभयन्ते अञ्जिभि-
स्तनूषु शुभ्रा दधिरे विरुक्मतः ।
बाधन्ते विश्वमभिमातिनमप-
वर्त्मान्येषामनुरीयते घृतम् ॥"

"वर्त्मानि मार्गान्" इति तद्भाष्ये सायणः ॥ यथा च रघौ । २ । २० ।

"पुरस्कृता वर्त्मनि पार्थिवेन
प्रत्युद्गता पार्थिवधर्म्मपत्न्या ।
तदन्तरे सा विरराज धेनु-
र्दिनक्षपामध्यगतेव सन्ध्या ॥")

नेत्रच्छदः । इति मेदिनी । ने, १२८ ॥ (यथा, अश्ववैद्यके । २ । १० ।

"सितासितञ्च तन्मध्ये नेत्रयोर्म्मण्डलं हि तत् ।
प्रच्छादनं भवेद् वर्त्म चाक्षिकूटमतः परम् ॥")

वर्त्मनिः, स्त्री, (वर्त्तते इति । वृत्+"वृतेश्च" उणा० २ । १०७ । इति अनिः । चकारात् मुडागमोऽप्यत्रेति केचित् । वर्त्मनिरिति गोवर्द्धनः । इत्युज्ज्वलदत्तोक्त्या साधुः ।) पन्थाः । इत्युणादिकोषः ॥

वर्द्ध, क पूर्त्तिच्छेदे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) क, वर्द्धयति । इह क दीप्तावित्यत्रैव पूर्त्तिच्छेदोश्च भाषादिर्विहा-

हिमादप्यम्बुपानात्तथा निद्राभङ्गाच्च धातुक्षयात्
मलादिरयधारणाच्च मदशोकचिन्ताभयैः ।
अतिचलनश्रमोच्चलनाच्च अवरलतातिमांसक्षया-
दतीव वमनात्तथाऽतिविरेचनादामतः ।
पयोदसमये हिमव्यवदयोस्तृतीयांशयो-
र्जरामनिगतेऽशिते शिशिरसंघकालेऽपि च ।
देहे स्रोतांसि रिक्तानि पूरयित्वानिलो बली ।
करोति विविधान् रोगान् सर्व्वाङ्गैकाङ्गसंश्र-
यान् ॥”

प्रमितस्याच्च वैपरीत्ये प्रोपसर्गस्तेन अपरिमित-मितार्थः । प्रकर्षेण मितमल्पं वा अन्न-मतिपुराणं शाल्यादि । कतिचिदन्नानि यथा-न्यपि वातलानि । यत आह । शुकदत्तमाला-याम् ।

नीवारस्त्रिपुटः कलीयचणकश्यामाकमुद्गाढकी-
निष्पावाश्च मकुष्टकश्च वरटा मङ्गल्यकः
कोद्रवः ॥

एते वातकरा इति शेषः । नीवारः प्रसाधिका तीनी इति लोके । त्रिपुटः खेसारी । कलीयः कलायः । निष्पावो राजमाषः । बोड़ा इति लोके । मकुष्टकः मोठ इति लोके । वरटा वरटिका बरटे इति लोके । मङ्गल्यकः मसूरी इति लोके । पुरःपवनः प्राग्वातः । आमतः आमेन मार्गावरणात् । यत उक्तम् ।

वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन चेति । पयोदसमये वर्षासु । जरामनिगतेऽशिते भुक्ते-ऽपीत जीर्णताङ्गते । देहे स्रोतांसीत्यादिना संप्राप्तिरुक्ता । कषायादिभिर्हेतुभिर्व्वर्द्धितो समये चैतुभूते बली अनिलः प्रवृद्धो वायुः करोति विविधान् रोगान् । ते रोगाः कथ्यन्ते ।

“शिरोग्रहोऽव्यकेशत्वं जृम्भाख्यं हनुग्रहः ।
जिह्वास्तम्भो गद्गदत्वं मिन्मिनत्वञ्च मूकता ।
वाचालता प्रलापश्च रसानामनभिज्ञता ।
बाधिर्य्यं कर्णनादश्च कर्णशूलं तथार्द्दितम् ।
मन्यास्तम्भोऽथ गृध्रसी बाहुशोषोऽपबाहुकः ।
अर्द्दिता चैव विश्वाची खञ्जवात उदीरितः ।
आध्मानञ्च प्रत्याध्मानं वाताष्ठीला प्रत्यष्ठीला ।
तूनी च प्रतितूनी च वह्निवैषम्यमेव च ।
आटोपः पार्श्वशूलञ्च त्रिकशूलं तथैव च ।
ग्रहश्च मूत्रजं मूत्रनिग्रहो मलगाढ़ता ।
पुरीषस्याप्रवृत्तिश्च गृध्रसी च ततः परः ।
कलायखञ्जता चापि खञ्जता पङ्गुता तथा ।
क्रोष्टुशीर्षककम्पौ च वातकण्टक एव च ।
पादहर्षः पाददाहः आक्षेपो दण्डकाभिधः ।
वातपित्तकृतापिपक्षघ्ना दण्डापतानकः ।
अभिघातकृताचैव आयामो द्विविधः स्मृतः ।
आन्तरश्च तथा बाह्यो धनुर्वातश्च कुब्जकः ।
अपतन्त्रोपतानश्च पक्षाघातोऽखिलाङ्गकः ।
कम्पः स्तम्भो व्यथा तोदो भेदश्च स्फुरणं तथा ।
रौक्ष्यं कार्ष्ण्यञ्च कार्श्यञ्च शैत्यं लोमाञ्च हर्ष-
णम् ।
अङ्गमर्द्दोऽङ्गविभ्रंशः शिरासङ्कोच एव च ।
अङ्गशोषश्च भीरुत्वं मोहश्चञ्चलचित्तता ।
निद्रानाशः स्वेदनाशो बलनाशस्तथैव च ।
शुक्रक्षयो रजोनाशो गर्भनाशः परिश्रमः ।
एते ह्यशीतिसंख्या रोगा योगेन रूढितः ।
वातव्याधीति नाम्नासौ मुनिभिः परि-
कीर्त्तिताः ॥”

अत एव शिरोग्रहादय एव । योगेन वातेन । वातस्य व्याधिर्वातव्याधिरिति निरुक्त्या तदा वातज्वरादिष्वपि प्रसङ्गः स्यादत आह रूढितः प्रसिद्धितः । शिरोग्रहादयोऽशीतिरेव वातव्याधिसंज्ञा प्रसिद्धा न तु वातज्वरादयः ॥ * ॥ अथ वातव्याधीनां सामान्यचिकित्सामाह ।

“मधुरलवणकाम्लस्निग्धभक्ष्योष्णानि
गुरुरविकरवस्तिस्वेदसम्मर्दनानि ।
द्रवजलदसेकाभ्यङ्गसंमर्दनानि
प्रकुपितपवमानं शान्तमेतानि कुर्य्युः ॥”
इति भावप्रकाशः ॥ * ॥

अपि च ।
“बलपुष्टिकराण्येव वायुबीजं निशामय ।
भोजनानन्तरं सद्यो गमनं धावनं तथा ।
हिरणं वह्नितापश्च शश्वद्भ्रमणमैथुनम् ।
वृद्धस्त्रीगमनञ्चैव मनःसन्ताप एव च ।
अतिरूक्षमनाहारं युद्धं कलह एव च ।
कटुवाक्यं भयं शोकः केवलं वायुकारणम् ।
आश्चर्य्यकं तच्च निशामय तदौषधम् ।
पक्वरम्भाफलञ्चैव सद्योजं शर्करोदकम् ।
नारिकेलोदकञ्चैव सद्यस्कं सुमिष्टकम् ।
माहिषं दधि मिष्टञ्च केवलं वा सशर्करम् ।
सद्यःपर्युषितान्नञ्च सौवीरं शीतलोदकम् ।
पक्वतैलविशेषञ्च तिलतैलञ्च केवलम् ।
लाङ्गलीतालखर्ज्जूरमस्तमामलकोद्भवम् ।
शीतलोष्णोदकस्नानं सुस्निग्धचन्दनद्रवम् ।
स्निग्धपद्मपत्रतल्पं सुस्निग्धव्यजनानिलम् ।
एतत्ते कथितं वत्से सद्यो वातप्रणाशनम् ।
वायवस्त्रिविधाः पुंसां शोकसन्तापकारकाः ॥”
इति श्रीब्रह्मवैवर्त्ते ब्रह्मखण्डे १६ अध्यायः ॥ * ॥

अन्यच्च ।
“बिल्वाग्निमन्थश्योनाकपाटलापारिभद्रकम् ।
प्रसारण्यश्वगन्धा च बृहती कण्टकारिका ।
बला चातिबला रास्ना श्वदंष्ट्रा च पुनर्नवा ।
एरण्डशारिवा पर्णीगुडूचीकपिकच्छुकः ।
एषां दशपलिकान् भागान् क्वाथयेत् सलिले-
ऽर्म्मणे ।
तेन पादावशेषेण तैलं पात्रे विपाचयेत् ।
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम् ।
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् । * ।
द्रव्याणि यानि पेष्याणि तानि वक्ष्यामि
तच्छृणु ।
शतपुष्पा देवदारु शालपर्णी वचागुरुः ।
कुष्ठमांसी सैन्धवञ्च पलमेकं पुनर्नवा ।
पाने नस्ये तथाभ्यङ्गे तैलमेतत् प्रदापयेत् ।
हृच्छूलं पार्श्वशूलञ्च गण्डमालाञ्च नाशयेत् ।
अपस्मारं वातरक्तमाशुघ्नञ्च पुमान् भवेत् ।
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी स्त्रियः ।
अन्त्राणां वातभग्नानां कुञ्जराणां कृशानां तथा ।
तैलमेतत् प्रशस्तं सर्व्ववातविकारिणाम् ॥”

पुनश्च ।
“पलद्वयं सैन्धवस्य शुण्ठी पिप्पलिचव्यकम् ।
पञ्चप्रस्थं क्षारनालं तैलप्रस्थं पचेत्ततः ।
पक्षघ्नश्वासशीघ्रसर्व्ववातविकारहृत् ॥”
इति गारुडे १६८ अध्यायः ॥

(तथास्य गुणादयः ।
“वातस्तु रूक्षलघुचलबहुशीघ्रशीतपरुषविशदा-स्तस्य रौक्ष्याद्वातला रूक्षा पचिताल्पशरीराः प्रततरूक्षक्षामभिन्नसक्तजर्ज्जरस्वराः जागरूकाश्च लघुत्वाच्च लघुचपलगतिचेष्टाहारव्यवहाराः चलत्वादनवस्थितसन्ध्यक्षिभ्रूहन्वोष्ठजिह्वाशिरःस्कन्धपाणिपादाः बहुत्वाद्बहुप्रलापकण्डरासिराप्रतानाः शीघ्रत्वात् शीघ्रसमारम्भक्षोभविकाराः शीघ्रोत्रासरागविरागाः श्रुतग्राहिणोऽल्पस्मृतयश्च शैत्यात् शीतासहिष्णवः प्रततशीतकोद्वेपकस्तम्भाः पारुष्यात् परुषकेशश्मश्रुरोमनखदशनवदनपाणिपादाङ्गाः वैशद्यात् स्फुटिताङ्गावयवाः सततसन्धिशब्दगामिनः त एवं गुणयोगात् वातलाः प्रायेणाल्पबलाश्चाल्पायुषश्चाल्पापत्याश्चाल्पसाधनाश्चाधन्याश्च ।” इति चरके विमानस्थानेऽष्टमेऽध्याये ॥ अथास्य वृद्धिक्षयलक्षणं यथा ।

“तत्र वातवृद्धौ त्वक्पारुष्यं कार्श्यं कार्ष्ण्यं गात्रस्फुरणमुष्णकामिता निद्रानाशोऽल्पबलत्वं गाढ़वर्च्चस्त्वञ्च ।”

“तत्र वातक्षये मन्दचेष्टताल्पवाक्त्वमप्रहर्षो मूढ़संज्ञा च ।” इति सुश्रुते सूत्रस्थाने पञ्चदशेऽध्याये ॥ * ॥ स्थानविशेषेऽवस्थितस्यास्य चिकित्सा यथा,—

“विशेषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः ।
आमाशयस्थे शुद्धस्य यथा दोषहरी क्रिया ।
आमाशयगते वाते छर्द्दिताय यथाक्रमम् ।
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥”
“पक्वाशयगते वाते हितं स्नेहविरेचनम् ।
वस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥”
स्वेदनकम् ।
“कुशीलककवार्त्ताकुक्षारान् छन्ने घटे दहेत् ।
गोमयैः स्वेदनञ्च तत्पदं वातनाशनम् ॥
कार्य्यो वस्तिगते चापि विधिर्वस्तिविशोधनः ।
त्वङ्मांसासृक्शिराप्राप्ते कुर्य्याच्चासृग्
विमोक्षणम् ॥
स्नेहोपनाहाग्निकर्म्मबन्धनोन्मर्द्दनानि च ।
स्नायुसन्धिसंप्राप्ते कुर्य्याद्वाते विचक्षणः ॥
स्वेदाभ्यङ्गावगाहांश्च हृद्यञ्चान्नमाश्रिते ।
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥
विरेको मांसमेदःस्थे निरूहाः शमनानि च ।
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ॥
हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम् ।

विवर्द्धमानं गुल्मन्तु दृष्ट्वा दद्याद्विरेचनम् ॥
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम् ।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः ॥”
इति वैद्यकचक्रपाणिसंग्रहे बालव्याध्यधिकारः ॥)

वालकः, पुं, ( वाल इव चपलः । इवार्थे कन् । यद्वा, वालं करोतीति । कृ + “अन्येभ्योऽपीति डः ।) अश्मकर्णी । इत्यमरः । २ । ४ । १४६ ॥

वालकर्म्म [ न् ], ( वालस्य कर्म्म । ) मलत्यागक्रिया । मर्द्दनम् । यथा,—

वराह उवाच ।
“शृणुष्वमानेन मे भूमे ! वालकर्म्म प्रसुचति ।
एवं हि पुरुषो मुक्तो वालपीडितमानवः ॥
मक्षिका पञ्च वर्षाणि त्रीणि वर्षाणि मूषकः ।
श्वा चैव त्रीणि वर्षाणि कूर्म्मो वै जायते नव ॥
यत्तु वै तारणं देवि ! मेघर्म मम शंससि ।
यो वै शास्त्रं विजानाति मम कर्म्मपरायणः ॥
श्रुत्वा वाक्यं भगवतो प्रत्युवाच वसुन्धरा ॥
धरण्युवाच ।
अतुलं लभते पापं तव कर्म्मपरायणः ।
तस्य देव सुखार्थाय विशुद्धिं वक्तुमर्हसि ॥
वाराह उवाच ।
शृणु तत्त्वेन मे देवि ! कथ्यमानं मयानघे ।
अपराधमिमं कृत्वा यन्तरेद्येन कर्म्मणा ॥
यावकेन दिनान्त्रीणि नक्तेन च पुनस्त्रयः ।
कर्म्म चैवं ततः कृत्वा न च मे नापराध्यति ॥
सर्व्वशुद्धो परित्यज्य मम लोकाय गच्छति ।
एतत्ते कथितं भद्रे मलकर्म्मापराधिनः ॥
दोषश्चैव गुणश्चैव यत्त्वया परिपृच्छितम् ॥”
इति वराहपुराणे मलकर्म्मप्रायश्चित्तम् ॥

वातकी, [न्] त्रि, ( वातोऽतिशयितोऽस्त्यस्येति । वात + “वातातीसाराभ्यां कुक् च ।” ५।२।१२९। इति इनिः । कुक् च । ) वातरोगयुक्तः । तत्पर्य्यायः । वातरोगी २ । इत्यमरः । ३।१।५९॥

वातकुम्भः, पुं, (वातस्य कुम्भ इव ।) गजकुम्भाधोभागः । इति हेमचन्द्रः । ४ । २९१ ॥

वातकेतुः, पुं, ( वातस्य केतुरिव । ) धूलिः । इति त्रिकाण्डशेषः ॥

वातकेलिः, पुं, ( वात तु क सुखे + भावे घञ् । वातेन सुखेन केलिर्यत्र ।) कलालापः । विटूगदन्तक्षतः । इति मेदिनी । ले, १६२ ॥

वातगामी, [न्] पुं, ( वातेन वायुना सह गच्छतीति । गम + णिनिः ।) पक्षी । इति केचित् ॥

वातगुल्मः, पुं, वातुलः । यथा,—
“वातुलो वातगुल्मः स्यादावारवायुर्निदाघजः ।
झञ्झानिलः प्रावृषिजो वाञ्छनो मलयानिलः ॥”
इति त्रिकाण्डशेषः ॥
( वातेन जातो गुल्मः । ) रोगविशेषः । (यथा, मार्कण्डेये । ३९ । ५७ ।
“वातगुल्मप्रशान्त्यर्थमुदावर्त्ते तथोदरे ।
यवागूं वापि मलं वायुमग्न्यं प्रतिक्षिपेत् ॥”
अस्य चिकित्सा यथा,—
“वचायवानीत्रिकटुद्ग्रन्थिजीरकं शूलम् ।
क्षारयोर्भ्यो हिङ्गः पाने धान्यनागरकोऽथवा ॥
वातगुल्मेषु सर्व्वेषु ज्वरेषु विषमेषु च ।
रास्नाद्यपञ्चकं वापि वातगुल्मस्य पाचनम् ।
शुण्ठी सौवर्च्चलं शुण्ठी पाचनं वातगुल्मिने ॥”
“नागरं क्रिमिजित् पथ्या त्रिवृता त्रिगुणा-
युतम् ।
चूर्णं गुडान्वितं देयं वातगुल्मविरेचनम् ॥
दन्त्याश्च भाग एकस्तु द्वौ भागौ च हरी-
तक्यौ ।
त्रिवृतायास्त्रिभागः स्यात् गुडस्याप्यत्र
एव च ।
प्रक्षिप्य सर्व्वमेकत्र सर्व्वतुल्यगुडेन तु ॥
वटकं भक्षयेत् प्रातस्तस्योपरि जलं पिबेत् ।
कथितश्च विवेकश्च वातगुल्मोपशान्तये ॥”
इति वातगुल्मचिकित्सा ॥ इति हारीते चिकित्सितस्थाने चतुर्थेऽध्याये ॥) तस्य निदानादिर्गुल्मशब्दे द्रष्टव्यः ॥

वातघ्नी, स्त्री, ( वातं हन्तीति । हन + टक् । ङीप् । ) शालपर्णी । अश्वगन्धा । शिम्बडीक्षुपः । इति राजनिर्घण्टः ॥

वाततूलं, क्ली, ( वातेन उड्डीयमानं तूलम् । ) आकाशेऽड्डीयमानतन्तुः । बुडिर सुता इति भाषा । तत्पर्य्यायः । ब्रह्मसूत्रकम् २ इन्द्रतूलम् ३ ग्रीष्मदासम् ४ मेघकफम् ५ मरुद्ध्वजम् ६ । इति हारावली । २१ ॥

वातध्वजः, पुं, ( वातो वायुर्ध्वजो यस्य । ) मेघः । इति शब्दमाला ॥

वातपित्तजशूलं, क्ली, ( वातपित्ताभ्यां जायते इति । जन + डः । तच्च तत् शूलञ्चेति ।) शूलरोगविशेषः । तस्य औषधं यथा,—
“मातुलुङ्गस्य निर्य्यासं गुडाक्येन समन्वितम् ।
वातपित्तजशूलानि हन्ति वै पानयोगतः ॥”
इति गारुडे १८८ अध्यायः ॥
( तथास्याश्च चिकित्सा । यथा,—
“दुरालभा पर्पटकश्च निम्बा
पटोलनिम्बामृतनिम्बडीकम् ।
सशर्करं कल्कमिदं प्रयोज्यं
सपित्तवातोद्भवशूलशान्त्यै ॥”
इति हारीते चिकित्सितस्थानेऽष्टमेऽध्याये ॥)

वातपुत्रः, पुं, ( वातस्य पुत्रः । ) भीमसेनः । हनूमान् । महाधूर्त्तः । इति मेदिनी । रे, ८६ ॥

वातपोथः, पुं, ( वातं वातरोगं पुथ्यति हिनस्तीति । पुथ + अच् । ) पलाशवृक्षः । इत्यमरः । २ । ४ । २९ ॥ (अस्य पर्य्यायो यथा,—
“वातपोथः पलाशः स्यात्तथा ब्रह्मश्च किंशुकः ।
राजादनो ब्रह्मवृक्षो हस्तिकर्णो दलोऽमरः ॥”
इति वैद्यकरत्नमालायाम् ॥)

वातप्रमीः, पुं, स्त्री, ( वातं प्रमिमीते वाताभिमुखं गच्छतीति । वात + प्र + मा माने + “वातप्रमीः ।” उणा० ४ । १ । इति ईप्रत्ययेन साधुः । ) वातमृगः । इत्यमरः । २ । ५ । ७ ॥ वाओट् हरिण इति भाषा ॥ नकुलः । अश्वः । इति संक्षिप्तसारोणादिवृत्तिः ॥ ( वायुवद्वेगगामिनि, त्रि । यथा, ऋग्वेदे । ४ । ५८ । ७ ।
“सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ॥”)

वातफुल्लान्त्रं, क्ली, ( वातेन फुल्लं विकसितं यदन्त्रं तत् । ) फुप्फुसः । इति भूरिप्रयोगः ॥

वातमजः, पुं, ( वातमभिमुखीकृत्य अजति गच्छतीति । वात + अज + “वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातीनां उपसंख्यानम् ।” ३ । २ । २८ । इत्यस्य वार्त्तिकोक्त्या खश् । “अरुर्द्विषदजन्तस्य मुम् ।” ६ । ३ । ६७ । इति मुम् । ) वातमृगः । इति जटाधरः ॥ ( वातगामिनि, त्रि । यथा, भट्टिः । २ । १७ ।
“मेघात्ययोपात्तवनोपशोभं
कदम्बकं वातमजं मृगाणाम् ॥”)

वातमण्डली, स्त्री, ( वातस्य मण्डली । ) वात्या । इति त्रिकाण्डशेषः ॥

वातमृगः, पु, ( वाताभिमुखगामी मृगः । ) वातप्रमीः । इत्यमरः । २ । ५ । ७ ॥

वातरक्तं, क्ली, ( वातदूषितं रक्तं यत्र । ) रोगविशेषः । तस्य विप्रकृष्टं निदानमाह ।
“लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः ।
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः ॥
कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः ।
दध्यारनालसौवीरशुक्ततक्रसुरासवैः ॥
विरुद्धाध्यशनक्रोधदिवास्वप्नातिजागरैः ।
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।
स्थूलानां सुखिनां चापि प्रकुप्येद्वातशोणितम् ॥
हस्त्यश्वोष्ट्रैर्गच्छतश्चान्नतश्च
विदाह्यन्नं सविदाहाशनस्य ॥”
क्षारो यवक्षारादिः । अजीर्णभोजनैः अजीर्णेऽपि भोजनैः । अतिमात्रभोजनैरित्यर्थः । क्लिन्नादीनि मांसस्य विशेषणानि । क्लिन्नं शटितम् । शुष्कमातपे शोषितम् । अम्बुजं मत्स्यादिमांसम् । आनूपं गोडादिपूर्व्वदेशजं मांसम् । पिण्याकं तिलखलिः । मूलकं प्रसिद्धमेव । निष्पावः शिम्बीशाकम् । शाकं पत्रशाकम् । आदिशब्देन कुष्माण्डादीनि फलशाकानि गृह्यन्ते । पललं शटितत्वादिदोषरहितमपि मांसं वातशोणितं प्रकोपयेत् । शटितादि तु मांसं विशेषतो वातशोणितं प्रकोपयेत् । आरनालं सन्धानभेदः । शुक्तं सन्धानभेदः । सौवीरं सन्धानभेदः । तक्रं चतुर्थांशजलयुक्तं मथितं दधि । सुरा सन्धानभेदः । आसवः सन्धानभेदः । विरुद्धं क्षीरमत्स्यादि । अध्यशनम् । अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते । अतिजागरो निशि । प्रायशः बाहुल्येन । सुकुमाराणां अल्पतरकायव्यापाराणाम् । अथवा मिथ्याहारविहारिणाम् । अयथाहारविहाराभ्यां स्थूलानां सुखिनाञ्च रक्तदुष्टता । हस्त्यश्वोष्ट्रैर्गच्छतः यतो वायुर्विवर्द्धते रुधिरञ्चाधो गच्छति । हस्त्यादय उपलक्षणानि । पक्षा-

मप्यति चलत: । अथवा: विदाह्यन्नम् । विदाहि निष्पावकुलत्थसर्षपशाकादि । संविदाह्यन्नञ्च । संविदाहि ऽन्नं यस्य भुक्तं विदह्यते तदुपरि भुञ्जानस्येत्यर्थः । अध्यशनमजीर्णेऽशनं विरुद्धाशीर्षभोजनञ्च विरोधतो हेतुत्वाद्येन । यथात् वातशोणितं प्रकुप्येदित्यनेनान्वयः । एतेषां कारणानां मध्ये केनचिदपि केनचिदुभयमपि प्रकुप्येत् ॥ * ॥ संप्राप्तिमाह ।

"तलवे रक्तं विदह्यत्याशु तच्च
दुष्टं स्रस्तं पादयोश्चीयते तु ।
तत् संपृक्तं वायुना दूषितेन
तत्प्राबल्यादुच्यते वातरक्तम् ॥"

पूर्व्वोक्तैर्हेतुभि: तलवे समस्तं रक्तं विदहति अत्र दहधातुरविवक्षितकर्म्मक: । तेन विदहति विदग्धं भवतीत्यर्थः । तच्च दुष्टं रक्तम् । स्रस्तं अधोगतम् । पादयोश्चीयते सञ्चितं भवति । तद्रुधिरं दूषितेन स्वहेतुवायुना संपृक्तं मिलितं वातरक्तं उच्यते । तत्तु येनास्य संप्राप्तिरुक्ता सुश्रुतेन ।

"प्रायो रक्तं दुष्टिमायाति तच्च
वायोर्मार्गं संरुणद्ध्याशु यात: ।
क्रुद्धोऽत्यर्थं मार्गरोधात् स वायु-
रत्युद्रिक्तं दूषयेद्रक्तमाशु ॥"

अत्र प्रथमं रक्तस्य दुष्टत्वाद्रक्तवातमिति व्यपदेष्टुमुचितं भवत्यत आह । तत्प्राबल्यादिति । तत्र वातस्य दोषत्वेन प्राधान्याद्वातरक्तमिति व्यपदिश्यते ॥ * ॥ पूर्व्वरूपमाह ।

"स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक् ।
सन्धिशैथिल्यमालस्यं सदनं पिडकोद्गम: ॥
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ।
निस्तोद: स्फुरणं भेदो गुरुत्वं सुप्तिरेव च ॥
कण्डू: सन्धिषु रुक् हत्वा भूत्वा नश्यति चासकृत् ।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्व्वलक्षणम् ॥"

अथाधिकवातस्य वातरक्तस्य लक्षणमाह ।

"वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम् ।
शोथस्य रौक्ष्यं कृष्णत्वं श्यावतावृद्धिहानय: ॥
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तय: ॥"

तत्र पादयोः शूलादिकमधिकम् । यत आह सुश्रुत: ।

"अशोऽहिमौ तोदभेदप्रशोषौ
स्वापोपेतौ वातरक्तेन पादौ ॥" इति ।

अत्र सुप्तिः स्पर्शाज्ञता ॥ * ॥ अधिकरक्तं वातरक्तमाह ।

"रक्ते शोथोऽतिरुक् तोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षै: शमं नैति कण्डूक्लेदसमन्वित: ॥"

अधिकपित्तं तदाह ।

"पित्ते विदाह: संमोह: स्वेदो मूर्च्छा मदस्तृषा ।
स्पर्शासहत्वं रुग्दाह: शोथपाको भृशोष्णता ॥"

विदाहश्च पादादेव बोद्धव्य: । यत आह सुश्रुत: ।

"पित्तादाह्यश्चापशयाञ्च भवेता-
मत्यर्थोष्णौ रक्तशोथौ मृदू च ॥"

पदाविति शेष: ॥ अधिककफं तदाह ।

"कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतता: ।"

गुरुताद्य: पादयोरेव । यत आह सुश्रुत: ।

"कण्डूमन्तौ स्वेदशीतौ सशोथौ
पीनस्तब्धौ श्लेष्मदुष्टे तु रक्ते ॥ * ॥"

सन्निपातवातरक्तस्य उपद्रवानाह ।

"अस्वप्नारोचकश्वासमांसकोथशिरोग्रहा: ।
मूर्च्छा च मन्दरुक् तृष्णा ज्वरमोहप्रवेपका: ॥
हिक्काऽऽपाङ्गुल्यवीसर्पपाकतोदभ्रमक्लमा: ।
अङ्गुलीवक्रतास्फोटदाहमर्म्मग्रहार्ब्बुदा: ॥"

मांसकोथो मांसगलनम् ॥ * ॥ असाध्यत्वादिकमाह ।

"एतैरुपद्रवैर्व्वर्ज्यं मोहेनैकेन वापि यत् ।
अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम् ॥
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ।
त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवा: ॥"

अथ वातरक्तस्य चिकित्सामाह ।

"वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत् ।
अल्पाल्पं रक्षयेद्वायुं यथादोषं यथाबलम् ॥
उपाङ्गदाहतोदेषु जलौकोभिर्विनिर्हरेत् ।
शृङ्गतुम्बैश्चिमिचिमाकण्डूरुग्दाहान्वितम् ॥
प्रच्छनेन शिराभिर्व्वा देशाद्देशान्तरं व्रजेत् ।
अङ्गग्लानौ न तत् कार्यं रूक्षे वातोत्तरे च यत् ।
गम्भीरं श्वयथुं स्तम्भं कम्पं स्नायुं शिरामयात् ।
रोगानन्यांश्च वातोत्थान् कुर्य्याद्वायुररक्षित: ॥
विविधान् वातरोगान् वा खञ्जं वाथवापि तम् ।
रक्तं कुर्य्यात्तत: स्निग्धात्तत्प्रमाथेन निर्हरेत् ॥
विरेचयेत् पित्तादौ स्नेहयुक्तैर्व्विरेचनै: ।
बाह्यमालेपनाभ्यङ्गपरिषेकोपनाहनै: ।
विरेकास्थापनास्नेहपानैर्गम्भीरमाचरेत् ॥
दिवास्वप्नञ्च कोपञ्च व्यायामं मैथुनं तथा ।
कट्वुष्णं गुर्व्वभिष्यन्दि लवणाम्लौ च वर्जयेत् ॥
पुराणा यवगोधूमशालय: षष्टिकास्तथा ।
भोजनार्थे रसार्थे तु विष्किरा: प्रतुदा हिता: ॥
आढकीचणका मुद्गा मसूरा: सकुलत्थका: ।
यूषार्थे बहुसर्पिष्का: प्रशस्ता वातशोणिते ॥
सुनिषण्णकवेत्राग्रं काकमाची शतावरी ।
वास्तूकोपोदिकाशाकं शाकं सौवर्चलं तथा ॥
घृतमांसरसैर्भृष्टं शाकमलवणं च दापयेत् ।
हितो गोधूमचूर्णैश्च छागक्षीरघृतप्लुतै: ॥
लेपस्तिला भृष्टा: पिष्टा: पयसि निर्वृता: ॥
क्षीरपिष्टातसीभिर्व्वा वर्द्धमानफलैरपि ।
दुग्धपिष्टै: प्रलेपै: स्यात् हित: पवनशोणिते ॥
गुडूचीक्वाथकल्काभ्यां सपयस्कं घृतं शृतम् ।
वातरक्तं निहन्त्याशु कुष्ठं हन्ति दुस्तरम् ॥"

गुडूचीघृतम् ॥ * ॥

"तुलां पचेद्गुडूच्याश्च जलद्रोणचतुष्टये ।
पादशेषं कषायन्तु गोदुग्धं द्रोणकं तथा ।
तिलतैलाढकं ताभ्यां पचेन्मृद्वग्निना भिषक् ।
पञ्चमाषैस्ततो द्रव्यै: कल्कीकृतै: पचेत् ॥
मञ्जिष्ठा मधुकं कुष्ठं जीवनीयगणस्तथा ।
एलागुरु च कङ्कोला मांसी व्याघ्रनखी नखी ॥
हरेणु: मागधी चोचं त्वचा तामलकी तथा ।
शङ्खी श्यामा शताह्वा च विष्णुक्रान्ता च पद्मकम् ॥
नागकेशरवालत्वक्पद्मकोत्पलचन्दनम् ।
एतानि कल्कवत्सूक्ष्माणि कथितानीह कोविदै: ॥
पानेऽभ्यङ्गेऽनुवासे च तैलमेतन्नियोजयेत् ।
वातरक्तं तद्रूक्ष्णोपद्रवानाशु नाशयेत् ॥
धन्यं पुंसवनं स्त्रीणां गर्भदं वातपित्तनुत् ।
खेदकृच्छ्रूवायामशिर:कम्पादितामयान् ।
हन्यादम्लजातान् दोषान् गुडूचीतैलमुत्तमम् ॥"

इति गुडूचीतैलम् । इति भावप्रकाश: ॥

( यथा च ।

"हुताग्निहोत्रमासीनमृषिमध्ये पुनर्व्वसुम् ।
पृष्टवान् गुरुमेकाग्रमग्निवेशोऽग्निवर्च्चसम् ॥
अग्निमारुतयुक्तस्य संसर्गस्यानिलासृजो: ।
हेतुलक्षणभैषज्यान्यथास्मै गुरुरब्रवीत् ॥"

"अभिघातादशुद्ध्या च प्रदुष्टे शोणिते नृणाम् ।
कषायकटुतिक्ताल्परूक्षाहाराभोजनात् ॥
हयोष्ट्रयानयानाम्बुक्रीडाप्लवनलङ्घनात् ।
उष्णे चात्यध्वगमनाद्व्यवायाद्वेगनिग्रहात् ॥
वायुर्व्विवृद्धो वृद्धेन रक्तेनावारित: पथि ।
कृत्स्नं सन्दूषयेद्रक्तं तज्ज्ञेयं वातशोणितम् ॥
खुडं वातबलासाख्यमाढ्यवातञ्च नामभि: ।
तस्य स्थानं करौ पादावङ्गुल्य: सर्व्वसन्धय: ॥
कृत्वादौ हस्तपादे तु मूलं देहे विधावति ।
सौक्ष्म्यात् सर्व्वसरत्वाच्च देहं गच्छन् शिरायनै: ।
पर्व्वस्वभिहतं क्षुब्धं वक्रत्वादभितिष्ठति ।
स्थितं पित्तादिसंसृष्टं तास्ता: सृजति वेदना: ॥
करोति दु:खं तेष्वेव तस्मात् प्रायेण सन्धिषु ॥"

"उत्तानमथ गम्भीरं द्विविधन्तत् प्रचक्षते ।
त्वङ्मांसाश्रयमुत्तानं गम्भीरन्त्वन्तराश्रयम् ॥
कण्ड्वादाहरुगायामतोदस्फुरणकुञ्चनै: ।
अन्विता श्यावरक्ता त्वग्बाह्ये ताम्रा तथेष्यते ॥
गम्भीरे श्वयथु: स्तब्ध: कठिनोऽन्तर्भृशार्त्तिमान् ।
श्यावस्ताम्रोऽथवा दाहतोदस्फुरणपाकवान् ॥
रुग्विदाहान्वितोऽभीक्ष्णं वायु: सन्ध्यस्थिमज्जसु ।
छिन्दन्निव चरत्यन्तर्व्वक्रीकुर्व्वंश्च वेगवान् ॥
करोति खञ्जं पङ्गुं वा शरीरे सर्व्वतश्चरन् ।
सर्व्वैर्लिङ्गैश्च विज्ञेयं वातासृगुभयाश्रयम् ॥"

"रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुत: ।
निविश्यान्योन्यमावार्य्य वेदनाभिर्हरेदसून् ॥
तत्र मुञ्चेदसृक्शृङ्गजलौक:सूच्यलाबुभि: ।
प्रच्छनैर्व्वा शिराभिर्व्वा यथादोषं यथाबलम् ॥
रुग्दाहशूलतोदार्त्तादसृक्स्राव्यं जलौकसा ।
शृङ्गैस्तुम्बैर्हरेत् सुप्तिकण्डूचिमिचिमायनात् ॥
देशाद्देशं व्रजत् स्राव्यं शिराभि: प्रच्छनेन वा ॥"

"वमिसैलवसामज्जपानाभ्यञ्जनवस्तिभि: ।

सुखोष्णैर्वमनाद्यैश्च वातोत्तरमुपाचरेत् ॥
विरेचनघृतक्षीरपानैः सेकैः सबस्तिभिः ।
शीतैर्निर्वापणैश्चापि रक्तपित्तोत्तरं जयेत् ॥
वमनं मृदु नात्यर्थं स्नेहसेकाद्यलङ्घनम् ।
कोष्णलेपाश्च शस्यन्ते वातरक्ते कफोत्तरे ॥
कफवातोत्तरे शीतैः प्रलिप्ते वातशोथिनि ।
विदाहः शोफरुक्कण्डूविवृद्धिः स्तम्भनाद्भवेत् ॥
पित्तरक्तोत्तरे दाहः क्लेदोऽवदरणं भवेत् ।
उष्णैस्तस्माद्भिषग्दोषबलं बुद्ध्वाचरेत् क्रियाम् ॥"
"द्राक्षापरूषककाश्मर्य्यैक्षुरसान् समान् ।
पृथग्विदार्य्याश्च रसं तथा क्षीरचतुर्गुणम् ॥
एतत् प्रायोगिकं सर्पिः पारूषकमिति स्मृतम् ।
वातरक्ते क्षते क्षीणे वीसर्पे पैत्तिके ज्वरे ॥"
इति पारूषकं घृतम् ॥ * ॥
"मधुपर्ण्याः पलं पिष्ट्वा तैलप्रस्थं चतुर्गुणे ।
क्षीरे साध्यं घृतञ्चैवं मधुकात् शते ॥
सिद्धं हृद्यं त्रिदोषे स्यात् वातास्रश्वासकासनुत् ।
क्षतपाण्डुरोगवीसर्पकामलादाहनाशनम् ॥
बलाकषायकल्काभ्यां तैलं क्षीरसमन्तथा ।
सहस्रशतपाकं वा वातासृग्वातरोगनुत् ॥
रसायनं श्रेष्ठतमं इन्द्रियाणां प्रसादनम् ।
जीवनं वृंहणं स्वर्य्यं शुक्रासृग्दोषनाशनम् ॥"
"चन्द्रपादाम्बुसंसिक्ते क्षौमपट्टदलच्छदे ।
शयने पुलिनस्पर्शे शीतमारुतवीजिते ॥
चन्दनार्द्रकराः स्पर्शाः प्रिया नार्य्यः प्रियंवदाः ।
स्पर्शात् शीतसुखस्पर्शा घ्नन्ति दाहं रुजं क्लमम् ॥"
"गम्भीरे रक्तमाक्रान्तं स्याद्धातुं विवर्ज्जयेत् ।
रक्तपित्तातिवृद्ध्या तु पाकमाशु नियच्छति ।
भिन्नं स्रवति वा रक्तं विदग्धं पूयमेव वा ।
तयोः क्रिया विधातव्या व्रणः शोधनरोपणौ ॥
कुर्य्यादुपद्रवाणाञ्च क्रियां स्वात् स्वाच्चिकित्-
सितात् ॥"
इति चरके चिकित्सास्थाने २९ अध्यायः ॥
"गन्धकं पारदं लौहं वङ्गं तालं मनःशिला ।
शिलाजतु पुरं शुद्धं समभागं विचूर्णयेत् ॥
विडङ्गं त्रिफला व्योषं वागुजी च पुनर्नवा ।
चित्रकं देवकाष्ठञ्च दार्व्वी श्वेतापराजिता ॥
चूर्णमेषां पृथक् तुल्यं सर्व्वमेकत्र कारयेत् ।
त्रिफलाभृङ्गराजस्य रसेनैव पृथक् त्रिधा ॥
विभाव्य भक्षयेत् प्रातर्माषमात्रं दिने दिने ।
क्रमानुपानं निम्बस्य पत्रं पुष्पं त्वचं समम् ॥
माषमात्रं घृतैर्द्द्यात् सर्व्ववातविकारनुत् ।
वातरक्तं महाघोरं गम्भीरं सर्व्वजं जयेत् ॥
सर्व्वोपद्रवसंयुक्तं साध्यासाध्यं निहन्त्यलम् ॥"
इति वातरक्तान्तको रसः ॥ * ॥
"अथ शुद्धेन तालेन गन्धतुल्येन मेलयेत् ।
द्वयोस्तुल्यं जीर्णताम्रं वालुकायन्त्रके पचेत् ॥
अयन्तालेश्वरो नाम रसः परमदुर्लभः ।
हन्यात् कुष्ठानि सर्व्वाणि वातरक्तमथापि वा ।
शूलमष्टविधं चित्रं रसस्तालेश्वरो महान् ॥"
इति महातालेश्वरो रसः ॥
इति वैद्यकरसेन्द्रसारसंग्रहे वातरक्ताधिकारे ॥

अथास्य पथ्यापथ्यविधिः ।
"द्वयोरस्रस्रुतिः स्नेहजलौकाशृङ्गलाबुभिः ।
घृतधौतघृताभ्यङ्गो मेषीदुग्धावसेचनम् ॥
यवषष्टिककौवारकलमारक्तशालयः ।
गोधूमाश्चणका मुद्गास्तुवर्य्योऽपि मुकुष्टकाः ॥
अजानां महिषीणाञ्च गवामपि पयांसि च ।
लावतित्तिरिबर्हिट्टिट्टिभचटकादिविष्किराः ॥
प्रतुदाः शुकदात्यूहकपोतकटकादयः ।
उपोदिकाकाकमाची वेत्राग्रं सुनिषण्णकम् ॥
वास्तुकं कारवेल्लञ्च तण्डुलीयः प्रसारणी ।
पत्तूरी हस्तकुष्माण्डं सर्पिः शम्याकपल्लवम् ॥
पटोलं बहुतैलञ्च मृद्वीकाश्वेतशर्करा ।
नवनीतं सोमवल्ली कस्तूरी सितचन्दनम् ॥
शिंशपागुरुदेवाह्वसरलं कुङ्कुमर्द्दनम् ।
तिक्तञ्च पथ्यमुद्दिष्टं वातरक्तगदे नृणाम् ॥
दिवास्वप्नाग्निसन्तापव्यायामातपमैथुनम् ।
माषाः कुलत्था निष्पावाः कलायाः क्षारसेवनम् ॥
अम्बुजानूपमांसानि विरुद्धानि दधीनि च ।
इक्षवो मूलकं मद्यं पिण्याकोऽम्लानि काञ्जिकम् ॥
कटुञ्च गुर्व्वभिष्यन्दि लवणानि च शक्तवः ।
इत्यपथ्यं निगदितं वातरक्तगदे नृणाम् ॥"
इति वैद्यकपथ्यापथ्यविधिग्रन्थे वातरक्ताधिकारः ॥ )

वातरक्तघ्नः, पुं, ( वातरक्तं रोगविशेषं हन्तीति । हन+टक् । ) कुक्कुरद्रुः । इति शब्दचन्द्रिका ॥ कुकुरसुङा इति भाषा ॥

वातरक्तारिः, पुं, ( वातरक्तस्य अरिर्नाशकः । ) पित्तघ्नी लता । इति शब्दचन्द्रिका ॥ गुलञ्च इति भाषा ॥

वातरङ्गः, पुं, ( वातेन वायुना रङ्गो यस्य । निरन्तरचलद्दलत्वादस्य तथात्वम् । ) अश्वत्थः । इति शब्दरत्नावली ॥

वातरथः, पुं, ( वातो वायु रथो यस्य । ) मेघः । इति त्रिकाण्डशेषः ॥ ( वातो रथः प्रापको यस्येति वायुप्रापके, त्रि । यथा, भागवते । ३ । २९ । २० ।
"यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात् ।
एवं योगरतं चेत आत्मानमविकारि यत् ॥")

वातरायणः, पुं, (वातेन वायुजनितरोगेण रायति शब्दायते इति । रै शब्दे + ल्युः । ) उन्मत्तः । निष्प्रयोजनपुरुषः । काण्डम् । करपत्रम् । कूटः । शरसंक्रमः । इति मेदिनी । णे, ११६ ॥ सरलद्रुमः । इति शब्दरत्नावली ॥

वातरूषः, पुं, ( वातेन रूष्यते भूष्यते इति । रूष + घञ् । ) वातूलः । उत्कोचः । शक्रधनुः । इति मेदिनी । षे, ५७ ॥

वातरोगः, पुं, (वातजनितो रोगः ।) वायुव्याधिः । तत्पर्य्यायः । वातव्याधिः २ चलातङ्कः ३ अनिलामयः ४ । इति राजनिर्घण्टः ॥ (यथा,
"वातरोगं निहन्त्याशु अर्द्दितं सापतन्त्रकम् ॥"
इति वैद्यकचक्रपाणिसंग्रहे वातव्याधौ स्वल्परसोनपिण्डे ॥ )

वातरोगी [ न् ] त्रि, (वातरोगोऽस्यास्तीति । वातरोग + इनिः । ) वातरोगयुक्तः । तत्पर्य्यायः । वातकी २ । इत्यमरः ॥ ( यथा, बृहत्संहितायाम् । ८७ । ११ ।
"परतोऽपि दर्शनं वातरोगिणां चन्दनागुरुप्राप्तिः ॥")

वातर्हिः, पुं, काष्ठलौहोभयनिर्म्मितपाशम् । तत्पर्य्यायः । काष्ठलौही २ । इति त्रिकाण्डशेषः ॥

वातलः, पुं, ( वातं लातीति । ला+कः । ) चणकः । इति शब्दचन्द्रिका ॥ वायुकारके त्रि ॥ (यथा, सुश्रुते सूत्रस्थाने ४६ अः ।
"वातलाः शीतमधुराः सकषाया विरूक्षणाः ।
कफशोणितपित्तघ्नाश्चणकाः पुंस्त्वनाशनाः ॥")

वातलमण्डली, स्त्री, वात्या । इति भूरिप्रयोगः ॥

वातवान् [ त् ] त्रि, वायुयुक्तः । वातो विद्यतेऽस्य इत्यर्थे मतुप्रत्ययेन निष्पन्नः ॥

वातवैरी [ न् ], पुं, ( वातस्य वैरी । ) वातादः । इति राजनिर्घण्टः ॥ वायुनाशके, त्रि ॥

वातव्याधिः, पुं, ( वातजनितो व्याधिः ।) वातरोगः । इति राजनिर्घण्टः ॥ ( यथा,
"मृगं सुमत्स्यं भक्तं कन्याश्वाननिपीडितम् ।
रजानिमन्तञ्च नरं वातव्याधिर्विनाशयेत् ॥"
इति माधवकरकृते रुग्विनिश्चये वातरोगाधिकारे शेषांशे ॥ )

वातशीर्षं, क्ली, ( वातस्य शीर्षमिव । ) वस्तिः । इति राजनिर्घण्टः ॥

वातशोणितं, क्ली, ( वातजं शोणितं दुष्टरक्तं यत्र । ) वातरक्तरोगः । इति भावप्रकाशः ॥ ( अस्य सनिदानसम्प्राप्तिकं पूर्व्वरूपं लक्षणञ्च यथा,—
"विदाह्यन्नं विरुद्धञ्च तत्तच्चासृक्प्रदूषणम् ।
भजतां विधिहीनञ्च स्वप्नजागरमैथुनम् ॥
प्रायेण सुकुमाराणामचंक्रमणशीलिनाम् ।
अभिघातादशुद्धेश्च नृणामसृजि दूषिते ॥
वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः ।
तादृशेनासृजा रुद्धः प्राक् तदेव प्रदूषयेत् ॥
आढ्यरोगं खुडं वातबलासं वातशोणितम् ।
तदाहुर्नामभिस्तञ्च पूर्व्वं पादौ प्रधावति ॥
विशेषाद्यानयानाद्यैः प्रलम्बौ तस्य लक्षणम् ।
भविष्यतः कुष्ठसमं तथा सादः श्लथाङ्गता ॥
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ।
कण्डूस्फुरणनिस्तोदभेदगौरवसुप्तताः ॥
भूत्वा भूत्वा प्रणश्यन्ति मुहुराविर्भवन्ति च ।
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥
आखोरिव विषं क्रुद्धं कृत्स्नं देहं विधावति ।
त्वङ्मांसाश्रयमुत्तानं तत्पूर्व्वं जायते ततः ॥
कालान्तरेण गम्भीरं सर्व्वान् धातूनभिद्रवत् ।
कण्ड्वादिसंयुतोत्ताने त्वक्ताम्रश्यावलोहिता ॥
सायामा भृशदाहोषा गम्भीरेऽधिकपूर्व्ववत् ।
श्वयथुर्ग्रथितः पाकी वायुः सन्ध्यस्थिमज्जसु ॥
छिन्दन्निव चरत्यन्तर्वक्रीकुर्व्वंश्च वेगवान् ।

करोति खञ्जं पङ्गुं वा शरीरे सर्व्वतश्चरन् ॥
वातेऽधिकेऽधिकन्तत्र शूलस्फुरणतोदनम् ।
शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः ॥
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥
रक्ते शोथोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥
पित्ते विदाहः सम्मोहः स्वेदो मूर्च्छा मदः स-
तृट् ।
स्पर्शासहत्वं रुग्रागः शोथपाको भृशोष्मता ॥
कफे स्तैमित्यगुरुता सुप्तिस्निग्धत्वशीतताः ।
कण्डूर्मन्दा च रुग्द्वन्द्वसर्व्वलिङ्गञ्च सङ्करे ॥
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ।
त्रिदोषजं त्यजेत् स्रावि स्तब्धमर्व्वुदकारि च ॥
रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः ।
निविश्यान्योऽन्यमावार्य्य वेदनाभिर्हरत्यसून् ॥"
इति वाभटे निदानस्थाने षोड़शेऽध्याये ॥
"वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत् ।
अल्पाल्पं पालयन् वायुं यथादोषं यथाबलम् ॥
चिकित्सितं हितं पथ्यं प्रायश्चित्तं भिषग्जितम् ।
भेषजं शमनं शस्तं पर्य्यायैः स्मृतमौषधम् ॥"
इति च वाभटे चिकित्सितस्थाने द्वाविंशतितमे-
ऽध्याये ॥ अन्यद्वातरक्तशब्दे ज्ञातव्यम् ॥*॥)

वातसहः, त्रि, ( वातं वातजनितरोगं सहते । सह+अच् । ) अत्यन्तवायुयुक्तः । यथा,—
"वातासहो वातसहो वातूलो वातुलोऽपि च ।"
इति शब्दरत्नावली ॥
(वायुवेगसहनशीलः । यथा, महाभारते । १ । १४९ । ५ ।
"ततो वातसहां नावं यन्त्रयुक्तां पताकिनीम् ।
ऊर्म्मिक्षमां दृढ़ां कृत्वा कुन्तीमिदमुवाच च ॥")

वातसारथिः, पुं, (वातः सारथिः सहायो यस्य ।) अग्निः । इति केचित् ॥

वातस्कन्धः, पुं, (वातस्य स्कन्ध इव ।) आकाशस्य भागविशेषः । यत्र वायुर्व्वहति । इति केचित् ॥

वातहा, [न्] त्रि, (वातं हन्तीति । हन्+क्विप् ।) वातघ्नः । वायुनाशकौषधम् । इति वैद्यकम् ॥

वाताटः, पुं, ( वात इव अटति गच्छतीति । अट्+अच् । ) सूर्य्याश्वः । इति त्रिकाण्डशेषः ॥ वातमृगः । इति शब्दरत्नावली ॥

वाताण्डः, पुं, ( वातदूषितौ अण्डौ यस्मात् । ) मुष्करोगविशेषः । तस्य लक्षणं यथा,—
"यस्याण्डौ दूषयेद्वायुः क्षेत्रजो यस्य संस्थितः ।
तस्य मुष्कचलत्वेको रोगो वाताण्डसंज्ञकः ॥"
इति माधवकरः ॥

वातादः, पुं, (वाताय वातनिवृत्तये अद्यते इति । अद्+घञ् । ) फलवृक्षविशेषः । बादाम इति ख्यातः । तत्पर्य्यायः । वातवैरी २ नेत्रोपमफलः ३ वाताम्रः ४ । अस्य गुणाः । उष्णत्वम् । सुस्निग्धत्वम् । वातघ्नत्वम् । शुक्रकारित्वम् । गुरुत्वञ्च । अस्य मज्जगुणाः । मधुरत्वम् । वृष्यत्वम् । पित्तानिलापहत्वम् । स्निग्धत्वम् । उष्णत्वम् । कफकारित्वम् । रक्तपित्तविकारिणां नेष्टत्वञ्च । इति भावप्रकाशः ॥

वातापिः, पुं, असुरविशेषः । स च ह्रादस्य धमनी पत्न्यां जातः । अगस्त्येन भक्षितः । इति श्रीभागवतमतम् ॥ कल्पान्तरे तु विप्रचित्तेः सिंहिकायां जातः । यथा,—
"सिंहिकायामथोत्पन्ना विप्रचित्तेः सुतास्तथा ।
शंवः शलभश्च बलः शाल्वश्चैव च ॥
इल्वलो नमुचिश्चैव वातापी सृमरो जिकः ।
हरकल्पः कालनाभो भौमश्च नरकस्तथा ॥
राहुर्ज्येष्ठश्च तेषां वै चन्द्रसूर्य्यप्रमर्द्दनः ।
इत्येते सिंहिकापुत्त्रा देवैरपि दुरासदाः ॥"
इति वह्निपुराणे काश्यपीयवंशः ॥
अन्यच्च ।
"विप्रचित्तिः सैंहिकेयान् सिंहिकायामजी-
जनत् ।
हिरण्यकशिपोर्य्ये वै भागिनेयास्त्रयोदश ॥
व्यंसः शल्यश्च राजेन्द्रो नभो वातापिरेव च ।
इल्वलो नमुचिश्चैव सृमरश्चाञ्जनस्तथा ॥
नरकः कालनाभश्च सरमाणस्तथैव च ।
कल्पवीर्य्यश्च विख्यातो दनुवंशविवर्द्धनः ॥"
इति मात्स्ये ६ अध्यायः ॥
( मुनिवरोऽगस्त्यस्तु एनं महासुरं भक्षितवान् । एतद्वृत्तान्तस्तु महाभारते वनपर्व्वणि ९६ अध्यायमारभ्य द्रष्टव्यः ॥ )

वातापिद्विट्, [ष्] पुं, ( वातापिं द्वेष्टीति । द्विष्+क्विप् । ) अगस्त्यमुनिः । इति हेमचन्द्रः । २ । ३६ ॥

वातापिसूदनः पुं, ( वातापिं सूदत इति । सूद्+ल्युः ।) अगस्त्यः । इति त्रिकाण्डशेषः ॥

वातापिहा [न्] पुं, ( वातापिं हन्तीति । हन्+क्विप् ।) अगस्त्यः । इति त्रिकाण्डशेषः ॥

वातामोदा, स्त्री, (वातेन प्रसृत आमोदो यस्याः ।) कस्तूरी । इति शब्दमाला ॥

वातायनं, क्ली, ( वातस्य अयनं गमनागमनमार्गः ।) गवाक्षः । इत्यमरः ॥ (यथा, आर्य्यासप्तशत्याम् । ५१० ।
"लीलागारस्य बहिः सखीषु चरणातिथौ
मयि प्रियया ।
प्रकटीकृतः प्रसादो दत्त्वा वातायने वदनम् ॥")
तेन परबाधानिषेधो यथा,—
"परबाधां न कुर्व्वीत जलवातायनादिभिः ।
कारयित्वा तु कर्म्माणि कारुं पश्चात् न वञ्च-
येत् ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥

वातायनः, पुं, ( वातस्येव अयनं गतिर्यस्य । ) घोटकः । इति त्रिकाण्डशेषः ।

वातायुः, पुं, ( वातमयते इति । अय+बाहुलकात् उण् । ) हरिणः । इत्यमरः ॥

वातारिः, पुं, ( वातस्य वातरोगस्य अरिः । ) एरण्डवृक्षः । इति शब्दरत्नावली ॥ ( अस्य पर्य्यायो यथा,—
"शुक्ल एरण्ड आमण्डश्चित्रो गन्धर्व्वहस्तकः ।
पञ्चाङ्गुलो वर्द्धमानो दीर्घदण्डोऽप्यदण्डकः ॥
वातारिस्तरुणश्चापि रुवूकश्च निगद्यते । १ ।
रक्तोऽपरो रुवूकः स्याद्रुरुवूको रुवूस्तथा ।
व्याघ्रपुच्छश्च वातारिश्चञ्चुरुत्तानपत्रकः ॥" २ ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
शतमूली । इति शब्दचन्द्रिका ॥ पुत्रदात्री । शेफालिका । यवानी । भार्गी । स्नुही । विडङ्गः । सूरणः । भल्लातकः । अलुका । इति राजनिर्घण्टः ॥

वाताली, स्त्री, ( वातस्य आली यत्र । ) वात्या । इति त्रिकाण्डशेषः ॥

वाताश्वः, पुं, ( वात इव शीघ्रगोऽश्वः । ) कुलीनाश्वः । तत्पर्य्यायः । हयोत्तमः २ आज्यः ३ आजानेयः ४ । इति त्रिकाण्डशेषः ॥ ( यथा, कथासरित्सागरे । ६६ । १७४ ।
"तदिमं मां विजानीहि लक्ष्मीसेनं वराङ्गने ।
आनीतमिह वाताश्वेनाद्याखेटनिर्गतम् ॥")

वातासहः, त्रि, ( वातं वातजनितरोगं आसहते इति । आ+सह+अच् । ) वातुलः । इति शब्दरत्नावली ॥

वातिः, पुं, (वाति गच्छतीति । वा+"वातेर्नित् ।" उणा० ५ । ६ । इति अतिः ।) वायुः । यथा,
"वातिर्वायुर्मरुद्वातः श्वसनः पवनोऽनिलः ।"
इत्यमरटीकायां भरतधृतवाचस्पतिः ॥
सूर्य्यः । चन्द्रः । यथा । वातिरादित्यसोमयोः ।
इति रभसः ॥

वातिकः, पुं, ( वातादागतः । वात+ठञ् । ) वायुजव्याधिः । यथा,—
"वातिको वातजो व्याधिः पैत्तिकः पित्तसम्भवः ।
श्लैष्मिकः श्लेष्मसंभूतः समजः सान्निपातिकः ॥"
इति राजनिर्घण्टः ॥
( क्ली, वातस्य शमनं कोपनं वा । "वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् ।" ५ । १ । ३८ । इत्यस्य वार्त्ति० ठञ् । वातिकरोगाक्रान्ते वाचाले, त्रि । यथा, महाभारते । ३ । २५६ । ३ ।
"अपरे त्वब्रुवंस्तत्र वातिकास्तं महीपतिम् ।
युधिष्ठिरस्य यज्ञेन न समो ह्येष ते क्रतुः ॥")

वातिगः, पुं, ( वातिं वायुं गच्छतीति । गम्+डः । ) भण्टाकी । धातुवादिनि, त्रि । इति मेदिनी । गे, ४६ ॥

वातिगमः, पुं, (वातिं वायुं गमयतीति प्रापयति । गमि+अच् । ) वार्त्ताकुः । इति शब्दरत्नावली ॥

वातिङ्गणः, पुं, वार्त्ताकुः । इति त्रिकाण्डशेषः ॥

वातीयं, क्ली, (वाताय वातनिवृत्तये हितः । वात+छः । ) काञ्जिकम् । इति शब्दचन्द्रिका ॥

वातुलः, पुं, वात्या । इत्यमरटीकायां भरतः ॥

वातुलः, त्रि, वातविकारवान् । उन्मत्तः । इत्यमरटीकायां भरतः ॥

वातुलिः, स्त्री, तवतूलिका । इति हारावली ॥ बादुड़ इति भाषा ॥

वातूलः, पुं, ( वातानां समूहः । “वाताद्दूलः ।” ४।२।४२ । इत्यस्य वार्त्तिकोक्त्या ऊलः । यद्वा, वाताः सन्त्यस्मिन्निति । वात + “सिध्मादिभ्यश्च ।” ५ । २ । ९७ । इति लच् । “वातसमूहमसहिष्णुरित्यर्थे ।” ऊलच् । यद्वा, वातानां समूहः वातं न सहते इति वा । वात + “वातात् समूहे च । वातं न सहते इति च ।” ५।२।१२२ । इत्यस्य वार्त्ति० ऊलच् ।) वात्या । वातासहे,त्रि । इत्यमरः ॥ “वात्या वातसमूहः । अत्र जनस्नलादिगोरथवातादिति जलः । वातासहो वातस्तम्भस्तस्य: । वात्या इति ख्यातः । अत्र गोविकारादिना ऊलः वातूलः । वातैर्गाञ्जीति तुले इखोकारवानपि वातुलः । वातूलो वातुलोऽपि स्यादिति द्विरूपकोषः ॥ उन्मत्तेऽपि वातूलः ।” इत्यमरटीकायां भरतः ॥

वातोमा, स्त्री, (वातमूनयतीति । ऊन + अण् ।) शोणिमाम्बुमः । इति राजनिर्घण्टः ॥ वायुशीने, त्रि ॥

वात्या, स्त्री, ( वातानां समूहः । वात + “पाशादिभ्यो यः ।” ४ । २ । ४९ । इति यः । ) वातसमूहः । यथा,—

“आवर्त्तिनी च वाताली स्यात् वात्या वातमण्डली ॥”

इति त्रिकाण्डशेषः ॥

( यथा, भागवते । ३ । १७ । ५ ।

“ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन् मुहुः । उन्मूलयन्नगपतीन् वात्यानीको रजोध्वजः ॥”)

वात्सकं, क्ली, (वत्सानां समूहः । वत्स + “गोत्रोक्षो- ष्ट्रेति ।” ४ । २ । ३९ । इति वुञ् । ) वत्ससमूहः । इत्यमरः ॥ ( वत्सकस्येदमिति । वत्सक + अण् । कुटजसम्बन्धिनि इन्द्रयवसम्बन्धिनि च त्रि । यथा, सुश्रुते । ६ । ४० ।

“नागरातिविषामुस्तं पिप्पल्यो वात्सकं फलम् ॥”)

वात्सल्यः, पुं, ( वत्सल एव । स्वार्थे ष्यञ् । ) रसविशेषः । यथा,—

“वात्सल्यशान्तौ तु रसौ शृङ्गारः कौशिकः स्मृतः ॥”

इति त्रिकाण्डशेषः ॥

एतद्रसाधिकारी यथा,—

“शान्ते भावत्रय एव स्यात् प्रीते दासः प्रकीर्त्तितः । प्रेयसि स्युः सखायो हि यशोदा वत्सले स्मृता ॥ मधुरे राधिका ज्ञेया हास्ये स्यान्मधुमङ्गलः । सखीयूथोऽद्भुते ज्ञेयो वीरे चारणगोष्ठिनः ॥ करुणे वत्सपच्चादिर्जटिलाद्यास्तु रौद्रके । गोवर्द्धनेऽभिमन्युश्च भयानक उदाहृतौ ॥ तपस्विन्यादयो ह्यत्र वीभत्से परिकीर्त्तिताः । प्रजस्था नियता ज्ञेया आलम्बनविभावकाः ॥”

इत्युज्ज्वलनीलमणिः ॥

( वत्सलस्य भावः । वत्सल + ष्यञ् । ) वत्सलस्य भावे, क्ली ॥ (स्नेहः । यथा, भागवते ।४।६।३४।

“चरन्तं विश्वसुहृदं वात्सल्याल्लोकमङ्गलम् ॥”)

वात्सीपुत्रः, पुं, नापितः । इति त्रिकाण्डशेषः ॥

वात्स्यः, पुं, ( वत्सस्य गोत्रापत्यम् । वत्स + “गर्गादिभ्यो यञ् ।” ४ । १ । १०५ । इति यञ् । ) मुनिविशेषः । यथा । वात्स्यवात्स्यायनगोत्रयोः और्वच्यवनभार्गवजामदग्न्याप्नुवत्प्रवराः । इत्युद्वाहतत्त्वम् ॥

वात्स्यायनः, पुं, ( वत्सस्य गोत्रापत्यं युवा । वत्स + यञ् । ततो यूनि फक् । ) मुनिविशेषः । तत्पर्य्यायः । मल्लनागः २ पक्षिलः ३ स्वामी ४ । इति त्रिकाण्डशेषः ॥ (अयं हि कामसूत्रकर्त्ता । यथा, कुट्टनीमते । ७७ ।

“वात्स्यायनमयमनुगं
वात्स्यायनमिव दत्तकाचार्य्यान् ।
गणयति मन्मथतन्त्रे
मम सुतं राजपुत्रश्च ॥”)

वादः, पुं, ( वद् + घञ् । ) यथार्थबोधेच्छोर्वाक्यम् । यथा,—

“विजिगीषोः कथा जल्पो वादस्तत्त्वविविदिषोः ।”

इति जटाधरः ॥

अस्य लक्षणं यथा । प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः । इति गौतमसूत्रम् ॥ * ॥ अपि च ।

“सर्गाणामादिरन्तश्च मध्यञ्चैवाहमर्ज्जुन ! । अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥”

इति भगवद्गीतायाम् १० अध्यायः ॥

“प्रवदतां वादिनां सम्बन्धिन्यो वादजल्पवितण्डाख्यास्त्रिविधाः कथाः प्रसिद्धास्तासां मध्ये वादोऽहम् । यत्र द्वाभ्यामपि प्रमाणतर्काभ्यां स्वपक्षः स्थाप्यते परपक्षश्छलजातिनिग्रहस्थानैर्दूष्यते स जल्पो नाम । यत्र त्वेकः स्वपक्षं स्थापयति अन्यस्तु छलजातिनिग्रहस्थानैस्तत् पक्षं दूषयति न तु स्वपक्षं स्थापयति सा वितण्डा नाम कथा । तत्र जल्पवितण्डे विजिगीषमाणयोर्वादिनोः शक्तिपरीक्षामात्रफले । वादस्तु वीतरागयोः शिष्याचार्य्ययोरन्ययोर्वा तत्त्वनिरूपणफलः । अतोऽसौ श्रेष्ठत्वान्मद्विभूतिरित्यर्थः ।” इति तट्टीकायां श्रीधरस्वामी ॥ (“तत्र वादः । वादो नाम यः परस्परेण सह शास्त्रपूर्व्वकं विगृह्य कथयति । स वादो द्विविधः संग्रहेण जल्पो वितण्डा च । तत्र पक्षाश्रितयोर्वचनं जल्पः । जल्पविपर्य्ययो वितण्डा ।” इति चरके विमानस्थानेऽष्टमेऽध्याये ॥ )

वादकः, त्रि, ( वादयतीति वद् + णिच् + ण्वुल् । ) वाद्यकरः । (यथा, भागवते । १० । १८ । १२ ।

“क्वचित् नृत्यत्सु चान्येषु गायकौ वादकौ स्वयम् । शशंसतुर्महाराज साधु साध्विति वादिनौ ॥”) वक्ता । वदधातोः कर्त्तरि णक(ण्वुल्)प्रत्ययेन निष्पन्नः ॥

वादनं, क्ली, ( वद् + णिच् + ल्युट् । ) वाद्यम् । ( यथा, संगीतदर्पणे । ३३ ।

“वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः । तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥”)

वा(बा)दरं, त्रि, ( वदरात् वदराकारकार्पासफलाद्भवम् । वदर + अण् ।) कार्पासनिर्म्मितवस्त्रादि । इत्यमरः । २।६।१११ ॥ वादरायाः कार्पास्या जातं इत्यर्थे ष्णप्रत्ययेन निष्पन्नम् ॥

वा(बा)दरः, पुं, ( वदर + स्वार्थे अण् ।) कार्पासवृक्षः । इति हेमचन्द्रः ॥ (वदरीवृक्षः । कुलगाछ इति भाषा ॥ )

वादरङ्गः, पुं, अश्वत्थवृक्षः । इति त्रिकाण्डशेषः ॥

वा(बा)दरा,स्त्री, (वदरवत् फलमस्त्यस्याः । वदर + अच् । ततः टाप् ।) कार्पासवृक्षः । तत्पर्य्यायः । कार्पासी २ तूलपुष्पा ३ वदरी ४ समुद्रान्ता ५ गुणिकेरी ६ कार्पासिका ७ । इति शब्दरत्नावली ॥ अस्याः पर्य्यायान्तरं गुणाश्च कार्पासीशब्दे द्रष्टव्याः ॥

वादरायणः, पुं, ( वदरायणे वदरिकाश्रमे निवसतीति । वदरायण + अण् । ) व्यासदेवः । इति शब्दरत्नावली ॥

वादरायणिः, पुं, ( वादरायण एव । स्वार्थे इञ् ।) व्यासदेवः । इति शब्दरत्नावली ॥ ( वादरायणस्यापत्यमिति अपत्यार्थे इञ् । शुकदेवः ॥)

वादरिकः, त्रि, वदरचयनकर्त्ता । वदरं चिनोतीत्यर्थे ष्णिकप्रत्ययेन निष्पन्नः ॥

वादलं, क्ली, मधुयष्टिका । इति शब्दचन्द्रिका ॥

वादवादी [ न् ], पुं, ( वादं वदतीति । वद् + णिनिः ।) जिनभेदः । तत्पर्य्यायः । आर्हतः २ । इति हेमचन्द्र. ॥

वादामं, क्ली, स्वनामख्यातफलम् । तस्य गुणाः । उष्णत्वम् । सुस्निग्धत्वम् । वातघ्नत्वम् । बलशुक्रकारित्वञ्च । इति राजवल्लभः ॥

वादान्यः, त्रि, ( वदान्य एव । स्वार्थे अण् । ) वदान्यः । बहुप्रदः । इति भरतद्विरूपकोषः ॥

वादालः, पुं, मत्स्यभेदः । बोयालि इति भाषा । तत्पर्य्यायः । सहस्रदंष्ट्रः २ । इति हेमचन्द्रः ॥

वादिः, त्रि, (वादयति व्यक्तमुच्चारयतीति । वद् + णिच् + “वसिवपियजीति ।” उणा० ४ । १२४ । इति इञ् । ) विद्वान् । इत्युणादिकोषः ॥

वादित्रं, क्ली, ( वाद्यते । वद् + णिच् + “भूवादिगृभ्यो णित्रन् ।” उणा० ४ । १७० । इति णित्रन् । ) वाद्यम् । इत्यमरः ॥ ( यथा, भागवते । ३ । २४ । ७ ।

“अवादयंस्तदा व्योम्नि वादित्राणि घनाघनाः ॥”

वादित्रोऽर्थिनस्त्रायते इति । त्रै + कः । अर्थिरक्षके त्रि । यथा, वक्रोक्तिपञ्चाशिकायाम् ।२८।

“ज्ञात्वा त्वां पशुपालितं नहि मया दूतेन न प्रीयते
नैवाहं पशवः क्षुधोदरि चितः शक्यो विधातुं त्वया ।
किं वादित्रविवर्ज्जयात्र दयिते को वादिनस्त्रायते
इत्थं निर्जितशैलराजसुत इत्यव्याज्जगन्धूर्जटिः ॥”)

वादिरं, क्ली, वदरीवृक्षमूलप्रजलम्। इति शब्दरत्नावली॥

वादिराट्, [ज्] पुं, (वादिषु वक्तृषु राजते इति। राज+क्विप्।) मञ्जुघोषः। इति त्रिकाण्डशेषः॥

वादिशः, त्रि, साधुवादी। इति शब्दमाला॥

वादी, [न्] त्रि, (वदतीति। वद्+णिनिः।) वक्ता। (यथा, मनुः। ७।९१।
"न च हन्यात् स्थलारूढं न क्लीबं न कृताञ्जलिम्।
न मुक्तकेशं नासीनं न तवास्मीति वादिनम्॥")
अर्थी। विवादकर्त्ता। फरियादी इति पारस्यभाषा॥ यथा, सभापतेः कर्त्तव्यमाह कात्यायनः।
"अथ चेत् प्रतिभूर्नास्ति वादयोग्यस्तु वादिनः।
स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम्॥"
वादिनो भाषावादिनः उत्तरवादिनश्च॥ * ॥
स्वयं विवादाशक्तौ प्रतिनिधिमाह नारदः।
"अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा।
यो यस्यार्थे विवदते तयोर्जयपराजयौ॥"
तयोर्वादिप्रतिवादिनोः। कात्यायनः।
"मनुष्यमारणे स्तेये परदाराभिमर्षणे।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे॥
पारुष्ये कूटकरणे नृपद्रोहे तथैव च।
प्रतिवादी न दातव्यः कर्त्ता तु विवदेत् स्वयम्॥"
आवाहीतरस्य पक्षस्थितस्य दण्डनीयत्वमाह नारदः।
"यो न भ्राता पिता वापि न पुत्त्रो न नियोजितः।
परार्थवादी दण्ड्यः स्यात् व्यवहारेषु विब्रुवन्॥"
नारदः।
"पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः॥"
प्रत्यर्थी यदि कश्चित् कालं प्रार्थयते स लभते। अर्थी तु कालं प्रार्थयन् अर्थित्वमेव जह्यादिति तेन कालो न प्रार्थनीयः। तदाह।
"प्रत्यर्थी लभते कालं त्र्यहं सप्ताहमेव च।
अर्थी तु प्रार्थयन् कालं तत्पक्षादेव हीयते॥"
क्वचित् प्रत्यर्थी कालं न लभते। याज्ञवल्क्यः।
"साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम्।
विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः॥"
अथ भाषापादः। तत्र भाषास्वरूपमाहतुः कात्यायनबृहस्पती।
"प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम्।
निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः॥
स्वल्पाक्षरः प्रभूतार्थो निःसन्दिग्धो निराकुलः।
विरोधिकारणैर्मुक्तो विरोधिप्रतिरोधकः॥
यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना।
दद्यात्तत्पक्षसम्बन्धं प्रतिवादी तदोत्तरम्॥"
नारदेनापि।
"सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता।
तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत्॥"
तच्छोधनमाह बृहस्पतिः।
"न्यूनाधिकं पूर्वपक्षं तावद्वादी विशोधयेत्।
न दद्यादुत्तरं यावत् प्रत्यर्थी सभ्यसन्निधौ॥"
इति व्यवहारतत्त्वम्॥

वाद्यं, क्ली, (वद्+णिच्+यत्।) वादयन्ति जनयन्ति यत्। बाजना इति भाषा। तत्पर्य्यायः। वादित्रम् २ आतोद्यम् ३। तच्चतुर्विधं यथा,
"ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्।
वंश्यादिकन्तु सुषिरं कांस्यतालादिकं घनम्॥"
इत्यमरः॥
"इदं ततादि चतुर्विधं चतुःप्रकारं वाद्यादिशब्दद्वयवाच्यम्।
'इदं चतुर्विधं वाद्यं वादित्रातोद्यनामकम्।'
वाद्यमितिसमस्तं प्रथमान्तं विशेष्यपदं इति कलिङ्गादयः। घनतो न विशेष्यः।" इति तट्टीकायां भरतः॥ * ॥

अथ वाद्यानि।
"तालेन राजते गीतं तालो वादित्रसम्भवः।
गरीयस्तेन वादित्रं तच्चतुर्विधमुच्यते॥
ततं सुषिरमानद्धं घनमित्थं चतुर्विधम्।
ततं तन्त्रीगतं वाद्यं वंश्याद्यं सुषिरं तथा॥
चर्म्मावनद्धमानद्धं घनं तालादिकं मतम्॥" * ॥
तत्र ततं यथा,—
"अलावणी ब्रह्मवीणा किन्नरी लघुकिन्नरी।
विपञ्ची वल्लकी ज्येष्ठा चित्रा घोषवती जया॥
हस्तिका कुब्जिका कूर्म्मी शारङ्गी परिवादिनी।
त्रिशवी शतचन्द्री च नकुलौष्ठी च ढंसवी॥
औडुम्बरी पिनाकी च निबन्धः शुष्कलस्तथा।
गदावारणहस्तश्च रुद्रोऽथ स्वरमण्डलः।
कपिलासी मधुस्यन्दी घोणेत्यादि ततं भवेत्॥"
अलावणी यथा,—
"कनिष्ठिका परिधिर्भिन्नमध्यच्छिद्रेण संयुतः।
दशमुष्टिमितो दण्डः खादिरो वैणवोऽथवा॥
अधःकरभवान्ते च कुम्भावल्लाभिशोभितः।
नवाङ्गुलादधश्छिद्रोपरि चन्द्रार्द्धसन्निभाम्॥
निवेश्य शुक्तिकां भद्रालाबुखण्डं निवेशयेत्।
द्वादशाङ्गुलविस्तारं दृढपक्वं मनोहरम्॥
तुम्बिकावेधमध्येन दण्डच्छिद्रे तु निर्म्मिताम्।
अलाबुमध्यगां डोरीं कृत्वा स्वल्पान्तु काष्ठिकाम्॥
तथा संवेष्ट्य तन्मध्ये काष्ठिकां भ्रामयेत्ततः।
यथा स्यान्निश्चलालाबुर्बन्धश्च करभोपरि॥
पञ्चाङ्गुलिषु संत्यज्यालाबुं स्वल्पाञ्च बन्धयेत्।
केशान्तर्निर्म्मिता पट्टमयी सूक्ष्मलताथवा॥
समाः सूक्ष्मा दृढा तत्र तन्त्री देया विचक्षणैः।
एतल्लक्ष्यसंयोगादलावणी प्रकीर्त्तिता॥
विन्दुना न स्पृशेत्तुम्बं निःक्षिप्य वक्षसि॥
मध्यमानामिकाभ्याञ्च वाद्या दक्षिणपाणिना॥
तारे मन्द्रे च घोषे च त्रिस्थाने विन्दुरिष्यते।
तुम्बीमूलं समुत्पाद्य वामाङ्गुष्ठेन धारयेत्॥
नवस्थाभिस्तु सर्व्वाभिः स्वरव्यक्तिर्विधीयते।
विस्वरो दक्षिणः पाणिर्वामस्तत्र चतुःस्वरः॥
अलावण्यां स्थिता ज्ञेयाः सप्त षड्जादयः स्वराः।
रागव्यक्तिर्यथा रागे भवेत् षड्जादिभेदतः॥
अंशन्यासविभेदाच्च तथात्रापि विधीयते।
इयमलावणी प्रोक्ता मनःश्रवणरञ्जनी॥
प्रत्यक्षा शारदा देवी वीणारूपेण संस्थिता॥"
इत्यलावणी॥ अन्येषां लक्षणं विस्तरभयान्नोक्तम्॥ * ॥ सुषिरं यथा,—
"वंशोऽथ पारीमधुरीतित्तिरीशङ्खकाहलाः।
तोडहीमुरलीबुक्काशृङ्गिकास्वरनाभयः॥
शृङ्गं कापालिकं वंशचर्म्मवंशस्तथापरः।
एते सुषिरभेदास्तु कथिताः पूर्ब्बसूरिभिः॥
वर्त्तुलः सरलश्चैकपर्व्वदोषविवर्जितः।
वैणवः खादिरो वापि रक्तचन्दनजोऽथवा॥
श्रीखण्डजोऽथ सौवर्णो दन्तिदन्तमयोऽपि वा।
राजतस्ताम्रजो वापि लौहजस्फाटिकोऽथवा॥
कनिष्ठाङ्गुलितुल्येन गर्भरन्ध्रेण शोभितः।
शिल्पविद्याप्रवीणेन वंशः कार्य्यो मनोहरः॥
वंशेनैव मतोऽपीति मतङ्गमुनिनोदितम्।
ततोऽन्येऽपि तदाकारा वंशा एव प्रकीर्त्तिताः॥
तत्र त्यक्त्वा शिरोदेशादधो द्विमितमङ्गुलम्।
फुत्काररन्ध्रं कुर्व्वीत मितमङ्गुलिपर्व्वणा॥
पञ्चाङ्गुलानि संत्यज्य तावद्रन्ध्राणि कारयेत्।
कुर्य्यात्तथान्यरन्ध्राणि सप्तसंख्यानि कौशलात्॥
बदरीबीजतुल्यानि संत्यज्यार्द्धाङ्गुलम्।
प्रान्तयोर्बन्धनं कार्य्यं स्वराद्यैर्नादसन्ततेः॥
विकथकेन कला देया तेन सुस्वरता भवेत्।
पञ्चाङ्गुलोऽयं वंशः स्यादेकैकाङ्गुलिवर्द्धितः॥
षडङ्गुलानि मात्रा स्याद्यावदष्टादशाङ्गुलम्।
फुत्कारताररन्ध्रस्य यावदङ्गुलिमन्तरम्॥
तदेव नाम वंशस्य वांशिकैः परिकीर्त्त्यते॥
एकाङ्गुलो द्व्यङ्गुलश्च त्र्यङ्गुलश्चतुरङ्गुलः।
अतितारतरत्वेन वांशिकैः समुपेक्षितः॥
त्रयोदशाङ्गुलो वीणापरः।
निन्दितो वंशतत्त्वज्ञैस्तथा सप्तदशाङ्गुलः॥
महानन्दस्तथा नन्दो विजयोऽथ जयस्तथा।
चत्वार उत्तमा वंशा मतङ्गमुनिसम्मताः॥
दशाङ्गुलो महानन्दो नन्द एकादशाङ्गुलः।
द्वादशाङ्गुलमानस्तु विजयः परिकीर्त्तितः॥
चतुर्द्दशाङ्गुलमितो जय इत्यभिधीयते।
अमी वह्नी रविर्विष्णुः क्रमादत्र व्यवस्थिताः॥
नैविड्यं प्रौढता चापि सुस्वरत्वञ्च शीघ्रता।
माधुर्य्यमिति पञ्चामी फूत्कृतेषु गुणाः स्मृताः॥
शीत्कारबहुलः स्तब्धो विस्वरः स्फुटितो लघुः।
अमधुरश्च विज्ञेयाः षड्दोषाः फूत्कृते क्रमात्॥
तथा प्रयोगबाहुल्यमचपला गीतवादने।
एभिर्दोषैर्युतोऽतीव निन्दितो वंशिको मतः॥
स्थानकादित्रयाभिज्ञो गमकाढ्यः स्फुटाक्षरः।
शीघ्रहस्तः कलाभिज्ञो वांशिको दक्ष उच्यते॥
प्रसक्तिर्बहुसक्तिश्च युक्तिश्चाङ्गुलेर्गुणाः।
सुस्थानत्वं सुस्वरत्वं अङ्गुलीचालनक्रिया॥
समस्तगमकज्ञानं रागरागाङ्गवेदिता।
क्रियाभाषाविभाषासु दक्षता गीतवादने॥
स्वस्थाने चापि दुःस्थाने नादनिर्म्माणकौशलम्।
गातॄणां स्थानदातृत्वं तद्दोषाच्छादनं तथा॥

वादित्रस्य गुणा एते मया संक्षिप्य दर्शिताः ॥”
इति पञ्च: ॥

काहला खो निवङ्गः। तोड़ही मुरली वुक्का इत्येते च क्रिया सप्तसराख्यो नाभिरिव स्वरनाभिः क्रिया वर्त्तते। एतदेषां विस्तरभयान्नोक्तम् ॥ * ॥ आनद्धं यथा,—
“आनद्धे मर्द्दलः श्रेयान् इत्युक्तं भरतादिभिः ॥”
अपि च।

“मुरजपटहढक्का विश्वको दर्पवाद्यं
पणवघनसरूङ्मा लावजाहिवत्यः।
करटकमठभेरी स्यात् कुडुक्का हुडुक्का
झनझमुरलि झल्ली ढुक्कली दौण्डिमाना ॥
डमरुटमुकिमड्डुः कुण्डलीलङ्कुनामा
रणमभिघटवाद्यं दुन्दुभी च रञ्जः।
क्वचिदपि ढुढुकी स्यात् दर्दुरं चाप्युपाङ्गं
प्रकटितमनवद्यं वाद्यमित्थं जगत्याम् ॥
त्रिपुरमथनकर्त्तुर्नाडवे तत्प्रयाति
ततमखशुषिरचानद्धमित्थं घनञ्च। * ।
मर्द्दलः खादिरः श्रेष्ठो हीनः स्याद्रक्तचन्दनः।
रक्तचन्दनजो वाद्यो गभीरध्वनिरुत्तमः ॥
सार्द्धहस्तप्रमाणन्तु दैर्घ्यमस्य विधीयते।
त्रयोदशाङ्गुलं वाममथवा द्वादशाङ्गुलम् ॥
दक्षिणञ्च भवेद्धीनमेकेनार्द्धाङ्गुलेन वा।
करणानद्धवदनो मध्ये चैव पृथुर्भवेत् ॥
वाकृत्तालीयो भवेत् वक्तस्त्वच्चमे करणं मतम्।
मृत्तिकानिर्म्मितश्चैव मृदङ्गः परिकीर्त्तितः ॥
पातयेत् खरलिं वाद्यं मादनार्थञ्च मर्द्दले।
विभूतिर्गैरिकं भक्तं केन्दुकेन च सम्मतम् ॥
यद्वा त्रिपीटकं देयं जीवनीसत्त्वमिश्रितम्।
सर्व्वमेकत्र पिष्टन्तल्लेपः खरलिरुच्यते ॥
वामास्ये पूरिकां कृत्वा लेपं दद्याच्च दक्षिणे।
एष मर्द्दलकः प्रोक्तः सर्व्ववाद्योत्तमो मतः ॥
अस्य संयोगमासाद्य सर्व्वं वाद्यञ्च शोभते।
मृदङ्गे बीजकाष्ठे दशमङ्गुलं विदुः ॥ * ॥
तधिंधोतितिमिति ज्ञेयाः पाठवर्णा मृदङ्गजाः।
थों हं ठिं धिक्कटखद्दी ताकं दं दं थोगं धिधि ॥
खर्भं भिं गं गटं दं धा कूटपाठा मता अमी।
तथिं थों ठिं तक्क धौ दों दं दं धिग् र्वां ततं
तधि ॥

तक्क तं धं धिरों तधि पाठखण्डे त्वयं क्रमः ।*।
तथा च यतिमाने पाठखण्डः। झगतघेणो झगतघेणो धो धो धिक ताधिका धोणां धोणां तक तता धिका धोता झगत ताधि धि धिधिकतता कड़ना धोधिक धोणां धोता झगतता झगतता झगतता धि। इति यतिमानपाठखण्डः ॥ * ॥
“यतिरोढ़ाप्यवच्छेदो गजरो रूपकं ध्रुवम्।
गलप: सारिगोश्री च नादश्च कथितं तथा ॥
प्रहरणं छन्दनञ्च प्रबन्धा द्वादश स्मृताः ॥”
यथा दं थात इत्येकताल्यां यतिः ॥ * ॥
ओड़वाद्यं यथा। दां तधो तधिक तधिक दं धा दं धा धोधि धोधि तत तत थवि थवि

दिग्नां दिग्नां टटुनकि टटुनकि तदटकु तदटकु खचटकु खचटकु तगिनगि तगिनगि दां दां दं दं दीं दीं दं ता तथा। इत्योड़वाद्यम् ॥ * ॥
अवच्छेदवाद्यं यथा। दं थातः दं थातः धिक्कि धिक्कि दिग्नं दं थातः। इत्यवच्छेदवाद्यम् ॥*॥
गजरवाद्यं यथा। थोकटे च नेच ठिं ङें गथो गथोक्कु टेङ थोगतकि धिकतकि धिक टेङ्गन धि धि कटतक थोक तधि कटतक कतथो गतङ्गीम्। इत्येकताल्यां गजरः ॥ * ॥ रूपकवाद्यं यथा। तक धिक तक धिक थवितकि थवितकि धिक दं थातः। इति रूपकवाद्यम् ॥
ध्रुवकवाद्यं यथा। तक तकट धिक धिकट। इति निसारुताले ध्रुवकः ॥ * ॥ गलपो यथा। तधिङ्कि धिकतक तधिगत गं था था दें तथा टेङ्गन। इत्येकताल्यां गलपः ॥*॥ सारिगोश्री यथा। थोङ्ग टेङ्ग तक धिक तकाधक तकथो छटङ्गन छटङ्गन थोगककथोः। इति प्रथमखण्डः ॥ * ॥ टेङ्गथोः धिखोङ्गः टेङ्ग टेङ्ग दक तगदक धिक तदिदक दं गदं गखो गखोक तक तक धिकत धिकत थोढ़िङ्ग थोटेङ्ग थटेंगत खोग गत खोग खोहट गें टगें खोहटङ्ग इत्यस्य छन्दनम्। इति सारिगोश्री ॥ * ॥
नादो यथा,—
“हाकारत्रितयं पूर्व्वं दां धिगिति ततस्त्रयम्।
दां दां धिकत्रयं यत्र इति नादः शचीप्रियः ॥”
इति नादः ॥
“द्रुतं मानसमाख्यं शुद्धं कूटविनिर्म्मितम्।
सप्तखण्डमयं वाद्यं करिभं तदिहोच्यते ॥”
द्रुतमानद्वात प्रतिताले यथा। ततत ततत तक्कि तक्कि दिदं धिगनखो धिगनखो धिक धिक धिक्क धिक्क धिक गगि नगगि थो थो धि धि धिः दां दां धिक्क थो थो थो इत्योङ्ग नञ्गिथो नञ्गिथो थोङ्ग थोङ्ग डेंढि डेंढि थोङ्ग थोङ्ग तटि तटि तटुक गीं गीं धगि धगि तत तथे तथे तत तगि डोण्डो थोग थोग थों थोग गथो गथो तताता।
“इति सप्तदशाश्चाहुः कथितं वाद्यपद्धिता:।
प्रतितालेन तालेन पाठवर्णसमासतः ॥
गन्धर्व्वपतिना पूर्व्वसुर्व्वशीलास्यनर्त्तने।
सुधर्म्मारङ्गनार्थञ्च करीभं प्रकटीकृतम् ॥”
प्रहरणं यथा। थोगङ्गा तद्विकाथा गकटग गों दं थोग दिङ्गिक धिक्क धिकटेङ्ग। इत्येकताल्यां प्रहरणम् ॥
“वाद्यं विमुच्यते येन छन्दनं तन्निगद्यते।”
यथा। तद्विथो दिङ्ग टेङ्ग तक्कः। इति छन्दनम् ॥
“कलाखो विकलाखश्च टाकली चार्द्धटाकली।
जोकाटा कलिका चैव गोसन्धी मुरजस्तथा ॥”
कलापुञ्जवाद्यं श्लेष्वाद्यम्। मर्द्दलः त्रयोदशाङ्गुलवाममुखो द्वादशाङ्गुलदक्षिणमुखः। मुरजस्तु द्वादशाङ्गुलवाममुखः सप्तदशाङ्गुलदक्षिणमुखः। मर्द्दलमुरजयोरयं भेदः ॥ * ॥ घनं यथा,—

“अनुरक्तं विरक्तञ्च द्विविधं घनवाद्यकम्।
गीतानुगमनुरक्तं विरक्तं तालसंश्रयम् ॥
करतालः कांस्यवनो जयघण्टोऽथ शुक्तिका।
कम्बिका पटवाद्यञ्च पट्टातोधञ्च घर्घरम् ॥
झञ्झातालश्च मञ्जीरकर्त्तर्युङ्कर इत्यपि।
द्वादशैते सुधीभिश्च कथिता घनसंज्ञकाः ॥
त्रयोदशाङ्गुलव्यासौ शुद्धकांस्यविनिर्म्मितौ।
मध्यमुखौ कमलाकारौ तन्मध्ये रज्जुगुम्फितौ ॥
पद्मिनीपत्रसदृशौ कराभ्यां रज्जुयन्त्रितौ।
करतालावुभौ वाद्यौ पाठे झनटकैरिति ॥
यद्वा त्रयोदशव्यासं वक्रयवोन्नितम्।
यवपञ्चकगम्भीरं मध्ये च यवसप्तकम् ॥
विस्तृतं वर्त्तुलं निम्नं यवत्रयमितं ततः।
एकतो मध्यदेशे च श्लिष्टलिङ्गसमाकृतिम् ॥
अत्यन्तपेशीनिर्द्दिष्टशुद्धकांस्यविनिर्म्मितम्।
संरक्ताङ्गुलिसुस्निग्धसुदीर्घमधुरध्वनिम् ॥
घना निसा विमंरक्तं दृढं शुद्धं मनोहरम्।
काश्मीरादिसमुद्भूतं तालमाहुर्मनीषिणः ॥
सुनादं दक्षिणं तालं ततो हीनञ्च वामकम्।
कुर्व्वीत तद्द्वयं कार्य्यं नन्द्यावर्त्तयोगतः ॥
वामहस्तस्थतालस्य मध्यमं सन्निनादितम्।
तिर्य्यग्दक्षिणतालस्य परिघर्षेण ताडयेत् ॥
तालादौ वादयेच्चैव मृतदीर्घलघुद्रुतैः ॥”
इति करतालविशेषः। कर्णरोचनविशेषः। उक्तरस्य घनविशेषोऽनन्तरे पाठ्यपुलिङ्गः। अन्येषां लक्षणं विस्तरभयान्नोक्तम् ॥ * ॥
“रुक्मिण्याः सत्यभामायाः कालिन्दीमित्रविन्दयोः।
जाम्बवत्या नाग्नजित्या लक्ष्मणाभद्रयोरपि ॥
कृष्णस्याष्टमहिषीणां पुरोद्वाहमहोत्सवे।
ततं शुषिरमानद्धं घनञ्च युगपज्जनाः ॥
अवादयन्नसंख्यातमिति पौराणिकी श्रुतिः।
ततं वाद्यन्तु देवानां गन्धर्व्वाणाञ्च शौषिरम् ॥
आनद्धं राक्षसानान्तु किन्नराणां घनं विदुः।
त्रिवावतारे गोविन्दः सर्व्वमेवानयत् क्षितौ ॥
यावन्ति वाद्यभाण्डानि रामरावणयोर्युधि।
तावन्तो नाभवन् सेनाः कुरुपाण्डवसङ्गरे ॥”
किञ्च।

“निलिम्प कुम्भसमतोमरेख
रणे सुरारेर्मथनात् सुरेश।
अभूत्ततादेरपि सिंहनादैः
स पञ्चशब्दोऽपि कथादवारः ॥
युद्धे सैन्यानां योऽहङ्काररवः स सिंहनादः। ततादिभिरेभिश्चतुर्भिर्वाद्यैस्त्वया सिंहनादैश्च पञ्चशब्दोवाद्यमभूत्। सिंहनादेन सह वाद्यं पञ्चविधं भवतीत्यर्थः। इति सङ्गीतदामोदरः ॥
विष्णवग्रे वाद्यकरणफलं यथा,—
“अन्योपहारैर्विविधैर्धूतदीपादिभिश्चनैः।
गीतवादित्रनृत्याद्यैस्तोषयस्वाच्युतं नृप ॥
पुष्पराशिषु गोविन्दं गीतनृत्यरवोज्ज्वलैः।
भूपजागरणैर्भक्त्या तोषयाच्युतमव्ययम् ॥
येषां न वित्तं तैर्भक्त्या मार्ज्जनादुपलेपनैः।

शुक्लवस्त्रधरं देवं प्रमाणाद्दामनं सदा ।
ईषद्धास्यसमायुक्तं चिन्तयेच्च त्रिविक्रमम् ।
चिन्तयेद्वरदं देवं सर्व्वकामफलप्रदम् ॥”

इति कालिकापुराणे ८९ अध्यायः ॥ *॥

तस्योत्पत्तिर्यथा,—

“ततस्तु दशमे मासि तिथौ नक्षत्रसङ्गते ।
अष्टम्यामर्द्धरात्रौ च तस्यां जातो जनार्द्दनः ॥
इन्दीवरदलश्यामः पद्मपत्रायतेक्षणः ।
चतुर्भुजः सुन्दराङ्गो दिव्याभरणभूषितः ॥
श्रीवत्सकौस्तुभोरस्को वनमालाविभूषितः ।
वसुदेवस्य जातोऽसौ वासुदेवः सनातनः ॥

इति पाद्मोत्तरखण्डे ९० अध्यायः ॥ *॥

तस्य चतुर्थी मूर्त्तिर्यथा,—

“एकोऽपि जगत् सत्त्वं व्याप्य नारायणः स्थितः ।
चतुर्द्धा विस्थितो व्यापी सगुणो निर्गुणोऽपि वा ॥
एका भगवतो मूर्त्तिर्ज्ञानरूपा शिवामला ।
वासुदेवाभिधाना सा गुणातीता सुनिष्कला ॥
द्वितीया कालसंज्ञान्या तामसी शेषसंज्ञिता ।
निहन्ति सकलांश्चान्ते वैष्णवी परमा तनुः ॥
सत्त्वोद्रिक्ता तृतीयान्या प्रद्युम्नेति च संज्ञिता ।
जगत् स्थापयते सर्व्वं सा विष्णुप्रकृतिर्ध्रुवा ॥
चतुर्थी वासुदेवस्य मूर्त्तिर्ब्राह्मी सुसंज्ञिता ।
राजसी चानिरुद्धाख्या प्राद्युम्नी सृष्टि-
कारिका ॥
यः स्वपित्यखिलं हत्वा प्रद्युम्नेन सह प्रभुः ।
नारायणाख्यो ब्रह्मासौ प्रजासर्गकरो हि सः ॥
या सा नारायणतनुः प्रद्युम्नाख्या शुभेश्वराः ।
तया संमोहयेद्विश्वं सदेवासुरमानुषम् ॥
सैव सर्व्वजगत्सूतिः प्रकृतिः परिकीर्त्तिता ।
वासुदेवो ह्यनन्तात्मा केवलो निर्गुणो हरिः ॥
प्रधानं पुरुषः कालस्तत्त्वत्रयमनुत्तमम् ।
वासुदेवात्मकं नित्यमेतत् विज्ञाय मुच्यते ॥
एकमेवं चतुष्पादं चतुर्द्धा पुनरच्युतः ।
बिभेद वासुदेवोऽसौ प्रद्युम्नो हरिरव्ययः ॥”

इति कूर्म्मपुराणे ४८ अध्यायः ॥

वासुदेवप्रियङ्करी, स्त्री, ( वासुदेवस्य प्रियङ्करी । ) शतावरी । इति राजनिर्घण्टः ॥ श्रीकृष्णप्रियकारिणी च ॥

वासुपूज्यः, पुं, ( वासुर्नारायण इव पूज्यः । ) जिनविशेषः । इति हेमचन्द्रः । १ । २७ ॥

वासुभद्रः, पुं, श्रीकृष्णः । इति शब्दमाला ॥ (यथा, विष्णुपादादि-केशान्तवर्णनस्तोत्रे । ३१ ।
“या वायावानुकूल्यात् सरति मणिरुचा भासमानासमाना
साकं साकम्पमंसे वसति विदधती वासुभद्रं सुभद्रम् ॥” )

वासुरा, स्त्री, स्त्रीमात्रम् । करिणी । रात्रिः । भूमिः । इति हेमचन्द्रः ॥

वासूः, स्त्री, (वास्यते अलङ्क्रियते इति । वास + बाहुलकात् ऊः ।) नाट्योक्तौ बाला । इत्यमरः ॥

वासौकः, [स्] क्ली, ( वासाय ओकः स्थानम् ।) वासगृहम् । यथा,—

“गर्भागारेऽपवरको वासौकः शयनास्पदम् ।”

इति हेमचन्द्रः ॥

वास्तवं, क्ली, ( वस्त्वेव । वस्तु + अण् । ) यथार्थभूतम् । यथा,—

“धर्म्मः प्रोज्झितकैतवोऽत्र परमो निर्म्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।”

इत्यादि श्रीभागवते प्रथमस्कन्धे १ अध्यायः ॥

“वास्तवं परमार्थभूतं वस्तु । यद्वा, वास्तवशब्देन वस्तुनोंऽशो जीवः वस्तुनः शक्तिर्जगच्च तत् सर्व्वं वस्त्वेव न ततः पृथक् ।” इति तट्टीकायां श्रीधरस्वामी ॥

वास्तविकं, त्रि, ( वस्त्वेव वस्तु + ठक् । ) परमार्थभूतं वस्तु । वास्तवमेव इत्यर्थे वास्तवशब्दात् स्वार्थप्रत्ययेनापि निष्पन्नम् ॥

वास्तवेया, स्त्री, रात्रिः । इति त्रिकाण्डशेषः ॥ किन्तु वास्तवा क्षपा इति नामद्वयमिति साधुपाठः ॥

वास्तव्यः, त्रि, वसतीति वस + “वसेस्तव्यत् कर्त्तरि णिच्च ।” ३ । १ । ९६ । इत्यस्य वार्त्तिकोक्त्या तव्यत् । कर्त्तरि णिच्च । इति सिद्धान्तकौमुदी ॥ ( यथा, कथासरित्सागरे । ३८ । १०७ ।

“इहैवास्ति महीराज वास्तव्यो नगरे द्विजः ॥”)

वासयोग्यश्च । वसती, पुं ॥

वास्तु, क्ली, वास्तूकशाकम् । इति राजनिर्घण्टः ॥

वास्तु, क्ली पुं, (वसन्ति प्राणिनो यत्र । वस निवासे + “वसेरगारे णिच्च ।” उणा० १ । ७० । इति तुन् । स च णित् ।) गृहकरणयोग्यभूमिः । तत्पर्य्यायः । वेश्मभूः २ । इत्यमरः ॥ पोतः ३ व[illegible] ४ । इति जटाधरः ॥ वाटिका ५ गृहपो[illegible] ६ । इति शब्दरत्नावली ॥ वास्तुकरणादिर्यथा,—

श्रीहरिरुवाच ।

“वास्तु संक्षेपतो वक्ष्ये गृहादौ विघ्न[illegible]
ईशानकोणादारभ्य ह्येकाशीतिपदे [illegible]
ईशाने च शिरःपादौ नैर्ऋतेऽग्नाति[illegible]
आवासवासवेश्मादौ पुरे ग्रामे व[illegible]
प्रासादारामदुर्गेषु देवालयमठेषु [illegible]
द्वात्रिंशत्तु सुरान् बाह्ये तदन्त[illegible]
ईशश्चैवाथ पर्ज्जन्यो जयन्तः कु[illegible]
सत्यः सत्यो भृशश्चैव आकाशो [illegible]
पूषा च वितथश्चैव गृहक्षतो [illegible]
गन्धर्व्वो भृङ्गराजश्च मृगः [illegible]
दौवारिकोऽथ सुग्रीवः पु[illegible] ॥” अपः ।
असुरः शेषपापौ च रोग[illegible] व च ॥
भल्लाटः सोमसर्पौ च [illegible] तथा ।
बहिर्द्वात्रिंशदेते तु तद[illegible] ॥
ईशानादिचतुष्कोणसं[illegible] इत्यथः ।
आपश्चैवाथ सावित्रो जयो[illegible] च ॥
मध्ये नवपदो ब्रह्मा तस्याष्टौ च समीपगान् ।
देवानेकान्तरान्तान् पूर्व्वादौ नामतः शृणु ॥

अर्य्यमा सविता चैव विवस्वान् विबुधाधिपः ।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् ॥
अष्टमश्चापवत्सश्च परितो ब्रह्मणः स्मृताः ।
ईशानकोणादारभ्य दुर्व्वंशो वंश उच्यते ॥
आग्नेयकोणादारभ्य वंशो भवति दुर्द्धरः ।
अदितिं हिमवन्तञ्च जयन्तञ्च द्वयं वयम् ।
नायिका नायिका नाम शक्रान्तःसर्व्वगा पुनः ।
वास्तुदेवान् पूजयित्वा गृहप्रासादकल्पयेत् ॥
सुरेभ्यः पुरतः कार्य्यं दिश्याग्नेय्यां महानसम् ।
रूपनिर्गमवेश्मेन पूर्व्वतः यज्ञमण्डपम् ।
गन्धपुष्पगृहं च [illegible] धर्म्मे शान्त्यां पट्टवस्त्रगृहम् ।
भाण्डागारश्च [illegible] कौबेर्य्यां गोष्ठागारश्च वायवे ॥
उदगाश्रयश्च [illegible] वारुण्यां वातायनसमन्वितम् ।
समितुशालायां[illegible] स्नानमायुधागारं च नैर्ऋते ॥
अभ्यागता[illegible] रं दद्यं शय्यासनसपादुकाम् ।
तोयाग्नि[illegible] वदुक्तवैर्युक्तं दक्षिणतो भवेत् ॥
गृहान्तर[illegible] च सर्व्वाणि सजलैः कदलीगृहैः ।
पञ्चवर्णै[illegible] कुसुमैः शोभितानि प्रकल्पयेत् ॥
प्राकार[illegible] बहिर्देयात् पञ्चहस्तं प्रमाणतः ।
एवं [illegible] गृहं कुर्य्याद्वनैश्चोपवनैर्वनम् ॥
च [illegible] पदो वास्तुः प्रासादादौ सुपूजितः ।
[illegible] तुष्पदो ब्रह्मा द्विपदाश्चार्य्यमादयः ॥
[illegible] चैवाथ पञ्चाद्याश्चाथ देवाः प्रकीर्त्तिताः ।
[illegible] प्युभयतः बाह्ये अन्येऽपि द्विपदाः सुराः ॥
[illegible] षट्पदे देवा इत्येवं परिकीर्त्तिताः ।
[illegible] की च विदारी च पूतना पापराक्षसी ॥
[illegible] नामाख्या बाह्ये देवाद्या हेतुकादयः ।
[illegible] तुकस्त्रिपुरान्तश्च अग्निवेतालको यमः ॥
[illegible] अग्निजिह्वः कालकस्तु करालो ह्येकपादकः ।
ईशान्यां भीमरूपस्तु पाताले प्रेतनायकः ॥
आकाशे गन्धमाली स्यात् क्षेत्रपालांस्तथा
यजेत् ।
विस्ताराभिहतं दीर्घं राशिद्वारन्तु कारयेत् ॥
वसुभिर्भागमुद्धिश्च शेषाङ्कादायमादिशेत् ।
पुनर्गुणितमष्टाभिर्नक्षभागञ्च भाजयेत् ।
यच्छेषं तद्भवेद्दृश्यं भागेऽत्र व्ययं भवेत् ।
मरणं चतुर्गुणं कृत्वा नवभिर्भागहारितम् ॥
शेषमंशं विजानीयात् देवकस्य मतं यथा ।
अष्टाभिर्गुणितं पिण्डं षष्टिभिर्भागहारितम् ॥
यच्छेषन्तु भवेज्जीवं मरणं भूतहारितम् ।
वास्तुकोणे गृहं कुर्य्यात् न पृष्ठे मानवः सदा ॥
वामपार्श्वेन स्वपिति नात्र कार्य्या विचारणा ।
सिंहकन्यातुलायाञ्च द्वारं शुक्लेदयोत्तरम् ॥
यत्त्वं वृश्चिकादौ स्यात् पूर्व्वदक्षिणपश्चिमम् ।
द्वारं दीर्घार्द्धविस्तारं द्वाराग्रस्तौ स्तम्भानि च ॥
तुलाद्यप्रेक्षणीयन्तं सुयानं सुसमूहकम् ।
पुत्रहीनन्तु दोषैश्च वीर्य्यं दक्षिणे तथा ।
गृहोऽवस्थानायुर्वृद्धिः पुत्रलाभस्तथेष्टिदे ।
धनदं दृषपीड़ाश्वमर्थं रोगदं क्षये ॥
तृपभीतिर्व्वैतापत्या धनपत्यञ्च वैरिदम् ।
अर्थदं वाधवाव्येव दोषदं पुत्रलब्धुदम् ।
द्वाराद्युत्तरसंज्ञानि पूर्व्वद्वाराणि अष्ट्यदम् ।

अग्निभीतिर्भवेत्कन्या धनधान्यककोपदम् ।
राजद्वं कोपदं पूर्व्वे प्रशस्तो द्वारमीरितम् ।
ईशानाद्यो भवेत् पूर्व्वे आग्नेयाद्यो तु दक्षिणे ॥
नैर्ऋताद्यो पश्चिमे स्यात् वायव्याद्यो तु चोत्तरे ।
अष्टभागे कृते भागे द्वाराणाञ्च फलाफलम् ॥
चरस्थानस्थमोधाः पूर्व्वाद्यो स्यात्तु क्रमात् ।
गृहस्य शोभनः प्रोक्त ईशाने चैव शान्तिकः ॥
पूजितो विघ्नहारी स्यात् प्रासादस्य गृहस्य
च ।”

इत्यादि मात्स्ये वास्तुमानलक्षणं २५६ अध्यायः ॥
प्रासादलक्षणन्तु प्रासादशब्दे द्रष्टव्यम् ॥ * ॥
अपि च ।

ऋषय ऊचुः ।

“प्रासादभवनादीनां निवेशं विस्तरान्नृप ।
कुर्य्यात् केन विधानेन कश्च वास्तुरुदाहृतः ॥

सूत उवाच ।

भृगुरत्रिर्वशिष्ठश्च विश्वकर्म्मा मयस्तथा ।
नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः ॥
ब्रह्मा कुमारो नन्दीशः शौनको गर्ग एव च ।
वासुदेवोऽनिरुद्धश्च तथा शुक्रबृहस्पती ॥
अष्टादशैते विख्याता वास्तुशास्त्रोपदेशकाः ।
संक्षेपेणोपदिष्टं यन्मनवे मत्स्यरूपिणा ॥
तदिदानीं प्रवक्ष्यामि वास्तुशास्त्रमनुत्तमम् ।
पुरान्धकवधे घोरे घोररूपस्य शूलिनः ॥
ललाटस्वेदसलिलमपतद्भुवि भीषणम् ।
करालवदनं तस्मात् भूतमुद्भूतमुल्वणम् ॥
ग्रसमानमिवाकाशं सप्तद्वीपां वसुन्धराम् ।
ततोऽन्धकानां रुधिरमपिबत् पतितं क्षितौ ॥
तेन तत्समरे सर्व्वं पतितं यन्महीतले ।
तथापि तृप्तिमगमत्तद्भूतं न तदा यदा ॥
तदा शिवस्य पुरतस्तपश्चक्रे सुदारुणम् ।
क्षुधाविष्टस्तु तद्भूतमाहर्त्तुं जगतां त्रयम् ॥
ततः कालेन सन्तुष्टो भैरवस्तस्य चादरात् ।
वरं वृणीष्व भद्रं ते यदभीष्टं तवानघ ॥
तमुवाच ततो भूतं त्रैलोक्यग्रसनक्षमम् ।
भवामि देवदेवेश तथेत्युक्तश्च शूलिना ॥
ततस्तत् त्रिदिवं सर्व्वं भूमण्डलमथावृतः ।
स्वदेहेनान्तरीक्षञ्च सन्धानं प्रापतद्भुवि ॥
भीतभीतैस्ततो देवैर्ब्रह्मणा चाथ शूलिना ।
दानवासुररक्षोभिरवष्टब्धं समन्ततः ॥
येन यत्रैव चाक्रान्तं स तत्रैवाभवत् पुनः ।
निवासात् सर्व्वदेवानां वास्तुरित्यभिधीयते ॥
अवष्टब्धेन तेनापि विज्ञप्ताः सर्व्वदेवताः ।
प्रसीदध्वं सुराः सर्व्वे युष्माभिर्निश्चलीकृतः ॥
स्थास्यामि किं यदाधारमवाङ्मुखमधोमुखम् ।
ततो ब्रह्मादिभिः प्रोक्तं वास्तुमध्ये तु यो बलिः ॥
आहारो वैश्वदेवान्ते नूनमश्नन् भविष्यति ।
वास्तूपशमनो यज्ञस्तवाहारो भविष्यति ॥
एवमुक्तस्ततो हृष्टः स वास्तुरभवत्तदा ।
वास्तुयज्ञः स्मृतस्तस्मात् ततः प्रभृति शान्तये ॥”

इति मात्स्ये वास्तुभूतोद्भवो नाम २५२ अध्यायः ॥ * ॥

सूत उवाच ।

“अथातः संप्रवक्ष्यामि गृहकालविनिर्णयम् ।
यथाकाले शुभं ज्ञात्वा सदा भवनमारभेत् ॥
चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ।
वैशाखे धेनुरत्नानि ज्यैष्ठे मृत्युं तथैव च ॥
आषाढ़े भृत्यरत्नानि पशुवर्गमवाप्नुयात् ।
श्रावणे मित्रलाभन्तु हानिं भाद्रपदे तथा ॥
पत्नीनाशोऽश्वयुजे विन्द्यात् कार्त्तिके धन-
धान्यकम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतो भयम् ॥
लाभञ्च बहुशो विन्द्यादग्निं माघे विनिर्द्दिशेत् ।
फाल्गुने काञ्चनं पुत्रानिति कालबलं स्मृतम् ॥
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् ।
स्वाती हस्तानुराधा च गृहारम्भे प्रशस्यते ॥
आदित्यभौमवर्ज्यन्तु सर्व्वे वाराः शुभावहाः ।
वज्रव्याघातशूलेषु व्यतीपातातिगण्डयोः ॥
विष्कम्भगण्डपरिघवर्ज्जं योगेषु कारयेत् ।
श्वेते मैत्रेऽथ माहेन्द्रे गान्धर्व्वेऽभिजिद्रौहिणे ।
तथा वैराजसावित्रे मुहूर्त्ते गृहमारभेत् ॥
चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम् ।
स्तम्भोच्छ्रायादि कर्त्तव्यमन्यत्र परिवर्ज्जयेत् ॥
प्रासादेष्वेवमेव स्यात् कूपवापीषु चैव हि ।
पूर्व्वं भूमिं परीक्षेत पश्चाद्वास्तुं प्रकल्पयेत् ॥
श्वेता रक्ता तथा पीता कृष्णा चैवानुपूर्व्वशः ।
विप्रादेः शस्यते भूमिरतः कार्य्यं परीक्षणम् ॥
विप्राणां मधुरास्वादा कषाया क्षत्रियस्य च ।
कषायकटुका तद्वद्वैश्यशूद्रेषु शस्यते ॥
रत्निमात्रे तु वै गर्त्ते त्वनुलिप्ते तु सर्व्वतः ।
घृतमामशरावस्थं कृत्वा वर्त्तिचतुष्टयम् ।
ज्वालयेत् भूपरीक्षार्थं पूर्णं तत् सर्व्वदिङ्मुखम् ॥
दीप्तौ पूर्व्वादि गृह्णीयाद्वर्णानामनुपूर्व्वशः ।
वास्तुः साम्रूहिको नाम दीप्यते सर्व्वतस्तु यः ॥
शुभदः सर्व्ववर्णानां प्रासादेषु गृहेषु च ।
रत्निमात्रमधो गर्त्तं परीक्ष्य खातपूरणे ॥
अधिके श्रियमाप्नोति न्यूने हानिः समे समम् ।
फालकृष्टेऽथवा देशे सर्व्वबीजानि वापयेत् ॥
[illegible]सप्तरात्रेण यत्र रोहन्ति तान्यपि ।
[illegible]त्तमा कनिष्ठा भूर्वर्ज्जनीयतरा मता ॥
[illegible]ौषधिजलैः परीक्षित्वा च सेचयेत् ॥
ए[illegible]तिपदं कृत्वा रेखाभिः कनकेन तु ।
[illegible]पिष्टेन चालिप्य सूत्रेणालोड्य सर्व्वतः ॥
दश [illegible]यता रेखा दश चैवोत्तरायताः ।
सर्व्वा[illegible]सु विभागेषु विज्ञेया नवका नव ॥
एका[illegible]पदं कृत्वा वास्तुवित् सर्व्ववास्तुषु ।
पदस्था[illegible]येद्देवांस्त्रिंशत् पञ्चदशैव तु ॥
द्वात्रिं[illegible]तः पूज्याः पूज्याश्चान्तस्त्रयोदश ।
नामत[illegible]वक्ष्यामि स्थानानि च निबोधत ॥
ईशानक[illegible]तु तान् पूजयेद्धविषा नरः ।
शिखी चै[illegible]र्जन्यो जयन्तः कुलिशायुधः ॥
सूर्य्यसत्यौ भृशश्चैव आकाशो वायुरेव च ।
पूषा च वितथश्चैव गृहक्षतयमावुभौ ॥
गन्धर्व्वो भृङ्गराजश्च मृगः पितृगणस्तथा ।
दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः ॥
असुरः शोषपापौ च रोगोऽहिर्मुख्य एव च ।
भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा ।
बहिर्द्वात्रिंशदेते तु तदन्तश्चतुरः शृणु ॥
ईशानादिचतुष्कोणे संस्थितान् पूजयेद्बुधः ।
आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च ॥
मध्ये नवपदो ब्रह्मा तस्याष्टौ च समीपगान् ।
साध्या नैकान्तरान् विद्यात् पूर्व्वाद्यान् नामतः
शृणु ॥
अर्य्यमा सविता चैव विवस्वान् विबुधाधिपः ।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः स्मृतः ॥
अष्टमश्चापवत्सस्तु परितो ब्रह्मणः स्मृताः ।
आपश्चैवापवत्सश्च पर्ज्जन्योऽग्निर्दितिस्तथा ॥
पदिकानाञ्च वर्गोऽयमेवं कोणेष्वशेषतः ।
तन्मध्ये तु बहिर्विंशत् द्विपदास्ते तु सर्व्वशः ॥
अर्य्यमा च विवस्वांश्च मित्रः पृथ्वीधरस्तथा ।
ब्रह्मणः परितो दिक्षु त्रिपदास्ते तु सर्व्वशः ॥ * ॥
वंशानिदानीं वक्ष्यामि ऋजूनपि पृथक् पृथक् ।
वायुं यावत्तथा रोगात् पितृभ्यः शिखिनं पुनः ॥
मुख्याद्भृशमथो शेषात् वितथं यावदेव तु ।
सुग्रीवाददितिं यावत् मृगात् पर्ज्जन्यमेव च ॥
एते वंशाः समाख्याताः क्वचिद्दुर्जय एव च ।
एतेषां यस्तु सम्पातः पदं मध्यं समन्ततः ॥
मर्म्म चैतत् समाख्यातं त्रिशूलं कोणगञ्च यत् ।
स्तम्भन्यासे तु वर्ज्यानि तुलाविधिषु सर्व्वदा ॥
कीलोच्छिष्टोपघातानि वर्ज्जयेद्यत्नतो नरः ।
सर्व्वत्र वास्तुर्निर्द्दिष्टः पितृवैश्वानरायतः ॥
मूर्द्धन्यग्निः समादिष्टो मुखे चापः समाश्रितः ।
पृथ्वीधरोऽर्य्यमा चैव स्तनयोस्तावधिष्ठितौ ॥
वक्षःस्थले चापवत्सः पूजनीयः सदा बुधैः ।
नेत्रयोर्दितिपर्ज्जन्यौ श्रोत्रेऽदितिजयन्तकौ ॥
सर्पेन्द्रौ वंशसंस्थौ च पूजनीयौ प्रयत्नतः ।
सूर्य्यरोगादयस्तद्वद्बाह्वोः पञ्च च पञ्च च ॥
रुद्रश्च राजयक्ष्मा च वामहस्ते समाश्रितौ ।
सावित्रः सविता तद्वद्दक्षिणं हस्तमाश्रितौ ॥
विवस्वानथ मित्रश्च जठरे संव्यवस्थितौ ।
पूषा च पापयक्ष्मा च हस्तयोर्मणिबन्धने ॥
तथैवासुरशोषौ च वामपार्श्वे समाश्रितौ ।
पार्श्वे तु दक्षिणे तद्वद्वितथः सगृहक्षतः ॥
ऊर्व्वोर्यमाम्बुपौ ज्ञेयौ जान्वोर्गन्धर्व्वपुष्पकौ ।
जङ्घयोर्भृङ्गसुग्रीवौ स्फिक्स्थौ दौवारिको मृगः ॥
जयशक्रौ तथा मेढ़्रे पादयोः पितरस्तथा ।
मध्ये नवपदो ब्रह्मा हृदये स तु पूज्यते ॥
चतुःषष्टिपदो वास्तुः प्रासादे ब्रह्मणा स्मृतः ।
ब्रह्मा चतुष्पदस्तत्र कोणेष्वर्द्धपदास्ततः ॥
बहिष्कोणे तु चाष्टौ तु तद्वच्चोभयसंस्थिताः ।
विंशतिर्द्विपदाश्चैषां चतुःषष्टिपदे स्मृताः ॥ * ॥
गृहारम्भे तु कण्डूतिः स्वाम्यङ्गे यत्र जायते ।
शल्यन्त्वपनयेत्तत्र प्रासादे भवनेऽपि वा ॥
सशल्यं भयदं तस्मादशल्यं शुभदायकम् ।
हीनाधिकाङ्गभावन्तु सर्व्वथा तु विवर्ज्जयेत् ॥
नगरग्रामदेशेषु सर्व्वत्रैवं प्रकल्पयेत् ।

चतुःशालं त्रिशालञ्च द्विशालञ्चैकशालकम् ।
नामतस्तानि वक्ष्यामि स्वरूपेण द्विजोत्तमाः ॥”
इति मात्स्ये एकाशीतिपदवास्तुनिर्णयो नाम
२२७ अध्यायः ॥ * ॥

सूत उवाच ।

“चतुःशालं प्रवक्ष्यामि स्वरूपान्नामलक्षणात् ।
चतुःशालं चतुर्द्वारैरलिन्दैः सर्व्वतोमुखम् ॥
नाम्ना तत् सर्व्वतोभद्रं शुभं देवनृपालये ।
पश्चिमद्वारहीनन्तु नन्द्यावर्त्तं प्रचक्षते ॥
दक्षिणद्वारहीनं तद्वर्द्धमानमुदाहृतम् ।
पूर्व्वद्वारविहीनन्तत् स्वस्तिकं नाम विश्रुतम् ॥
रुचकं चोत्तरद्वारविहीनं तत्प्रचक्षते ।
सौम्यशालाविहीनन्तु त्रिशालं धान्यकञ्च तत् ॥
क्षेमवृद्धिकरं नृणां बहुपुत्रफलप्रदम् ।
शालया पूर्व्वया हीनं सुक्षेत्रमिति विश्रुतम् ॥
धन्यं यशस्यमायुष्यं शोकमोहविनाशनम् ।
चुल्ली तु याम्यया हीनं त्रिशालं शालया तु यत् ॥
कुलक्षयकरं नृणां सर्व्वव्याधिभयावहम् ।
हीनं पश्चिमया यत् पक्षघ्नं नाम तत् पुनः ॥
मित्रबन्धुसुतान् हन्ति तथा सर्व्वभयावहम् ।
याम्यापराभ्यां शालाभ्यां धनधान्यफलप्रदम् ॥
क्षेमवृद्धिकरं नृणां तथा पुत्रफलप्रदम् ।
यमं सूर्य्यञ्च विज्ञेयं पश्चिमोत्तरशालकम् ॥
राजाग्निभयदं नृणां कुलक्षयकरञ्च तत् ।
उदक्पूर्व्वे तु शाले द्वे दण्डाख्ये यत्र तद्भवेत् ॥
अकालमृत्युभयदं परचक्रभयावहम् ।
धनाख्यं याम्यपूर्व्वाभ्यां शालाभ्यां यद्द्विशालकम् ॥
तच्छस्त्रभयदं नृणां पराभवभयावहम् ।
चुल्ली पूर्व्वापराभ्यान्तु सा भवेत् मृत्युसूचनी ॥
वैधव्यञ्च स्त्रियाणामनेकभयकारकम् ।
काचमुत्तरयाम्याभ्यां शालाभ्यां भयदं नृणाम् ॥
सिद्धार्थवर्ज्यं वर्ज्यानि द्विशालानि सदा बुधैः ॥ * ॥
अथातः संप्रवक्ष्यामि भवनं पृथिवीपतेः ।
पञ्चप्रकारं तत् प्रोक्तमुत्तमादिविभेदतः ॥
अष्टोत्तरं हस्तशतं विस्तारश्चोत्तमो मतः ।
चतुर्ष्वन्येषु विस्तारो हीयते चाष्टभिः करैः ॥
चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ।
युवराजस्य वक्ष्यामि तथा भवनपञ्चकम् ॥
षड्भिः षड्भिस्तथाशीतिर्हीयते तत्र विस्तरात् ।
त्र्यंशेन चाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ॥ * ॥
सेनापतेः प्रवक्ष्यामि तदा भवनपञ्चकम् ।
चतुःषष्टिस्तु विस्तारात् षड्भिः षड्भिस्तु हीयते ।
पञ्चस्वेतेषु दैर्घ्यञ्च षड्भागेनाधिकं भवेत् ॥ * ॥
मन्त्रिणामथ वक्ष्यामि तथा भवनपञ्चकम् ॥
चतुश्चतुर्भिर्हीना स्यात् करषष्टिः प्रविस्तरे ।
अष्टांशेनाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ॥ * ॥
सामन्तामात्यलोकानां वक्ष्ये भवनपञ्चकम् ।
चत्वारिंशत्तथाष्टौ च चतुर्भिर्हीयते क्रमात् ॥
चतुर्थांशा[],कं दैर्घ्यं पञ्चस्वेतेषु शस्यते । * ।
शिल्पिनां कञ्चुकीनाञ्च वेश्यानां गृहपञ्चकम् ।
अष्टाविंशत् कराणान्तु द्विहीनं विस्तरेण तत् ।
द्विगुणं दैर्घ्यमेवोक्तं मध्यमेष्वेवमेव तु ॥ * ॥
दूतकर्म्मान्तिकादीनां वक्ष्ये भवनपञ्चकम् ।
चतुर्थांशाधिकं दैर्घ्यं विस्तारो द्वादशैव तु ॥
अर्द्धार्द्धकरहानिः स्यात् विस्तारात् पञ्चसु
क्रमात् । * ।
दैवज्ञगुरुवैद्यानां सभास्तारपुरोधसाम् ॥
तेषामपि प्रवक्ष्यामि तदा भवनपञ्चकम् ।
चत्वारिंशच्च विस्ताराच्चतुर्भिर्हीयते क्रमात् ॥
पञ्चस्वेतेषु दैर्घ्यञ्च षड्भागेनाधिकं भवेत् ।*।
चतुर्व्वर्णस्य वक्ष्यामि सामान्यं गृहपञ्चकम् ।
द्वात्रिंशकं कराणान्तु चतुर्भिर्हीयते क्रमात् ।
आषोडशादिति परं नूनमन्त्यावसायिनाम् ॥
दशांशेनाष्टभागेन त्रिभागेणाथ पादिकम् ।
अधिकं दैर्घ्यमित्याहुर्ब्राह्मणादेः प्रशस्यते ॥
सेनापतेर्नृपस्यापि गृहस्यैवोत्तरेण तु ।
नृपवासगृहं कार्य्यं भाण्डागारन्तथैव च ॥
सेनापतेर्गृहस्यापि चातुर्व्वर्ण्यस्य चान्तरम् ।
वासकोषगृहं कार्य्यं राजपूज्येषु सर्व्वदा ॥
अन्तरप्रभवाणाञ्च स्वपितुर्द्दर्मिष्यते ।
तथा हस्तशतादर्व्वाक् गदितं वनवासिनाम् ॥
सेनापतेर्नृपस्यापि सप्तत्या सहितेऽन्विते ।
चतुर्द्दशहृते व्यासे शालाव्यासः प्रकीर्त्तितः ॥
पञ्चत्रिंशहृते तस्मिन् अलिन्दः समुदाहृतः ।
तथा षट्त्रिंशहस्तात्तु सप्ताङ्गुलसमन्वितः ॥
विप्रस्य महती शाला न दैर्घ्यं परतो भवेत् ।
दशाङ्गुलाधिका तद्वत् क्षत्रियस्य विधीयते ॥
पञ्चत्रिंशत् करा वैश्ये अङ्गुलानि त्रयोदश ।
तावत्करैस्तु शूद्रस्य युता पञ्चदशाङ्गुलैः ॥
शालायास्तु त्रिभागेण यस्याग्रे वीथिका भवेत् ।
सोष्णीषं नाम तद्वास्तु पश्चाच्छ्रायोच्छ्रयम्भवेत् ॥
पार्श्वयोर्वीथिका यत्र सावष्टम्भन्तदुच्यते ।
समन्ताद्वीथिका यत्र सुस्थितं तदिहोच्यते ॥
शुभदं सर्व्वमेतत् स्यात् चातुर्व्वर्ण्ये चतुर्व्विधम् ।
विस्तरात् षोडशो भागस्तथा हस्तचतुष्टयम् ।
प्रथमो भूमिकोच्छ्राय उपरिष्टात् प्रही[] ।
द्वादशांशेन सर्व्वासु भूमिकासु तथो[] ॥
पक्वेष्टके भवेद्भित्तिः षोड़शांशेन विस्[] ।
दारवैश्च विकल्पः स्यात् तथा मृन्[] [] वे ।
गर्भमानेन मानन्तु सर्व्ववास्तुषु श[] ।
गृहव्यासस्य पञ्चाशदष्टादशभिर[] ।
संयुतो द्वारविष्कम्भो द्विगुणश्[] [] वेत् ।
द्वारशाखासु बाहुल्यमुच्छ्रायं [] [] रैः ।
अङ्गुलैः सर्व्ववास्तूनां पृथुत्वं [] [] रैः ।
उदुम्बरोत्तराङ्गे च तदर्द्धा [] [] ॥”
इति मात्स्ये वास्तुविद्य[] [] नानिर्णयो
नाम २२८ अध्यायः ॥ [] ॥

सूत उव[]

“अथातः संप्रवक्ष्यामि [] [] वविनिर्णयम् ।
कृत्वा स्वभवनोच्छ्रायं तदा सप्तगुणं बुधः ।
अशीतिभिर्हृतं पृथुत्वं स्याद्दशे नवगुणैः सह ।
रुचकश्चतुरस्रः स्यादष्टाश्रो वज्र उच्यते ।
द्विवज्रः षोडशास्रस्तु द्वात्रिंशः प्रलीनकः ।
मध्यप्रदेशे यः स्तम्भो वृत्तो वृत्त इति स्मृतः ॥
एते पञ्च महास्तम्भाः प्रशस्ताः सर्व्ववास्तुषु ।
पद्मवल्लीलता कार्य्या पञ्चदर्भेन कल्पिता ॥
स्तम्भस्य नवमांशेन पद्मकुम्भोत्तराणि च ।
स्तम्भतुल्या तुला प्रोक्ता हीनाश्चोपतुलास्ततः ॥
त्रिभागेनेह सर्व्वत्र चतुर्भागेन वा पुनः ।
हीनं हीनञ्चतुर्थांशात्तथा सर्व्वासु भूमिषु ॥
वासगेहानि सर्व्वेषां प्रवेशे दक्षिणेन तु । * ।
द्वाराणि तु प्रवक्ष्यामि प्रशस्तानीह तानि तु ॥
पूर्व्वेणेन्द्रं जयन्तञ्च द्वारं सर्व्वत्र शस्यते ।
याम्यञ्च वितथञ्चैव दक्षिणेन विदुर्बुधाः ॥
पश्चिमे पुष्पदन्तञ्च वारुणञ्च प्रशस्यते ।
उत्तरेण तु भल्लाटं सौम्यञ्च शुभदं भवेत् ॥
तथा वास्तुषु सर्व्वत्र वेधं द्वारस्य वर्ज्जयेत् ।
द्वारे तु रथ्यया विद्धे भवेत् सर्व्वकुलक्षयः ॥
तरुणा दोषबाहुल्यं शोकः पङ्केन जायते ।
अपस्मारी भवेन्नूनं कूपवेधेन सर्व्वदा ॥
व्यथा प्रस्रवणेन स्यात् कीलेनाग्निभयम्भवेत् ।
विनाशो देवताविद्धे स्तम्भेन स्त्रीकृतो भवेत् ॥
गृहभर्त्तुर्व्विनाशः स्यात् गृहेण च गृहे कृते ।
अमेध्यावस्करैर्व्विद्धे गृहिणीबन्धनम्भवेत् ॥
तथा शस्त्रभयं विद्यादन्त्यजस्य गृहेण तु ।
उच्छ्रायद्विगुणां भूमिं त्यक्त्वा वेधो न विद्यते ॥
स्वयमुद्घाटिते द्वारे उन्मादो गृहमेधिनाम् ।
स्वयञ्च पिहिते विन्द्यात् कुलनाशं विचक्षणः ॥
मानाधिके राजभयं नीचे तस्करतो भयम् ।
द्वारोपरि च यद्द्वारं तदन्तकमुखं स्मृतम् ॥
अध्वानं मध्यदेशे तु अधिको यस्य विस्तरः ।
वज्रन्तु सङ्कटं मध्ये सद्यो भर्त्तृविनाशनम् ॥
तथान्यपीड़ितद्वारं बहुदोषकरम्भवेत् ।
मूलद्वारं तथान्यन्तु नाधिकं शोभनम्भवेत् ॥
कुम्भश्रीपर्णिवल्लीभिर्मूलद्वारन्तु शोभयेत् ।
पूजयेच्चापि तन्नित्यं बलिना चाक्षतोदकैः ॥ * ॥
भवनस्य वटः पूर्व्वे दिग्भागे सर्व्वकामिकः ।
उडुम्बरस्तथा याम्ये वारुणे पिप्पलः शुभः ॥
प्लक्षश्चोत्तरतो धन्यो विपरीतस्त्वसिद्धये ।
कण्टकी क्षीरवृक्षश्च आसन्नः सफलो द्रुमः ॥
भयं हानिं प्रजाहानिं कुर्व्वन्ति क्रमशः सदा ।
न च्छिन्द्याद्यदि तानन्यानन्तरे स्थापयेत्
शुभान् ।
पुन्नागाशोकबकुलशमीतिलकचम्पकान् ।
दाड़िमी पिप्पली द्राक्षा तथा कुसुममण्डपम् ।

जम्बीरपूगपनसद्रुमकेतकीभि-
र्जातीसरोजशतपत्रिकमल्लिकाभिः ।
यन्नारिकेलकदलीदलपाटलाभि-
र्युक्तं तदत्र भवनं श्रियमातनोति ॥”

इति मात्स्ये वास्तुविद्यासु वेधपरिवर्ज्जनो नाम
२२९ अध्यायः ॥ * ॥

सूत उवाच ।

“उदगादिप्लवं वास्तु समानशिरसन्तथा ।
परीक्ष्य पूर्व्ववत् कुर्य्यात् स्तम्भोच्छ्रायं विचक्षणः ॥

मधूनेव विषचक्रराणां समीपतः ।
कारयेद्भवनं प्राज्ञो दुःखशोकभयं यतः ॥
तस्य प्रवेशकालात्तु स्तोत्रशोऽयतः शुभः ।
पृष्ठतः पृष्ठभङ्गस्तु यथावर्त्तः प्रशस्यते ॥
अपसव्ये विनाशाय दक्षिणे शीर्षकस्तथा ।
सर्व्वकामफलो नृणां संपूर्णो नाम वामतः ॥
एवं प्रदेशमालोक्य यत्नेन गृहमारभेत् । * ।
अथ संवत्सरे पूर्णे सुमुहूर्त्ते शुभक्षणे ॥
रत्नोपरि शिलां कृत्वा सर्व्वबीजसमन्विताम् ।
चतुर्भिर्ब्राह्मणैस्तम्भं यथालङ्कारपूजितम् ॥
शुक्लाम्बरधरः शिल्पी सहितो वेदपारगैः ।
स्थापितं विन्यसेत् तत्र सर्व्वौषधिसमन्वितम् ॥
नानाक्षतफलोपेतं वस्त्रालङ्कारसंयुतम् ।
ब्रह्मघोषेण वाद्येन गीतमङ्गलनिःस्वनैः ॥
पायसं भोजयेद्विप्रान् होमस्तु मधुसर्पिषा ।
वास्तोष्पते प्रतिजानीहि मन्त्रेणानेन सर्व्वदा ॥
सूत्रपाते तथा कार्य्यमेवं स्तम्भोदये पुनः ।
द्वारवंशोच्छ्रये तद्वत् प्रवेशसमये तथा ॥
वास्तूपशमने तद्वत् वास्तुयज्ञस्तु पञ्चधा ।
ईशाने सूत्रपातः स्यादाग्नेये स्तम्भरोपणम् ॥
प्रदक्षिणञ्च कुर्व्वीत वास्तोः पदविलेखनम् ।
तर्ज्जनी मध्यमा चैव तथाङ्गुष्ठस्तु दक्षिणे ॥
प्रवालरत्नकनकं फलपिष्टजलोदकम् ।
सर्व्ववास्तुविभागेषु शस्यन्तु विलेखने ॥
न भस्माङ्गारकाष्ठेन न शस्त्रनखचर्म्मभिः ।
न च शृङ्गकपालेन क्वचिद्वास्तु प्रलेखयेत् ॥
एभिर्विलेखितं कुर्य्यात् दुःखशोकामयादिकम् ।
यदा गृहप्रवेशः स्याच्छिल्पी तत्रोपलेखयेत् ॥
स्तम्भकुम्भादिके तत्र शुभाशुभफलोदयम् । * ।
आदित्याभिमुखं रौति शकुनः परुषं यदि ॥
तुल्यकालं स्पृशेदङ्गं गृहभर्त्तुः समालभः ।
वाच्याङ्गे तद्विजानीयात्तत्रशल्यं भयप्रदम् ॥
शकुनान्तरं तत्र शल्यञ्चापदम्भवेत् ।
तद्धस्तमानं विज्ञाय च शल्यं विचक्षणः ॥
प्रसार्य्यमाणे सूत्रे तु श्वगोमायुविलङ्घिते ।
तत्र शल्यं विजानीयात् खरशब्दे च भैरवे ॥
यदीशान्येऽथ दिग्भागे मधुरं रौति वायसः ।
धनन्तत्र विजानीयादङ्के वा स्वाम्यधिष्ठिते ॥
सूत्रच्छेदे भवेन्मृत्युर्व्याधिः कीले त्वधोमुखे ।
अङ्गारेषु तथोन्मादं कपालेषु च सम्भ्रमम् ।
कम्बुशल्ये च जानीयात् पुंश्चल्यं स्त्रीषु वास्तुवित् ।
गृहभर्त्तुर्गृहस्यापि विनाशः शिल्पिसम्भ्रमे ॥
स्तम्भस्थाने च्युते कुम्भे शिरोरोगं विनिर्द्दिशेत् ।
कुम्भापहारे सर्व्वस्य कुलस्यापि क्षयो भवेत् ॥
मृत्युं स्थानच्युते कुम्भे भग्ने बन्धं विदुर्ब्बुधाः ।
करसंख्याविनाशे तु नाशं गृहपतेर्व्विदुः ॥
बीजौषधिविहीने तु भूतेभ्यो भयमादिशेत् ।
प्रागदक्षिणेन विन्यस्य स्तम्भं छत्रं निवेशयेत् ॥
ततः प्रदक्षिणेनान्यान्न्यसेत् स्तम्भं विचक्षणः ।
यस्माद्भयकरं नृणां योजिताप्रदक्षिणम् ॥
रक्षां कुर्व्वीत यत्नेन स्तम्भोपद्रवनाशिनीम् ।
तथा फलवतीं शाखां स्तम्भोपरि निवेशयेत् ॥

प्रागुदक्प्रवणं कार्य्यं द्विमुखन्तु न कारयेत् ।
स्तम्भं वा भवनं वापि द्वारं वा सद्गृहन्तथा ॥
दिङ्मूढे कुलनाशः स्यात् न च संवर्द्धयेद्गृहम् ।
यदि संवर्द्धयेद्गेहं सर्व्वदिक्षु विवर्द्धयेत् ॥
पूर्व्वेण वर्द्धितं वास्तु कुर्य्याद्वैराणि वै सदा ।
दक्षिणे वर्द्धितं वास्तु मृत्यवे स्यान्न संशयः ॥
पश्चाद्वर्द्धितन्तु यद्वास्तु तदर्थक्षयकारकम् ।
वर्द्धापितं तथा सौम्ये बहुसन्तापकारकम् ॥
आग्नेये यत्र वृद्धिः स्यात् तदग्निभयदम्भवेत् ।
वर्द्धितं राक्षसे कोणे शिशुक्षयकरं भवेत् ॥
वर्द्धापितन्तु वायव्ये वातव्याधिप्रकोपकृत् ।
ईशाने तु प्रकाशानिर्व्वाणौ सम्बर्द्धिते सदा ॥*॥
ईशाने देवतागारं तथा शान्तिगृहं भवेत् ।
महानसं तथाग्नेये तत्पार्श्वे चोत्तरं जलम् ॥
गृहस्योपस्करं सर्व्वं नैर्ऋते स्थापयेद्बुधः ।
बन्धस्थानं बहिःकुर्य्यात् स्नानमण्डपमेव च ॥
धनधान्यञ्च वायव्ये कर्म्मशाला ततो बहिः ।
एवं वास्तुनिवेशः स्यात् गृहभर्त्तुः शुभावहः ॥”
इति मात्स्ये वास्तुविद्यागृहनिर्णयो नाम २३० अध्यायः ॥ * ॥

सूत उवाच ।

“अथातः संप्रवक्ष्यामि दार्व्वाहरणमुत्तमम् ।
धनिष्ठापञ्चकं त्यक्त्वा विष्टादिकमतः परम् ॥
ततः स्वाम्भसरोहिण्ये दिने यायाद्वनं बुध. ।
प्रथमं बलिपूजान्तु कुर्य्यात् वृक्षाय सर्व्वदा ॥
पूर्व्वोत्तरेण पतितं गृहे दारु प्रशस्यते ।
अन्यथा न शुभं विद्याद्याम्यापरनिपातने ॥
क्षीरवृक्षोद्भवं दारु न गृहे विनिवेशयेत् ।
लताधिवासं विहगैरनिलानलपीडितम् ॥
गजावभग्नञ्च तथा विद्युन्निर्घातपीडितम् ।
अर्द्धशुष्कं तथा दारु भग्नशुष्कं तथैव च ॥
चैत्यदेवालयोत्पन्नं नदीसङ्गमजन्तथा ।
श्मशानकूपनिलयं तडागादिसमुद्भवम् ॥
वर्ज्जयेत् सर्व्वथा दारु यदीच्छेद्विपुलां श्रियम् ।
तथा कण्टकिनो वृक्षान्नीपनिम्बविभीतकान् ॥
श्लेष्मातकान् दलतरून् वर्ज्जयेत् गृहकर्म्मणि ।
असनं शाकमधुकसर्ज्जशालाः शुभावहाः ॥
चन्दनं पनसं धन्यं सुरदारु हरिद्रका ।
द्वाभ्यामेकेन वा कुर्य्यात् त्रिभिर्व्वा भवनं शुभम् ॥
बहुभिः कारितं यस्मादनेकभयदं भवेत् ।
एकैकं शिंशपा धन्या श्रीपर्णी तिन्दुकी तथा ॥
एता नान्यसमायुक्ता कदाचिच्छुभकारिकाः ।
स्यन्दनः पनसस्तद्वत् सरलार्ज्जुनपद्मकाः ॥
एते नान्यसमायुक्ता वास्तुकार्य्ये शुभप्रदाः ।
तरुच्छेदे महापीते गोधां विद्याद्विचक्षणः ॥
माञ्जिष्ठवर्णे भेकः स्यात् नीले सर्पं विनिर्द्दिशेत् ।
अरुणे सरटं विद्यात् मुक्ताभे शुकमादिशेत् ॥
कपिले मूषिकां विद्यात् खड्गाभे जलमादिशेत् ।
एवंविधं सगर्भन्तु वर्ज्जयेद्वास्तुकर्म्मणि ॥
पूर्व्वं छिन्नन्तु गृह्णीयात् निमित्तं शकुनैः शुभैः ।*।
याशीन गुर्व्विणी दैवं अष्टभिर्व्वै कृते तथा ॥
यच्चैवमायतं विद्यादष्टभेदं वदामि वः ।

ध्वजो धूमश्च सिंहश्च श्वा वृषः खर एव च ॥
हस्ती ध्वाङ्क्षश्च पूर्व्वाद्याः करिशेषा भवन्त्यमी ।
ध्वजः सर्व्वमुखो धन्यः प्रत्यग्द्वारो विशेषतः ॥
उदङ्मुखो भवेत् सिंहः प्राङ्मुखो वृषभो भवेत् ।
दक्षिणाभिमुखो हस्ती सप्तभिः स उदाहृतः ॥
एकेन ध्वज उद्दिष्टस्त्रिभिः सिंह उदाहृतः ।
पञ्चभिर्वृषभः प्रोक्तो विकोणास्थांस्तु वर्ज्जयेत् ॥
तमेवाष्टगुणं कृत्वा विद्यान्नाशिं विचक्षणः ।
सप्तविंशद्धृते भागे ऋक्षं विद्याद्विचक्षणः ॥
अष्टभिर्भाजिते ऋक्षे यच्छेषं स व्ययो मतः ।
व्ययाधिकं न कुर्व्वीत यतो दोषकरम्भवेत् ।
आयाधिके भवेच्छान्तिरित्याह भगवान् हरिः ॥

कृत्वाग्रतो द्विजवरानथ पूर्णकुम्भं
दध्यक्षताम्रदलपुष्पफलोपशोभम् ।
दत्त्वा हिरण्यवसनानि तथा द्विजेभ्यो
माङ्गल्यशान्तिनिलयाय गृहं विशेच्च ॥
गृह्योक्तहोमविधिना बलिकर्म्म कुर्य्यात्
प्रासादवास्तुशमने च विधिर्य उक्तः ।
सन्तर्पयेत् द्विजवरानथ भक्ष्यभोज्यैः
शुक्लाम्बरश्च भवनं प्रविशेत् सधूमम् ॥”

इति मात्स्ये वास्तुविद्यानुकीर्त्तनं समाप्तम् २३१ अध्यायः ॥ * ॥ अन्यच्च । अथ वास्तुयुक्तिः ।
तत्र स्थाननिर्णयः ।
“नदीसङ्गमशैलानां वनस्य निकटे तथा ।
न वास्तुकर्म्म कुर्व्वीत न हन्त-नगरालयोः ॥”*॥
तत्र दिङ्निर्णयः ।
“राक्षसानिलवह्नीनां यमस्य दिशि वेश्मनः ।
नारम्भं कारयेद्राजा भोगदाहक्षयप्रदम् ॥”
तथा हि ।
“भोगः कीर्त्तिर्धनं रोगः स्थिरता च भयः क्षयः ।
दाह इत्येव कथितो दिशि वास्तुफलोद्भवः ॥”
भोजे च ।
“यद्भमे जायते राजा तस्य लग्नस्य यः पतिः ।
या दिक् तस्य नृपस्तस्यां वास्त्वारम्भं समाचरेत् ॥”
एतच्च ।
“कुजाधिपतिके मेषलग्ने जातस्य भूपतेः ॥”
कुजाधिपतिकायां दक्षिणस्यामपि वास्तुनं दुष्यतीति । परापरस्तु । *
“यद्राशिजनितो राजा वास्तुस्तम्भस्तु तद्दिशि ॥”
एतेन सूर्य्यादिजनितस्य नृपतेः पूर्व्वादिदिक्षु वास्तुकरणम् । तेन शुक्रदशायां जातस्याग्नेय्यामपि न दुष्यति ॥ * ॥ अथ लक्षणम् ।
“वास्तु कुर्य्यान्महीपालः समं सुस्निग्धमृत्तिकम् ।
प्रागुदक्प्रवणं रम्यं रम्यवृक्षोपशोभितम् ॥
सम्मोहाहः क्षयो भीतिर्भ्रमनाशोऽप्यमूल्यता ।
सम्पद्दृष्टिर्हितिरिति प्रोक्तं पूर्व्वादिककुभां फलम् ॥”
तथा च प्रवचनमन्यत् ।
“जन्मलग्नेन दिक् पश्चात् राज्ञां वास्तुप्रशोभनः ॥”
एतेन सूर्य्याधिपतितुलालग्ने जातस्य नृपतेः सूर्य्याधिपतेः पूर्व्वस्याः पश्चात् पश्चिमस्यामपि न दुष्यति । अन्ये तु ।

"यद्ग्रामजनितो राजा तद्ग्रामोऽप्रियो मतः ॥"
एतेन गृहदग्रामजातस्य नृपतेर्हस्तिनक्षत्रवोऽपि न दुष्यति । अन्यत्र तु ।
"ब्रह्मक्षत्रियविट्शूद्राः पूर्व्वादिदिग्युगे क्रमात् ।
वास्तुभवनमिच्छन्ति निजसम्पत्तिवृद्धये ॥"
नीतिशास्त्रे च ।
"वास्तुकर्म्म नृपः कुर्य्याद्बलवद्वैरिणो दिशि ।
दीर्घा वा चतुरस्रा वा वास्तुभूमिर्म्महीक्षिताम् ।
एतयोर्मध्यगां वहत् पत्तनं नगरे यथा ॥"* ॥
अथ मानम् ।
"राजकाण्डेन नृपतिर्वास्त्वारम्भं समाचरेत् ।
जयो भङ्गः सुखं दुःखं प्रीतिर्भीतिश्च यः स्थिरः ।
इत्यष्टौ वास्तुनामानि राजकाण्डैरनुक्रमात् ॥"
अन्यच्च तु ।
"जयभङ्गे महीभर्त्तुर्द्वयोरन्त एव हि ।
राजकाण्डैस्तु तावद्भिर्वास्तु कुर्य्यान्महीपतिः ॥
सुदर्शाच्छन्दसंख्येन राजदण्डेन भूपतेः ।
वास्तुकर्म्मसमारम्भो धनधान्यजयप्रदः ॥"
एतयोरपि पूर्व्ववद्व्याख्यानम् ।
"राजदण्डेन कुत्रापि वास्तुपत्तनमिष्यते ।
तत्रापि पूर्व्ववन्मानमिति भागुरिभाषितम् ॥"
अथ दोषगुणौ ।
"परनिर्म्मितवास्तुस्थो न तिष्ठति चिरं नृपः ।
न सुखाय न धर्म्माय तत्तस्य भुवि जायते ॥"
अन्यत्रापि ।
"राजान्यवीर्य्यप्रख्यापी परवास्तुकृतस्थितिः ।
न सुखाय भवेन्नूनं यथा परगृहे गृहः ॥
यः स्वनिर्म्मितवास्तुस्थो निजजन्मादिसंयुतः ।
विचारितपुरो राजा स चिरं सुखमश्नुते ॥"
अन्यत्रापि ।
"राजा स्वबाहुवीर्य्याढ्यो निजनिर्म्मितवास्तु-
भाक् ।
स चिरं तनुते सौख्यं स्वगृहस्थो महो यथा ॥"
अथ कालः ।
"वर्षान्तेऽभ्युदिते शुक्रे केन्द्रे सुरगुरौ शुभे ।
वास्तुकर्म्मसमारम्भं शुक्लचन्द्रार्कभूमिजे ॥
ग्रहयुक्तो यः समयः कर्त्तव्यस्तत्र वै शुभे ।
वास्त्वारम्भः कार्य्यः शुभसम्पत्तिकामिना
राज्ञा ॥"
इति वास्तुयुक्तौ वास्तूद्देशः ॥ * ॥
अन्येषां यथा । यदाह वास्तुकल्याम् ।
"स्वामिहस्तैश्चतुर्भिः स्याद्दण्डस्तेनैव मापयेत् ।
धर्म्मो भयङ्करो भद्रः शोकस्तद्विजयः शुचिः ॥
वंशकृत् पापकारी च विकारी शोभनः शिवः ।
कृपणः कामदो धूम्रो धौम्यो धनहरस्तथा ॥
धनदः सुखकृच्चेति वास्तवोऽष्टादश कीर्त्तिताः ॥"
तद्यथा ।
"आयामपरिणाहाभ्यां योऽङ्कपिण्डोऽभिजायते ।
ऊनविंशतिकृते भागे शेषैरेता यथाक्रमम् ॥
धर्म्मे सर्व्वार्थसंसिद्धिर्भयकारी भयङ्करः ।
भद्रो भोगं प्रकुरुते शोकदस्त्वनुनाशनः ॥
विजयः कुरुते वृद्धिं शुचिः सर्व्वसुखं वहेत् ।

वास्तु

वंशकृत् कुरुते वंशं पापकारी कुलापहः ॥
विकारी कुरुते दुःखं शोभनः शुभमाचरेत् ।
शिवः सर्व्वार्थसिद्धिः स्यात् कृपणः सर्व्वनाशनः ॥
कामदोऽभीष्टलाभः स्यात् धूम्रो दहति सर्व्वशः ।
धौम्ये धर्म्ममतिः सौख्यं दुःखं धनहरे भवेत् ॥
धनदे धनलाभः स्यात् सुखकृत् सुखकारकः ।
इति प्रोक्तोऽतिसंक्षेपाद्वास्तुलक्षणसंग्रहः ॥"
भोजस्तु । दण्डमानं तथैव किन्तु युक्तिरन्या ।

करद्वयाद्यतो द्विगुणैः करैः शुभाव-
हश्चतुरस्र एव नववास्तु शिष्यते ।
किन्तु लम्बदण्डमितदण्डसम्मितः
प्रकरोति वास्तुरतिसौख्यसम्पदम् ॥

ऊषरा वालुका छिन्ना चयमेतद्विनिन्दितम् ।
त्रिकोणो वर्त्तुलो दीर्घो यवमध्योऽहरन्तुकः ॥
तथा डमरुरूपश्च सर्पाकारस्तथैव च ।
छिन्नो भिन्नो मध्यनिम्नो गजनाभश्चतुष्पथः ॥
त्रिपथो जनदोषी च दृष्टदोषी तथा परः ।
गजशुण्डाकृतिश्चैवोपप्लवाः परिकीर्त्तिताः ॥
वास्तुखण्डे महादोषा वैयासखादिपण्डितैः ।
चतुरस्रः शुभो दीर्घस्तुल्यः प्राप्तः समाश्रितः ।
दोषैर्विहीनो विज्ञेयो वास्तुखण्डः सुखावहः ॥"
इति युक्तिकल्पतरौ वास्तुयुक्तिः ॥ * ॥
तत्र कालनिर्णयः ।
"वैशाखश्रावणाषाढमार्गफाल्गुनकार्त्तिकाः ।
सुप्रशस्ता गृहारम्भे पश्चोपुत्रसम्भिहराः ॥
शुक्लपक्षे भवेत् सौख्यं कृष्णे च भवते भयम् ।
आदित्यभौमवर्ज्जन्तु सर्व्वे वाराः शुभावहाः ॥"
तथान्यच्च ।
"पूर्णिमाद्यष्टमीं यावत् पूर्व्वास्यं वर्ज्जयेद्गृहम् ।
उत्तरास्यं न कुर्व्वीत नवम्यादिचतुर्द्दशीम् ॥
अमावास्याष्टमीं यावत् पश्चिमास्यं विवर्ज्जयेत् ॥
नवम्यादि तथा याम्यं यावत् शुक्लचतुर्द्दशीम् ।
वज्रव्याघातशूले च व्यतीपातातिगण्डयोः ॥
विष्कम्भगण्डयोश्चैव गृहारम्भं न कारयेत् ॥
आदित्यहस्तरोहिणी मृगशिरो ज्येष्ठा धनिष्ठो-
त्तरा
रेवत्याथ मघानुराधहरिभिः मूलैः स्वभा-
वादिभिः ।
सौम्यानां दिवसेऽथ पापरहिते योगे विरिक्ते
तिथौ
विष्टित्यक्तदिने वदन्ति सुधियो वेश्मादिकार्य्यं
शुभम् ॥"
मत्स्यपुराणेऽपि ।
"चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम् ।
स्तम्भोच्छ्रायादि कर्त्तव्यमन्यत्र तु विवर्ज्जयेत् ॥
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् ।
स्वातिर्हस्तानुराधा च वास्तुकर्म्मणि प्रशस्ते ॥"
तथा च ।

"त्रिभिस्त्रिभिर्वेश्मानि कृत्तिकाद्यै-
रधोमयुक्तानि धनानि शोकाः ।
शत्रोर्भयं राजभयञ्च मृत्युः
सुखं प्रवासश्च नव प्रभेदाः ॥

वास्तु

नाशं दिशन्ति मकरालिकुलीर-
मेषे घटे धनुषि कर्म्मसु दीर्घकाल- ...नकः ।
कन्याभवे मिथुनके शुभमर्थलाभो ...नः
ज्योतिर्व्विदः कथयन्ति गृहेषु दृष्टिम् ॥

अर्केऽर्के वज्रसम्पातः कोपदाग्निश्च शीतगौ ।
कृशानुर्मन्दराभूमे चन्द्रजे सुखसम्पदः ॥
जीवे धर्म्मार्थकामाश्च सुतोत्पत्तिश्च भार्गवे ।
शनैश्चरे तु दारिद्र्यं राहावङ्गं प्रवर्त्तते ॥"* ॥
अथ प्रवेशकालः ।
"शुद्धैर्द्विदशकेन्द्रगैस्त्रिधनगैः पापैस्त्रिषष्ठायगै-
र्लग्ने केन्द्रगतेऽथवा सुरगुरौ दैत्यपूज्येऽपि वा ।
सर्व्वारम्भफलप्रसिद्धिसमये राशौ च भर्त्तुः शुभे
सम्यक्स्थिरतोदये च भवनं कार्य्यं प्रवेशोऽपि
वा ॥

पौष्णे धनिष्ठा अथ वारुणेषु
स्वायम्भुवर्क्षे त्रिषु चोत्तरेषु ।
अधीश्वचन्द्रे शुभवासरे च
तथा विरिक्ते च गृहप्रवेशः ॥

तिथिर्व्वारश्च लग्नादि समारम्भे यथोदितम् ।
प्रवेशेऽपि गृहस्यानुक्तया ज्योतिर्व्विदो जगुः ॥"
अथ द्वारम् ।
"नैकद्वारं वास्तुखण्डं न चतुर्द्वारमाचरेत् ।
एकद्वारं दुःप्रदं चतुर्द्वारं दुरावहम् ॥
त्रिद्वारमेव नृपतेर्व्वास्तुकर्म्मणि प्रशस्यते ।
द्वे तुल्ये तत्र चान्यत् स्यादतुल्यमिति निर्णयः ॥
राजद्वारस्तु तत्रैको यमद्वारस्तथा परः ।
अपद्वारं तथान्यत् स्यादिति द्वारस्य निर्णयः ॥
ब्रह्मक्षत्रियवैश्यानां प्रागुदक्पश्चिमैः क्रमात् ।
सुखद्वारं दक्षिणस्य परं तत्रापि दक्षिणे ॥
बलवद्वैरिसम्मुखं द्वारमित्यन्यसम्मतम् ।
राजद्वारेऽन्यभूपानां शिष्टानां वा प्रवेशयेत् ॥
यात्राप्रसादपर्व्वाणि राजद्वारेण कारयेत् ।
यमद्वारे क्रियाकर्म्म शवताच्च प्रवेशनम् ॥
निःसारणं व्रतानाञ्च दुष्टानाञ्च निबन्धनम् ।
अपद्वारेऽपरीक्षस्य गमनागमनक्रिया ॥
रात्रौ चिन्तायात्रा च मर्म्मज्ञस्य प्रवेशनम् ॥"
अथ प्राचीरनिर्णयः ।

"मन्दैरमेध्या मनुजैरलङ्घ्याः
प्राचीरकल्पा नृपतेर्भवन्ति ॥

राजदण्डोन्नताः सर्व्वे प्राचीराः पृथिवीभुजः ।
विंशतिस्ते तु पश्चार्द्धे पार्श्वयोः पञ्च पञ्च च ॥
पश्चात् पञ्च च विज्ञेयाः प्राचीरा पृथिवीभुजः ।
सर्व्वप्रान्ते आवरणो नाम प्राचीर उच्यते ॥
प्रतिप्राकारसंस्थानं द्वारं नाभिमुखस्थितम् ।
तत्र जयाख्यस्य दीर्घस्य वास्तुखण्डस्य निर्णयः ॥
तद्यथा ।
"राजदण्डान्तरे पञ्च राजद्वारे महीपतेः ।
राजदण्डत्रये सार्द्धे यमद्वारे प्रतिष्ठिताः ॥
अद्वारे राजदण्डार्द्धे प्राचीराः पृथिवीपतेः ।
एवं व्यवस्थिते स्थाने मध्यमेतद्धि तिष्ठति ॥
राजदण्डद्वयं सार्द्धमायामे जयवास्तुनि ।
परिणाहे पञ्च राजदण्डास्तिष्ठन्ति मध्यतः ॥

सर्व्वाभिधानेन ख्यातमेतन्निगद्यते ।
कारयेत् एवं नृपः कृत्वा सुचिरं सुखमश्नुते ॥
तस्मात् इत्थतो राजा योऽन्यत्र गृहमारभेत् ।
सोऽचिरात् नाशमाप्नोति रोगं शोकं भयं तथा ॥
यमदण्डोदयदण्डौ केनाप्युल्लसितप्रभवः ।
ये चान्ये वास्तुदोषाः स्युः स्थाने दोषाश्च ये पुनः ।
न स्पृशन्ति राजपङ्क्तेः सर्पैर्गरुड़ो यथा ॥
विशुद्धापिरतोऽपि स्यात् क्रमात्तत्रादिवास्तुषु ।
राजहस्तमितेऽप्येवं प्राचीरं गुणदोषकौ ॥”* ॥
अथ नयाख्यस्य चतुरस्रस्य वास्तुलक्षणनिर्णयः ।
“राजद्वारे हि प्राकारा राजहस्तान्तरे मताः ।
यमद्वारे वाह्य राजहस्तान्तरे च ये नृपाः ॥
चयद्वारे राजदण्डं जिता आरम्भिताः पुनः ।
अद्वारे भूपतेस्तस्य राजदण्डद्वयान्तरे ॥
एवं व्यवस्थिते स्थाने मध्यमे तत् प्रकल्प्यते ।
आयामे राजहस्तानि चत्वारि परिणाहतः ॥
राजहस्तैकमानेन राजदण्ड उदाहृतः ।
अयञ्च सप्तमो भागो वास्तोर्भवति शोभनः ॥
अस्मिन् एवं नृपः कृत्वा सुचिरं पाति मेदिनीम् ।
अस्मिन् विजयलक्ष्मीञ्च सौख्यञ्च समवाप्नुयात् ॥
यो राजा इत्थतोऽन्यत्र वेश्मारम्भं समाचरेत् ।
स उक्तो राजदण्डोऽयं तस्येदं स्थानपञ्चकम् ॥
गजो व्याघ्रश्च सिंहश्च नगो भृङ्गो यथाक्रमम् ।
सिंहे सिंहासनं स्थानं व्याघ्रे स्यात् द्वारमन्दिरम् ॥
गजे यानालयं कुर्यात् नगे केलिनिकेतनम् ।
भ्रमरेऽन्तःपुरं कुर्यात् क्रमेण पृथिवीपतेः ॥
तेन मध्यमेन सिंहासनं दीर्घस्य चतुरस्रके ॥”
तत्र भविष्योत्तरे ।
“मेषादिचक्रे जातस्य नृपतेः स्वरशुक्रमात् ।
द्वादशैव गृहान् वक्ष्ये तेषां लक्ष्यसम्पदः ॥
सुनन्दः सर्व्वतोभद्रो भव्यो नान्दीसुखस्तथा ।
विनोदश्च विलासश्च विजयो विमलस्तथा ।
रङ्गः केलिर्जयो वीरो द्वादशैते प्रकीर्त्तिताः ॥”
अथैषां लक्षणानि ।
“यद्यत्रैवोच्यते मानं तस्य तेनैव कल्पना ।
राज्ञः स्वहस्तमेकन्तु दीर्घं सर्व्वत्र निक्षिपेत् ॥
आयामेन सुनन्दः स्यात् राजहस्तैश्च पञ्चभिः ।
परिणाहे चतुर्भिश्च राजहस्तैः प्रतिष्ठितः ॥
अस्याधिदेवता भौमो रचतीदं वसुन्धरा ।
द्वाराणि विंशतिश्चास्य रक्तचित्राङ्कितानि च ॥
रक्तपट्टावृतो गेहः सकलार्थप्रसाधकः ।
अत्र स्थित्वा महीपालः सुचिरं पाति मेदिनीम् ॥”
दीर्घम् ५१ । प्रस्थम् ४० । इति सुनन्दः ॥*॥
“द्वौ राजहस्तावायामे परिणाहे तथैव च ।
इत्ययं सर्व्वतोभद्रः शुक्रश्चास्याधिदेवता ॥
दानवा रचकाश्चैव पुष्पाद्यैश्च यत्नतः ।
चतुर्द्दशास्य द्वाराणि श्यामचित्राङ्कितानि च ॥
पीतपट्टावृतो ह्येष सर्व्वानिष्टविनाशनः ।
अत्र स्थित्वा महीपालः सर्व्वान् शत्रून् निहन्ति ॥”
दीर्घम् २१ । प्रस्थम् २० । इति सर्व्वतोभद्रः ॥*॥
“अष्टकोष्ठो भवेद्भव्यः कोष्ठो हस्तचतुष्टयः ।
राजहस्तोन्नतः कार्य्यो बुधश्चास्याधिदेवता ॥
रचना वसवश्चास्य पुष्पाद्यैश्च यत्नतः ।
अष्टौ द्वाराणि चास्य स्युः पीतचित्राङ्कितानि च ॥
पीतपट्टावृतो ह्येष सर्व्वानिष्टविनाशनः ।
अत्र स्थाता क्षितिपतिर्न रिष्टैरवसाद्यते ॥
राजदण्डो भवेद्दीर्घः प्रसरे राजहस्तकः ।
राजहस्ते राजहस्ते प्रकोष्ठाः सप्त कारयेत् ॥
अयं नान्दीसुखो नाम चन्द्रश्चास्याधिदेवता ।
गन्धर्व्वलोकः पूज्योऽत्र स यक्षाद्यस्य रचकः ॥
द्वाविंशतिस्तु द्वाराणि दीर्घे दश तथान्तरे ।
अन्यत्र दीर्घे एकं स्यात् प्रसरे एकमेव च ॥”
दीर्घद्वितये दश द्वाराणि प्रसरद्वितये एकं कृत्वा द्वितयं एवं २२ द्वाराणि ।
“मुक्ताचित्रेण सहितः शुक्लपट्टेन शोभितः ।
सर्व्वार्थसाधको राज्ञां लक्ष्मीविजयवर्द्धनः ॥”
दीर्घम् ११ । प्रस्थम् १० । इति नान्दीसुखः ॥*॥
“दीर्घे त्रयो राजहस्ताः प्रसरे द्वौ प्रतिष्ठितौ ।
विनोद एष द्वाराणि त्रिंशत्कोष्ठद्वयं भवेत् ॥
रक्तचित्रेण चित्राङ्गो रक्तवस्त्रोपशोभितः ।
अत्र स्थाता नरपतिर्भवेत् कीर्त्तिप्रतापवान् ॥
सूर्य्याधिदेवता चास्य रचकाः सकलग्रहाः ॥”
दीर्घम् ३१ । प्रस्थम् २० । इति विनोदः ॥ * ॥
“दीर्घेण राजदण्डार्द्धं प्रसरे राजहस्तकौ ।
विलास एष द्वाराणि चत्वारिंशद्बुधा विदुः ॥
गन्धर्व्वा रचकाश्चास्य प्रकोष्ठत्रितयं भवेत् ।
चित्रपट्टेन पट्टेन चित्रवर्णेन शोभितः ॥
दुर्भिक्षशमनो ह्येष शस्यसम्पत्तिकारकः ।
तत्र स्थित्वा नरपतिः प्रचुरं सुखमश्नुते ॥”
दीर्घम् ५१ । प्रस्थम् २० । इति विलासगृहम् ॥ * ॥
“द्वादशहस्ताः प्रसरे दीर्घे द्वौ राजहस्तकौ कथितौ ।
विजये द्वादश भवनद्वाराणि स्युर्जयप्रदान्यत्र ॥
सूर्य्योऽधिदेवता चास्य रचतीमं विहङ्गराट् ।
अरुणाम्भोजचित्राङ्गो अरुणाम्बरभूषितः ।
तत्र स्थित्वा नरपतिः शत्रूणां शास्ति वसुन्धराम् ॥”
दीर्घम् २१ । प्रस्थम् १२ ॥ * ॥
“आयामे राजदण्डौ द्वौ प्रसरे राजदण्डकः ।
शतद्वारोपसहितः प्रकोष्ठैर्दशभिर्युतः ॥
दिक्पाला रचकाश्चास्य कुजश्चास्याधिदेवता ।
नानावर्णेन चित्रेण वसनेन विभूषितः ॥
अत्र स्थित्वा नरप : सुचिरं सुखमश्नुते ।
यस्मिन्नाम्ये प्रतिष्ठेऽ विमलो गृहसत्तमः ॥
दुर्भिक्षं नात्र जायेत नेतयोर्न च विप्लवः ।
न रोगो नापि शोकश्च नैवोत्पातभवस्तथा ।
इत्यादि गुणबाहुल्यमत्र च कथितं बुधैः ॥”
दीर्घम् २०० । प्रस्थम् १०० ॥ * ॥
“आयामपरिणाहाभ्यां हस्तः षोड़शहस्तकः ।
द्वाराणि षोड़शैवास्य गुरुरस्याधिदेवता ॥
रचिका देवता चास्य मुक्तवस्त्रैर्विभूषणम् ।
अत्र स्थित्वा नरपतिः सर्व्वार्थान् भुवि साधयेत् ॥”
दीर्घम् १७ । प्रस्थम् १६ । इति रङ्गः ॥ * ॥
“आयामे राजदण्डः स्यात् प्रसरं च तदर्द्धकम् ।
दश प्रकोष्ठा द्वाराणि शनिरस्याधिदेवता ॥
पिशाचा रचकाश्चास्य नीलवस्त्रादिभूषणम् ।
नाम्नायं केलिराख्यातो भयरोगविनाशनः ।
अत्र स्थित्वा नरपतिः सुखं विजयते रिपून् ॥”
दीर्घम् १०० । प्रस्थम् ५० ॥ * ॥
“राजहस्तेन कोणः स्यादेवं केलिचतुर्द्दश ।
चतुर्द्दशैव द्वाराणि राहुरस्याधिदेवता ॥
नक्षत्रा रचकास्तु नानावर्णाम्बरादिकम् ।
अयं जयः प्रकटितः सर्व्वत्रैव जयप्रदः ॥
आयामे राजहस्तः स्यात् परिणाहेऽर्द्धहस्तकः ।
नानारूपः कुटीरूपो वीरो नाम यशप्रदः ॥
इष्टदानिर्द्देवतास्य रचकाश्चास्य खेचराः ।
विचित्रवसनोपेतः सर्व्वकामार्थदायकः ॥”
दीर्घम् ११ । प्रस्थम् ८ । इति वीरः ॥ * ॥
“यो यस्य गदितो वर्णस्तथा स्वामरोऽपि च ।
राजहस्तान्तरे पञ्च चामराः स्युर्महीभुजाम् ॥
चन्द्रोऽपि दर्पणो हस्त उपरि क्रमतो न्यसेत् ।
पताकाध्वजयुक्ताश्च गृहरचक-रक्षणाम् ।
कृत्वयुक्तं गृहं राज्ञां विज्ञेयं चक्रवर्त्तिनाम् ॥”
एषां नियमः परवत् ।
“इति द्वादशचिह्नानि गृहाणां कथितानि वै ।
विस्तरेणैतानि नृपतिर्गृहारम्भं समाचरेत् ॥
इति सिंहासनस्थानामति राज्ञस्य मस्तकम् ।
इतोऽन्ये चित्तहर्षार्थाः प्रासादाः पृथिवीभुजः ॥
जलयन्त्रादयो येऽन्ये तेषां नास्ति विनिश्चयः ।
स्वजन्मगेहसंस्थो यो नृपतिः शुभचेतनः ॥
स चिरं पृथिवीं शास्ति सर्व्वार्थान् साधयन्नपि ।
यो वा तत्परगेहस्थो दुर्म्मोहात् धरणीपतिः ॥
न चिरं पाति वसुधां घोरं रोगञ्च विन्दति ।
स्वलग्नपतिमित्रस्य गृहचारी न दुष्यति ॥”* ॥
परञ्च ।
“हीरकस्य विशुद्धस्य अभावातेर्म्मणिद्युतिः ।
सर्व्वाङ्गशर्म्माचिन्त्य वमनो दीप्तिमच्छिखाः ।
गृहाग्रे धारयेद्राजा तद्वज्रं वज्रवारणम् ॥”
याख्यस्तु ।
“गृहेषु मणिविन्यासो विज्ञेयो न च दण्डवत् ।
विशुद्धहीरकन्यासो विधेयः सदनोपरि ।
तेन सर्व्वाणि नश्यन्ति अरिष्टानि महीभुजाम् ॥”
भोजोऽपि ।
“वास्तुखण्डोऽष्टरूपः स्यात् यथार्थैर्नामभिः खण्डैः ।
यमद्वारात् समारभ्य यावद्द्वारमिष्यते ॥”
तद्यथा,—
“मृत्युर्भयः स्थिरस्तम्भो धनं विभव एव च ।
वीरस्तापश्च इत्यष्टौ वास्तुभागा यथाक्रमम् ॥

यमनैर्ऋतनोयेशवायुयक्षेशशङ्कराः ।
इन्द्रो वह्निरिति प्रोक्ता विभागानामधीश्वराः ॥
इन्द्रे कारालयं कुर्य्यात् भयस्थाने च पत्तयः ।
स्थिरे सहचरान् रक्षेत् चक्रे वाजिगजादयः ॥
धने धान्यादिकं रक्षेत् विभवे कोषरक्षणम् ।
राजपट्टे भवेद्वीरो नापि कश्चिद्गृहालयम् ।
प्राचीरप्रतिभागान्ते इति भोजस्य सम्मतम् ॥”
इति युक्तिकल्पतरौ राजगृहयुक्तिः ॥ * ॥
“वास्तुमानेन नियमो गृहमानेन निर्णयः ॥”
तत्र वास्तुप्लवलक्षणम् ।
“पूर्व्वप्लवो वृद्धिकरो धनदश्चोत्तरप्लवः ।
दक्षिणस्थो मृत्युदो वास्तुर्धनहा पश्चिमप्लवः ॥
कोणे रेखाद्वयं कृत्वा मध्ये रेखाद्वयं तथा ।
ऐशानकोणतो रेखा दक्षिणाद्यैर्व्वतस्तथा ॥
नागामरो नामभिश्च नापनाकापि नाश्वपः ।
नाकुम्भादिर्नाविभागो ना चित्रो नातिनिम्नकः ।
नात्युच्चो नातिनीचो वा नाप्रकीर्णप्रकीर्णकः ।
ना धातुर्नागवाचश्च न चैकानेकद्वारभाक् ॥
नियमोऽस्तु महीभर्त्तां सर्व्वसम्पत्तिहेतवे ॥”
इति राजगृहयुक्तिः ॥ * ॥
अन्येवास्तु यथा वास्तुमानेन नियमः ।
“ध्वजो धूमस्तथा सिंहः श्वा वृषो गर्द्दभो गजः ।
काक इत्येव गदितो वास्तुस्थानस्य निर्णयः ।
अयुग्मे सुखसम्पत्तिर्युग्मश्च विपदास्पदम् ॥”
एवमन्यत्रापि ।

“ध्वजे विभूतिर्विपदश्च धूमे
सिंहे विभोगः शुनि सर्व्वनाशः ।
वृषे सुखं गर्द्दभतो विनाशो
गजे धनं काकपदे च मृत्युः ॥

कोणरेखा कोणसूचिः सुखसम्पत्तिनाशिनी ।
पूर्व्वपश्चिमतो दण्ड उदयाख्यः सुखावहः ॥
दक्षिणोत्तरतो दण्डो वंशश्च यमदण्डकः ।
गृहाणि पातयेद्धीमानेषां दण्डव्यवधान्तरे ॥ * ॥
एका चेद्दक्षिणी शाला द्वे च दक्षिणपश्चिमे ।
निवसेत् पूर्व्वतो धीमांश्चतुःशालं सुखावहम् ॥
पश्चिमाख्यं ध्वजे वेश्म सिंहे तूदङ्मुखं शुभम् ।
पूर्व्वाननं वृषस्थाने दक्षिणाभिमुखं गजे ॥
पदाघातः परिखाघातः पथाघातस्तथैव च ।
जलदोषो वृक्षदोषो दोषा इत्येवमादयः ॥
गच्छतो पदजालस्य श्रवणं यदि वेश्मनि ।
पदाघातो नाम दोषः पुत्त्रपौत्त्रधनापहः ॥
परिखादण्डयोर्घातो वास्तुनोः प्रतिवेशिनोः ।
परिखाघातो नाम दोषः कुलवीर्य्यप्रणाशकः ॥
पथाघातो नाम दोष आघातो वास्तुनः पथः ।
स हन्ति भोगं वंशञ्च तस्य भेदमतः शृणु ॥
एकमार्गं सुखं कुर्य्यात् द्विपथं कुलवर्द्धनम् ।
त्रिपथं कुलनाशाय सर्व्वनाशश्चतुष्पथे ॥
स्वभावाद्वा परवाञ्छाच्च पक्षिच्छति जलाशयः ।
तद्दोषो जलदोषः स्यात् स हन्ति कुलसम्पदः ॥
वृद्धिमानसुखैश्वर्य्यमृत्युक्षोभभयामयाः ।
एते जलाश्रये दोषाः पूर्व्वादिदिक्षु च क्रमात् ॥
स्ववास्तुवृक्षतो दोषः कुलसम्पत्तिनाशनः ।
वर्ज्जयेत् पूर्व्वतोऽश्वत्थं प्लक्षं दक्षिणतस्तथा ॥
नैर्ऋत्यां रक्तपुष्पञ्च वायव्यां चौरिणस्तथा ।
यत्र तत्र स्थिता वृक्षा बिल्वदाडिमकेशराः ।
पनसा नारिकेलाश्च शुभं कुर्व्वन्ति निश्चयम् ।
निम्बा गौली पलाशश्च चिञ्चा श्वेतापराजिता ।
कोविदारश्च सर्व्वत्र सर्व्वं निघ्नन्ति मङ्गलम् ॥ * ॥
गृहपातनमिच्छन्ति नागस्य शयने क्रमात् ।
पूर्व्वादिषु शिरः कृत्वा नागः शेते त्रिभि-
स्त्रिभिः ।
भाद्राद्यैर्व्वामपार्श्वेन तस्य क्रोड़े गृहं शुभम् ॥”
तत्र प्रमाणम् ।
“स्वामिहस्तप्रमाणेन ज्येष्ठपत्नीकरेण वा ।
गृहाभ्यन्तरसंस्थानं मापयेदभितो नरः ॥” * ॥
तत्र सामान्यलक्षणम् ।

“गृहभूमिसमाहृतपिण्डपदं
वसुलोचनरन्ध्रगजैर्गुणितम् ।
रविभूधरचिन्द्रदयोगहृतं
भवनाय धयस्त्रितिकल्पपदम् ॥

एकाशीतिगुणे हस्ते द्विकाणैकहृते च ते ।
वह्निद्युम्नसम्भक्ते पिण्डः स्यात् सर्व्ववेश्मनः ॥”
तद्यथा ।
“ध्वजाश्लेषसंस्थाने गृहमानं शुभावहम् ।
दीर्घे भानुः परीणाहे सप्त चैवाङ्गुलिद्वयम् ॥
इदं पुत्त्रफलं गेहं वृषस्थानेऽप्युदीरितम् ।
दीर्घे षट्प्रसरे पञ्च चतस्रोऽङ्गुलयोऽपि च ॥
इदं पुत्त्रफलं गेहं गजस्थाने प्रकीर्त्तितम् ।
दीर्घे त्रयोदश भुजाङ्गुलयश्चैकविंशतिः ॥
प्रसरेऽष्टौ सुखफलं गजस्थाने गृहं विदुः ।
इति द्वादशकं प्रोक्तं गृहाणां सर्व्वसंमतम् ।
एवं गृहं समाचर्य्य गृहस्थः शुभमिच्छति ॥” * ॥
भोजस्तु ।
“आयामपरिणाहाभ्यां योऽङ्कपिण्डो विजायते ।
येन केनापि चाङ्केन शोधनीयः स दृश्यते ॥
एकद्विपञ्चसप्तानि शुभान्यन्यानि चान्यथा ।
आयामपरिणाहाभ्यां सार्द्धद्वादशहस्तकम् ॥
एतत्तु मङ्गलं नाम गृहं सुखविवर्द्धनम् ।
आयामपरिणाहाभ्यां सार्द्धहस्तचतुर्दश ॥
इदं कमलकं नाम गृहं सम्पत्तिकारकम् ।
आयामपरिणाहाभ्यां सार्द्धहस्तास्तु षोडश ।
इदं हि सर्व्वतोभद्रं स्वामिनः सुखकारकम् ॥
आयामपरिणाहाभ्यां सार्द्धाष्टादशहस्तकम् ।
कल्याणनाम वेश्मेदं धनधान्यसुखप्रदम् ॥
आयामपरिणाहाभ्यां सार्द्धविंशतिहस्तकम् ।
इदं हि सुखदं नाम भर्त्तुः सुखविवर्द्धनम् ॥
मया यदिदमुद्दिष्टं गृहपञ्चकमद्भुतम् ।
न तेषु स्थाननियमः सर्व्वत्रैतानि कारयेत् ॥
स्थानं मानञ्च दोषाश्च ये प्रोक्तास्तु मया क्रमात् ।
तद्विचार्य्य गृहं कृत्वा गृहस्थः सुखमश्नुते ॥
अज्ञानादथ मोहाद्वा योऽन्यथा गृहमाचरेत् ।
स विषीदति नश्यन्ति तस्य कीर्त्तिः कुलं धनम् ॥
प्राचीराणां न नियमो गृहस्थानाच्च विद्यते ।
यथावास्तु यथाशक्ति प्राचीरान्कल्पयेद्गृही ॥
गृहदोषो यथा न स्यात् तथा प्राचीरकल्पना ॥”
इति युक्तिकल्पतरौ गृहयुक्तिः ॥ * ॥
अथ वास्तुयागप्रमाणम् । तन्त्रे ।
चतुःषष्टिपदं वास्तु सर्व्वदेवगृहं प्रति ।
एकाशीतिपदं वास्तु मानुषं प्रति विहितम् ॥
अयतः शोधयेद्वास्तुभूमिं यस्य पुरोहिताम् ।
चतुर्हस्तं द्विहस्तं वा जलान्तं वापि शोध्य च ॥
सुसमञ्च तदा कृत्वा तदाधीनं ततो भवेत् ॥”
पुरोहितो भाषस्यादिभेदेन प्रशस्तत्वेनोपपादि-
तम् ॥ * ॥ तथा च मत्स्यपुराणम् ।
“अरत्निमात्रे गर्त्ते वै स्वनुलिप्ते च सर्व्वशः ।
कृतमामशरावस्थं कृत्वा वर्त्तिचतुष्टयम् ॥
ज्वालयेत्तु परीक्षार्थं पूर्व्वं तत् सर्व्वदिङ्मुखम् ।
दीप्तौ पूर्व्वादि गृह्णीयात् वर्णानामनुपूर्व्वशः ॥
वास्तुः सम्पद्दिको नाम दीप्यते सर्व्वतो हि यः ।
शुभदः सर्व्ववर्णानां प्रासादेषु गृहेषु च ॥”
वास्तुकर्त्तुररत्निमात्रे गर्त्ते तत्रैव स्थापिते आम-
शरावे पूर्व्वादिक्रमेण वर्त्तिचतुष्टयं कृत्वा गव्य-
घृतनापूर्य्य वर्त्तिचतुष्टयं प्रज्वालयेत् । तत्र
प्राच्यां दीपशिखायाः उज्ज्वलत्वे तद्वास्तु ब्राह्म-
णस्य प्रशस्तम् । एवं दक्षिणादिदिक्षु शिखाया-
स्तथात्वे क्षत्रियादेः । सर्व्वशिखासमत्वे सर्व्व-
वर्णानां स वास्तुदेशः प्रशस्तः । अत्रान्तमिति
तु मत्स्यपुराणपरिभाषितं प्रासादपरम् ॥ * ॥
तथा च मात्स्ये ।
“पुरुषाधःस्थितं शल्यं न गृहे दोषदं भवेत् ।
प्रासादे दोषदं शल्यं भवेद्यावज्जलान्तिकम् ॥
प्रासादभवनादीनां निवेशं विस्तरादहं ।
कुर्य्यात् केन विधानेन कथ वास्तुवदाहृतः ॥”
इत्युपक्रम्य वाप्यादीनामभिधानादिपदात्
कूपादयो गृह्यन्ते । प्रासादेऽप्येवमेव स्यात् कूप-
वापीषु चैव हि । इत्यभिधानाच्च कूपादावपि ॥
वास्तुपुरुषश्च ।

“कश्यपस्य महिष्यां तु सिंहिका
राहुवास्तुतनयावजीजनत् ।
पूर्व्वजो हरिनिकृत्तकन्धरो
दैवतैरवरजो निपातितः ॥”

तथा ।
“चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ।
वैशाखे धनरत्नानि ज्यैष्ठे मृत्युमवाप्नुयात् ॥
आषाढ़े भृत्यरत्नानि पशुवर्गमवाप्नुयात् ।
श्रावणे मित्रलाभस्तु हानिर्भाद्रपदे तथा ॥
आश्विने पत्नीनाशः स्यात् कार्त्तिके धनधान्य-
कम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतो भयम् ॥
माघे चाग्निभयं विद्यात् काञ्चनं फाल्गुने
सुतान् ।
शुक्लपक्षे भवेत् सौख्यं कृष्णे तस्करतो भयम् ॥
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् ।
स्वाती हस्तानुराधा च गृहारम्भे प्रशस्यते ॥
आदित्यभौमवर्ज्जन्तु सर्व्वे वाराः शुभावहाः ।
वज्रव्याघातशूले च व्यतीपातातिगण्डयोः ।

पार्श्वे तदुपरि न्यस्तेशाखं वैयवमेव वा ॥
तत्रोपवेश्य तं श्रीश देवं विग्रहचन्दनैः ।
आलिप्य शुभ्रं वसनं दत्त्वाथ च पादुके ॥
वासुदेवायेति शिरः श्रीधरायेति वै मुखम् ।
कृष्णायेति च कण्ठं वै वक्षः श्रीपतये इति ॥
सर्वास्त्रधारिणे बाहू कण्ठे च व्यापकाय वै ।
कमलनाभायोदरं मेढ्रं त्रैलोक्यजनकाय च ॥
चरणं चार्च्चयेद्विद्वान् सर्व्वाधिपतये इति ।
सर्व्वात्मने इति पदाद्येवमङ्गानि पूजयेत् ॥
शङ्खचक्रगदापद्मशार्ङ्गैरविभूषितम् ।
गृहाणार्घ्यं मया दत्तं शार्ङ्गपाणे ! नमोऽस्तु ते ॥
इत्यर्घ्यं पूर्व्ववत् कृत्वा धूपदीपौ समर्प्य च ।
पुनरपक्वप्रधानानि नैवेद्यानि निवेदयेत् ॥
ताम्बूलादीनि दत्त्वाथ कृत्वा जागरणं निशि ।
प्रातःस्नात्वार्च्चयित्वेशं पुष्पाञ्जलिमथार्च्चयेत् ॥
नमस्ते अस्तु गोविन्द बुध श्रवणसंज्ञक ।
अघौघं नाशयं कृत्वा सर्व्वसौख्यप्रदो भव ॥
इति प्रार्थ्य ततः वस्त्रं दत्त्वा चार्घ्यं प्रतोष्य

हि ।

शक्त्या विप्रान् भोजयित्वा सुखं पारणमाचरेत् ॥
भाद्रे मासि बुधस्याह्नि यदि स्याद्विजयाव्रतम् ।
तदा सर्व्वव्रतेभ्योऽस्य माहात्म्यमतिरिच्यते ॥”

इति श्रीहरिभक्तिविलासे १३ विलासः ॥

(सहदेवपत्नी । यथा, महाभारते ।१।९५।८०।
“सहदेवोऽपि माद्रीमेव स्वयंवरे विजयां नामो-
पयेमे मद्रराजस्य द्युतिमतो दुहितरं तस्यां
पुत्रमजनयत् सुहोत्रं नाम ।”॥
पुरुवंशीयभूमन्योः पत्नी । यथा, तत्रैव । १ ।
९५ । १९ ।
“भूमन्युः खलु दाशार्हीमुपयेमे विजयां नाम
तस्यामस्य जज्ञे सुहोत्रः ।” )

विजयासप्तमी, ( विजयाख्या सप्तमी । ) रविवारे
शुक्लपक्षीया सप्तमी । यथा,—
“शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो यदा भवेत् ।
सप्तमी विजया नाम तत्र दत्तं महाफलम् ।”

इति तिथ्यादितत्त्वम् । * ।

अथ विजयोत्सवविधिः ।
“रथमारोप्य देवेशं सर्व्वालङ्कारशोभितम् ।
सावित्रूणधनुर्व्वाणपाणिं मन्तचरात्मकम् ॥
स्वलीलया जगत्त्रातुमाविर्भूतं रघूद्वहम् ।
राजोपचारैः श्रीरामं शमीवृक्षतलं नयेत् ॥
सीताकान्तं शमीयुक्तं भक्तानामभयङ्करम् ।
अर्च्चयित्वा शमीवृक्षमर्च्चयेद्विजयाप्तये ॥”
तत्र मन्त्रः ।
“शमी शमयते पापं शमी लोहितकण्टका ।
धरित्र्यर्ज्जुनवाणानां रामस्य प्रियवादिनी ॥
करिष्यमाणा या यात्रा यथाकालं सुखं मया ।
तत्र निर्व्विघ्नकर्त्री त्वं भव श्रीरामपूजिता ॥
गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् ।
गीतवादित्रनिर्घोषैस्ततो देवं गृहं नयेत् ॥
केचिद्वर्णेस्तत्र भाव्यं केचिद्भाव्याश्च वानरैः ।
केचिन्मत्सुखैर्भाव्यं कोपवेशस्य तुष्टये ॥
निर्ज्जिता राक्षसा दैत्या वैरिणो जगतीतले ।
रामराज्यं रामराज्यं रामराज्यमिति ब्रुवन् ॥
आनीय स्थापयेद्देवं निजसिंहासने सुखम् ।
ततो नीराज्य देवेशं प्रणमेद्दण्डवद्भुवि ।
महाप्रसादवस्त्रादि धारयेद्वैष्णवैः सह ।
इति श्रीविष्णुधर्म्मोक्तानुसारेण मयोक्तयम् ॥
विधिः श्रीरामविजयोत्सवस्योत्सवकृत् सताम् ।
सीता हृतेति हनुमद्वाक्यं श्रुत्वाकरोत्प्रभुः ॥
विजयं वानरैः सार्द्धं वासरेऽस्मिन् शमी-
तलात् ॥”

इति श्रीहरिभक्तिविलासे १५ विलासः ॥

विजयिनं, त्रि, विजितम् । इत्यमरटीकायां राय-
मुकुटः ॥

विजयी, [ न् ] त्रि, ( विशेषेण जेतुं शीलमस्य ।
वि + जि + “जिदृक्षिविश्रीति ।” ३ । २ । १५७ ।
इति इनिः । ) जययुक्तः । यथा,—
“य इदं पञ्जरनामेदं यो रामकवचं पठेत् ।
स चिरायुः सुखी पुत्री विनयी विजयी
भवेत् ॥”

इति तन्त्रसारः ॥

( पुं, अर्ज्जुनः । यथा,—
“अर्ज्जुनः फाल्गुनो जिष्णुः किरीटी श्वेतवा-
हनः ।
बीभत्सुर्विजयी कृष्णः सव्यसाची धनञ्जयः ॥
एतान्यर्ज्जुननामानि प्रातरुत्थाय यः पठेत् ।
उद्यतेष्वपि शस्त्रेषु भयं तस्य न विद्यते ॥”

इति सर्व्वजनप्रसिद्धम् ॥ )

विजयोत्सवः, पुं, ( विजयायास्तदुत्सवः । ) आश्विन-
शुक्लदशमीविहितभगवद्रामसवविशेषः । यथा,
“आश्विनस्य सिते पक्षे दशम्यां विजयोत्सवः ।
कर्त्तव्यो वैष्णवैः सार्द्धं सर्व्वत्र विजयार्थिना ॥”
अथ विजयोत्सवविधिः ।
“रथमारोप्य देवेशं सर्व्वालङ्कारशोभितम् ।
सावित्रूणधनुर्व्वाणपाणिं मन्तचरात्मकम् ॥
स्वलीलया जगत्त्रातुमाविर्भूतं रघूद्वहम् ।
राजोपचारैः श्रीरामं शमीवृक्षतलं नयेत् ॥
सीताकान्तं शमीयुक्तं भक्तानामभयङ्करम् ।
अर्च्चयित्वा शमीवृक्षमर्च्चयेद्विजयाप्तये ॥”
तत्र मन्त्रः ।
“शमी शमयते पापं शमी लोहितकण्टका ।
धरित्र्यर्ज्जुनवाणानां रामस्य प्रियवादिनी ॥
करिष्यमाणा या यात्रा यथाकालं सुखं मया ।
तत्र निर्व्विघ्नकर्त्री त्वं भव श्रीरामपूजिता ॥”

इति ॥

“गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् ।
गीतवादित्रनिर्घोषैस्ततो देवं गृहं नयेत् ॥
केचिद्वर्णेस्तत्र भाव्यं केचित् भाव्याश्च वानरैः ।
केचिन्मत्सुखैर्भाव्यं कोपवेशस्य तुष्टये ॥
निर्ज्जिता राक्षसा दैत्या वैरिणो जगतीतले ।
रामराज्यं रामराज्यं रामराज्यमिति ब्रुवन् ॥
आनीय स्थापयेद्देवं निजसिंहासने सुखम् ।
ततो नीराज्य देवेशं प्रणमेद्दण्डवद्भुवि ।
महाप्रसादवस्त्रादि धारयेद्वैष्णवैः सह ॥ * ॥
इति श्रीविष्णुधर्म्मोक्तानुसारेण मयोक्तयम् ॥
विधिः श्रीरामविजयोत्सवस्योत्सवकृत् सताम्
सीता हृतेति हनुमद्वाक्यं श्रुत्वाकरोत् प्रभुः ।
विजयं वानरैः सार्द्धं वासरेऽस्मिन् शमीतलात्

इति श्रीहरिभक्तिविलासे १५ विलासः ।

विजरः, त्रि, जरारहितः । विगता जरा यस्मा
बहुव्रीहिसमासनिष्पन्नः ॥ ( यथा, कथासरित्-
सागरे । ३९ । ११ ।
“यः सर्व्वौषधियुक्तिज्ञस्तस्मै विद्वद्रसायनः ।
आत्मानं तत्र राजानं द्विजरं चिरजीविनम् ॥

विजलं, त्रि, विजलम् । इति हेमचन्द्रः ॥ ( विग
जलं यस्मात् । ) निर्जलम् ॥ ( यथा, बृह-
त्संहितायाम् । १९ । २० ।
“शरदर्कचन्द्रकिरणाभिरतोऽपगलहा
तोयाशयाश्च विजलाः सरितोऽपि तन्व्यः ॥”

विजल्पः, पुं, (विशेषेण जल्पनमिति । वि + जल्प +
घञ् । ) वाक्यविशेषः । यथा,—
“अस्तयासूयया गूढ़मानमुद्रान्तरालया ।
अघद्विषि कटाक्षोक्तिर्विजल्पो विदुषां मतः ॥”

इत्युज्ज्वलनीलमणिः ॥

विजातः, त्रि, (विरुद्धं जातं जन्म यस्य ।) विजन्मा,
इति लोकप्रसिद्धः ॥

विजाता, स्त्री, ( विशेषेण जातः पुत्रो यस्याः ।
जातापत्या । यथा,—
“विजाता च प्रजाता च जातापत्या प्रसू-
तिका ॥”

इति हेमचन्द्रः ॥

विजातीयः, त्रि, ( विभिन्नां जातिमर्हतीति ।
विजाति + छः । ) विभिन्नधर्म्माक्रान्तः । यथा,
“प्रायश्चित्ताद्विजातीयात् तादृक्पापविना-
शनम् ॥”

इति प्रायश्चित्ततत्त्वम् ॥

(यथा च साहित्यदर्पणे ७ परिच्छेदे ।
“एवं पददोषसजातीया वाक्ये दोषा उक्ताः
सम्प्रति तद्विजातीया उच्यन्ते ।” ) विशेष-
जातिविशिष्टः । यथा,—
“प्रवाहो नादिमानेष न विजात्येकशक्तिमान् ।
तत्त्वे यतवता भाव्यमन्वयव्यतिरेकयोः ॥”
एष कार्य्यकारणप्रवाहो नादिमान् अनादिः ।
विजातीयेषु तृणादिषु एकशक्तिमान् न प्रवाहः ।
अन्वयव्यतिरेकयोस्तत्त्वे नियतत्वे नियमाव-
निर्द्धारणे यतवता भाव्यं यत्नः करणीयः वैजात्य-
मिति भावः । वह्निसामान्यं प्रति विजाती-
योत्पन्नवह्नित्वेन एव कारणम् । इति हरि-
दासीयकुसुमाञ्जलिटीका ॥

विजिगीषुः, त्रि, ( विजिगीषा अस्यास्तीति । अर्श-
आदित्वादच् । ) जयेच्छुः । इति सिद्धान्त-
कौमुदी ॥

विजिगीषा, स्त्री, ( विजेतुमिच्छा । वि + जि +
सन् + अः । स्त्रियां टाप् ।) स्वोदरपूरणाशक्ति-
निमित्तकनिन्दाभागेच्छा । इत्यमरटीकायां

साक्षादेव महादेवस्तज्ज्ञानमिति कीर्त्तितम् ॥” इति कौर्म्मे उपविभागे १४ अध्यायः ॥

विज्ञानपादः, पुं, ( विज्ञानमेव पादं लक्ष्यं यस्य । ) वेदव्यासः । इति केचित् ॥

विज्ञानमयकोषः, पुं, ( विज्ञानमयस्तदात्मकः कोष इवाच्छादकत्वात् ।) ज्ञानेन्द्रियैः सहिता बुद्धिः । इति वेदान्तसारः ॥

विज्ञानमातृकः, पुं, ( विज्ञानं मातेव यस्य । बहुव्रीहौ कप् । ) बुद्धः । इति हेमचन्द्रः ॥

विज्ञानिकः, त्रि, ( विज्ञानमस्त्यस्येति । विज्ञान + ठन् ।) ज्ञानविशिष्टः । विज्ञः । इति वैज्ञानिकशब्दटीकायां भरतः ॥

विज्ञापनं, क्ली, (वि + ज्ञा + णिच् + ल्युट् ।) बोधनम् । जानान इति भाषा । विपूर्ब्बज्ञान्तज्ञाधातोरनट्प्रत्ययेन निष्पन्नम् ॥ ( यथा, कथासरित्सागरे । ११ । ५८ ।
“तया विज्ञापनायाहं प्रेषितः स्वीकुरुष्व ताम् । युवयोरस्तु योगोऽयं कौमुदीचन्द्रयोरिव ॥”॥ क्ली, वि + ज्ञा + णिच् + युच् । टाप् । विज्ञापना । यथा, रघुः । १७ । ४० ।
“ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम् ।” ) [best reading uncertain]

“ततः परमभिव्यक्तसौमनस्यनिवेदितैः । युयोज पाकाभिमुखैर्भृत्यान् विज्ञापनाफलैः ॥”)

विज्ञप्तिः, स्त्री, ( वि + ज्ञा + णिच् + क्तिन् । ) विज्ञापनम् । विपूर्ब्बण्यन्तज्ञाधातोः क्तिप्रत्ययेन निष्पन्ना ॥ (विकल्पेन ह्रस्वे विज्ञप्तिरपि ॥)

विज्ञेयं, त्रि, ( विज्ञातुं योग्यम् । वि + ज्ञा + “अचो यत् ।” ३ । १ । ९७ । इति यत् । “ईद्यति ।” ६ । ४ । ६५ । इति आत ईत् । ) विज्ञातव्यम् । विज्ञानीयम् । विपूर्ब्बज्ञाधातोर्यप्रत्ययेन निष्पन्नम् ॥ ( यथा, मनुः । २ । १० ।
“श्रुतिस्तु वेदो विज्ञेयो धर्म्मशास्त्रन्तु वै स्मृतिः ॥” )

विज्ञामरं, क्ली, चक्षुःशुक्लचेत्रम् । इति केचित् ॥

विज्ञोली, स्त्री, पङ्क्तिः । इति त्रिकाण्डशेषः ॥

विट, आक्रोशे । स्वने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-स्वने अक०-सेट् ।) वेटति । आक्रोशः । कैश्चित्तु पठ्यते । स्वनः शब्दः । इति दुर्गादासः ॥

विटः, पुं, ( वेटतीति । विट + कः । ) षिड्गः । इत्यमरः ॥ ( यथा, भागवते । १० । १३ । २ ।
“सतामयं सारभृतां निसर्गो
यदर्थवाणीश्रुतिचेतसामपि ।
प्रतिक्षणं नव्यवदच्युतस्य यत्
स्त्रिया विटानामिव साधु वार्त्ता ॥”)
कामुकानुचरः । धूर्त्तः । इति भरतः ॥ कामतन्त्रकलाकोविदः । इति रसमञ्जरी ॥ पर्व्वतविशेषः । लवणभेदः । खदिरविशेषः । मूषिकः । इति मेदिनी । टे, १८ ॥ नारङ्गवृक्षः । इति शब्दमाला ॥

विटङ्कः, पुं क्ली, ( विशेषेण टङ्कते बध्यते सौधादिषु इति । वि + टकि बन्धने + घञ् । ) कपोतपालिका । पायरार खोप इति भाषा । इत्यमरः ॥ हे सौधादिषु प्रान्ते काष्ठादिरचिते गृहपक्षिस्थाने । कपोतान् पालयतीति कपोतपाली टाप् यस्य इति यस् स्वार्थे कः कपोत इत्युपलक्षणं पक्षिमात्रपालिकेति बोध्यम् । बौन् पक्षिकटङ्कयति बध्नाति विटङ्कं टकि ऋ बन्धे घञ् विशेषेण टङ्कयतीति वा अच् घञ् वा । इति भरतः ॥ ( यथा, माघे । ३ । ५५ ।
“रतान्तरे यत्र गृहान्तरेषु
वितर्द्दिनिर्यूहविटङ्कनीडः ।
रुतानि शृण्वन् वयसां गणोऽन्तेवासित्वमाप स्फुटमङ्गनानाम् ॥”॥
सुन्दरे, त्रि । यथा, भागवते । ३ । १५ । २७ ।
“हेमाङ्गदस्फुरदुदारगदौ पराद्ध्र्य-
केयूरकुण्डलकिरीटविटङ्कवेषौ ॥”)

विटङ्ककः, पुं क्ली, ( विटङ्क एव । स्वार्थे कन् । ) विटङ्कः । इति शब्दरत्नावली ॥

विटपः, पुं क्ली, ( वेटति शब्दायते इति । विट + “विटपपिष्टपविशिपोलपाः ।” उणा० ३।१४५ । इति कपप्रत्ययेन निपातनात् साधुः । ) शाखापल्लवसमुदायः । तत्पर्य्यायः । विस्तारः २ । इत्यमरः ॥ स्तम्बः ३ । इति मेदिनी । पे, २२ ॥ शाखा । ( यथा, रघुः । १० । ११ ।
“बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः । आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥”) पल्लवः । इति शब्दरत्नावली ॥ ( यथा, ऋतुसंहारे । १ । २४ ।
“तरुविटपलताग्रालिङ्गनव्याकुलेन
दिशि दिशि परिदग्धा भूमयः पावकेन ॥”)
क्ली, मुष्कवङ्क्षणान्तरम् । यथा,—
“विटपन्तु मध्यावेष्टमन्तरामुष्कवङ्क्षणम् ॥”
इति हेमचन्द्रः ॥
( यथा, सुश्रुते । ३ । ६ ।
“वङ्क्षणवृषणयोरन्तरे विटपं नाम तत्र षाण्ढ्यमल्पशुक्रता वा भवति ॥”)

विटपः, पुं, (विटान् पालीति । पा + कः ।) विटाधिपः । पारदारिकश्रेष्ठः । इति मेदिनी । पे, २० ॥ आदित्यपत्रः । इति राजनिर्घण्टः ॥

विटपी, [ न् ] पुं, ( विटपः शाखादिरस्यास्तीति । विटप + इनिः । ) वृक्षः । इत्यमरः ॥ ( यथा, आर्य्यासप्तशत्याम् । ४८६ ।
“यूथपते तव कश्चित् मानसानुरूप इव विटपी ।
प्रेरय दिनं निदाघक्लान्तः क खलु ते च्छाया ॥”)
वटः । इति राजनिर्घण्टः ॥ ( विटपयुक्ते, त्रि । यथा, महाभारते । १ । ४३ । १० ।
“अङ्कुरं कृतवांस्तत्र ततः पर्णद्वयान्वितम् । पलाशिनं शाखिनञ्च तथा विटपिनं पुनः ॥”)

विटप्रियः, पुं, ( विटानां प्रियः । ) मुद्गरवृक्षः । इति राजनिर्घण्टः ॥

विटमाक्षिकः, पुं, ( विटप्रियो माक्षिकः । ) धातुविशेषः । तत्पर्य्यायः । ताप्यः २ नदीजः ३ कामारिः ४ तारारिः ५ । इति हेमचन्द्रः ॥

विटलवणं, क्ली, ( विटसंज्ञकं लवणम् । ) विडलवणम् । इति केचित् ॥

विटिः, स्त्री, ( विटतीति । विट् + इन् । स किन् । ) पीतचन्दनम् । इति शब्दमाला ॥

विट्, [ श् ] पुं, ( विश् + क्विप् । ) वैश्यः । (यथा मनुः । २ । ३६ ।
“गर्भाष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥”)
मनुजः । इत्यमरः ॥ ( यथा, रघुः । १ । ९३
“अथ प्रदोषे दोषज्ञः संवेशाय विशाम्पतिम् । सूनुः सूनृतवाक् स्रष्टुः विससर्ज्जोर्जितश्रियम् ॥”)
प्रवेशः । इति विश्वः ॥

विट्, [ ष् ] स्त्री, ( विष व्याप्तौ + क्विप् । ) विष्ठा इत्यमरः ॥ कन्या । इति विट्पतिशब्ददर्शनात् ॥ ( व्याप्ते, त्रि । यथा, ऋग्वेदे । ८ । १९ । ११ ।
“हृदा वा वेविषद्विषः ।”
“विषः व्याप्तान् देवान् वेविषत् प्रापयेत् ।” इति तद्भाष्ये सायणः ॥)

विट्कारिका, स्त्री, पक्षिविशेषः । तत्पर्य्यायः । कृष्णपी २ गोराटी ३ गोकिराटिका ४ । इति भूरिप्रयोगः ॥ विट्सारिका ५ । इति हारावली ॥

विट्खदिरः, पुं, ( विड्वत् दुर्गन्धः खदिरः । ) विष्ठावद्गन्धखदिरः । गुयेबावला इति भाषा ॥ तत्पर्य्यायः । अरिमेदः २ । इत्यमरः ॥ इरिमेदः ३ अमिमेदः ४ । इति शब्दरत्नावली ॥ इरिमेदः ५ कालस्कन्धः ६ अरिमेदकः ७ । अस्य गुणाः । कषायत्वम् । उष्णत्वम् । मुखदन्तगदास्रकण्डूविषश्लेष्मक्रिमिकुष्ठव्रणघ्नत्वाशित्वञ्च । इति भावप्रकाशः ॥ राजनिर्घण्टोक्तगुणपर्य्यायौ अरिमेदशब्दे द्रष्टव्यौ ॥

विट्चरः, पुं, ( विषि विष्ठायां चरतीति । चर + टः । ) ग्राम्यशूकरः । इत्यमरः ॥

विट्पतिः, पुं, (विषः कन्यायाः पतिः ।) जामाता । इति जटाधरः ॥ ( यथा, मनुः । ३ । १४८ ।
“मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् । दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥”॥
वैश्यानां पतिः । यथा, भागवते ।४।७३ । ३७ ।
“वैश्यः पठन् विट्पतिः स्यात् शूद्रः सत्तमतामियात् ॥”
“विशां मन्वादीनां वैश्यादीनां वा पतिः स्यात् ।” इति तट्टीका ॥ )

विट्सारिका, स्त्री, (विट्प्रिया सारिका ।) पक्षिविशेषः । इति जटाधरः ॥ गुये शालिक इति भाषा ॥

विठरः, पुं, वाग्मी । इति संक्षिप्तसारोणादिवृत्तिः ॥

विड, आक्रोशे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) वेडति शत्रुं बली । इति दुर्गादासः ॥

विडं, क्ली, ( विड आक्रोशे + इगुपधेति कः । ) लवणविशेषः । विट्लुण इति भाषा । यथा,— "पाक्यं विडञ्च क्लके द्वयम् ।" इत्यमरः ॥ द्वे सस्वर्जीक्षारलवणानां लवणत्वमिलितानां पाचयित्वा निष्पादिते लवणे । विट्लवणे । इति केचित् । क्लके कृत्रिमे । पाक्यविड्लवणयोर्भेदेऽपि क्लतत्त्वात् ऐक्यमिति स्वामी । पच्यते इति पाक्यम् । डु पच ष पाके ऋहलोर्ण्यत् इति ण्यत् चजोः कु घिण्ण्यतोरिति कः पाकेन निष्पादितमिति स्वामी च । वेडति भिनत्ति विडं विड आक्रोशे इगुपधत्वात् कः । इति भरतः । तत्पर्य्यायः । विड्गन्धम् २ कालवणम् ३ विड्लवणम् ४ । इति रत्नमाला ॥ द्राविडकम् ५ खण्डम् ६ क्लतकम् ७ क्षारम् ८ आसुरम् ९ सुपाक्यम् १० खण्डलवणम् ११ धूर्त्तम् १२ कृत्रिमकम् १३ । अस्य गुणाः । उष्णत्वम् । दीपनत्वम् । रुच्यत्वम् । वातार्त्तीर्णशूलगुल्ममेहनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।

"विडं सक्षारमूर्द्ध्वाधः कफं वातानुलोमनम् ॥
करोति कफमधो वातं सञ्चारयेदित्यर्थः ।
दीपनं लघु तीक्ष्णोष्णं रूक्षं रुच्यं व्यवायि च ।
विबन्धानाहविष्टम्भहृद्गौरवशूलनुत् ॥"

इति भावप्रकाशः ॥

अन्यच्च ।

"विडं सलवणस्नेहि वह्निर्बलविवर्द्धनम् ।
अनवातामविष्टम्भशूलाटोपविबन्धनुत् ॥"

इति राजवल्लभः ॥

विडङ्गं, क्ली पुं, ( विड आक्रोशे + "विडादिभ्यः कित् ।" उणा० १ । १२० । इति अङ्गच् । स च कित् । ) क्रिमिघ्नौषधम् । ( यथा, बृहत्संहितायाम् । ५५ । ७ ।

"दृतोशीरतिलक्षौद्रविडङ्गक्षीरगोमयैः ।
आमूलस्कन्धलिप्तानां सङ्क्रामणविरोपणम् ॥" )

तत्पर्य्यायः । वेल्लम् २ अमोघा ३ चित्रतण्डुला ४ तण्डुलः ५ क्रिमिघ्नः ६ । इत्यमरः ॥ रसायनः ७ पावकः ८ भस्मकम् ९ । इति जटाधरः । वेल्लुः १० मोघा ११ तण्डुः १२ । इति शब्दरत्नावली ॥ जन्तुघ्नम् १३ चित्रतण्डुलम् १४ क्रिमिघ्नम् १५ क्रिमिशत्रुः १६ गर्द्दभम् १७ केवलम् १८ । इति रत्नमाला ॥ विडङ्गा १९ कृमिघ्ना २० चित्रा २१ तण्डुला २२ तण्डुलीयका २३ वातारितण्डुला २४ जन्तुघ्नी २५ मृगगामिनी २६ कैराली २७ गहरा २८ कापाली २९ वरासुः ३० चित्रबीजा ३१ अमृतघ्नी ३२ । अस्य गुणाः । कटुत्वम् । उष्णत्वम् । लघुत्वम् । वातकफार्त्तिमान्द्यारुचिभ्रान्तिक्रिमिदोषविनाशित्वञ्च । इति राजनिर्घण्टः ॥ ईषत्तिक्तत्वम् । क्रिमिविषनाशित्वञ्च । इति राजवल्लभः ॥

"विडङ्गं कटु तीक्ष्णोष्णं रूक्षं वह्निकरं लघु ।
शूलाध्मानोदरश्लेष्मक्रिमिवातविबन्धनुत् ॥"

इति भावप्रकाशः ॥

विडम्बः, त्रि, (विड + अम्बच् ।) अभिज्ञः । इति मेदिनी । गे, ४९ ॥

विडम्बनं, क्ली, (वि + डम्ब + ल्युट् ।) अनुकरणम् । यथा,—

"न वेद कश्चिद्भगवंश्चिकीर्षितं
तवेहमानस्य नृणां विडम्बनम् ।
न यस्य कश्चिद्दयितोऽस्ति कर्हिचि-
द्द्वेष्यश्च यस्मिन् विषमा मतिर्नृणाम् ॥"

इति श्रीभागवते । १ । ८ । २९ ॥

प्रतारणम् । यथा, तत्रैव ।

"जन्म कर्म्म च विश्वात्मन्नजस्याकर्त्तुरात्मनः ।
तिर्य्यङ्नृषिषु यादःसु तदत्यन्तविडम्बनम् ॥" ३० ॥

विडम्बना, स्त्री, ( वि + डम्ब + णिच् + युच् । टाप् । ) अनुकरणम् । ( यथा, कुमारे । ४ । १२ ।

"अथ ते मयि वाक्यमीदृशः
प्रमदानामधुना विडम्बना ।" )

प्रतारणम् । ( यथा, पञ्चतन्त्रे । ४ । ४६ ।
"नो चेदेतेषां सकाशात् विडम्बनां प्राप्य मरिष्यति ।" ) परिहासः । यथा, कुमारे । ५ । ७० ।

"इयञ्च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्य्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥" )

विडम्बितः, त्रि, ( वि + डम्ब + क्तः । ) कृतविडम्बनः । तत्पर्य्यायः । व्यस्तः २ आकुलः ३ दुर्गतः ४ । इति शब्दमाला ॥ ( अनुकृतः । यथा, रघुः । ३ । ५२ ।

"अतिष्ठदालीढविशेषशोभिना
वपुःप्रकर्षेण विडम्बितेश्वरः ॥" )

विडारकः, पुं, ( विडाल एव । स्वार्थे कन् । लस्य रः । ) विडालः । इति शब्दरत्नावली ॥

वि(बि)डालः, पुं, ( विड आक्रोशे + "तमिविशिविडीति ।" उणा० १ । ११७ । इति कालन् । ) नेत्रपिण्डः । इति मेदिनी । ले, १३३ ॥ नेत्रौषधविशेषः । इति भावप्रकाशः ॥ स्वनामख्यातपशुः । बिल्ली इति हिन्दीभाषा । तत्पर्य्यायः । ओतुः २ मार्ज्जारः ३ वृषदंशकः ४ आखुभुक् ५ । इत्यमरः ॥ विरालः ६ बिलालः ७ । इति तट्टीका ॥ दीप्ताक्षः ८ नक्तचारी ९ जाहकः १० विडारकः ११ । इति शब्दरत्नावली ॥ मिशकुः १२ मिकापः १३ मेनादः १४ छुरकः १५ । इति जटाधरः ॥ भूमिकारातिः १६ शालावृकः १७ मायावी १८ दीप्तलोचनः १९ । इति राजनिर्घण्टः ॥ ( यथा, मनुः । ११ । १६० ।

"विडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च ।
केशकीटावपन्नञ्च पिबेद्ब्रह्मसुवर्चलाम् ॥" )

वि(बि)डालकं, क्ली, हरितालम् । इति हेमचन्द्रः ॥

वि(बि)डालकः, पुं, ( विडाल एव । स्वार्थे कन् । ) विडालः । नेत्ररोगस्य औषधविशेषः । यथा । अथ विडालकविधिः ।

"विडालको बहिर्लेपो नेत्रे पक्ष्मविवर्ज्जिते ।
तस्य मात्रा परिज्ञेया मुखालेपविधानवत् ॥"

मुखालेपो यथा,—

"प्रथमस्य चतुर्थांशो मुखालेपः कनिष्ठकः ।
मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्द्धाङ्गुलो भवेत् ॥
स्थितिकालोऽपि तस्योक्तो यावत् कल्को न शुष्यति ।
तेनापि गुणहीनः स्यात्तथा दूषयति त्वचम् ॥"

स यथा ।

"यष्टीगैरिकसिन्धूत्थदार्व्वीतार्क्ष्यैः समांशकैः ।"
जलपिष्टैर्बहिर्लेपः सर्व्वनेत्रामयापहः ॥"

तार्क्ष्यं रसाञ्जनम् ।

"रसाञ्जनेन वा लेपः पथ्याबिल्वदलैरपि ।
वचाहरिद्राविश्वैर्व्वा तथा नागरगैरिकैः ॥"

इति भावप्रकाशः ॥

वि(बि)डालपदः, पुं, तोलकद्वयपरिमाणम् । यथा,

"तोलौ द्वौ पिचुरक्षश्च सुवर्णकडवग्रहः ।
विडालपदकर्षौ च पाणितलतदुम्बरम् ॥"

इति शब्दमाला ॥

मार्ज्जारचरणी, स्त्री ॥

वि(बि)डालपदकं, क्ली, कर्षपरिमाणम् । इति वैद्यकपरिभाषा ॥

वि(बि)डाली, स्त्री, विदारी । इति राजनिर्घण्टः ॥ ( मार्ज्जारी । )

विडीनं, क्ली, ( वि + डी + क्तः । ) खगगतिविशेषः । यथा,—

"डीनं प्रडीनमुड्डीनं संडीनं परिडीनकम् ।
विडीनमवडीनञ्च निडीनं डीनडीनकम् ॥
गतागतप्रगतिलक्ष्यताद्याश्च पक्षिणाम् ।
गतिभेदाः पक्षिरवं कुलायो नीडमस्त्रियाम् ॥"

इति जटाधरः ॥

विडुलः, पुं, वेतसवृक्षः । इति हेमचन्द्रः ॥

विडोजाः, [ स् ] पुं, ( विष व्याप्तौ + क्विप् । विट् व्यापकं ओजो यस्य । ) इन्द्रः । इत्यमरः ॥

विडौजाः, [ स् ] पुं ( विडं आक्रोशि प्रभूतबलवत्त्विषु ओजो यस्य । ) इन्द्रः । इति भरतीयद्विरूपकोषः ॥ ( यथा, रघौ । ३ । ५९ ।

"रघुः शशाङ्कार्द्धमुखेन पत्रिणा
शरासनज्यामलुनाद्विडौजसः ॥" )

विड्, [ श् ] पुं, ( विशतीति । विश + क्विप् । ) वैश्यः । यथा विट् विड् विशौ विशः । इति मुग्धबोधव्याकरणम् ॥ ( मनुजः । विशांपतिशब्ददर्शनात् ॥ )

विड्, [ ष् ] स्त्री, विष्ठा । इति विड्गन्धादिशब्ददर्शनात् ॥

विड्गन्धं, क्ली, ( विड्वत् गन्धो यस्य । ) विड्लवणम् । इति रत्नमाला ॥

विड्जः, त्रि, विष्ठाजातः । विष्शब्दपूर्व्वकजनधातोर्डप्रत्ययेन निष्पन्नः ॥

विड्लवणं, क्ली, ( विड्वत् दुर्गन्धं लवणम् । ) विडम् । इति रत्नमाला ॥ विट्लुण इति भाषा ॥

विड्वराहः, पुं, ( विट्प्रियो वराहः । ) ग्राम्यशूकरः । इति जटाधरः ॥ ( यथा, मनुः । ५ । १९ ।

"इत्वाकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेद्द्विजः ॥")
वितंसः, पुं, (वि+तंस+घञ् ।) वीतंसः । मृगपक्षिणां बन्धनोपकरणम् । इत्यमरटीकायां भरतः ॥
वितण्डा, स्त्री, (वितण्ड्यते विहन्यते परपक्षोऽनयेति । वि+तडि+गुरोश्चेत्यः । टाप् ।) स्वपक्षस्थापना परपक्षदूषणम् । इत्यमरभरतौ ॥ (यथा, महाभारते । २ । ३६ । ३ ।
"एवमेतन्न चाप्येवमेवं चैतन्न चान्यथा ।
प्रब्रुवन्त्विह वादाश्च वितण्डां वै परस्परम् ॥")
कम्बीशाकः । शिलाह्वयः । करवीरी । इति मेदिनी । डे, ३६ ॥ दर्व्वी । इति हारावली ॥
विततं, त्रि, (वि+तन+क्तः ।) विस्तृतम् । (यथा, प्रबोधचन्द्रोदये । १ । ५ ।
"उद्गायन्ति यशांसि यस्य विततैर्नादैः प्रचण्डानिल-
प्रक्षुभ्यत्करिकुम्भकूटकुहरव्यक्तै रणाब्धौ जयः ॥")
वीणादिवाद्यम् । इत्यमरे ततशब्दार्थदर्शनात् ॥
विततिः, स्त्री, विस्तारः । विपूर्व्वतनधातोः क्तिप्रत्ययेन निष्पन्ना ॥ (यथा, भागवते । ८।१०।२५ ।
"वर्णैर्हि सेतुमिव ते यशसो वितत्य
गायन्ति दिग्विजयिनो यदुपेन्द्र भूपाः ॥")
वितथं, त्रि, मिथ्या । इत्यमरः ॥ (यथा, मनुः । ८ । ६४ ।
"अवाक्शिरास्तमस्यन्धे किल्विषी नरकं व्रजेत् ।
यः प्रश्नं वितथं ब्रूयात् पृष्टः सन् धर्म्मनिश्चये ॥"
निष्फलः । व्यर्थः । यथा, भागवते । ८।१०।३५ ।
"तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ।
मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ॥"
पुं, भरद्वाजपुत्रः । स च दौष्मन्तेर्भरतस्य पौत्रः । यथा, हरिवंशे । ३२ । १८—१९ ।
"ततोऽथ वितथो नाम भरद्वाजात् सुतोऽभवत् ।
पौत्रेऽथ वितथे जाते भरतस्तु दिवं ययौ ॥
वितथञ्चाभिषिच्याथ भरद्वाजो वनं ययौ ॥")
वितथ्यं, त्रि, असत्यम् । वितथशब्दात् स्वार्थे ष्यप्रत्ययेन निष्पन्नम् ॥
वितद्रुः, स्त्री, (विततोतीति । वि+तन+"जत्वादयश्च ।" उणा० ४ । १०२ । इति द्रुप्रत्ययेन साधुः ।) नदीविशेषः । सा च पञ्जाबाख्यदेशे वर्त्तते । इत्युणादिकोषः ॥
वितरणं, क्ली, (वि+तॄ+भावे ल्युट् ।) दानम् । इत्यमरः ॥ (यथाह कश्चित् ।
"विभवेन किं वितरणं यदि नास्ति तस्य ॥")
वितर्कः, पुं, (वि+तर्क+घञ् ।) ऊहः । (यथा, भागवते । १० । ८९ । १ ।
"सरस्वत्यास्तटे राजन् ऋषयः सत्रमासत ।
वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥")
संशयः । इति मेदिनी । के, १५७ ॥ (यथा, महाभारते । १ । १६० । २३ ।
"यौ तौ कुमाराविव कार्त्तिकेयौ
द्वावश्विनेयाविति मे वितर्कः ॥")
आशङ्कापकः । इति शब्दरत्नावली ॥ * ॥ आहो उताहो किमुत किं किमु उत एते षट् विकल्पवितर्कार्थे । यथा स्थाणुराहो पुरुषः । इति आहो इत्यादि च । विकल्पे विकल्पेऽप्याहो इति रुद्रः । किमु इत्यन्तं उत इत्यादि । चकारात् उताहोस्वित् आहोस्विदिति च यथा भारते । "उताहोस्विद्दुर्वेदात्मनः परपुरञ्जयः ।" इति आहोस्विन्मुखमिति भारवौ । इति भरतः ॥
वितर्कणं, क्ली, (वि+तर्क+ल्युट् ।) वितर्कः । इति शब्दरत्नावली ॥
वित(र्द्धि)र्द्दिः, स्त्री, (वि+तर्द्द हिंसायाम्+"सर्व्वधातुभ्य इन् ।" उणा० ४ । ११७ । इति इन् ।) वेदिका । इत्यमरः ॥ (यथा, माघे ।३।५५।
"रत्नान्तरे यत्र गृहान्तरेषु
वितर्द्दिनिर्य्यूहविटङ्कनीडः ॥")
वित(र्द्धि)र्द्दिका, स्त्री, (वितर्द्दिरेव । स्वार्थे कन् ।) वेदिका । इति शब्दरत्नावली ॥ (यथा, राजतरङ्गिण्याम् । ८ । २३८५ ।
"सैमराजाभिधानेन डामरेणेव सोऽन्वितः ।
शिलां वितर्द्दिकातुल्यामध्यास्त स्वप्नमध्यगाम् ॥")
वितर्द्दी, स्त्री, (वितर्द्दि+कृदिकारादिति ङीष् ।) वेदिका । इति शब्दरत्नावली ॥
वितर्द्धी, स्त्री, वेदिका । इत्यमरटीकायां भरतः ।
वितलं, क्ली, (विशिष्टं तलम् ।) पातालभेदः । यथा,—
"अतलं वितलञ्चैव वितलञ्च गभस्तिमत् ।
तलं सुतलपाताले पातालाः स्युः तु सप्त वै ॥"
इति शब्दरत्नावली ॥
(अस्य विवरणं यथा, देवीभागवते । ८ । १९ । ८—१२ ।
"द्वितीयविवरस्याथ वितलस्य निबोधत ।
भूतलाधस्तले चैव वितले भगवान् भवः ॥
हाटकेश्वरनामायं स्वपार्षदगणैर्वृतः ।
प्रजापतिकृतस्यापि सर्गस्य तु हिताय च ॥
भवान्या मिथुनीभूय आस्ते देवाधिपूजितः ।
भवयोर्वीर्य्यसम्भूता हाटकी सरिदुत्तमा ॥
समिद्धो मरुता वह्निरोजसा पिबतीव हि ।
तन्निष्ठ्यूतं हाटकाख्यं सुवर्णं दैत्यवल्लभम् ॥
दैत्याङ्गनाभूषणार्थं सदा धारयन्ति हि ॥")
वितस्तिः, पुं स्त्री, (वि+तसु उपक्षेपे+"वौ तसेः ।" उणा० ४ । १८१ । इति तिः ।) विस्तृतसकनिष्ठाङ्गुष्ठः । बिगत् इति भाषा ॥ तत्पर्य्यायः । द्वादशाङ्गुलः २ । इत्यमरः ॥ (यथा, मार्कण्डेये । ४९ । ३९ ।
"द्वे वितस्ती तथा हस्तो ब्राह्मतीर्थादिवेष्टनम् ॥")
वितानं, क्ली, (वितन्यते यत् । वि+तन+घञ् ।) तुच्छविशेषः । इति मेदिनी । ने, १३९ ॥ अवसरः । इति विश्वः ॥
वितानः, पुं क्ली, (वि+तन्+घञ् ।) क्रतुः (यथा, माघे । १४ । १० ।
"सोमपायिनि भविष्यते मया
वाञ्छितोत्तमवितानयाजिना ॥")
विस्तारः । (यथा, भागवते । ३ । ७ । ३१ ।
"यज्ञस्य च वितानानि योगस्य च पथं प्रभो ।
नैष्कर्म्म्यस्य च सांख्यस्य तन्त्रं वा भगवत्-स्मृतम् ॥")
उल्लोचः । इत्यमरः ॥ चाँदोया इति भाषा । अस्य पर्य्यायश्चन्द्रातपशब्दे द्रष्टव्यः ॥ (यथा, रघुः । १७ । २८ ।
"वितानसहितं तत्र भेजे पैतृकमासनम् ।
चूडामणिभिरुद्घृष्टपादपीठं महीक्षिताम् ॥"
समूहः । यथा, माघे । ११ । ४३ ।
"नवकनकपिशङ्गं वासराणां विधातुः
ककुभि कुलिशपाणेर्भाति भासां वितानम् ॥"
शयनस्थानविशेषः । यथा, सुश्रुते । १ । १८ ।
"तत्र कोशदामस्वस्तिकानुवेल्लितप्रतोलीमण्डलस्थगिकायमकखट्वाचीनविबन्धवितानगोफणाः
पञ्चाङ्गी चेति चतुर्द्दशबन्धविशेषाः ॥" )
वितानः, त्रि, (वि+तन+घञ् ।) तुच्छः । (यथा, रघुः । ९ । ५० ।
"गगनमश्वखुरोद्धतरेणुभि-
र्नृसविता स वितानमिवाकरोत् ॥")
मन्दः । इत्यमरः ॥ शून्यः । इति धरणिः ॥ (यथा, माघे । ३ । ५० ।
"हृद्यस्तुलैरप्यतुलैर्वितान-
मालापिनद्धैरपि चावितानैः ॥")
वितानकः, पुं क्ली, (वितान एव । स्वार्थे कन् ।) चन्द्रातपः । इति शब्दमाला ॥ (यथा, कथासरित्सागरे । ४८ । ६६ ।
"तदा नैमैत्तमयोत्थं सान्ध्यकालं बभौ दिवि ।
रक्तचन्द्रातपत्यर्के वितानकमिवाततम् ॥"
समूहः । यथा माघे । ६ । २७ ।
"अनुययौ विविधोपलकुण्डल-
द्युतिवितानकसंवलितांशुकम् ॥")
वितानकः, पुं, (वितान इव प्रतिकृतिः । वितान+कन् ।) माडवृक्षः । इति राजनिर्घण्टः ॥
वितानमूलकं, क्ली, (वितानतुल्यं मूलं यस्य । बहुव्रीहौ कन् ।) उशीरम् । इति राजनिर्घण्टः ॥
वितुन्नं, क्ली, (वि+तुद+क्तः ।) सुनिषण्णकम् । इत्यमरः ॥ शैवालकम् । इति मेदिनी । ने, १३१ ॥
वितुन्नकं, क्ली, (वितुन्नमिव । इवार्थे कन् ।) धान्यकम् । तुत्थम् । इत्यमरः ॥
वितुन्नकः, पुं, आमलकी । इत्यमरः ॥
वितुन्ना, स्त्री, भूम्यामलकी । इति राजनिर्घण्टः ॥
वितुन्निका, स्त्री, (वितुन्ना+स्वार्थे कन् । टापि अत इत्वम् ।) भूम्यामलकी । इति राजनिर्घण्टः ॥
वित्त, त क त्यागे । इति कविकल्पद्रुमः ॥ (अदन्त-चुरा०-पर०-सक०-सेट् ।) वित्तयति । वित्तापयति । इति दुर्गादासः ॥

वित्तं, क्ली, (विद + क्तः। "वित्तो भोगप्रत्यययोः।" ८। २। ५८। इति साधुः।) धनम्। इत्यमरः॥ (यथा, मनुः। ८। ३६।
"अनृतन्तु वदन् दण्ड्यः स्ववित्तस्यांशमष्टमम्।
तस्यैव वा निधानस्य संख्यायाल्पीयसीं
कलाम्॥")

वित्तः, त्रि, (विद् + क्तः। "नुदविदेति।" ८। २। ५६। इति पक्षे नत्वाभावः।) विचारितः। विख्यातः। इत्यमरः॥ लब्धः। इति तट्टीकायां रामाश्रमः॥ (विख्यातः। अथ वित्तो भोगप्रत्यययोः इति साधुः। यथा च पाणिनिः। "तेन वित्तश्चुञ्चुप्चणपौ।" ५। २। २६॥)

वित्तदः, त्रि, धनदाता। वित्तं ददाति य इत्यर्थे कप्रत्ययेन निष्पन्नः॥

वित्तिः, स्त्री, (विद् + क्तिन्।) विचारः। लाभः। (यथा, वाजसनेयसंहितायाम्। १८। १४।
"मे वित्तञ्च मे वित्तिश्च मे भूतञ्च मे भूतिश्च मे यज्ञेन कल्पन्ताम्॥") सम्भावना। इति मेदिनी। ते, ५६॥ ज्ञानम्। इति हेमचन्द्रः॥

वित्तेशः, पुं, (वित्तानामीशः।) कुबेरः। यथा,—
"त्वं ब्रह्मा हरिहरसंज्ञितस्त्वमिन्द्रो
वित्तेशः पितृपतिरम्बुपः समीरः।
सोमोऽग्निर्गगनमहीधरोऽब्धिरूपः
किंस्तव्यं सकलमरस्वरूपधाम्नः॥"
इति मार्कण्डेयपुराणे। १०४। ३७॥

वित्रस्तः, त्रि, त्रासयुक्तः। विपूर्व्वत्रसधातोः क्तप्रत्ययेन निष्पन्नः॥

वित्रासः, पुं, भयम्। विपूर्व्वत्रसधातोर्भावे घञ्प्रत्ययेन निष्पन्नः॥ (यथा, भागवते। १०। ५०। १६।
"ततोऽभूत् परसैन्यानां हृदि वित्रासवेपथुः॥")

वित्सनः, पुं, वृषभः। इति शब्दचन्द्रिका॥

विथ, ऋ ङ याचे। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-द्विक०-सेट्।) वेथते। इति दुर्गादासः॥

विथुरः, पुं, (व्यथते इति। व्यथ भयचलनयोः। "व्यथेः संप्रसारणं किच्च।" उणा० १। ४०। इति उरच्। स च कित् सम्प्रसारणञ्च धातोः।) चौरः। राक्षसः। इत्युणादिकोषः॥ (स्त्री, भर्तृवियुक्ता नारी। यथा, ऋग्वेदे। १। ८७। ३।
"प्रैषामज्मेषु विथुरेव रेजते भूमिः॥
"विथुरेव यथा भर्त्रा वियुक्ता जाया राजोपद्रवादिषु सत्सु निरालम्बा सती कम्पते तद्वत्।"
इति तद्भाष्ये सायणः॥)

विथ्या, स्त्री, गोजिह्वा। इति शब्दचन्द्रिका॥

विद, ऌ प श औ लाभे। इति कविकल्पद्रुमः॥ (तुदा०-उभ०-सक०-अनिट्।) ऌ, अविदत्। प श च, विन्दति विन्दते। औ, वेत्ता। इति दुर्गादासः॥

विद, क ङ च चेतनाख्याननिवासवादे। इति कविकल्पद्रुमः॥ (चुरा०-आत्म०-उभ०-च-सक०-वासे स्थैर्य्ये च अक०-सेट्।) चेतना ज्ञानम्। वादः स्थैर्य्यम्। क ङ, वेदयते शास्त्रं धीरः ज्ञानातीत्यर्थः। वेदयते स्वार्थं लोकः आख्यातीत्यर्थः। वेदयते तीर्थे साधुर्वसतीत्यर्थः। वेदयते वृक्षः स्थिरः स्यादित्यर्थः। च, वेदयति वेदयते। केचित्तु वादं न पठन्ति। चेतनाख्याने वेदनेति पठित्वा वेदयते दुःखं व्यथते इत्यर्थः। इत्युदाहरन्ति। अस्मात् परस्मैपदमप्यमानाजिनां सपत्नेन निवेदयिष्यत इति निवेदनं करोतीत्यर्थे ण्यौ समादधते। इति दुर्गादासः॥

विद, ध औ मीमांसे। इति कविकल्पद्रुमः॥ (रुधा०-आत्म०-सक०-अनिट्।) मीमांसा विचारणम्। ध घ, विन्ते शास्त्रं धीरः। औ वेत्ता। इति दुर्गादासः॥

विद, य ङ औ भावे। इति कविकल्पद्रुमः॥ (दिवा०-आत्म०-अक०-अनिट्।) भावः सत्ता स चेह विद्यमानतैव। य ङ, विद्यते विष्णुः। औ, वेत्ता। इति दुर्गादासः॥

विद, ल मतौ। इति कविकल्पद्रुमः॥ (अदा०-पर०-सक०-सेट्।) ल, वेत्ति। इति दुर्गादासः॥

विदंशः, पुं, (वि + दंश + घञ्।) अवदंशः। इति राजनिर्घण्टः॥

विदः, पुं, पण्डितः। विदधातोः कर्त्तरि कप्रत्ययेन निष्पन्नः॥

विदग्धः, त्रि, (वि + दह + क्तः।) नागरः। इति त्रिकाण्डशेषः॥ (यथा, देवीभागवते। ६।
"विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत्॥")
निपुणः। इति त्रिकाण्डशेषः॥ (यथा आर्य्यासप्तशत्याम्। ५०६।
"निद्रां न सुखं नाङ्गं न पश्यति चरणाः पराङ्गेषु।
असृष्ट्रतेव नलिन्या विदग्धमधुपेन मधु पीतम्॥")
पण्डितः। इति शब्दरत्नावली॥ (विशेषेण दग्धः। यथा, सुश्रुते। ४। १।
"शोफयोरुपनाहन्तु कुर्य्यादामविदग्धयोः।
अविदग्धः शमं याति विदग्धः पाकमेति च॥")

विदग्धता, स्त्री, विदग्धत्वम्। विदग्धस्य भाव इत्यर्थे ताप्रत्ययेन निष्पन्ना॥

विदग्धा, स्त्री, (विदग्ध + टाप्।) परकीयान्तर्गतनायिकाभेदः। यथा। गुप्ताविदग्धालक्षिताकुलटानुशयानामुदिताप्रभृतीनां परकीयाया एवान्तर्भावः। अस्या लक्षणम्। वाक्कौशलयुक्तत्वम्। सा च द्विविधा। वाग्विदग्धा क्रियाविदग्धा च। प्रथमा यथा,—
"निविडतमतमालमञ्जुवल्ली-
विचकिलराजिविराजितोपकण्ठे।
पथिकसमुचितस्तवाद्य तीरे
सवितरि तत्र सरित्तटे निवासः॥"
द्वितीया यथा,—
"दासाय भवनाथे वदरीमपनेतुमादिशति।
हेमन्ते हरिणाक्षी पयसि कुठारं विनिक्षिपति॥"
इति रसमञ्जरी॥

विदथः, पुं, (वेत्तीति। विद + "रविदिभ्यां कित्।" उणा० ३। ११६। इति अथः। स च कित्।) योगी। व्रती। इति मेदिनी। थे, २४॥ (यज्ञः। इति निघण्टुः। ३। १७। "विद ज्ञाने विद विचारणे विदॢलाभे विद सत्तायाम्। 'रविदिभ्यां कित्।' इति अथप्रत्ययः। ज्ञायते हि यज्ञः। लभते हि दक्षिणादिरत्न। विचार्य्यते हि विद्वद्भिः। भावयत्नेन फलम्॥" इति तत्र देवराजयज्वा॥ *॥ वेदितव्ये, त्रि। यथा, ऋग्वेदे। ३। २७। ७।
"होता देवो अमर्त्यः पुरस्तादेति मायया।
विदथानि प्रचोदयन्॥")

विदन्, [त्] त्रि, पण्डितः। विदधातोः शतृप्रत्ययेन निष्पन्नः॥

विदरं, क्ली, (विदीर्य्यतेऽनेनेति। वि + दृ + अप्।) विषसारकम्। इति शब्दचन्द्रिका॥ फणीमनसा इति भाषा॥ (विदीर्णे, त्रि। यथा, कामन्दकीये नीतिसारे। १६। १०।
'अल्पदर्भोपला स्निग्धा लतिका विदरा स्थिरा।
निःशर्करा च निःपङ्का तापसारा च
वारिभूः॥')

विदरः, पुं, (वि + दृ + "ऋदोरप्।" ३। ३। ५७। इति अप्।) विदरणम्। फाटन इति चेरण इति च भाषा। तत्पर्य्यायः। स्फुटनम् २ भिदा ३। इत्यमरः॥ दारणम् ४ विदारणम् ५। इति शब्दरत्नावली॥

विदर्भः, पुं, स्त्री, (विगता दर्भाः कुशा यत्र।) कुण्डिननगरम्। इति हेमचन्द्रः॥ स तु वङ्गदेशस्य दक्षिणपश्चिमे वर्त्तते अधुना वडनागपुर इति ख्यातः॥ *॥ यथा, पूर्व्वनैषधे २ सर्गः।
"स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपतिः।
यमवाप्य विदर्भभूः प्रभुं हसति द्यामपि शक्रभर्तृकाम्॥"
(यथा च रघुः। ५। ६०।
"एको ययौ चैत्ररथप्रदेशान्
सौराज्यरम्याननरो विदर्भान्॥"*॥
पु, नृपविशेषः। स च ज्यामघात् शैव्यायां जातः। अस्य कुशक्रथलोमपादाः पुत्राः। यथा, भागवते। ६। २४। १।
"तस्यां विदर्भोऽजनयत् पुत्रौ नाम्ना कुशक्रथौ।
तृतीयं रोमपादञ्च विदर्भकुलनन्दनम्॥"
अस्य नाम्नैव विदर्भनगरी समुत्पन्ना॥ मुनिविशेषः। यथा, हरिवंशे। १६६। ८४।
"द्वैपायनो विदर्भश्च जैमिनिर्माठरः कठः॥")

विदर्भजा, स्त्री, (विदर्भे जायते इति। जन + डः।) अगस्त्यपत्नी। तत्पर्य्यायः। कौशीतकी २ लोपामुद्रा ३। इति त्रिकाण्डशेषः॥ दमयन्ती। यथा, पूर्व्वनैषधे २ सर्गः।
"धृतलाञ्छनगोमयाञ्चनं
विधुमालेपनपाण्डरं विधिः।

"असमयज्ज्वलितं विदर्भजा-
नगरीराजनवर्द्धमानकम् ॥"
रुक्मिणी च ॥

विदर्भराजः, पुं, ( विदर्भाणां राजा । "राजाहःसखिभ्यष्टच् ।" इति टच् । ) विदर्भदेशाधिपतिः । तस्य नामान्तरं भीमराजः । यथा,—
"स्मरोपतप्तोऽपि भृशं न स प्रभु-
र्विदर्भराजं तनयामयाचत ।
त्यजन्त्यसून् शर्म्म च मानिनो वरं
त्यजन्ति न त्वेकमयाचितव्रतम् ॥"
इति पूर्व्वनैषधे । १ । ५० ॥

विदर्भसुभ्रूः, स्त्री, ( विदर्भस्य सुभ्रूः रमणी ।) दमयन्ती । यथा,—
"विदर्भसुभ्रूस्तनतुङ्गताप्तये
घटानिवापश्यदलं तपस्यतः ।
फलानि धूमस्य धयानधोमुखान्
स दाडिमे दोहदधूपिनि द्रुमे ॥"
इति पूर्व्वनैषधे १ सर्गः ॥

विदर्भाधिपतिः, पुं, ( विदर्भाणामधिपतिः । ) कुण्डिनपतिः । स च भीष्मकराजः रुक्मिणीपिता च । यथा,—
"तं वै विदर्भाधिपतिः समभ्येत्याभिवाद्य च ।
निवेशयामास मुदा कल्पितान्यनिवेशने ॥"
इति श्रीभागवतीयदशमस्कन्धे ५३ अध्यायः ॥

विदलं, क्ली, ( विघट्टितं दलं यस्य । ) द्विधाकृतकलायादि । दालि इति भाषा । स्वर्णादेरवयवः । दाडिमकल्कः । वंशादिकृतपात्रविशेषः । इति क्लीवलिङ्गसंग्रहे अमरभरतौ ॥

विदलः, पुं, ( विघट्टितानि दलानि यस्य । ) रक्तकाञ्चनः । इति शब्दरत्नावली ॥ पिष्टकः । इति शब्दचन्द्रिका ॥

विदला, स्त्री, ( विघट्टितानि दलानि यस्याः । ) त्रिवृत् । इति राजनिर्घण्टः ॥ पञ्चमुख्या । यथा,
"विशीर्णा विदला ह्रस्वा वक्रा स्थूला द्विधाकृता ।
कृमिदष्टा च दीर्घा च समिधो नैव कारयेत् ॥"
इति तन्त्रम् ॥

विदा, स्त्री, ( विद् ज्ञाने + "षिद्भिदादिभ्योऽङ् ।" ३ । ३ । १०४ । इत्यङ् । टाप् । ) ज्ञानम् । बुद्धिः । इति मेदिनी । दे, १४ ॥

विदायः, पुं, ( विगतो दायः साक्षात्करणादिरूपस्त्वर्णं येन । ) गमनानुमतिः । यथा,—
"स्वयं वा चम्पकवनं गच्छ वा तिष्ठ सुन्दरि ! ।
त्वयां रहस्य यास्यामि विशिष्टं कार्य्यमस्ति मे ।
विदायं देहि संप्रीत्या त्वयां मे प्राणवल्लभे ॥"
इति ब्रह्मवैवर्त्ते जन्मखण्डे श्रीराधां प्रति श्रीकृष्णवाक्यम् ॥

विदारः, पुं, ( वि + दॄ + घञ् । ) जलोच्छ्रासः । विदारणम् । इति मेदिनी । रे, ११६ ॥ युद्धम् । इति हेमचन्द्रः ॥

विदारकं, क्ली, (विदारयतीति । वि + दॄ + ण्वुल् ।) वज्रक्षारम् । इति राजनिर्घण्टः ॥

विदारकः, पुं, (विदारयति जलयानादीनिति । वि + दॄ + ण्वुल् । ) जलमध्यस्थिततरुशिलादिः । तत्पर्य्यायः । कूपकः २ । इत्यमरः ॥ जलबन्धकः । इति शब्दरत्नावली ॥ शुष्कनद्यादौ जलार्थखातो गर्त्तः । इति सर्व्वधरः ॥ अतएव कूपा इव कूपकाः । कुत्सिताश्च कूपा इति वा । विदारयन्तीति विदारकाः । जलान्तर्गतास्तरुशिलादयोऽश्मानोकादिविदारकाः कूपकाः । इति स्वामी । बहुत्वमतन्त्रम् । इति भरतः ॥

विदारणं, क्ली, ( वि + दॄ + णिच् + भावे ल्युट् ।) विडम्बः । भेदः । इति मेदिनी । णे, १०७ ॥ ( यथा, हरिवंशे । ९५ । ७८ ।
"आयुधावाप्तिरत्रैव वपुषो वैष्णवस्य च ।
लब्धाच्च तेजसश्चैव पूतानाञ्च विदारणम् ॥")
मारणम् । इति शब्दरत्नावली ॥

विदारणः, पुं क्ली, (विदार्य्यन्ते शत्रवोऽस्मिन्निति । वि + दॄ + णिच् + ल्युट् । ) युद्धम् । इति मेदिनी । णे, १०७ ॥ (विदारयतीति । वि + दॄ + णिच् + ल्युः । विदारके, त्रि । यथा, मार्कण्डेये । २० । २ ।
"तस्यात्मजो महावीर्य्यो बभूवारिविदारणः ॥")

विदारणः, पुं, ( विदार्य्यतेऽसौ इति । वि + दॄ + णिच् + कर्म्मणि ल्युट् ।) कर्णिकारवृक्षः । इति शब्दचन्द्रिका ॥

विदारिका, स्त्री, (वि + दॄ + णिच् + ण्वुल् । टापि अत इत्वम् ।) शालपर्णी । इति शब्दरत्नावली ॥ ( यथा, वृहत्संहितायाम् । ७६ । ५ ।
"विदारिकाया स्वरसेन चूर्णं
सुदुर्मुहुर्भावितशोषितञ्च ।
शृतेन दुग्धेन सशर्करेण
पिबेत् स यस्य प्रमदाः प्रभूताः ॥")

विदारिणी, स्त्री, (विदारयतीति । वि + दॄ + णिनिः । ङीप् । ) काश्मरी । इति राजनिर्घण्टः ॥ ( विदारणकर्त्री । यथा, कथासरित्सागरे । ५३ । १७१ ।
"एकानंशे शिवे दुर्गे नारायणि सरस्वति ।
भद्रकाली महालक्ष्मि सिद्धे रुरुविदारिणि ॥")

विदारी, स्त्री, (विदारयतीति । वि + दॄ + णिच् + अच् । गौरादित्वात् ङीष् ।) शालपर्णी । इति मेदिनी ॥ भूमिकुष्माण्डः । तत्पर्य्यायः । क्षीरशुक्ला २ इक्षुगन्धा ३ क्रोष्ट्री ४ । इत्यमरः ॥ विदारिका ५ स्वादुकन्दा ६ सिता ७ शुक्ला ८ शृगालिका ९ वृष्यकन्दा १० बिडाली ११ वृष्यवल्लिका १२ भूकुष्माण्डी १३ स्वादुलता १४ गजेष्टा १५ वारिवल्लभा १६ गन्धफला १७ । अस्या गुणाः । मधुरत्वम् । शीतत्वम् । गुरुत्वम् । स्निग्धत्वम् । वातपित्तनाशित्वम् । कफकारित्वम् । पुष्टिबलवीर्य्यविवर्द्धनत्वञ्च । इति राजनिर्घण्टः ॥ विदारी वातपित्तघ्नी वृष्या बल्या रसायनी इति राजवल्लभः ॥ * ॥ अष्टादश-प्रकारकण्ठरोगान्तर्गत-रोगविशेषः । यथा, अथ विदारीमाह ।
"सदाहतोदं श्वयथुं सुताम्र-
मन्तर्गले पूतिविशीर्णमांसम् ।
पित्तेन विद्याद्वदने विदारीं
पार्श्वे विशेषात् स तु येन शेते ॥"
स पुरुषो येन पार्श्वेन विशेषाद्बाहुल्येन शेते तस्मिन् पार्श्वे वा विदारी भवति इत्यर्थः । इति भावप्रकाशः ॥ अस्याश्चिकित्सादि रोहिणी-शब्दे द्रष्टव्यम् ॥

विदारी, [न्] त्रि, विदारणकर्त्ता । विपूर्व्वदृधातोः कर्त्तरि णिन्प्रत्ययेन निष्पन्नः ॥

विदारीगन्धा, स्त्री, ( विदार्य्या भूमिकुष्माण्डस्येव गन्धो यस्याः । ) शालपर्णी । इत्यमरः ॥

विदालः, पुं, ककचपादः । कृकलासः । इति हारावली । २१८ ॥

विदाहि, [न्] क्ली, ( विदहतीति । वि + दह + णिनिः । ) दाहजनकद्रव्यम् । अस्य गुणौ । पित्ताम्लत्वकारित्वे । इति राजवल्लभः ॥ ( दाहजनकमात्रे, त्रि । यथा, गीतायाम् । १७ । ९ ।
"कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥")

विदिक्, [श्] स्त्री, ( दिग्भ्यां विगता ।) दिशोर्मध्यम् । अग्निनैरृतवायवीशानकोणचतुष्टयम् । तत्पर्य्यायः । अपदिशम् २ । इत्यमरः ॥ प्रदिक् ३ । इति जटाधरः ॥ विदिशम् ४ । इति शब्दरत्नावली ॥ कोणः ५ । इति राजनिर्घण्टः ॥ ( यथा, भागवते । ४ । १७ । १६ ।
"सा दिशो विदिशो देवी रोदसी चान्तरं तयोः ।
धावन्ती तत्र तत्रैनं ददर्शानुद्यतायुधम् ॥")

विदिक्पङ्गः, पुं, चरिताङ्गपक्षी । इति शब्दचन्द्रिका ॥

विदितं, त्रि, ( विद् + क्तः । ) अवगतम् । इत्यमरः ॥ ( यथा, महाभारते । ७ । २८ । २२ ।
"सवायः सधनुष्काहं ससुरासुरमानुषान् ।
शक्तो लोकानिमान् जेतुं तच्चापि विदितं
तव ॥")
अर्थितम् । इति मेदिनी । ते, १०९ ॥ उपगमः । इति शब्दरत्नावली ॥

विदितः, पुं, ( विदितं ज्ञानमस्यास्तीति । अर्श-आदित्वात् अच् । ) कविः । इति जटाधरः ॥ ( ज्ञानाश्रये, त्रि । यथा, किराते । १ । १ ।
"श्रियः कुरूणामधिपस्य पालनीं
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितः समाययौ
युधिष्ठिरं द्वैतवने वनेचरः ॥"

विदिथः, पुं, पण्डितः । योगी । इति शब्दरत्नावली हलायुधमेदिनी च ॥ मुद्राङ्कितमेदिन्यां हेमचन्द्रे च विदथ इति पाठः ॥

विदीर्णः, त्रि, ( वि + दॄ + क्तः । ) कृतविदारणः । चेरा इति भाषा । यथा,—
पितर ऊचुः ।
"आह्वानि नोऽधिक्षुभुजे प्रसभं तनूजै-
र्दत्तानि तीर्थसमयेऽप्यपिबत्तिलाम्बु ।

तस्योदरामलविदीर्णवपाद्य आच्छे-
नाक्षे नमो नृहरयेऽखिलधर्म्मगोप्त्रे ॥"
इति श्रीमद्भागवते ७ स्कन्धे ८ अध्यायः ॥
अपि च ।
"अद्यापि चिमती समस्तजगती सस्तोकशोकाकुला
राधा सम्भृतकाकुराकुलमसौ चक्रे तथा क्रन्दनम् ।
येन स्यन्दननेमिनिर्म्मितमहासीमन्तमस्मादिदं
हा सर्व्वं सहयापि निर्भरमभूद्दूराद्विदीर्णं मुदा ॥"
इत्युज्ज्वलनीलमणिः ॥
विदुः, पुं, ( वेत्ति संग्राममनेनेति । विद् + बाहु-लकात् कुः । ) गजकुम्भद्वयमध्यभागः । इत्यमरः ॥ ( अश्वकर्णाधोभागः । यथा, अश्ववैद्यके । २ । १४ ।
"विदुर्म्मर्म्मविदुश्चैव कर्णस्याधः प्रकीर्त्तितः ॥")
जानन्ति । इति क्रियापदम् ॥ ( यथा, महाभारते । १ । १२० । २८ ।
"अपत्यं नाम लोकेषु प्रतिष्ठा धर्म्मसंहिता ।
इति कुन्ति ! विदुर्धीराः शाश्वतं धर्म्मवादिनः ॥")
विदुरः, पुं, ( वेत्ति तच्छीलः । विद् + "विदिभिदिच्छिदेः कुरच् ।" ३ । २ । १६२ । इति कुरच् । ) नागरः । धीरः । कौरवाणां मन्त्री । इति मेदिनी । रे, ११५ ॥ विदुरोत्पत्तिर्यथा,—
"क्षेत्रेऽप्रजस्य वै भ्रातुर्म्मातोक्तो बादरायणः ।
धृतराष्ट्रञ्च पाण्डुञ्च विदुरञ्चाप्यजीजनत् ॥"
इति श्रीभागवते । ६ । २२ ॥
ज्ञातरि, त्रि । इत्यमरः ॥ * ॥
विदुलः, पुं, ( विशेषेण दोलयतीति । वि + दुल + कः । ) वेतसः । अम्बुवेतसः । इत्यमरः ॥ गन्धरसः । इति रत्नमाला ॥
विदुषी, स्त्री, ( वेत्तीति । विदेः शतुर्वसुः । उगितश्चेति ङीप् । ) पण्डिता स्त्री । इति मुग्धबोधव्याकरणम् ॥ ( यथा, नैषधे । २ ।
"चिकुरप्रकरा जयन्ति ते
विदुषी मूर्द्धनि सा बिभर्त्ति यान् ॥" )
विदुष्मती, त्रि, ( विद्वानस्ति अस्यामिति । विद्वस् मतुप् । स्त्रियां ङीप् ।) पण्डितवती । यथा,—
"योऽभ्यायत्यतिनैव पत्तनपुरी श्रीभाजिनैवाभवद्-
येनैकेन विदुष्मती वसुमती सुखेन संख्यावताम् ॥"
इति वोपदेवप्रशंसा ॥
विदूः, पुं, विदुः । गजकुम्भयोर्म्मध्यम् । इत्यमरटीका ॥
विदूरः, त्रि, ( विशिष्टं दूरं यस्य । ) अतिदूरस्थदेशादि । यथा,—
"मासानष्टौ तव जलधरोत्कण्ठया शुष्ककण्ठः
सारङ्गोऽसौ युगशतमिव व्यानिनायातिकष्टात् ।
आप्ता तावन्नवजलकणाभाजनत्वं विदूरे
वर्षारम्भप्रथमसमये हा कथं वज्रपातः ॥"
इति चातकाष्टकम् ।
( पर्व्वतविशेषे, पुं । यथा, कुमारे । १ । २४ ।
"तया दुहित्रा सुतरां सवित्री
स्फुरत्प्रभामण्डलया चकाशे ।
विदूरभूमिर्नवमेघशब्दा-
दुद्भिन्नया रत्नशलाकयेव ॥")
विदूरगः, त्रि, अतिदूरगन्ता । विदूरे गच्छतीत्यर्थे डप्रत्ययेन निष्पन्नः ॥
विदूरजं, क्ली, (विदूरे पर्व्वते जायते इति । जन + डः । ) विदूरपर्व्वतजरत्नम् । वैदूर्य्यमणिः । अतिदूरजाते, त्रि । इति केचित् ॥
विदूरथः, पुं, राजविशेषः । यथा,—
"मनोस्तु दक्षपुत्रस्य द्वादशस्यात्मजान् शृणु ।
देववानुपदेवश्च देवश्रेष्ठो विदूरथः ॥
मित्रवान् मित्रदेवश्च मित्रविन्दश्च वीर्य्यवान् ।
मित्रवाहः सुवर्च्चाश्च दक्षपुत्रमनोः सुताः ॥"
इति गारुडे ८७ अध्यायः ॥
( कुरुपुत्रः । यथा, महाभारते । १ । ९५ । ३९—४० ।
"कुरुः खलु दाशार्हीमुपयेमे शुभाङ्गीं नाम तस्यामस्य जज्ञे विदूरथः । विदूरथस्तु माधवीमुपयेमे संप्रियां नाम तस्यामस्य जज्ञे अनश्वा नाम ॥" * ॥ वृष्णिवंशीयानामन्यतमः । यथा, भागवते । ९ । २४ । १८ ।
"पृथुर्विदूरथाद्याश्च बहवो वृष्णिनन्दनाः ॥"
अस्य पुत्रः शूरः । यथा, तत्रैव । ९ । २४ । २६ ।
"शूरो विदूरथादासीत् भजमानस्तु तत्सुतः ।
शिनिस्तस्मात् स्वयं भोजो हृदिकस्तत्सुतो मतः ॥")
विदूरभूमिः, स्त्री, ( विदूरस्य भूमिः । ) विदूरदेशः । यत्र वैदूर्य्यमणिरुत्पद्यते । यथा,—
"तया दुहित्रा सुतरां सवित्री
स्फुरत्प्रभामण्डलया चकाशे ।
विदूरभूमिर्नवमेघशब्दा-
दुद्भिन्नया रत्नशलाकयेव ॥"
इति कुमारसम्भवम् ॥
विदूराद्रिः, पुं, ( विदूरनामकोऽद्रिः । ) विदूरपर्व्वतः । इति जटाधरः ॥
विदूषकः, त्रि, ( विदूषयति आत्मानमिति । वि + दूष + णिच् + ण्वुल् । ) कामुकः । तत्पर्य्यायः । विहूषकः २ वसन्तः ३ प्रहासः ४ कामकेलिः ५ पीठमर्द्दः ६ पीठमर्द्दः ७ भविकः ८ ह्रिदुरः ९ विटः १० । इति त्रिकाण्डशेषः ॥ चाटुवटुः ११ वासन्तिकः १२ केलिकिलः १३ वैहासिकः १४ प्रहासी १५ प्रीतिदः १६ । इति हेमचन्द्रः ॥ परनिन्दाकरः । इति मेदिनी । के, २१४ ॥ तत्पर्य्यायः । खलः २ रत्नकः ३ अभीकः ४ क्रूरः ५ सूचकः ६ कण्टकः ७ नागः ८ मलिनास्यः ९ परद्वेषी १० । इति शब्दमाला ॥ चतुर्थी-नायकान्तर्गतनायकविशेषः । तस्य लक्षणं यथा । अङ्गादिवैकृत्यैर्हास्यकारी विदूषकः । अस्योदाहरणं यथा,—
"आनीय नीरजमुखीं शयनोपकण्ठ-
मुत्कण्ठतोऽपि कुचकञ्चुकमोचनाय ।
अत्रान्तरे मधुरकारि विदूषकेण
प्रातस्तनस्तरुणकुक्कुटकण्ठनादः ॥"
इति रसमञ्जरी ॥
(अयन्तु शृङ्गारसहायः । यथा, साहित्यदर्पणे । ३ । ७७ ।
"शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः ।
भक्ता नर्म्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥"
दूषणकारके, त्रि । यथा, भागवते । ५ । ६ । १० ।
"येन ह वाव कलौ मनुजापसदा देवमायाविमोहिताः * * * * भवन्ता आत्मयज्ञपुरुष-लोकविदूषकाः प्रायेण भविष्यन्ति ॥")
विदूषणं, क्ली, विशेषेण दूषणम् । विपूर्व्वणान्त-दुषधातोरनट्(ल्युट्)प्रत्ययेन निष्पन्नम् ॥
विदेशः, पुं, ( विप्रकृष्टो देशः ।) परदेशः । देशान्तरम् । यथा । अशौचकालाभ्यन्तरे विदेशस्थाशौचश्रवणे शेषाहैः शुद्धिः । इति शुद्धितत्त्वम् ॥
अन्यच्च ।
"कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥"
इति चाणक्यम् ॥
अन्यत् देशान्तरशब्दे द्रष्टव्यम् ॥
विदेहः, पुं, जनकान्वयभूमिपः । ( यथा, देवीभागवते । १ । १६ । ५२ ।
"इतमिच्छाम्यहं भूपं विदेहं नृपसत्तमम् ।
कथं तिष्ठति संसारे पद्मपत्रमिवाम्भसि ॥"
विगतो देहो यस्य । ) कायशून्ये, त्रि । इति मेदिनी । हे, २४ ॥ ( यथा, महाभारते । ३ । १०७ । २६ ॥
"छिन्नशीर्षा विदेहाश्च भिन्नत्वगस्थिसन्धयः ।
प्राणिनः समदृश्यन्त शतशोऽथ सहस्रशः ॥")
निमिराजस्य विदेहत्वकारणम् । यथा,—
"असमाप्ते ततो यज्ञे वशिष्ठश्चागमद्द्विजः ।
तं दृष्ट्वा कुपितः प्राह प्रत्याख्यातोऽस्मि पार्थिव ।
यस्मात्तस्मात् शपेयं त्वां विदेहस्त्वं भविष्यसि ॥"
इति वह्निपुराणे सूर्य्यवंशसमाप्त्यध्यायः ॥
विदेहा, स्त्री, मिथिला । इति हेमचन्द्रः ॥ (यथा, रघुः । १२ । २६ ।
"सर्वा तमनुगच्छन्ती विदेहाधिपतेः सुता ।
प्रतिषिद्धापि कैकेय्या लक्ष्मीरिव गुणोन्मुखी ॥")
विद्धः, त्रि, ( विध्यते स्मेति । व्यध + क्तः । ) छिद्रितः । इत्यमरः ॥ क्षिप्तः । सदृशः । बाधितः । इति मेदिनी । धे, १६ ॥ ( यथा, मार्कण्डेये । ५० । ७० ।
"तरुगुल्मादिभिर्दारं न विद्धं यस्य वेश्मनः ।
मर्म्मभेदोऽथवा पुंसस्तत् श्रेयो भवनं न ते ॥")

तापितः । इत्यमरमाला ॥ ( यथा, विष्णुधर्म्मोत्तरे तावाम् । २० । ३४ ।
"काकाद्वे जिवते कश्चित् पिक: शरशतदपि ।
कुशाग्रेणापि संस्पृष्ट: पापकालो न जीवति ॥")

विद्धकर्णः, पुं, ( विद्धः कर्ण इव पत्रमस्य । ) विद्धकर्णी । इति भरतद्विरूपकोषः ॥ ( विद्धौ कर्णौ यस्येति । छन्नकर्णवेधे, त्रि ॥ )

विद्धकर्णा, स्त्री, विद्धकर्णी । इति भरतद्विरूपकोषः ॥

विद्धकर्णिका, स्त्री, ( विद्धकर्णी । स्वार्थे कन् । ) विद्धकर्णी । इति शब्दरत्नावली ॥

विद्धकर्णी, स्त्री, ( विद्धः कर्ण इव पत्रमस्याः । ) लताविशेषः । आकनादि इति भाषा ॥ तत्पर्य्यायः । पाठा २ अम्बष्ठा ३ स्थापनी ४ श्रेयसी ५ रसा ६ एकाष्ठीला ७ पापचेली ८ प्राचीना ९ वनतिक्तिका १० । इत्यमरः ॥ अविद्धकर्णी ११ अविद्धकर्णा १२ । इति तट्टीका ॥ आविद्धकर्णिका १३ विद्धकर्णिका १४ । इति शब्दरत्नावली ॥ अन्यत् पाठाशब्दे द्रष्टव्यम् ॥

विद्यमानः, त्रि, ( विद + शानच् । ) वर्त्तमानः । इति शब्दचन्द्रटीकायां भरतः ॥ ( यथा, वैद्यके ।
"यावायां विद्यमानायामाशायां जीवितस्य च ॥" )

विद्या, स्त्री, ( विद्यतेऽसौ इति । विद् + "संज्ञायां समजनिषदनिपतेति ।" ३ । ३ । ९९ । इति क्यप् । ) दुर्गा । इति शब्दरत्नावली ॥ गणिकारिका । इति शब्दचन्द्रिका ॥ ज्ञानम् । तत्तु मोक्षे धीः । इति जटाधरः ॥ परमोत्तमपुरुषार्थसाधनीभूता विद्या ब्रह्मज्ञानरूपा । इति नागोजीभट्टः ॥ मन्त्रः । यथा । शारदायाम् ।
"भान्तं वियद्द्वयनयनं वेतो महिंदि टद्वयम् ।
अष्टाक्षरी समाख्याता विद्या महिषमर्द्दिनी ॥"

विच्छारे ।
"प्रणवाद्यां जपेद्विद्यां मायाद्यां वा जपेत् सुधीः ।"

महिषमर्द्दिनीमन्त्रः ॥
"दशाक्षरी समाख्याता विद्या त्रिभुवनेश्वरी ।
प्रणवश्च तथा माया भवेद्विद्या पुनर्द्दश ।
कामं प्रणवमित्युक्तं भवेद्विद्या पुनर्द्दश ॥"

दुर्गामन्त्रः ।
"वाग्वीजाद्या यदा विद्या वाग्मीशत्वप्रदायिनी ।
कामाद्या च यदा विद्या सर्व्वकामप्रदायिनी ॥
तारमायादिका विद्या भोगमोक्षैकदायिनी ।
वह्नीजाद्या भवेद्विद्या तद्गीर्णाशुकक्षया ॥"

अन्नपूर्णामन्त्रः । इति तन्त्रसारः ॥ * ॥ अथ विद्या । कन्या तस्या नानावर्णाक्षरमयी पूजा सर्व्वत्र भविता । अधुना वा यदीयमाटीपूजा इति ख्याता । यथा,—
"अस्मिन् काले सुरेशानि प्रकाशो जायते शुचि ।
तमोधर्म्मैश्च सर्व्वत्र देवताप्रतिमां यदा ॥
अष्टम्यान्तु चतुर्द्दश्यां नवम्यां शनिभौमयोः ।
संक्रान्त्यां पञ्चदश्याञ्च पञ्चम्योरुभयोरपि ॥
तथा तु पूजयिष्यन्ति महाविद्यां वरेश्वराम् ।
विद्याञ्च त्रिविधां देवि तथान्यप्रतिमां शुभाम् ॥
एवं हि शाम्भवीं पूजामनिशाञ्च भवेत् कलौ ।"
इति मायातन्त्रे १७ पटलः ॥

शास्त्रम् । तत्तु अष्टादशविधम् । यथा । शिक्षा १ कल्पः २ व्याकरणम् ३ निरुक्तम् ४ ज्योतिषम् ५ छन्दः ६ ऋग्वेदः ७ यजुर्वेदः ८ सामवेदः ९ अथर्व्ववेदः १० मीमांसा ११ न्यायः १२ धर्म्मशास्त्रम् १३ पुराणम् १४ आयुर्वेदः १५ धनुर्वेदः १६ गान्धर्व्ववेदः १७ अर्थशास्त्रम् १८ । यथा, विष्णुपुराणम् ।
"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्द्दश ॥
आयुर्व्वेदो धनुर्व्वेदो गान्धर्व्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादशैव ताः ॥"
इति प्रायश्चित्ततत्त्वम् ॥ * ॥

नीचादप्युत्तमा विद्या ग्राह्या यथा,—
"श्रद्दधानः शुभां विद्यामाददीतावरादपि ।
अन्त्यादपि परं धर्म्मं स्त्रीरत्नं दुष्कुलादपि ॥"
इति मानवे २ अध्यायः ॥ * ॥

विद्याप्रशंसा यथा,—
"ये बालभावान्न पठन्ति विद्यां
ते यौवनस्था अधना अशाराः ।
ते शोचनीया इह जीवलोके
मनुष्यरूपेण चरा चरन्ति ॥
भोजने भोजनं चित्तं न कुर्य्याच्छास्त्रजीवनः ।
सुदूरमपि विद्यार्थी व्रजेत् गरुडवेगवान् ॥
ये बालभावान्न पठन्ति विद्यां
कामातुरा यौवननष्टचित्ताः ।
ते वृद्धकाले परिभूयमानाः
सन्दह्यमानाः शिशिरे यथाब्जम् ॥
माता शत्रुः पिता वैरी बालो येन न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा ॥
विद्या नाम कुरूपरूपमधिकं प्रच्छन्नमन्तर्द्धनं
विद्या साधुजनप्रिया शुचिकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनार्त्तिनाशनकरी विद्या परं दैवतं
विद्या भोग्यवशःकुलोन्नतिकरी विद्याविहीनः पशुः ॥
गृहे चाभ्यन्तरे द्रव्यं लग्नं चैव तु दृश्यते ।
अशेषं हरणीयञ्च विद्या न ह्रियते परैः ॥"
इति गारुडे ११०।११५ अध्यायौ ॥

अथ विद्यादानफलम् ।
"यस्तु देया यदि नित्यं विद्यादानं प्रवर्त्तयेत् ।
स भवेत् सर्व्वलोकानां पूज्यः पूजापदं व्रजेत् ॥
विद्यादानं प्रवक्ष्यामि येन तुष्यन्ति मातरः ।
लिख्यते दीयते येन विधिना तं शृणुष्व नः ॥
शिक्षाकल्पौ च शास्त्राणि वेदान् कर्म्मादिसाधनान् ।
तद्वद्गीतिशास्त्राणि देया सर्व्वसिद्धये ।
भारतं रामायणञ्च भूतभव्यानि भैरवम् ।
शास्त्राणि पञ्चरात्रादीन् मातरः प्रलयदा भुवाम् ॥
ज्योतिषं वैद्यशास्त्राणि कलाकाव्यं सभाज्यतः ।
दानाद्दानोऽप्यवाप्नोति सर्व्वं लभते पदम् ॥
विद्याभ्यो वर्त्तते लोको धर्म्माधर्म्मेषु हृष्यते ।
तस्माद्विद्या सदा देया दृष्टादृष्टफलार्थिभिः ॥
मही दानञ्च गोदानं चैमयस्तिला जलम् ।
धान्यदीपाम्बरानञ्च महादानानि दानतः ।
दत्त्वा यो वर्त्तते दानं दीपदानं नराधिप ।
विद्या वृद्धिमवाप्नोति दीयमानापि नित्यशः ॥
एकीकारेण भूतानां दत्तं भवति भूमिप ।
नहि तद्विद्यते भूप येन पापात् प्रमुच्यते ॥
विद्यादानं न तद्दत्त एकधा दशधा भवेत् ।
शतधा कोटिधा मन्ये विद्यानन्तं च पारगः ॥
राज्ञा तस्य रुदामाद्यैर्जनतृप्तिरीरूपैः ।
सर्व्वदानानि क्षीयन्ते विद्या नैवापि क्षीयते ॥
विद्यादानात् परं दानं न भूतं न भविष्यति ।
विद्यादानेन दानानि नहि तुल्यानि बुद्धिमन् ॥
विद्या एव परं मन्ये यत्तत् परमनामयम् ।
यस्तमुत्पश्यति भक्तिर्भवेत्या गुरुमुपास्यते ॥
स च विद्यासमान् यस्ति विद्या पुत्रान्विता इव ।
विद्याविवेकबोधेन शुभाशुभविचारिणाम् ॥
विद्यते सर्व्वकामाप्तिस्तस्माद्विद्या परा मता ॥
विद्यादानात् परं दानं न भूतं न भविष्यति ।
येन दत्तेन चाप्नोति शिवं परमकारणम् ॥
विद्याविचारतत्त्वज्ञा रामः सन्मार्गगामिनः ।
सुखदेवोऽपि हि भोगानि गच्छन्ति परमां गतिम् ॥
अन्धका अपि यां प्राप्य क्रीडन्ते ब्रह्मराक्षसैः ।
या विद्या केन मीयेत यस्याः कोऽन्यः समोऽपि न ॥
ज्वरेण कुञ्जरं हन्ति सर्पेण तुरङ्गमम् ।
मन्त्रिकापरमानस्य विषस्य विषमा मतिः ॥
एवंविधं विधिं वक्ष्ये विद्यामन्त्रप्रभावतः ।
जीर्य्यते भक्षितं पुंभिस्तस्माद्विद्या परात्परा ॥
नहि विद्या कुलं जातिरूपं पौरुषधामताम् ।
वर्त्तते सर्व्वलोकानां पठिता उपकारिका ॥
भूतैर्य्यैर्गीता विच्छिन्ना दत्ता वा सप्तमगैः ।
विद्या स्थापयेत् यत्र अन्वयजस्यापि सन्तिष्ठति ।
सर्व्वेषामेव दानानां विद्यादानं हि शाश्वतम् ॥
यथोदधौ हि नृपाणां विप्राणां धनवान् यतः ।
अविद्याकामा यौवने विप्राणां शास्त्रपारगः ॥
वित्तं बन्धुर्वयश्चैव तपो विद्या यथोत्तरम् ।
पूजनीयानि सर्व्वेषां विद्या तेषां गरीयसी ॥
गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
विद्यया लभ्यते विद्या चतुर्थी नोपलभ्यते ॥
यः शतृणां मतीं दद्यात् मेधसुख्यञ्च काञ्चनम् ।
स यस्मायतः पृ केन तस्योपदिशेत् क्वचित् ॥
एवंविधं महाभाग विद्याफलं हि वर्णितम् ।

नाधीयीतेत्यनुवृत्तौ मनुः ।
"बधिरे च जडे मात्रात् प्रश्नेन च परीक्षते ।"
बधिरवर्ज्जं विना प्रश्नेन ज्ञानमात्रेऽपि । दीपिकायाम् ।
"अनुचरश्रितजलाधीशजलदूर्यौघ-
ग्रचिह च चरितोथे मुक्तजीवाकंवारे ।
जरितवति च जीवे मित्रजीवेषु लोके-
ष्वपठनदिनवर्ज्जं पाठयेत् पञ्चमेऽब्दे ॥"
मदनपारिजाते ।
"विद्यारम्भे गुरुः श्रेष्ठो मध्यमौ भृगुभास्करौ ।
मरणं मुनिभौमाभ्यामविद्या बुधसोमयोः ॥
विद्यारम्भः सुरगुरुसितज्ञैर्भौमार्कवारौ
कर्त्तव्याग्निरमपि करोत्यंशुमान् मध्यमोऽत्र ।
जीवारांशौ भवति जड़ता पञ्चता भूमिपुत्रे
छायापुत्रावपि च मुनयः कीर्त्तयन्त्येवमाद्याः ॥
रवेर्म्मदोऽभेगोत्रत्रये सप्तान्यर्क्षेऽप्यौत्कृष्टहितः ।
शुभकेन्द्रत्रिकस्थे च विद्यारम्भः प्रशस्यते ॥" ॥
वृहस्पतिः ।
"प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम् ।
अध्यापयेत्तु प्रथमं द्विजाशीर्भिः प्रपूजितम् ॥"
कूर्म्मपुराणम् ।
"स्वाध्यायस्य त्रयो भेदा वाचिकोपांशु-
मानसाः ॥"
शिवधर्म्मे ।
"संस्कृतैः प्राकृतैर्वाक्यैः शिष्यमनुरूपतः ।
देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतः ॥"
आदिः मनसकरकादिः । ॥ । नन्दिपुराणम् ।
"प्रथमग्रन्थसंयोगे कुर्य्यात् प्रतिविरामकम् ।"
विरामकं तद्दिनपाठसमाप्तिम् ॥ ॥ ।
"समाप्ते वाचकाभीष्टं कुर्य्यादेव विचक्षणः ।
सुवृत्तं सुव्रतं भूयादस्तु व्याख्या तु निश्चला ॥
लोकः प्रवर्त्ततां धर्म्मे राजा चास्तु सदा जयी ।
धर्म्मवान् धनवान्यश्च गुरुश्चास्तु निरामयः ॥ ॥
इति प्रोच्य यथायातं गन्तव्यञ्च विभावितैः ।
शिष्यैः परस्परं शास्त्रं चिन्तनीयं विचक्षणैः ॥
कथावस्तुप्रसङ्गेन नानाख्यानकसम्भवैः ।
युक्तिभिश्च भरेद्व्याख्यां चिह्नैश्चापि सर्व्वतः ।
एवं दिने दिने व्याख्यां शृणुयान्नियतो नरः ॥"
विष्णुपुराणम् ।
"गुरोरध्यापिता ये च ते पतन्ति च भीषणे ॥"
सूत उवाच ।
"ग्रामस्थ्यधीतस्य नरस्य विद्या
मुखं यथा कापुरुषस्य खड्गः ।
न हर्षमुत्पादयते शरीरे
कान्तस्य दारा इव दर्शनीयाः ॥" ॥
लिङ्गपुराणम् ।
"यो गुरुं पूजयेन्नित्यं तस्य विद्या प्रसीदति ।
तत्प्रसादेन यत्नात् स प्राप्नुते धर्म्मसम्पदः ॥"
कूर्म्मादाः ।
"सन्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः ।
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम् ॥"

अधीतस्यार्थिने दानमावश्यकं तथा च श्रुतिः । योऽधीतार्थिभ्यो विद्यां न प्रयच्छेत् स कार्य्यहा स्यात् श्रेयसो द्वारमावृणुयात् इति । ॥ । तद्दानञ्च अध्यापनेन व्याख्यया विविधग्रन्थेन च सत्यजनीयतो श्रीमद्भिर्विविधः क्रियते । ॥ । तथा च विष्णुपुराणम् ।
"प्राज्ञिकानुपकाराय यदेवेह परत्र च ।
कर्म्मणा मनसा वाचा तदेव मतिमान् भजेत् ॥"
वृहस्पतिरपि ।
"अज्ञानतिमिरोपेतान् सन्देहपटलान्वितान् ।
निरामयान् यः कुरुते ज्ञानाञ्जनशलाकया ॥
इह कीर्त्तिं राजपूजां लभते ब्रह्मविच्च सः ।
शास्त्राविष्टे तु समये भ्रान्तिः सम्भाव्यते यतः ॥
नानाचराणि बहूनि प्रवाहज्ञानतः पुरा ।
उपदेशानुमन्त्रा च लोके गुरुपदौ स्मृतौ ॥"
एवञ्च । एकाक्षरस्याप्युपदेष्टापि श्रोत्राचार्य्यौ गुरुः स्मृतः अतो ग्रन्थकर्त्तुः सुतरां गुरुत्वम् । यथा, महाभारते ।
"आरण्यमनुसंप्राप्य ज्ञात्वा मोक्षं महीभुजम् ।
तन्निष्ठाचार्य्यहस्तेन परमामाज्ञिनस्तथा ।
इत्याहि योगमातस्थौ परं निश्चयमागतः ॥" ॥
शङ्खलिखितौ ।
"न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः ॥" ॥ । अङ्गानि च ।
"शिक्षा कल्पो व्याकरणं छन्दो ज्योतिषमेव च ।
निरुक्तञ्चेति षडङ्गानि वेदानां कथितानि षट् ॥"
स्मृतिस्तु धर्म्मसंहितेत्यमरः ॥ ॥ शिष्यस्य गुरुत्व कथितमाह लघुहारीतः ।
"एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा सोऽनृणी भवेत् ॥"
नन्दिपुराणम् ।
"यस्तु कुलागतः शास्त्रं संस्कारं प्राप्य वै दृढम् ।
अन्यस्य जनयेत् कीर्त्तिं गुरोः स ब्रह्महा भवेत् ॥
विकरोति तथा मौढ्याद्योऽपि शास्त्रमनुत्तमम् ।
स याति नरकं घोरमनन्तं भीमदर्शनम् ॥" ॥
अतएव महत्वाटीनामपि गुरुरभ्यन्तमाह आपस्तम्बः । यथा विद्यया न विरोधित पुनराचार्य्यमुपैत आश्रयेदिति ॥ ॥ विष्णुः । यथा विद्यामादाय तथा जीवेत् न च सा तस्य परलोकफलप्रदा भवति यश्च विद्यया परेषां यशो हन्तीति । ॥ । देवलः ।
"इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्त्तनात् ।
श्लाघानुशोचनाभ्याञ्च भग्नतेजो विपद्यते ॥
तस्मादात्मकृतं पुण्यं वृथा न परिकीर्त्तयेत् ॥"
अनुकीर्त्तनं कथनम् । श्लाघा प्रशंसा । अनुशोचनं कृतस्येव पश्चात्तापः । भग्नतेजः फलजननशक्तिहीनम् । तथा दक्षादिप्रयोजनं विना । ॥ । वैश्यावाप्ते भविष्यपुराणम् ।
"उपाध्यायस्य यो वृत्तिं दत्त्वाध्यापयति
द्विजान् ।
किन्न दत्तं भवेत्तेन धर्म्मकामार्थमिच्छता ॥"
इति ज्योतिस्तत्त्वम् ।

विद्याचणः, } (विद्यया वित्तः । विद्या+"तेन वित्तश्चुञ्चुप्चणपौ ।" ५ । २ । २६ ।
विद्याचुञ्चुः, } इति चणप् चुञ्चुप् च ।) विद्यया ख्यातः । इति व्याकरणम् ॥

विद्यादलः, पुं, भूर्ज्जवृक्षः । इति शब्दमाला ॥

विद्यादाता, [ ऋ ] त्रि, (विद्यां ददातीति । दा + तृच् । ) विद्यादानकर्त्ता । यथा,—
"अन्नदाता भयत्राता पत्नीतातस्तथैव च ।
विद्यादाता जन्मदाता पञ्चैते पितरो नृणाम् ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥
अपि च ।
"न च विद्यासमो बन्धुर्नास्ति कश्चित् गुरोः
परः ।
विद्यादातुः पुत्रदाता तत्समो नास्ति संशयः ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३३ अध्यायः ॥

विद्यादानं, क्ली, (विद्याया दानम् ।) अध्यापनम् । पुस्तकदानम् । यथा,—
वशिष्ठ उवाच ।
"विद्यादानं प्रवक्ष्यामि याथातथ्यात्तवाधुना ।
तथा देयं फलं यच्च तच्छृणुष्व नृपोत्तम ॥
पुण्येऽह्नि शुभनक्षत्रे सलग्ने शुभवेदिकम् ।
चतुरस्रं वितानं वा कृत्वा तत्रोपलेपयेत् ॥
गोमयेनोपलिप्ते तु पुष्पप्राकरशोभिते ।
तत्र स्वस्त्यासनं दिव्यं दिव्यगन्धादिवासितम् ॥
संस्थाप्य पुस्तकं तत्र धर्म्मशास्त्रस्य धीमता ।
भाष्ययात् वेदसंपूर्णान् छन्दोलक्षणपारगान् ॥
लेखयित्वा तु यत्नेन तत्समस्तं शुभाक्षरैः ।
चन्द्रसूर्य्योपरागे वा संक्रान्त्ययनवासरे ॥
पुण्येऽह्नि तत् सुसंपूज्य वस्त्रालङ्कारभूषणैः ।
कृतधेन्वा युतं दद्यात् गुणवते ततः ॥
शास्त्रसद्भावविदुषे वाचकेऽतिप्रियंवदे ।
तच्छास्त्रं प्रयुतां नित्यं जनानां नाशयन्त्य ।
दातुस्तच्चाङ्गवत्येवं फलं तच्छृणु भूपते ॥
यत् पुण्यं सर्व्वतीर्थानां विधिवद्यजतां तथा ।
तत् पुण्यं समवाप्नोति विधिवच्छ्रावकः पुमान् ॥
कपिलानां सहस्रेण सम्यग्दत्तेन यत् फलम् ।
तद्दानात् सकलं वेत्ति धर्म्मशास्त्रप्रदायकः ॥
पुराणं भारतं वापि रामायणमथापि वा ।
दत्त्वा यत् फलमाप्नोति न तत् सर्व्वैर्मखामखैः ॥
देवानामालये नित्यं धर्म्मशास्त्राणि यः पुमान् ।
अध्यापयति धर्म्मात्मा तस्य दानफलं शृणु ॥
गजभूमिहिरण्यानां दानेन यदवाप्यते ।
फलं तत् सकलं राजन् नित्यं कारापकस्य च ॥
योऽधीते धर्म्मशास्त्राणि देवानां पुरतोऽनिशम् ।
विप्रो वीप्सुरपार्थानामेवमेवार्हति ध्रुवम् ॥
प्रातरुत्थाय यो वेदं वेदाङ्गं शास्त्रमेव वा ।
पृथिवीदानतुल्यं स्यात् फलं तस्य नृपोत्तम ॥
दानैर्व्वाऽपि विभर्त्त्यलानवीप्सुधर्म्मतत्परः ।
द्विगुणं पृथिवीदानात् फलं तस्य भवेन्नृप ! ॥
यो भृतं पठमानानां करोत्यनुदिनं नृप ! ।
स यज्ञफलमाप्नोति दानाच्छादनभोजनैः ॥
विवेको जीवितं दीर्घं धर्म्मकामार्थसम्पदः ।

सर्व्वं तेन भवेद्दत्तं प्राप्यान्ते मोक्षमी ध्रुवम् ।
वाजपेयसहस्रस्य सम्यगिष्टस्य यत् फलम् ।
तत् फलं समवाप्नोति विद्यादानात्र संशयः ॥
तस्माद्देवालये नित्यं धर्म्मशास्त्रस्य वा मुने ।
पठनं कारयेद्धीमान् यदीच्छेद्धर्म्ममात्मनः ॥
गोभूहिरण्यवासांसि शयनान्यासनानि च ।
प्रदत्तं तेन सर्व्वाणि भवन्ति नृपसत्तम ॥
धर्म्माधर्म्मौ न जानाति लोकोऽयं विद्यया विना ।
तस्मात् सदैव धर्म्मात्मन् विद्यादानरतो भव ॥"
इति वह्निपुराणे विद्यादाननामाध्यायः ॥

विद्यादेवी, स्त्री, ( विद्याया देवी । ) जिनषोडश-देव्यन्तर्गतदेवीविशेषः । इति हेमचन्द्रः ॥ सर-स्वती च ॥

विद्याधनं, क्ली, विद्यया अर्ज्जितधनम् । यथा । विद्याधनमाह कात्यायनः ।
"उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्व्वकम् ।
विद्याधनन्तु तद्विद्यात् विभागे न नियोजयेत् ॥
शिष्यादार्त्त्विज्यतः प्रश्नात् सन्दिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत् ॥
विद्याधनन्तु तत् प्राहुर्विभागे न प्रयोजयेत् ।
शिल्पेष्वपि हि धर्म्मोऽयं मूल्याद्यच्चाधिकं भवेत् ॥
परं निरस्य यल्लब्धं विद्यया द्यूतपूर्व्वकम् ।
विद्याधनन्तु तद्विद्यात् न विभाज्यं बृहस्पतिः ॥"
यदि भवान् मन्त्रमुपन्यस्यति तदा भवत एव मयैतद्देयमिति पणितं यद्योपन्यासं निरूप्य लभते तत् विभाज्यम् । शिष्यादध्यापितात् आर्त्त्विज्यतः याजमानादृत्विक्तया लब्धं धनं च प्रतिग्रहलब्धं वैतत्कल्पत्वात्तस्य । तथा यत्किञ्चिद्विषयप्रश्ने निर्णीतेऽपणितं यदि कश्चित् परितोषाद्ददाति । तथा यो यस्मिन् शास्त्रार्थे स्वज्ञानं संशयमपनयति तस्मै धनमिदं ददामीत्युपस्थितस्य संशयमपनीय यल्लब्धम् । तथा वादिनोर्व्यवहारे न्यायकरणार्थमागतयोः व्यवहारनिरूपणे यल्लब्धं सत्याद्युदितम् । तथा शास्त्रादिपठनश्रवणात् लब्धं तत् प्रतिग्रहा-दिना लब्धम् । तथा प्राज्ञमानविवादे अन्य-थापि यत्र प्रतिद्वन्द्विनोऽन्यमानविवादे निर्जित्य लब्धम् । तथैकस्मिन् देवे बहूनामुपस्थाने येन प्रकृष्टात् लब्धम् । तथा शिल्पादिविद्यया चित्रकरसुवर्णकारादिभिर्यल्लब्धम् । तथा द्यूते-नापि परं निर्जित्य यल्लब्धं तत् धनमविभाज्य-मितरैः । तस्माद्यथा कथञ्चित् विद्यया लब्ध-मर्ज्जकस्यैव तत्र इतरेषामिति । प्रदर्शनार्थन्तु कात्यायनेन विद्यादितमिति दायभागः ॥
नारदः ।
"कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात् स लभेताश्रुतोऽपि सन् ॥"
बिभृयादित्येकवचननिर्द्देशान्न बहवः । यदि विद्यामभ्यस्यतो भ्रातुः कुटुम्बमपरो भ्राता स्वधनव्ययशरीरायासाभ्यां संवर्द्धयति तदा तद्विद्यार्ज्जितधने तस्याधिकारः । अश्रुतो मूर्खः । कल्पतरुमिताक्षरादीपकलिकासु कात्यायनः ।
"परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या ।
तया लब्धं धनं यत्तु विद्याप्तं तदुच्यते ॥"
अन्यतः पितृमातृकुलव्यतिरिक्तात् । अत्र विशेषयति स एव ।
"नाविद्यानान्तु वैद्येन देयं विद्याधनं क्वचित् ।
समविद्याधिकानान्तु देयं वैद्येन तद्धनम् ॥"
तयोश्चरितविद्यापदसम्भाव्यां समत्यते । तेन समविद्याधिकविद्यानां भागो न तु न्यूनविद्या-विद्ययोः । वैद्येन विदुषा । पुनर्विशेषयति ।
"कुले विनीतविद्यानां भ्रातृणां पितृतोऽपि वा ।
शौर्य्यप्राप्तन्तु यद्वित्तं विभाज्यं तद्बृहस्पतिः ॥"
कुले सम्भूते पितामहपितृव्यादिभ्यः पितृत एव वा शिक्षितविद्यानां भ्रातृणां यद्विद्याशौर्य्यप्राप्तं धनं तद्विभजनीयमिति कल्पतरुरत्नाकरौ । इति दायतत्त्वम् ॥

विद्याधरः, पुं, देवयोनिविशेषः । इत्यमरः ॥ विद्यां मन्त्रादिकं धरति पचादित्वादच् । पुष्पदन्तादिः कामरूपी खेचरः । इति भरतः ॥ ( यथा, रघुः । २ । ६० ।
"तस्मिन् क्षणे पालयितुः प्रजाना-
मुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः
पपात विद्याधरहस्तमुक्ता ॥" )
तस्योत्पत्त्यादिर्यथा,—
"नैकैर्यगणैर्व्याप्ते चैत्रोऽभवदरोमकैः ।
तेषामुत्पादितान्योन्यं महागन्धर्व्वनायकाः ॥
उत्पादिताः पुनस्तैर्यैर्विक्रान्ता हुहुतुम्बुराः ।
विद्याधरेश्वरास्ते तु खेचराः कामचारिणः ॥
हिरण्यरोमा कपिलः सुलोमा मागधस्तथा ।
रक्तकेतुश्च पिङ्गाक्षो मारुतश्च महाबलः ॥
मत्र दक्षिणमादिस्तु दे पार्श्वे दे सुलोचने ।
प्रिया च सुमनाश्चैव ताभ्यामपि च विश्रवाः ॥
पुनश्चोत्पादयामास विद्या लौमनवं नयम् ।
एतैर्व्याप्तो ह्ययं लोको विद्याधरगणैस्त्रिभिः ॥
एभ्योऽनेकानि जातानि खेचरान्तरचारिणाम् ।
लोकेऽस्मिन् गणयुक्तानि मन्त्रविद्याविचारि-णाम् ।
विद्याधरास्तथान्येऽपि विद्याबलसमन्विताः ॥"
इति वह्निपुराणे काश्यपीयवंशः ॥ * ॥
षोडशरतिबन्धान्तर्गतरतिबन्धः । तस्य लक्षणं यथा, रतिमञ्जर्य्याम् ।
"नार्य्या ऊरुयुगं धृत्वा कराभ्यां ताडयेत् पुनः ।
कामयेन्निर्भरं कामी बन्धो विद्याधरो मतः ॥"

विद्यावान्, [ त् ] त्रि, ( विद्याऽस्त्यस्येति । विद्या + मतुप् । मस्य वः । ) विद्याविशिष्टः । विद्या-शब्दात् मतुप्प्रत्ययेन निष्पन्नः ॥ ( यथा, प्रबोध-चन्द्रोदये । २ । ११ ।
"विद्यावन्तोऽपि कीर्त्तिमन्तोऽपि सदाचारावदा-तास्तथापि ।
प्रोक्तैः पौरुषभूषणाश्चपि कुलान्युद्धर्त्तुमीशाः क्षमात् ॥" )

विद्युज्जिह्वः, पुं, ( विद्युदिव चञ्चला जिह्वा यस्य । ) राक्षसविशेषः । यथा,—
"अग्निकेतुश्च दुर्द्धर्षो रश्मिकेतुश्च वीर्य्यवान् ।
विद्युज्जिह्वो द्विजिह्वश्च यज्ञशत्रुश्च राक्षसः ॥"
इति रामायणे उत्तरकाण्डे ९० सर्गः ॥
( स्त्री, कुमारानुचरमातृगणविशेषः । यथा, महाभारते । ९ । ४६ । ८ ।
"मेघस्वना भोगवती सुभ्रूश्च कनकावती ।
अलाताक्षी वीर्य्यवती विद्युज्जिह्वा च भारत ॥" )

विद्युज्ज्वाला, स्त्री, ( विद्युत इव ज्वाला यस्याः । ) कलिकारीवृक्षः । इति राजनिर्घण्टः ॥ ( विद्युतो ज्वाला । ) तडित्प्रभा च ॥

विद्युत्, स्त्री, ( विशेषेण द्योतते इति तच्छीला वा । वि + द्युत + "भ्राजभासेति ।" ३।२।१७७। इति क्विप् । ) सन्ध्या । इति मेदिनी । ते, १५५ ॥ विद्योतते या । तत्पर्य्यायः । शम्पा २ शतह्रदा ३ ह्रादिनी ४ ऐरावती ५ क्षणप्रभा ६ तडित् ७ सौदामिनी ८ चञ्चला ९ चपला १० । इत्य-मरः ॥ चौपा ११ सौदाम्नी १२ विल-मौलिका १३ सम्बूः १४ अचिरप्रभा १५ सौदामनी १६ अस्थिरा १७ मेघप्रभा १८ अशनिः १९ । इति शब्दरत्नावली ॥ चटुला २० अचिररोचिः २१ राधा २२ नीलाञ्जना २३ । इति जटाधरः ॥ सा चतुर्व्विधा । यथा,—
"अरिष्टनेमिपत्नीनामपत्यानीह षोडश ।
बहुपुत्त्रस्य विदुषश्चतस्रो विद्युतः स्मृताः ॥"
इति विष्णुपुराणे १ अंशे १५ अध्यायः ॥
चतस्रो विद्युतश्च ।
"वाताय कपिला विद्युदातपाय च लोहिता ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥"
इति ज्योतिःशास्त्रे प्रसिद्धाः । इति तट्टीका ॥

विद्युत्, त्रि, ( विगता द्युत् कान्तिर्यस्य । ) निष्प्रभः । इति मेदिनी । ते, १५५ ॥ ( विशिष्टा द्युत् दीप्तिर्यस्येति विग्रहे । विशेषेण दीप्य-मानो । यथा, ऋग्वेदे । १ । २३ । १२ ।
"हस्काराद्विद्युतस्पर्य्यतो जाता अवन्तु नः ॥"
"हस्कारात् दीप्तिकारात् विद्युतो विशेषेण दीप्यमानात् ।" इति तद्भाष्ये सायणः ॥ )

विद्युत्केशः, पुं, ( विद्युत इव दीप्तिशालिनः केशा यस्य । ) राक्षसविशेषः । यथा,—
"स कालभगिनीं कन्यां भयां नाम महा-भयाम् ।
उदावहदमेयात्मा स्वयमेव महामतिः ॥
स तस्यां जनयामास हेती राक्षसपुङ्गवः ।
पुत्त्रं पुत्त्रवतां श्रेष्ठो विद्युत्केशमिति श्रुतम् ॥"
इति रामायणे उत्तरकाण्डे ४ सर्गः ॥

विद्युत्प्रियं, क्ली, ( विद्युतः प्रियम् । तदाकर्षक-त्वात् । ) कांस्यम् । इति हेमचन्द्रः ॥

विद्युत्वान्, [ त् ] त्रि, ( विद्युतः सन्त्यस्मिन्निति । विद्युत् + मतुप् । ) विद्युद्विशिष्टः । विद्यु-

कम्पात् बहुभावेन नियमः । ( यथा, मेघदूते । ६६ ।
"विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ॥"
पुं, पर्व्वतविशेषः । यथा, हरिवंशे । २२७ । ६१ ।
"विद्युत्वान् पर्व्वतः श्रीमानायतः शतयोजनम् ।
विद्युतो यत्र चाद्यासा निपात्यन्ते नगोत्तमे ॥")

विद्युन्माला, स्त्री, अष्टाक्षरपादच्छन्दोविशेषः । यथा । "मो मो गो गो विद्युन्माला ।"
"वासो वल्ली विद्युन्माला बर्हश्रेणी शाक्रं चापः ।
यस्मिन्नास्ते तापोच्छित्त्यै गोमध्यस्थः कृष्णाम्भोदः ॥"
इति छन्दोमञ्जरी ॥
अपि च ।
"सर्व्वे वर्णा दीर्घा यस्या विश्रामः स्याद्वेदैर्वेदैः ।
विद्वद्वृन्दैर्वीणावाणि ! व्याख्याता सा विद्युन्माला ॥"
इति श्रुतबोधः ॥

विद्युन्माली, [ न् ] पुं, राक्षसविशेषः । यथा । विद्युन्माली नाम कश्चिद्राक्षसो माहेश्वरः तस्मै रुद्रेण सौवर्णं विमानं दत्तं सतोऽर्कस्य पृष्ठतो भ्रमन् विमानदीप्त्या रात्रिं नित्योदितवान् ततोऽर्केण निजतेजसा द्रावयित्वा तद्विमानं पातितं तच्छ्रुत्वा कुपिते रुद्रे भयादर्कः पपात ततो रुद्रस्य कृपया दृष्ट्या दह्यमानः पतन् वाराणस्यां पतितो लोलार्कनाम्ना विख्यातः । इति श्रीभागवते ९ स्कन्धे ७ अध्यायटीकायां श्रीधरस्वामी ॥ अपि च ।
"धर्म्मस्य पुत्रो बलवान् सुषेण इति विश्रुतः ।
स विद्युन्मालिना सार्द्धं अयुध्यत महाकपिः ॥"
इति रामायणे युद्धकाण्डे ४३ सर्गः ॥

विद्रं, क्ली, छिद्रम् । इति शब्दचन्द्रिका ॥

विद्रधिः, पुं, रोगविशेषः । तत्पर्य्यायः । विदरकम् २ हृद्ग्रन्थिः ३ हृद्व्रणः ४ । इति राजनिर्घण्टः ॥ तत्र विद्रधेः संप्राप्तिपूर्व्वकं सामान्यं लक्षणमाह ।
"त्वग्रक्तमांसमेदांसि प्रदुष्यास्थिसमाश्रिताः ।
दोषाः शोथं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥
महामूलं रुजावन्तं वृत्तं चाप्यथवायतम् ।
स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः ॥"
अस्थिसमाश्रिता दोषा इति वक्ष्यमाणाद्व्रणशोथाद्विद्रधेर्भेदार्थम् । यतो व्रणशोथे दोषाणामस्थिसमाश्रयनियमो नास्ति । घोरं व्रणशोथाद्दारुणम् । आयतं दीर्घम् ॥ * ॥ षड्विधत्वं विवृणोति ।
"पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा ।
षण्णामपि हि तेषान्तु लक्षणं संप्रचक्ष्यते ॥" * ॥
तत्र वातिकस्य लक्षणमाह ।
"कृष्णोऽरुणो वा विषमो भृशमत्यर्थवेदनः ।
चित्रोत्थानप्रपाकश्च विद्रधिर्व्वातसम्भवः ॥"
विषमो भृशं चयमपचयः चयं महान् । चित्रोत्थानप्रपाकः । चित्रौ नानाविधौ उत्थानप्रपाकौ यस्य सः ॥ * ॥ पैत्तिकमाह ।
"पक्वोदुम्बरसङ्काशः श्यावो वा ज्वरदाहवान् ।
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसम्भवः ॥"
श्लैष्मिकमाह ।
"शरावसदृशः पाण्डुः शीतस्निग्धोऽल्पवेदनः ।
चिरोत्थानप्रपाकश्च विद्रधिः श्लेष्मसम्भवः ।
तनुपीतसिताश्चैषामास्रावाः क्रमशो मताः ॥"
सान्निपातिकमाह ।
"नानावर्णरुजास्रावो घाटालो विषमो महान् ।
विषमं पच्यते चापि विद्रधिः सान्निपातिकः ॥"
नाना अनेकविधाः । वर्णाः श्यावरक्तपाण्डुरूपाः । रुजः तोदादाहकण्ड्वादिरूपाः । स्रावाः तनुपीतसिता यस्य । घाटालः घाटा घण्टिकास्त्यस्ति इति घाटालः । अत्युच्छ्रितश्च इत्यर्थः । विषमः निम्नोन्नतः । विषमं पच्यते चापि चिराचिरगम्भीरोत्तानोर्द्धाधोभेदेन विषमं यथा स्यात्तथा पच्यते ॥ * ॥ अभिघातजस्यागन्तोः संप्राप्तिपूर्व्वकं लक्षणमाह ।
"तैस्तैर्भावैरभिहते क्षते चापथ्यकारिणः ।
क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ॥
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः ।
आगन्तुर्विद्रधिर्ह्येष पित्तविद्रधिलक्षणः ॥"
तैस्तैर्भावैः काष्ठलोष्ट्रपाषाणादिभिर्हते यथा रक्तस्रावो न भवति तथाभिहते क्षते क्षते वा । अथवा खड्गशूलादिभिः क्षते यथा रक्तस्रावो भवति तथा क्षते क्षते क्षतोष्मा अत्र क्षतशब्देन क्षतमात्रमुच्यते । तेनाभिहतक्षतयोरप्युष्मवायुविसृतः । अभिहतः अभिघातात् क्षते रक्तक्षयात् कुपितेन वायुना प्रसृतः ईरयेत् कोपयेत् ॥ * ॥ रक्तजमाह ।
"कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः ।
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥" * ॥
अधिष्ठानविशेषेण लिङ्गविशेषं बोधयितुमाभ्यन्तरान् विद्रधीनाह ।
"आभ्यन्तरानतस्तूर्द्ध्वं विद्रधीन् परिचक्ष्यते ।
गुर्व्वसात्म्यविरुद्धान्नशुष्काद्याकान्नभोजनात् ॥
अतिव्यवायव्यायामवेगाघातविदाहिभिः ।
पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपिणम् ।
वल्मीकवत् समुन्नद्धमन्तः कुर्व्वन्ति विद्रधिम् ।
गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा ॥
वृक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि चाप्यथ ।
तेषां चिह्नानि जानीयात् बाह्यविद्रधिलक्षणैः ।
सम्भूय वा मिलित्वा वा समुन्नद्धं तदुन्नतम् ॥" * ॥
स्थानविशेषेण रूपविशेषमाह ।
"गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता ।
नाभ्यां हिक्का तथाटोपः कुक्षौ मारुतकोपनम् ॥
कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे च विद्रधौ ।
वृक्कयोः पार्श्वसंकोचः प्लीह्नः श्वासनिरोधनम् ॥
सर्व्वाङ्गप्रग्रहस्तीव्रो हृदि कासश्च जायते ।
श्वासो यकृति हिक्का च क्लोम्नि पेपीयते पयः ॥"
स्रावमार्गमाह ।
"नाभेरुपरिजाः पक्वा यान्त्यूर्द्ध्वमितरे त्वधः ।
अधः स्रुतेषु जीवेच्च स्रुतेषूर्द्ध्वं न जीवति ॥"
नाभेरुपरिजा हृदादिजाताः । यान्ति स्रवन्ति ऊर्द्ध्वमुखात् । इतरे वस्त्यादिजाः । अधः गुदात् । नाभिजस्तूभाभ्यां मार्गाभ्याम् । तथा च हारीतः ।
"ऊर्द्ध्वप्रभिन्नेषु मुखात्तराणां
प्रवर्त्ततेऽसृक्सहितो हि पूयः ।
अधःप्रभिन्नेषु तु पायुमार्गाद्-
द्वाभ्यां प्रवृत्तिश्च नाभिजेषु ॥" * ॥
साध्यत्वादिकमाह ।
"अधःस्रुतेषु जीवेत्तु स्रुतेषूर्द्ध्वं न जीवति ।
हृन्नाभिवस्तिवर्ज्याये तेषु भिन्नेषु बाह्यतः ।
जीवेत् कदाचित् पुरुषो नेतरेषु कदाचन ॥"
हृन्नाभिवस्तिवर्ज्याये क्लोमप्लीहादिजातेषु । बाह्यतः शस्त्रव्यापारेण भिन्नेषु पुरुषः कदाचित् जीवेत् । इतरेषु हृन्नाभिवस्तिजेषु तथा भिन्नेषु न जीवेत् । हृदादीनां मर्म्मत्वात् । अतएव भोजः ।
"असाध्यो मर्म्मजो ज्ञेयः पक्वोऽपक्वश्च विद्रधिः ।
सन्निपातोत्थितोऽप्येवं पक्व एव हि वस्तिजः ॥
हृद्यो नाभेरधोजश्च साध्या मर्म्मसमीपजः ।
अपक्वश्चैव पक्वश्च साध्यो नोपरि नाभितः ॥
आध्मानं बद्धनिष्यन्दं छर्द्दिहिक्कातृषान्वितम् ।
रुजाश्वाससमायुक्तं विद्रधिर्नाशयेन्नरम् ॥" * ॥
बाह्यविद्रधीनां साध्यासाध्यत्वमाह ।
"साध्या विद्रधयः पञ्च विवर्ज्यः सान्निपातिकः ।
आमं पक्वं विदग्धत्वं तेषां शोथवदादिशेत् ॥"
शोथवत् वक्ष्यमाणव्रणशोथवत् ॥ * ॥
अथ विद्रधिचिकित्सा ।
"जलौकापातनं शस्तं सर्व्वस्मिन्नपि विद्रधौ ।
मृदुर्व्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना ॥
अपक्वविद्रधौ कुर्य्याद्व्रणशोथवदौषधम् ।
वातघ्नमूलकल्कैर्वा वसातैलघृताप्लुतैः ॥
सुखोष्णो बहलो लेपः प्रयोज्यो वातविद्रधौ ।
यवगोधूममुद्गैश्च पिष्टैराज्येन लेपयेत् ॥
विलीयते क्षणेनैव त्वविपक्वस्तु विद्रधिः ।
पैत्तिकं विद्रधिं वैद्यः प्रदिह्यात् सर्पिषा घृतैः ।
पयस्याशीरमधुकचन्दनैर्दुग्धपेषितैः ॥"
पयस्यानेकार्थत्वात् अत्र क्षीरकाकोली गुणाधिक्यात् । तस्या अलाभे अश्वगन्धा ग्राह्या ।
"पञ्चवल्कलकल्केन घृतमिश्रेण लेपयेत् ।
पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्कान्वसंयुतम् ॥
इष्टिकासिकतालोहकीट्टैर्गोशकृता सह ।
मूत्रैः सुखोष्णैर्लेपन स्वेदयेत् श्लेष्मविद्रधिम् ॥
दशमूलीकषायेण सक्षीरेण घृतेन च ।
शोथं व्रणं वा कोष्णेन सशूलं परिषेचयेत् ॥
पित्तविद्रधिवत् सर्व्वाः क्रिया निरवशेषतः ।
विद्रधौ कुशलः कुर्य्यात् रक्तागन्तुनिमित्तयोः ॥
रक्तचन्दनमञ्जिष्ठाविशामधुकगैरिकैः ।
क्षीरेण विद्रधौ लेपो रक्तागन्तुनिमित्तके ॥

कृष्णाजाजी विशाला च धामार्गवफलं तथा ।
पीतं हन्ति निशायामु विद्रधीन् कोष्ठसम्भवान् ॥”
धामार्गवफलं कोषातकीफलम् ।
“श्वेतवर्षाभुवो मूलं मूलं वरुणकस्य च ।
जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत् परम् ॥
गायत्रीत्रिफलानिम्बकटुका मधुकं समम् ।
त्रिवृत्पटोलमूलाभ्यां चत्वारोऽंशाः पृथक् पृथक् ॥
मसूरान्निस्तुषान् दद्यात् एष क्वाथो घृतान्वयेत् ।
विद्रधिगुल्मवीसर्पदाहमोहज्वरापहः ।
तृण्मूर्च्छाच्छर्दिहृद्रोगपित्तासृक्कुष्ठकामलाः ॥”
वाग्भटात् ।
“शिग्रुमूलं जले धौतं पिष्टं वस्त्रेण गालयेत् ।
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः ॥
शोभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसंयुतः ।
हन्त्यन्तर्विद्रधिं जन्तोः प्रातः प्रातर्निषेवितः ॥”
निर्यूहः क्वाथः । इति विद्रध्यधिकारः । इति भावप्रकाशः ॥

विद्रधिनाशनः, पुं, ( विद्रधिं रोगविशेषं नाशयतीति । नश + णिच् + ल्युः । ) शोभाञ्जनवृक्षः । इति त्रिकाण्डशेषः ॥

विद्रवः, पुं, ( विद्रवणमिति । वि + द्रु + “ऋदोरप् ।” ३ । ३ । ५७ । इत्यप् । ) पलायनम् । इत्यमरः ॥ (यथा, महाभारते ।७।१०६। ३८ ।
“तैः शरैस्तव सैन्यस्य विद्रवः सुमहानभूत् ॥”)
बुद्धिः । इति मेदिनी । वे, ५२ ॥ निन्दा । इति शब्दरत्नावली ॥ क्षरणम् । इति केचित् ॥ (विनाशः । यथा, बृहत्संहितायाम् । ३४।१३।
“भौमे कुमारबलपति-
सैन्यानां विद्रवोऽग्निशस्त्रभयम् ॥”)

विद्रावः, पुं, विद्रवः । विपूर्व्वद्रुधातोर्घञ्प्रत्ययेन निष्पन्नः ॥

विद्रावितं, त्रि, ( वि + द्रु + णिच् + क्तः । ) पलायितम् । यथा,—
“विद्राविते भूतगणे ज्वरस्तु त्रिशिराभ्ययात् ॥”
इति श्रीभागवते बाणयुद्धम् ॥

विद्रुतः, त्रि, ( वि + द्रु + क्तः । ) प्राप्तद्रवीभावघृतादिः । तत्पर्य्यायः । विलीनः २ द्रुतः ३ । इत्यमरः ॥ पलायितश्च ॥ (यथा, रघुः ।११।४४।
“विद्रुतक्रतुमृगानुसारिणं
येन बाणमसृजत् वृषध्वजः ॥”
पीडितः । यथा, मनुः । ७ । ३ ।
“अराजके हि लोकेऽस्मिन् सर्व्वतो विद्रुते भयात् ।
रक्षार्थमस्य सर्व्वस्य राजानमसृजत् प्रभुः ॥”)

विद्रुमः, पुं, ( विशिष्टो द्रुमः । यद्वा, विशिष्टो द्रुर्व्वृक्षोऽस्यास्तीति । “द्युद्रुभ्यां मः ।” ५ । २ । १०८ । इति मः । ) प्रवालः । ( यथा, ऋतुसंहारे । ६ । १७ ।
“आमूलतो विद्रुमरागताम्राः
सपल्लवं पुष्पचयं दधानाः ।
कुर्व्वन्त्यशोका हृदयं सशोकं
निरीक्ष्यमाणा नवयौवनानाम् ॥”)
रत्नवृक्षः । इति मेदिनी । मे, ५३ ॥ ( यथा, रघुः । १३ । १३ ।
“तवाधरस्पर्द्धिषु विद्रुमेषु
पर्य्यस्तमेतत् सहसोर्म्मिवेगात् ।
ऊर्द्धाङ्कुरप्रोतमुखं कथञ्चित्
क्लेशादपक्रामति शङ्खयूथम् ॥”)

विद्रुमलता, स्त्री, ( विद्रुम इव लता । ) नलीनामगन्धद्रव्यम् । इत्यमरः ॥

विद्रुमलतिका, स्त्री, ( विद्रुमलता । स्वार्थे कन् । टापि अत इत्वम् । ) नलिका । इति राजनिर्घण्टः ॥

विद्वत्कल्पः, त्रि, ( विद्वस् + कल्पः । ) ईषदूनो विद्वान् । इति मुग्धबोधव्याकरणम् ॥

विद्वत्तमः, त्रि, ( विद्वस् + तमः ।) अयमेषामतिशयेन विद्वान् । इति व्याकरणम् ॥

विद्वत्तरः, त्रि, ( विद्वस् + तर । ) अयमनयोरतिशयेन विद्वान् । इति व्याकरणम् ॥

विद्वद्देशीयः, त्रि, ( ईषदूनो विद्वान् । विद्वस् + देशीयर् । ) विद्वत्कल्पः । इति व्याकरणम् ॥

विद्वद्देश्यः, त्रि, ( ईषदूनो विद्वान् । विद्वस् + देश्यः । ) विद्वत्कल्पः । इति मुग्धबोधव्याकरणम् ॥

विद्वान्, [ स् ] त्रि, (वेत्तीति । विद् + शतृ । “विदेः शतुर्वसुः ।”७।१।३६ । इति शतुर्वसुरादेशः ।) आत्मवित् । प्राज्ञः । पण्डितः । इति मेदिनी ॥ ( यथा, मनुः । १ । ९७ ।
“ब्राह्मणेषु तु विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः ॥”)

विद्विषः, पुं, ( विशेषेण द्वेष्टीति । वि + द्विष् + इगुपधेति कः । ) शत्रुः । विद्वेषके, त्रि । विपूर्व्वकद्विषधातोः कप्रत्ययेन निष्पन्नः ॥

विद्वेषः, पुं, ( वि + द्विष् + घञ् । ) शत्रुता । तत्पर्य्यायः । वैरम् २ विरोधः ३ । इत्यमरः ॥ अनुशयः ४ द्वेषः ५ समुच्छ्रयः ६ वैरता ७ । इति जटाधरः ॥ द्वेषणम् ८ । इति शब्दरत्नावली ॥ ( यथा, आर्य्यासप्तशत्याम् । ६०२ ।
“सुभग त्वमपरभित्ती भवता संमर्द्य पीडिता सुतनुः ।
सा पीडयेव जीवति दधती वैरेषु विद्वेषम् ॥”)

विद्वेषकः, त्रि, विद्वेष्टा । द्वेषकर्त्ता । विरोधकः । वैरी । विद्वेष्टीति विपूर्व्वद्विषधातोर्णक(ण्वुल्) प्रत्ययेन निष्पन्नः ॥ ( यथा, महाभारते । १२ । ७१ । २४ ।
“न मित्रध्रुङ्नैकृतिकः कृतघ्नः
शठोऽनृतधर्म्मविद्वेषकश्च ॥”)

विद्वेषणं, क्ली, विद्वेषः । विपूर्व्वद्विषधातोरनट् (ल्युट्)प्रत्ययेन निष्पन्नम् ॥ (यथा, महाभारते । ३ । १९५ । ३ ।
“विद्वेषणं परमं जीवलोके
कुर्य्यान्नरः पार्थिव याच्यमानः ।
तत्त्वां पृच्छामि कथयस्व राजन्
दद्याद्भवान् दयितञ्च मेऽद्य ॥”)
अभिचारकर्म्मविशेषः । तस्य विहितदिनादि यथा,—
“सूर्य्योदयं समारभ्य घटिकादशकं क्रमात् ।
ऋतवः स्युर्व्वसन्ताद्या अहोरात्रं दिने दिने ॥
वसन्तग्रीष्मवर्षाश्च शरद्धेमन्तशैशिराः ।
हेमन्तः शान्तिके प्रोक्तो वसन्तो वश्यकर्म्मणि ॥
शिशिरः स्तम्भने ज्ञेयो विद्वेषे ग्रीष्म ईरितः ।
पौर्णमासी मन्दभागयुक्ता विद्वेषकर्म्मणि ॥
षष्ठ्यां पूर्व्वेऽह्नि मध्याह्ने विद्वेषोच्चाटनं तथा ।
शान्तिपुष्टी दिनस्यान्ते सन्ध्याकाले च मारणम् ॥
कुर्य्याच्च स्तम्भनं कार्य्यं सर्व्वत्रशिवोदये ।
द्वेषोच्चाटादिकं कर्म्म कुलीरे वा तुलोदये ॥”
भूतोदयनियममाह ।
“जलं शान्तिविधौ शस्तं वश्ये वह्निरुदीरितः ।
स्तम्भने पृथिवी शस्ता विद्वेषे व्योम कीर्त्तितम् ॥”
दिङ्नियममाह ।
“याम्ये रक्षसि विद्वेषं शान्तिं वारुणवायवे ॥”
मन्त्रनियममाह ।
“विद्वेषोच्चाटनं वह्निवायुयोगे च कारयेत् ॥ * ॥
अथ विद्वेषणं वक्ष्ये मिथो विद्वेषणं रिपोः ।
करणीयं मयैतानि । यदुक्तं मालिनीमते ॥
अन्योन्ययुद्धसंरम्भरचितौ समरे युतौ ।
तदीयनखरोद्भिन्नधूलिमादाय साधकः ॥
धूलिना तेन विद्वेषस्ताडनादभिजायते ॥ * ॥
परस्परं रिपोर्म्मैत्रं मित्रेण सह निश्चितम् ।
महिषाश्वपुरीषाभ्यां गोमूत्रेण समालिखेत् ॥
यस्य नाम तयोः शीघ्रं विद्वेषश्च परस्परम् ।
रक्तेन महिषाश्वेन श्मशानवस्त्रके लिखेत् ॥
यस्य नाम भवेत्तस्य काकपक्षेण वेष्टितम् ।
वेष्टयेत् कृष्णकाकालकैश्चैकान्तरेखतः ॥
गर्त्ते श्मशानशरावस्तु पित्तकाननमध्यतः ।
षट्कोणचक्रमध्ये तु रिपोर्नामसमन्वितम् ॥
मन्त्रराजं प्रवक्ष्यामि महाभैरवसंज्ञकम् ।
ॐ नमो महाभैरवाय रुद्ररूपाय श्मशानवासिने अमुकामुकयोर्व्विद्वेषं कुरु कुरु हन हन हुँ हुँ फट् ।
एतन्मन्त्रं लिखित्वा च विद्वेषो जायते ध्रुवम् ॥”
इति षट्कर्म्मदीपिका ॥
( विशेषेण द्वेष्टीति । वि + द्विष + ल्युः । विद्वेषके, त्रि । यथा, हरिवंशे । २८ । ३० ।
“नास्ति-वादार्थशास्त्रं हि धर्म्मविद्वेषणं परम् ॥”
तथा च महाभारते । १२ । १२६ । २ ।
“आक्रोशनं परीवादो मम विद्वेषणं महत् ।
आक्रोशः पूजितैर्नित्यं पूजितोऽहं न संशयः ॥”)

विद्वेष(षि)णी, स्त्री, स्त्रीविशेषः । यथा,—
“विद्वेषणी तु या कन्या भ्रुकुटीकुटिलानना ।
तस्याः द्वौ तनयावास्तामयकारप्रकाशकौ ॥”
इति मार्कण्डेयपुराणे दुःसहवंशोत्पत्तिः ॥

विद्वेषी, [ न् ] त्रि, (विशेषेण द्वेष्टीति । वि + द्विष् + णिनिः ।) यद्वा, विद्वेषशब्दादस्त्यर्थे इन्प्रत्ययेन निष्पन्नः । विद्वेषविशिष्टः । वैरी । (यथा,

महाभारते । १३ । १४५ । ५८ ।
"अपरे सत्यविज्ञाना धर्म्मविद्वेषिणो नराः ।
नास्त्यात्मवेदविद्वांसो नेच्छन्ति परिवर्त्तितुम् ॥")

विध, श विधौ । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-सक०-सेट् ।) विधिर्विधानम् । श, विधति वेधा जगत् । अनेकार्थत्वात् छिद्रकरणेऽप्ययम् । विधितश्छिद्रितो विद्धे । इत्यमरः ॥ कर्णवेधः । इति दुर्गादासः ॥

विधः, पुं, (विध्यते क्रियते इति । विध + घञर्थे कः ।) विधानम् । हस्त्यन्नम् । प्रकारः । वेधनम् । ऋद्धिः । इति भरतधृतरभसामरौ ॥

विधवनं, क्ली, कम्पनम् । विपूर्व्वधूधातोर्भावे अनट् (ल्युट्) प्रत्ययेन निष्पन्नम् ॥

विधवा, स्त्री, (विगतो धवो भर्त्ता यस्याः ।) मृतभर्त्तृका । तत्पर्य्यायः । विश्वस्ता २ । इत्यमरः ॥ जालिका ३ रण्डा ४ यतिनी ५ यतिः ६ । इति शब्दरत्नावली ॥ (यथा, ऋग्वेदे । १० । ४० । २ ।

"को वां शयुत्रा विधवेव देवरं
मर्य्यं न योषा कृणुते सधस्थ आ ॥")

तस्याः कर्त्तव्याकर्त्तव्यानि यथा । विष्णुः ।
"मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा इति ।"
ब्रह्मचर्य्यं मैथुनवर्ज्जनं ताम्बूलादिवर्ज्जनञ्च ।
यथा, प्रचेताः ।
"ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्ज्जयेत् ॥"
अभ्यञ्जनं आयुर्वेदोक्तं पारिभाषिकम् । स्मृतिः ।
"एकाहारः सदा कार्य्यो न द्वितीयः कदाचन ।
पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम् ॥
गन्धद्रव्यस्य सम्भोगो नैव कार्य्यस्तया पुनः ।
तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः ॥"
एतत्तु तर्पणं पुत्त्रपौत्त्राद्यभाव इति मदनपारिजातः ॥
"वैशाखे कार्त्तिके माघे विशेषनियमञ्चरेत् ।
स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः ॥"
इति शुद्धितत्त्वम् ॥ * ॥

अपि च ।
"ब्राह्मणी पतिहीना या भवेन्निष्कामिनी सदा ।
एकभक्ता दिनान्ते सा हविष्यान्नरता सदा ॥
न धत्ते दिव्यवस्त्रञ्च गन्धद्रव्यं सुतैलकम् ।
स्रजञ्च चन्दनञ्चैव शङ्खसिन्दूरभूषणम् ॥
त्यक्त्वा मलिनवस्त्रा स्यान्नित्यं नारायणं स्मरेत् ।
नारायणस्य सेवाञ्च कुरुते नित्यमेव च ॥
तन्नामोच्चारणं शश्वत् कुरुतेऽनन्यभक्तितः ।
पुत्त्रतुल्यञ्च पुरुषं सदा पश्यति धर्म्मतः ॥
मिष्टान्नं न च भुङ्क्ते सा न कुर्य्याद्विभवं व्रजम् ।
एकादश्यां न भोक्तव्यं कृष्णजन्माष्टमीदिने ॥
श्रीरामस्य नवम्याञ्च शिवरात्रौ पवित्रया ।
अघोरायाञ्च प्रेतायां चन्द्रसूर्य्योपरागयोः ॥
अष्टद्रव्यं परित्याज्यं भुङ्क्ते परमेव च ।
ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम् ।
सन्न्यासिनाञ्च गोमांसं सुरातुल्यं श्रुतौ श्रुतम् ॥
रक्तशाकं मसूरञ्च जम्बीरं पर्णमेव च ।
अलाबुर्वर्त्तुलाकारा वर्ज्जनीया च तैरपि ॥
पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम् ।
यान आरोहणं कृत्वा विधवा नरकं व्रजेत् ॥
न कुर्य्यात् केशसंस्कारं गात्रसंस्कारमेव च ।
केशवेणीजटाकारं तत्क्षौरं तीर्थकं विना ॥
तैलाभ्यङ्गं न कुर्व्वीत न हि पश्यति दर्पणम् ।
सुखञ्च परपुंसाञ्च यात्रां नृत्यं महोत्सवम् ॥
नर्त्तकं गायनञ्चैव सुवेशं पुरुषं शुभम् ।"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८३ अध्यायः ॥

(विधवायास्तु पत्यन्तर-ग्रहणं निषिद्धं न तद्विवाहमन्त्रवाच्यञ्च । तत्र विरोधवती विचारेण ग्रन्थविस्तृतिर्भवेदित्यस्माभिः केवलं कतिपयानि वचनान्युद्धृत्य दर्शयामि तानि सुधीभिर्विचारणीयानीति ॥ तत्र याज्ञवल्क्यः ।
"अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम् ॥"
अनन्यपूर्व्विकां दानेनोपभोगेन वा पुरुषान्तरापरिगृहीताम् ॥ याज्ञः । २ । ३ ।
"सवर्णामसमानार्षाममातृपितृगोत्रजाम् ।
अनन्यपूर्व्विकां लघ्वीं शुभलक्षणसंयुताम् ॥"
गौतमः । ४ । १ ।
"गृहस्थः सदृशीं भार्य्यां विन्देतानन्यपूर्व्विकाम् ॥"
वशिष्ठः । ८ । १ ।
"गृहस्थो विनीतक्रोधहर्षो गुरुणानुज्ञातः स्नात्वा असमानार्षेयामस्पृष्टमैथुनां भार्य्यां विन्देत ॥" हारीतः । ४ । १ ।
"असमानार्षगोत्रां हि कन्यां सभ्रातृकां शुभाम् ।
सर्व्वावयवसम्पन्नां सुवृत्तामुद्वहेन्नरः ॥"
पारस्करगृह्यसूत्रम् ।
"अनिसृष्टाय कुमार्य्याः पाणिं गृह्णीयात् त्रिषु त्रिषूत्तरादिषु ॥"
कन्याशब्दार्थः कथ्यते । "कन्या कुमारी" इत्यमरः । "कन्यापदस्यादत्तस्त्रीमात्रवचनेन ।" इत्यादि दायभागटीकायां आचार्य्यचूडामणिः । "कन्यापदस्यापरिणीतामात्रवचनात् ।" इति रघुनन्दनः ॥ "अनूढात्वेन कन्यापदस्य सपत्नीकन्या बोधकतया अमुख्यत्वप्रसक्तेः तद्रूपेणैव कन्यापदस्य शक्तिः ।" इति श्रीकृष्णतर्कालङ्कारः ॥ पूर्व्वोक्तैर्व्वचनैः कुमारीणामेव परिणये विवाहमन्त्रवाच्यत्वं नतूढानाम् ॥
मनुः । ५ । १५१—१५२ ।
"यस्मै दद्यात् पिता त्वेनां भ्राता वानुमते पितुः ।
तं शुश्रूषेत जीवन्तं संस्थितञ्च न लङ्घयेत् ॥
मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः ।
प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम् ॥"
तत्रैव । १६०—१६२ ।
"मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्त्रापि यथा ते ब्रह्मचारिणः ।
अपत्यलोभाद् या तु स्त्री भर्त्तारमतिवर्त्तते ।
सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥
नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहे ।
न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते ॥
पतिं हित्वापकृष्टं स्वमुत्कृष्टं या निषेवते ।
निन्द्यैव सा भवेल्लोके परपूर्व्वेति चोच्यते ॥"
लघुहारीतः ।
"स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे ।
पतिगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया ॥"
मनुः । ९ । ४७ ।
"सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाहुर्ददानीति त्रीण्येतानि सतां सकृत् ॥"
तत्रैव । ५९—६५ ।
"देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया ।
प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥
विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि ।
एकमुत्पादयेत् पुत्त्रं न द्वितीयं कथञ्चन ॥
द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः ।
अनिर्वृत्तं नियोगार्थं पश्यन्तो धर्म्मतस्तयोः ॥
विधवायां नियोगार्थे निर्वृत्ते तु यथाविधि ।
गुरुवच्च स्नुषावच्च वर्त्तेयातां परस्परम् ॥
नियुक्तौ यौ विधिं हित्वा वर्त्तेयातान्तु कामतः ।
तावुभौ पतितौ स्यातां स्नुषाग-गुरुतल्पगौ ॥
नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः ।
अन्यस्मिन् हि नियुञ्जाना धर्म्मं हन्युः सनातनम् ॥
नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्त्यते क्वचित् ।
न विवाहविधावुक्तं विधवावेदनं क्वचित् ॥"
"न च विवाहविधायकशास्त्रे अन्येन पुरुषेण सह पुनर्व्विवाह उक्तः ॥" इति कुल्लूकः ॥
तत्रैव । ६८—७० ।
"ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥
यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥
यथाविध्यभिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।
मिथो भजेताप्रसवात् सकृत् सकृदृतावृतौ ॥"
"वाग्भग्रहणात् अक्षतगमनोपदेशाच्च यस्मै वाग्दत्ता तस्यैवापत्यं भवति ।" इति कुल्लूकभट्टः ॥ तत्रैव । ७१ ।
"न दत्त्वा कस्यचित् कन्यां पुनर्दद्याद्विचक्षणः ।
दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतम् ॥"
तत्रैव । ७९ ।
"उन्मत्तं पतितं क्लीवमबीजं पापरोगिणम् ।
न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्त्तनम् ॥"
तत्रैव । ९७ ।
"कन्यायां दत्तशुल्कायां म्रियते यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्यानुमन्यते ॥"
आश्वलायनगृह्यसूत्रम् । ४ । २ । २१ ।
तामुत्थापयेत् देवरः पतिस्थानीयः अन्तेवासी जरद्दासः । उदीर्ष्व नार्य्यभि जीवलोकम् ॥
अथ पत्नीमुत्थापयेत् कः देवरः पतिस्थानीयः स पतिस्थानीय इत्युच्यते । अनेन ज्ञायते पतिकर्त्तृकं कर्म्म पुंसवनादि पत्यसम्भवे देवरः;

कुर्य्यात्। धर्म्मेवासौ स्त्रियः स या यो वस्तुवाले दातुं ज्ञात्वा हतोऽभूत् स वा। ॥ पराशरः। ४। २५—२६।

"ज्येष्ठभ्राता यदा तिष्ठेत् आधानं नैव कारयेत्।
अनुज्ञातस्तु कुर्व्वीत शङ्खस्य वचनं यथा॥
नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥"
पराशरः। १०। २५—३०।

"वन्दिग्राहेण या भुक्ता हत्वा बद्धा बलाद्‌-
भयात्।
कृत्वा सान्तपनं कृच्छ्रं शुध्येत् पराशरो-
ऽब्रवीत्॥
सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्म्मभिः।
प्राजापत्येन शुद्ध्येत ऋतुप्रस्रवणेन तु॥
पतत्यर्द्धं शरीरस्य यस्य भार्य्या सुरां पिबेत्।
पतितार्द्धशरीरस्य निष्कृतिर्न विधीयते॥
गायत्रीं जपमानस्तु कृच्छ्रं सान्तपनञ्चरेत्।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्॥
एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम्।
जारेण जनयेद्गर्भं गते त्यक्ते मृते पतौ॥
तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीम्।
ब्राह्मणी तु यदा गच्छेत् परपुंसा समन्विता॥
सा तु नष्टा विनिर्द्दिष्टा न तस्या गमनं पुनः।
कामान्मोहाद् यदा गच्छेत् त्यक्त्वा बन्धून् सुतान्
पतिम्॥
सा तु नष्टा परे लोके मानुषेषु विशेषतः।
दशमे तु दिने प्राप्ते प्रायश्चित्तं न विद्यते॥
दशाहं न त्यजेन्नारीं त्यजेन्नष्टश्रुता तथा।
भर्त्ता चैव चरेत्कृच्छ्रं कृच्छ्रार्द्धं चैव बान्धवाः॥
तेषां भुक्त्वा च पीत्वा च अहोरात्रेण शुध्यति।
ब्राह्मणी तु यदा गच्छेत् परपुंसा विवर्ज्जिता॥
गत्वा पुंसां शतं याति त्यजेयुस्तान्तु गोत्रिणः।
पुंसो यदि गृहं गच्छेत् तदशुद्धं गृहं भवेत्॥
पितृमातृगृहं यच्च जारस्यैव तु तद्गृहम्।
उल्लिख्य तद्गृहं पश्चात् पञ्चगव्येन शुद्ध्यति॥"
इति पाराशरीयम्। उद्वाहतत्त्वे।

"समुद्रयात्रास्वीकारः कमण्डलुविधारणम्।
द्विजानामसवर्णासु कन्यासूपयमस्तथा॥
देवरेण सुतोत्पत्तिर्मधुपर्के पशोर्वधः।
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा॥
दत्तायाश्चैव कन्यायाः पुनर्द्दानं परस्य च।
दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ॥
महाप्रस्थानगमनं गोमेधश्च तथा मखम्।
इमान् धर्म्मान् कलियुगे वर्ज्ज्यानाहुर्म्मनीषिणः॥"
हेमाद्रिपराशरभाष्ययोरादित्यपुराणम्।
"दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः।
देवरेण सुतोत्पत्तिर्द्दत्ता कन्या प्रदीयते॥
कन्यानामसवर्णानां विवाहश्च द्विजातिभिः।
आततायिद्विजाग्र्याणां धर्म्मयुद्धे निर्हणनम्॥
वानप्रस्थाश्रमस्यापि प्रवेशो विधिदेशितः।
वृत्तस्वाध्यायसापेक्षमघसङ्कोचनन्तथा॥
प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकम्।
संसर्गदोषः पापेषु ... प्रोक्तो ... वधः॥
दत्तौरसेतरेषान्तु पुत्र ... [illegible] ... ।
शूद्रेषु दासगोपालकुलमि ... [illegible] ... गौरिकाम्॥
भोज्य ... । गृहस्थस्य तीर्थसेवातिदूरतः।
... शूद्रस्य पक्वादिक्रियापि च॥
... गुमरणञ्चैव वृद्धादिमरणं तथा।
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः॥
नि[वर्त्ति]तानि कर्म्माणि व्यवस्थापूर्व्वकं बुधैः।
समयश्चापि साधूनां प्रमाणं वेदवद्भवेत्॥"
याज्ञ ... । १। ६५।

"सकृत् प्रदीयते कन्या हरंस्तां चौरदण्डभाक्।
दत्तामपि हरेत् कन्यां श्रेयांश्चेद्वर आव्रजेत्॥"
शोनकः।

"प्रतिगृह्यापि धर्म्मेण संशुल्काय न दद्यात्॥"
वशिष्ठः।

"कुलशीलविहीनस्य षण्डादिपतितस्य च।
अपस्मारिविधर्म्मस्य रोगिणां वेशधारिणाम्।
दत्तामपि हरेत्कन्यां ... ॥"
वशिष्ठः उद्वाहतत्त्वे।

"अद्भिर्वाचा प्रदत्तायां म्रियेतोर्द्ध्वं वरो यदि।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा॥"
उद्वाहतत्त्वे। यमः।

"नोदकेन न वा वाचा कन्यायाः पतिरिष्यते।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे॥"
उद्वाहतत्त्वे कात्यायनः।

"अनेकेभ्योऽपि दत्तायामनूढायान्तु तत्र वै।
वराणाञ्च सर्व्वेषां दत्तं पूर्व्ववरो हरेत्॥"
नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहे।
न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते॥
अभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्दितम्।
शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते॥"
नारदसंहिता।

"अक्षतयोनिरूढा या निर्दोषा नाथमाश्रिता।
बन्धुभिः सा नियोक्तव्या विधवा स्वयमाश्रयेत्॥
नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥
अष्टौ वर्षाण्युदीक्षेत ब्राह्मणी प्रोषितं पतिम्।
अप्रसूता च या नारी परतोऽन्यं समाश्रयेत्॥
क्षत्रिया षट् समास्तिष्ठेत् अप्रसूता समा
त्रयम्।
वैश्या प्रसूता चत्वारि द्वे वर्षे इतरा वसेत्॥
न शूद्रायाः स्मृतः कालः एव प्रोषितयोषि-
ताम्।
जीवति श्रूयमाणे तु स्यादेष द्विगुणो विधिः॥
अतोऽन्यगमने स्त्रीणां एष दोषो न विद्यते॥"
ऋग्वेदे। १०। ४०। २।

"को वां शयुत्रा विधवेव देवरम्॥"
"तत्र] दृष्टान्तं दर्शयति शयुत्रा शयने विधवेव यथा मृतभर्त्तृका नारी देवरं भर्त्तृभ्रातरं अभि-मुखीकरोति।" "तथाच यास्कः कस्विद्रात्रौ भवथः क्व दिवा काभिप्राप्तिं कुरुथः क्व वसथः को वां शयने विधवेव देवरं देवरः कस्माद्द्वितीयो वर उच्यते। विधवा विधातृका भवति विधव-नाद्वा विधावनाद्वेति चर्म्मशिरा अपिवा ध इति मनुष्यनाम तद्वियोगाद्विधवा देव-दीव्यतिकर्म्मा मर्य्यो मनुष्यो मरणधर्म्मा मं- ... यौतिराकुरुते सधस्थाने इति।" इति तद्भा-ष्यम्॥

एतेन पूर्व्वोल्लिखितप्रमाणपर्य्यालोचनेन इदम् प्रतीयते यत् विधवाया विवाहो नास्ति किन्तु देवरादिना नियोगोऽस्ति। सोऽपि कलौ ... आदिपुराणवत् नास्त्येव। नष्टेमृते इत्यादि वच-... अन्यवचनैरेकवाक्यतया पतिग्रहणस्य पालना-र्थत्वं वाग्दानपर्य्यत्वं वा दत्तामपि हरेत्कन्या-मित्यादिवचने दत्ताशब्दस्य वाग्दत्तापरार्थत्वञ्च एतच्च सर्व्वं सुधीभिर्भाव्यमिति॥)

विधा, स्त्री, (विधानमिति। वि + धा + क्विप्।) विधिः। प्रकारः। इत्यमरः॥ यथा, तैत्ति-रीयोपनिषदि। २। १०। १।
"तस्मात् यया कया च विधया बहून्नं प्राप्नु-यात्॥")
ऋद्धिः। गजान्नम्। वेतनम्। इति मेदिनी-शब्दरत्नावल्यौ॥ कर्म्म। इति हेमचन्द्रः॥ वेधनम्। इति त्रिकाण्डशेषः॥ (आपः। यथा, वाजसनेयसंहितायाम्। १४। ७।
"सजूरृतुभिः सजूर्व्विधाभिः सजूर्व्वसुभिः।"
"विधाभिर्व्या त्वं सजूरसि विदधति सृजन्ति जग-दिति विधा आपस्ताभिः। आपो वै विधा अद्भिर्हीदं सर्व्वं विहितमिति श्रुतेः। आप एव ससर्जादौ इति स्मृतेश्च।" इति तद्भाष्ये महीधरः॥)

विधाः, [स्] पुं, ब्रह्मा। इत्युणादिकोषः॥

विधाता, [ऋ] पुं, (विदधातीति। वि + धा + तृच्।) ब्रह्मा। इत्यमरः॥ (विष्णुः। यथा महाभारते। १३। १४९। १४।
"अविज्ञाता सहस्रांशुर्व्विधाता कृतलक्षणः॥"
"विशेषेण शेषदिग्गजभूभृतः समस्तभूता-न्दधातीति विधाता।" इति तत्र शाङ्कर-भाष्यम्॥ ॥ महेश्वरः। यथा, महाभारते। १३। १७। १०४।
"उमाङ्कश्च विधाता च मान्धाता भूतभावनः॥")
कामदेवः। इति मेदिनी। ते, १६॥ मदिरा। इति राजनिर्घण्टः॥ भृगुसुनिपुत्रः। तस्य भार्य्या मेरुकन्या नियतिः। तस्य पुत्रः प्राणः। तस्य सुतः वेदशिराः कविश्च। इति श्रीभाग-वतमतम्॥ ॥ विधातुर्व्विभिन्ना गतिर्यथा,—
कंस उवाच।
"हस्तेन पर्व्वतं हन्तुं शक्तो धाता च दैवतः।
कीटेन सिंहशार्दूलं मशकेन गजं तथा॥
शिशुना च महावीरं महान्तं क्षुद्रजन्तुभिः।
भूमिकेन च मार्ज्जारं मण्डूकेन भुजङ्गमम्॥
एवं क्रमेण जनकं भक्ष्येणैव च भक्षकम्।
वह्निना च जलं नष्टं वह्निं शुष्कतृणेन च॥
पीताः सप्त समुद्राश्च द्विजेनैकेन वह्निना।

धातुर्गतिर्विचित्रा च दुर्ज्ञेया भुवनत्रये ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ७ अध्यायः ॥
अपि च ।

भगवानुवाच ।

"सम्बन्धो हि विधिवशो न मे साध्यो व्रजाधिप ।
प्रजापतिर्योजकर्त्ता जन्मदातारमेव च ॥
का कस्य पत्नी कन्या वा वरः को वा सुताधनः ॥
कर्म्मानुरूपफलदः सर्व्वेषां कारणं विधिः ।
भवितव्यं कृतं कर्म्म तद्भोग्यं श्रुतौ श्रुतम् ॥
अन्यथा निष्फलं सर्व्वमनीशस्योद्यमो यथा ।
वृषभानुप्रिया धात्रा लिखिता चेत् सुता मम ॥
पुरा भूतेव को वार्य्यं केनान्येन निवार्य्यते ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १७ अः ॥*॥
अन्यच्च ।

"त्यागे दोषः कामुकीनां पापभाक् पापभाक् सदा ।
अष्टा जगद्विधातापि न विरक्तः कलत्रवान् ।
त्यागे दोषस्तु कदाचिन्नास्त्याकं त्यक्तयोषि-
ताम् ॥"*॥

अपरञ्च ।

"स्वात्मदुःखेन दुःखार्त्तो यो यं शपति निश्चितम् ।
तं शापं खण्डितुं शक्तो न विधाता जगत्-
प्रभुः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २० अः ॥*॥
अन्यौ जगतां पतिर्यथा,—
"द्वौ धाता च विधाता च पौराणौ जगतां
पती ।
द्वौ द्वाःस्थौ निलोकेऽस्मिन् धर्म्माधर्म्मौ प्रकी-
र्त्तितौ ॥"

इति वह्निपुराणे गणभेदनामाध्यायः ॥
( त्रि, मेधावी । इति निघण्टुः । ३ । १५ ॥
विहितकर्म्मानुष्ठाता । यथा, मनुः ।११।३५।
"विधाता शासिता वक्ता मैत्रो ब्राह्मण उच्यते ।
तस्मै नाकुशलं ब्रूयात् न शुष्कां गिरमीरयेत् ॥"
स्रष्टा । सर्व्वसमर्थः । यथा, रघुः । १ । ७० ।
"तया हीनं विधातर्म्मां कथं पश्यन्न दूयसे ।
सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमपादपम् ॥"
जनयिता । दाता । यथा, कुमारे । १ । ५७ ।
"स्वयं विधाता तपसः फलानां
केनापि कामेन तपश्चचार ॥")
विधातृभूः, पुं, ( विधातुर्ब्रह्मणो भूरुत्पत्तिर्यस्य । )
नारदमुनिः । इति त्रिकाण्डशेषः ॥
विधातायुः, [ स् ] पुं, ( विधातुरायुर्व्विस-
ताक्षपरिमाणं यस्मात् । तत्कर्म्मक्रिया विना वस्तु-
रविज्ञानासम्भवादेवास्य तथात्वम् । ) सूर्य्यः ।
यथा,—
"वेदशास्त्रो विधातायुर्द्दिव्यचक्षो दिवाकरः ॥"
इति शब्दचन्द्रिका ॥
क्ली, ब्रह्मणो वयः । तद्यथा । चतुर्युग-
मन्वन्तरैर्मनुक्षयः एकं दिनं भवति । तत्तुल्य-
मानेनैकः कल्पस्त्रिंशत्कल्पे ब्रह्मण एको
मासो भवति । एवाहर्माणैर्दशमासैर्मनुक्षयः

संवत्सरो भवति, तेन शतवर्षपरिमितं ब्रह्मण आयुः ।
तत्र पञ्चाशद्वर्षाणि गतानि । एकपञ्चाशद्वर्षा-
रम्भेऽधुना श्वेतवराहकल्पः । अत्र मन्वन्त-
राणि षट् गतानि । सप्तमं अधुना वैवस्वतमन्वन्तरं
वर्त्तते । इति श्रीभागवतमतम् ॥
विधात्री, स्त्री, (वि+धा+तृच् । ङीप् ।) पिप्पली ।
इति शब्दचन्द्रिका ॥ विधानकर्त्री । यथा,—
"गताङ्गनां बाहुपकारजातकाञ्चीपरिलग्न-
स्त्रितन्त्रीं दिव्यवर्णां त्रिभुवनविधात्रीं त्रिनयनाम् ।
सदाप्राणवृत्ता मुक्तां प्रथमस्मृदि मध्ये रस-
प्रयुक्तां त्वां ध्यायन् जननि जनयति कवि
कविः ॥"

इति तन्त्रसारे कर्पूरादिस्तोत्रम् ॥
विधानं, क्ली, ( वि+धा+ल्युट् । ) विधिः । इति
जटाधरः ॥ ( यथा, मनुः । ७ । १८१ ।
"यदातु यानमातिष्ठेत् परराष्ट्रं प्रति प्रभुः ।
तदानेन विधानेन यायादरिपुरं शनैः ॥" )
करणम् । विधानेन । तत्तार्थविधिशब्दटीकायां
भरतः ॥ ( यथा, भागवते । ७ । १४ ।
"परस्परेण पुंस्त्रीयध्रुभं
न चेदिदं द्वन्द्वमयोजयिष्यत ।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां विफलोऽभविष्यत् ॥" )
करिकवलः । इति हारावली ।१९१ ॥ (वेदादि-
शास्त्रम् । यथा, मनुः । १ । ३ ।
"त्वमेको ह्यस्य सर्व्वस्य विधानस्य स्वयम्भुवः ।
अचिन्त्यस्याप्रमेयस्य कार्य्यतत्त्वार्थवित् प्रभो ॥"
नाटकाङ्गविशेषः । यथा, साहित्यदर्पणे । ६ ।
३४६ ।
"सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ॥"
यथा, बालचरिते ।
"उत्साहातिशयं वत्स तव बाल्यञ्च पश्यतः ।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः ॥" )
विधानकं, क्ली, व्यथा । इति शब्दरत्नावली ॥
( विधिः । यथा, कथासरित्सागरे ।४९।१८०।
"ततस्तुष्टो भवत्योऽसौ तस्मायादित्यशर्म्मणे ।
ददौ सुवर्णमन्नमर्पितं सविधानकम् ॥")
विधानवेत्तरि, त्रि ॥
विधानगः, पुं, ( विधानं गायतीति । गै+टक् । )
पण्डितः । इति शब्दरत्नावली ॥
विधायकः, त्रि, विपूर्व्वधाञ्धातोर्ण्वक(ण्वुल्)प्रत्य-
येन निष्पन्नः ॥ विधानकर्त्ता । ( यथा, राज-
तरङ्गिण्याम् । १ । १६८ ।
"स विहारस्य निर्म्माता शुष्को शुष्कपुरस्य यः ।
जयस्वामिपुरस्यापि शुद्धधीः स विधायकः ॥")
विधिज्ञापकः ॥
विधायी, [न्] त्रि, विधानकर्त्ता । विपूर्व्वकधाञ्-
धातोर्णिन्प्रत्ययेन निष्पन्नः ॥ ( यथा, कथा-
सरित्सागरे । ४२ । ११३ ।
"भार्य्याञ्च काव्यालङ्कारां नाटकार्थविधा-
यिनीम् ।
सूर्य्यश्च विचित्रेव पापां तां पुत्रघातिनीम् ॥")

विधाय्यं, क्ली, कम्पनम् । विपूर्व्वधूधातोर्ण्यप्रत्यये
निष्पन्नम् ॥
विधिः, पुं, ( विधति विदधाति विश्वमिति । वि
विधाने+"इगुपधात् कित् ।" उणा० ४।११६
इति इन् । स च कित् । ) ब्रह्मा । ( यथ
नैषधे । २२ । ४७ ।
"विधिर्व्विधत्ते विधुना वधूनां
किमाननं काञ्चनसञ्चकेन ॥"*॥
विधीयेते सुखदुःखे अनेनेति । वि+धा+
"उपसर्गे घोः किः ।" ३ । ३ । ९२ । इति किः ।
भाग्यम् । ( यथा, मार्कण्डेये । ८ । १८२ ।
"राज्यनाशं सुहृत्त्यागो भार्य्यातनयविक्रयः ।
हरिश्चन्द्रस्य राजर्षेः किं विधे ! न कृतं त्वया ॥"
क्रमः । विधानम् । इत्यमरः ॥ कालः । इति
मेदिनी । धे, १७ ॥ विधिवाक्यम् । ( यथा,
गीतायाम् । १६ । २३ ।
"यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥")
प्रकारः । नियोगः । इति हेमचन्द्रः ॥ विष्णुः ।
इति हलायुधः । कर्म्म । इति त्रिकाण्डशेषः ॥
( यथा, देवीपुराणे ।
"तस्मात् सर्व्वः प्रयत्नेन चरत्विह विधेर्विभुः ॥")
गजान्नम् । इति जटाधरः ॥ वैद्यः । इति
राजनिर्घण्टः ॥ यागोपदेशकग्रन्थः । इति
भरतधृतकोषः ॥ षड्विधसूत्रलक्षणान्तर्गत-
लक्षणविशेषः । यथा,—
"संज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥"
अप्राप्तप्रापको विधिः । स तु द्विविधः । वर्णोत्-
पादनरूपोऽभावरूपश्च । वर्णोत्पादनरूपो यथा
तद्वर्गे च इत्यादि । अभावरूपो द्विविधः ।
नाशो निषेधरूपश्च । नाशविधिर्यथा । लोपो-
ऽन्त्योमाङोरित्यादि । निषेधविधिर्यथा । नाजो-
ऽन्त इत्यादि । सामान्यप्राप्तस्य विशेषावधारणं
नियमविधिः । यथा । इतो विः सुपि इत्यादि ।
अन्यधर्म्मस्यान्यत्रारोपणमतिदेशविधिः यथा ।
इत्वादिक् इत्यादि । पूर्व्वसूत्रस्थितपदस्य पर-
सूत्रेषूपस्थितिरधिकारविधिः । स तु त्रिविधः ।
"सिंहावलोकिताख्यश्च मण्डूकप्लुतिरेव च ।
गङ्गास्रोत इति ख्यातस्त्वधिकारास्त्रयो मताः ॥"
सिंहावलोकितो यथा । वायगोहार्न्त इत्यस्मात
दान्ते इति पदस्य अव्यवहितपूर्व्वसूत्रेषूपस्थितिः ।
मण्डूकप्लुतिर्यथा । टाभिस्ङेङसीत्यस्मात् अत
इति पदस्य आत्तिमभवि इत्यत्रोपस्थितिः ।
गङ्गास्रोतो यथा । खेः सि औ जस् इत्यस्मात्
खेरिति पदस्य तद्विहितपर्य्यन्तेषूपस्थितिरिति ।
एवञ्च ।
"कार्य्यी कार्य्यं निमित्तञ्च त्रिभिः सूत्रसदा-
कुलम् ।
कदाचित् कार्य्यिकार्य्याभ्यां क्वचित् कार्य्यनिमि-
त्ततः ॥
यत्र निर्द्दिश्यते कार्य्यं स कार्य्यी गदितो बुधैः ।

क्रियते यत्तु तत् कार्य्यमादेशप्रत्ययागमम् ।
यस्मात् परं परे यस्मिन् तन्निमित्तं द्विधा मतम् ।
आकाङ्क्षायान्तु सर्व्वेषामनुवृत्तिः परे भवेत् ॥”

इति ।

एवञ्च ।
“बहिरङ्गविधिभ्यः स्यादन्तरङ्गविधिर्बली ।
प्रत्ययाश्रितकार्य्यन्तु बहिरङ्गमुदाहृतम् ।
प्रकृत्याश्रितकार्य्यं स्यादन्तरङ्गमिति ध्रुवम् ।
प्रकृतिः पूर्व्वपूर्व्वं स्यादन्तरङ्गतरं तथा ॥
सावकाशविधिभ्यः स्याद्बली निरवकाशकः ।
कस्यचिद्विहितकार्य्यस्य प्रथमे परतस्तथा ।
सम्भवेद्विषयो यस्य स भवेत् सावकाशकः ॥
आदौ हि विषयो यस्य परतो न हि संभवेत् ।
स पण्डितगणैरुक्तो विधिर्निरवकाशकः ॥
तथा सामान्यकार्य्येभ्यो विशेषकविधिर्बली ।
बहवो विषया यस्य स सामान्यविधिर्भवेत् ॥
अल्पः स्याद्विषयो यस्य स विशेषविधिर्मतः ।
आगमादेशयोर्मध्ये बलीयानागमो विधिः ॥
प्रकृतिं प्रत्ययञ्चापि यो न हन्ति स आगमः ।
आदेश उपघाती यः प्रकृतः प्रत्ययस्य वा ॥
सकलेभ्यो विधिभ्यः स्याद्बली लोपविधिस्तथा ।
लोपस्वरादेशयोस्तु स्वरादेशो विधिर्बली ॥”
इति मुग्धबोधव्याकरणटीकायां दुर्गादासः ॥ * ॥
अथ विधिभेदाः । तत्र कश्चित् प्रधानविधिः । स तु स्वतः फलहेतुक्रियाबोधकः । यथा । यजेत स्वर्गकाम इत्यादि । कश्चिदङ्गविधिः । स तु स्वतः फलहेतुक्रियायां कथमित्याकाङ्क्षायां विधायकः । यथा । इड़ो यजति इत्यादि । कश्चित् प्रयोगविधिः । स तु यावदङ्गयुक्तक्रियाबोधकः । यथा । यावदङ्गयुक्तं यजेत विजयाय स्वर्गकाम इत्यादि । कश्चिद्गुणफलविधिः । स तु आकाङ्क्षानिवृत्तौ अधिकफलाय प्राप्तकर्म्मणि गुणविधिः । यथा । गोदोहनेन पशुकाम इत्यादि । प्रधानविधिश्च द्विविधः । उत्पत्तिर्नियोगश्चेति । तत्रोत्पत्तिस्तु कर्म्मस्वरूपबोधकः । यथा आग्नेयाष्टाकपालः अमावास्यायां पौर्णमास्याञ्चाच्युतो भवति इत्यादि । नियोगश्च स्वर्गकामाद्यधिकारिबोधकः । यथा । स्वर्गकामो यजेत इत्यादि । अङ्गविधिस्तु कालदेशकर्त्रादिबोधकतया अनियत एव । प्रधानाङ्गविध्योर्विधेयाप्राप्तिप्राप्तिभ्यां त्रैविध्यम् । तत्र अप्राप्तौ द्वैविध्यम् । तत्राप्यत्यन्ताप्राप्तौ अपूर्व्वविधिः । पक्षतोऽप्राप्तौ नियमविधिः । विधेयतत्प्रतिपक्षयोः प्राप्तौ परिसङ्ख्याविधिः । अतएवोक्तम् ।
“विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या विधीयते ॥”
तत्र प्रधानस्य विधिभेदो यथा । अहरहः सन्ध्यामुपासीत इत्यादिरपूर्व्वविधिः । अत्र विधेयस्य सन्ध्यादेः शास्त्रतो रागतो न्यायतो वा कस्यचिदप्यप्राप्तेः । तथा ऋतौ भार्य्यामुपेयात् इत्यादिर्नियमविधिः । विधेयस्य भार्य्याभिगमनस्य रागतः [illegible]पि रागाभावात् पक्षतोऽप्राप्तेः । तथा [illegible]मांसं भुञ्जीत इत्यादिः परिसङ्ख्याविधिः [illegible] प्रोक्षितमांसभक्षणस्य च रागतः [illegible]प्तेः । अङ्गस्य विधिभेदो यथा । शारदीयपूजायामष्टम्यामुपवसेत् इत्यादिरपूर्व्वविधिः । अत्र विधेयस्योपवासस्य एतदन्यशास्त्रतो रागतो न्यायतो वा कस्यचिदप्राप्तेः । तथा श्राद्धे भुञ्जीत पितृसेवितमित्यादिर्नियमविधिः । विधेयस्य श्राद्धशेषभोजनस्य रागतः प्राप्तावपि रागाभावात् पक्षतोऽप्राप्तेः । तथा । हविष्याद्धे प्रातरामन्त्रितान् विप्रान् इत्यादिः परिसङ्ख्याविधिः । तत्र विधेयस्य प्रातर्निमन्त्रणस्य तत्प्रतिपक्षस्य पूर्व्वदिनसायं निमन्त्रणस्य च पार्व्वणवन्न्यायतः प्राप्तिरिति स्मृतेरुदाहरणम् । इति धर्म्मदीपिका ॥ * ॥ न्यायमते विधिर्यथा,—
“प्रवृत्तिः क्वतिरेवात्र सा चेच्छातो यतश्च सा ।
तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा ॥”
विधिजन्यज्ञानात् प्रवृत्तिर्जायते सा इच्छातः चिकीर्षातः चिकीर्षा च क्वतिसाध्यत्वेष्टसाधनत्वज्ञानात् तज्ज्ञानस्य विषयः कार्य्यत्वं इष्टसाधनत्वञ्च विधिरिति प्राचीनमतम् । स्वमतमाह तज्ज्ञापकोऽथवेति इष्टसाधनत्वानुमापक आप्ताभिप्रायो विधिप्रत्ययार्थः । इति हरिदासीयकुसुमाञ्जलिः ॥ * ॥ अपि च आश्रयत्वसम्बन्धेन प्रत्ययोपस्थापितेष्टसाधनत्वान्वितस्वार्थपरपदघटितवाक्यत्वं विधित्वम् । मीमांसकमते इष्टसाधनत्वं क्वतिसाध्यत्वञ्च पृथग्विध्यर्थः । इति गदाधरभट्टाचार्य्यकृतविधिस्वरूपः ॥
विधिदर्शी, [ न् ] पुं, ( विधिं द्रष्टुं शीलमस्य । दृश + णिनिः । ) सदस्यः । इत्यमरः ॥
विधिदेशकः, पुं, ( विधिं दिशतीति । दिश + ण्वुल् । ) सदस्यः । इति शब्दरत्नावली ॥
विधिवत्, व्य, यथाविधि । विध्यनुसारेण । यथा,—
“तोषयेत् सततं भार्य्यां विधिवत् पाणिपीड़िताम् ॥”
इति कालिकापुराणे १८ अध्यायः ॥ * ॥
अपि च ।
“सन्ध्यामुपास्य विधिवत् विल्वपत्रानुपार्च्चयेत् ।”
इति शिवरात्रिव्रतकथा ॥ * ॥
अन्यच्च ।
“पूजयेद्व्रजविष्ण्वर्कैकदवस्त्रात्मकं शिवम् ।
व्रतोपवासैर्विधिवत् श्रद्धया च विमत्सरः ॥”
इति मत्स्यपुराणे योगमाहात्म्यम् ४८ अध्यायः ॥
अपरञ्च ।
“इति नक्षत्रपुरुषमुपोष्य विधिवत् स्वयम् ।
सर्व्वान् कामानवाप्नोति विष्णुलोके महीयते ॥”
इति तत्रैव ५१ अध्यायः ॥
विधुः, पुं, ( विध्यति विरहिणां विध्यते राहुणेति वा । व्यध ताड़े + “पृभिदिव्यधीति ।” उणा० १ । २४ । इति कुः । ) चन्द्रः । ( यथा,—
“मित्र ! विधुस्तव हन्ति मनं तमस्त्वमपि चन्द्रविरोधिकुकूरव ।
तदुभयोरपि हि विरोधिता
कथमहो समता मम तापने ॥” * ॥
विध्यति असुरानिति । ) विष्णुः । कर्पूरः । इति मेदिनी । धे, २६ ॥ ब्रह्मा । इति शब्दरत्नावली ॥ राक्षसः । इति विश्वः ॥ आयुधः । वायुः । इति संक्षिप्तसारोणादिवृत्तिः ॥ * ॥
चन्द्रस्य द्वादशावस्थास्तत्फलादिश्च यथा,—
“चन्द्रस्य द्वादशावस्था भवन्ति शृणु ता अपि ।
त्रिषु त्रिषु च ऋक्षेषु अश्विन्यादि वदाम्यहम् ॥
प्रवासस्थं पुनर्नष्टं स्मृतावस्थं जयावहम् ।
हास्यावस्थं क्रीड़ावस्थं प्रमोदावस्थमेव च ।
विषादावस्थभोगस्थं ज्वरावस्थं व्यवस्थितम् ॥
कम्पावस्थं सुस्थावस्थं द्वादशावस्थगं भवेत् ॥
प्रवासो हानिर्मृत्युश्च जयो हास्यो रतिः सुखम् ।
शोको भोगो ज्वरः कम्पः सुस्थावस्थाक्रमात् फलम् ॥
जन्मस्थ. कुरुते तुष्टिं द्वितीये नास्ति निर्वृतिः ।
तृतीये राजसम्मानं चतुर्थे कलहागमः ॥
पञ्चमेन स्त्रिया लाभो वै तथा भवेत् ॥
धनधान्यागमः षष्ठे रतिः पूजा च सप्तमे ।
अष्टमे प्राणसन्देहो नवमे कोषसञ्चयः ॥
दशमे कार्य्यनिष्पत्तिर्ध्रुवमेकादशे जयः ।
द्वादशेन शशाङ्केन मृत्युरेव न संशयः ॥”
इति गारुड़े । ६१ । १—८ ॥ * ॥
चन्द्रस्य क्षयवृद्धिकारणम् यथा,—
ब्रह्मोवाच ।
“राका चानुमती चैव द्विविधा पूर्णिमा मता ।
सिनीवाली कुहुश्चैव अमावास्या द्विधैव तु ॥
अमा नाम रवे रश्मिश्चन्द्रलोके प्रतिष्ठिता ।
यस्मात् सोमो वसत्यस्याममावास्या ततः स्मृता ॥
पूर्व्वोदितकलाभिन्नपौर्णमास्या निशाकरे ।
पूर्णिमानुमती ज्ञेया पश्चादस्तमिते भास्करे ॥
यस्मात्तामनुमन्यन्ते देवताः पितृभिः सह ।
तस्मादनुमती नाम पूर्णिमा प्रथमा स्मृता ॥
यदा चास्तमिते सूर्य्ये पूर्णचन्द्रस्य चोद्गमः ।
युगपत् सोत्तरा राकस्तदानुमतिपूर्णिमा ॥
राकान्तामनुमन्यन्ते देवताः पितृभिः सह ।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयोऽब्रुवन् ॥
सिनीवालीप्रमाणन्तु क्षीणशेषो निशाकरः ।
अमावास्यां विशत्यर्कं सिनीवाली ततः स्मृता ॥
कुहेति कोकिलेनोक्तो यः कालस्तु समाप्यते ।
तत्कालसंज्ञा येषा वै अमावास्या कुहूः स्मृता ।
अनुमत्याश्च राकायाः सिनीवाल्याः कुहूं विना ।
एतासां विरजः कालः कुमावति कुहूः स्मृता ॥
कलाः षोड़श सोमस्य शुक्ले वर्द्धयते रविः ।
चन्द्रतेजान्वितं कृष्णे पीयते दैवतैः क्रमात् ॥
प्रथमां पिबते वह्निर्द्वितीयां पवनः कलाम् ।
विश्वेदेवास्तृतीयान्तु चतुर्थीन्तु प्रजापतिः ॥
पञ्चमीं वरुणश्चापि षष्ठीं पिबति वासवः ।

सप्तमीञ्चाश्विनौ दिव्या विश्वेदेवास्तथाष्टमीम् ॥
नवमीं कृष्णपक्षस्य पिबतीन्द्रः कलामपि ।
दशमीं मरुतश्चापि यमा एकादशीं कलाम् ।
द्वादशीन्तु कलां विष्णुर्धनदश्च त्रयोदशीम् ।
चतुर्द्दशीं पशुपतिः कलां पिबति नित्यशः ।
ततः पञ्चदशीञ्चैव पिबन्ति पितरः कलाम् ॥
कलावशिष्टो निष्पीतः प्रविष्टः सूर्य्यमण्डलम् ।
अमाया विशति रश्मौ अमावास्या ततः स्मृता ॥
पूर्व्वाह्णे विशति चार्कं मध्याह्ने तु वनस्पतिम् ।
अपराह्णे विशत्यप्सु त्रयोनिर्व्वाहिसम्भवः ॥
आपः प्रविष्टः सोमस्य शेषया कलयैकया ।
तत्पयुक्तलताद्यास्मिन्थाप्याययति चौषधीः ॥
तमोषधिं स्थितं गावश्चरन्त्यापः पिबन्ति च ।
तदङ्गानुगतं गोभ्यः क्षीरत्वमुपगच्छति ॥
तत्क्षीरममृतं भूत्वा मन्त्रभूतं द्विजातयः ।
स्वाहाकारवषट्कारैर्हुत्वाप्युतयः क्रमात् ॥
हुतमग्निषु देवाय पुनः सोमं विवर्द्धयेत् ।
एवं संक्षीयते सोमः क्षीणश्चाप्याय्यते पुनः ।
तस्मात् सूर्य्यः शशाङ्कस्य क्षयवृद्धिविधिर्व्विभुः ॥”
इति देवीपुराणे चन्द्रक्षयवृद्धिः ॥ * ॥
ब्रह्मोवाच ।
“यदयं वदते लोको वालिशत्वाच्छ्रमामति ।
तदहं संप्रवक्ष्यामि चन्द्रसूर्य्योपरागिकम् ॥
यदि सत्यमयं चक्रस्थोराशिदिवाकरः ।
तत्कथं नोदरस्थेन राहुर्न भक्ष्यतात् स्मृतः ॥
अथवा राहुणाक्रम्य शशुवक्त्रं प्रवेशितः ।
तन् कथं दशनैस्तीक्ष्णैः शतधा न विखण्डितः ॥
विमुक्तश्च पुनर्द्दृष्टस्त्वेवाखण्डमण्डलः ।
न चास्थापहृतं तेजो न स्थानादपसारितः ॥
यदि वा स्थेव निष्पीतः कथं दीप्ततरोऽभवत् ।
तस्मान्न तेजसां राशौ राहोर्वक्त्रं गमिष्यति ॥
भक्ष्यार्थं सर्व्वदेवानां सोमः सृष्टः स्वयम्भुवा ।
तत्रस्थममृतञ्चापि सम्भृतं सूर्य्यतेजसा ॥
पिबन्त्यमृतमयं देवाः पितरश्च स्वधामृतम् ।
त्रयश्च त्रिशतश्चैव त्रयस्त्रिंशत्तथैव च ॥
त्रयश्च त्रिदशाश्च देवाः सोमं पिबन्ति ये ।
राहोरप्यमृतं भाग्यं पुरा दत्तं स्वयम्भुवा ॥
तस्मात्तद्राहुरागत्य पातुमिच्छति पर्व्वसु ।
उद्धृत्य पार्थिवीं छायां महाकारान्तमोमयः ॥
पातुमिच्छन् ततश्चेन्दुमाच्छादयति छायया ।
शुक्ले च चन्द्रमभ्येति तथा पर्व्वणि भास्करम् ॥
सूर्य्यमण्डलसंस्थन्तु चन्द्रमेव निषेवति ।
तस्मात् पिबति तं राहुस्तदमृतं विनाशयन् ॥
अविच्छिन्दन् यथा पद्मं पिबति भ्रमरो मधु ।
चन्द्रस्थममृतं तद्वदभेदाद्राहुरश्नुते ॥
चन्द्रकान्तो मणिर्यद्वत्तुहिनं क्षरते सदा ।
चरन्नपि न क्षीयेत तेजसा नैव मुच्यते ॥
यथा सूर्य्यमणिः सूर्य्यादुत्पाद्य पावकं शुभम् ।
न भवत्यङ्गहीनोऽपि तेजसा नैव मुच्यते ॥
एवं चन्द्रश्च सूर्य्यश्च छादितावपि राहुणा ।
स्वतेजसा न मुच्येते नाङ्गहीनौ बभूवतुः ॥
पर्व्वकाले च चन्द्रस्य माणिक्यकलशाकृतिः ।
सोमो दैवतसंयोगात् छायायोगाच्च पार्थिवात् ।
राहोश्च वरलब्धत्वे पचरेदमृतं शशी ॥
ग्रहोपकाले संप्राप्ते वपुषं दृष्ट्वा च शौर्य्यया ।
स्वाङ्गादेव चरेत् क्षीरं तदिन्दुः क्षरतेऽमृतम् ।
पितेव सूर्य्यो देवानां सोमो मातेव लक्ष्यते ॥
यथा मातुः स्तनं पीत्वा जीवन्ति सर्व्वजन्तवः ।
पीत्वामृतं तथा सोमात् तृप्यन्ति सर्व्वदेवताः ॥
सम्भृतं सर्व्वयोगेषु तथायं चरते शशी ।
तं चरन्तं यथाभागमुपजीवन्ति देवताः ॥
तस्मिन् काले समभ्येति राहुरप्यपकर्षति ।
सर्व्वमर्हन्ति भागाश्च पादं पादार्द्धमेव च ॥
आक्रम्य पार्थिवी छाया यावती चन्द्रमण्डलम् ।
स्मृतः स भागो राहोस्तु देवभागास्तु शेषकाः ॥
तृप्तिं विधाय देवानां राहोः पर्व्वगतस्य च ।
चन्द्रो न क्षयमायाति तेजसा नैव मुच्यते ॥
तिथिभागाश्च यावन्तः पुनस्तर्क प्रमाणतः ।
सर्व्वच्छायास्थितः कालस्तावानेव प्रकीर्त्तितः ॥
अतो राहुमुखः सोमः सोमादूर्द्ध्वं दिवाकरः ।
पर्व्वकाले स्थितिस्त्वेवं विपरीता पुनः पुनः ॥
आनन्दादयते राहुरम्बरच्छविभास्करौ ।
राहुरम्बरसंस्थानः सोममाच्छाद्य तिष्ठति ॥
उद्धृत्य पार्थिवीं छायां धूममेव इवोत्थितः ।
चन्द्रस्य यदवस्थानं राहुणा भास्करस्य च ॥
नाथाखण्डितं तस्य केवलं श्यामलीकृतम् ।
कर्द्दमेन यथा वस्त्रं शुक्लमप्युपहन्यते ॥
एकोद्देशेऽथ सर्व्वत्र राहुणा चन्द्रमास्तथा ।
प्रक्षालितं तदेवेह पुनः शुक्लतरं भवेत् ॥
राहुयुक्तं भवेत्तद्वन्निर्म्मलं चन्द्रमण्डलम् ।
राहुणाच्छादितौ वापि दृष्ट्वा चन्द्रदिवाकरौ ॥
विप्राः शान्तिपरा भूत्वा पुनराप्याययन्ति तम् ।
एवं न गृह्यते सूर्य्यश्चन्द्रमास्तत्र गृह्यते ॥
अबुधास्तं न पश्यन्ति मानुषा मांसचक्षुषः ।
जगत्सम्मोहनं चैतत् ग्रहणं चन्द्रसूर्य्ययोः ॥”
इत्यादि देवीपुराणे ग्रहणविकल्पः ॥ * ॥
विधोर्देवपित्राद्यन्नकारणत्वं राजयक्ष्मादिकारणत्वञ्च कालिकापुराणे २०।२१ अध्याययोर्द्रष्टव्यम् ॥ * ॥ ( कर्त्तरि, त्रि । यथा, ऋग्वेदे । १० । ५५ । ५ ।
“विधुं दद्राणं समने बहूनां
युवानं सन्तं पलितो जगार ॥”
“विधुं विधातारं सर्व्वस्य युद्धादेः कर्त्तारं विपूर्व्वो दधातिः करोत्यर्थे ।” इति तद्भाष्ये सायणः ॥ )

विधुतः, त्रि, ( वि + धु + क्तः । ) त्यक्तः । इत्यमरः ॥ ( यथा, भागवते । ६ । १६ । २५ ।
“स तत्र निर्म्मुक्तसमस्तमङ्ग
आत्मानुभूत्या विधुतत्रिलिङ्गः ।
परेऽमले ब्रह्मणि वासुदेवे
लेभे गतिं भागवतीं प्रतीतः ॥”)
कम्पितश्च ॥

विधुतिः, स्त्री, कम्पनम् । विपूर्व्वधुधातोः क्तिप्रत्ययेन निष्पन्ना ॥ ( यथा, भागवते । १० । ३३ । ८ ।
“पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः ॥”
निराकृतिः । यथा, तत्रैव । ४ । २२ । ३८ ।
“यस्मिन्निदं सदसदात्मतया विभाति
माया विवेकविधुतिस्रजि वाहिबुद्धिः ॥” )

विधुननं, क्ली, ( वि + धू + णिच् । ल्युट् । नुक् च । पृषोदरादित्वात् ह्रस्वः । ) कम्पनम् । इति जटाधरः ॥

विधुन्तुदः, पुं, ( विधुं तुदति पीडयतीति । विधु + तुद + “विध्वरुषोस्तुदः ।” ३ । २ । ३५ । इति खश् । मुम् । ) राहुः । इत्यमरः ॥ ( यथा, माघे । २ । ६१ ।
“नालिरापदि यद्बन्धुः परस्त्वाणिनो श्रिये ।
विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः ॥”)

विधुपञ्जरः, पुं, ( विधोः पञ्जरः वक्रास्थि इव तत्साहश्यात् । ) खड्गः । इति शब्दमाला ॥

विधुप्रिया, स्त्री, ( विधोश्चन्द्रस्य प्रिया । ) चन्द्रपत्नी । यथा । दाक्षायण्यो विधुप्रिया । इति कोषान्तरम् ॥

विधुरं, क्ली, ( विगता धूर्भारो यस्मात् । समासे अः । ) प्रविश्लेषः । इत्यमरः ॥ कैवल्यम् । इति त्रिकाण्डशेषः ॥ ( प्रत्यवायः । कष्टम् । यथा, किरातटीकायां मल्लिनाथधृतवैजयन्ती ।
“विधुरं प्रत्यवाये स्यात् कष्टविश्लेषयोरपि ॥”
तथा च किराते । २ । ७ ।
“विधुरं किमतः परं परैरवगीतां गमिते दशामिमाम् ।
अवसीदति यत् सुरैरपि
त्वयि सम्भावितवृत्ति पौरुषम् ॥” )

विधुरः, त्रि, ( विगता धूः कार्य्यभारो यस्मात् । अक्पूरित्यः । ) विकलः । इति मेदिनी । रे, २१६ ॥ ( यथा, कुमारे । ४ । ३२ ।
“तदिदं क्रियतामनन्तरं
भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्ज्जनात्
ननु मां प्रापय पत्युरन्तिकम् ॥” )

विधुरा, स्त्री, रसाला । इति मेदिनी । रे, २१६ ॥ ( जत्रूर्द्धस्थायुमर्म्म । यथा, सुश्रुते । ३ । ६ ।
“जत्रूर्द्ध्वं मर्म्माणि चतस्रो धमन्योऽष्टौ मातृका द्वे कृकाटिके द्वे विधुरे ॥” )

विधुवनं, क्ली, ( वि + धु + ल्युट् । कुटादित्वात् साधुः । ) कम्पनम् । इत्यमरः । ३ । २ । ४ ॥

विधूतं, त्रि, ( वि + धू + क्तः । ) कम्पितम् । ( यथा, कलाविलासे । २ । २८ ।
“तं वन्दे सोऽव्यङ्घ्रिः सभ्रूभङ्गं विधूतहस्ताग्रः ।
वञ्चकवचनः पापो वृत्तिर्व्यीयः कृतोऽधमाधमः ॥” )
त्यक्तम् । इति हेमचन्द्रः ॥ ( यथा, महागणपतिस्तोत्रे । १ ।
“योगं योगविदां विधूतविविधव्यासङ्गशुद्धाशयप्रादुर्भूतसुधारसप्रसृमरध्यानास्पदाध्यासिनाम् ॥” )

सप्तमीत्वम:
नवमी ह

दशा: संस्कृत्या भगवत्याशुशोचन्
वाद चरन्तीं प्रव्रजिताय तूष्णीम् ॥")
नाथ, त्रि, (विगता नाथिका यस्य । बहुव्रीहि:।)
तत: पृथक:। तत्पर्याय:। विय: २ विक्क: ३
अनाथक: ४। इति जटाधर: ॥
व, अ, ( वि+"विनञ्भ्यां नानाञौ न सह ।"
५।२।२७। इति ना।) वर्ज्जनम्। तत्पर्याय:।
ऋतेक् २ अन्तरेण ३ ऋते ४ हिरुक् ५ नाना
६। इत्यमर: ॥ ( पृथग्विनेति योगे "पृथग्-
विनेति।" २।३।३२। इत्यनेन तृतीया पञ्चमी
च स्यात्। एवं "पृथग्विना नानाभिरिति
तद्‌योगविभागो द्वितीयार्थ: ॥" इति काशिकोक्त्या
द्वितीयापि। यथा, तत्रैव।
"विना वातं विना वर्षं विद्युत्प्रपतनं विना।
विना हस्तिकृतान्दोषान् केनेमौ पातितौ द्रुमौ ॥"
तृतीयाप्रयोगो यथा, रघुवंशे . २। १४।
"दैवात् कदापि विना दवाग्नि: ॥"
पञ्चम्याप्रयोगो यथा, सांख्यकारिकायाम्।४१।
"चित्रं यथाश्रयमृते
स्थाण्वादिभ्यो विना यथा छाया।
तद्वद्विना विशेषै-
र्न तिष्ठति निराश्रयं लिङ्गम् ॥" )
नाकृतं, त्रि, (विना अन्तरेण कृतम्।) व्यक्तम्।
इति त्रिकाण्डशेष: ॥
नायक:,पुं, (विशिष्टो नायक:।) बुद्ध:। गणेश:।
इत्यमर: ॥ (यथा, कथासरित्सागरे।३०।५५।
"अत्रैव प्रमदोद्याने सप्तमङ्गलमध्यग:।
वरदप्रभावो वरदो देवदेवो विनायक: ॥")
गरुड:। विघ्न:। (यथा, हरिवंशे।१८१।५।
"राक्षसाश्च पिशाचाश्च भूतानि च विना-
यका: ॥")
गुरु:। इति मेदिनी। के, ११२ ॥ * ॥ विना-
यकद्वयं यथा,—
"जयश्च यो विजयश्चैव द्वौ विज्ञेयौ विनायकौ ।"
इति वाराहे चक्रपुराणे गणभेदनामाध्याय: ॥*॥
तस्य गणेशस्योत्पत्तिर्यथा,—
उवाच प्रजापाल उवाच।
पातुमिच्छाम्यहमेकं कर्मिमतत्त्व सत्तम ।।
श्रुत्वा च संशयं छिन्धि धृतिकष्टं व्यवस्थितम् ॥"
सत्यतपा महातपा उवाच।
तस्मात् द्विजा: सर्वे ऋषयश्च तपोधना: ।
अविघ्नेन यथा प्राप्ता: सिद्धिं ते च न संशय: ॥
यत्र कार्येषु यथा विघ्नन्ते विघ्नत: क्रिया: ।
अन्यकार्यादिषु सर्व्वेषु तद्दैवमविघ्नत: ॥
यतस्ते देवा: अपितरश्चिन्तयामासुरीश्वरा: ।
अथ तत्कार्येषु विघ्नार्थं सर्वे रुद्रमुपागमन् ॥
न शक्नुवन्ति तदा कर्म कुर्व्वतां विविधौकसाम् ।
यदपि बुद्धिर्मने वदं प्रति महात्मने ॥
ते तत्र रुद्रमागम्य कैलासनिलयं गुरुम् ।
ऊचु: प्रणिपत्य सर्वे प्रणिपातपुर:सरम् ॥
देवा ऊचु: ।

विघ्नार्थमविघ्नितानां उत्पादयितुमर्हसि ॥
एवमुक्तस्तदा देवैर्भव: परमया मुदा ।
उमां निरीक्षयामास चक्षुषानिमिषेण ह ॥
देवानां सन्निधौ तस्य पश्यतो मां महात्मन: ।
चिन्तामुपगतोऽपि कर्त्तव्यो दृश्यते केन हेतुना ॥
पृथिव्या विद्यते मूर्त्तिरपां मूर्त्तिस्तथैव च ।
तेजस: पवनस्यापि मूर्त्तिरेषा तु दृश्यते ॥
आकाशस्य कथं नेति मत्वा देवो जहास च ।
ज्ञानशक्ति: परान् दृष्ट्वा यदुक्तं योगिना शम्भुना ।
यदोक्तं ब्रह्मणा पूर्वं शरीरस्य शरीरिणाम् ।
यच्चापि कथितं तेन देवेन परमेष्ठिना ॥
एतत्कार्यचतुष्केण पृथिव्यादिचतुर्ष्वपि ।
मूर्त्तिमाननितेजस्वी हसत: परमेष्ठिन: ॥
प्रदीप्तास्यो महादीप्त: कुमारो भासयन् दिशम् ।
परमेष्ठिगुणैर्युक्त: साक्षाद्रुद्र इवापर: ॥
उत्पन्नमात्रो देवानां योषित: संप्रमोहयन् ।
कान्त्या दीप्त्या तथा मूर्त्त्या रूपेण च
महात्मवान् ॥
तं दृष्ट्वा परमं रूपं कुमारस्य महात्मन: ।
उमा निर्निमेषाभ्यां समपश्यत भामिनी ॥
तं दृष्ट्वा कुपितो देवस्तीव्रकोपसमन्वित: ।
मत्वा कुमाररूपस्तु शोभनं मोहनं दृशाम् ।
तत: शशाप तं देवो गणेशं परमेश्वर: ॥
कुमार गजवक्त्रस्त्वं प्रलम्बजठरस्तथा ।
भविष्यसि तथा सर्पैरुपवीतसमन्वितम् ॥
एवं शशाप तं देवस्तीव्रकोपसमन्वित: ।
धुन्वन् शरीरमुत्थाय ततो देवो रुषान्वित: ॥
यथा यथाङ्गौ स शरीरमात्रं
धुनोति देवस्त्रिशिखाग्रपाणि: ।
तथा तथा चाङ्गरुहाच्छकाश
जलं च्युतौ संव्यपतंस्तथान्ये ॥
विनायकानेकमुखा गणाख्या-
स्तमाञ्जनीलाञ्जनसन्निकाशा: ।
उत्तस्थुरथोर्विविधाश्चवक्त्रा-
स्ततस्तु देवा मनसाकुलेन ॥
किमेतदित्यद्भुतकर्म्मकारी
एक: करोत्यप्रतिमं महच्च ।
कार्य्यं सुराणां यदमेतदिदं
भवेत्त्वयेतं पठितं कुतस्तत् ॥
दिवौकसां चिन्तयतां तथा तु
विनायकै: क्ष्मा क्षुभिता बभूव ।
चतुर्मुखस्याप्रतिमो विमान-
मारुह्य खे वाक्यमिदं जगाद ॥
धन्यास्तु देवा सुरनायकेन
त्रिलोचनेनाद्भुतरूपिणा च ।
अनुगृहीता: परमेश्वरेण
सुरद्विषां विघ्नकर्त्ता गतौ च ।
इत्येवमुक्त्वा प्रपितामहस्ता-
नुवाच देवस्त्रिशिखाग्रपाणिम् ॥
यस्ते विभो वक्त्रसहस्र: प्रसु-
र्विनायका नाम वरप्रियमेऽद्भुता: ।

यथा च तुष्टस्तु शरीरधारी ॥
आकाशमेतद्बहुधा व्यवस्थितं
यथा येको वदतां ते प्रयाता: ।
प्रभुर्भवत्प्रतिमारूपधारिणा
इमान् हि वाक्यै: सुवराश्च देहि ॥
इत्येवमुक्ताभिमतो पितामहे
त्रिलोचनस्तानभयं जगाद ।
विनायको विघ्नकरो गजास्यो
गणेशनामा तु भवस्य पुत्र: ॥
एते च सर्वे त्वमयाम्बु यत्ना
विनायका: क्रूरदृश: प्रचण्डा: ।
उच्छुष्मदानादिविवृद्धदेहा:
कार्य्येषु सिद्धिं प्रतिपादयन्त: ॥
भवांश्च वेदेषु तथा मखेषु
कार्य्येषु चान्येषु महानुभावात् ।
अग्रेषु पूजां लभतेऽन्यथा च
विनाशयिष्यत्यथ कार्य्यसिद्धिम् ॥
इत्येवमुक्त: परमेश्वरेण
सुरै: समं काञ्चनकुम्भसंस्थै: ।
जलैस्तथावाभिषिक्तगात्रो
रराज राजेन्द्र: विनायकानाम् ॥
दृष्ट्वाभिषिच्यमानं तु देवास्तं गणनायकम् ।
तुष्टुवु: प्रयता: सर्वे त्रिशूलाग्रस्य सन्निधौ ॥
देवा ऊचु: ।
नमस्ते गजवक्त्राय नमस्ते गणनायक ।
विनायक नमस्तेऽस्तु नमस्ते चण्डविक्रम ॥
नमोऽस्तु ते विघ्नकर्त्रे नमस्ते सर्पमेखल ।
नमस्ते रुद्रवक्त्रोत्थ प्रलम्बजठराश्रित ।
सर्व्वदेवनमस्कारादविघ्नं कुरु सर्व्वदा ॥
एवं स्तुतस्तदा देवैर्महात्मा गणनायक: ।
अभिषिक्तस्तु रुद्रेण सोमस्यापत्यतां गत: ॥
एतच्चतुर्थ्यां सम्पन्नं गणाध्यक्षस्य पार्थिव ।
यतस्ततोऽयं महती तिथीनां परमा तिथि: ॥
एतस्यां यस्तिलान् भक्त्या भुक्त्वा गणपतिं नृप ।
आराधयति तस्याशु तुष्यते नात्र संशय: ॥
यश्चैतत् पठते स्तोत्रं यश्चैतत् शृणुयात्तथा ।
तस्य विघ्ना न जायन्ते न पापं सर्व्वथा नृप ॥"
इत्यादि वाराहे विनायकोत्पत्तिनामाध्याय: ॥*॥
विनायकस्य नामाष्टकस्तोत्रं यथा,—
श्रीविष्णुरुवाच ।
"गणेशमेकदन्तञ्च हेरम्बं विघ्ननायकम् ।
लम्बोदरं शूर्पकर्णं गजवक्त्रं गुहाग्रजम् ।
नामाष्टकार्थं पुत्रस्य शृणु मत्तो हरप्रिये ।
स्तोत्राणां सारभूतञ्च सर्व्वविघ्नहरं परम् ॥
ज्ञानार्थवाचको गश्च णश्च निर्व्वाणवाचक: ।
तयोरीशं परं ब्रह्म गणेशं प्रणमाम्यहम् ॥१॥
एकशब्द: प्रधानार्थो दन्तश्च बलवाचक: ।
बलं प्रधानं सर्व्वस्मादेकदन्तं नमाम्यहम् ॥२॥
दीनार्थवाचको हेश्च रम्ब: पालकवाचक: ।
परिपालकं तं दीनानां हेरम्बं प्रणमाम्यहम् ॥३॥
विपत्तिवाचको विघ्नो नायक: खण्डनार्थक: ।

तत्पर्य्यायः । निभृतः २ प्रश्रितः ३ । इत्यमरभरतौ ॥ ( यथा, रघुवंशे । १४ । ७५ ।
"तपस्विसंसर्गविनीतसत्त्वे
तपोवने वीतभया वसास्मिन् ॥")
जितेन्द्रियः । ( यथा, तन्त्रसारे ।
"शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेश-
वान् ।")
अपनीतः । (यथा, महाभारते ।७।११०।५५।
"विनीतशल्यास्तुरगाश्चतुरो हेममालिनः ॥")
कृतः । इति मेदिनीकारहेमचन्द्रौ ॥ क्षिप्तः । इत्यजयपालः ॥ शमदण्डः । इति स्मृतिः ॥ ( अनुद्धतः । यथा, मनौ । ८ । ४१ ।
"तत्राङ्गेन विनीतेन शास्त्रविज्ञानवेदिना ॥")

विनीतः, पुं, ( वि+नी+क्तः । ) सुवहाश्वः । तत्पर्य्यायः । साधुवाही २ । इत्यमरः । सुष्ठु-वाहनशीलकः ३ । इति शब्दरत्नावली ॥ (यथा, महाभारते । ७ । ११० । ५६ ।
"ताश्वद्र कृष्णवर्णाभान् विनीतान् शीघ्र-
गामिनः ॥")
वणिक् । इति मेदिनी । ते, १५४ ॥ दमनकवृक्षः । ( अस्य पर्य्यायो यथा,—
"उक्तो दमनको दान्तो मुनिपुत्रस्तपोधनः ।
गन्धोत्कटो ब्रह्मजटो विनीतः कलपत्रकः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
शिक्षितवृषभादिः । इति राजनिर्घण्टः ॥

विनीतकं, क्ली पुं, वैनीतकम् । परम्परावाहनम् । इत्यमरटीकायां रायमुकुटः ॥

विनीयः, पुं, (वि+नी+"विपूयविनीयजित्या-मि ।" ३ । १ । ११७ । क्यप्प्रत्ययेन निपातितः । ) कल्कः । इति मुग्धबोधव्याकरणम् ॥ (यथा,—
"दृक्कालुष्यकलुषाभतया विनीयः ।"
इति वैद्यकचक्रपाणिसंग्रहे वातव्याधौ रक्ता-
न्तेवे ॥ ) पापम् । इति सिद्धान्तकौमुदी ॥

विनेता, [ऋ] पुं, (वि+नी+तृच् ।) राजा । शासके, त्रि । इति मेदिनी । ते, १५६ ॥ ( यथा, रघुवंशे । १४ । २३ ।
"तेनार्थवान् लोभपराङ्मुखेन
तेन घ्नता विघ्नभयं क्रियावान् ।
तेनास लोकः पितृमान् विनेत्रा ॥"
गुरुः । शिक्षकः । यथा, महाभारते ।११।२६।
"अर्ज्जुनस्य विनेतारमाचार्य्यं सात्यकिस्तथा ।
तं पश्य पतितं भीमं कुरूणां द्विजसत्तमम् ॥"
यथाच रघुवंशे । ८ । ९१ ।
"स तथेति विनेतुरुदारमतेः
प्रतिगृह्य वचो विससर्ज्ज मुनिम् ॥")

विनेयः, त्रि, (वि+नी+यत् ।) नेतव्यः । विपूर्व्व-नीधातोर्यप्रत्ययेन निष्पन्नः ॥ दण्डनीयः । यथा,
"ज्योतिःशास्त्रमविज्ञाय सम्यग्विदित्वा तु ये द्विजाः ।
आचरन्त्यर्थलोभेन विनेयास्तेऽपि यत्नतः ॥"
विनेयाः दण्डनीयाः । इति ज्योतिस्तत्त्वम् ॥

विनोदः, पुं, ( वि+नुद+घञ् । ) कौतूहलम् । इति हलायुधः ॥ ( यथा, कथासरित्सागरे । १५ । १२५ ।
"बाधते तस्य वैकल्यात् सर्व्वं स मगधेश्वरः ।
तत्र रथ्याहितोत्थ विनोदायतनस्य ताम् ॥")
क्रीडा । इति भूरिप्रयोगः ॥ ( यथा, भागवते । ३ । १६ । २४ ।
"नैतावता त्र्यधिपतेर्बत विश्वभर्त्तु-
स्तेजः क्षतं त्वव न तस्य स ते विनोदः ॥"
अपनयनम् । यथा, शिशुपालवधे । १ । ४८ ॥
"विनोदमिच्छन्नथ दर्पजन्मनो
रणेन कण्ड्वास्त्रिदशैः समं पुनः ॥"
प्रमोदः । यथा, हितोपदेशे ।
"काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥")
आलिङ्गनविशेषः । तल्लक्षणं यथा । नायको नायिकाया दक्षिणपादं वामपादं वा स्वमध्य-देशे स्वदक्षिणपादं वामपादं वा नायिकामध्य-देशे निधाय वक्षसि वक्षः ओष्ठे ओष्ठं दत्वा यदाश्लिष्यति तत् । इति कामशास्त्रम् ॥ राज-गृहविशेषः । यथा,—
"दीर्घे वयौ राजहस्ताः प्रवरे द्वौ प्रतिष्ठितौ ।
विनोद एव द्वाराणि विंशत् कोष्ठद्वयं भवेत् ॥"
इति युक्तिकल्पतरुः ॥
"द्वादशैते गृहाणां च नामानि तेषां लक्षणमुच्यते ।
सुनन्दः सर्व्वतोभद्रो भयो नान्दीमुखस्तथा ॥
विनोदश्च विलासश्च विजयो विमलस्तथा ।
रङ्गः कैलिजयो वीरो द्वादशैते प्रकीर्त्तिताः ॥"
इति भविष्योत्तरपुराणम् ॥

वि(बि)न्दुः, पुं, ( विदि अवयवे+बाहुलकात् उः । ) जलकणा । तत्पर्य्यायः । पृषत् २ पृषतः ३ विप्रुट् ४ । इत्यमरः ॥ पृषन्ति ५ विप्रट् ६ । इति तट्टीका ॥ ( यथा, पञ्चतन्त्रे ।
"जलविन्दुनिपातेन क्रमशः पूर्य्यते घटः ।
स हेतुः सर्व्वविद्यानां धर्म्मस्य च धनस्य च ॥")
दन्तक्षतविशेषः । भ्रुवोर्मध्यम् । रूपकार्थे-प्रकृतिः । इति मेदिनी । दे, १०-११ ॥ अनुस्वारः । यथा । "विन्दुद्विविन्दुमात्रौ वर्णौ क्रमादनुस्वारविसर्गौ ङः ।" इति मुग्धबोधव्याकरणम् ॥ अपि च ।
"शिवो वह्निसमायुक्तो वामाक्षिविन्दुभूषितः ।
एकाक्षरो महामन्त्रः श्रीकण्ठस्य प्रकीर्त्तितः ॥"
इति सूर्य्यकवचम् ॥

विन्दूत्पत्तिर्यथा,—
"सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद्विन्दुसमुद्भवः ॥"
इति शारदातिलके १ पटलः ॥

अपि च ।
"आसीद्विन्दुस्ततो नादो नादाच्छक्तिः समुद्भवा ।
नादरूपा महेशानी चिद्रूपा परमा कला ॥
नादाच्चैव समुत्पन्नः अर्द्धविन्दुर्महेश्वरि ।
सार्द्धत्रितयविन्द्वभ्यो भुजङ्गी कुलकुण्डली ॥"
इति कुब्जिकातन्त्रे १ पटलः ।
"विन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः ।
विन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः ॥
समवायः समाख्यातः सर्व्वागमविशारदैः ॥"
इति शारदातिलकः ॥

अन्यच्च ।
"विन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम् ।
तयोर्योगे भवेन्नादस्ताभ्यो जातास्त्रिशक्तयः ॥"
इति क्रियासारः ॥

वि(बि)न्दुः, त्रि, ( वेत्ति तच्छीलः । विद ज्ञाने+"विन्दुरिच्छुः ।" ३ । २ । १६९ । इति उप्रत्ययो नुमागमश्च निपात्यते । ) ज्ञाता । इत्यमरः ॥ दाता । इत्यजयपालः ॥ वेदितव्यः । इति शब्दरत्नावली ॥

वि(बि)न्दुचित्रकः, पुं, (विन्दुभिश्चित्रविशेषैश्चित्रकः इव । ) मृगभेदः । इति शब्दरत्नावली ॥

वि(बि)न्दुजालं, क्ली, ( विन्दूनां जालम् । ) हस्ति-शुण्डोपरिस्थितचित्रविन्दुसमूहः । इति हेमचन्द्रः ॥

वि(बि)न्दुजालकं, क्ली, ( विन्दूनां जालकम् । ) गजस्य मुखादिस्थो विन्दुसमूहः । तत्पर्य्यायः । पद्मकम् २ । इत्यमरः । पद्मम् ३ । अतएव पद्मी हस्तीति भरतः ॥

वि(बि)न्दुतन्त्रः, पुं, ( विन्दुचिह्नं तन्त्रं यस्य । ) अक्षः । इति हारावली ॥ तुरङ्गकः । यथा,—
"विन्दुतन्त्रः पुमान् शारिफलके च तुरङ्गके ॥"
इति पवर्गीयवादौ मेदिनी ॥

वि(बि)न्दुपत्रः, पुं, (विन्दुः पत्रे यस्य ।) भूर्य्यवृक्षः । इति रत्नमाला ॥

वि(बि)न्दुरेखकः, पुं, ( विन्दुविशिष्टा रेखा यस्य । कप् ।) पक्षिभेदः । इति शब्दचन्द्रिका ॥

वि(बि)न्दुवासरः, पुं, ( विन्दुपातस्य वासरः ।) गर्भसञ्चारोत्पत्तिकारकशुक्रपातदिनम् । इति ज्योतिषम् ॥

वि(बि)न्दुसरः, [स्] क्ली, ( विन्दुनामकं सरः ।) सरोवरविशेषः । यथा,—
"अथ्युत्तरेण कैलासं शिवं सर्व्वौषधिं गिरिम् ।
गौरन्तु पर्व्वतश्रेष्ठं हरितालमयं प्रति ॥
हिरण्यशृङ्गः सुमहान् दिव्यौषधिमयो
गिरिः ।
तस्य पादे महद्दिव्यं सरः काञ्चनसन्निभम् ॥
रम्यं विन्दुसरो नाम यत्र राजा भगीरथः ।
गङ्गार्थे स तु राजर्षिरुवास बहुलाः समाः ॥
दिवं यास्यन्ति मे पूर्व्वे गङ्गातोयपरिप्लुताः ।
तत्र त्रिपथगा देवी प्रथमन्तु प्रतिष्ठिता ॥
सोमपादात् प्रसूता सा सप्तधा प्रतिभज्यते ।
यूपा मणिमयास्तत्र चितयश्च हिरण्मयाः ॥
तत्रेष्ट्वा क्रतुभिः सिद्धः शक्रः सुरगणैः सह ।
दिव्यच्छायापथस्तत्र नक्षत्राणान्तु मण्डलम् ॥
दृश्यते भास्वरा रात्रौ देवी त्रिपथगा तु सा ।
अन्तरीक्षं दिवञ्चैव भावयित्वा भुवं गता ॥
भवस्य साङ्के पतिता संरुद्धा योगमायया ।
तस्या ये विन्दवः केचित् क्रुद्धायाः पतिता
भुवि ।
कृतन्तु तैर्विन्दुसरस्ततो विन्दुसरः स्मृतम् ॥"
इति मात्स्ये । १२० । २७—३९ ॥

विन्दुपत्री, स्त्री, ब्रतपत्रा । इति शब्दचन्द्रिका ॥ वेकपुँदा इति भाषा ॥

विन्ध्यः, पुं, व्याधः । इति त्रिकाण्डशेषः ॥

विन्ध्यः, पुं, पर्व्वतविशेषः । इत्यमरः ॥ ( यथा, मनौ । २ । २१ ।

"हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि ।

प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥")

व्याधः । इति मेदिनी ॥ विन्ध्यपर्व्वतस्य निम्नत्वकारणम् । यथा,—

नारद उवाच ।

"किमर्थमद्रिं भगवानगस्त्य-

स्तं निम्नशृङ्गं कृतवान् महर्षिः ।

कस्मै कृते केन च कारणेन

मस्तद्वदस्वाखिलतत्त्वरूपे ॥

पुलस्त्य उवाच ।

पुरा हि विन्ध्येन दिवाकरस्य

गतिर्निरुद्धा गगनेचरस्य ।

रविस्ततः कुम्भभवं समेत्य

होमावसाने वचनं बभाषे ॥

समागतोऽहं द्विजयेभ त्वां

कुरुष्व मय्युद्धरणं मुनीन्द्र ।

ददस्व दानं मम यन्मनीषितं

चरामि येन त्रिदिवे सुनिर्वृतः ॥

इत्थं दिवाकरवचो गुणसम्प्रयोगि

श्रुत्वा तदा कलसजो वचनं बभाषे ।

दानं ददामि तव यन्मनसा त्वभीष्टं

नार्थी प्रयाति विमुखो मम कश्चिदेव ॥

श्रुत्वा वचोऽमृतमयं कलसोद्भवस्य

प्राह प्रभुः करपुटं प्रणिधाय मूर्द्धि ।

एषोऽद्य मे गिरिवरः प्ररुणद्धि मार्गं

विन्ध्यस्य निम्नकरणे भगवान् यतस्व ॥

इति रविवचनादथाह कुम्भजन्मा

कृतमिति तद्धि मया हि नीचशृङ्गम् ।

तव किरणजितो भविष्यतीति महीध्रो

मम हि चरणसमागतस्य का व्यथा ते ॥

इत्येवमुक्त्वा कलसोद्भवस्तु

सूर्य्यञ्च संस्तूय विनम्य भक्त्या ।

जगाम संत्यज्य हि दण्डकं हि

विन्ध्याचलं वृद्धवपुर्महर्षिः ॥

गत्वा वचः प्राह मुनिर्महीध्रं

यास्ये महातीर्थवरं सुपुण्यम् ।

वृद्धोऽस्म्यशक्तश्च तवाधिरोढुं

तस्माद्भवान् नीचतरोऽस्तु सद्यः ॥

इत्येवमुक्तो मुनिसत्तमेन

स नीचशृङ्गस्त्वभवन्महीध्रः ।

समाक्रमच्चापि महर्षिमुख्यः

प्रोल्लङ्घ्य विन्ध्यं त्विदमाह शैलम् ॥

यावन्न भूयो निजमाव्रजामि

महाश्रमं धौतवपुः सुतीर्थात् ।

त्वया न तावत्त्विह वर्द्धितव्यं

न चेत् प्रशप्स्येऽहमवज्ञया ते ॥

इत्येवमुक्त्वा भगवान् जगाम

दिशं स याम्यां सहसान्तरीक्षम् ।

आक्रम्य तस्थौ स हि तां तदाशां

काले प्रयात्यत्र यदा मुनीन्द्र ॥

तत्राश्रमं रम्यतरं हि कृत्वा

संशुद्धजाम्बूनदतोरणान्तम् ।

तत्राथ निःक्षिप्य विदर्भपुत्त्रीं

स्वमाश्रमं सौम्यमुपाजगाम ॥

ऋतावृतौ पर्व्वकरो ह्यगस्त्यो

नित्यं तदा चाश्रममावसत् सः ।

शेषञ्च कालं स हि दण्डकस्थ-

स्तपश्चचारामितकान्तिमाञ्छुनिः ॥

विन्ध्योऽपि दृष्ट्वा गगने महाश्रमं

वृद्धिं न यात्येव भयान्महर्षेः ।

नासौ निवृत्तोऽसमितिं निवास

स संस्थितो नीचतराग्रशृङ्गः ॥

एवं त्वगस्त्येन महाचलेन्द्रः

स नीचशृङ्गो हि कृतो महर्षे ।

तस्योर्द्ध्वशृङ्गे मुनिसंस्तुता सा

दुर्गा स्थिता दानवनाशनार्थे ॥

देवाश्च सिद्धाश्च महोरगाश्च

विद्याधरा भूतगणाश्च सर्व्वे ।

सर्व्वाप्सरोभिः कृतिना दिवानिशं

कात्यायनीं तत्र रमन्ति वीतशोकाः ॥"

इति वामनपुराणे देवीमाहात्म्ये १८ अध्यायः ॥

"आर्य्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः ।"

इत्यमरः ॥

"विन्ध्यस्य पश्चिमे भागे मत्स्यभुक् पतितो भवेत् ॥"

इति प्राचीनाः ॥

विन्ध्यकूटः, पुं, ( विन्ध्ये कूटं माया कैतवं वा यस्य । व्याजेन तस्यावनतीकरणादस्य तथात्वम् । ) अगस्त्यमुनिः । इति त्रिकाण्डशेषः ॥

विन्ध्यवासी, [ न् ] पुं, ( विन्ध्ये वसतीति । वस + णिनिः । ) व्याडमुनिः । इति हेमचन्द्रः ॥

विन्ध्यवासिनी, स्त्री, (विन्ध्ये वसतीति । वस् + णिनिः । ततः स्त्रियां ङीप् । ) दुर्गा । यथा,—

"सहस्राक्षोऽपि तां गृह्य विन्ध्यं वेगाज्जगाम ह ।

तत्र गत्वा तथोवाच निक्षिप्य च महाचले ॥

पूज्यमाना सुरैर्नाम्ना ख्याता त्वं विन्ध्यवासिनी ॥

तत्र स्थाप्य हरिर्देवीं दत्त्वा सिंहञ्च वाहनम् ।

भवामरारिहन्त्रीति युक्ता स्वर्गमवाप्नुयात् ॥"

इति वामने ५१ अध्यायः ॥ * ॥

अन्यच्च देवीपुराणे ३५ अध्याये ।

"विन्ध्येऽवतीर्य्य देवार्थं हतो घोरो महाभटः ।

अद्यापि तत्र वाराणा तेन सा विन्ध्यवासिनी ॥"

विन्ध्यस्थः, पुं, ( विन्ध्ये विन्ध्यपर्व्वते तिष्ठतीति । स्था + कः । ) व्याडिमुनिः । इति जटाधरः ॥

विन्ध्या, स्त्री, लवलीवृक्षः । इति मेदिनी ॥ त्रुटिः । इति हेमचन्द्रः ॥ एलाचि इति भाषा ॥

विन्ध्यावली, स्त्री, बलिपत्नी । बाणराजमाता । इति पुराणम् ॥ ( यथा, भागवते । ८ । २० । १७ ।

"विन्ध्यावली तदागत्य पत्नी जालकमालिनी ॥")

विन्ध्यावलीपुत्त्रः, पुं, ( विन्ध्यावल्याः पुत्त्रः । ) बाणराजः । इति त्रिकाण्डशेषः ॥

विन्ध्यावलीसुतः, पुं, ( विन्ध्यावल्याः सुतः । ) बाणराजः । इति जटाधरः ॥

विन्नः, त्रि, (विद् + क्तः । "नुदविदेति ।" ८।२।५६ । नत्वम् । ) विचारितः । प्राप्तः । इत्यमरः ॥ ज्ञातः । स्थितः । इति विश्वः ॥

विन्यस्तः, त्रि, ( वि + नि + अस + क्तः । ) कृतविन्यासः । यथा,—

"सद्वृत्ता गुणगुम्फिता सुकृतिनां सत्कर्णशोभापिका

सत्सामान्यविशेषनित्यमिलिता भावप्रकर्षोज्ज्वला ।

विश्वोर्व्वशस्य विश्वनाथकृतिना सिद्धान्तमुक्तावली

विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥"

इति सिद्धान्तमुक्तावली ॥

विन्याकः, पुं, ( वि + नि + अक + घञ् । ) विकङ्कतः । इति शब्दचन्द्रिका ॥ क्षातियान् इति भाषा ॥

विन्यासः, पुं, ( वि + नि + अस + घञ् । ) स्थापनम् । रचनम् । यथा, तन्त्रान्तरे । वेदाङ्गे तु ।

"एकैकवर्णमुच्चार्य्य मूलाधाराच्छिरोऽन्तकम् ।

गमोऽन्तमिति विन्यास आन्तरः परिकीर्त्तितः ॥"

अपि च ।

"ओमाद्यन्तो नमोऽन्तो वा सविन्दुर्बिन्दुवर्ज्जितः ।

पञ्चाशद्वर्णविन्यासः क्रमादुक्तो मनीषिभिः ॥"

इति भट्टः । इति तन्त्रसारः ॥

अन्यच्च ।

"एतेषु मणिविन्यासो विज्ञेयो न च दक्षवत् ।

विमुक्तचीरकन्यासो विधेयः सदनोपरि ।

तेन सर्व्वाणि नश्यन्ति अरिष्टानि महीभुजाम् ॥"

इति युक्तिकल्पतरुः ॥

किञ्च ।

"तया कवितया किंवा तया वनितया च किम् ।

पदविन्यासमात्रेण यया नापहृतं मनः ॥"

इत्युद्भटः ॥

विप, क क्षेपे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् । ) क, वेपयति । इति दुर्गादासः ॥

विपक्षः, पुं (विरुद्धः पक्षो यस्य ।) शत्रुः । इत्यमरः ॥ (यथा, हरिवंशे । ५३ । ५४ ।

"तत्र वंशा विभज्यन्तां विपक्षः पक्ष एव च ।

पुत्रयोर्हि तयो राज्ञो भविता विग्रहो महान् ॥"

यथा च रघुवंशे । १७ । ७५ ।

"इन्दोरगतयः पद्मे सूर्य्यस्य कुमुदेंऽशवः ।

गुणास्तस्य विपक्षेऽपि गुणिनो लेभिरेऽन्तरम् ॥"

न्यायमते साध्याभाववत्पक्षः । यथा, भाषापरिच्छेदे । ७६ ।

"यः सपक्षे विपक्षे च भवेत् साधारणस्तु सः।"
"सपक्षविपक्षवृत्तिः साधारणः। सपक्षः साध्यवान्। विपक्षः साध्याभाववान्।" इति मुक्तावली॥ विरुद्धः पक्षः। शत्रुकारणम्। यथा, आर्य्यासप्तशत्याम्। ३५४।
"प्रतिभूः शुको विपक्षे दक्षः शृङ्गारसंकथा गुरवः।"
विगतः पक्षो यस्य। पक्षहीने, त्रि॥)
विपञ्चिका, स्त्री, (वि+पचि विस्तारे+ण्वुल्। स्त्रियां टाप् अत इत्वञ्च।) वीणा। इति शब्दरत्नावली।
विपञ्ची, स्त्री, (वि+पञ्च+अच्। स्त्रियां गौरादित्वात् ङीष्।) वीणा। इत्यमरः॥ (यथा, कथासरित्सागरे। ४६। २०।
"अहं शिक्षितुमिच्छामि तन्त्रीझङ्कारलक्षणैः। इत्युक्ता गुणशर्म्माद्यात्तां विपञ्चीं ददौ स तु॥")
केलिः। इति मेदिनी। चे, १७॥
विपणः, पुं, (वि+पण व्यवहारे+घञ्। संज्ञापूर्ब्बकत्वात् न वृद्धिः।) विक्रयः। इत्यमरः॥ (यथा, मनौ। ३। १५२।
"विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः॥" विशेषेण पण्यतेऽस्मिन्निति। विपणिः। यथा, महाभारते। १२। ६९। ५३।
"विपणाश्च राजमार्गांश्च कारयेत नराधिपः। प्रपाश्च विपणांश्चैव यथोद्देशं समादिशेत्॥")
विपणिः, पुं स्त्री, (विपण्यतेऽस्मिन्निति। वि+पण+"सर्व्वधातुभ्य इन्।" उणा० ४। ११७। इति इन्।) पण्यविक्रयशाला। इति हलायुधः॥ चट्टः। इति भाषा। विक्रयार्थप्रसारितनानाद्रव्यायां वणिग्वीथ्यां वाणिज्यार्थयो इति बाजार इति च ख्यातायामिति केचित्। हट्टमार्गः। इति केचित्। हट्टमध्यस्थपण्यविक्रयवीथी। इति केचित्। इति भरतः॥ तत्पर्य्यायः। पण्यवीथिका २। इत्यमरः॥ आपणः ३ पण्यवीथी ४ पण्यम् ५। इति रभसः॥ निषद्या ६ वणिक्पथम् ७। इत्यमरटीका॥ विपणम् ८ वीथी ९। इति कोषः॥
"निषद्या विपणिः पण्यवीथिका चापणस्तथा। पण्यविक्रयशालायां भवेदेतच्चतुष्टयम्॥"
इति शब्दरत्नावली॥
"विपणिः पण्यवीथ्याञ्च भवेदापणपण्ययोः।"
इति मेदिनी। णि, ७८॥
(यथा, महाभारते। ९। ३५। ३०।
"विपण्यापणपण्यानां नानाजनशतैर्वृतः॥"
वाणिज्यम्। यथा, मनौ। १०। ११६।
"विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः।
धृतिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः॥")
विपणी, [न्] पुं, (विपणः विक्रयोऽस्यास्तीति। विपण+इनिः।) वणिक्। इति जटाधरः॥ (यथा, शिशुपालवधे। ५। २४।
"पूर्णापणा विपणिनो विपणीर्व्विभेजुः॥")
विपश्यी, स्त्री, (विपणि+वा ङीष्।) हट्टः। इति द्विरूपकोषः॥ (यथा, कथासरित्सागरे। २०। ६५।
"ययौ भोजनकार्थी विपणीमाणवकः॥")
विपत्तिः, स्त्री, (वि+पद+क्तिन्।) आपत्। विपत्। इत्यमरः॥ यातना। इति मेदिनी। ते, १५९। यथा,—
शम्भुरुवाच।
"श्रुतं सर्व्वं सुरश्रेष्ठ मारोहीर्भवनं प्रभो।
न कालरो हि नीतिज्ञो विपत्तौ च कदाचन॥
सम्पत्तिश्च विपत्तिश्च नश्वरा स्वप्नरूपिणी।
पूर्व्वस्वकर्म्मायत्ता च स्वयं कर्त्ता तयोरपि॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३७ अध्यायः॥
विनाशः। यथा,—
"यस्मिन् राशिगते भानौ विपत्तिं यान्ति मानवाः।
तेषां तत्रैव कर्त्तव्या पिण्डदानोदकक्रिया॥"
इति मलमासतत्त्वम्॥
विपथः, पुं, (विरुद्धः पन्थाः। "ऋक्पूरब्धूःपथामानक्षे।" ५। ४। ७४। इत्यकारप्रत्ययः।) निन्दितपथः। तत्पर्य्यायः। अध्वा २ दुरध्वः ३ कदध्वा ४ कापथः ५। इत्यमरः॥ कुपथः ६ असत्पथः ७ कुत्सितवर्त्म ८। इति शब्दरत्नावली॥ (यथा, महाभारते। १२। ३५९। ११।
"सत्पथं कथमुत्सृज्य यास्यामि विपथं वद॥")
विपत् } स्त्री, (वि+पद्+सम्पदादित्वात् क्विप्।)
विपद् } विपत्तिः। इत्यमरः॥ (यथा,—
"केवर्त्तकर्कशकरात् चपरश्च्युतोऽपि
जाले पुनर्निपतितः शफरो विपाकः।
दैवात्ततो विगलितो गिलितो बकेन
वामे विधौ वद कथं विपदां निवृत्तिः॥"
इत्युद्भटः॥
यथा च भागवते। १। ९। १५।
"यत्र धर्म्मसुतो राजा गदापाणिर्वृकोदरः।
कृष्णोऽस्त्री गाण्डिवं चापं सुहृत् कृष्णस्ततो विपत्॥")
विपदा, स्त्री, (विपद्+भागुरिमते हलन्तानां टाप्।) विपत्। इत्यमरटीकायां रायमुकुटः॥
विपन्नः, त्रि, (वि+पद+क्तः।) विपदाक्रान्तः। इति मेदिनी। ने, १२४॥ नष्टः। इति शब्दरत्नावली॥
विपन्नः, पुं, सर्पः। इति मेदिनी। ने, १२४॥
विपरीतः, त्रि, (वि+परि+इ+क्तः।) विपर्य्ययः। उलटा इति भाषा॥ तत्पर्य्यायः। प्रतिसव्यः २ प्रतिकूलः ३ अपसव्यः ४ अपष्टुः ५ विलोमकः ६। इति जटाधरः॥ प्रसव्यम् ७ पराचीनम् ८ प्रतीपम् ९। इति शब्दरत्नावली॥ (यथाच शङ्करदिग्विजये।
"मत्तो जातः कलञ्जाशी विपरीतानि भाषसे। मत्तं ब्रवीषि पिबत् त्वत्तो जातः कौलञ्जसक्॥"
प्रतिकूलः। यथा, रामायणे। ६। १७। १५।
"स च न प्रतिजग्राह रावणः कालचोदितः। उच्यमानं हितं वाक्यं विपरीत इवौषधम्॥")
स्त्रीकृष्टरतिबन्धान्तर्गतद्वादशबन्धः। यथा,—
"पादमेकमुरौ कृत्वा द्वितीयं कटिसंस्थितम्।
नारीषु रमते कामी विपरीतस्तु बन्धकः॥"
इति रतिमञ्जरी॥
अपि च।
"पादमेकमुरौ कृत्वा द्वितीयं स्कन्धसंस्थितम्।
कामिन्याः कामयेत् कामी बन्धः स्याद्विपरीतकः॥"
इति स्मरदीपिका॥
विपरीता, स्त्री, कामुकी। इति शब्दमाला॥
विपर्णकः, पुं, (विच्छिन्नानि पर्णानि यस्य।) पलाशवृक्षः। इति शब्दचन्द्रिका॥ (पर्णरहिते, त्रि॥)
विपर्य्ययः, पुं, (वि+परि+इ+"एरच्।" इत्यच्।) व्यतिक्रमः। तत्पर्य्यायः। व्यत्यासः २ विपर्य्यासः ३ व्यत्ययः ४। इत्यमरः॥ विपर्य्यायः ५। इति भरतः॥ (यथा, भागवते। १०। १। ५०।
"विपर्य्ययो वा किं न स्यादगतिर्धातुर्दुरत्यया। उपस्थितो निवर्त्तेत निवृत्तः पुनरापतेत्॥"
सांख्यमते विपर्य्ययाः पञ्च। ते च सांख्यकारिकायां द्रष्टव्याः॥)
विपर्य्यायः, पुं, (विगतः पर्य्यायो यस्य। यद्वा, वि+परि+इ+घञ्।) विपरीतगमनम्। अन्यथाभावरूपपरिवर्त्तनम्। इति भरतः॥
"विपर्य्याये कुलं नास्ति न कुलं रक्तपित्तयोः।"
इति कुलाचार्य्यकारिका॥
विपर्य्यासः, पुं, (वि+परि+अस+घञ्।) विपर्य्ययः। इत्यमरः॥ (यथा, उत्तरचरिते। २।
"पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां विपर्य्यासं यातो घनविरलभावः क्षितिरुहाम्। बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति॥"
अप्रमात्मकबुद्धिभेदः। यथा, भाषापरिच्छेदे।
"तच्छून्ये तन्मतिर्य्या स्यादप्रमा सा निरूपिता। तत्प्रपञ्चो विपर्य्यासः संशयोऽपि प्रकीर्त्तितः। आद्यो देहे त्वात्मबुद्धिः शङ्खादौ पीतता-मतिः॥"
"आद्यो विपर्य्यासः।" इति मुक्तावली॥)
विपव्यं, त्रि, (वि+पू+"अचो यत्।" इति यत्।) शोधनीयम्। विपूर्व्वपुधातोर्यत्प्रत्ययेन निष्पन्नम्॥
विपश्यी, [न्] पुं, बुद्धभेदः। इति हेमचन्द्रः॥
विपश्चित्, त्रि, (विशेषं पश्यति विप्रकृष्टं चेतति चिनोति चिन्तयति वा। पृषोदरादित्वात् साधुः।) पण्डितः। इत्यमरः॥ (यथा, मनौ। ७। ५८।
"सर्व्वेषान्तु विशिष्टेन ब्राह्मणेन विपश्चिता॥")
विपाकः, पुं, (वि+पच+भावे कर्म्मणि वा घञ्।) पचनम्। (यथा, भागवते। ५। १६। २०।
"तावदुभयोरपि रोधसोर्या मृत्तिका तद्रसेनानुविध्यमाना वाय्वर्कसंयोगविपाकेन सदामरलोकाभरणं जाम्बूनदं नाम सुवर्णं भवति॥")

स्वेदः । कर्म्मणो विसदृक्फलम् । इति मेदिनी ॥ ( फलमात्रम् । यथा, भागवते ।१०।८१।१०।
"अराजन्यस्य वः क्षत्र भूयर्त्यात्मोपकल्पते ।
प्रायःपाकविपाकेन तव चाभिमतः क्रतुः ॥"
चरमोत्कर्षः । यथा, तत्रैव । ४ । ८ । २ ।
"यदि श्रिया योगविपाकतीव्रया
कृष्णप्रजोपि स्फुरितं नखितप्रभम् ॥")
परिणामः । दुर्गतिः । स्वादुः । इति हेमचन्द्रः ॥ जातिः । आयुः । भोगः । इति कुसुमाञ्जलिः ॥ * ॥ ( कर्म्मफलरूपस्यैव विपाकस्य त्रैविध्यम् । यथाच पातञ्जले । २ । १३ ।
"सति मूले तद्विपाको जात्यायुर्भोगाः ॥"
"सत्सु क्लेशेषु कर्म्माशयो विपाकारम्भी भवति नोच्छिन्नक्लेशमूलोऽपि । यथैव तुषावनद्धाः शालितण्डुला अदग्धबीजभावाः प्ररोहसमर्था भवन्ति नापनीततुषा दग्धबीजभावा वा । तथा क्लेशावनद्धः कर्म्माशयो विपाकप्ररोही भवति नापनीतक्लेशो नप्रसंख्यानदग्धबीजभावो वेति । स च विपाकस्त्रिविधो जातिरायुर्भोगश्चेति ॥" इति तद्भाष्यम् ॥ )
"जाठरेणाग्निना योगात् यदुदेति रसान्तरम् ।
रसानां परिणामान्ते स विपाक इति स्मृतः ॥"
इति सुश्रुतः ॥
अपि च ।
"मिष्टः कटुश्च मधुरमम्लोऽम्लं पच्यते रसः ।
कटुतिक्तकषायाणां पाकः स्यात् प्रायशः कटुः ॥"
तथा च वाग्भटः ।
"त्रिधा रसानां पाकः स्यात् स्वाद्वम्लकटुकात्मकः ॥"
प्रायः पक्षेण व्रीहिः स्वाद्वम्लविपाकः । शिवा कषाया मधुपाका । शुण्ठी कटुकमधुरपाकेत्यादिः ॥ * ॥ अथ विपाकानां गुणाः ।
"स्वादुश्च मधुरः पाको वातपित्तहरो मतः ।
अम्लस्तु कुरुते पित्तं वातश्लेष्मप्रसादनः ॥
कटुः करोति पवनं कफं पित्तञ्च नाशयेत् ।
विशेष एष रसतो विपाकानां निदर्शितः ॥"
इति भावप्रकाशः ॥
( तथास्य विवरणम् ।
"नैवमाहुरन्ये । विपाकः प्रधानमिति कस्मात् सम्यङ्मिथ्याविपाकत्वादिह सर्व्वद्रव्याण्यभ्यवहृतानि सम्यङ्मिथ्याविपक्वानि गुणं दोषं वा जनयन्ति । तत्राहुरन्ये प्रतिरसं पाक इति । केचित्त्रिविधमिच्छन्ति मधुरमम्लं कटुकञ्चेति तत्तु न सम्यक् भूतगुणादागमाच्चान्यो विपाको नास्ति पित्तं हि विदग्धमम्लतामुपैत्याग्नेयत्वात् । यद्येवं लवणोऽप्यन्यः पाको भविष्यति श्लेष्मा हि विदग्धो लवणतामुपैति मधुरो मधुरस्याम्लोऽम्लस्यैवं सर्व्वेषामिति । केचिदाहुर्दृष्टान्तं चोपदिशन्ति यथा तावत् क्षीरं स्थालीगतमभिमानं मधुरमेवस्थात्तथा शालियवमुद्गादयः प्रकीर्णाः स्वभावमुत्तरकालेऽपि न परित्यजन्ति तद्वदिति ।"
"किञ्चिद्रसविपाकाभ्यां दोषं हन्ति करोति वा ।"
इति सुश्रुते सूत्रस्थाने ४० अः ॥)

विपाट्, [ श् ] स्त्री, विपाशानदी । इत्यमरः ॥ ( यथा, ऋग्वेदे । ३ । ३३ । १ ।
"गावेव शुभ्रे मातरा रिहाणे
विपाट्छुतुद्री पयसा जवेते ॥"
"विपाट् कूलविपाटनात् विपाशनात् शतपुत्रमरणोद्भूतशोकतप्तेन वशिष्ठेन पाशा अस्यां अपास्यन्त विमोचनाद्वा विपाट् । शुतुद्री शुच्द्रिशुद्रा तुन्नेव द्रवति गच्छतीति शुतुद्री एतन्नाम्नी नद्यौ ॥ जवेते वसुन्धरं प्रति शीघ्रं गच्छतः । * * * विपाट् पटगती । पश्वाधनस्पर्शनयोरित्यत्र वाग्भावेतो विपूर्व्वो शकारस्य ष्टकारादिना वचनम् ॥" इति तद्भाष्ये सायनः ॥ )

विपा(ट)ठः, पुं, वाणः । इति त्रिकाण्डशेषः ॥ (यथा, महाभारते । ३ । २७० । १७ ।
"एकैकेन विपाठेन जघ्ने भावसतीमृगन् ॥"
स्त्री, दुर्गमरान्तभार्या । यथा, मार्कण्डेये । ७१ । ३६ ।
"विपाठा नन्दिनीच्छेव वेत्ति भार्या यदे द्विज ॥")

विपादिका, स्त्री, पादस्फोटः । इत्यमरः ॥ ( यथा राजतरङ्गिण्याम् । ८ । १४७ ।
"छिन्नोपानत् कथायन्थे प्राप्तं वल्मीकतिरोपितम् ।
विपादिकाक्षते दास्या नीतं पश्चाद्गतौ क्षतम् ॥")
"वैपादिकं पाणिपादे स्फुटनं तीव्रवेदनम् ।
कण्डूमद्भिः सरागैश्च गण्डैरलसकं चितम् ॥"
विपादिका वातश्लेष्मोद्भवा । इति माधवकरः ॥ अयं क्षुद्ररोगः ॥ (अस्या लक्षणम् । यथा,—
"कण्डूमती दारुणोपपन्ना
विपादिका पादगतेयमेव ॥"
इति सुश्रुते निदानस्थाने पञ्चमेऽध्याये ॥ )
प्रहेलिका । इति शब्दमाला ॥ * ॥

विपाशा, स्त्री, ( पाशं विमोचयतीति । पाश + "सत्यापपाशेति ।" ३।१।२५ । विमोचने णिच् । ततः पचाद्यच् । ) नदीविशेषः । इत्यमरः ॥ पुत्रशोकादेव गले पाशं बद्धा प्रविष्टं वशिष्ठं पाशच्छेदात् विपाशितवती विसृष्टपाशं कृतवतीति विपाशा णिः कर्त्रादेरिति पाशं विमोचयति इत्यर्थे णिः पचादित्वादन् आप् । एवं क्विपि विपाट् । इति तट्टीकायां भरतः ॥ * ॥ (यथा, हरिवंशे । १६६ । २० ।
"इरावती विपाशाच सरयूर्यमुना तथा ॥" )
तस्या जलगुणाः ।
"शतद्रोर्विपाशायाश्च सिन्धुनद्याः
सुशीतं लघु स्वादु सर्व्वामयघ्नम् ।
जलं निर्म्मलं दीपनं पाचनञ्च
प्रदत्ते बलं बुद्धिमेधायुषञ्च ॥"
इति राजनिर्घण्टः ॥
( अस्या नामनिरुक्त्यादि विशेषविवरणं महाभारते । १ । १७८ । अध्याये द्रष्टव्यम् ॥ अस्याः तीरे पीठस्थाने अमोघाक्षीदेवी वर्त्तते । यथा देवीभागवते । ७ । ३० । ६५ ।
"विपाशायाममोघाक्षी पाटला पुण्ड्रवर्द्धने ॥"
तथा अत्र यज्ञसूकरनामकविष्णुमूर्त्तिरपि वर्त्तते यथा, नरसिंहपुराणे ६२ अध्याये ।
"यज्ञसूकरं विपाशायां माहिष्मत्यां हुताशनम् ॥"
विगतः पाशो यस्य । ) पाशवर्ज्जिते, त्रि । इति धरणिः ॥ ( यथा, महाभारते ।१।१८०।८।
"अत्र वै पुत्रशोकेन वशिष्ठो भगवानृषिः ।
बद्ध्वात्मानं निपतितो विपाशः पुनरुत्थितः ॥"
पाशच्छिन्ने च त्रि ॥ यथा, हरिवंशे । ४७ । ४८ ।
"निर्व्यापारः शतस्तेन विपाशो वरुणो कृतः ॥"

विपिनं, क्ली, ( वेपन्ते जना यत्रेति । "वेपितुह्योर्ह्रस्वश्च ।" उणा० २ । ५२ । इनन् । ह्रस्वश्च । ) वनम् । इत्यमरः ॥ (यथा, महानाटके
"यच्चिन्तितं तदिह दूरतरं प्रयाति
यच्चेतसा न गणितं तदिहाभ्युपैति ।
प्रातर्भवामि वसुधाधिपचक्रवर्त्ती
सोऽहं व्रजामि विपिने जटिलस्तपस्वी ॥"
भीतिप्रदे, त्रि । यथा, भागवते ।९।१५।२३।
"स एकदा तु मृगयां विचरन् विपिने वने ।
यदृच्छयाश्रमपदं जमदग्नेरुपाविशत् ॥"
विजने वने इत्यपि क्वचित् पाठः ॥)

विपुलः, त्रि, ( विशेषेण पोलतीति । वि + पुल महत्त्वे + कः । ) वृहत् । इत्यमरः ॥ ( यथा साहित्यदर्पणे । १० ।
"विपुलेन सागरशयस्य कुक्षिणा ॥")
अगाधम् । इति मेदिनी । ले, १३२ ॥

विपुलः, पुं, (वि + पुल + कः ।) मेरुपश्चिमभूधरः इति मेदिनी । ले, १३२ ॥ ( अयं हि सुमेरोर्व्विष्कम्भपर्व्वतानामन्यतमः । यथा, विष्णुपुराणे २ । २ । १७ ।
"विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः ॥"
अस्मिंस्तु पीठस्थाने विपुलेति पीठदेवी वर्त्तते । यथा, देवीभागवते । ७ । ३० । ६६ ।
"विपुले विपुला देवी कल्याणी मलयाचले ॥")
सुमेरुः । हिमाचलः । इति धरणिः ॥ (वसुदेवपुत्रः । यथा, भागवते । ९ । २४ । ४६ ।
"बलं गदं सारणञ्च दुर्म्मदं विपुलं ध्रुवम् ।
वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत् ॥")

विपुलरसः, पुं, ( विपुलो रसो यत्र । ) इक्षुः । इति केचित् ॥

विपुला, स्त्री, (वि + पुल महत्त्वे + कः । ततस्त्रियां टाप् । ) पृथिवी । आर्य्याच्छन्दोभेदः । इति हेमचन्द्रः ॥ अस्या लक्षणादिर्यथा,—
"पथ्या विपुला चपला मुखचपला जघनचपला च ।
गीत्युपगीत्युद्गीतय आर्य्यागीतिश्च नवधार्य्या ॥

संलक्ष्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति
पादः ।
यस्यास्तां पिङ्गलनागो विपुलामिति समा-
ख्याति ॥
पूर्वां कविकालिदासकलितां नाद्युपदर्शित-
स्यापि ।
वीर्य्यविपुला सुखे चेत् स्यात् गोविन्दाख्यमङ्ग-
लता ॥"
इति छन्दोमञ्जरी ॥
( विपुलपर्व्वतस्याद्देवी । इति देवीभागवतम् ।
७ । ३० । ६६ ॥ )

विपुलास्रवा, स्त्री, (विपुलं रसं आस्रवतीति । आ
+स्रु+अण् । टाप् ।) गृहकन्या । इति राज-
निर्घण्टः ॥

विपूयः, पुं, ( वि+पू+"विपूयविनीयेति ।"३।१।
११७। इति कर्म्मणि क्यबन्तनिपातः ।) मुञ्जः ।
इति मुग्धबोधव्याकरणम् ॥ यथा,—
"वाताग्नी वल्कले मुञ्जे विपूयैः शतमेखलाम् ।
श्यामामञ्जनपिण्डाभां दृक्किणीमजिनान्तराम् ॥"
इति भट्टिः ।३।६०॥

विप्रः, पुं,(वप+"ऋज्रेन्द्राग्रवज्रेति ।" उणा० २।२८।
निपातनात् रप्रत्ययेन साधुः ।) ब्राह्मणः । इत्य-
मरः । विशेषेण प्राति पूरयति षट् कर्म्माणि
विप्रः । प्रा अ पूर्त्तौ इत्यस्मात् अप्रत्ययः । किंवा ।
उप्यते धर्म्मबीजमत्र इति वपेर्नाम्नीति रे
निपातनादत्वम् । इति भरतः ॥ तस्य
लक्षणं यथा,—
"जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रियलक्षणम् ॥"
इति प्रायश्चित्तविवेकः ॥
( यथाच मनौ । १ । ९८ ।
"उत्पत्तिरेव विप्रस्य मूर्त्तिर्धर्म्मस्य शाश्वती ।
स हि धर्म्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥"
अस्य पादोदकमाहात्म्यं यथा, ब्रह्मवैवर्त्ते । १ ।
११ । २६—३६ ।
"पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे ।
सागरे यानि तीर्थानि विप्रपादेषु तानि च ॥
विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत् पुष्करपात्रेषु पिबन्ति पितरो जलम् ।
विप्रपादोदकं पुण्यं भक्तियुक्तश्च यः पिबेत् ॥
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ।
महारोगी यदि पिबेत् विप्रपादोदकं द्विज ।
मुच्यते सर्व्वरोगेभ्यो मासमेकन्तु भक्तितः ॥
अविद्यो वा सविद्यो वा सन्ध्यापूतो हि यो
द्विजः ।
स एव विष्णुसदृशो न हरौ विमुखो यदि ॥
घ्नन्तं विप्रं शपन्तं वा न हन्यात्तञ्च तं शपेत् ।
गोभ्यः शतगुणं पूज्यो हरिभक्तश्च ब्राह्मणः ॥
पादोदकञ्च नैवेद्यं भुङ्क्ते विप्रस्य यो द्विज ।
नित्यं नैवेद्यभोजी यो राजसूयफलं लभेत् ॥
एकादश्यां न भुङ्क्ते यो नित्यं विष्णुं समर्च्चयेत् ।
तस्य पादोदकं प्राप्य स्थलं तीर्थं भवेद्ध्रुवम् ॥")
अश्वत्थः । इति राजनिर्घण्टः ॥ ( त्रि, मेधावी ।
यथा, ऋग्वेदे । १० । ११२ । ९ ।
"निषुसीद गणपते गणेषु त्वा माहुर्विप्रतमं
कवीनाम् ॥" )
"विप्रतमं अतिशयेन मेधाविनम् ।" इति तद्भाष्ये
सायणः ॥ स्तवकर्त्ता । यथा, ऋग्वेदे । १० ।
४० । १४ ।
"विप्रस्य वा यजमानस्य वा गृहम् ॥"
"विप्रस्य मेधाविनः स्तोतुर्वा ।" इति तद्भाष्ये
सायणः ॥ )

विप्रकारः, पुं, ( वि+प्र+कृ+भावे घञ् । )
अपकारः । तत्पर्य्यायः । निकारः २ । इत्य-
मरः ॥ ( यथा, महाभारते । १ । ६२ । १४ ।
"तेषान्तु विप्रकारेषु तेषु तेषु महामतिः ।
मोक्षणे प्रतिकारे च विदुरोऽवहितोऽभवत् ॥")
खलीकारः । इति स्वामी । तिरस्कारः । इति
हेमचन्द्रः ॥ ( विविधप्रकारः । यथा, महा-
भारते । ३ । २७५ । ३ ।
"स बाधते प्रजाः सर्व्वा विप्रकारैर्महाबलः ।
ततो नस्त्रातु भगवान्नान्यस्त्राता हि विद्यते ॥")

विप्रकाष्ठं, स्त्री, तूलवृक्षः । इति राजनिर्घण्टः ॥

विप्रकृतः, त्रि, (वि+प्र+कृ+क्तः ।) तिरस्कृतः ।
तत्पर्य्यायः । निकृतः २ । इति हेमचन्द्रः ॥
( यथा, कुमारसम्भवे । २ । १ ।
"तस्मिन् विप्रकृताः काले तारकेण दिवौकसः ।
तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः ॥")

विप्रकृतिः, स्त्री, विप्रकारः । विप्रपूर्व्वककृधातोः
क्तिप्रत्ययेन निष्पन्नमिदम् ॥

विप्रकृष्टः, त्रि, ( वि+प्र+कृष+क्तः । ) दूरः ।
इति हलायुधः ॥ ( यथा,—
"सन्निकृष्टविप्रकृष्टव्यभिचारिप्राधानिकभेदाच्च-
तुर्द्धा इति । तत्र ते चयादिक्रमपेक्षन्ते । विप्र-
कृष्टो यथा । हेमन्ते निचितः श्लेष्मा वसन्ते
कफरोगकृत् । किंवा सन्निकृष्टो ज्वरस्य रूक्षादि
सेवा विप्रकृष्टो रुद्रकोपः ।" इति माधवकृत
रुग्विनिश्चयव्याख्याने विजयः ॥ )

विप्रकृष्टकं, त्रि, ( विप्रकृष्ट एव । स्वार्थे कन् । )
दूरम् । इत्यमरः ॥

विप्रचित्तिः, पुं, दनुपुत्रः । यथा,—
सूत उवाच ।
"अभवन् दनुपुत्राश्च वंशे ख्याता महासुराः ।
विप्रचित्तिप्रधानास्ते शतं तीव्रपराक्रमाः ॥"
इति वह्निपुराणे काश्यपीयवंशः ॥
( तथाच महाभारते । १ । ६५ । २१ ।
"चत्वारिंशद्दनोः पुत्त्राः ख्याताः सर्व्वत्र
भारत ।
तेषां प्रथमजो राजा विप्रचित्तिर्महायशाः ॥")

विप्रतिपत्तिः, स्त्री, ( वि+प्रति+पद+क्तिन् । )
विरोधः । यथा,—
"परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु ।
वाक्यान्न्यायाद्व्यवस्थानं व्यवहार उदाहृतः ॥
भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः ।
आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते ॥"
इति मिताक्षरायां व्यवहारमातृका ॥*॥
विज्ञप्तिः । यथा प्रथमाध्याये कात्यायनसूत्रम् ।
शब्देऽविप्रतिपत्तिरिति । प्रतिनियतार्थे श्रुत-
शब्दः प्रयोज्यः । श्रुतशब्दबुद्ध्या प्रतिनियतपादा-
नात् शब्दान्तरप्रयोगे अर्थान्तरबुद्धिप्रसङ्गात् ।
इत्येकादश्रौतसूत्रम् ॥ ( अन्यथाभावः । अरिष्ट-
विशेषः । यथा, सुश्रुते ।१।३०। "अथातः पञ्चे-
न्द्रियार्थविप्रतिपत्तिमध्यायं व्याख्यास्यामः ।"
एवं छायाविप्रतिपत्तिः । स्वभावविप्रति-
पत्तिः ॥ )

विप्रतिसारः, पुं, ( वि+प्रति+सृ+घञ् । )
विप्रतीसारः । इत्यमरटीकायां रायमुकुटः ॥
( यथा, शिशुपालवधे । १० । २० ।
"प्रापि चेतसि स विप्रतिसारे
सुभ्रुवामवसरः सरकेण ॥"
"विप्रतिसारे पश्चात्तापयुक्ते । पश्चात्तापोऽनुता-
पश्च विप्रतीसार इत्यपि । इत्यमरः ।" इति
तट्टीकायां मल्लिनाथः ॥ )

विप्रतिषिद्धं, त्रि, ( वि+प्रति+षिध+क्तः । )
निषिद्धम् । इति स्मृतिः ॥

विप्रतीसारः, पुं, अनुतापः । इत्यमरः ॥ कौकृत्यम् ।
अनुशयः । रोषः । इति मेदिनी । रे, ३०७ ॥

विप्रदहः, पुं, ( विशेषेण प्रकर्षेण दह्यते इति ।
दह+घः । ) पललादिशुष्कमत्स्यम् । इति
शब्दचन्द्रिका ॥

विप्रप्रियः, पुं, ( विप्राणां प्रियः । यज्ञीयवृक्षत्वात् ।)
पलाशवृक्षः । इति केचित् ॥ ब्राह्मणवत्सले, त्रि ।
यथा,—
"रामं लक्ष्मणपूर्व्वजं रघुवरं सीतापतिं सुन्दरं
काकुत्स्थं करुणामयं गुणनिधिं विप्रप्रियं
धार्म्मिकम् ।"
इति रामायणम् ॥

विप्रयाणं, क्ली, (विशेषेण प्रयाणम् ।) पलायनम् ।
इति केचित् ॥

विप्रयुक्तः, त्रि, ( प्र+युज्+भावे क्तः । विगतं
प्रयुक्तं प्रयोगो यस्मात् । ) वियुक्तः । विभिन्नः ।
इति केचित् ॥

विप्रयोगः, पुं, ( विगतः प्रकृष्टो योगो यत्र । )
विप्रलम्भः । इत्यमरः ॥ विरहो विसंवादो वा ।
इति स्वामी ॥ कामिनोर्विच्छेदः । इति सुभूतिः ॥
( यथा, मनौ । ९ । १ ।
"पुरुषस्य स्त्रियाश्चैव धर्म्मे वर्त्मनि तिष्ठतोः ।
संयोगे विप्रयोगे च धर्म्मान् वक्ष्यामि शाश्व-
तान् ॥"
संयोगाभावः । यथा, साहित्यदर्पणे । २ ।
"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता ॥")

विप्रलब्धः, त्रि, (वि+प्र+लभ+क्तः ।) वञ्चितः ।
इति हेमचन्द्रः ॥ ( यथा, महाभारते । ५ ।
१८९ । २१ ।
"दशार्णराजो राजानमिदं वचनमब्रवीत् ।
अभिगम्यात् प्रकुपितो विप्रलब्धस्तथानघ ॥")

विभुः, त्रि, सर्व्वमूर्त्तसंयोगी । परममहत्परिमाणः । स तु आकाशादिः । यथा,—

"आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्त्तृकम् ।
विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता ॥"
इति भाषापरिच्छेदः ॥

विभुरिति विभुत्वं परममहत्परिमाणम् । इति सिद्धान्तमुक्तावली ॥

"कालखात्मदिशां सर्व्वगतत्वं परमं महत् ।"
इति भाषापरिच्छेदः ॥

दृढः । [illegible] । व्यापकः । इति हेमचन्द्रः ॥ (यथा, ऋग्वेदे । १० । ४० । १ ।

"प्रातर्यावाणं विभ्वं विशे विशे ॥"

"विभ्वं विभुं व्यापिनम् ।" इति तद्भाष्ये सायणः ॥ व्याप्तः । यथा, ऋग्वेदे । १ । ६४ । २ ।

"चिकित्वो अन्याभवत्तं न वेद वा
विभुर्म्मायाम इत दाति इन्विता ॥"

"विभुः व्याप्तः ।" इति तद्भाष्ये सायणः ॥ सर्व्वत्र गमनशीलः । यथा, ऋग्वेदे ।१।१६५।१०।

"एकस्य चिन्मे विभ्वस्त्वोजो
या नु दधृष्वान् कृणवै मनीषा ॥"

"विभु सर्व्वत्र गमनशीलम् ।" इति तद्भाष्ये सायणः ॥ ईश्वरः । यथा, ऋग्वेदे । ४ । ७ । १ ।

"यमप्नवानो भृगवो विरुरुचुर्व्वनेषु चित्रं विभ्वं विशे विशे ॥"

"विभ्वं विभुं ईश्वरम् ।" इति तद्भाष्ये सायणः ॥ महान् । यथा, ऋग्वेदे । ५ । ३८ । १ ।

"उरोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो ॥"

"विभ्वी महती ।" इति तद्भाष्ये सायणः ॥ )

विभूतिः, स्त्री, ( वि + भू + क्तिन् । ) अणिमादि-अष्टधा । तत्पर्य्यायः । भूतिः २ ऐश्वर्य्यम् ३ । इत्यमरः ॥ ( यथा, ऋग्वेदे । १ । ८ । ९ ।

"एवा हि ते विभूतय इन्द्र मावते ॥"

"विभूतयः ऐश्वर्य्यविशेषाः ।" इति तद्भाष्ये सायणः ॥ ) शिवभूतभस्म । अस्य शिवस्य अणिमाद्यष्टप्रकारं वैभवं विभूत्यादिपदवाच्यं केचित्तु विभूतिर्भूतिरिति द्वयं शम्भुतनुभस्मनि अणिमाद्यष्टकं तु ऐश्वर्य्यमित्याहुः । विभवनमनया विभूतिः क्तिः भवतेः क्तिः भूतिः विपदस्त्वनयोपसर्गविशेषार्थं ईश्वरगुणैश्वर्य्यं भावे ष्यञ् अणिमादि लघिमादि । तथा च ।

"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।
ईशित्वञ्च वशित्वञ्च तथा कामावशायिता ॥"
इति ॥

अणुत्वमणिमा येन अणुर्भूत्वा विचरति । लघुत्वं लघिमा येन वायुरिव लघुतरो भवति । प्राप्तिरभीष्टप्राप्तं प्राकाम्यमिच्छानभिघातः । महिमा महत्त्वं येन चतुर्द्दशभुवनान्यन्तोदरे वर्त्तन्ते । ईशित्वं प्रभुता येन स्थावरजङ्गमादिभूतान्यादेशकारीणि भवन्ति । वशित्वं स्वातन्त्र्यं येन स्वतन्त्रश्चरति । कामेन इच्छया अवसायितुं स्थातुं शीलमस्य कामावसायी योगी यत्राभिलाषिन् तस्य भावः कामावसायिता । सत्यसङ्कल्पस्तु अनेकार्थत्वादनुक्तो लघिमादि तिरस्कार्य्यः । अवशायी इत्यमथा इत्याह । इति भरतः ॥ ० ॥ अपि च ।

श्रीभगवानुवाच ।

"परात्परतरं तत्त्वं परं ब्रह्मैकमव्ययम् ।
नित्यानन्दं स्वयं ज्योतिरक्षरं तमसः परम् ।
ऐश्वर्य्यं तस्य यन्नित्यं विभूतिरिति गीयते ॥"
इति कौर्म्मे १ अध्यायः ॥

( लक्ष्मीः । यथा, ऋग्वेदे । १ । ३० । ५ ।

"विभूतिरस्तु सूनृता ।"

"विभूतिर्लक्ष्मीः ।" इति तद्भाष्ये सायणः ॥ विभवहेतुः । यथा, तत्रैव । ६ । २१ । १ ।

"रयिर्व्विभूतिरीयते वचस्या ॥"

"विभूतिर्व्वयस्तो विभवहेतुः ।" इति तद्भाष्ये सायणः ॥ विविधसृष्टिः । यथा, भागवते । ४ । ७ । ४३ ।

"शक्तित्रयसमेताय मीढुषेऽहङ्कृतात्मने ।
चेत आकूतिरूपाय नमो वाचोविभूतये ॥"

सम्पत् । यथा, रघुवंशे । ८ । ३६ ।

"अभिभूय विभूतिमार्त्तवीं
मधुगन्धातिशयेन वीरुधाम् ॥")

विभूतिद्वादशी, स्त्री, ( विभूतिवर्द्धिका द्वादशी । ) व्रतविशेषः । यथा,—

नन्दिकेश्वर उवाच ।

"शृणु नारद ! वक्ष्यामि विष्णोर्व्रतमनुत्तमम् ।
विभूतिद्वादशीनाम सर्व्वपापनिषूदनम् ॥
कार्त्तिके चैव वैशाखे मार्गशीर्षेऽथ फाल्गुने ।
आषाढे वा दशम्यान्तु शुक्लायां लघुभुक् नरः ।
कृत्वा सायन्तनीं सन्ध्यां गृह्णीयान्नियमं बुधः ।
एकादश्यां निराहारः समभ्यर्च्य जनार्द्दनम् ।
द्वादश्यां विधिसंयुक्तः करिष्ये भोजनं विभो ।
तदविघ्नेन मे यातु साफल्यं मधुसूदन ॥
ततः प्रभाते चोत्थाय कृतस्नानजपः शुचिः ।
पूजयेत् पुण्डरीकाक्षं शुक्लमाल्यानुलेपनैः ॥
विभूतिदाय नमः पादावशोकाय च जानुनी ।
नमः शिवायेत्यूरू च विश्वमूर्त्तये नमः कटिम् ॥
कन्दर्पाय नमो मेढ्रमादित्याय नमः करौ ।
दामोदरायेत्युदरं वासुदेवाय च स्तनौ ।
माधवायेति हृदयं कण्ठमुत्कण्ठिने नमः ॥
श्रीधराय मुखं केशान् केशवायेति नारद ।
पृष्ठं शार्ङ्गधरायेति श्रवणौ च स्वयम्भुवे ॥
स्वनाम्ना शङ्खचक्रासिगदापरशुपाणये ।
सर्व्वात्मने शिरो ब्रह्मन् नम इत्यभिपूजयेत् ॥
मत्स्यमुत्पलसंयुक्तं हैमं कृत्वा तु शक्तितः ।
उदकुम्भसमायुक्तमग्रतः स्थापयेद्विभोः ॥
गुडपात्रं तिलैर्युक्तं सितवस्त्राभिवेष्टितम् ।
रात्रौ जागरणं कुर्य्यादितिहासकथादिना ॥
प्रभातायाञ्च शर्व्वर्य्यां ब्राह्मणाय कुटुम्बिने ।
सकाञ्चनोत्पलं देवं सोदकुम्भं निवेदयेत् ॥
यथा न मुच्यसे विष्णोः सदा सर्व्वविभूतिभिः ।
तथा मामुद्धराशेषदुःखसंसारसागरात् ॥
दशावताररूपाणि प्रतिमासं क्रमान्मुने ।
दत्त्वैवं ततो यावदुत्पलेन समन्वितम् ।
दद्यादेवं समा यावत् पावकानभिवर्ज्जयेत् ॥
समाप्त्यैवं यथाशक्त्या द्वादशद्वादशीं नरः ।
संवत्सरान्ते लवणपर्व्वतेन समन्विताम् ।
शय्यां दद्यात् सुनिर्म्मित्त गुरवेऽमरसंयुताम् ॥
ग्रामञ्च शक्तिमान् दद्यात् क्षेत्रमाभरणान्वितम् ।
गुरुं संपूज्य विधिवत् वस्त्रालङ्कारभूषणैः ॥
अन्यानपि यथाशक्त्या भोजयित्वा द्विजोत्तमान् ।
तर्पयेद्वस्त्रगोदानैरन्यैश्च धनसञ्चयात् ॥
अल्पवित्तो यथाशक्त्या स्तोकं स्तोकं समाचरेत् ।
यश्चातिनिःस्वः पुरुषो भक्तिमान् माधवं प्रति ।
पुष्पार्च्चनविधानेन स कुर्य्याद्वत्सरद्वयम् ॥
अनेन विधिना यस्तु विभूतिद्वादशीव्रतम् ।
कुर्य्यात् स पापनिर्म्मुक्तः पितॄणां तारयेच्छतम् ॥
जन्मनां शतसाहस्रं न शोकफलभाग्भवेत् ।
न च व्याधिर्भवेत्तस्य न दारिद्र्यं न बन्धनम् ॥
वैष्णवो वाथ शैवो वा भवेज्जन्मनि जन्मनि ।
यावद्युगसहस्राणां शतमष्टोत्तरं भवेत् ।
तावत् स्वर्गे वसेद्ब्रह्मन् भूपतिश्च पुनर्भवेत् ॥"
इति मात्स्ये ८० अध्यायः ॥

विभूषणं, क्ली, ( विशेषेण भूषयत्यनेनेति । वि + भूष + णिच् + ल्युट् । ) आभरणम् । इत्यमरः ॥ ( यथा, कथासरित्सागरे । १७ । ६४ ।

"अस्ति पाटलिपुत्राख्यं पुरं पृथ्वीविभूषणम् ॥")

विभूषा, स्त्री, ( वि + भूष भूषणे + "गुरोश्च हलः ।" ३ । ३ । १०३ । इत्यः । स्त्रियां टाप् । ) शोभा । इति हेमचन्द्रः ॥ ( यथा, कामन्दकीये ।१५।७६।

"ततः प्रबुद्धः शुचिरिद्धवेशः
श्रीमद्विभूषोज्ज्वलितः प्रहृष्टः ॥")

आभरणञ्च । ( यथा, आर्य्यासप्तशत्याम् ।४५८।

"मानग्रहगुरुकोपादनुनयितात्रैव रोचते सख्याम् ।
काञ्चनमयी विभूषा हाराञ्चितशुद्धभावेव ॥")

विभूषितः, त्रि, ( वि + भूष + क्तः । यद्वा, विभूषा संजातास्य इति । विभूषा + इतच् । ) अलङ्कृतः । यथा,—

"विमुक्तरत्नांशुविभूषिताङ्गी
शिलातले हेममये सुरम्ये ।
सुखोपविष्टं मदनाङ्गनाशं
जगाद वाक्यं गिरिराजपुत्त्री ॥"
इति स्कान्दे नीलकण्ठस्तोत्रम् ॥

विभृतः, त्रि, धृतः । पुष्टः । विपूर्व्वभृधातोः क्तप्रत्ययेन निष्पन्नः ॥

वि(बि)भ्रत्, त्रि, ( भृ + शतृ । ) बिभर्त्ति यः । धारणपोषणकर्त्ता । यथा,—

"चतुर्द्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्ज्जितम् ।
ददार करजैरूरावेरकां कटकृद्यथा ॥"
इति श्रीभागवते १ स्कन्धे ३ अध्यायः ॥

अपि च ।

"सकलशशिकलाभिन्दोर्बिभ्रती शुभ्रकान्तिः ।"
इत्यादि तन्त्रसारे सरस्वतीध्यानम् ॥

( पवर्गीयबकारादिः साधुरेव । )

विभ्रमः, पुं, ( वि + भ्रम + घञ् । ) हावभेदः । स तु स्त्रीणां शृङ्गारभावजक्रियाविशेषः । इत्यमरः ॥ ( यथा, मेघदूते । २८ ।
"स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥")
मदरागहर्षजनितविपर्य्यासो विभ्रमः । यथा त्वरितमिलमानप्रमुदाचार्य्याच गमनं प्रिया-गमनकथामाश्रित्य सखा सद्याःप्रगल्भहर्षशालि-नीभिः कुत्रादीनां वाच्या यद्वदैव तत्परि-त्यागः । वचाभरणमाल्यादीनामस्थाने धारणं मानश्च । यदुक्तम् ।
"क्रोधः स्मितश्च कुसुमाभरणादियाच्ना तद्वर्जनञ्च यद्वदेव विभक्तनञ्च । आस्त्रिव्य कान्तवचनं सहसं सखीभि-र्विभ्राजशोभितमतं वद विभ्रमं तत् ॥" इति ।
"चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो भवेत् ॥"
इत्यन्यच्च । तथान्यच्च ।
"विभ्रमस्त्वरया काले भूषास्थानविपर्य्ययः ।"
यथा,—
"श्रुत्वायान्तं बहिः कान्तमसमाप्तविभूषया । भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥"
इति ।
योषितां यौवनजो विकारो विभ्रमः । इत्येके । विभ्रान्तिर्विभ्रमः घञ् । इति भरतः ॥ अपि च ।
"वल्लभप्राप्तिवेलायां मदनावेशसंभ्रमात् । विभ्रमो हारमाल्यादिभूषास्थानविपर्य्ययः ॥"
इत्युज्ज्वलनीलमणिः ॥*॥
भ्रान्तिः । इति मेदिनी । मे, ५२ ॥ ( यथा, भागवते । ४ । २१ । १२ ।
"तमभिर्भगवानेव सरमायां विहायसा । आहृतमिव पावकं योऽपश्यत् धर्म्मविभ्रमः ॥")
शोभा । ( यथा, राजतरङ्गिण्याम् ।१।१६७।
"ललाटे मृगमदाङ्के भटाङ्कुराः शिरोरुहाः । तस्य भ्रमभ्रमरविश्रमाश्रमविभ्रमं दधुः ॥"
यथा च अमरुशतके । १ ।
"ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठ-प्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः । त्वां पातु मञ्जरितपल्लवकर्णपूर-लोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ॥")
संशयः । इति हेमचन्द्रः ॥ ( यथा, कथा-सरित्सागरे । १८ । ६५ ।
"पूरयन् वहुनादाभिर्म्मोहिनीभिर्नभस्तलम् । कुर्व्वन्कामकिर्म्मीबन्धोत्सवविभ्रमम् ॥")
भ्रमणम् । इति शब्दरत्नावली ॥ ( विकार-विशेषः । यथा,—
"तीव्रार्त्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् । आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥ निहन्यादपि चैतेषां विभ्रमः सद्य आतुरम् । जीर्णाशने तु भैषज्यं युञ्ज्यात् स्तब्धगुरूदरे ॥"
इति वाभटे सूत्रस्थानेऽष्टमेऽध्याये ॥)
विभ्रमा, स्त्री, वार्द्धक्यम् । इति शब्दरत्नावली ॥
विभ्राज्, [ज्]
विभ्राट्, [ज्] } त्रि, ( विशेषेण भ्राजते इति । वि + भ्राज् + "अन्येभ्योऽपि दृश्यते ।" ३।२।७५ । इति क्विप् । ) अलङ्का-रादिना दीप्तिशीलः । तत्पर्य्यायः । भ्राजिष्णुः २ रोचिष्णुः ३ । इत्यमरः ॥ ( यथा, ऋग्वेदे । १० । १७० । १ ।
"विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ॥"
"विभ्राड् विभ्राजमानः विशेषेण दीप्यमानः ।"
इति तद्भाष्ये सायनः ॥ )
विभ्रान्तः, त्रि, विभ्रमयुक्तः । विपूर्व्वभ्रमधातोः क्तप्रत्ययेन निष्पन्नः ॥ ( यथा, गीतायाम् । १६ । १६ ।
"अनेकचित्तविभ्रान्ता मोहजालसमावृताः ॥")
विभ्रान्तिः, स्त्री, (वि + भ्रम + क्तिन् ।) विभ्रमः । इति विभ्रमशब्दटीकायां भरतः ॥ ( यथा, प्रबोधचन्द्रोदये । "स्फुरदद्वैतविभ्रान्तिघनान्ध-तमसच्छायसंसारनिद्रापहारि करोतीति ॥")
विमतः, त्रि, विरुद्धमतिविशिष्टः । विपूर्व्वमन-धातोः क्तप्रत्ययेन निष्पन्नः ॥
विमनस्कः, त्रि, विमनाः । विनिर्गतं मनोऽस्येति बहुव्रीहौ कप्रत्ययेन निष्पन्नः ॥ (यथा, भाग-वते । ७ । १० । ६१ ।
"विलोक्य भयसङ्क्यं विमनस्कं वृषध्वजम् ॥" )
विमनाः, [स्] त्रि, (विरुद्धं मनो यस्य ।) चिन्ता-दिव्याकुलचित्तः । तत्पर्य्यायः । दुर्म्मनाः २ अन्त-र्म्मनाः ३ । इत्यमरः ॥ दुःखितमानसः ४ ॥ इति शब्दरत्नावली ॥ ( यथा, देवीभागवते । १ । १८ । १० ।
"किमसि त्वं सदा राजन् दुःखितो विमनास्तथा । मालाकारं तथा सर्पं समहक् न भूपोत्तम ॥")
विमयः, पुं, ( वि + मी + "एरच् ।" इत्यच् । ) विनिमयः । इति हेमचन्द्रः ॥
विमर्द्दः, पुं, ( विमृद्यतेऽसौ इति । वि + मृद् + घञ् । ) कालकृतकष्यः । इति रत्नमाला ॥ कालकासुन्दिया इति भाषा ॥ विमर्द्दनम् । इति शब्दरत्नावली ॥ ( यथा, रघुः । ५ । ६५ ।
"तं कर्णभूषणनिपीडितपीवरांसं शय्योत्तरच्छदविमर्द्दकृशाङ्गरागम् ॥"
सम्पर्कः । यथा, रघुः । १३ । २० ।
"असौ महेन्द्रद्विपदानगन्धि-स्त्रिमार्गगावीचिविमर्द्दशीतः ॥"
"त्रिमार्गगा गङ्गा तस्या वीचीनां विमर्द्देन सम्पर्केण शीतः ।" इति तट्टीकायां मल्लि-नाथः ॥*॥ युद्धम् । यथा, रामायणे ।१।३२।७।
"देवासुरविमर्द्देषु वज्राशनिसमप्रभम् ॥"
कलहः । यथा, तत्रैव । ७ । ६१ । २४ ।
"कार्य्यार्थिनां विमर्द्दो हि राज्ञां दोषाय कल्पते ॥")
विमर्द्दकः, पुं, ( विमर्द्द एव । स्वार्थे कन् । ) चक्र-मर्द्दः । इति राजनिर्घण्टः ॥ ( चक्रमर्द्दशब्दे-ऽस्य गुणादयो विज्ञेयाः ॥ )
विमर्द्दनं, क्ली, ( वि + मृद् + ल्युट् । ) कुङ्कुमादि-मर्द्दनम् । तत्पर्य्यायः । परिमलः २ । इत्य-मरः ॥ विमर्द्दः ३ । इति शब्दरत्नावली ॥ विशेषेण मर्द्दनञ्च ॥ ( यथा, महाभारते । १ । ३६ । २ ।
"अर्थेऽहमागमाणोऽहं गतिमध्यां सुदुर्ल्लभाम् । अयं यत्नात्करिष्यामि मेरोरिव विमर्द्दनम् ॥"
त्रि, विशेषेण मर्द्दयतीति । वि + मृद् + ल्युः । मर्द्दनकारी । पीडादायकः । यथा, कथासरित्-सागरे । ११६ ।१८ ।
"अभूच्च वारमस्तस्य परसैन्यविमर्द्दनः । महान् कुवलयापीड इति ख्यातो महीपतिः ॥"
यथा च साहित्यदर्पणे । ४ । २६६ ।
"अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः । नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥")
विमर्द्दोत्थः, पुं, ( विमर्द्दादुत्तिष्ठतीति । उत् + स्था + कः । ) मर्द्दनाज्जातसुगन्धादिः । यथा,—
"अथ तस्मै परिमलो विमर्द्दोत्थे मनोहरे । दूरगामी मनोहारी गन्ध आमोद ईरितः ॥"
इति शब्दरत्नावली ॥
विमर्शनं, क्ली, (वि + मृश + ल्युट् ।) परामर्शः । वितर्कः । यथा,—
"वितर्कः स्यादूहनं परामर्शो विमर्शनम् । अध्याहारस्तर्क ऊहोऽथ साध्यमनुकूलनम् ॥"
इति हेमचन्द्रः ॥
( विमृश्यतेऽनेनेति । करणे ल्युट् । ज्ञानम् । यथा, भागवते । ६ । १ । ११ ।
"कर्म्मणा कर्म्मनिर्हारो न ह्यात्यन्तिक इष्यते । अविद्वदधिकारित्वात् प्रायश्चित्तं विमर्शनम् ॥")
विम(र्शो)र्षः, पुं, (वि + मृ(शृ)ष + घञ् ।) विचा-रणा । इति जटाधरः ॥ ( यथा, कथासरित्-सागरे । २० । १२४ ।
"प्रत्ययः कीदृशस्तात विम(र्शो)र्षे विदुषा-मपि ॥")
विमलं, क्ली, ( विगतो मलो यस्मात् । ) तारहेम-द्वयाभम् । तदुपरत्नविशेषः । तत्पर्य्यायः । निर्म्मलम् २ स्वच्छम् ३ अमलम् ४ स्वच्छधातु-कम् ५ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । त्वग्दोषव्रणनाशित्वम् । रसवीर्य्यादौ तुल्य-त्वम् । वेधे भिन्नवीर्य्यकत्वञ्च । इति राज-निर्घण्टः ॥ ( तथास्य शोधनमारणविधिः ।
"शृङ्गारनालतैलेषु मोहुष्णे करणी रसे । कौलत्थे कोद्रवक्वाथे भावितं विमलं तथा ॥ टङ्कः शूरणकन्दस्थं स्वेदयेद्रक्तशिग्रुभिः । आरण्यकक्वैर्वापि तैलवर्ग्गैःसमन्वितम् ॥ पुटत्रयं प्रदातव्यं ततस्तु शोधितं भवेत् । जम्बीरस्य रसे क्षिप्तो मेषशृङ्गीरसेन वा । रम्भातोयेन वा माच्यं यत्नं विमलशुद्धये ॥"
इति विमलशुद्धिः ॥ इति वैद्यकरसेन्द्रसार-संग्रहे जारणमारणाधिकारे ॥)
विमलः, त्रि, (विगतो मलो यस्मात् ।) निर्म्मलम् । तत्पर्य्यायः । वीध्रम् २ । इत्यमरः ॥ प्रसन्नम् ३ । इति शब्दरत्नावली ॥ ( यथा, रामायणे । २ । ४८ । १४ ।

"प्रसविष्यन्ति तोयानि विमलानि महीधराः ।
विदग्धैवन्नो विविधान् भूमिजाताः प्रतिनिर्द-
रान् ॥")

न्यायः । इति च शब्दरत्नावली ॥ (यथा, माघे ।
८ । ६६ ।

"अभिषिञ्चति भर्त्तरि भर्त्त्वं विमलाः
परलोकमभ्युपगते विविशुः ॥")

विमलः, पुं, (विगतो मलः पापं यस्मात् ।) अर्हन् ।
इति हेमचन्द्रः ॥ (सुद्युम्नपुत्रः । यथा, भाग-
वते । ९ । १ । ४१ ।

"तस्योत्कलो गयो राजन् विमलश्च त्रयः सुताः ॥")

विमलदानं, क्ली, (विमलं विशुद्धं दानम् ।) निष्क-
नैमित्तिककाम्यदानम् । ईश्वरप्रीत्यर्थदानञ्च ।
यथा,—

"नित्यं नैमित्तिकं काम्यं विमलं दानमीरितम् ।
अहन्यहनि यत्किञ्चिद्दीयतेऽनुपकारिणे ।
अनुद्दिश्य फलं तत् स्यात् ब्राह्मणाय तु नित्य-
कम् ॥
यत्तु पापापशान्त्यै च दीयते विदुषां करे ।
नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥
अपत्यविजयैश्वर्य्यस्वर्गार्थं यत् प्रदीयते ।
दानं तत् काम्यमाख्यातमृषिभिर्धर्म्मचिन्तकैः ॥
चेतसा सत्त्वयुक्तेन दानं तद्विमलं स्मृतम् ॥"

इति गारुडे ५१ अध्यायः ॥

विमलमणिः, पुं, (विमलः स्वच्छो मणिः ।)
स्फटिकः । इति राजनिर्घण्टः ॥

विमला, स्त्री, (विमल + टाप् ।) सप्तला ।
इत्यमरः ॥ चामरकषा इति भाषा ॥ (अस्याः
पर्य्यायो यथा,—
"सातला सप्तला सारा विमला विदुला च सा ।
तथा निर्म्मदिता भूरिफेना चर्म्मकषेत्यपि ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
भूमिभेदः । इति मेदिनी । ले, १३१ ॥ देवी-
भेदः । यथा,—
"पद्माक्षविमला कार्य्या मुक्ताहारेन्दुवर्च्चसा ।
मुक्तामालाधारी च कमण्डलुकरा वरा ॥
नावासनसमारूढ़ा श्वेतमाल्याम्बरप्रिया ।
हरिचन्दनलेपाढ्या कर्पूरमदचर्च्चिता ।
सितपङ्कजशोभेन हस्तागुरूं प्रपश्यन्ती ॥"
इति देवीपुराणे संवत्सरदेवताप्रतिमाविधि-
निर्माणविधिः ॥ * ॥ अन्यच्च ।
"पूजयेत् कर्णिकामध्ये वासुदेवन्तु नायकम् ।
विमला नायिका तस्य वासुदेवस्य कीर्त्तिता ॥"
इति कालिकापुराणे ८८ अध्यायः ॥ * ॥
अपरञ्च ।
"उत्कले नाभिदेशश्च विरजाक्षेत्र उच्यते ।
विमला सा महादेवी जगन्नाथस्तु भैरवः ॥"
इति तन्त्रचूड़ामणौ ५१ पीठनिर्णयः ॥
(यथा च देवीभागवते । ७ । ३० । ६४ ।
"गयायां मङ्गला प्रोक्ता विमला पुरुषोत्तमे ॥")

विमलात्मकः, त्रि, (विमलो निर्म्मल आत्मा यस्य ।)
निर्म्मलः । इत्यमरटीकायां रायमुकुटः ॥

विमलाद्रिः, पुं, (विमलः अद्रिः ।) शत्रुञ्जय-
पर्व्वतः । इति हेमचन्द्रः ॥

विमलार्थकः, त्रि, निर्म्मलः । इत्यमरटीकायां
रायमुकुटः ॥

विमांसं, क्ली, (विरुद्धं मांसम् ।) अशुद्धमांसम् ।
तत्तु कुक्कुरादिमांसम् । इति केचित् ॥

विमाता, [ऋ] स्त्री, (विरुद्धा माता ।) मातृ-
सपत्नी । सतमा इति भाषा । सा कनीयस्यपि
नमस्या । यथा, स्मृतिः ।
"मातुः पितुः कनीयांसं न नमेद्वयसाधिकः ।
नमस्कुर्य्यात् गुरोः पत्नीं भ्रातृजायां विमा-
तरम् ॥"
स्मृत्यर्थसारे ।
"स्त्रियो नमस्या वृद्धाश्च वयसा पत्नुरेव ताः ॥"
अतः पत्नुर्वयसा ताः स्त्रियो वृद्धा अतः कनिष्ठा
अपि नमस्याः । इति मलमासतत्त्वम् ॥ * ॥
विमातृणोऽपि पितामहधनविभाग-
कर्त्तृत्वम् । यथा बृहस्पतिः ।
"पित्रोरभावे भ्रातॄणां विभागः संप्रदर्शितः ।
मातुर्निवृत्ते रजसि जीवतोरपि शस्यते ॥"
अत्र मातृपदं विमातृपरमपि पुत्रान्तरोत्पत्ति-
सम्भावनानौच्यात् । इति दायतत्त्वम् ॥ * ॥
अस्या अंशप्रतित्वं यथा । जीवद्भ्रातृभिर्विभागे
क्रियमाणे मात्रे पुत्रसमांशो दातव्यः । समांश-
हारिणी माता इति वचनान्मातृपदस्य जननी-
परत्वात् न सपत्नीमातृपरत्वमपि । सत्त्वश्रुतस्य
मुख्यगौणत्वानुपपत्तेः । इति दायभागः ॥

विमातृजः, पुं, (विमातुर्जायते इति । विमातृ +
जन + डः ।) मातृसपत्नीपुत्रः । तत्पर्य्यायः ।
वैमात्रेयः २ । इत्यमरः ॥ वैमात्रः ३ । इति
जटाधरः ॥

विमानः, पुं क्ली, (विगतं मानमुपमा यस्य ।)
देवरथः । तत्पर्य्यायः । व्योमयानम् २ । इत्य-
मरः ॥ (यथा, कुमारसम्भवे । २ । ४५ ।
"भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात् पथि ॥")
सार्व्वभौमगृहम् । (सप्तभूमिगृहम् । यथा,
रामायणे । १ । ५ । १६ ।
"सर्व्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥"
"विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि ॥"
इति सद्रीकाण्डतन्त्रम्बद्धुः ॥)
घोटकः । यानमात्रम् । इति मेदिनी । ने,
१२२ ॥ (त्रि, परिच्छेदकम् । यथा, ऋग्वेदे ।
२ । ४० । ३ ।
"सोमापूषणा रजसो विमानं
सप्तचक्रं रथमविश्वमिन्वम् ॥"
"विमानं परिच्छेदकं सर्व्वमानमित्यर्थः ।" इति
तद्भाष्ये सायणः ॥ साधनम् । यथा, तत्रैव ।
३ । ३ । ४ ।
"पिता यज्ञानामसुरो विपश्चितां
विमानमग्निर्वयुनञ्च वाघताम् ॥")
"विमानं विमीयतेऽनेन फलमिति विमानं
यज्ञादिकर्म्मसाधनम् ।" इति तद्भाष्ये सायणः ॥
विगतो मानो यस्येति विग्रहे । अपमानः ।
यथा, भागवते । ५ । १३ । १० ।
"क्वचित्क्वचित् क्षुद्ररसान् विचिन्वं-
स्तन्मक्षिकाभिर्व्यथितो विमानः ।
तत्राति कृच्छ्रं प्रति लब्धमानो
बलाद्विलुप्यन्त्यथ तं ततोऽन्ये ॥")

विमार्गः, पुं, विपूर्व्वमृजधातोर्घञ्प्रत्ययेन निष्पन्नः ॥
सम्मार्ज्जनी । (विरुद्धो मार्गः ।) कुपथः ।
(यथा, शाकुन्तले ५ अङ्के ।
"नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ॥")

विमुक्तः, त्रि, (वि + मुच् + क्तः ।) विशेषेण मुक्तः ।
यथा,—
"येऽन्येऽरविन्दाक्ष विमुक्तमानिन-
स्त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः
पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥"
इति श्रीभागवते १० स्कन्धे १४ अध्यायः ॥
त्यक्तः । (यथा, महाभारते । ७ । २८ । ३५ ।
"विमुक्तं परमास्त्रेण जहि पार्थं महासुरम् ।
वैरिणं युधि दुर्द्धर्षं भगदत्तं सुरद्विषम् ॥")
पुं, माधवी । तत्पर्य्यायो यथा,—
"माधवी स्यात्तु वासन्ती पुण्ड्रको मण्डकोऽपि च ।
अतिमुक्तो विमुक्तश्च कामुको भ्रमरोत्सवः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमभागे ॥)

विमुक्तिः, स्त्री, (वि + मुच् + क्तिन् ।) विमोचनम् ।
मोक्षः । यथा, प्रायश्चित्ततत्त्वे ।
"पितृवंशमस्ते दिवि ये च मूर्त्ताः
स्वधाभुजः काम्यफलाभिसन्धौ ।
प्रदानशक्ताः सकलेप्सितानां
विमुक्तिदा येऽनभिसंहितेषु ॥"

विमुखः, त्रि, (विरुद्धं प्रतिकूलं मुखं यस्य ।)
बहिर्मुखः । विरतः । यथा,—
"स्वामिन्! कतिपयैरेव हि जनान् मदिसुखान्
कुरु ।
माच गोपय येन स्यात् सृष्टिरेषोत्तरोत्तरा ॥"
इति पाद्मोत्तरखण्डे शिवं प्रति विष्णुवाक्यम् ॥

विमुदः, त्रि, (विगता मुदा सुखभावो यस्य ।)
प्रफुल्लः । इति हेमचन्द्रः ॥ मुदारहितश्च ॥

विमोक्षणं, क्ली, (वि + मोक्ष + ल्युट् ।) विमो-
चनम् । परित्यजनम् । यथा,—
"यं धर्म्मकामार्थविमुक्तिकामा
भजन्त इष्टां गतिमाप्नुवन्ति ।
किञ्चाशिषो रात्यपि देहमव्ययं
करोतु मेऽदभ्रदयो विमोक्षणम् ॥"
इति श्रीभागवते १०।८३ अध्यायः ॥

विमोचनं, क्ली, (वि + मुच् + ल्युट् ।) दूरीकरणम् ।
विमुक्तिः । विपूर्व्वमुचधातोरनट्प्रत्ययेन निष्प-
न्नम् ॥ (यथा, महाभारते । १ । १६० । १३ ।
"अथवाहं करिष्यामि कुलस्यास्य विमोचनम् ।
फलवंश्या भविष्यामि कृत्वा कर्म्म सुदुष्करम् ॥"

सौवीरपतिः। यथा, महाभारते ।३।२६५।१०।
"बिम्बोष्ठस्य सुपक्वा बिम्बा अयुञ्जन्नीतिज्ञिनः।
प्रतिपक्षकलैर्योधैः कर्म्मैः च परिस्पृश्यते॥"
पुं, महादेवः। यथा, महाभारते ।१३।१७।५८।
"विमोचनः सुरगणो हिरण्यकवचोद्भवः॥")
विमोचनं, क्ली, शैथिल्यीकरणम्। विपूर्व्वमुच-धातोरनट्(ल्युट्)प्रत्ययेन निष्पन्नम्॥ (विमोचयतीति। वि+मुच+णिच्+ल्युः। विमोचके, त्रि। यथा, भागवते।११।२४।६।
"ततो विकुर्व्वतो जातो योऽहङ्कारो विमोहनः॥")
विमोहितः, त्रि, (वि+मुह+णिच्+क्तः।) मोहयुक्तः। मोहितः। यथा,—
"तावप्यतिबलोन्मत्तौ महामायाविमोहितौ।
उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केशवम्॥"
इति देवीमाहात्म्यम्॥
बि(वि)म्बं, क्ली, (वी गत्यादिषु+"उल्वादयश्च।" उणा० ४।९५। इति वन् प्रत्ययेन निपातनात् साधुः।) प्रतिबिम्बम्। कमण्डलुः। इति संक्षिप्तसारोणादिवृत्तिः॥ (मूर्त्तिः। यथा, भागवते।३।२।११।
"प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम्।
आदायान्तरधाद् यस्तु स्वबिम्बं लोकलोचनम्॥"
तथाच राजतरङ्गिण्याम्।१।३६६।
"मेघवाहनभूभर्त्तुर्यन्त्रा भिक्षाश्रया क्षितेः।
विहारेऽपि तया बुद्धबिम्बं साधु निवेशितम्॥")
बिम्बिकाफलम्। तेलाकुचा इति भाषा। इति मेदिनी। वे, ७॥ (यथा, कुमारे।१।४७।
"उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि॥")
अस्य पर्य्यायः। तुण्डिकेरी २ रक्तफला ३ बिम्बिका ४ पीलुपर्णी ५। इत्यमरः॥ ओष्ठी ६ बिम्बी ७। इति रत्नमाला॥ बिम्बा ८ बिम्बकम् ९ बिम्बजा १०। इति शब्दरत्नावली॥ अस्य गुणाः। पित्तकफच्छर्द्दिवातसृक्कासकुष्ठनाशित्वम्। इति राजवल्लभः॥ अपि च।
"बिम्बी रक्तफला तुण्डी तुण्डिकेरी च बिम्बिका।
ओष्ठोपमफला प्रोक्ता पीलुपर्णी च कथ्यते॥
बिम्बीफलं स्वादु शीतं गुरु पित्तास्रवातजित्।
स्तम्भनं लेखनं रुच्यं विबन्धाध्मानकारकम्॥"
इति भावप्रकाशः॥
बि(वि)म्बः, पुं क्ली, (वी+"उल्वादयश्च।" उणा० ४।९५। इति वन्प्रत्ययेन साधुः।) सूर्य्यचन्द्रमण्डलम्। इत्यमरः॥ (यथा, प्रबोधचन्द्रोदये ६ अङ्के।
"अन्यो न जन्मो न भयावहः पुमान्
भवान् न देवात् पुरुषोत्तमात् परः।
स एव भिन्नस्त्वमनादिमायया
द्विधेव बिम्बं सलिले विवस्वतः॥"
तथाच मार्कण्डेये।८४।११।
"ईषत्सहासममलं परिपूर्णचन्द्र-
बिम्बानुकारि कनकोत्तमकान्तिकान्तम्॥"
सकलमात्रेऽपि। यथा, ऋतुसंहारे।१।४।
"नितम्बबिम्बैः सदुकूलमेखलैः
स्तनैः सहाराभरणैः सचन्दनैः।
शिरोरुहैः स्नानकषायवासितैः
स्त्रियो निदाघं शमयन्ति कामिनाम्॥"
तथाच कुमारे।७।३२।
"आलोकमार्गं सहसा व्रजन्त्या
कयाचिदुद्वेष्टनवान्तमाल्यः।
बद्धुं न सम्भावित एव तावत्
करेण रुद्धोऽपि च केशपाशः॥"
वा "आत्माञ्जनमात्मीयं च शोभमान-
मादर्शबिम्बे स्तिमितायताक्षी।
हरोपयाने त्वरिता बभूव
स्त्रीणां प्रियालोकफलो हि वेशः॥")
बि(वि)म्बः, पुं, (वी+वन्प्रत्ययेन साधुः।) कृकलासः। इति मेदिनी। वे, ७॥
बि(वि)म्बकं, क्ली, (बिम्ब+स्वार्थे कन्।) चन्द्रसूर्य्यमण्डलम्। बिम्बिकाफलम्। इति शब्दरत्नावली॥ (सचकः। साँच इति भाषा। यथा, नैषधे।२२।४७।
"विधिर्व्विधत्ते विधिना वधूनां
किमाननं काञ्चनसञ्चकेन॥"
अत्र। "काञ्चनस्य सञ्चकेन बिम्बकेन॥" इति नारायणटीका॥)
बि(वि)म्बजा, स्त्री, (बिम्बं फलं जायतेऽस्यामिति। जन्+डः।) बिम्बिका। इति शब्दरत्नावली॥
बि(वि)म्बटः पुं, सर्षपः। इति शब्दचन्द्रिका॥
बि(वि)म्बा, स्त्री, (बिम्बं फलमस्त्यस्यामिति। बिम्ब+अच्। टाप्।) बिम्बिका। इति शब्दरत्नावली॥
बि(वि)म्बिका, स्त्री, बिम्बम्। इत्यमरः॥ (यथा,—
"तुण्डी रक्तफला बिम्बी तुण्डिकेरी च बिम्बिका॥"
इति वैद्यकरत्नमालायाम्॥)
चन्द्रसूर्य्यमण्डलम्। इति शब्दरत्नावली॥
बि(वि)म्बी, स्त्री, (बिम्ब+गौरादित्वात् ङीष्।) बिम्बिका। इति शब्दरत्नावली॥ (यथा,—
"काकादनीं चित्रफलां बिम्बीं गुञ्जाञ्च धारयेत्॥"
इति सुश्रुते उत्तरतन्त्रे ३९ अध्यायः॥)
बि(वि)म्बुः, स्त्री, गुवाकः। इति केचित्॥
बि(वि)म्बोष्ठः } त्रि, (बिम्ब+ओष्ठः। "ओत्वो-
बि(वि)म्बौष्ठः } ष्ठयोः समासे वा।" इति पाणिनीयोऽकारलोपः।) बिम्ब इव ओष्ठौ यस्य। इति मुग्धबोधव्याकरणम्॥
वियच्चारी, [न्] पुं, (वियति आकाशे चरतीति। चर+णिनिः।) चिल्लः। इति शब्दमाला॥ आकाशगामिनि, त्रि॥
वियत्, क्ली, (वियच्छति न विरमतीति। वि+यम+"अन्येभ्योऽपि दृश्यते।" ३।२।१७८। इति क्विप्। क्वौ गमादीनामिति मलोपे तुक्।) आकाशम्। इत्यमरः॥ (यथा, भागवते। ३।८।११।
"तस्मिन् स्वमाभिरुरुः सरोज-
मालाघनाभः कमलं वियच्च।
ददर्श देवो जगतो विधाता
नातः परं लोकविसर्गदृष्टिः॥"
द्यावापृथिव्यौ। अत्र द्विवचनस्य प्रयोगः स्यात्। यथा, तैत्तिरीयब्राह्मणे।१।१।३।२।
"द्यावापृथिवी सहास्ताम्। ते वियती अब्रूताम्॥"
तथाच शतपथब्राह्मणे।७।१।२।२३।
"तयोर्वियत्योर्योऽन्तरेणाकाश आसीत् तदन्तरिक्षमभवत्॥" ७॥ वि+या+शतृ। गमनशीले, त्रि। यथा, भागवते।७।६।१४।
"कुटुम्बपोषाय वियन्निजायु-
र्न बुध्यतेऽर्थं विहतं प्रमत्तः॥"
तथा, तत्रैव।८।२१।३।
"वियद्वितस्य ददतो जगत् जगत् त्रयं वपुः।
निष्कस्य धीरस्य नकुटुम्बस्य चोदतः।
अलौकिकस्य वितरत्यमिरस्य किम्॥"
"वियद्वितस्य वियतो गगनादिव उद्यमं दिवैव देवादुपस्थितं वित्तं भोग्यं यस्य। यद्वा वियत् अयं प्राप्तवर्जितं भोग्यं यस्य॥" इति तट्टीकायां श्रीधरस्वामी॥)
वियद्गङ्गा, स्त्री, (वियतो गङ्गा।) स्वर्गङ्गा। इत्यमरः॥
वियद्भूतिः, स्त्री, (वियतो भूतिरिवेव।) अन्धकारः। इति त्रिकाण्डशेषः॥
वियन्मणिः, पुं, (वियतो मणिः।) सूर्य्यः। इति हारावली॥
वियमः, पुं, (वि+यम+"यमः समुपनिविषु च।" ३।३।६३। इत्यप्।) संयमः। इत्यमरः॥ दुःखम्। इति स्वामी॥
वियातः, त्रि, (विगतं निन्दां यातः प्राप्तः।) निर्लज्जः। इत्यमरः॥
वियामः, पुं, (वि+यम+घञ्।) संयमः। इत्यमरः॥
वियुक्तः, त्रि, वियोगविशिष्टः। विपूर्व्वयुजधातोः क्तप्रत्ययेन निष्पन्नः॥ (यथा, देवीभागवते।२।८।१३।
"किं करोमि क गच्छामि क्वास्ते मे प्राणवल्लभा।
न वै जीवितुमिच्छामि वियुक्तः प्रियया तया॥")
वियोगः, पुं, (वि+युज+घञ्।) विच्छेदः। तत्पर्य्यायः। विप्रलम्भः२ विप्रयोगः३ विरहः४। इति हेमचन्द्रः॥ (यथा, भागवते।६।१३।६।
"यस्य योगं न वाञ्छन्ति वियोगभयकातराः।
भजन्ति चरणाम्भोजं मुनयो हरिमेधसः॥")
वियोगभाक्, [ज्] त्रि, (वियोगं भजते इति। भज+ण्वि।) विच्छेदयुक्तः। यथा, नैषधे।
"वियोगभाजोऽपि नृपस्य पश्यता
तदेव साक्षादमृतांशुमाननम्।
पिकेन रोषारुणचक्षुषा मुहुः
कुहूरुतायूयत चन्द्रवैरिणी॥"
वियोगी, [न्] पुं, (वियोगोऽस्यास्तीति। वियोग+इनिः।) चक्रवाकः। इति शब्दचन्द्रिका॥ वियोगयुक्ते, त्रि॥ (यथा, मार्कण्डेये।२७।२५।
"ताः शोच्या या वियोगिन्यो न शोच्या या मृताः स्त्रियः।
भर्तृवियोगव्यसनया पातुभूतः सतस्त्वया॥")

वियोजितः, त्रि, वियोगं प्रापितः । विपूर्व्वकयुज-धातोः णिजन्तात् क्तप्रत्ययेन निष्पन्नः ॥

विरक्तः, त्रि, ( वि + रन्ज + क्तः । ) विरागयुक्तः । अननुरक्तः । यथा,—
"ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः ।
सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ॥"
इति श्रीभागवते ११ स्कन्धे १८ अध्यायः ॥
( यथा च ।
"त्वयि प्रसन्ने मम किं गुणेन
त्वय्यप्रसन्ने मम किं गुणेन ।
रक्ते विरक्ते च वरे वधूनां
निरर्थकः कुङ्कुमराग एषः ॥"
इत्युद्भटः ॥ )

विरक्ता, स्त्री, दुर्भगा । इति त्रिकाण्डशेषः ॥ अननुकूला । यथा, नीतिशतके । २ ।
"यां चिन्तयामि सततं मयि सा विरक्ता
साप्यन्यमिच्छति जनं स जनोऽन्यरक्तः ।
अस्मत्कृतेऽपि परितुष्यति काचिदन्या
धिक् ताञ्च तञ्च मदनञ्च इमाञ्च माञ्च ॥"

विरक्तिः, स्त्री, (वि + रन्ज + क्तिन् ।) विरागः । यथा,—
"देहो गुणमयो विरक्तिविवेकहेतु-
र्बिभ्रत् स्थ स्वनिगमं सततात्मदर्शम् ।
तत्त्वान्येन विमृशामि यथा तथापि
पारक्यमित्यवसितो विचराम्यसङ्गः ॥"
इति श्रीभागवते । ११ । ९ । २५ ॥

विरङ्गं, क्ली, कङ्कुष्ठम् । इति राजनिर्घण्टः ॥

विरचितः, त्रि, ( वि + रच + क्तः । ) विशेषेण रचितः । निर्म्मितः । यथा,—
"इह श्रीहनुमता विरचिते श्रीमन्महानाटके वीरश्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः ।"
इत्यादि महानाटकम् ॥

विरजस्तमाः, [स्] पुं, सत्त्वगुणविशिष्टः । तत्-पर्य्यायः । द्वयातिगः २ । इत्यमरः ।२।७।४५॥
"विगते रजस्तमसी येषां ते रजस्तमोगुणशून्याः सत्त्वैकनिष्ठाः साक्षात्कृतब्रह्माणो जीवन्मुक्ता आशास्यो द्वयातिगा उच्यन्ते । द्वयं द्वैतं अति-क्रम्य गच्छति इति ङः ।" इति भरतः ॥

विरजाः, [स्] स्त्री, ( विनिवृत्तं रजः शोणितं यस्याः । ) विगतार्त्तवा । इति जटाधरः ॥ ( नास्ति रजो धूलिर्यत्र । धूलिरहिते, त्रि । यथा, महाभारते । १ । ६३ । १५ ।
"सर्व्वैरिहाग्नौ गन्तव्यं सह स्वर्गजितो वयम् ।
एष नो विरजाः पन्था दृश्यते देववाहनः ॥"
निर्म्मलः । यथा, महाभारते । २ । ७ । ५ ।
"विरजोऽम्बरवित्रमाल्यो ह्रीकीर्त्तिद्युतिभिः सह ।"
पुं, नागविशेषः । यथा, महाभारते ।१।३५।१४।
"विरजाश्च सुबाहुश्च शालिपिण्डश्च वीर्य्य-वान् ।")

विरजा, स्त्री, कपित्थानीवृक्षः । इति रत्नमाला ॥ दूर्व्वा । इति हारावली ॥ ययातिमाता । यथा,
उत्पन्नाः पितृकन्यायां विरजायां महाबलाः ।
यतिर्य्ययातिः संयातिरायातिः पञ्चमो भुवः ।
तेषां ययातिः पञ्चानां महाबलपराक्रमाः ॥"
इति कौर्म्मे २० अध्यायः ॥
श्रीकृष्णप्रेयसी । सा राधाभयात्त्यक्तप्राणा सती सरिद्रूपाभवत् । तस्याः सप्त पुत्राः सप्त समुद्रा अभवन् । यथा,—
"एकदा राधिकासार्द्धं गोलोके श्रीहरिः स्वयम् ।
विजहार महारण्ये निर्ज्जने रासमण्डले ॥
ज्ञात्वा विहारं श्रीकृष्णस्तामदृष्ट्वा विहाय च ।
गोपिकां विरजामन्यां शृङ्गारार्थं जगाम ह ॥
दृष्ट्वा च श्रीहरिस्तूर्णं विजहार तया सह ।
तयाथ तं श्रीहरिञ्च रत्नमण्डपसंस्थितम् ॥
दृष्ट्वा च राधिकाभ्याश्च चकृत्साच निवेदनम् ।
जगाम सहसा देवी तं रत्नमण्डपं मुने ॥
द्वारे नियुक्तं ददर्श द्वारपालं मनोहरम् ।
तमुवाच रुषा देवी रक्तपङ्कजलोचना ॥
दूरं गच्छ गच्छ दूरं रतिलम्पटकिङ्कर ! ।
कीदृशीं मत्परां कान्तां द्रक्ष्यामि तत्प्रभो-रहम् ॥
श्रुत्वा कोलाहलं शब्दं गोपिकानां हरिः स्वयम् ।
ज्ञात्वा च कोपिनीं राधामन्तर्धानं चकार ह ॥
विरजा राधिकाशब्दात् अन्तर्धानं हरेरपि ।
दृष्ट्वा राधाभयार्त्ता सा जहौ प्राणांश्च योगतः ॥
सद्यस्तत्र सरिद्रूपं तच्छरीरं बभूव ह ।
धामञ्च वर्त्तुलाकारं तया गोलोकमेव च ।
कोटियोजनविस्तीर्णं प्रस्थेऽतिनिम्नमेव च ॥
दैर्घ्ये दशगुणं चारु नानारत्नाकरं परम् ।
राधा रतिगृहं गत्वा न ददर्श हरिं मुने ॥
विरजाञ्च सरिद्रूपां दृष्ट्वा गेहं जगाम सा ।
श्रीकृष्णो विरजां दृष्ट्वा सरिद्रूपां प्रियां सतीम् ॥
उच्चै रुरोद विरजातीरे नीरमनोहरे ।
त्वया विनाहं सुभगे कथं जीवामि सुन्दरि ! ॥
नद्यधिष्ठातृदेवी त्वं भव मूर्त्तिमती सति ।
पुरातनं शरीरं ते सरिद्रूपमभूत् सति ॥
जलादुत्थाय चागच्छ विधाय नूतनां तनुम् ।
आजगाम हरेरग्रं साक्षाद्राधेव सुन्दरी ॥
पद्मास्यं प्राणनाथञ्च पश्यन्ती वक्रचक्षुषा ।
ताञ्च रूपवतीं दृष्ट्वा प्रेमाकोत्रिका जगत्पतिः ॥
चकारालिङ्गनं तूर्णं चुचुम्ब च मुहुर्मुहुः ।
नानाप्रकारशृङ्गारविपरीतादिकं प्रभुः ॥
रहसि प्रेयसीं प्राप्य चकार च पुनः पुनः ।
विरजा सा रजोयुक्ता धृत्वा वीर्य्यममोघकम् ॥
सद्यो बभूव तत्रैव धन्या गर्भवती सती ।
सप्तौ तत्र सुताश्चीना सार्द्धं पुत्रैश्च सप्तभिः ॥
एकदा हरिणा सार्द्धं वृन्दारण्ये सुनिर्ज्जने ।
विजहार पुनः साध्वी शृङ्गारासक्तमानसा ॥
एतस्मिन्नन्तरे तत्र मातुः क्रोडं जगाम ह ।
कनिष्ठपुत्रस्तस्याश्च भ्रातृभिः पीडितो भिया ॥
भीतं स्वतनयं दृष्ट्वा तत्याज तां कृपानिधिः ।
क्रोडे चकार बालं सा कृष्णो राधागृहं ययौ ॥
प्रबोध्य बालं सा साध्वी न ददर्शान्तिकं प्रियम् ।
विललाप भृशं तत्र शृङ्गारातृप्तमानसा ॥
शशाप स्वसुतं कोपात् लवणोदो भविष्यसि ।
शशाप सर्व्वान् बालांश्च यान्तु मह्यां रसातलम् ॥
श्रुत्वा विवरणं सर्व्वे प्रजग्मुर्धरणीतलम् ।
सप्तद्वीपे समुद्राश्च सप्त तस्थुर्विभागशः ॥
कनिष्ठाद्दशगुणपर्य्यन्तं द्विगुणं द्विगुणं मुने ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलार्णवाः ।
एतेषाञ्च जलं पृथ्व्यां प्रलयान्तेऽपि भविष्यति ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४।३ अध्यायौ ॥
जगन्नाथपीठम् । यथा,—
"उत्कले नाभिदेशश्च विरजाक्षेत्रमुच्यते ।
विमला सा महादेवी जगन्नाथस्तु भैरवः ॥"
इति तन्त्रचूडामणौ ५१ पीठनिर्णयः ॥ ॥ तत्र मुण्डनोपवासौ न कर्त्तव्यौ । यथा । स्कान्दे ।
"मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं विधिः ।
वर्ज्जयित्वा गयां गङ्गां विशालां विरजां तथा ॥"
इति प्रायश्चित्ततत्त्वम् ॥

विरञ्चः, पुं, ब्रह्मा । इति हेमचन्द्रः ॥

विरञ्चिः, पुं, ब्रह्मा । इति हेमचन्द्रः ॥

विरणं, क्ली, वीरणमूलम् । इति शब्दरत्नावली ॥

विरतः, त्रि, ( वि + रम + क्तः । ) निवृत्तः । यथा—
"आत्मविद्यो मुनेर्ज्ञानी भ्रातुर्ध्यानी निजैर्भवात् ।
विरतोऽक्तर्हितो दुष्टाल्लोकानामेक तारिणः ॥"
इति मुग्धबोधव्याकरणम् ॥

विरतिः, स्त्री, ( वि + रम + क्तिन् । ) निवृत्तिः । तत्पर्य्यायः । आरतिः २ अवरतिः ३ उपरामः ४ । इत्यमरः ॥ उपरमः ५ विरामः ६ । इति भरतः ॥ ( यथा, कथासरित्सागरे । १०१ । ६ ।
"तच्छ्राव दुःखदीर्घायां गतायां विरतिं निशि ॥")

विरलं, क्ली, दधि । इति राजनिर्घण्टः ॥

विरलः, त्रि, अवकाशः । फाक् इति भाषा । तत्पर्य्यायः । पेलवः २ तनुः ३ । इत्यमरः ॥ ( यथा, बृहत्कथायाम् । ६७ । ९ ।
"शूर्पाकारविरूक्षपाण्डुरनखौ वक्रौ शिरासन्ततौ
संशुष्कौ विरलाङ्गुली च चरणौ दारिद्र्यदुःखप्रदौ ॥" )

विरलद्रवा, स्त्री, (विरलो निर्म्मलो द्रवो यस्याः ।) सचणयवागूः । यथा,—
"यवागूरुष्णिका आश्रा सैव तु तनसिक्थिका ।
विलेपी तरला च स्यात् सा सच्छा विरलद्रवा ॥"
इति जटाधरः ॥

विरहः, पुं, ( वि + रह त्यागे + घः । ) विच्छेदः । तत्पर्य्यायः । विप्रलम्भः २ विप्रयोगः ३ वियोगः ४ । इति हेमचन्द्रः ॥ ॥ ( यथा, साहित्यदर्पणे । १० ।
"सङ्गमविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्याः ।

पश्यति सैव तथैषा त्रिभुवनमपि तन्मयं विरहे ।"
भर्तृविरहस्तु स्त्रीणां दोषाय भवति । यथा,
मनौ । ९ । १३ ।
"पानं दुर्ज्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगेहे वासश्च नारीणां दूषणानि षट् ॥")
विरहे वर्णनीयानि यथा । तापः । निश्वासः ।
चिन्ता । मौनम् । कृशाङ्गता । वस्तुरजन्यां-
रात्रिदैर्घ्यम् । जागरणम् । शीतले उष्णता-
ज्ञानम् । इति कविकल्पलता ॥

विरहिणी, स्त्री, (विरहोऽस्या अस्तीति । विरह
+इनि+स्त्रियां ङीप् ।) विच्छेदविशिष्टा
नारी । यथा,—
"इति पुंसो विरहिणी प्रियः स्त्रीविरही
चिरम् ।
द्वयोर्वियोग संप्राप्तौ किं बभूव द्वयोः सुखम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४६ अध्यायः ॥
भृतिः । इति शब्दमाला ॥

विरहितः, त्रि, (वि+रह+क्तः ।) त्यक्तः ।
विहीनः । यथा,—
"अभिभूतस्तावगतं व्यक्तस्तु स्यात् समुज्झितम् ।
हीनं विरहितं धूतमुत्सृष्टविधुते अपि ।"
इति जटाधरः ॥
(यथा, साहित्यदर्पणे । १० ।
"इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः
सुधाधाराधारश्चिरपरिणतं बिम्बमधरः ।
इमे नेत्रे रात्रिन्दिवमधिकशोभे कुवलये
तनुर्लावण्यानां जलधिरवगाहे सुखतरः ॥")

विरही, [न्] पुं, (विरहोऽस्यास्तीति । इनिः ।)
विरहविशिष्टः । वियोगी । यथा,—
"विहरति हरिरिह सरसवसन्ते ।
नृत्यति युवतिजनेन समं सखि विरहिजनस्य
दुरन्ते ॥"
इति जयदेवः ॥

विरागः, पुं, (वि+रञ्ज+घञ् ।) अननुरागः ।
रागशून्यः । यथा,—
"विषयेष्वतिसंरागो मानसो मल उच्यते ।
तेष्वेव हि विरागो हि नैर्म्मल्यं समुदाहृतम् ॥"
इति प्रायश्चित्ततत्त्वम् ॥
(त्रि, विविधवर्णविशिष्टः । यथा, महाभारते ।
२ । २६ । २५ ।
"बलाद्गृहीत्वा माल्यानि मालाकारान्महा-
बलाः ।
विरागवसनाः सर्व्वे स्रग्विणो मृष्टकुण्डलाः ॥"
विगतो रागो विषयवासना यस्मात्सः । वीत-
रागः । यथा, भागवते । ३ । १५ । ४७ ।
"यत्तेऽनुतापविदितैर्दृढभक्तियोगै-
रुद्ग्रन्थयो हृदि विदुर्मुनयो विरागाः ॥")

विरागार्हः, त्रि, (विरागं अर्हतीति । अर्ह+
अच् ।) विरागयोग्यः । तत्पर्य्यायः । वैर-
ङ्गिकः २ । इति हेमचन्द्रः ॥

विराजः, पुं, (विशेषेण राजते इति । वि+राज
+अच् ।) विराट् । यथा,—
"इन्द्राग्नी वदनात् यस्य यत्रायौ मरुतस्तथा ।
ओषध्यो रोमसम्भूता विराजस्त्वं नमोऽस्तु ते ॥"
इति वामने ८३ अध्यायः ॥

विराजमानः, त्रि, (वि+राज+शानच् ।) दीप्ति-
विशिष्टः । यथा,—
"जटाकटाहसम्भ्रमभ्रमन्निलिम्पनिर्झरी
विलोलवीचिवल्लरीविराजमानमूर्द्धनि ।
धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके
किशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम ॥"
इति काशीखण्डे रावणकृतशिवताण्डवस्तोत्रम् ॥

विराजितः, त्रि, (वि+राज+क्तः ।) शोभितः ।
दीप्तः । यथा,—
"अतीव निर्म्मलं सारं सर्व्वभारविनिर्म्मितम् ।
परिष्कृतञ्च माणिक्यहीरकैश्च विराजितम् ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे १० अध्यायः ॥

विराट्, [ज्] पुं, (विशेषेण राजते इति । राज
दीप्तौ+क्विप् ।) क्षत्रियः । इत्यमरः ॥ स्थूल-
शरीरसमष्ट्युपहितचैतन्यम् । इति वेदान्त-
सारः ॥ * ॥ (ब्रह्मणो विराड्मूर्त्तिवर्णनं यथा,
शङ्करविजये ६ प्रकरणे । "बृहन्मूर्त्तिर्विराट्
चतुर्द्दशलोकात्मकः । तस्य ब्रह्माण्डकर्परपर्य्यन्त-
माकाशः शिरः, चन्द्रसूर्य्यौ नेत्रे, प्रागादिदिशः
श्रोत्रे, अन्तरीक्षलोको प्राणं, मेरुः पृष्ठवंशः,
शिखरत्रयं मुजकण्ठाः, प्रत्यन्तपर्वताः पृष्ठपार्श्व-
वर्त्तीनि,उपपर्वताः शाखाल्पादीनि,समुद्रा रक्तं,
नद्यो नाड्यः, वृक्षास्त्वाः रोमाणि, भूमिः
कुक्षिः, द्वीपा वलयः, भूरेखा रोमराजिः,
भूमध्यप्रदेशो वस्तिः, शेषः शिश्नं, दिग्दन्ति-
मद्गितितम्बोरुभागः, अतलादिसप्तकं कटि-
पादान्तरालः, कूर्म्मः पादौ इति ॥"*॥) महा-
विराडुत्पत्तिर्यथा,—

श्रीनारायण उवाच ।

"अथ डिम्बो जले तिष्ठन् यावद्वै ब्रह्मणो वयः ।
ततः स काले सहसा द्विधा भूतो बभूव ह ॥
तन्मध्ये शिशुरेकश्च शतकोटिरविप्रभः ।
क्षणं रोरूयमाणश्च स्तनन्धः पीड़ितः क्षुधा ।
पितृमातृपरित्यक्तो जलमध्ये निराश्रयः ।
ब्रह्माण्डसंघनाथो यो ददर्शोर्द्धमनाथवत् ॥
स्थूलात् स्थूलतमः सोऽपि नाम्ना देवो महा-
विराट् ।
परमाणुर्यथा सूक्ष्मात् परः स्थूलात्तथाप्यसौ ॥
तेजसा षोड़शांशो यः कृष्णस्य परमात्मनः ।
आधारोऽसंख्यविश्वानां महान् विष्णुश्च प्राकृतः ।
प्रत्येकं लोमकूपेषु विश्वानि निखिलानि च ।
तस्यापि तेषां संख्याञ्च कृष्णो वक्तुं न हि क्षमः ॥
संख्या चेद्रजसामस्ति विश्वानां न कदाचन ।
ब्रह्मविष्णुशिवादीनां तथा संख्या न विद्यते ॥
प्रतिविश्वेषु सन्त्येव ब्रह्मविष्णुशिवादयः ।
पातालाद्ब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्त्तितम् ॥
तत ऊर्द्ध्वे च वैकुण्ठो ब्रह्माण्डाद्बहिरेव च ।
स च सत्यस्वरूपश्च शश्वन्नारायणो यथा ॥
तत ऊर्द्ध्वे गोलोकः पञ्चाशत्कोटियोजनात् ।
नित्यं सत्यस्वरूपश्च यथा कृष्णस्तथाप्ययम् ॥
सप्तद्वीपमिता पृथ्वी सप्तसागरसंयुता ।
ऊनपञ्चाशदुपद्वीपासंख्यशैलवनान्विता ॥
ऊर्द्ध्वं सप्त स्वर्गाः लोका ब्रह्मलोकसमन्विताः ।
पातालानि च सप्ताधश्चैवं ब्रह्माण्डमेव च ॥
ऊर्द्ध्वं धराया भूर्लोको भुवर्लोकस्ततः परः ।
ततः परश्च स्वर्लोको जनो लोकस्ततः परः ॥
ततः परस्तपोलोकः सत्यलोकस्ततः परः ।
ततः परो ब्रह्मलोकस्तप्तकाञ्चननिर्म्मितः ॥
एवं सर्व्वं कृत्रिमञ्च धराभ्यन्तरमेव च ।
तद्विनाशे विनाशश्च सर्व्वेषामेव नारद ॥
जलबुद्बुदवत् सर्व्वं विश्वसंघमनित्यकम् ।
नित्यौ वैकुण्ठगोलोकौ सत्यौ शश्वदकृत्रिमौ ॥
प्रतिलोमकूपे ब्रह्माण्डं प्रत्येकमस्य निश्चितम् ।
एषां संख्या न जानाति कृष्णोऽन्यस्यापि का
कथा ॥
प्रत्येकं प्रतिब्रह्माण्डे ब्रह्मविष्णुशिवादयः ।
तिस्रः कोट्यः सुराणाञ्च संख्याः सर्व्वत्र पुत्रक ॥
दिगीशाश्चैव दिक्पाला नक्षत्राणि ग्रहादयः ।
भुवि वर्णाश्च चत्वारोऽप्यधो नागाश्चराचराः ॥
अथ काले च स विराट् ऊर्द्ध्वं दृष्ट्वा पुनः पुनः ।
डिम्बान्तरञ्च शून्यञ्च न द्वितीयञ्च कञ्चन ॥
चिन्तामवाप क्षुद्युक्तो रुरोद च पुनः पुनः ।
ज्ञानं प्राप्य तदा दध्यौ कृष्णं परमपूरुषम् ॥
ततो ददर्श तत्रैव ब्रह्मज्योतिः सनातनम् ।
नवीनजलदश्यामं द्विभुजं पीतवाससम् ॥
सस्मितं मुरलीहस्तं भक्तानुग्रहकारकम् ।
जहास बालकस्तुष्टो दृष्ट्वा जनकमीश्वरम् ॥
वरं तस्मै ददौ तुष्टो वरेशः समयोचितम् ।
मत्समो ज्ञानयुक्तश्च क्षुत्पिपासादिवर्ज्जितः ॥
ब्रह्माण्डासंख्यनिलयो भव वत्स लयावधि ।
निष्कामो निर्भयश्चैव सर्व्वेषां वरदो वरः ॥
जराव्याधिरोगशोकपीड़ादिवर्ज्जितो भव ।
इत्युक्त्वा च तत्कर्णे महामन्त्रं षड़क्षरम् ॥
त्रिःकृत्वश्च प्रजजाप वेदाङ्गप्रवरं परम् ।
प्रणवादिचतुर्थ्यन्तं कृष्ण इत्यक्षरद्वयम् ॥
वह्निजायान्तमिष्टञ्च सर्व्वविघ्नहरं परम् ।
मन्त्रं दत्त्वा तदाहारं कल्पयामास स प्रभुः ॥
श्रूयतां तद्ब्रह्मन् श्रुत्वा निबोध कथयामि ते ।
प्रतिविश्वेषु नैवेद्यं ददाति वैष्णवो जनः ॥
तत्षोड़शांशं विषयिणो विष्णोः पञ्चदशस्य वै ।
निर्गुणस्यात्मनश्चैव परिपूर्णतमस्य च ॥
नैवेद्येन च कृष्णस्य नहि किञ्चित् प्रयोजनम् ।
यद्यद्ददाति नैवेद्यं तस्मै देवाय यो जनः ॥
स च खादति तत् सर्व्वं लक्ष्मीदृष्ट्या पुनर्भवेत् ।
तञ्च मन्त्रं वरं दत्त्वा तमुवाच पुनर्व्विभुः ॥
वरमन्यं किमिष्टन्ते तन्मे ब्रूहि ददामि च ।
कृष्णस्य वचनं श्रुत्वा तमुवाच महाविराट् ॥
अदन्नौ बालकस्तत्र वचनं समयोचितम् ॥

श्रीमहाविराडुवाच ।

वरं मे त्वत्पदाम्भोजे भक्तिर्भवतु निश्चला ।
सन्ततं यावदायुर्म्मे क्षणं वा सुचिरं हि वा ॥

सङ्गलियुक्तो यो बालो जीवन्मुक्तश्च सन्ततम् ।
सङ्गलिहीनो मर्त्यश्च जीवन्नपि मृतो हि सः ॥
किञ्चाल्पेन तपसा यज्ञेन पूजनेन च ।
कृष्णभक्तिविहीनस्य मर्त्यस्य जीवनं वृथा ॥
येनात्मना जीवितश्च तमेव नहि मन्यते ।
यावदात्मा शरीरेऽस्ति तावत् स शक्तिसंयुतः ॥
पश्चाद्यान्ति गते तस्मिन् न स्वतन्त्राश्च शक्तयः ।
स च त्वञ्च महाभाग सर्वात्मा प्रकृतेः परः ॥
स्वेच्छामयश्च सर्व्वाद्यो ब्रह्मज्योतिः सनातनः ।
इत्युक्त्वा बालकस्तत्र विरराम च नारद ॥
उवाच कृष्णः प्रत्युक्तिं मधुरां श्रुतिसुन्दरीम् ॥
श्रीकृष्ण उवाच ।
सुचिरं सुस्थिरं तिष्ठ यथाहं त्वं तथा भव ।
ब्रह्मणोऽसंख्यपाते च पातस्ते न भविष्यति ॥
अंशेन प्रतिब्रह्माण्डे त्वञ्च क्षुद्रविराड्भव ।
त्वन्नाभिपद्मे ब्रह्मा च विश्वस्रष्टा भविष्यति ॥
ललाटे ब्रह्मणश्चैव रुद्राश्चैकादशैव तु ।
शिवांशेन भविष्यन्ति सृष्टिसंहारकाय वै ॥
कालाग्निरुद्रस्तेष्वेको विश्वसंहारकारकः ।
पाता विष्णुश्च विषयी क्षुद्रांशेन भविष्यति ॥
मद्भक्तियुक्तः सततं भविष्यसि वरेण मे ।
ध्यानेन कमनीयं मां नित्यं द्रक्ष्यसि निश्चितम् ॥
मातरं कमनीयाञ्च मम वक्षःस्थलस्थिताम् ।
यामि लोकं तिष्ठ वत्सेत्युक्त्वा सोऽन्तरधीयत ॥
गत्वा स्वलोकं ब्रह्माणं शङ्करं स उवाच ह ।
स्रष्टारं स्रष्टुमीशञ्च संहर्त्तारञ्च तत्क्षणम् ॥
श्रीकृष्ण उवाच ।
सृष्टिं स्रष्टुं गच्छ वत्स नाभिपद्मोद्भवो भव ।
महाविराड्लोमकूपे क्षुद्रस्य च विधे शृणु ॥
गच्छ वत्स महादेव ब्रह्मभालोद्भवो भव ।
अंशेन च महाभाग स्वयञ्च सुचिरं तपः ॥
इत्युक्त्वा जगतां नाथो विरराम विधिस्ततः ।
जगाम ब्रह्मा तं नत्वा शिवश्च शिवदायकः ॥
महाविराड्लोमकूपे ब्रह्माण्डे गोलोके जले ।
बभूव च विराट् क्षुद्रो विराडंशेन सांप्रतम् ॥
श्यामो युवा पीतवासाः शयानो जलतल्पके ।
ईषद्धास्यः प्रसन्नास्यो विश्वव्यापी जनार्द्दनः ॥
तन्नाभिकमले ब्रह्मा बभूव कमलोद्भवः ।
संभूय पद्मदण्डञ्च बभ्राम युगलक्षकम् ॥
नान्तं जगाम दण्डस्य पद्मनाभस्य पद्मजः ।
नाभिजस्य च पद्मस्य चिन्तामाप पिता तव ॥
स्वस्थानं पुनरागत्य दध्यौ कृष्णः पदाम्बुजम् ।
ततो ददर्श क्षुद्रं तं ध्यानेन दिव्यचक्षुषा ॥
शयानं जलतल्पे च ब्रह्माण्डे गोलकावृते ।
यल्लोमकूपे ब्रह्माण्डं तञ्च तत् परमेश्वरम् ।
श्रीकृष्णञ्चापि गोलोकं गोपगोपीसमन्वितम् ॥
तं संस्तूय वरं प्राप ततः सृष्टिं चकार सः ।
बभूवुर्ब्रह्मणः पुत्त्रा मानसाः सनकादयः ॥
ततो रुद्राः कपालाच्च शिवांशैकादश स्मृताः ।
बभूव पाता विष्णुश्च क्षुद्रस्य वामपार्श्वतः ॥
चतुर्भुजश्च भगवान् श्वेतद्वीपनिवासकृत् ।
क्षुद्रस्य नाभिपद्मे च ब्रह्मा विश्वं ससर्ज्ज च ॥
स्वर्गं मर्त्यञ्च पातालं त्रिलोकं सचराचरम् ।
एवं सर्व्वं लोमकूपे विश्वं प्रत्येकमेव च ॥
प्रतिविश्वे क्षुद्रविराट् ब्रह्मविष्णुशिवादयः ।
इत्येवं कथितं वत्स श्रीकृष्णकीर्त्तनं परम् ॥
सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३ अध्यायः ॥
स्वायम्भुवमनुः । यथा,—
"गतेषु तेषु स्वस्थानं ब्रह्मा मायाबलामिमाम् ।
उपयेमे स विश्वात्मा शतरूपामनिन्दिताम् ॥
सम्बभूव तया सार्द्धमतिकामातुरो विभुः ।
सलज्जां चकमे देवः कमलोदरमन्दिरे ॥
यावदब्दशतं दिव्यं यथान्यः प्राकृतो जनः ।
ततः कालेन महता ततः पुत्त्रोऽभवन्मनुः ॥
स्वायम्भुव इति ख्यातः स विराडिति नः श्रुतम् ।
तद्रूपगुणसामान्यादधिपूरुष उच्यते ॥
वैराजा यत्र ते जाता बहवः शंसितव्रताः ।
स्वायम्भुवा महाभागा सप्त सप्त तथापरे ॥
स्वारोचिषाद्या सर्व्वे ते ब्रह्मतुल्याः स्वरूपिणः ।
औत्तमिप्रमुखास्तद्वद्येषां त्वं सप्तमोऽधुना ॥"
इति मात्स्ये ३ अध्यायः ॥
विराटः, पुं, देशविशेषः । इति शब्दरत्नावली ॥ (अत्रैव पाण्डवाः सह द्रौपद्या अज्ञातवासमुषितवन्तः । यथा, महाभारते ।४।१।१।
"कथं विराटनगरे मम पूर्व्वपितामहाः ।
अज्ञातवासमुषिता दुर्य्योधनभयार्द्दिताः ॥")
तद्देशीयराजा । यथा,—
"अत्र शूरा महेष्वासा भीमार्ज्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥"
इति श्रीभगवद्गीतायाम् १ अध्यायः ॥
विराटकः, पुं, राजपट्टः । इति हेमचन्द्रः ॥
विराटजः, पुं, (विराटे जायते इति । जन + डः ।) विराटदेशीयहीरकः । तत्पर्य्यायः । राजपट्टः २ राजावर्त्तः ३ । इति हेमचन्द्रः ॥ विराटराजजाते, त्रि । (यथा, महाभारते । १४ । ६० । ८ ।
"सुयद्भृति च राजेन्द्र दिवसानि विराटजा ।
नाभुङ्क्त पतिदुःखार्त्ता तदाभूत्करुणं महत् ॥")
विराणी, [न्] पुं, हस्ती । इति शब्दमाला ॥
विराधः, पुं, (विराधयति लोकान् पीडयतीति । वि + राध + अच् ।) राक्षसभेदः । यथा —
"लक्ष्मणस्य तु तद्वाक्यं श्रुत्वा रामं ततोऽब्रवीत् ।
पिता मेऽभूत् सुपर्जन्यो माता मे च शतह्रदा ॥
विराध इति मामाहुः पृथिव्यां सर्व्वराक्षसाः ।
उत्सृज्य प्रमदामेनां पलायेतां पराङ्मुखौ ॥
तच्छ्रुत्वा राममाहेदं लक्ष्मणः किं प्रतीक्षसे ॥
इत्युक्तो लक्ष्मणो वीर आगच्छ समहहतुः ।
उत्ससर्ज्ज शरं घोरं कालदण्डोपमं ततः ॥
तच्छरीरं महाकायं भित्त्वा पातालमाविशत् ॥
पपातासु गतप्राणः वमेन रुधिरं वमन् ।
ततोऽसौ राममाहेदं प्राञ्जलिर्विनयान्वितः ॥
तुम्बुरुर्नाम गन्धर्व्वः प्रविष्टो राक्षसीं तनुम् ।
अभिशापादहं घोरं शप्तो वैश्रवणेन वै ॥
प्रसादयामास स मया प्रार्थितश्च पुनः पुनः ।
यदा दाशरथी रामो भविष्यति महाबलः ॥
शापस्यान्तोऽभविष्यत्तेन रामेण संयुगे ।
प्रसादात्तव मुक्तोऽहं गमिष्यामि स्वमालयम् ॥"
इति वह्निपुराणे रूपेश्वराख्यानाधिकोत्कर्त्तनं नामाध्यायः ॥
विराधनं, क्ली, (वि + राध + ल्युट् ।) पीडा । इति शब्दरत्नावली ॥
विराधानं, क्ली, पीडा । इति शब्दरत्नावली । विवाधानमिति च पाठः ॥
विरामः, पुं, (वि + रम + घञ् ।) शेषः । निवृत्तिः । विरतिः । तत्पर्य्यायः । अवसानः २ सातिः ३ । इति जटाधरः ॥ मध्यम् ४ । इति त्रिकाण्डशेषः ॥ (यथा, मनौ । २ । ७३ ।
"अध्येष्यमाणस्तु गुरुं नित्यकालमतन्द्रितः ।
अधीष्व भो इति ब्रूयात् विरामोऽस्त्विति चारमेत् ॥")
परवर्णाभावः । इति व्याकरणम् ॥ (यथा, पाणिनौ ।१।४।११०। "विरामोऽवसानम् ॥")
विरालः, पुं, बिडालः । इत्यमरटीका ॥
विरावः, पुं, (वि + रु + घञ् ।) शब्दः । इत्यमरः ॥ (यथा, महाभारते । ३ । १४६ । ६४ ॥
"सिंहनादभयत्रस्तैः कुञ्जरैरपि भारत ।
मुक्तो विरावः सुमहान् पर्व्वतो येन पूरितः ॥")
हस्त्यश्वप्रहस्तान्यतरः । यथा, महाभारते । ३ । ९९ । १७ ।
"विरावश्च सुरावश्च तस्मिन् युक्तौ रथे हयौ ॥")
विरावी, [न्] त्रि, विरावविशिष्टः । विरावी विद्यतेऽस्येति इन्प्रत्ययेन निष्पन्नः ॥ (यथा, बृहत्संहितायाम् । ५३ । ६ ।
"दिशि याम्यायां शकुनो मधुरविरावी यदा तदा वाच्यः ।
अर्थस्तस्मिन् स्थाने गृहेश्वराधिष्ठितेऽन्तैर्वा ॥")
विरिक्तः, त्रि, कृतविरेकः । यथा,—
"दुर्व्विरिक्तस्य नाभिस्तु स्तब्धता कुक्षिशूलकृत् ।
पुरीषवातसङ्गश्च कण्डूमण्डलगौरवम् ॥"
इति भावप्रकाशः ॥
विरिञ्चः, पुं, ब्रह्मा । (यथा, भागवते ।८।५।३९।
"बलाच्छेन्द्रस्त्रिदशाः प्रसादा-
न्मन्योर्गिरीशो धिषणाद्विरिञ्चः ॥")
विष्णुः । शिवः । इति शब्दरत्नावली ॥
विरिञ्चनः, पुं, ब्रह्मा । इति हेमचन्द्रः ॥
विरिञ्चिः, पुं, शिवः । विष्णुः । विधाता । इति शब्दरत्नावली ॥ (यथा, महाभारते । १ । १८ । १७ ।
"एवमस्त्विति तं देवाः पितामहमथाब्रुवन् ।
उक्त्वैवं वचनं देवान् विरिञ्चिस्त्रिदिवं ययौ ॥")
विरिञ्च्यः, पुं, स्वरः । इति मुग्धबोधव्याकरणम् ॥
विरुदः, पुं, गुणोत्कर्षादिवर्णनम् । यदुक्तम् ।
"गाद्यिकः कम्पितश्चेति विरुदो द्विविधो मतः ।
संयुक्तनियमो ह्यत्र वर्णितः पूर्व्ववद्बुधैः ॥"

विंशत्यःष्टदशाथ कलास्तु विरुदे मताः ।
दशभ्यो नाधिकाः कार्याः कलास्तु विरुदे बुधैः ॥
कलिकाभ्यस्तु विरुदे भिदाश्चापि कीर्त्तिताः ।
विरुदं कवयः प्राहुर्गद्यपद्यविवर्णनम् ।
विरुदः कलिका चान्ते धीरवीरादिशब्दभाक् ॥
इत्युपोद्घातः । इति श्रीरूपगोस्वामिकृतश्रीगोविन्दविरुदावलीभाष्ये श्रीबलदेवविद्याभूषणः ॥

विरुदावली, स्त्री, ( विरुदानामावली । ) विरुदश्रेणी । स्तवमाला । तल्लक्षणादि यथा,—
"अधीत्य विरुदावल्या लक्षणं यत्नतस्ततम् ।
हृत्वा चेत् पठति प्राज्ञस्तदा बोधोऽस्य पुष्कलः ॥
सामान्यविरुदावल्या गोविन्दविरुदावली ।
योऽप्यथापि विशेषश्चेत् स तावदिह लिख्यते ॥
कलिका लोकविरुदैर्युता विविधलक्षणैः ।
कीर्त्तिप्रतापशौर्य्यौदार्य्यसौन्दर्य्यदयाशालिनी ॥
कलिकायन्तसंसर्गेण पद्या दोषविवर्ज्जिता ।
शब्दाडम्बरसंबद्धा कर्त्तव्या विरुदावली ॥"
इति श्रीरूपगोस्वामिकृते श्रीगोविन्दविरुदावलीभाष्ये श्रीबलदेवविद्याभूषणः ॥ * ॥ कलिकालक्षणं कलिकाग्रन्थे लिखितम् । विरुदलक्षणं तच्छन्दे द्रष्टव्यम् ।

विरुद्धः, त्रि, ( वि + रुध + क्तः । ) विरोधविशिष्टः । यथा । विरुद्धधर्म्मसमवाये भूयसां स्यात् सधर्म्मकत्वम् । इति जैमिनीसूत्रम् ॥
"विरुद्धं गुरुवाक्यस्य यदत्र भाषितं मया ।
तत् क्षन्तव्यं बुधैरेव स्खलितत्वबुभुत्सया ॥
स्खलितत्वे प्रमादाद्यद्विरुद्धं बहुभाषितम् ।
गुरवेष्यागुरागेव तच्छोध्यं धर्म्मदर्शिभिः ॥"
इति तिथ्यादितत्त्वम् ॥
( इश्रमसमीक्ष्यसावर्ण्यः देवतात्मनः । यथा, भागवते । ८ । १३ । २२ ।
"हविष्मान् सुकृतः सत्यो जयो मूर्त्तिस्तदा द्विजाः ।
सुवासना विरुद्धाद्या देवाः शम्भुः सुरेश्वरः ॥"
क्ली, विचाराङ्गीयदोषविशेषः । यथा । "विरुद्धं नाम यद्दृष्टान्तसिद्धान्तसमयैर्विरुद्धं तत्र दृष्टान्तसिद्धान्तावुक्तौ । समयः पुनर्यथायुर्वेदिकसमयो याज्ञिकसमयो मोक्षशास्त्रिकसमय इति । तत्रायुर्व्वेदिकसमयः चतुष्पादभेषजमिति । आलभ्या पशव इति याज्ञिकसमयः । सर्व्वभूतेष्वहिंसेति मोक्षशास्त्रिकसमयस्तत्र स्वसमयविपरीतमुपन्यसनं विरुद्धमिति ॥" इति चरके विमानस्थानेऽष्टमेऽध्याये । )

विरूढः, त्रि, अङ्कुरितः । ( यथा, "विरूढ़ानां अङ्कुरितधान्यजातमन्नम् ।" इति माधवकृतरुग्विनिश्चये मूत्रव्याख्याने विजयरक्षितः ॥ ) जातः । इति मेदिनी । ढ,६ ॥ ( यथा, रघुवंशे । ५ । २६ ।
"गङ्गाप्रपातान्तविरूढ़शष्पं
गौरीगुरोर्गह्वरमाविवेश ॥" )
आरोहणविशिष्टः । यथा ।
"अस्तुंदं लिखया पुरामपि दिपौ कद्रूसरोसंस्थनो
लीलानखपूर्वविरूढ़शिरसो वीरस्य लिप्सुस्वरम् ।"
इत्यादि मुरारिः ॥

विरूपं, क्ली, पिप्पलीमूलम् । इति राजनिर्घण्टः ॥

विरूपः, त्रि, ( विगतं रूपं यस्य । ) कुत्सितः । कुरूपः । यथा,—
"विरूपोऽप्यतनिस्वानामकुलापूर्व्वकं हि यत् ।
पूरकं दानमानाभ्यामनुपस्य उदाहृतः ॥"
इति रामतर्कवागीशः ॥
( यथा, बृहत्संहितायाम् । ७० । २३ ।
"या तुङ्गरोमेण समुन्नतेन
रूक्षाप्यकेशी कलहप्रिया वा ।
प्रायो विरूपासु भवन्ति दोषा
यत्राकृतिस्तत्र गुणा वसन्ति ॥"
परिवर्त्तरूपः । यथा, ऋग्वेदे । १० । ९५ । १६ ।
"यद्विरूपाचरं मर्त्येष्ववसं रात्रीः शरदश्चतस्रः ।"
"यद्यदा विरूपा परं मनुष्येषु अचरामि विगतसहजभूतदेवरूपा ।" इति तद्भाष्ये सायणः ॥ नानारूपः । यथा, ऋग्वेदे । ३ । ५३ । ७ ।
"इमे भोजा अङ्गिरसो विरूपा
दिवस्पुत्रासो असुरस्य वीराः ।"
"हे इन्द्र इमे यागं कुर्व्वाणा भोजाः भोजकाः क्षत्रियाः तेषां याजका विरूपाः विविधरूपा मेधातिथिप्रभृतयः ॥" इति तद्भाष्ये सायणः ॥
विरुद्धः । यथा, साहित्यदर्पणे । १० परिच्छेदे ।
"विरूपयोः संघटना या च तद्विषमं मतम् ॥"
उदाहरणं यथा,—
"क्व वनं तरुवल्कभूषणं
नृपलक्ष्मीः क्व महेन्द्रवन्दिता ॥" )
स्वार्थे के विरूपकश्च ॥

विरूपः, पुं, सुमनोराजपुत्रः । यथा,—
"जाताः सुमनसः पुत्राश्च शूरा महाबलाः ।
सुमतिश्च विरूपश्च सत्यः शास्त्रार्थपारगाः ॥"
इति कालिकापुराणे ९० अध्यायः ॥

विरूपा, स्त्री, दुरालभा । अतिविषा । इति राजनिर्घण्टः ॥

विरूपाक्षः, पुं, ( विरूपे अक्षिणी यस्य । "सक्थ्यक्ष्णोः स्वाङ्गात् षच् ।" इति षच् । ) शिवः । इत्यमरः ॥ ( यथा, साहित्यदर्पणे । १० ।
"दृष्ट्वा दग्धं मनसिजं जीवयन्ति दृशैव याः
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥" )
रुद्रभेदः । इति जटाधरः ॥ तस्य पुरी सुमेरोर्नैर्ऋतकोणे वर्त्तते । यथा,—
"तथा चतुर्थे दिग्भागे नैर्ऋताधिपतेः शुभा ।
नाम्ना कृष्णावती नाम विरूपाक्षस्य धीमतः ॥"
इति वराहे ब्रह्मगीता ॥
( विरूपे, त्रि । यथा, कुमारे । ५ । ७२ ।
"वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ॥" )

विरूपिका, स्त्री, ( विगतं रूपं यस्याः । कन् । टापि अत इत्वम् । ) कुरूपा । यथा,—
"नाद्यः परिविन्दन्ति न चास्य न तपांसि च ।
न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका ॥"
इत्युद्वाहतत्त्वम् ॥

विरूपी, [न्] पुं, ( विरुद्धं रूपमस्त्यस्येति । इनिः । ) आङ्कारकन्दः । इति राजनिर्घण्टः ॥ कुरूपविशिष्टे, त्रि ॥

विरेकः, पुं, ( वि + रिच + घञ् । ) मलभेदः । तत्पर्य्यायः । रेचनम् २ रेकः ३ रेचना ४ विरेचनम् ५ । इति शब्दरत्नावली ॥ प्रक्षालनम् ६ । इति रत्नमाला ॥ ( यथा, वैद्यके ।
"धूमाम्बुपाशिरो विरेकवमनस्वेदोपनाहादिकं
पानाहारविहारमैथुनमिदं शैत्यावसुप्तं त्यजेत् ॥"
अस्य योग्यायोग्या यथा,—
"बालवृद्धकृशक्षीणपीनसार्त्तभयार्द्दिताः ।
श्रमक्षीणक्षतायुक्ता गर्भिणी च नवज्वरी ॥
अस्रौ गच्छति यस्याः सद्यःप्रसूतिकालङ्घरोगिणी ।
नैते विरेकयोग्याः स्युरम्येषाञ्च बलाबलम् ॥
नवज्वरे च ये योगा भेदकाः परिकीर्त्तिताः ।
ते तथैव प्रयोक्तव्या वीक्ष्य देहमलादिकम् ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे विरेकाधिकारे । )

विरेचकः, त्रि, रेचकः । विरेककारकः । सारकः । मलभेदकः । जोलाप इति भाषा ॥ विपूर्व्वकरिच्धातोर्ण्वुल्प्रत्ययेन निष्पन्नः । ( यथा, वैद्यके ।
"पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहा ।
फलं तस्य त्रिदोषघ्नं मूलं तस्य विरेचकम् ॥" )

विरेचनं, क्ली, ( वि + रिच + ल्युट् । ) विरेकः । इति शब्दरत्नावली ॥ तत्कारकौषधं यथा,—
"हरीतकी समगुडा मधुना सह पेषिता ।
विरेचनकरी सद्य भवतीति न संशयः ॥
त्रिफला त्रिवृतं चित्रं तथा कटुकरोहिणी ।
जलस्नुहीरो श्रेष्ठ उत्तमञ्च विरेचनम् ॥"
अपि च ।
"त्रिफला बदरं द्राक्षा पिप्पली च विरेचनम् ।
हरीतकी सोष्णनीरा नवश्च विरेचनम् ॥"
इति गारुडे १८७ । १९९ अध्यायौ ॥ * ॥
अन्यच्च । अथ विरेचनविधिः ।
"स्निग्धस्विन्नाय वान्ताय दद्यात् सम्यग्विरेचनम् ।
अवान्तस्य त्वधःस्रस्तो ग्रहणीं छादयेत् कफः ॥
मन्दाग्निगौरवं कुर्य्याज्जनयेद्वा प्रवाहिकाम् ।
अथवा पाचनैरामं बलासं परिपाचयेत् ।
अत्ययिके कार्य्ये शोधनं शीलयेद्बुधः ॥"
आत्ययिके प्रावृट्के ।
"पित्ते विरेचनं युञ्ज्यादामोद्भूते गदे तथा ।
उदरे च तथाध्माने कोष्ठशुद्धौ विशेषतः ॥
दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ।
शोधनैः शोधिता ये तु न तेषां पुनरुद्भवः ॥
बालो वृद्धो भृशं स्निग्धः क्षतक्षीणो भयान्वितः ।
श्रान्तस्तृषार्त्तः स्थूलश्च गर्भिणी च नवज्वरी ॥

अधोगरक्तपित्ती च न विरेच्या विजानता ।
नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी ॥
शल्यार्दितश्च रूक्षश्च न विरेच्या विजानता ।
जीर्णज्वरी गरव्यापी वातरक्ती भगन्दरी ॥
अर्शःपाण्डूदरग्रन्थिहृद्रोगारुचिपीडिताः ।
योनिरोगप्रमेहार्त्तगुल्मप्लीहव्रणार्दिताः ॥
विद्रधिच्छर्दिविस्फोटविसूचीकुष्ठसंयुताः ।
कर्णनासाशिरोवक्त्रगुदमेढ्रामयान्विताः ॥
प्लीहशोथाक्षिरोगार्त्ताः क्रिमिक्षारानिलार्दिताः ।
शूलिनो मूत्रघातार्त्ता विरेकार्हा नरा मताः ॥
बहुपित्तो मृदुः प्रोक्तो बहुश्लेष्मा च मध्यमः ।
बहुवातः क्रूरकोष्ठो दुर्विरेच्यः स कथ्यते ॥
मृद्वी मात्रा मृदौ कोष्ठे मध्यकोष्ठे च मध्यमा ।
क्रूरे तीक्ष्णा मता द्रव्यैर्मृदुमध्यमतीक्ष्णकैः ॥
मृदुर्द्राक्षापयश्चञ्चुतैलैरपि विरिच्यते ।
मध्यमस्त्रिवृतातिक्ताराजवृक्षैर्विरिच्यते ।
क्रूरः स्नुक्पयसा हेमक्षीरीदन्तीफलादिभिः ॥"
चञ्चुतैलमेरण्डतैलम् । राजवृक्षः धनवहेरा । हेमक्षीरी चोकम् । दन्तीफलं हस्तिदन्तीफलं जयपाल इति प्रसिद्धम् ।
"मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफान्तिका ।
वेगैर्विंशतिभिर्मध्या हीनोक्ता दशवेगिका ॥
द्विपलं श्रेष्ठमाख्यातं मध्यमञ्च पलं भवेत् ।
पलार्द्धञ्च कषायाणां कनीयस्तु विरेचनम् ॥
कल्कमोदकचूर्णानां कर्षमध्वाज्यलेहनः ।
कर्षद्वयं पलं वापि वयोरोगाद्यपेक्षया ॥
पित्तोत्तरे त्रिवृच्चूर्णं द्राक्षाक्वाथादिभिः पिबेत् ।
त्रिफलाक्वाथगोमूत्रैः पिबेत् व्योषं कफार्दितः ॥
त्रिवृत्सैन्धवशुण्ठीनां चूर्णमम्लैः पिबेन्नरः ।
वातार्दितो विरेकाय जाङ्गलानां रसेन वा ॥
एरण्डतैलं त्रिफलाक्वाथेन द्विगुणेन वा ।
युक्तं पीतं पयोभिर्वा न चिरेण विरिच्यते ॥"
शीघ्रमेव विरिच्यत इत्यर्थः ।
"त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् ।
मृद्वीकारसं क्षौद्रं वर्षाकाले विरेचनम् ॥
त्रिवृद्दुरालभामुस्तशर्करोदीच्यचन्दनम् ।
द्राक्षाम्बुना सयष्ट्याह्वं शीतलञ्च घनात्यये ॥"
उदीच्यं वाला । घनात्यये शरदि ।
"पिप्पली नागरं सिन्धुश्यामा त्रिवृतया सह ।
लिह्यात् क्षौद्रेण शिशिरे वसन्ते च विरेचनम् ॥"
श्यामा कृष्णतेउड़ ।
"त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ।
अभया मरिचं शुण्ठी विडङ्गामलकानि च ।
पिप्पली पिप्पलीमूलं त्वक्पत्रं मुस्तमेव च ।
एतानि समभागानि दन्ती तु द्विगुणा भवेत् ॥
त्रिवृदष्टगुणा ज्ञेया षड्गुणा चात्र शर्करा ।
मधुना मोदकान् कृत्वा कर्षमात्रान् प्रमाणतः ॥
एकैकं भक्षयेत् प्रातः शीतञ्चानुपिबेज्जलम् ।
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते ।
पानाहारविहारेषु भवेन्निर्यन्त्रणः सदा ॥
विषमज्वरमन्दाग्निपाण्डुकासभगन्दरान् ।
दुर्नामकुष्ठगुल्मार्शोगलगण्डोदरभ्रमान् ॥
विदाहप्लीहमेहांश्च यक्ष्माणं नयनामयान् ।
वातरोगांस्तथाध्मानं मूत्रकृच्छ्राणि चाश्मरीम् ॥
पृष्ठपार्श्वोरुजघनोदररुजं जयेत् ।
सततं शीलनादेषां पलितानि प्रणाशयेत् ।
अभया मोदका ह्येते रसायनवराः स्मृताः ॥"
अभयामोदको रसायनः ॥ * ॥
"पीत्वा विरेचनं शीतजलैः संसिच्य चक्षुषी ।
सुगन्धि किञ्चिदाघ्राय ताम्बूलं शीलयेन्नरः ॥
निर्वातस्थो न वेगांश्च धारयेन्न शयीत च ।
शीताम्बु न स्पृशेत् क्वापि कोष्णनीरं पिबेन्मुहुः ॥
बलासौषधपित्तानि वायुर्वान्ते यथा व्रजेत् ।
रेकात्तथा मलं पित्तं भेषजं च कफो व्रजेत् ॥
दुर्विरिक्तस्य नाभिस्तु स्तब्धता कुक्षिशूलकृत् ।
पुरीषवातसङ्गश्च कण्डूमण्डलगौरवम् ।
विदाहोऽरुचिराध्मानं भ्रमश्छर्दिश्च जायते ।
तं पुनः पाचनैः स्नेहैः पक्त्वा संस्निह्य रेचयेत् ॥
तेनास्योपद्रवा यान्ति दीप्ताग्निर्लघुता भवेत् ।
विरेकस्यातियोगेन मूर्च्छा भ्रंशो गुदस्य च ॥
शूलं कफातियोगः स्यान्मांसधावनसन्निभम् ।
मेदोनिभं जलाभासं रक्तञ्चापि विरिच्यते ॥
तस्य शीताम्बुभिः सिक्त्वा शरीरं तण्डुलाम्बुभिः ।
मधुमिश्रैस्तथा शीतैः कारयेद्वमनं मृदु ॥
सहकारत्वचः कल्को दध्ना सौवीरकेण वा ।
पिष्टो नाभिप्रलेपेन हन्त्यतीसारमुल्बणम् ॥
सौवीरन्तु यवैरामैः पक्वैर्वा निस्तुषीकृतम् ॥"
सौवीरं सन्धानम् ।
"आमं क्षीरं रसञ्चापि वैष्किरं हारिणं तथा ॥
शालिभिः षष्टिकैर्मुद्गं मसूरैर्वापि भोजयेत् ।
वर्त्तिकालावविष्किरकपिञ्जलकतित्तिराः ॥
चकोरक्रकराद्याश्च विष्किराः समुदाहृताः ।
कपिञ्जल इति ख्यातो लोके कपिशतित्तिरः ॥"
क्रकरः कएर इति लोके । हरिणस्ताम्रवर्ण-मृगः ।
"शीतैः संग्राहिभिर्द्रव्यैः कुर्य्यात् संग्रहणं भिषक् ।
लाघवे मनसस्तुष्टावनुलोमं गतेऽनिले ॥
सुविरिक्तं नरं ज्ञात्वा पाचनं पाययेन्निशि ।
इन्द्रियाणां बलं बुद्धेः प्रसादो वह्निदीप्तता ॥
धातुस्थैर्य्यं वयःस्थैर्य्यं भवेद्रेचनसेवनात् ।
प्रवातसेवां शीताम्बु स्नेहाभ्यङ्गमजीर्णताम् ॥
व्यायामं मैथुनं चैव न सेवेत विरेचितः ।
शालिषष्टिकमुद्गाद्यैर्यवागूं भोजयेत् कृताम् ।
जाङ्गलविष्किराणां वा रसैः शाल्योदनं हितम् ।
हरिणैणकुरङ्गर्ष्यवातायुमृगमातृकाः ।
राजीवः पृषतश्चैव जाङ्गला मरुमाश्रयः ॥"
इति भावप्रकाशः ॥

**विरेचनः**, पुं, (विशेषेण रेचयतीति । वि + रिच् + णिच् + ल्युः ।) पीलुवृक्षः । इति राजनिर्घण्टः ॥ (विरेचके, त्रि । यथा, सुश्रुते । चिकित्सितस्थाने २४ अध्याये ।
"शेचनं समासत्रामैः शिरःसुखविरेचनम् ॥")

**विरेकः**, पुं, मलनाशनम् । इति धनञ्जयः ॥ रेचनमुच्यते ॥

**विरेचितः**, त्रि, शोधितः । विपूर्व्वकरेचधातोः क्तप्रत्ययेन निष्पन्नः ॥

**विरोकं**, क्ली, (वि + रुच् + घञ् । कुत्वम् ।) छिद्रम् । इति त्रिकाण्डशेषः ॥ (यथा, माघे । ५ । ५४ ।
"नासाविरोकपवनोल्लसितं तनीयो
रोमाञ्चतामिव जगाम रजः पृथिव्याः ॥")
सूर्य्यकिरणे, पुं । इति हलायुधः ॥ (प्रकाशः । यथा, ऋग्वेदे । १ । ५ । २ ।
"पूर्व्वीष्टस्य संदृशश्चकानः संदृतो अग्नौ
दुयसो विरोके ॥"
"विरोके विरोचने प्रकाशे ।" इति तद्भाष्ये सायनः ॥)

**विरोचनः**, पुं, (विशेषेण रोचते इति । वि + रुच् + "अनुदात्तेतश्च हलादेः ।" ३ । २ । १४९ । इति युच् ।) सूर्य्यः । (यथा, महाभारते । ३ । ३ । १९ ।
"दिवाकरः सप्तसप्तिर्धामकेशी विरोचनः ॥")
अर्कवृक्षः । इत्यमरः ॥ प्रह्लादतनयः । (यथा, महाभारते । १ । ६५ । १९ ।
"प्रह्लादस्य त्रयः पुत्त्राः ख्याताः सर्व्वत्र भारत ।
विरोचनश्च कुम्भश्च निकुम्भश्चेति भारत ॥")
अग्निः । चन्द्रः । इति मेदिनी ॥ (यथा, महाभारते । ९ । ३५ । ५७ ।
"तासां तद्वचनं श्रुत्वा इन्द्रः सोममथाब्रवीत् ।
समं वर्त्तस्व भार्य्यासु मा त्वां शप्से विरोचन ! ॥")
रोहितकवृक्षः । श्योनाकभेदः । पूतिकरञ्जः । इति राजनिर्घण्टः ॥ (दीप्तिशालिनि, त्रि । यथा, महाभारते । १२ । ३४३ । ३४ ।
"तेजसाभ्यधिको सूर्य्यात् सर्व्वलोकविरोचनात् ॥")

**विरोचनसुतः**, पुं (विरोचनस्य सुतः ।) बलिराजः । इति त्रिकाण्डशेषः ॥

**विरोधः**, पुं, (वि + रुध् + घञ् ।) शत्रुता । तत्पर्य्यायः । वैरम् २ विद्वेषः ३ । इत्यमरः ॥ द्वेषः ४ द्वेषणम् ५ । इति शब्दरत्नावली ॥ अनुशयः ६ समुच्छ्रयः ७ । इति जटाधरः ॥ पर्य्यवस्था ८ विरोधनम् ९ । इति संकीर्णवर्गे अमरः ॥ (यथा, रघुः । ६ । ४६ ।
"नीपान्वयः पार्थिव एष यज्वा
गुणैर्यमाश्रित्य परस्परेण ।
सिद्धाश्रमं शान्तमिवेत्य सत्त्वै-
र्नैसर्गिकोऽप्युत्ससृजे विरोधः ॥")
विरोधकरणे दोषो यथा,—
"अथ पुत्त्रं रेणुका सा कृत्वा वक्षसि स्नपयन्ति ।
उवाच किञ्चिद्वचनं परिणामसुखावहम् ॥
अविरोधो महांश्चैव सर्व्वमङ्गलमङ्गलम् ।
विरोधो नाशबीजञ्च सर्व्वोपद्रवकारणम् ॥
अकर्त्तव्यो विरोधश्च राजभिः क्षत्रियैः सह ।
क्षमिणा चैव कर्त्तव्या मदीयं वचनं शृणु ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३९ अध्यायः ॥

अपि च ।
"न कुर्य्याद्बुद्धिः साद्धं विरोधं बन्धुभिस्तथा ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥
न्यायमते साध्यव्याप्यकाभावप्रतियोगित्वम् । इति चिन्तामणिः ॥ साध्याभावव्याप्यविरहत्वम् । इति दीधितिः ॥ ● ॥ प्रभवादिषष्टिसंवत्सरान्तर्गतत्रयोविंशवर्षम् । यथा, भविष्यपुराणे ।
भैरव उवाच ।
"विश्वमस्तं जगत् सर्व्वं विरोधे भयसंकुलम् ।
विकारी सर्व्वतोऽपायो मम वाक्यन्तु नान्यथा ॥"
इति ज्योतिस्तत्त्वम् ॥
अनैक्यम् । विपरीतार्थः । यथा,—
"श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्य्यं स्मार्त्तं वैदिकवत् सता ॥"
इति स्मृतिः ॥
( नाशः । यथा, महाभारते । १ । १०० । १ ।
"यत्नं प्राणविरोधेन कीर्त्तिमिच्छसि शाश्वतीम् ।
सा ते प्राणान् समादाय गमिष्यति न संशयः ॥"
नाटकोक्तप्रतिमुखाङ्गान्यतमः । यथा, साहित्यदर्पणे । ६ । ३५१ ।
"विरोधश्च प्रतिमुखे तथा स्यात् पर्य्युपासनम् ॥"
तल्लक्षणोदाहरणे यथा, तत्रैव । ३५८ ।
"विरोधो व्यसनप्राप्तिः । यथा, चण्डकौशिके राजा । नूनमसमीक्ष्यकारिणा मयान्धेनेव स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समाक्रान्तः ॥" ● । अलङ्कारविशेषः । यथा, साहित्यदर्पणे । १० । ७१८ ।
"क्रियाक्रियाद्रव्याभ्यां यद्द्रव्यं द्रव्येण वा मिथः ।
विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः ॥")
विरोधनं, क्ली, ( वि + रुध + ल्युट् । ) विरोधः । इत्यमरः ॥ ( यथा, कथासरित्सागरे ।५४।१४८।
"ईदृक्पापफलं पुत्र मातापित्रोर्विरोधनम् ॥"
नाशः । यथा, रामायणे । २ । २६ । २८ ।
"अनुरक्तस्य हि संत्रासः स्वपथे विरतस्य च ।
निर्द्देहेदपि शक्रस्य द्युतिं धर्म्मविरोधनात् ॥"
नाटकोक्तविमर्शाङ्गान्यतमः । यथा, साहित्यदर्पणे । ६ । ३७८ ।
"शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम् ॥"
तल्लक्षणादिकं यथा, तत्रैव । ३८७ ।
"कार्य्यात्ययोपगमनं विरोधनमिति स्मृतम् ॥")
विरोधिनी, स्त्री, ( विरुणद्धि या । वि + रुध + णिनि । ङीप् । ) विरोधकारिका । यथा,—
"विरोधं कुरुते नाथा दम्पत्योः प्रीतमानयोः ।
वधूनां स्वसुरी पित्रोः पुत्रैः सारङ्गिकैश्च वा ।
विरोधिनी सा तस्यां कुर्व्वीत बलिकर्म्मिया ॥"
इति मार्कण्डेयपुराणे दुःसहवंशोत्पत्तिः ॥
विरोधी, [ न् ] पुं, ( विरुणद्धीति । वि + रुध + णिनि । ) शत्रुः । इति हलायुधः ॥ ( यथा, मनुः । ४ । १७ ।
"सर्व्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः ॥"
विरोधोऽस्यास्तीति । विरोध + इनिः ।) प्रभवादिषष्टिसंवत्सरान्तर्गतत्रयोविंशवर्षम् । यथा, भविष्यपुराणे । भैरव उवाच ।
"अल्पवृष्टिप्रजा लोका प्रायौषधिप्रपीडनम् ।
जायते मानुषे कष्टं विरोधिनि न संशयः ॥"
इति ज्योतिस्तत्त्वम् ॥
विरोधविशिष्टे, त्रि । ( यथा, कुमारे ।५।१७।
"विरोधिसत्त्वोज्झितपूर्व्वमत्सरं
द्रुमैरभीष्टप्रसवार्च्चितातिथि ॥")
विरोधोक्तिः, स्त्री, ( विरोधस्य उक्तिः । ) परस्परविरोधिवचनम् । तत्पर्य्यायः । विप्रलापः २ विरोधवाक् ३ क्रोधोक्तिः ४ प्रलापः ५ । इति शब्दरत्नावली ॥
विल, श स्मृतौ । इति कविकल्पद्रुमः ॥ ( तुदा०-पर०-सक०-सेट् । ) स्मृतिरिह आच्छादनम् । श, विलति वस्त्रं लोकः परिदधाति इत्यर्थः । वेलिता । अयं केश्चिन्न मन्यते । इति दुर्गादासः ॥
वि(बि)लं, क्ली, (बिल + कः ।) छिद्रम् । इत्यमरः ॥ ( यथा, महाभारते । १ । १४८ । १७ ।
"पाण्डवाश्चापि ते सर्व्वे सह मात्रा सुदुःखिताः ।
बिलेन तेन निर्गत्य जग्मुर्हन्तमलक्षिताः ॥")
गुहा । इति मेदिनी ॥ ( यथा, कुमारे । ६ । ३९ ।
"जितसिंहभया नागा यत्राश्वा बिलयोनयः ।
यक्षाः किंपुरुषाः पौरा योषितो वनदेवताः ॥")
वि(बि)लः, पुं, उच्चैःश्रवा हयः । इति मेदिनी ॥ वेतसः । इति शब्दचन्द्रिका ॥
वि(बि)लकारी, [न्] पुं, ( बिलं करोतीति । कृ + णिनिः ।) मूषकः । इति राजनिर्घण्टः ॥ गर्त्तकारके, त्रि ॥
विलक्षः, त्रि, ( विशेषेण लक्षयतीति । वि + लक्ष + पचाद्यच् । ) विस्मयान्वितः । इत्यमरः ॥ ( यथा, कथासरित्सागरे । ३८ । १५ ।
"इत्युक्त्वा स विलक्षं तं वैद्यं सदारनृपोऽब्रवीत् ।
किं तस्य च्छगणस्यापि मांसिपोऽपि कश्चन ॥")
विलक्षणं, क्ली, ( विगतं लक्षणं आलोचनं यत्र ।) हेतुशून्यास्था । निष्प्रयोजनस्थितिः । यथा,—
"विलक्षणं मतं स्थानं यद्वै निष्प्रयोजनम् ॥"
इति भागुरिः । इत्यमरभरतौ ॥
( यथा, भागवते । १० । ७० । ३८ ।
"अविद्यमानाप्यवभासते
तस्मै नमस्ते स्वविलक्षणात्मने ॥ ● ॥)
विलक्षणः, त्रि, (विभिन्नं लक्षणं यस्य । ) भिन्नः । इति जटाधरः ॥ (यथा, भागवते ।५ । ६ । ६ ।
"अथैवमखिललोकपाललामो विलक्षणैर्जड़वदवधूतवेषभाषाचरितैरविलक्षितभगवत्प्रभाव इति ॥" ● । यथा च भाषापरिच्छेदे । ११० ।
"अस्मात् पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥"
विशिष्टं लक्षणं यस्याः । ) विशेषलक्षणयुक्तः । यथा, मत्स्यपुराणे ।
"अष्टौ चास्याद्वितीयेऽपि शय्यां दद्याद्विलक्षणाम् ।
काञ्चनं पुरुषं तद्वत् फलपुष्पसमन्वितम् ॥
संपूज्य द्विजदाम्पत्यं नानाभरणभूषणैः ।
शय्योत्सर्गस्तु कर्त्तव्यो देया च कपिला शुभा ॥"
द्विजदम्पती पूजयित्वा काञ्चन प्रेतप्रतिकृतिरूपं पुरुषं फलपुष्पयुतं शय्यायामारोप्य भूषितद्विजदम्पतीभ्यां शय्यां दद्यात् । इति शुद्धितत्त्वम् ॥
विलग्नं, क्ली, (विशेषेण लग्नम् ।) मध्यः । यथा,—
"मध्योऽवलग्नं विलग्नं मध्यमोऽथ कटः कटिः ॥"
इति हेमचन्द्रः ॥
जन्मलग्नम् । यथा,—
"गोचरे वा विलग्ने वा ये ग्रहा रिष्टसूचकाः ।
पूजयेत्तान् प्रयत्नेन पूजिताः स्युः शुभावहाः ॥"
गोचरे जराद्यपेक्षया यदा कदापि । विलग्ने जन्मलग्ने । इति संस्कारतत्त्वम् ॥ मेषादिलग्नमात्रम् । यथा,—
"शुभग्रहाक्रान्ते च जनुष्यिप्रसुते च ।
शुभराशिविलग्ने च शुभं प्राशनमौदिकम् ॥"
इति दीपिका ॥
संलग्ने, त्रि । यथा,—
"विलग्नं न स्त्रियां मध्ये त्रिषु स्याल्लग्नमात्रके ॥"
इति मेदिनी ॥
विलज्जः, त्रि, ( विगता लज्जा यस्य । ) लज्जारहितः । निर्लज्जः । यथा,—
"जननसमयदिनेशे पञ्चमे सौख्यभागी
न भवति धनभागी यौवने व्याधियुक्तः ।
जनयति सुतमेकं निर्ज्जलं नाशयित्वा
चपलमतिविलज्जः क्रूरकर्म्मा कुचेलः ॥"
इति ज्योतिषे पञ्चमभावफलविचारम् ॥
विलपनं, क्ली, ( वि + लप + ल्युट् । ) विलापः । भाषणम् । विपूर्व्वलपधातोः अनट्प्रत्ययेन निष्पन्नम् ॥
विलम्बः, पुं, ( वि + लम्ब + घञ् । ) लम्बनम् । मौढ्यः । यथा, देवीपुराणे ।
"अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः ।
प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणम् ॥
पिण्डदानं तत्र शस्तं पितॄणामतिदुर्लभम् ।
विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत् ॥"
इति प्रायश्चित्ततत्त्वम् ॥
प्रभवादिषष्टिसंवत्सरान्तर्गतद्वात्रिंशवर्षम् । यथा, भविष्ये ।
"तस्करैः पार्थिवैश्चैव अभिभूतमिदं जगत् ।
अर्घो भवति सामान्यो विलम्बे तु भयं महत् ॥"
इति ज्योतिस्तत्त्वम् ॥
विलम्बनं, क्ली, ( वि + लम्ब + ल्युट् । ) अधीनम् । इति विलम्बितशब्दटीकायां भरतः ॥ ( यथा, हरिवंशे भविष्यपर्व्वणि । ४१ । ५२ ।
"आगच्छ त्वरितं तथ्या न ते कार्य्यं विलम्बनम् ॥")
विलम्बितं, त्रि, ( वि + लम्ब + क्तः । ) अधीनम् । इत्यमरे द्रुतपर्य्यायेऽविलम्बितशब्ददर्शनात् ॥

( यथा, रघुवंशे । १ । ३३ ।
"विलम्बितफलैः कालं स निनाय मनोरथैः ॥")
मन्दलये, क्ली । यथा,—
"विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ॥"
इत्यमरः ॥
मन्दप्रवृत्तत्व समवेतस्वरश्रुतेषु नृत्तविषयक-गमनविशेषेषु क्रमात्तत्त्वादित्रयमयं विलम्बिता-दीनां यथार्थी यथाख्यं तत्त्वादिकाः संज्ञाः । इति मधुः ॥ वाच्ये ।
"द्रुतामभ्यसने वृत्तिं प्रयोगार्थे तु मध्यमाम् । शिष्याणामुपदेशार्थे विलम्बितां समाचरेत् ॥"
इति वेदव्यवस्था ॥
नृत्तगीतादौ च प्रत्येकमवयवबोधार्थं कल-स्वरादि विलम्बनात् । विलम्बन्ते करचरणादयः प्रत्येकं गतिविशेषप्रदर्शनायास्येति विलम्बितम् । अपि तु संज्ञने श्रीघमवगमनार्थादिति आधारे क्तः । भावे क्तः इति मुकुटः । इति भरतः ॥ विलम्बगमनशीलपशुः । तद्यथा । विरद-खङ्गोष्ट्रमहिषगोमदगजमरवराहाः । इति राजनिर्घण्टः ॥

विलम्बी, [ न् ] त्रि, विलम्बविशिष्टः । इति विलम्ब-शब्दादिन्प्रत्ययेन निष्पन्नः ॥ ( यथा, गीत-गोविन्दे । ६ । ८ ।
"भवति विलम्बिनि विगलितलज्जा
विलपति रोदिति वासकसज्जा ॥"
विशेषेण लम्बते इति । वि + लम्ब + णिनिः । लम्बमानः । यथा, किराते । ५ । ६ ।
"उदितपद्मनिवारतनिःस्वनैः
पृथुनितम्बविलम्बिभिरम्बुदैः ॥"
पुं, क्ली । वत्सरविशेषः । यथा, वृहत्संहिता-याम् । ८ । ३६ ।
"हेमलम्ब इति सप्तमे युगे
स्याद्विलम्बि परतो विकारि च ।
शार्वरीति तदनु प्लवः स्मृतो
वत्सरो गुरुवशेन पञ्चमः ॥")

विलम्भः, पुं, ( वि + लभ + घञ् । नुम् । ) अति-दानम् । तत्पर्य्यायः । अतिसर्ज्जनम् २ । इत्य-मरः ॥

विलयः, पुं, ( विशेषेण लीयन्ते पदार्था अस्मि-न्निति । वि + ली + "एरच् ।" इत्यच् । ) प्रलयः । इति शब्दरत्नावली ॥ ( यथा, भाग-वते । ७ । ६ । १२ ।
"यस्मिन्निदमात्मनि जगद्विलयाम्बुमध्ये
शेषे तथा निजसुखानुभवो निरीहः ॥"
विनाशः । यथा, माघे । ६ । १७ ।
"दिवसोऽनुमित्रमगमद्विलयं
किमिहास्यति वत भयाचलया ॥")

विलसा, स्त्री, चेलकला । इति रत्नमाला ॥

वि(बि)लवासः, पुं, ( बिले वासो यस्य । ) गाड्ड-जन्तुः । इति राजनिर्घण्टः ॥

वि(बि)लवासी, [ न् ] पुं, (बिले वसतीति । वस + णिनिः ।) सर्पः । इति शब्दरत्नावली ॥ ( बिल-वासिनि, त्रि । यथा, महाभारते ।१४।४३।२।
"अविः पशूनां सर्व्वेषामहिश्च बिलवासिनाम् ॥")
भेक इति शिवः ॥)

वि(बि)लशयः, पुं, (बिले शेते इति । शी + अच् ।) सर्पः । इति शब्दरत्नावली ॥ ( बिलवासिनि, त्रि । यथा, महाभारते । १४ । ६० । ६ ।
"बलदुत्सृज्य तं नागं जायमानो महाभुजाम् ।
मानुषं वपुरं प्राप भूतो विलशयो महान् ॥")

विलसत्, [ त् ] त्रि, (वि + लस + शतृ ।) विलास-युक्तः । यथा,—
"प्रचलन्मुखी विलसदलका: ।
अभवत् प्रिया सुरवैरिणः ॥"
इति छन्दोमञ्जरी ॥

विलापः, पुं, ( वि + लप + घञ् । ) अनुशोच-नोक्तिः । तत्पर्य्यायः । परिदेवनम् २ । इत्यमरः ॥ अपि च ।
"क्रन्दनादौ विलापः स्यात् परिदेवनमित्यपि ।"
इति शब्दरत्नावली ॥
विलापो दुःखजं वचः । इत्युज्ज्वलनीलमणिः ॥ ( यथा, गीतगोविन्दे । १ । ७६ ।
"उन्मादमदनमनोरथपथिक-
वधूजनजनितविलापे ।
अलिकुलसङ्कुलकुसुमसमूह-
निराकुलवकुलकलापे ॥")

विलालः, पुं, यन्त्रम् । इति शब्दचन्द्रिका ॥ बिड़ालः । इत्यमरटीका ॥

विलासः, पुं, ( वि + लस + घञ् । ) हावभेदः । इत्यमरः ॥ ( यथा, कुमारे । ५ । १५ ।
"लतासु तन्वीषु विलासचेष्टितं
विलोलदृष्टं हरिणाङ्गनासु च ॥")
लीला । इति मेदिनी ॥ ( यथा, भागवते । ३ । २५ । ३५ ।
"तैर्दर्शनीयावयवैरुदार-
विलासहासेक्षितवामसूक्तैः ॥")
"लीला विलासादयः शृङ्गारभावजाः क्रिया हावशब्देनोच्यन्ते । प्रियसमीपगमने यः स्थाना-सनगमनविलोकनेषु विकारोऽकस्माच्च क्रोध-स्मितचमत्कारमुखविकूणनं स विलासः । तथा च ।
'यो वल्लभं प्राप्नुवतो विकारो
गत्यासनस्थानविलोकनेषु ।
तथा स्मितं क्रोधचमत्कृती च
विकूणनं चाननगतं विलासः ॥'
तथान्यत्र ।
'तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु ।'
तात्कालिको दयितालोकनादिभवः ।" इति भरतः ॥ * ॥ अपि च ।
"गतिस्थानासनादीनां मुखनेत्रादिकर्म्मणाम् ।
तात्कालिकन्तु वैशिष्ट्यं विलासः प्रियसङ्गजम् ॥"
इत्युज्ज्वलनीलमणिः ॥
अन्यच्च ।
"यद्रूपं तदभेदेन स्वरूपेण विराजते ।
आकृत्यादिभिरन्यादृक् स तदेकात्मरूपकः ।
स विलासः स्वांश इति धत्ते भेदद्वयं पुनः ॥"
तत्र विलासः ।
"स्वरूपमन्याकारं यत्तस्य भाति विलासतः ।
प्रायेणात्मसमं शक्त्या स विलासो निगद्यते ॥
परमव्योमनाथस्तु गोविन्दस्य यथा स्मृतम् ।
परमव्योमनाथस्य वासुदेवश्च यादृशः ॥"
स्वांशः ।
"तादृशो न्यूनशक्तिं यो व्यनक्ति स्वांश ईरितः ।
सङ्कर्षणादिर्मत्स्यादिर्यथा तत्तत्स्वधामसु ॥"
इति भागवतामृतम् ॥

विलासमन्दिरं, क्ली, ( विलासस्य मन्दिरम् । ) क्रीड़ागृहम् । इति केचित् ॥

विलासविपिनं, क्ली, ( विलासस्य विपिनम् । ) क्रीड़ावनम् । यथा,—
"यदीयहलतो विलोक्य विपदं
कलिन्दतनया जलोद्धतगतिः ।
विलासविपिनं विवेश सहसा
करोतु कुशलं हली स जगताम् ॥"
इति छन्दोमञ्जरी ॥

विलासविभवालसः, त्रि, लुब्धः । इति जटाधरः ॥

विलासिनी, स्त्री, ( विलासोऽस्या अस्तीति । विलास + इनिः । ङीप् । ) नारी । इति राज-निर्घण्टः ॥ (यथा, ऋतुसंहारे । ४ । ३ ।
"न बाहुयुग्मेषु विलासिनीनां
प्रयान्ति सङ्गं वलयाङ्गदानि ॥")
वेश्या । इति धनञ्जयः ॥ ( यथा, महाभारते । ३ । ४६ । १४ ।
"सिद्धचारणगन्धर्व्वैः सा प्रयाता विलासिनी ।
बहवाश्चर्य्येऽपि वै स्वर्गे दर्शनीयतमाकृतिः ॥"
विलासशालिनी । यथा, गीतगोविन्दे ।१।४०।
"विलासिनि ! विलसति केलिपरे ॥")

विलासी, [ न् ] पुं, (विलासोऽस्यास्तीति । विलास + इनिः ।) भोगी । व्यालः । (उभयार्थे प्रमाणं यथा, कुट्टनीमते । १८ ।
"तस्या खगपतितनुरिव विलासिनां हृदय-
शोकसंजननी ॥"
"विले आसत इति विलासिनः सर्पाः पक्षे विल-सनशीला भोगिनः ।" इति तट्टीका ॥ * ॥ )
कृष्णः । अग्निः । चन्द्रः । इति मेदिनी ॥ स्मरः । हरः । इति शब्दरत्नावली ॥ (विलास-शीले, त्रि । यथा, रघुः । ६ । ४३ ।
"परभृताविरुतैश्च विलासिनः
स्मरबलैरबलैकरसाः कृताः ॥")

विलीनः, त्रि, ( वि + ली + क्तः । ) प्राप्तद्रवीभाव-स्वर्णादिः । तत्पर्य्यायः । विद्रुतः २ द्रुतः ३ । इत्यमरः ॥ विश्लिष्टः । विशेषेण लीनः । यथा,—
"करादस्य भ्रष्टे मधु शिखरिणी हन्त शिरसो-
विलीनाः स्मः सत्यं नियतमवधेयं तदखिलैः ।
इति व्रजस्त्रीपाशुचितमित्थं तालापचकित-
स्मितं बिभ्रद्देवो जयतु गोवर्द्धनधरः ॥"
इति छन्दोमञ्जरी ॥

विलेखनं, क्ली, लेखनम् । विपूर्व्वकलिखधातोरनट् (ल्युट्) प्रत्ययेन निष्पन्नम् ॥

विलेप:, पुं, लेप: । विपूर्व्वकलिपधातोर्घञ्प्रत्ययेन निष्पन्न: ॥ ( यथा, भागवते । १० । ४२ । १ ।

"अथ व्रजन् राजपथेन माधव:
स्त्रियं गृहीताङ्गविलेपभाजनाम् ।
विलोक्य कुब्जां युवतीं वराननां
पप्रच्छ यान्तीं प्रहसन् रसप्रद: ॥")

विलेपनं, क्ली, (विलिप्यतेऽङ्गमनेनेति । वि + लिप + ल्युट् ।) गात्रानुलेपनयोग्यं पिष्टं द्रवं वा सुगन्धिद्रव्यम् । तत्पर्य्याय: । गात्रानुलेपनी २ वर्त्ति: ३ वर्णकम् ४ । इत्यमर: ॥ "द्वे गात्रानुलेपनयोग्ये वर्त्तितविलेपने ।
'वर्णकादिद्वयं कुङ्कुमचन्दनादिविलेपने ।'
इति केचित् । विलिप्यतेऽनेन करणेऽनट् विलेपनम् ।" इति तट्टीकायां भरत: ॥ कुङ्कुमादिविलेपनम् । तत्पर्य्याय: । समालम्भ: २ । इति च वर्णेषु अमर: ॥

विलेपनी, स्त्री, ( वि + लिप् + कर्म्मणि करणे वा ल्युट् । ङीप् ।) यवागू: । सुवेशस्त्री । इति मेदिनी ॥

विलेपी, स्त्री, ( विलिप्यतेऽसाविति । वि + लिप + कर्म्मणि घञ् । स्त्रियां ङीप् ।) यवागू: । इत्यमर: ॥
"अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे ।
मण्डश्चतुर्द्दशगुणे यवागू: षड्गुणेऽम्भसि ॥"
इति वैद्यकोक्तो भेद इह नादृत: । इति तट्टीकायां भरत: ॥ अस्या गुणा: ।
"विलेपी तर्पणी लघ्वी ग्राहिणी तृष्णाप्रहा ॥"
इति राजवल्लभ: ॥

विलेपी, [ न् ] त्रि, लेपनकर्त्ता । विलेपयति य: इत्यर्थे णिनिप्रत्ययेन निष्पन्न: ॥ ( यथा, कथासरित्सागरे । ३७ । २५ ।
"मन: प्रागनुरागेण रञ्जित: कान्तरात् मम ।
पश्चात् पुष्पविलेपिन्या अङ्गरागेण ते कर: ॥")

विलेप्य:, पुं, ( वि + लिप् + यत् । ) यवागू: । इति शब्दरत्नावली ॥ विलेपनीये, त्रि ॥ ( यथा, भागवते । ११ । २७ । १४ ।
"स्नपनं त्वविलेप्यानामन्यत्र परिमार्ज्जनम् ॥")

वि(बि)लेवासी, [ न् ] पुं, ( बिले गर्त्ते वसतीति । वस + णिनि: । "शयवासीति ।" ६ । ३ । १८ । सप्तम्या अलुक् । ) सर्प: । इति शब्दरत्नावली ॥

वि(बि)लेशय:, पुं, (बिले शेते इति । बिले + शी + "अधिकरणे शेते: ।" ३ । २ । १५ । इत्यच् । शय-वासिवासिष्विति अलुक् ।) सर्प: । इत्यमर: ॥ मूषिक: । इति जटाधर: ॥ गोधा । शश: । शल्लकी । यथा,—
"गोधाशशभुजङ्गाखुशल्लक्याद्या बिलेशया: ।
बिलेशया वातहरा मधुरा रसपाकयो: ।
बृंहणा बद्धविण्मूत्रा वीर्य्योष्णा अपि कीर्त्तिता: ॥"
इति भावप्रकाश: ॥
(गर्त्तशायिनि, त्रि । यथा, महाभारते ।२।४५।४।

"स दृश्यो विलम् गर्त्तं जलमागाधोसुखाग ।
युक्तलक्षणवियुक्तं वै वीरवकलयमायितान् ।
तं तमुच्च शनैराजमादाय विलेपयम् ॥")

विलोकनं, क्ली, आलोकनम् । विपूर्व्वलोकधातोरनट्-(ल्युट्)-प्रत्ययेन निष्पन्नम् ॥ ( यथा, किराते । ९ । २६ ।
"अनुवनेव वनाधिपतेरयो
वनविलोकनविस्मितमानस: ॥")

विलोकितं, त्रि, आलोकितम् । विपूर्व्वलोकधातो: क्तप्रत्ययेन निष्पन्नम् ॥

विलोचनं, क्ली, ( विलोच्यते दृश्यतेऽनेनेति । वि + लोचि + ल्युट् । ) चक्षु: । इति जटाधर: ॥ ( यथा, कुमारे । ३ । ६७ ।
"उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥")
दर्पणश्च ॥ (विशाले लोचने यस्येति । विशालनयने, त्रि । यथा, देवीभागवते । ५ । ३१ । ४३ ।
"यदि ते वक्रेऽस्ति कृपा भव भामिनि ।
लम्बोष्ठी कुनखी क्रूरा श्यामवर्णा विलोचना ॥")

विलोटक:, पुं, ( विशेषेण लुटतीति । वि + लुट + ण्वुल् । ) जलमीन: । इति शब्दचन्द्रिका ॥ वेले माछ इति भाषा ॥

विलोडनं, क्ली, ( वि + लुड + ल्युट् । ) मन्थनम् । आलोडनम् । यथा,—
"राधिका दधिविलोडनस्थिता
कृष्णवेणुनिनदैरथोद्गता ।
यामुनं तटनिकुञ्जमञ्जसा
सा जगाम सलिलाहृतिच्छलात् ॥"
इति छन्दोमञ्जरी ॥

विलोडितं, क्ली, ( वि + लुड + क्त: । ) तक्रम् । इति राजनिर्घण्ट: ॥ आलोडिते, त्रि ॥

विलोप:, पुं, विशेषेण लोप: । विपूर्व्वलुपधातोर्घञ्प्रत्ययेन निष्पन्न: ॥ ( यथा, कामन्दकीयनीतिसारे । ५ । ६५ ।
"कार्य्ये काले च पात्रे च न हि वृत्तिं विलोपयेत् ।
वृत्तहृत्तिविलोपेन राजा भवति गर्हित: ॥")

विलोभ:, पुं, विलोभनम् । विशेषलोभ: । विपूर्व्वकलुभधातोर्घञ्प्रत्ययेन निष्पन्न: ॥

विलोमं, क्ली, अरघट्टक: । इति मेदिनी ॥

विलोमं, त्रि, विपरीतम् । तत्पर्य्याय: । प्रतिकूलम् २ अपसव्यम् ३ अपष्ठुरम् ४ वामम् ५ प्रसव्यम् ६ प्रतीपम् ७ प्रतिलोमम् ८ अपष्ठु ९ । इति हेमचन्द्र: ॥ सव्यम् १० विलोमकम् ११ । इति जटाधर: ॥ ( यथा, बृहत्संहितायाम् । ९४ । १२ ।
"हुतभुक्कलितदृष्टि: स्वप्रवीणो विलोमो
भयजननिहितभक्ती नैकशोऽव्यक्तशब्द ॥")

विलोम:, पुं, सर्प: । वरुण: । कुक्कुर: । इति मेदिनी ॥

विलोमक:, त्रि, ( विलोम एव । स्वार्थे कन् । ) विपरीत: । इति जटाधर: ॥

विलोमजिह्व:, पुं (विलोमा जिह्वा यस्य ।) हस्ती । इति त्रिकाण्डशेष: ॥

विलोमवर्ण:, पुं. ( विलोम: प्रतिलोमो वर्ण: । ) वर्णसङ्करजाति: । इति स्मृति: ॥

विलोमी, स्त्री, आमलकी । इति मेदिनी ॥

विलोल:, त्रि, ( विशेषेण लोल: । ) चञ्चल: । यथा,—
"क्वापि विलासविलोलविलोचनखेलनजनितमनोजम् ।
ध्यायति मुग्धवधूरधिकं मधुसूदनवदनसरोजम् ॥"
इति श्रीगीतगोविन्दे । १ । ४२ ॥

वि(बि)ल्लं, क्ली, आलवालम् । यथा,—
"अवघट्टावटौ तुल्यौ गर्त्तं बिल्लं तलञ्च तत् ।
हिक्कप्रपालवालं स्यात् केदार: पांशुमर्द्दन: ॥"
इति त्रिकाण्डशेष: ॥
हिङ्गु: । इति शब्दचन्द्रिका ॥

वि(बि)ल्लसूला, स्त्री वाराहीकन्द: । इति शब्दचन्द्रिका ॥

वि(बि)ल्लसू:, स्त्री, प्रसूतदशपुत्रा । यथा,—
"सप्तपुत्रप्रसूतायां सप्तसू: सुतसप्तका ।
बिल्लसूर्द्दशपुत्रा स्यादेकाधिका तु वल्लसू ॥"
इति शब्दरत्नावली ॥

वि(बि)ल्वं, क्ली, बिल्ववृक्षस्य फलम् । इति मेदिनी ॥ ( यथा,—
"खल: सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥"
इत्युद्भट: ॥ )
पलपरिमाणम् । इति शब्दमाला ॥ ( यथा, सुश्रुते । ६ । १८ ।
"अत ऊर्द्ध्वं प्रवक्ष्यामि पुटपाकप्रसाधनम् ।
द्वौ बिल्वमात्रौ श्लक्ष्णस्य पिण्डौ मांसस्य पेषितौ ।
द्रवाणां बिल्वमात्रन्तु द्रवाणां कुडवो मत: ॥")

वि(ब)ल्व:, पुं, (बिल भेदने + उल्वादयश्चेति साधु: ।) फलवृक्षविशेष: । बेलगाछ इति भाषा ॥ तत्पर्य्याय: । शाण्डिल्य: २ शैलूष: ३ मालूर: ४ श्रीफल: ५ । इत्यमर: ॥ महाकपित्थ: ६ गोहरीतकी ७ पूतिवात: ८ अतिमङ्गल्य: ९ महाफल: १० । इति रत्नमाला ॥ शल्य: ११ हृद्यगन्ध: १२ शलाटु: १३ कर्कटाह्व: १४ शैलपत्र: १५ शिवेष्ट: १६ पत्रश्रेष्ठ: १७ त्रिपत्र: १८ गन्धपत्र: १९ लक्ष्मीफल: २० गन्धफल: २१ दुरारुह: २२ त्रिशाखपत्र: २३ त्रिशिख: २४ शिवद्रुम: २५ सदाफल: २६ सत्यफल: २७ सुभूतिक: २८ समीरसार: २९ । अस्य फलगुणा: । मधुरत्वम् । हृद्यत्वम् । कषायत्वम् । गुरुत्वम् । पित्तकफज्वरातिसारनाशित्वम् । रुचिकारित्वम् । दीपनत्वञ्च । अस्य मूलगुणा: । त्रिदोषघ्नत्वम् । मधुरत्वम् । लघुत्वम् । वान्तिनाशित्वञ्च ॥ अस्य कोमलफलगुणा: । स्निग्धत्वम् । गुरुत्वम् । संग्राहित्वम् ।

दीपनत्वञ्च । अस्य पक्वफलगुणाः । मधुरत्वम् । गुरुत्वम् । कटुत्वम् । तिक्तत्वम् । कषायत्वम् । उष्णत्वम् । संग्राहित्वम् । त्रिदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥ * ॥ अपि च ।
"श्रीफलस्तुवरस्तिक्तो ग्राही रूक्षोऽग्निपित्तकृत् । वातः श्लेष्महरो बल्यो लघुरुष्णश्च पाचनः ॥"
इति भावप्रकाशः ॥ * ॥
किञ्च ।
"बिल्वं बालं कषायोष्णं पाचनं वह्निदीपनम् । संग्राहि तिक्तकटुकं तीक्ष्णं वातकफापहम् ॥ पक्वं सुगन्धि मधुरं दुर्जरं ग्राहि दोषकृत् ॥ फलेषु परिपक्वेषु यो गुणः समुदाहृतः । बिल्वादन्यत्र स ज्ञेयो बिल्वमामं गुणोत्तरम् ॥ कफवातामपित्तघ्नी ग्राहिणी बिल्वपेशिका ॥"
इति राजवल्लभः ॥
अन्यच्च ।
"काञ्जिके संस्थितं बिल्वमग्निसन्दीपनं परम् ॥"
इति वैद्यकम् ॥ * ॥
बिल्वोत्पत्त्यादिर्यथा,—
"बिल्वादिपालनं कुर्य्यात् शुभं भयदमन्यथा । श्रीवृक्षान् रोपयेत् यत्र यदि स्वर्गाय चेच्छति ॥ स्वर्गे वापीव या धेनुर्मोक्षदा सा मता मही ।
तद्गोमयभवो बिल्वः श्रीश्च तस्मादजायत ॥ निराहतिं पतिं दृष्ट्वा क्रोधेन महता ततः । शप्ता सा उमया देवी सर्व्वभोग्या भवाधमे ॥ ततः संप्रणता भाता मामेवं भवतु प्रिये । प्रियत्वं सर्व्वलोकेषु सुरासुरनमस्कृता ॥ मातः त्वं सर्व्वलोकानामवज्ञानां विशेषतः । एवमाश्वसय्य तदा प्राप्नोषि भयापह ॥ वरं ददौ च सा कामं प्राप्नोष्यप्रदं नृप । क्षीराब्धौ त्वं भवाङ्गेन सह गोभिर्धनेन च ॥ ममन्थ मथने यावत् ततो विष्णुमवाप्स्यसि । पतिं त्वं सर्व्वलोकानां पूज्यं श्रेष्ठं महाबलम् ॥ तस्य वक्षःस्थिता भद्रे हृष्टा त्वं विचरिष्यसि । लोकभोग्या च भूमिष्ठावन्येषु नृपेषु च ॥ न चालिक्षपद्मौघादि न वेश्म न शुभा मतिः । भविष्यति यदा पैत्र चपला जलबिन्दुवत् ॥ बिल्ववृक्षः प्रियः शम्भोस्तव योनिर्भविष्यति । सर्व्वपुष्पोत्तमश्रेष्ठो देवाचारो मनोरमः ॥ * ॥ अच्छेद्यः सर्व्वलोकानां छेदनाश्च सदा नृणाम् । ये च पापा दुराचाराः श्रीतरोश्छेदकारिणः । ते नरकेष्वादिनरके पात्यन्ते ब्रह्मणो दिनम् ॥ सुदुःखिता भविष्यन्ति नरा दुष्कृतिनः सदा । तत्र देवि भयं नित्यं चिरं राजा न जीवति ॥ न च सम्पत्तिः कश्चिद्बिल्ववृक्षस्य छेदकः ॥ क्रियते यत्र विच्छेदः सपुष्पफलितस्तरोः । अनावृष्टिभयं घोरं तस्मिन् देशे प्रजायते ॥"
इति वह्निपुराणे वामनप्रादुर्भावनामाध्यायः ॥ * ॥
मतान्तरे तदुत्पत्तिर्यथा,—
शिव उवाच ।
"मातः समुत्पन्नवने मा मा छिन्धि ममं परम् । वक्षे छिन्नभग्नो नामो जायतां पुनरेव नः । आशा ते परमा भक्तिः पूर्व्वत्वेन मनोरथः ॥ यच्च छिन्नभग्नो दत्तो मत्सिरोपरि ते शुभे । सोऽस्तु वृक्षः स्थितौ पुष्पो नाम्ना श्रीफल इत्युत ॥ मूर्तिमांश्च मे भक्तिर्दत्तः श्रीफलनामकः । सन्तोषये शिवाबालौ यावच्चन्द्रदिवाकरौ ॥ स तरुर्भम वै नित्यं परमः सुप्रियो भवेत् । तत्पत्रेणैव मे पूजा भविष्यति न चान्यथा ॥ सर्व्वतुलाप्रमाणादि पुण्यान्यन्यानि च ध्रुवम् । श्रीफलच्छदवेशस्य कलां नार्हन्ति कोटिकाम् ॥ यथा मे श्रीफलतरुर्येषा सन्नाननं मम । तथा प्रियतमं नित्यं नियतः श्रीफलच्छदः ॥ इत्युक्तः स तयेत्युक्ता महेशोऽन्तर्हधे सति । कथानमोपनयेन वृक्षः श्रीफलकोऽन्वितः ॥"
इति बृहद्धर्म्मपुराणे १० अध्यायः ॥ * ॥
तस्य नामयोद्भवं यथा,—
"यज्ञानां येह संभूतो यथा हरिहरस्य च । गोमयो रोचना क्षीरं मूत्रं दधि घृतं गवाम् ॥ अङ्गानि पवित्राणि तथा सिद्धिकराणि च । उत्थितो बिल्ववृक्षस्तु गोमयाच्छुनिसत्तम । तस्यास्तौ वसते लक्ष्मीः श्रीवृक्षस्तेन चोच्यते ॥"
इति वह्निपुराणे गेयावधर्म्मे शुद्धिप्रसनामाध्यायः ॥ * ॥
देव्युवाच ।
"वैशाखशुक्लपक्षस्य तृतीयायां सखि स्वयम् । जातो वै श्रीफलतरुर्म्माहात्म्यं तस्य कथ्यते ॥ जाते तु श्रीफलतरौ देवाः सर्व्वे सवासवाः । ब्रह्मा नारायणश्चापि देवपत्न्यः समागताः ॥ ददृशुः स्निग्धविटपं निपत्रैर्मृदुकैर्युतम् । दीप्यमानं तत्रैव शिवरूपं शिवप्रदम् ॥ प्रशेसुः विविधस्तत्र वासवाद्याः सुखान्विताः । तत्रच्चाच भगवानुवाच विष्णुरव्ययः ॥
विष्णुरुवाच ।
अयं नाम्ना बिल्व इति मालूरः श्रीफलस्तथा । शाण्डिल्यश्चाच शैलूषः शिवः पुण्यः शिवप्रियः ॥ देवावासस्तीर्थपदः पापघ्नः कोमलच्छदः । जयो विजयनामा च विष्णुस्त्रिनयनो वरः ॥ धूम्राक्षः शुक्लवर्णश्च संयमी श्राद्धदेवकः । इत्येकविंशतिं नाम्नां दृष्ट्वास्य तरूत्तमः ॥ * ॥ अतःप्रत्यक्ष कालात् सर्व्वाग्रतीर्थमुच्यते । अधो भुजेतथा तीर्थमलक्षीर्थमयं सखि ॥ अर्द्धमध्यं हरो शेयः पत्रं वामं विधिः स्वयम् । अहं दक्षिणपत्रं च नियतदक्षिणत ॥ अस्य च्छायां च पत्रं च लङ्घयेन्न यदा कृपीत् । हरते बलमायुः यदा प्राप्नोति चिरं हरेत् ॥ पद्मपुष्पसहस्रस्य पत्रपत्रसमापि च । दर्शने प्रकृतौ स्पर्शे ध्यानसन्मार्जने तथा । पूजने चवने दाने क्रमाच्चन्द्रादुदीरयेत् ॥ बिल्ववृक्ष महाभाग सदैवस्य सदा प्रियः । शिवपद्मसम्बोधिः प्रसीदाखिलतारण ॥ नर एतेन मन्त्रेण प्रणामः प्रगे शुभम् । प्रणमेत् स शिवं पश्येत् प्रणमेत्तदनन्तरम् ॥ ॐ नमो बिल्वतरवे सदा शङ्कररूपिणे । सकलानि ममाङ्गानि कुरुष्व शिवरूपिण ॥ मन्त्रेणानेन मालूरमङ्गाङ्गेः प्रणमेत् सती । स वैष्णवो मतो भक्तः स मे प्रियतरः परः ॥ शिवपूजक मालूर प्रियस्पर्श महातरो । नुदामि त्वां महापापसङ्घात् मे प्रणाशय ॥ देवदानवरेशेश ध्यानस्तं सुमनोहरम् । क्रोडस्थाशश्च विधुना मार्ष्टवे तत् प्रसीद मे ॥ मन्त्रेणानेन बिल्वस्य दत्वाचमनं जलेत् । सगोमयजलैः प्रातःसमये स तु वैष्णवः ॥ ॐ द्रुमाय श्रीफलाय नमो दत्तभिरक्षरैः । मन्त्रेण पूजयेद्दिव्यं सर्व्वस्वस्तिकमातथा ॥ पुष्पवृक्ष महाभाग मालूर श्रीफल प्रभो । महेशपूजनार्थाय तत्पत्राणि चिनोम्यहम् ॥ मन्त्रेणानेन चिनुयाद्बिल्वपत्राणि भक्तितः । पञ्चान्तदादशीसायं सन्ध्याशुभिषुकालतः ॥ शाखाभङ्गो न कर्त्तव्यो नैवारोहेत्तथा तरुम् । यस्मात्तस्य चिनुयान्न शाखाभङ्गं क्वचित् ॥ खण्डितैश्च शिवः पूज्यः पत्रैरन्यैश्च खण्डितैः । मासमात्रानन्तरं बिल्वपत्रं पर्य्युषितं भवेत् ॥ पुष्पा एतेन वै देवाः स्वर्य्यलक्ष्मोदरौ विना । बिल्ववृक्षवनं यत्र सा तु वाराणसी पुरी ॥ पञ्च बिल्वद्रुमा यत्र तत्र तिष्ठेत् स्वयं हरिः । सप्त बिल्वद्रुमा यत्र तत्र दुर्गायुतो हरः ॥ एको बिल्वतरुर्यत्र तत्र शम्भुर्गिरा सह । बिल्ववृक्षा यत्र दश तत्र शम्भुर्गणैः सह ॥ एतान्युक्तानि तीर्थानि देवाः सर्व्वे मरुद्गणैः । यत्र वाप्यां गृहस्थस्य कोणे ईशाननामके । जायते श्रीफलतरुर्न तत्र विपदः क्वचित् ॥ पूर्व्वस्यां सुखदः स स्याद्दक्षिणे यमभीतिहा । पश्चिमे च प्रजादायी दृष्टो बिल्व उदाहृतः । श्मशाने च नदीतीरे प्रान्तरे वा वनान्तरे । बिल्ववृक्षतलं प्रोक्तं सिद्धपीठस्थलं सुधीः ॥ न मध्यप्राङ्गणे वृक्षं स्थापयेत् श्रीफलात्मकम् । दैवाद्यदि प्रजायेत तदा शिववदर्च्चयेत् ॥ चैत्रादिचतुरो मासान् शम्भवे परमात्मने । दत्तं स्यात्बिल्वपत्रेकं लक्षधेनुसमं सुराः ॥ मध्याह्नकाले ये मर्त्या बिल्वं कुर्व्वुः प्रदक्षिणम् । तैः सुमेरुगिरिवरः स्नात एव प्रदक्षिणम् ॥ न छिन्द्यात् श्रीफलतरुं न दहेत् काष्ठमेव च । बिना ब्राह्मणयज्ञार्थं पतितो बिल्वविक्रयी ॥ पक्वबिल्वसमुद्भूतं यो धत्ते मूर्ध्नि मानवः । यमाधिकारो नाम स्यात् तृतः पापोपपातकैः ॥ बिल्वपत्रं फलं बीजं भूमौ पतितमोश्वरः । स्वयं गृह्णाति शिरसा वैयर्थ्यभयशङ्कितः ॥ चैत्रादिचतुरो मासान् निषेद्बिल्वतरुं सती । यथा स्निग्धो भवेद्वृक्षस्तथा तत्पितरोऽपि च ॥ चैत्रादिचतुरो मासान् सदा भ्रमति शङ्करः । नवीनबिल्वपत्रार्थी भुक्तिमुक्तिप्रदायकः ॥ हरिद्वारपुरे यत्र वैद्यनाथो महेश्वरः । तत्रायत्यो बिल्ववृक्षः सर्व्वतस्य उदाहृतः ॥

कामरूपे कामतश्च कामाख्यासन्निधावपि ।
काञ्चीपुरे पुरः प्रोक्तः श्रीपर्ब्बतेऽप्यपूर्व्वकः ।
तेऽपि तीर्थविशेषाः स्युर्बिल्वैरपि वराननाः ॥

देव्युवाच ।

एतस्मिन्नेव काले तु शम्भुरागत्य मे सखि ।
कथया विष्णुना सार्द्धं पूजितः श्रीफलैरभूत् ॥
ततः सर्व्वे कथायाञ्च जग्मुर्नारायणादयः ।
कपिलोऽयं मया सख्यौ बिल्ववृक्षस्वरूपतः ॥
अहं वा संप्रोक्तः शिवनन्दकथापुण्यनिचयः
पवित्रः श्रोतव्यः सकलकलुषघ्नः खलु सताम् ।
शिवे विष्णौ भेदापहरण उदारः सुमनसां
सुधीषु संपाद्यः प्रभवति शिवस्यापि निकटः ॥”

इति च वृहद्धर्म्मपुराणे बिल्ववृक्षमाहात्म्यम् ११ अध्यायः ॥ * ॥ तन्त्रमते तदुत्पत्तिर्यथा,—

देव्युवाच ।

“कथं वा विष्णुवनिता बिल्ववृक्षो बभूव च ।
ज्योतीरूपं महेशं प्रार्थिता ब्रह्मादिभिः सदा ॥
तत्र मेरुपृष्ठशाखाग्रे सर्व्वेषां प्रियतां गता ।
विष्णोर्हृदिप्रिया नित्यं साभूत् सरस्वती सदा ॥
तावत् प्रीतिर्न सम्प्राप्ता जायते केशवस्य च ।
इतिचिन्तापरा लक्ष्मीर्ययौ श्रीशैलमन्दिरम् ॥
प्राप्य सलिङ्गमेकान्तं तपस्तेपेऽतिदारुणम् ।
तथापि यदि नैवाभूत् तपो मे परमेश्वरि ॥
तदा वा वृक्षरूपेण स्थिता लिङ्गप्रिया सती ।
पत्रैः पुष्पैः फलैः तोयैः पूजयामास सन्ततम् ॥
कोटिवर्षे महादेवि ततो मेरुप्रसादोऽभवत् ।
तेनैवानुग्रहेणैव विष्णोर्वक्षःस्थिताभवत् ॥
सदैव परमेशानि शिवपक्षा सदैव हि ।
अतस्तु कारणाद्देवि तद्रूपेण हरिप्रिया ॥
सदैव पूजयेन्मां वा भक्त्या वातुला प्रिये ।
अतस्तं वृक्षमाश्रित्य तिष्ठामि च दिवानिशम् ॥
सर्व्वतीर्थमयो देवि सर्व्वदेवमयः सदा ।
श्रीवृक्षः परमेशानि अतएव न संशयः ॥ * ॥
तत्पत्रैस्तत्फलैर्वा तत्पत्रैः प्रपूजयेत् ।
तस्मात्तत्वल्कलैर्वापि स मे भक्तः स मे प्रियः ॥
तस्मात्तत्वल्कलं भाले यो धारयति कन्यकाम् ।
तस्य शिवपुत्रा वा गणेशो महाकृता ॥
अतस्तत्वल्कलं देवि न धारयति कश्चन ।
तत्त्वं तत्फलं वा कदापि धारयेन्नहि ॥
बिल्वमूले महेशानि प्राणांस्त्यजति यो नरः ।
रुद्रदेहो भवेत् सत्यं पापकोटियुतोऽपि सन् ॥”

इति योगिनीतन्त्रे पूर्व्वखण्डे ५ पटलः ॥ * ॥

अपि च ।

“बिल्ववृक्षं तथा देवि भगवान् शङ्करः स्वयम् ।
बिल्ववृक्षतले स्थित्वा यदि प्राणांस्त्यजेत् सुधीः ॥
तत्क्षणात् मोक्षमाप्नोति किमन्यत् तीर्थकोटिभिः ।
यत्र ब्रह्मादयो देवाः तिष्ठन्ति शक्तिहेतवे ॥
बिल्ववृक्षतले स्नानं यदि विद्यादिपूरितम् ।
तदैव प्राकृतं चैवं सर्व्वतीर्थमयं सदा ॥
सर्व्वपीठमयं तत्तु सर्व्वदेवमयं सदा ।
न छिन्द्यात् प्राकृतं चैवं न च तच्छ्राखां भजेत्
प्रिये ॥

समीपे न च धार्य्यञ्च बिल्ववृक्षो यदि प्रिये ।
काञ्चीपुरसमं तत् तत्र प्राणान् त्यजेद्यदि ।
किमन्यत् कोटितीर्थेन काशीवासेन किं प्रिये ॥”

इति पुरश्चरणचन्द्रिकायां १० पटलः ॥ * ॥

तद्दानविधिर्यथा,—

“पत्रं वा यदि वा पुष्पं फलं नैवमयोनिजम् ।
यथोक्तं तथा देयं बिल्वपत्राद्ययोनिजम् ॥”

इति मातृकातन्त्रे ५५ पटलः ॥

श्रीशिव उवाच ।

“शृणु देवि प्रवक्ष्यामि रहस्यं त्रिजटात्मकम् ।
पत्रं सर्वमयं देवि अतुलं वरवर्णिनि ॥
श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः ।
विष्णुप्रीतिकरश्चैव मम प्रीतिकरः सदा ॥
महाविष्णुप्रियाः पत्रे हन्ताच शक्तिरूपिणी ।
हन्तभक्ते तु वज्रं स्यात् पत्रे सप्तपदं प्रिये ॥
त्रिजटापत्रकेनैव हरं वा हरिमर्च्चयेत् ।
केवलं तस्य तेनैव शक्तिपूजा विशेषतः ॥
पत्रं पुष्पं फलं तोयं नैवेद्यं धूपदीपकम् ।
दत्त्वा यद्यत् फलं प्राप्तं तस्मात् कोटिगुणं
भवेत् ॥

सर्व्वैरर्चनतो देवि त्रिजटामेकमर्पणम् ।
कैवल्यदो हरिश्चैव शाक्तोऽहं त्वां वदाम्यहम् ॥
त्वयि कैवल्यदं प्राप्तं धर्म्मकामार्थदं प्रिये ।
वज्रहीनमिदं देवि प्राप्नुयाद्वाञ्छितं फलम् ॥
वज्रं च्छिद्यते नूनं वज्राघातेन पार्व्वति ।
तस्माच्च साधकेन्द्रश्च वज्रहीनं प्रदापयेत् ॥” * ॥
बिल्वपत्रधारणफलान्तरगमनफलम् । यथा,
“धात्रीं गृहीत्वा यो गच्छेत् सर्व्वसिद्धिमवा-
प्नुयात् ।

ऊर्द्ध्वे सहस्रेण रविरधः पातुपतत्तथा ।
पुरो माहेश्वरी रक्षेत् पृष्ठे च मृगधारिणी ।
दक्षपार्श्वे च श्रीनाथो वामपार्श्वे प्रजापतिः ।
चन्द्रसूर्य्यौ दृशौ छत्रमयं पादौ करौ सदा ॥”

इति ज्ञानभैरवतन्त्रे शिवपार्व्वतीसंवादे ६ पटलः ॥ ( अस्य गुणाः यथा,—

“बालं बिल्वफलं ग्राहि दीपनं पाचनं कटु ।
कषायोष्णं लघु स्निग्धं तिक्तं वातकफापहम् ॥
पक्वं गुरु त्रिदोषं स्याद्दुर्ज्जरं पूतिमारुतम् ।
विदाहि विष्टम्भकरं मधुरं वह्निमान्द्यकृत् ॥
फलेषु परिपक्वं यद्गुणवत्तदुदाहृतम् ।
बिल्वादन्यत्र विज्ञेयमामन्तद्धि गुणाधिकम् ॥
द्राक्षाबिल्वशिवादीनां फलं शुष्कं गुणाधि-
कम् ॥”

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

वि(बि)ल्वपेशिका, स्त्री, ( बिल्वस्य पेशिका । ) शुष्कबिल्वशकलम् । बेलसुँठा इति भाषा । यथा,—

“कफवातामशूलघ्नी ग्राहिणी बिल्वपेशिका ।”

इति राजनिर्घण्टः ॥

वि(बि)ल्वा, स्त्री, ( बिल्व+टाप् । ) हिङ्गुपत्री । इति राजनिर्घण्टः ॥ ( गुणादयोऽस्या हिङ्गुपत्रीशब्दे ज्ञातव्याः ॥)

विवक्षा, स्त्री, वक्तुमिच्छा । वचवचधातोरप्रत्ययेन निष्पन्नमिदम् । यथा । विवक्षावशात् कारकाणि भवन्ति । इति व्याकरणटीका ॥ शक्तिः । यथा,—

“शक्तस्योऽपि सर्व्वेतद्विद्विशस्य विशिषक्षम् ।
संख्यया गुणनीतिज्ञादविवक्षा प्रवर्त्तते ॥”

इत्यमरकोशनीतिसूत्रम् ॥

विवक्षितः, त्रि, वक्तुमिष्टः । सन्नन्तवचधातोः क्तप्रत्ययेन निष्पन्नमिदम् । शब्दार्थः । यथा । उपादेयतावाः संख्याया विवक्षितत्वं युक्तम् । अनुपादेयगता संख्या न विवक्षिता । इति माधवाचार्य्यः । इत्यमरकोशनीतिसूत्रम् ॥

विवदमानः, त्रि, विवादकर्त्ता । विपूर्व्ववदधातोः शानप्रत्ययेन निष्पन्नः ॥

विवधः, पुं, (विविधो वधो हननं गमनं वा यत्र ।) पर्य्याहारः । स तु धान्यतण्डुलादिः । मार्गः । पन्थाः । इत्यमरभरतौ ॥ व्रीहियवादिः पर्य्याहरणम् । इति स्वामी ॥ उभयतो बद्धशिक्यस्कन्धवाह्यकाष्ठम् । बाँक इति ख्यातम् । इति भानुदीक्षितः ॥ भारः । इति मुकुटहलायुधः ॥

विवधिकः, पुं, ( विवधेन हरतीति । विवध+ “विभाषा विवधवीवधात् ।” ४ । ४ । १७ । इति ठन् । ) वैवधिकः । इत्यमरटीका सारसुन्दरी ॥

विवरं, क्ली, (विवृणोतीति । वि+वृ+पचाद्यच् ।) छिद्रम् । इत्यमरः ॥ ( यथा, रघुः । ११ । १८ ।

“यच्चकार विवरं शिलाघने
ताडकोरसि स रामसायकः ।
अप्रविष्टविषयस्य रक्षसां
द्वारतामगमदन्तकस्य तत् ॥”)

दोषः । इति मेदिनी ॥ ( यथा, महाभारते । १ । १४१ । १७ ।

“एकाग्रः स्यादविवृतो नित्यं विवरदर्शकः ।
राजन्यान् चपलेषु निन्द्योद्विग्नः समाचरेत् ॥”

अवकाशः । यथा, भागवते । ५ । १० । १९ ।

“विशिखच्छिद्विवरं मनाक् च
पदस्थान यत्र व्यवहारतोऽन्यत् ॥”)

विवरणं, क्ली, ( वि+वृ+ल्युट् । ) व्याख्या । इति हलायुधः ॥

विवरनालिका, स्त्री, ( विवरयुक्तं नालं यस्याः । ) वेणुः । इति त्रिकाण्डशेषः ॥

विवर्णः, पुं, ( विरुद्धो वर्णः । ) नीचः । इत्यमरः । २ । १० । १६ ॥ ( यथा, मार्कण्डेये । ४१ । १० ।

“भैक्षचर्य्या विवर्णेषु जघन्या वृत्तिरिष्यते ।”

त्रि, विगतो वर्णो यस्य । ) मलिनः ॥ ( यथा, रामायणे । २ । २६ । ८ ।

“विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणम् ।
आह दुःखाभिसन्तप्ता किमिदानीमिदं प्रभो ॥”)

विवर्त्तः, पुं, (वि+वृत्+घञ् ।) समुदायः । अपवर्त्तनम् । नृत्यम् । इति विश्वः ॥ ( प्रतिपत्तः ॥ यथा, नैषधे । ३ । ६४ ।

“देशाभिमेव्यवर्त्तविवर्त्तसख्यो
लोकेषुलोकेषुलोकसख्यौ ॥”

समवायिकारणविवरणकार्य्योत्पत्तिः । यथा, सांख्यतत्त्वकौमुद्याम् ।
"एकस्य सतो विवर्त्तः कार्य्यजातं न तु वस्तु सत् ॥")

विवर्त्तनं, क्ली, परिभ्रमणम् । विपूर्व्वकवृतधातोरनट् ( ल्युट् ) प्रत्ययेन निष्पन्नम् ॥ ( यथा, किराते । ५ । ४० ।
"कथयति शिवयोः शरीरयोगं
विषमपदा पदवी विवर्त्तनेषु ॥")

विवशः, त्रि, (विरुद्धं वष्टीति । वि+वश+अच् ।) अवश्यात्मा । अरिष्टदुष्टधीः । इति मेदिनी ॥ हे आसन्नमरणस्य चित्तलक्षणेन दूषितबुद्धौ । विरुद्धं वष्टि विवशः अच् । आसन्नमरणस्यापथ्यं विरुद्धमिष्टम् । तेन दुष्टा धीर्यस्य स तथा । इत्यमरटीकायां भरतः ॥

विवस्वती, स्त्री, सूर्य्यनगरी । इति मेदिनी ॥

विवस्वान्, [त्] पुं, ( विशेषेण वस्ते आच्छादयतीति । वि+वस्+क्विप् । विवस्तेजोऽस्यास्तीति । विवस्+मतुप् । मस्य वः । "तसौ मत्वर्थे ।" १।४।१९ । इति भत्वाद्रुत्वाभावः । ) सूर्य्यः । ( यथा, किराते । ५ । ३८ ।
"भवति दीप्तिरदीपितकन्दरा
तिमिरसंवलितेव विवस्वतः ॥" )
अर्कवृक्षः । इत्यमरः ॥ देवता । इति मेदिनी ॥ अरुणः । इति शब्दरत्नावली ॥ वैवस्वतमनुः । इत्यजयः ॥ (मनुष्यः । इति निघण्टुः ।२।३।२४॥ "वस निवासे इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते' इति क्विप् । इदित्त्वाभावात् भावे भवति । विविधं वसनं विवः । तद्वन्तो विवस्वन्तः । सर्व्वस्यापि मनुष्यस्य यत्किञ्चित् विवसनमस्ति ।" इति तट्टीका ॥ * ॥ परिचरणशीले, त्रि । यथा, ऋग्वेदे । १० । ६५ । ६ ।
"देवेभ्यो दाशद्धविषा विवस्वते ॥"
"हविषा अन्नेन देवान् विवस्वते परिचरते ।" इति तद्भाष्ये सायनः ॥)

विवाकः, त्रि, विवेचनकर्त्ता । यथा,—
"अर्थिप्रत्यर्थिनोर्व्वचनं विरुद्धाविरुद्धं सभ्यैः सह विविनक्ति विवेचयति वा विवाकः ।" इति मिताक्षरा ॥

विवादः, पुं, विरुद्धो वादो विवादः । स च धनविभागादिविषयन्यायादिः । इति भरतः ॥ तत्पर्य्यायः । व्यवहारः २ । इत्यमरः ॥ न्यायादिन्यायः ३ । इति जटाधरः ॥
"ऋणादिदायकलहे द्वयोर्बहुतरस्य वा ।
विवादो व्यवहारश्च द्वयमेतन्निगद्यते ॥"
इति शब्दरत्नावली ॥ * ॥
भ्रात्रादिना विवादनिषेधो यथा,—
"आचरेत् सर्व्वधर्म्मं तद्विपरीतं न चाचरेत् ।
मातापित्रतिथिबन्धुर्विवादं नाचरेत् यती ॥"
इति गारुडे ६१ अध्यायः ॥ * ॥
अष्टादश विवादस्थानानि यथा,—
"तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ।
सम्भूय च समुत्थानं दत्तस्यानपकर्म्म च ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥
सीमाविवादधर्म्मश्च पारुष्ये दण्डवाचिके ।
स्तेयञ्च साहसञ्चैव स्त्रीसंग्रहणमेव च ॥
स्त्रीपुंधर्म्मो विभागश्च द्यूतमाह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिता विदुः ॥"
इति मनुः ॥
अस्यार्थः । धनस्वाम्यस्थिसमर्पणरूपो निक्षेपः । अस्वामिना च कृतो विक्रयः । सम्भूय वणिगादीनां क्रियानुष्ठानम् । दत्तस्य धनस्यापात्रबुद्ध्या क्रोधादिना वा ग्रहणम् । कर्म्मकारस्य भृतेरदानम् । कृतव्यवस्थातिक्रमः । क्रये विक्रये च कृते पश्चात् या विप्रतिपत्तिः । स्वामिपशुपालयोर्विवादः । ग्रामादिसीमाविप्रतिपत्तिः । वाक्पारुष्यं आक्रोशनादि । दण्डपारुष्यं ताडनादि । स्तेयं निह्नवेन धनग्रहणम् । साहसं प्रसह्य धनहरणादि क्रियाश्च परपुरुषसम्पर्कः । स्त्रीसहितस्य पुंसो धर्म्मव्यवस्था । पैतृकादिधनस्य विभागः । द्यूतं अक्षादिक्रीडा । आह्वय पण्यव्यवस्थापूर्व्वकं पक्षिमेषादिप्राणियोधनम् । इति कुल्लूकभट्टः ॥ ( कलहः । यथा, रघुः । ७ । ५३ ।
"परस्परेण क्षतयोः प्रहर्त्रो-
रुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्त्यभावेऽपि कयोश्चिदासी-
देकाप्सरःप्रार्थितयोर्विवादः ॥")

विवादानुगतः, त्रि, (विवादं अनु गतः ।) विवादकर्त्ता । यथा, मिताक्षरायाम् ।
"विवादानुगतं दृष्ट्वा सभ्यस्तत् प्रयत्नतः ।
विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः ॥"

विवादी, [न्] त्रि, ( विवादोऽस्यास्तीति । विवाद+इनिः । ) विवादकर्त्ता । यथा,—
"अनुभावी च यः कश्चित् कुर्य्यात् साक्ष्यं
विवादिनाम् ॥"
इति व्यवहारतत्त्वम् ॥

विवाहः, पुं, ( विशिष्टं वहनम् । वि+वह+घञ् । ) उद्वाहः । दारपरिग्रहः । तत्पर्य्यायः । उपयमः २ परिणयः ३ उद्वाहः ४ उपयामः ५ पाणिपीडनम् ६ । इत्यमरः ॥ दारकर्म्म ७ करग्रहः ८ । इति शब्दरत्नावली ॥ पाणिग्रहणम् ९ निवेशः १० पाणिकरणम् ११ । इति जटाधरः ॥ स चाष्टविधः । यथा,—
"ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥
यज्ञस्थायर्त्विजे दैवमादायार्षस्तु गोद्वयम् ।
चतुर्द्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥
इत्युक्त्वा चरतां धर्म्मं सह या दीयतेऽर्थिने ।
सकायः पावयेत्तज्जः षड्वंश्यान् सहात्मना ॥
आसुरो द्रविणादानात् गान्धर्व्वः समयान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥"
इति याज्ञवल्क्यः ॥ * ॥
अपि च ।
"गृहीतविद्यो गुरवे दत्त्वा च गुरुदक्षिणाम् ।
गार्हस्थ्यमिच्छन् भूपाल कुर्य्याद्दारपरिग्रहम् ॥
वर्षैरेकगुणां भार्य्यामुद्वहेत्त्रिगुणः स्वयम् ।
नातिकेशामकेशां वा नातिकृष्णां न पिङ्गलाम् ॥
निसर्गतोऽधिकाङ्गीं वा न्यूनाङ्गीमपि नोद्वहेत् ।
अविशुद्धां सरोमां वा अकुलजां वातिरोगिणीम् ॥
न दुष्टां दुष्टवाचालां व्याङ्गिनीं पितृमातृतः ।
न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् ॥
न घर्घरस्वरां क्षामां तथा काकस्वरां न च ।
नानिबद्धेक्षणां तद्वद्वृत्ताक्षीं नोद्वहेद्बुधः ॥
यस्याश्च रोमशे जङ्घे गुल्फौ चैव तथोन्नतौ ।
कूपौ यस्या हसन्त्याश्च गण्डयोस्तां च नोद्वहेत् ॥
नातिरूक्षच्छविं पाण्डुकरजामरुणेक्षणाम् ।
आपीनहस्तपादाञ्च न कन्यामुद्वहेद्बुधः ॥
न वामनां नातिदीर्घां नोद्वहेत् संहतभ्रुवम् ।
न चातिच्छिद्रदशनां न करालमुखीं नरः ॥
पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् ।
गृहस्थश्चोद्वहेत् कन्यां न्याय्येन विधिना नृप ॥
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ।
गान्धर्व्वराक्षसौ चान्यौ पैशाचश्चाष्टमोऽधमः ॥
एतेषां यस्य यो धर्म्मो वर्णस्योक्तो मनीषिभिः ।
कुर्व्वीत दाराहरणं तेनान्यं परिवर्ज्जयेत् ॥
स धर्म्मचारिणीं प्राप्य गार्हस्थ्यं सहितस्तया ।
समुद्वहेद्दात्येतत् सम्यगूढं महाफलम् ॥"
इति विष्णुपुराणे ३ अंशे १० अध्यायः ॥ * ॥
अन्यच्च ।
याज्ञवल्क्य उवाच ।
"शृणुध्वं मुनयो धर्म्मान् गृहस्थस्य यतव्रताः ।
गुरवे च धनं दत्त्वा स्नात्वा च तदनुज्ञया ॥
अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम् ॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।
पञ्चमात् सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा ॥
दशपुरुषविख्यातात् श्रोत्रियाणां महाकुलात् ।
सवर्णः श्रोत्रियो विद्वान् वरो दोषान्वितो न च ॥
यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
न तन्मम मतं यस्मात्तत्रायं जायते स्वयम् ॥
तिस्रो वर्णानुपूर्व्व्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्य्या स्वा शूद्रजन्मनः ॥
ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥
यज्ञस्थायर्त्विजे दैवमादायार्षस्तु गोद्वयम् ।
चतुर्द्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥
इत्युक्त्वा चरतां धर्म्मं सह या दीयतेऽर्थिने ।
सकायः पावयेत्तज्जः षड्वंश्यान् सहात्मना ॥
आसुरो द्रविणादानात् गान्धर्व्वः समयान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥
चत्वारो ब्राह्मणस्याद्यास्तथा गान्धर्व्वराक्षसौ ।
राजन्यस्यासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥
पाणिर्ग्राह्यः सवर्णासु गृह्णीत क्षत्रिया शरम् ।
वैश्या प्रतोदमादद्याद्वेदने चाग्रजन्मनः ॥

**विवृता**, स्त्री, क्षुद्ररोगभेदः। इति मेदिनी॥ तल्लक्षणं यथा,—

"विवृताख्या महादाहा पक्वोदुम्बरसन्निभाम्।
विवृतामिति तां विद्यात् पित्तोत्थां परिमण्डलाम्॥"

पद्मिनीकण्टकः॥ ७॥ अस्याश्चिकित्सा।

"विवृतामिन्द्रवृद्धाञ्च गर्द्दभीं जालगर्द्दभम्।
पैत्तिकस्य विसर्पस्य क्रियया साधयेद्भिषक्।
पाके तु दोषभेदाद्यैः सर्व्वैर्व्रणवदाचरेत्॥"

इति भावप्रकाशः॥

(विवृतेति क्वचित् पाठः॥)

**विवृतास्यः**, पुं, (विवृतं आस्यं यस्य।) कुक्कुटः। इति हेमचन्द्रः॥

**विवृतिः**, स्त्री, व्याख्या। विपूर्ब्बवृधातोः क्तिप्रत्ययेन निष्पन्नमिदम्। विवरणम्। यथा,—

"प्रक्रियाञ्च व्याकरणोपमान-
कोषाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषात् विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः॥"

इति मलमासतत्त्वम्॥

**विवृत्तं**, त्रि, (वि+वृत्+क्तः।) चलितम्। यथा,—

"विवृत्तपार्श्वं रुचिराङ्गहारं
समुद्वहच्चारु नितम्बरम्यम्।
आमन्द्रमन्थध्वनिदत्ततालं
गोपाङ्गनानृत्यमनन्दयत्तम्॥"

इति भट्टिः॥

विवृत्तं तिर्य्यक्चलितं पार्श्वं यत्र। इति तट्टीका॥

**विवृत्तिः**, स्त्री, चक्रवद्भ्रमणम्। घूर्णनम्। विपूर्ब्बवृतधातोः क्तिप्रत्ययेन निष्पन्नमिदम्॥ (विविधवृत्तिः। यथा, भागवतटीकायां श्रीधरः।१।१।१०।
"विश्वसृजां विवृत्तये विविधवृत्तिलाभाय॥")

**विवेकः**, पुं, परस्परव्यावृत्त्या वस्तुस्वरूपनिश्चयः। प्रकृतिपुरुषयोर्विभागेन ज्ञानं इत्यन्ये। इति भरतः॥ तत्पर्य्यायः। पृथगात्मता २ इत्यमरः॥ विवेचनम् ३ इति शब्दरत्नावली॥ पृथग्भावः ४। इति धरणिः॥

"विवेको वस्तुनो भेदः प्रकृतेः पुरुषस्य वा॥"

इति जटाधरः॥

यथा। नित्यानित्यवस्तुविवेकस्तावत् ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम्। इति वेदान्तसारः॥ (यथा, मनौ।१।२६।
"कर्म्मणाञ्च विवेकार्थं धर्म्माधर्म्मौ व्यवेचयत्॥")
जलद्रोणी। विचारः। इति मेदिनी॥ (यथा, मनौ।१।११२।
"तस्य कर्म्मविवेकार्थं शेषाणामनुपूर्ब्बशः॥")

**विवेकिता**, स्त्री, (विवेकिन्+तल्।) विवेकित्वम्। विवेकिनो भावः। यथा,—

"यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम्॥"

इति हितोपदेशः॥

(यथा, याज्ञवल्क्ये।१।१५६।
"आचार्य्योपासनं वेदशास्त्रार्थेषु विवेकिता॥")

**विवेकी**, [न्] पुं, (विवेकोऽस्यास्तीति। विवेक+इनिः।) देवसेनराजपुत्रः। यथा,—

"देवसेनोऽपि वैदर्भ्यां जनयामास पुत्रकान्।
सप्त प्रख्यात तान् यूयं नामतः कीर्त्तितांस्तथा॥
सुमना मधुदानश्च स्वतन्त्रयवनः कृती।
लोको विवेकीत्येते वै सर्व्वशास्त्रविशारदाः॥"

इति कालिकापुराणे भैरववंशानुकीर्त्तने ९० अध्यायः॥ विचारकर्त्ता। इति मेदिन्यां विवेकशब्दार्थदर्शनात्॥ विवेकविशिष्टे, त्रि॥ (यथा, मार्कण्डेये।६६।१४।

"इष्टानिष्टांस्तथा भोगान् वाञ्छमाना विवेकिनः।
दानानि च प्रयच्छन्ति पूर्ब्बधर्म्मांश्च कुर्व्वते॥")

**विवेचकः**, पुं, (वि+विच्+ण्वुल्।) विवेचनकर्त्ता। विवेचयति य इत्यर्थे णकप्रत्ययेन निष्पन्नमिदम्॥

**विवेचनं**, क्ली, (वि+विच्+ल्युट्।) विवेकः। इति शब्दरत्नावली॥ (यथा, हरिवंशे भविष्यपर्व्वणि।४१।१८।

"विवक्षिर्गीयसे विष्णो त्वमेव जगतीपते।
इच्छया सर्व्वमाप्नोषि इष्टानिष्टविवेचनम्॥")॥

निर्णयः। यथा, मनुः।८।२१।

"यस्य शूद्रस्तु कुरुते राज्ञो धर्म्मविवेचनम्।
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः॥")

**विवेचनीयः**, त्रि, विवेच्यः। विवेचितव्यः। इति विपूर्ब्बविचधातोरनीयप्रत्ययेन निष्पन्नमिदम्॥

**विब्रु(ब्रू)वन्**, [त्] त्रि, (वि+ब्रू+शतृ।) विरुद्धवक्ता। यथा,—

"यो न भ्राता पिता वापि न पुत्रो न नियोजितः।
परार्थवादी दण्ड्यः स्यात् व्यवहारेषु विब्रुवन्॥"

विब्रुवन् विरुद्धं ब्रुवन्। इति व्यवहारतत्त्वम्॥

**विवोढा**, [ऋ] पुं, (वि+वह+तृच्।) वरः। पतिः। इति हेमचन्द्रः॥

**विव्वोकः**, पुं, स्त्रीणां शृङ्गारभावजा क्रिया। इत्यमरः॥ अभिमतवस्तुप्राप्तावपि गर्व्वादनादरः तापराधस्य च संयमनं ताडनञ्च विव्वोकः। बहुलम्।

"गर्व्वाभिमानादिष्टेऽपि विव्वोकोऽनादरक्रिया।"

तथा।

"अभिमतवसूपक्लृप्तावपि गुरुगर्व्वादनादरस्तस्याः।
स्खलति प्रियस्य हृदयं संयमताडनमयश्च विव्वोकः॥"

इति भरतः॥

"विव्वोकस्त्वतिगर्व्वेण वस्तुनीष्टेऽप्यनादरः।
न वराहतवागात्रैर्विलासगमनादिषु॥"

इति सारसुन्दरी॥

"इष्टेऽपि गर्व्वमानाभ्यां विव्वोकः स्यादनादरः॥"

इत्युज्ज्वलनीलमणिः॥

**विश**, ओ श प्रवेशे। इति कविकल्पद्रुमः॥ (तुदा०-पर०-सक०-अनिट्।) श, विशति। ओ, अविक्षत्। विवेश कश्चिज्जटिलस्तपोवनम्। विपराजिपरिव्यवक्रीनिविशेत्यादिनात्मनेपदविधानेऽपि भर्त्तुरङ्के निविशसी भयादिति रघौ। केवलात् शतृप्रत्ययं विधाय पश्चादुपसर्गयोगादिति दुर्घटवृत्तिः। निशब्द इह उपसर्गप्रतिरूपको वा। यस्माद्विश्वमिदं सर्व्वं तस्य शक्त्या महात्मनः। तस्मादेवोच्यते विष्णुर्विशधातोः प्रवेशनादिति पुराणे विष्णुशब्दव्युत्पादनात् सकर्म्मकोऽयमिति केचित् तच्चिन्त्यम्। तत्र व्याप्त्यैव सकर्म्मकत्वात्। इति दुर्गादासः॥

**विशं**, क्ली, (विश+कः।) मृणालम्। इत्यमरटीकायां रायमुकुटः॥ (तत्पर्य्यायो यथा,—
"पद्मनालं मृणालं स्यात्तथा विशमिति स्मृतम्।"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे॥)

**विशंकरा**, स्त्री, (विशं मनुष्यं करोतीति। कृ+अच्। अभिधानात् द्वितीयाया अलुक्।) मक्षी। इति राजनिर्घण्टः॥

**विशकण्ठी**, स्त्री, (विशमिव कण्ठो यस्याः। विशकण्ठ+ङीष्।) बलाका। इति राजनिर्घण्टः॥

**विशङ्कः**, त्रि, विगता शङ्का यस्य बहुव्रीहिः। शङ्कारहितः। (यथा, रघुः।२।११।

"धनुर्भृतोऽप्यस्य दयार्द्रभाव-
माख्यातमन्तःकरणैर्विशङ्कैः॥")

**विशङ्कटः**, त्रि, (वि+"वेः शालच्छङ्कटचौ।" ५।२।२८। इति शङ्कटच्।) विशालः। इत्यमरः॥ (यथा, भट्टिः।२।५०।

"विशङ्कटो वक्षसि बाणपाणिः
सम्प्रस्थितालद्वयसः पुरस्तात्॥"

भयानकः। यथा, कथासरित्सागरे।१०८।१०७।
"सीताङ्कतुल्लवेतालतालवाद्यविशङ्कटः।
अभूदुल्कमुखोऽसौ भूतप्रौढे रणोत्सवः॥")

**विशदः**, पुं, (वि+शद्+अच्।) श्वेतवर्णः। इत्यमरः॥ (जयद्रथपुत्रः। यथा, भागवते।९।२१।२६।
"बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः।
तत्सुतो विशदस्तस्य सेनजित् समजायत॥")

**विशदः**, त्रि, (वि+शद्+अच्।) विमलः। इति हेमचन्द्रः॥ (यथा, रघुः।४।१८।
"प्रसादसुमुखे तस्मिन् चन्द्रे च विशदप्रभे।
तदा चक्षुष्मतां प्रीतिरासीत् समरसा द्वयोः॥")
व्यक्तः। इति मेदिनी॥ (यथा, रघुः।८।३।

"विशदोच्छ्वसितेन मेदिनी
कथयामास कृतार्थतामिव॥")

शुक्लगुणयुक्तः। इत्यमरः॥ (उज्ज्वलः। यथा, माघे।८।७०।

"स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम्।
वासश्च प्रतनु विविक्तमस्त्वितीया-
नाकल्पो यदि कुसुमेषुणा न शून्यः॥")

तिष्ठतीति।" उणा० १। ११७। इति कालन्।)
महत्। इत्यमरः॥ (यथा, रघुः। ६। ६६।
"अवन्तिनाथोऽयमुदग्रबाहु-
र्विशालवक्षास्तनुवृत्तमध्यः॥"
विगतः शालः शाखी यस्य। शाखारहितः।
यथा, शिशुपालवधे। ३। ६०।
"मुक्तैर्विशालैरपि भूरिशालैः॥")
विशालः, पुं, (विश+कालन्।) पक्षिभेदः। मृग-
भेदः। इति मेदिनी॥ वृक्षभेदः। इत्यभेदः।
इति शब्दरत्नावली॥
विशालता, स्त्री, (विशालस्य भावः। विशाल+
तल्।) पार्श्वविस्तारः। चौडाइ इति ख्यातः॥
तत्पर्य्यायः। परिणाहः २। इत्यमरः॥ (यथा,
कुमारसम्भवे। १। ८।
"उन्नमीलकुक्षं गौरवाणे विशालता
पोष्टा॥")
सामान्यविशालत्वम्। इति शब्दरत्नावली॥
विशालतैलगर्भः, पुं, (विशालं प्रचुरं तैलं गर्भे
यस्य।) अङ्कोटवृक्षः। इति राजनिर्घण्टः॥
विशालत्वक्, [च्] पुं, (विशाला त्वक् यस्य।)
सप्तपर्णवृक्षः। इत्यमरः॥ (यथास्य पर्य्यायः।
"सप्तपर्णो विशालत्वक् शारदो विषमच्छदः॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)
विशालपत्रः, पुं, (विशालानि पत्राणि यस्य।)
शालालुः। श्रीतालः। इति राजनिर्घण्टः॥
विशालफलिका, स्त्री, (विशालं फलं यस्याः।
ततः स्वार्थे कन्। टापि अत इत्वम्।) निष्पावी।
इति राजनिर्घण्टः॥
विशाला, स्त्री, (विशाल+टाप्।) इन्द्रवारुणी।
इत्यमरः॥ यथाच।
"विशाला कफवातघ्नी पैत्तकुष्ठहरा सरा॥"
इति राजवल्लभः॥
उज्जयनी। इति मेदिनी॥ उपोदकी। महेन्द्र-
वारुणी। इति राजनिर्घण्टः॥ (यथा,—
"ऐन्द्रीन्द्रवारुणी चित्रा गवाक्षी च गवादनी।
वारुणी च गवाप्युक्ता सा विशाला महाफला।
श्वेतपुष्पा मृगाक्षी च स्त्रीचीर्व्वावर्म्मगादनी॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)
तीर्थविशेषः। यथा,—
"मुखजप्योपवासश्च सर्व्वतीर्थेष्वयं विधिः।
वर्ज्जयित्वा गयां गङ्गां विशालां विरजां तथा॥"
इति प्रायश्चित्ततत्त्वम्॥
इन्द्रकन्या। यथा,—
"मनोरमा भानुमती विशाला बाहुदामया।
इन्द्रः प्राप्तावनद्ददेव जनकोऽरिष्टनेमिने॥"
इति गारुडे ६ अध्यायः॥
विशालाक्षः, पुं, (विशाले अक्षिणी यस्य। समासे
षच्।) हरः। (यथा, महाभारते। १३। १७। ८०।
"ततस्तां भगवानीतिं पूर्व्वं जगाद शङ्करः।
बहुरूपो विशालाक्षः शिवः स्वाम्नसमापति:॥")
गरुडः। (तदंशीयविशेषः। यथा, महा-
भारते। ५। १०१। ९।
"अजितश्चाप्रमत्तश्च विशालाक्षोऽथ कुण्डली॥")
सुमेधे, त्रि। इति मेदिनी। (यथा, महा-
भारते। ३। २९। ७०।
"ददामि ते विशालाक्ष चक्षुः पूर्व्वमवि-
मंशात्॥")
विष्णुः। इति केचित्॥ (कुरुराजपुत्रः। यथा,
महाभारते। १। ११७। ९।
"अपराजितः कुण्डशायी विशालाक्षो दुरा-
धरः॥")
विशालाक्षी, स्त्री, (विशाले अक्षिणी यस्याः।)
वरस्त्री। इति चित्रः॥ (यथा, महाभारते।
१। ७७। १६।
"बलोचितं विशालाक्षि तथा चन्द्रनिभानने।
तथाहमुचितो भद्रे कृत्वी कामस्य भामिनि॥")
नागदन्ती। इति राजनिर्घण्टः॥ पार्व्वती।
यथा, आदित्यामले।
ईश्वर उवाच।
"भुवनाद्यं समुद्धृत्य मायाबीजं समुद्धरेत्।
विशालाक्षीपदं ङेऽन्तं वह्न्यन्तं मन्त्रमुद्धरेत्॥
अष्टाक्षरी महाविद्या अष्टसिद्धिप्रदा शिवे।
प्रसङ्गात् कथिता विद्या त्रैलोक्यदुर्लभा शिवे॥
ऋषिरस्या महेशानि वशाग्निर्मो महाप्रभुः।
पंक्तिश्च छन्दः कथितं विशालाक्षी च देवता॥
शक्तिः प्रणवमित्युक्तं लज्जाबीजञ्च बीजकम्।
धर्म्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः॥
अङ्गन्यासकरन्यासौ यथावदभिधीयते।
षड्दीर्घभाजा बीजेन प्रणवाद्येन कल्पयेत्॥
न्यसेन व्यापकं न्यस्य ध्यायेद्देवीं परां शिवाम्।
ध्यायेद्देवीं विशालाक्षीं तप्तजाम्बूनदप्रभाम्॥
द्विभुजामम्बिकां चण्डीं खड्गखर्परधारिणीम्।
नानालङ्कारसुभगां रक्ताम्बरधरां शुभाम्॥
सदा षोड़शवर्षीयां प्रसन्नास्यां त्रिलोचनाम्।
मुण्डमालावतीं रम्यां पीनोन्नतपयोधराम्॥
शिवोपरि महादेवीं जटामुकुटमण्डिताम्।
शत्रुक्षयकरीं देवीं साधकाभीष्टदायिकाम्॥
सर्व्वसौभाग्यजननीं महासम्पत्प्रदां स्मरेत्।
एवं ध्यात्वा महादेवीमुपचारैः प्रपूजयेत्॥
पुरश्चरणकाले तु वर्णलक्षं जपेत् सुधीः।
यन्त्रमध्ये समावाह्य प्रतिष्ठां कारयेत्ततः॥
त्रिकोणञ्चाष्टपत्रञ्च ततो वृत्तं समालिखेत्।
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत्॥
समावाह्य यजेद्देवीं सर्व्वसौभाग्यसुन्दरीम्।
विशालाक्षीं विशालास्यां यथाविधि प्रपूजयेत्॥
त्रिकोणान्तर्महादेवीं संपूज्य मातरः क्रमात्।
मङ्गलाख्या विजयाख्या रक्ताख्या चक्रलोचना।
एकनेत्रा द्विनेत्रा च कोटराक्षी त्रिलोचना।
एताः पूज्या महेशानि पद्मासिन्धुयोगिनीः॥
पश्चिमादिक्रमेणैव अष्टसिद्धिस्वरूपिणीः।
चतुरस्रे महादेवि लोकपालान् समर्चयेत्॥
तदस्त्रेणैव यथाशास्त्रं पूजयेत्साध्यहेतवे।
ततो यथाशक्ति जप्त्वा पूर्व्ववच्च समाचरेत्॥"
इति तन्त्रसारः॥ *॥
चतुःषष्टियोगिन्यन्तर्गतयोगिनीविशेषः। इति
दुर्गाचैतन्यमञ्जरी॥
विशाली, स्त्री, [illegible]
विशिखः, पुं, (विशिष्टा शिखा यस्य।) शर-
तृणः। इति राजनिर्घण्टः॥ बाणः। इत्यमरः॥
(यथा, भागवते। ४। १७। १६।
"[illegible] विशि[illegible] [illegible]ष्टा यथा॥")
तोमरः। इति भरतः॥ (विगता शिखा
यस्य।) शिखारहिते, त्रि॥ यथा,—
"विशिखोऽनुपवीती च यत् करोति न तत्
कृतम्॥"
इति स्मृतिः॥
विशिखा, स्त्री, खनित्री। रथ्या। (यथा, माघे।
१५। १७।
"विशिखान्तराण्यतिपपात
सपदि जवनैः स वाजिभिः॥")
नालिका। इति मेदिनी॥
विशिखं, क्ली, (विशन्त्यत्रेति। विश+"विटप-
पिष्टपविशिपोलपाः।" उणा० ३। १४५। इति
कपन्प्रत्ययेन निपातनात् साधुः।) मन्दिरम्।
इत्युणादिकोषः॥
विशिष्टः, त्रि, (वि+शिष्+क्तः। यद्वा, शास+
क्तः।) युक्तः। यथा। स्वज्ञानस्वजनकज्ञा-
नविषयत्वविशिष्टधर्मीविशेष्यत्वम् स्वरूपसम्बन्धविशेषः
तज्ज्ञानस्य ज्ञानम्। इति सिद्धान्तलक्षणे जागदीश-
भट्टाचार्य्यलिखनम्॥ विशेषेण श्लिष्टञ्च॥ (यथा,
हितोपदेशे।
"समेन समतां याति विशिष्टेन विशिष्टताम्॥")
विशिष्टः, पुं, विष्णुः। यथा। विशिष्टः शिष्टकृत्
शुचिः। इति तस्य सहस्रनामस्तोत्रम्॥
विशिष्टाद्वैतवादी, [न्] त्रि, (विशिष्टं युक्तं
अद्वैतं वदतीति। वद्+णिनिः।) प्रकृति-
पुरुषयोर्भिन्नत्वेऽपि मिलितयोस्तयोरद्वैतवादी।
तस्य मतं यथा। पुरुषस्वरूपरहिता प्रकृतिः
विश्वभयमिलितं ब्रह्म चणकविदलवत्। इत्थं
ब्रह्मणः एकत्वं व्यवस्थितम्। चित् परमाणु-
स्वरूपो जीवः समस्तविश्वं ब्रह्मांशः। इति
माधवभाष्यादिः॥ *॥ अद्वैतवादिमतं यथा।
ब्रह्मैव सत्यं प्रपञ्चादिचिह्नं विश्वं ब्रह्मणि आरो-
पितम्। यथा रज्जुः रज्जुस्वरूपाज्ञानात्
सर्पवत् प्रतिभाति। तथा ब्रह्मस्वरूपाज्ञानात्
विश्वं वस्तुवत् प्रतिभाति। ब्रह्मजीवयोर्ज्ञानविमर्श-
पर्य्यवसाने ब्रह्मैव ब्रह्मान्यत् वस्तु नास्ति।
अत्र प्रमाणं शारीरिकसूत्रस्य शङ्कराचार्य्य-
कृतभाष्यतट्टीकाकल्पतरुभाष्यरत्नप्रभादि॥
विशीर्णः, त्रि, (वि+शॄ+क्तः।) शुष्कः। यथा,
"विशीर्णा विदला ह्रस्वा वक्राः स्थूला द्विधा-
कृताः।
क्रिमिदष्टाश्च दीर्घाश्च समिधो नैव कारयेत्॥"
इति तन्त्रसारः॥
विशीर्णपर्णः, पुं, (विशीर्णानि पर्णानि यस्य।)
निम्बवृक्षः। इति राजनिर्घण्टः॥

अथ विषाणां चिकित्सा। तत्र स्थावरविषस्य चिकित्सा।
"स्थावरेण विषेणार्त्तं नरं वान्तेन वामयेत्।
वमनेन समं नास्ति स्थावरस्य चिकित्सितम्॥
विषमत्यर्थमुष्णञ्च तीक्ष्णञ्च कथितं यतः।
अतः सर्व्वविषे शुक्तः परिषेकस्तु शीतलः॥
औष्ण्यात्तैक्ष्ण्याद्विषेणैव विषं पित्तं प्रकोपयेत्।
वामितं शीतयेत्तस्माच्छीतलेन जलेन च॥
पाययेन्मधुसर्पिर्भ्यां विषघ्नं भेषजं द्रुतम्।
भोक्तुमन्नं रसं दद्यात् वर्ज्जयेत्तद्विधानि च॥
यस्य यस्य च दोषस्य पश्येल्लिङ्गानि भूरिशः।
तस्य तस्यौषधैः कुर्य्याद्विपरीतगुणैः क्रियाम्॥
शालयः षष्टिकाश्चैव कोरदूषाः प्रियङ्गवः।
भोजनार्थे विषार्त्तानां हिताः पटुषु सैन्धवम्॥"
प्रियङ्गुः कङ्गुः।
"मूलत्वक्पत्रपुष्पाणि बीजञ्चेति शिरीषतः।
गवां मूत्रेण संपिष्टं लेपाद्विषहरं भवेत्॥
दूर्व्वीविषार्त्तः सुचिरं कल्कं पायश्च शोधितम्।
पाययेदगदं सम्यगिदं दूर्व्वीविषापहम्॥
पिप्पलीध्यामकं मांसी लोध्रमेला सुवर्च्चिका।
मरिचं वालकं चैला तथा कनकगैरिकम्॥
क्षौद्रयुक्तः कषायोऽयं दूर्व्वीविषमपोहति॥"
ध्यामकं रोहिषम्। तदलाभे उशीरं देयम्। कनकगैरिकं सोनागेरू इति लोके। अलम्-मारकम्॥*॥ अथ जङ्गमविषस्य चिकित्सा।
"अभया रोचना कुष्ठं कैपुष्पं तथोत्पलम्।
नलदेनसकलानि गरलं सुरसा तथा॥
सकलिङ्गं समञ्जिष्ठामनन्ताश्च शतावरीम्।
शृङ्गाटकं समङ्गाञ्च पद्मकेशरमित्यपि॥
कल्कीकृत्य पचेत् सर्पिः पयो दत्त्वा चतुर्गुणम्।
सम्यक्पक्वेऽवतीर्णे च शीते तस्मिन् विनि:-
क्षिपेत्॥
सर्पिस्तुल्यं भिषक् क्षौद्रं अमृतं निधापयेत्।
विषाणि हन्ति दुर्गाणि गरदोषकृतानि च॥
सर्वाहन्ति विषं सर्व्वं मरेदप्रहिता यथाम्।
योगस्तम्भकं कष्टं मांससादं विसंज्ञताम्॥
नागयक्षग्रहाध्यक्षपानवर्त्तिषु योजितम्।
सर्पकीटाखुलूतादिदष्टानां विषहृत् परम्॥"
अनुपानश्चोदि हतम्॥
"धुस्तूरस्य शिफा मेषा चीरेण परिपेषिता।
अङ्कोटबीजं चापि च विषघ्नी प्रयत्नतः॥
रजनीयुग्मपत्तङ्गमञ्जिष्ठानागकेशरैः।
शीताम्बुपिष्टैरालेपः सद्यो लूता विनाशयेत्॥
क्षीरकस्य शतः कल्को घृतसैन्धवसंयुतः।
सक्षौद्रो मधुना लेपी वृश्चिकस्य विषं हरेत्॥
अन्धमाशाय सुदितस्थ्यापरैदलस्य तु।
वृश्चिकेन नरो विद्धः स्वस्थो भवति निर्व्विषः॥"
इति विषाधिकारः। इति भावप्रकाशः॥*॥
पारिभाषिकविषं यथा,—
"न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
देवस्वञ्चापि यत्नेन सदा परिहरेत्ततः॥"
इति कौर्म्मे उपविभागे १५ अध्यायः॥

अपि च।
"दुरधीता विषं विद्या अजीर्णे भोजनं विषम्।
विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम्॥
विषं चंक्रमणं रात्रौ विषं राज्ञोऽनुकूलता।
विषं स्त्रियोऽप्यन्यहृदो विषं व्याधिरवीक्षितः॥"
इति चाणक्यम्॥
विषकण्टकिनी, स्त्री, (विषयुक्तः कण्टकोऽस्या अस्तीति। इनिः। ङीप्।) वन्ध्याकर्कोटकी। इति राजनिर्घण्टः॥ (अस्याः पर्य्यायो यथा,—
"वन्ध्याकर्कोटकी देवी कन्यायोगीश्वरीति च।
नागारिर्नागदमनी विषकण्टकिनी तथा॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)
विषकन्दः, पुं, (विषयुक्तः कन्दो यस्य।) नीलकन्दः। इति राजनिर्घण्टः॥
विषघ्ना, स्त्री, गुडूची। इति शब्दचन्द्रिका॥
विषघाती, [न्] पुं, (विषं हन्तीति। हन+णिनिः।) शिरीषवृक्षः। इति शब्दमाला॥ विषनाशके, त्रि॥
विषघ्नः, पुं, (विषं हन्तीति। हन+टक्।) शिरीषवृक्षः। इति शब्दचन्द्रिका॥ यवासः। विभीतकः। इति राजनिर्घण्टः॥ चम्पकवृक्षः। इति जटाधरः॥ विषनाशके, त्रि॥ (यथा, मनुः। ७।२१८।
"विषघ्नैरगदैश्चास्य सर्व्वद्रव्याणि योजयेत्।
विषघ्नानि च रत्नानि नियतो धारयेत् सदा॥")
विषघ्नौषधानि यथा,—
मनुरुवाच।
"रक्षोघ्नानि विषघ्नानि यानि धार्य्याणि भूभुजा।
अगदानि समाचक्ष्व तानि धर्म्मभृतां वर॥
मत्स्य उवाच।
बिल्वाटकी यवक्षारं पाटला बाह्लिकोषणा।
श्रीपर्णी शल्लकीयुक्ता निष्क्वाथः प्रोक्षणं परम्।
सविषं प्रोक्षितं तेन सद्यो भवति निर्व्विषम्॥२॥
यवसैन्धवपानीयवस्त्रशय्यासनोदकम्।
कवचाभरणं छत्रं वालव्यजनवेश्मनी॥
शेलुः पाटल्यतिविषा शोभी भार्गी पुनर्नवा।
समङ्गावृषमूलत्वक्कपित्थवृषशोणितम्।
महद्दन्तशठं तद्वत् प्रोक्षणं विषनाशनम्॥४॥
लाक्षा प्रियङ्गु मञ्जिष्ठा सममेला हरेणुका।
यष्ट्याह्वा मधुना युक्ता बभ्रुपित्तेन कल्पिता॥
निखनेद्गोविषाणस्थं सप्तरात्रं महीतले।
ततः कृत्वा मणिं हैमं बद्धं हस्तेन धारयेत्।
संस्पृष्टं सविषं तेन सद्यो भवति निर्व्विषम्॥३॥
मनोह्वा शमीपुष्पं तुरुष्कं चैव कर्क्कटाः।
कपित्थकुष्ठमञ्जिष्ठाः पित्तेन श्लक्ष्णकल्किताः॥
शुनो गोः कपिलायाश्च सौम्याक्षीवापरोऽगदः।
विषजित् परमं कार्य्यं मणिरत्नञ्च पूर्व्ववत्।
मूषिका जतुका वापि हस्ते बद्धा विषापहा॥४॥
हरेणुर्मांसी मञ्जिष्ठा रजनी मधुका मधु।
अक्षत्वक् सुरसं लाक्षाश्वपित्तं पूर्व्ववद्भुवि॥
वादित्राणि पताकाश्च पिष्टैरेतैः प्रलेपिताः।
श्रुत्वा दृष्ट्वा समाघ्राय सद्यो भवति निर्व्विषः॥५॥

सुपयं पद्मकञ्चं मञ्जिष्ठा रजनीद्वयम्।
सूक्ष्मैला त्रिवृतापर्णं विडङ्गमिश्रयावकौ॥
मधुकं वेतसं क्षौद्रं गोविषाणे निधापयेत्।
तस्मादुद्धृत्य मात्रा प्राग्वत् योजयेत्तथा।
विषं शुष्कं जारयति निर्व्विषोऽपि न रोगकृत्॥६॥
घृतं सर्व्वौषधोपेतं सर्षपा रजनायुतैः।
सुवर्चा तण्डुलीकश्च कुसुमैरर्जुनस्य तु॥
धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम्।
न तत्र कीटाः सविषा न दर्दुरसरीसृपाः।
न कृत्याः कर्म्मणश्चापि धूपोऽयं यत्र दह्यते॥७॥
कल्कितैश्चन्दनक्षीरपलाशद्रुमवल्कलैः।
मूर्व्वैलावालुसुरसानाकुलीतण्डुलीयकैः।
क्वाथः सर्व्वोदकार्थेषु काकमाचीयुतैर्हितः॥८॥
रोचनापत्रनेपालीकुङ्कुमैस्तिलकोऽन्वहम्।
विषैर्न बाध्यते स्याच्च नरनारीनृपप्रियः॥९॥
चूर्णैर्हरिद्रामञ्जिष्ठाकिणिहीकणनिम्बजैः।
दिग्धं निर्व्विषतामेति गात्रं सर्व्वविषार्द्दितम्॥१०॥
शिरीषस्य फलं पत्रं पुष्पं त्वङ्मूलमेव च।
गोमूत्रघृष्टो ह्यगदः सर्व्वकर्म्मकरः स्मृतः॥११॥
एकवीरमहौषध्यः शृणु चातः परं द्विज।
वन्ध्याकर्कोटकी राजन् विष्णुक्रान्ता तथोत्कटा।
शतमूली शतानन्दा बला मोचा पटोलिका॥
सोमा पिण्डनिशा चैव तथा दग्धरुहा च या।
स्थले कमलिनी या च विशाली शङ्खमूलिका॥
चण्डाली हस्तिचकाली मोचकाली च
गन्धिका।
रक्ता चैव महारक्ता तथा बर्हिशिखा च या।
कोशातकी नक्तमाला प्रियाला सुभलक्षणा।
वारुणी च सुगन्धा च तथा वै गन्धनाकुली॥
ईश्वरी च शिवगन्धा च सोमली वंशनालिका।
जतुमाली महाश्वेता श्वेता च मधुयष्टिका॥
वज्रकः पारिभद्रश्च तथा वै सिन्धुवारिका।
जीवानन्दा वसुमती नतनागरकण्टकी॥
नाकुली नागपाताली तथा च वटपत्रिका।
कार्त्तघोरी महानीला कटुरं हंसपादिका॥
मण्डूकपर्णी वाराही द्वे तथा तण्डुलीयके।
सर्पाक्षी लवणा ब्राह्मी विश्वरूपा सुखङ्करी॥
रुजापहा वृद्धिकरी तथा शल्यापहा च या।
पत्रिका रोहिणी चैव रक्तमाला महौषधी॥
तथामलकवन्दाकं या च शिवा पटोलिका।
काकोली क्षीरकाकोली पीलुपर्णी तथैव च॥
केशिनी वृश्चिकाली च महानागा शतावरी।
तथा गरुडवेगा च जली कुमुदिनी तथा॥
स्थले चोत्पलिनी या च महाभूमिलता च या।
उन्मादिनी सोमराजी सर्व्वरत्नानि पार्थिव॥
विशेषान्मरकतादीनि कीटपक्षं विशेषतः।
जीवजाताश्च मणयः सर्व्वे धार्य्या विशेषतः॥१२॥
रक्षोघ्नाश्च विषघ्नाश्च कृत्या वैतालनाशनाः।
विशेषान्नरनागाश्च गोखरोष्ट्रसमुद्भवाः॥
सर्पतित्तिरिगोमायुबभ्रुमण्डूकजाश्च ये।
सिंहव्याघ्रर्क्षमार्ज्जारद्वीपिवानरसम्भवाः॥
कपिञ्जलागोधाहिमहिषेषु भवाश्च ये॥

दृश्येवमेभि: सकलैरपीमै-
र्देयेश सर्व्वै: मधुरं सुरचितम् ।
राजा यशीसत्र यदत्र मुख्यं
गुणान्वितं लक्षणसंप्रयुक्तम् ॥”
इति मात्स्ये १६९ अध्याय: ॥
(नकुलीय: । तत्पर्य्यायो यथा । अथ च वराह।
अत्यमलवा इति च ।
“नकुलीयो मेघनाद: काकेरलाकुलेरक: ।
भक्तोरलाकुलीयोक्तो विषघ्नश्चाप्यमारिष: ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।)
विषघ्नी, स्त्री, ( विषं हन्ति या । हन + टक् ।
स्त्रियां ङीप् ।) हिलमोचिका । इति शब्दच-
न्द्रिका ॥ ( अस्या: पर्य्यायो यथा,—
“मारी विषघ्नी मत्स्याक्षी चक्राङ्गी हिल-
मोचिका ।”
इति वैद्यकरत्नमालायाम् ॥ )
इन्द्रवारुणी । वनवर्व्वरिका । स्वल्पफला ।
भूम्यामलकी । रक्तपुनर्नवा । हरिद्रा । हंस-
काली । ( अस्या: पर्य्यायो यथा,—
“वृश्चीयघ्नी वृश्चिकाली विषघ्नी नागदन्तिका ।
सर्पदंष्ट्रामराकाली चोदधधरपुष्पिका ॥”
इति वैद्यकरत्नमालायाम् ।)
महाकरञ्ज: । इति राजनिर्घण्ट: ॥ (कटुषा ।
तत्पर्य्यायो यथा,—
“कटुषा पुष्पवन्ता च परान्वत्यफला मता ।
मत्स्यगन्धा शीतहन्त्री विषघ्नी ध्याङ्क्षनाशिनी ॥”
देवदाली । तत्पर्य्यायो यथा,—
“देवदाली तु वेणी स्यात् कर्कटी च गरागरी ।
देवताडी वृत्तकोशस्तथा चोक्ता इत्यपि ।
पीतापरा खरस्पर्शा विषघ्नी गरनाशिनी ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।)
विषजिह्व:, पुं, देवताडवृक्ष: । इति रत्नमाला ॥
विषज्वर:, पुं, (विषवत् प्राणनाशको ज्वरो यस्य ।)
महिष: । इति शब्दरत्नावली ॥ विषजज्वरश्च ॥
विषण्णं, क्ली, ध्यानम् । इति शब्दरत्नावली ॥
विषण्ण:, त्रि, ( वि + षद + क्त: । ) विषादप्राप्त: ।
यथा,—
“इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम् ।
विषण्णा भग्नसङ्कल्पा श्चिन्तामापुर्दुरत्ययाम् ॥”
इति श्रीभागवते १० स्कन्धे २९ अध्याय: ॥
विषण्णता, स्त्री, (विषण्णस्य भाव: । तल् ।) जडता ।
यथा,—
“जाड्यं मौर्ख्यं विषादोऽवसाद: सादो विष-
ण्णता ॥”
इति हेमचन्द्र: ॥
विषतिन्दु:, पुं, कारस्करवृक्ष: । इति राजनिर्घण्ट: ॥
कुपीलु: । इति भावप्रकाश: ॥
विषदं, क्ली, ( विषं ददातीति । दा + क: ।) पुष्प-
कासीसम् । इति राजनिर्घण्ट: ॥ शुक्लवर्णे, पुं ।
इत्यमरटीका ॥ ( निर्म्मले प्रसन्ने च त्रि । यथा,
रघु: । १० । १४ ।
“सोमणिदीप्तविषदै: पावनैरवलोकनै: ।”)

विषदंष्ट्रा, स्त्री, ( विषं दंष्ट्रायां यस्या: । ) सर्प-
कङ्काली । इति रत्नमाला ॥
विषदन्तक, पुं, ( विषं दन्ते यस्य । कन् ।) सर्प: ।
इति शब्दचन्द्रिका ॥
विषदर्शनमृत्युक:, पुं, (विषदर्शने मृत्युर्यस्य । कन् ।)
चकोरपक्षी । इति हेमचन्द्र: ॥
विषद्रुम:, पुं, ( विषयुक्तो द्रुम: । ) कारस्करवृक्ष: ।
इति राजनिर्घण्ट: ॥
विषधर:, पुं, ( धरतीति । धृ + अच् । विषस्य
धर: । ) सर्प: । इत्यमर: ॥ ( यथा, गीत-
गोविन्दे । १ । १६ ।
“कालियविषधरगञ्जनजनरञ्जन ॥”
स्त्रियां विषधरी । यथाह कश्चित् ।
“धावद्घोरविभावरी विषधरीभोगस्य भीमो
मणि: ।”)
विषधर्म्मा, स्त्री, कुलत्थथा । इति शब्दचन्द्रिका ।
आलकुशी इति भाषा ॥
विषधात्री, स्त्री, ( विषात्तो विषधरसर्पाणां धात्री
मातेव । ) जरत्कारुमुनिपत्नी । इति शब्द-
माला ॥
विषनाशन:, पुं, (विषं नाशयति । ल्यु: ।) शिरीष-
वृक्ष: । इति हारावली ॥ विषनाशके, त्रि ॥
विषनाशिनी, स्त्री, ( विषं नाशयतीति । नाशि +
णिनि: ।) सर्पकङ्काली । इति शब्दचन्द्रिका ॥
( अथ रास्ना भेदनाद इति लोके । तत्पर्य्यायो
यथा,—
“नाकुली सरसा नागसुगन्धा गन्धनाकुली ।
नकुलेष्टा भुजङ्गाक्षी सर्पाङ्गी विषनाशिनी ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।)
विषनुत्, पुं, ( विषं नुदति दूरीकरोति । नुद +
क्विप् । ) श्योनाकवृक्ष: । इति शब्दचन्द्रिका ॥
विषपुष्पं, क्ली, नीलपद्मम् । इति शब्दमाला ॥
विषयुक्तपुष्पञ्च ॥
विषपुष्प:, पुं, (विषयुक्तं पुष्पं यस्य ।) मदनवृक्ष: ।
इति रत्नमाला ॥ मनफल इति भाषा ॥
विषपुष्पक:, पुं, ( विषयुक्तं पुष्पं यस्य बहुव्रीहौ
कप् ।) मदनवृक्ष: । इति भावप्रकाश: ॥ विष-
पुष्पभक्षणजन्यरोग: । इति केचित् ॥
विषभिषक्, [ज्] पुं, ( विषस्य विषचिकित्सको
वा भिषक् । ) विषवैद्य: । इति हेमचन्द्र: ॥
विषभुजङ्ग:, पुं, विषयुक्तसर्प: । इति केचित् ॥
विषमं, त्रि, असमानम् । यथा, मनु: ।
“भ्रातॄणामविभक्तानां यद्युत्थानं भवेत् सह ।
न तत्र भागं विषमं पिता दद्यात् कथञ्चन ॥”
इति दायतत्त्वम् ॥
( सङ्कट: । यथा, गीतायाम् । २ । २ ।
“कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ॥”
अनतिक्रमणीय: । यथा, साहित्यदर्पणे । १० ।
“का विषमा दैवगति: किं दुर्ल्लभं जन: खलो
लोके ॥”)
विषमं, क्ली, पद्यस्य त्रिविधवृत्तान्तर्गतवृत्तविशेष: ॥
यथा,—

“पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥
सममर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा ।
समं समचतुष्पादं भवत्यर्द्धसमं पुन: ॥
आदिस्तृतीयवद्यस्य पादस्तुर्य्यो द्वितीयवत् ।
भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम् ॥”
इति छन्दोमञ्जर्य्यां प्रथमस्तवक: ॥
वर्गमूलोक्तोर्द्धरेखा । यथा,—
“त्यक्त्वान्त्याद्विषमात् कृतिं द्विगुणयेन्मूलं समे
तद्धृते
त्यक्त्वा लब्धकृतिं तदाद्यविषमाल्लब्धं द्विनिघ्नं
न्यसेत् ।
पङ्क्त्यां पङ्क्तिहृते समेऽन्यविषमात् त्यक्त्वाप्तवर्गं
फलं
पङ्क्त्यान्तद्विगुणं न्यसेदिति मुहु: पङ्क्तेर्दलं
स्यात् पदम् ॥”
इति लीलावती ॥
( अर्थालङ्कारविशेष: । यथा, साहित्यदर्पणे ।
१० ।
“यद्यारब्धस्य वैफल्यं अनर्थस्य च सम्भव: ।
विरूपयो: सङ्घटना या च तद्विषमं मतम् ॥”
उदाहरणम् ।
“क्व वनं तरुवल्कभूषणं
नृपलक्ष्मी: क्व महेन्द्रवन्दिता ॥” )
विषम:, पुं, अयुग्मराशि: । स तु मेष: मिथुन:
सिंह: तुला धनु: कुम्भश्च । यथा,—
“क्रूरोऽथ सौम्य: पुरुषोऽङ्गना च
ओजोऽथ युग्मं विषम: समश्च ।
चरस्थिरद्व्यात्मकनामधेया
मेषादयोऽमी क्रमश: प्रदिष्टा: ॥”
इति ज्योतिस्तत्त्वम् ॥
तालविशेष: । यथा, सङ्गीतदामोदरे ।
“चतुर्व्विध: परिज्ञेयस्ताल: कङ्कणनामक: ।
पूर्ण: खण्ड: समश्चैव विषमश्चैव कथ्यते ॥
लघुचतुष्कं गणौ पूर्णे खण्डे बिन्दुद्वयं गुरु: ।
यगणस्तु समे ज्ञेयस्तगणो विषमे भवेत् ॥”
( जठराग्निविशेष: । यथा,—
“मन्दस्तीक्ष्णोऽथ विषम: समश्चेति चतुर्व्विध: ।
विषमो वातजान् रोगान् तीक्ष्ण: पित्तनिमि-
त्तजान् ॥”
इति वैद्यकचक्रपाणिसंग्रहे मन्दाग्न्यधिकारे ॥ )
विषमच्छद:, पुं, ( विषम: अयुग्म: छदो यस्य । )
सप्तच्छदवृक्ष: । इत्यमर: ॥
विषमज्वर:, पुं, (विषम: ज्वर: ।) ज्वररोगविशेष: ।
तस्य निदानकथनपूर्व्विकां संप्राप्तिमाह ।
“दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुन: ।
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥”
अयमर्थ: । ज्वरोत्सृष्टस्य ज्वरेण त्यक्तस्य ।
सन्निकृष्टं लक्षणमाह । दोष: अल्प: ज्वरमुक्त्या
स्वल्पोऽपि । विप्रकृष्टं हेतुमाह । अहित-
माहारविहारादि तेन सम्भूत: संपूर्णो जात:
अन्यतमं धातुं रसरक्तादिकं प्राप्य दूषयित्वा

पुनः विषमज्वरं करोति। ज्वरोत्सृष्टस्य वेति वाशब्देनेति बोध्यते। प्रथमतोऽपि विषमज्वरो भवति। यत उक्तम्। “आरम्भाद्विषमो यस्य” इत्यादिकम्। धातुं दूषयित्वा कं विषमज्वरं करोतीत्यपेक्षायामाह।

“सन्ततं रसरक्तस्थः सततं रक्तधातुगः।
दोषः क्रुद्धो ज्वरं कुर्य्यात् सोऽन्येद्युः पिशिताश्रितः॥
मेदोगतस्तृतीयेऽह्नि अस्थिमज्जगतः पुनः।
कुर्य्याच्चातुर्थकं घोरमन्तकं रोगसङ्करम्॥”

अन्तकं अन्तकमिव मारकत्वात्॥ * ॥ विषमज्वरस्य सामान्यलक्षणमाह।

“यः स्यादनियतात् कालाच्छीतोष्णाभ्यां तथैव च।
वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः॥”

अनियतात् कालात् स्यादित्यस्यायमर्थः। यथा, वातिको ज्वरः सप्तदिनानि पैत्तिको दश दिनानि श्लैष्मिको द्वादश दिनानि दोषाणां प्राबल्ये वातिकश्चतुर्दश दिनानि पैत्तिको विंशतिदिनानि श्लैष्मिकश्चतुर्विंशतिदिनानि स्यात् तथा विषमज्वरो नियतं कालं व्याप्य न स्यादित्यर्थः। शीतोष्णाभ्यां गुणाभ्यां स्यात्।

“वेगतश्चापि विषमः कदाचिदपि वेगवान्॥”

कदाचिदपि शान्तवेगः॥ विषमज्वरस्य भेदानाह।

“सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ।”

तत्र सन्ततस्य लक्षणमाह।

“सप्ताहं वा दशाहं वा द्वादशाहमथापि वा।
सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते॥”

विकल्पो वातिकादिभेदात्। सन्तत्या नैरन्तर्य्येण अविसर्गी अपरित्यागी॥ ननु सन्ततानुबन्धित्वं विषमत्वमिति विषमलक्षणं तदत्र न घटत इति कथमयं विषमेषु पठ्यते। घटत एव इति न दोषः। यत उक्तं चरकेण।

“विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणम्।
दुर्लभोपशमः कालं दीर्घमप्यनुवर्त्तते॥”

यत्तु खरनादः।

“ज्वराः पञ्च च ये प्रोक्ताः पूर्व्वं सततकादयः।
चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमज्वराः॥”

इति। तच्चिरेण त्यागाभिप्रायेण॥ * ॥ सततलक्षणमाह।

“अहोरात्रे सततको द्वौ कालावनुवर्त्तते।”

द्वौ कालौ अहन्येककालं रात्रावेककालम्। यतो दोषाणामहोरात्रे प्रत्येकं द्वौ द्वौ प्रकोपकालौ। यत उक्तं वाग्भटेन।

“वयोऽहोरात्रिभुक्तानामन्तमध्यादिकाः
क्रमात्।” इति॥

अन्येद्युष्कलक्षणमाह।

“अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्तते।”

एककालं दोषापेक्षया एककालमपि द्वितीयं प्रथमकाले हृदय दोषस्थितेः॥ * ॥ तृतीयकचतुर्थकयोर्लक्षणमाह।

“तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः॥”

तृतीयेऽह्नि इत्यागमनदिनं गृहीत्वा। यत उक्तम्।

“दिनमेकमतिक्रम्य यो भवेत् स तृतीयकः।
दिनद्वयं व्यतिक्रम्य यः स्यात् स हि चतुर्थकः॥”
इति॥

अथाह वृद्धसुश्रुतः।

“कफस्थानविभागेन यथासंख्यं करोति हि।
सततान्येद्युष्कत्र्याख्यचतुर्थकप्रलेपकान्॥
अहोरात्रादहोरात्रात् स्थानात् स्थानं प्रपद्यते।
दोष आमाशयं प्राप्य करोति विषमज्वरम्॥”

अयमर्थः। आमाशयोरःकण्ठशिरःसन्धयः पञ्च कफस्थानानि एषु तिष्ठन् दोषो यथासंख्यं सततादीन् करोति। तत्रामाशये स्थितो दोषः सततं करोति द्वौ कालौ अहोरात्रे कालद्वये दोषप्रकोपात्। हृदये स्थितो दोष आमाशयमागत्य अन्येद्युष्कं करोति। एककालं नैकदाऽऽर्थैकस्मिन्नेवाहोरात्रे दोष आमाशयमायाति। तत्र द्वौ दोषकोपकालौ एकस्मिन् काले हृदये तिष्ठत्यपरस्मिन्नामाशय इति। कण्ठे स्थितो दोषोऽहोरात्रात् हृदयमायाति। तृतीये दिने आमाशयमागत्य स्वप्रकोपकाले तृतीयकं ज्वरं करोति एककालं न तु द्वौ कालौ स्वभावात्। एवं शिरःस्थितो दोषोऽहोरात्रात् कण्ठमायाति। ततः पुनरहोरात्राद्धृदयमायाति चतुर्थदिने आमाशयमागत्य स्वप्रकोपकाले चतुर्थकं ज्वरं करोति। एककालं न तु द्वौ कालौ स्वभावादेव॥ * ॥ ननु दोषस्यागमनक्रमेण निजस्थानगमनक्रमात् कथं तृतीयचतुर्थदिवसयोर्ज्वरागमनम्। उच्यते। दोषो हि प्रकोपशमये वेगवत्तया लाघवात् स्वस्थानन्तु वेगादिव एव याति। यत आह।

“दोषः प्रकोपकाले हि वेगवत्त्वेन लाघवात्।
वेगवाहर एवायं स्वस्थानमभिगच्छति॥”

सन्धिषु स्थितः प्रलेपं करोति। सन्धयस्त्वामाशयेऽपि सन्ति तेषु स्थितः प्रलेपकं सर्व्वदा करोति॥ * ॥

“निवृत्तः पुनरायाति विषमो नियते दिने।
स्वभावं कारणं तत्र मन्यन्ते मुनिपुङ्गवाः॥”

स्वभावस्य कारणत्वे कफस्थानविभागनिरपेक्षाश्चतुर्थकादिविपर्य्यया अपि ज्वराः स्वस्य काले भवन्ति।

“अधिशेते यथा भूमिं बीजं काले प्ररोहति।
अधिशेते तथा धातून् दोषः काले प्रकुप्यति॥”

सुश्रुतोऽप्याह।

“स चापि विषमो देहं न कदाचित् प्रमुञ्चति।
ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते॥
वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते।
धात्वन्तरस्थो लीनत्वात् सौक्ष्म्यान्नैवोपलभ्यते॥”

द्विदोषोल्बणस्य तृतीयकस्य लक्षणमाह।

“कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः।
वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः॥”

त्रिकग्राही वेदनया त्रिकं गृह्णाति इत्यर्थः॥ * ॥ ननु कफपित्तात्त्रिकग्राही वेदनया त्रिकस्थानं त्रिकस्य वातस्थानं तत्कथं तद्ग्रहीतौ पित्तकफौ अन्यस्थानगतत्वेन दुर्ब्बलत्वेन दुर्ब्बलौ वेगं कुरुते। उच्यते दोषाणां स्थाननियमः न तु कुपितानाम्। तथा च सुश्रुतः।

“कुपितानां हि दोषाणां शरीरे परिधावताम्।
यत्र सङ्गः खवैगुण्याद्व्याधिस्तत्रोपजायते॥”

एवं अन्यस्थानगतत्वेन चतुर्थकोऽपि वाच्यम्। वातकफात्मकः पृष्ठात् पृष्ठं व्याप्य भवति इत्यर्थः। यद्योगकर्म्मण्यधिकरणे पृष्ठे इति पञ्चमी॥ * ॥ कफोल्बणस्य वातोल्बणस्य च चतुर्थकस्य लक्षणमाह।

“चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः।
जङ्घाभ्यां श्लैष्मिकः पूर्व्वं शिरसोऽनिलसम्भवः॥”

श्लैष्मिकः श्लेष्मोल्बणः तथा अनिलसम्भवः वातोल्बणः। सन्ततादीनां त्रिदोषजत्वात्। उक्तञ्च चरकेण।

“प्रायशः सन्निपातेन पञ्च स्युर्विषमज्वराः।”
इति।

प्रायशो ग्रहणादेकदोषजाः द्विदोषजा अपि न भवन्ति इति जेज्जटः॥ पूर्व्वं प्रथमं जङ्घाभ्यां अथवा जङ्घे व्याप्य पश्चात् सकलं शरीरं व्याप्नोति। एवमुल्बणवातजातः शिरसः पूर्व्वं अथवा शिरो व्याप्य सकलं शरीरं व्याप्नोतीत्यर्थः।

“विषमज्वर एवान्यश्चतुर्थकविपर्य्ययः।
अस्थिमज्जगतो दोषश्चतुर्थकविपर्य्ययः॥”

अन्यः सन्ततादिपञ्चकादपरश्चतुर्थकविपर्य्ययाख्यो ज्वरः सोऽपि विषमज्वर एव। स किंधातुस्थ इत्यपेक्षायामाह अस्थीत्यादि। तस्य चतुर्थकविपर्य्ययस्य लक्षणमाह।

“स मध्ये ज्वरयत्यह्नी आद्यन्ते च विमुञ्चति॥”

चतुर्थकविपर्य्यय इत्युपलक्षणम्। सततादिविपर्य्ययोऽपि बोद्धव्यः। यथा, अहोरात्रे द्वौ कालौ मुञ्चति शेषं सर्व्वमहोरात्रं तिष्ठतीति सततविपर्य्ययः। अहोरात्रे एकं कालं मुञ्चति शेषं सर्व्वमहोरात्रं तिष्ठति इत्यन्येद्युष्कविपर्य्ययः। मध्ये एकं दिनं ज्वरयति आद्यन्ते च दिने मुञ्चति इति तृतीयकविपर्य्ययः। एते विषमज्वरा उपलक्षकाः अन्ये रात्रिज्वरादयोऽपि विषमज्वरा बोद्धव्याः॥ यथा,—

“समौ वातकफौ यस्य क्षीणपित्तस्य देहिनः।
रात्रौ प्रायो ज्वरस्तस्य दिवा क्षीणकफस्य तु॥”

प्रायो बाहुल्येन॥ * ॥ सन्ततादीनां शीतपूर्व्वत्वे दाहपूर्व्वत्वे च हेतुमाह।

“त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो
ज्वरम्।
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च॥”

शीतं शीतसहितं प्रशान्तयोः प्रशान्तवेगयोः।

अन्त: अभ्यन्तरे ।
"करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च ।
तस्मिन् प्रशान्ते त्वितरौ कुरुत: शीतमन्तत: ॥"
अन्तत: हस्तपादादित: ॥ * ॥ शीतादिदाहादिज्वरयोस्त्रिदोषजत्वमाह ।
"द्वावेतौ दाहशीतादी ज्वरौ संसर्गजौ स्मृतौ ।
दाहपूर्व्वस्तयो: कष्ट: सुखसाध्यतमोऽपर: ॥"
संसर्गजौ सान्निपातिकौ । कष्ट: कष्टसाध्य: ॥*॥
विषमज्वरविशेषानाह ।
"विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते ।
तेनार्द्धं शीतलं देहमर्द्धमुष्णं प्रजायते ॥"
अन्नरसे विदग्धे आहारजे रसे दुष्टे श्लेष्मपित्ते च व्यवस्थिते दुष्टे स्थिते तेन हेतुना शीतलं कफेन उष्णं पित्तेन अर्द्धमर्द्धं वामेतरभेदेन अधरोत्तरभेदेन वा ।
"काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थित: ।
तेनोष्णत्वं शरीरस्य शीतत्वं हस्तपादयो: ॥"
अन्ते हस्तपादादौ ।
"काये श्लेष्मा यदा दुष्ट: पित्तञ्चान्ते व्यवस्थितम् ।
शीतत्वं तेन गात्राणामुष्णत्वं हस्तपादयो: ॥"
विषमज्वरविशेषस्य प्रलेपकस्य लक्षणमाह ।
"प्रलिम्पन्निव गात्राणि घर्म्मेण गौरवेण च ।
मन्दज्वरविलेपी च सशीत: स्यात् प्रलेपक: ॥"
गौरवेण उपलक्षित: । मन्दज्वरविलेपी मन्दवेगस्य ज्वरस्य सदा सम्बन्धोऽस्यास्तीति मन्दज्वरविलेपी अयं विषमज्वर: । यथाच सुश्रुत: ।
प्रलेपकाख्यो विषम: प्राय: शोषाय शोषिणामिति ॥ * ॥ अथ विषमज्वराणां सामान्यचिकित्सा ।
"ज्वराश्च विषमा: सर्व्वे सन्निपातसमुद्भवा: ।
अथोल्वणस्य दोषस्य तेषु कार्य्यं चिकित्सितम् ॥
विरेकश्च कर्त्तव्यस्तैर्वाधश्च शोधनम् ।
स्निग्धोष्णैरन्नपानैश्च शमयेद्विषमज्वरम् ॥*॥
कालिङ्गक: पटोलस्य पत्रं कटुकरोहिणी ।
पटोलं सारिवा मुस्तं पाठा कटुकरोहिणी ॥
निम्ब: पटोलस्त्रिफला मृद्वीका मुस्तवत्सकौ ।
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥
गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापना: ।
कषाया: शमयन्त्याशु पञ्च पञ्चविधज्वरम् ॥"
कालिङ्गक: इन्द्रयव: । वत्सक: कुटज: । चन्दनमत्र रक्तचन्दनम् । कषाया: पञ्च । पञ्चविधं सन्ततसततान्येद्युष्कतृतीयचतुर्थकरूपम् ॥ * ॥

"महाबलामूलमहौषधाभ्यां
क्वाथो निहन्याद्विषमज्वरं हि ।
शीतं सकम्पं परिदाहयुक्तं
विनाशयेत् द्वित्रिदिनं प्रयोगात् ॥*॥
क्षुद्रामृतानागरपुष्कराह्वै:
कृत: कषाय: कफमारुतोत्तरे ।
सश्वासकासारुचिपार्श्वरुग्ज्वरे
सदा त्रिदोषप्रभवेऽपि शस्यते ॥"*॥

क्षुद्रादि ॥ * ॥

"क्षुद्रामृतापद्मकचन्दनैर्धने-
र्भूनिम्बपर्पटपटोलपौष्करै: ।
निदिग्धिकाकलिङ्गविषुमहद्वासकै-
र्महौषधं भार्ग्गिविलुङ्गकै: समै: ॥
शृतं पिबेत् पूर्व्वदिनं कषायं
निहन्ति हृद्ज्वरमुग्रशीतम् ।
सश्वासहृत्कासविदाहयुक्तं
छर्दीं वमिं कासमतीव शूलकम् ।
आनाहहिक्कादिषु सन्निपाते
गलग्रहे तन्त्रिशिरोरुजायाम् ॥"

इहतृक्षुद्रादिर्विषमज्वरे ॥ * ॥
"मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथ: ।
पीत: सकणाचूर्ण: समधुर्विषमज्वरं हन्ति ॥*॥
तिलतैलसमायुक्तलशुनो लशुनसेवित: प्रात: ।
विषमज्वरमपहरते वातव्याधीनशेषांश्च ॥ * ॥
काकमाची तु सगुडा विषमज्वरनाशिनी ।
मधुनाढ्याभया लीढा हन्त्याशु विषमज्वरान् ॥"
काकमाची मनरेला इति लोके । सा च किञ्चिदूनकटा गुडतुल्या कर्षमिता भक्षणीया ।*
"पीतो मरीचचूर्णेन तुलसीपत्रजो रस: ।
द्रोणपुष्पीभवो वापि निहन्ति विषमज्वरान् ॥ * ॥
अनन्ताया: शृतं चूर्णं वासका परिशोधितम् ।
पृथक् षोडशभागा: स्युर्गुडमाक्षिकसर्पिषाम् ॥
यथाग्नि भक्षयेदेतन्नरो हितमिताशन: ।
नास्य कश्चिद्भवेद्व्याधिर्न जरा पलितं न च ॥
न ज्वरा विषमा नैव मेहनाभिज्वरङ्कणम् ।
न च नेत्रगता रोगा: परमेतद्रसायनम् ॥
मेधाकरं त्रिदोषघ्नं प्रयोगादस्य बुद्धिमान् ।
जीवद्वर्षशतं साग्रं यथैवादितिनन्दना ॥"
गुडूचीकल्क: ॥ * ॥ अथास्याह ।
"तक्रमांसं पयोमांसं दधिमांसमथापि वा ।
माषमांसञ्च भुञ्जानो मुच्यते विषमज्वरात् ॥"*
अग्निवेशश्च ।
"सुरा समण्डा पानाय भोजने चरणायुधा ।
तित्तिरा विष्किरा: पथ्या: कुक्कुटा विषमज्वरे ॥
चरणायुधा गृहकुक्कुटा: । कुक्कुटा वनकुक्कुटा: ।
विष्किरा: वर्त्तिकालावतित्तिरचकोराद्या: ॥ *॥
अथ सन्ततादीनां विशिष्टा चिकित्सा ।
"त्रायन्तीकटुकानन्तासारिवाभि: शृतं जलम् ।
सन्तताख्ये ज्वरे देयं वातादीनां निवृत्तये ॥"
अनन्ता दुरालभा ॥ * ॥
"पटोलारग्वधतिक्तासारिवाभि: शृतं जलम् ।
सन्तताख्ये ज्वरे देयं वातादीनां निवृत्तये ॥"
तथा इन्द्रयवी एरण्डवनपञ्चविटपा तन्नाम्नी एनौ च ग्राह्या समानगुणत्वात् ॥ * ॥
"पटोलेन्द्रयवानन्तापथ्यारिष्टामृताजलम् ।
क्वथितं तज्जलं पीतं ज्वरं सन्ततकं जयेत् ॥"
अनन्ता सारिवा । अरिष्ट: निम्ब: । जलं बालकम् ॥ * ॥
"द्राक्षापटोलनिम्बाब्दशक्राह्वत्रिफलाजलम् ।
जलं जन्तु: पिबेच्छीघ्रमन्येद्युर्ज्वरशान्तये ॥"
शक्राह्व: इन्द्रयव: ॥ * ॥

"कर्म्मसाधारणं यस्मात् तृतीयकचतुर्थकौ ।
भिषजा प्रतिकर्त्तव्यौ विशेषोक्तचिकित्सितै: ॥
उशीरं चन्दनं मुस्तं गुडूचीधान्यनागरम् ।
अम्भसा क्वथितं पेयं शर्करामधुयोजितम् ॥*॥
ज्वरे तृतीयके पुंसां तृष्णादाहसमन्विते ।
अपामार्गजटा कट्यां लोहितै: सप्ततन्तुभि: ।
बद्धा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम् ॥*॥
स्थिरामलकीदारुशिवावृषमहौषधै: ।
सितामधुयुत: क्वाथश्चतुर्थकहर: पर: ॥"
स्थिरा शालपर्णी । आमलकी भूम्यामली । शिवा हरीतकी । वृषो वासा ॥ * ॥

"अगस्तिपत्रस्य रसेन नस्यं
निहन्ति चातुर्थकमुग्रवीर्य्यम् ।
शिरीषपुष्पस्य निशाद्वयस्य
कल्केन वा तत्कृतसंयुतेन ॥"

तत् नस्यम् ॥ * ॥
"ज्वरस्य वेगकालञ्च चिन्तयन् ज्वर्य्यते तु य: ।
तस्येष्टैरद्भुतैश्चापि विषयैर्नाशयेत् स्मृतिम् ॥
सन्ततं विषमञ्चापि क्षीणस्य सुचिरोत्थितम् ।
ज्वरं सभोजनै: पथ्यैर्लङ्घनै: समुपाचरेत् ॥"*॥
सततादिविपर्य्ययाणां विषमज्वराणां चिकित्सा सततादीनामिव कर्त्तव्या ।
"शीताभिभूते पुरुषे कुर्य्यादुष्णकरीं क्रियाम् ।
दाहाभिभूते तु विधिं विदध्याद्दाहनाशनम् ॥
आच्छादनैश्चोत्तरैर्गुरुभि: कम्बलादिभि: ।
तूलवत्या महाशीतं शीतादिज्वरिणो हरेत् ॥"
तूलवती तुलाई इति लोके ।
"तं स्तनाभ्यां सुपीनाभ्यां पीवरोरुर्नितम्बिनी ।
युवतिर्गाढमालिङ्गेत्तेन शीतं प्रशाम्यति ॥
कान्ताङ्गसङ्गसंजातं तस्य शीते निवारिते ।
प्रहर्षं चास्य विज्ञाय पृथक् तां कारयेत्
क्रियाम् ॥
ततो दाहे तु संजाते पत्रैरेरण्डसम्भवै: ।
शीतलैर्धारितैर्देहे दाहं तस्यापनोदयेत् ॥
नागकं शुक्तिकाचूर्णं तुल्यं तच्चोभयोरपि ।
नवमांसञ्च तुल्यं स्यात् मर्द्दयेत् कन्यकाद्रवै: ॥
तत् तु संशुष्कसुपलैर्वन्यैर्गजपुटै: पचेत् ।
शीतं तच्चूर्णयेच्चूर्णं गुञ्जामात्रं सितायुतम् ॥
प्रभाते भक्षयेत्तेन याति शीतज्वरक्षयम् ।
वान्तिर्भवति कस्यापि कस्यापि न भवत्यपि ॥
एकेन दिवसेनैव शीतज्वरहरं परम् ।
मध्याह्नसमये पथ्यं शिखरिणी भक्तकं च ॥"*॥
शीतज्वरे भूतभैरवचूर्णम् ।
"एला जातीफलं व्योषत्रिफलाजीरकं घन: ।
सविडङ्गं सितायुक्तं चूर्णं शीतज्वरापहम् ॥
कायस्थानाकुलीतिक्तावयस्थापुरचोरकै: ।
सहदेवावचाकुष्ठै: शीतघ्नैर्धूपलेपनै: ॥
एतैरेवौषधै: पिष्टैर्लवणक्षारसंयुतै: ।
साम्लैर्विपाचितं तैलमभ्यङ्गाच्छीतनाशनम् ॥"
कायस्था हरितकी । नाकुली रास्ना । भेड़बाई इति लोके । वयस्था गुडूची । पुरो गुग्गुलु: ।
चोरक: । भटेउर । तद्भावे गटिवन । सह-

देवा हरिद्रा। चारो मवक्षारः। काथ-
स्यादिद्रूपं लेपनं तैलञ्च ।
"एरण्डस्य तु पत्राणि जिग्धभूमौ निधापयेत्।
दाहादिज्वरिणो देहे तानि पत्राणि धारयेत्।
तेन गच्छति दाहोऽस्य ज्वरश्चैवोपशाम्यति।
दाहे शान्ते यदा शैत्यं तत्र युक्त्या निवारयेत्।
अथनचन्द्रचलल्लाक्षिमेखला
करसचन्दनचन्द्रविलेपना।
वनितेव तनुं परिवेष्टयेत्
प्रबलदाहनिपीड़ितमङ्गना।"
चन्द्रः कर्पूरः।
"मदनफलकल्कलितसुरभिदाहे निवारिते।
प्रक्षाल्यास्य विधाय तां क्षौमपनयेत् पुनः।"
सुवर्णिकानागरकुङ्कुमत्वगे-
लाचान्निग्धानीलोत्पलयष्टिकाभिः।
लिह्यं हरेत् षड्गुणतक्रपक्वं
तैलं ज्वरं दाहसमन्वितञ्च।"
षट्पक्वतैलम्।*।
"राजानागरकुष्ठचन्दननिशायष्ट्याह्वलाक्षावचा
लाक्षासैन्धवसारिवामधुरसाटेलदुरोहीतकैः।
क्षीरीरावुषिपर्णरोहिषजलैस्तैलं पचेत् षड्-
गुणे
तक्रेतच्छमयेज्ज्वरं ढ़ढ़तरं दाहादिशीतादि-
कम्।"
चन्दनमत्र श्वेतम्। मधुरसा मूर्व्वा। रोहीत-
कः रोहिणि इति लोके। रौहिषं रोहिष
इति तृणविशेषः। जलं बालकम्। महाषट्-
पक्वतैलम्।*।
"पद्मकोत्पलकह्लारमृणालविषपौष्करैः
कुमुदोशीरमञ्जिष्ठापद्मगैरिककट्फलैः।
सारिवाह्वयलोध्राब्दक्षीरीखर्ज्जूरमस्तकैः।
धात्रीशतावरीयुक्तैः क्वाथे कल्के प्रयोजितैः।
लाक्षारसपयः शुक्लमस्तुभिः सह काञ्जिकैः।
पक्वतैलमिदं श्रेष्ठं दाहज्वरहरं परम्।"
लाक्षारसादिः पृथक् तैलतुल्यः पद्मकादि-
तैलम्।*।
"प्रलेपके प्रयुञ्जीत सर्व्वज्वरहरीं क्रियाम्।
वन्यजटा गोशृङ्गं बिड़ालविष्ठोरगस्य निर्म्मोकः।
मदनफलभूतकेशी वैश्वस्नग्भूतनिर्म्माल्यम्।
घृतयवमयूरचन्द्रकच्छागलकरोमाणि सर्पपाः
वचाः।
हिङ्गुमरिचनिम्बरोमाः समभागाम्भोगन्ध-
संपिष्टाः।
धूपनविधिना प्रमयन्त्येते सर्व्वान् ज्वरान्नियतम्।
ग्रहडाकिनीपिशाचप्रेतविकारानयं धूपः।"
वन्यजटा जटाधारी। भूतकेशी जटामांसी।
रुद्रनिर्म्माल्यं रुद्रनिर्म्माल्यपुष्पादि। मयूरचन्द्रः
मयूरपुच्छचन्द्रकम्। माहेश्वरो धूपः।*।
"सोमं सानुचरं देवं समातृगणमीश्वरम्।
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात्।"
सोमं उमादिसहितम्। सानुचरं नन्द्यादिगण-
सहितम्। प्रयतः पवित्रः।*।
"विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम्।
स्तुवन्नामसहस्रेण ज्वरान् सर्व्वान् व्यपोहति।"
सहस्रमूर्द्धानमिति सहस्रशीर्षेत्यादि वेदाभि-
हितम्। नामसहस्रेण भारतोक्तेनेत्यर्थः।*।
ज्वरस्यापि देवतात्वात् पूजा कार्य्या। यत
आह विदेहः।
"तीर्थायतनदेवाग्निगुरुवृद्धोपसर्पणैः।
श्रद्धया पूजनैश्चापि सहसा शाम्यति ज्वरः।"
तीर्थं पवित्रं जलम्। आयतनं देवाधिष्ठितं
पुरुषोत्तमक्षेत्रशैलादि।*।
"निम्बपत्रं वचा क्षौद्रं यवानी लवणत्रयम्।
चारो हिङ्गुविड़ालेषु त्रिनेत्रक्रमशोऽंशकाः।
सर्व्वमेकीकृतं चूर्णं प्रकुर्व्वीत मनीषिणः।
एकाहिकं द्व्याहिकञ्च तथा त्रिदिवसज्वरम्।
चातुर्थिकं महाघोरं सन्ततं सततं हि वा।
धातुस्थञ्च निहन्त्येतं ज्वरं हन्ति च मान-
सम्।"
निम्बादि चूर्णम्। इति विषमज्वराधिकारः।
इति भावप्रकाशः।
विषमनयनः, पुं, (विषममयुग्मं नयनं यस्य।
त्रिनेत्रत्वात्तथात्वम्।) शिवः। इति हारावली।
विषमन्नः, पुं, (विषजिवर्णकं मन्त्रं यत्र।) सर्प-
धारकः। वादिया इति ख्यातः। तत्पर्य्यायः।
जाङ्गुली २। इति जटाधरः।
विषममयं, त्रि, (विषम + मयट्।) विषमादा-
गतम्। इति सिद्धान्तकौमुदी।
विषमरूप्यं, त्रि, (विषम + रूप्यः।) विषमादा-
गतम्। इति सिद्धान्तकौमुदी।
विषमर्द्दनिका, } स्त्री, (विषं मर्द्दयतीति। मर्द्द +
विषमर्द्दनी, } ल्युः ङीप्। स्वार्थे कन् च।)
गन्धनाकुली। इति राजनिर्घण्टः।
विषमविभागः, पुं, (विषमो विभागः।) असमा-
नांशः। यथा, यत्र तु भ्रातर एव विभागमर्थ-
यन्ते तत्र विषमविभागाभावमाह मनुः।
"भ्रातॄणामविभक्तानां यद्युत्थानं भवेत् सह।
न तत्र भागं विषमं पिता दद्यात् कथञ्चन।"
इति दायतत्त्वम्।
विषमस्थः, त्रि, (विषमे तिष्ठतीति। स्था + कः।)
असमानस्थितः। इति केचित्। उपप्लव-
देशस्थः। यथा नारदः।
"अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः।"
विषमस्थाः उपप्लवदेशस्थाः। इति व्यवहार-
तत्त्वम्।
विषमशिष्टः, पुं, दोषविशेषः। स च अनुचित-
शासनरूपः। अपदेशम्यम्। यथा, अत्र कामत
एव चान्द्रायणतप्तकृच्छ्रयोर्विषमशिष्टत्वेन इच्छा-
विकल्पासम्भवात् कामतश्चान्द्रायणं अकामत-
स्तप्तकृच्छ्रम्। इति प्रायश्चित्ततत्त्वम्।
विषमाक्षः, पुं, (विषमं अयुग्मं अक्षि यस्य।
त्रिनयनत्वादस्य तथात्वम्।) शिवः। इति
त्रिकाण्डशेषः।
विषमायुधः, पुं, (विषमा अयुग्मा आयुधा यस्य।
तस्य पञ्चबाणत्वात्तथात्वम्। यद्वा, विषमः अतुल्य
असह्य इत्यर्थः आयुधो यस्य।) कामदेवः।
इति हलायुधः।
विषमीयं, त्रि, (विषम + "गहादिभ्यश्च।" ४।
२। १३८। इति छः।) विषमादागतम्। इति
सिद्धान्तकौमुदी।
विषमुष्टिः, पुं, क्षुपविशेषः। विषदोडि इति
कडुचिञ्चि इति च हिन्दीभाषा। तत्पर्य्यायः।
केशमुष्टिः २ सुमुष्टिः ३ रणमुष्टिकः ४ क्षुप-
डोडमुष्टिः ५। अस्य गुणाः। कटुत्वम्। तिक्त-
त्वम्। दीपनत्वम्। कफवातकण्ठामयरक्तपित्ता-
दिदाहनाशित्वम्। वश्यत्वञ्च। इति राज-
निर्घण्टः।
विषमृत्युः, पुं, (विषेण तद्दर्शनमात्रेण मृत्युर्यस्य।)
जीवञ्जीवपक्षी। इति जटाधरः। चकोर इति
ख्यातः।
विषयः, पुं, ("विशिष्यन्ति विषयिणं स्वेन रूपेण
निरूपणीयं कुर्व्वन्ति।" इति वाचस्पत्यकौमुदी।
वि + षि + अच्।) चक्षुरादिग्राह्यः। स तु
शब्दस्पर्शरूपरसगन्धरूपः। तत्पर्य्यायः। गोचरः
२ इन्द्रियार्थः ३। देशः। (यथा, रघुः। ११।
१८।
"अथ चकार विषयं शिलामयी
ताड़कोरसि स रामसायकः।
अप्रविष्टविषयस्य रक्षसां
द्वारतामभवदन्तकस्य तत्।")
आश्रयः। इत्यमरः। न्यायमते पृथ्वीजो-
वायूनां विषया यथा,—
"तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता।
षड्विधस्तु रसस्तत्र गन्धोऽपि द्विविधो मतः।
स्पर्शस्तस्यापि विज्ञेयो ह्यनुष्णाशीतपाकजः।
नित्यानित्या च सा द्वेधा नित्या स्यादणु-
लक्षणा।
अनित्या तु तदन्या स्यात् सैवावयवयोगिनी।
सा च त्रिधा भवेद्देह इन्द्रियं विषयस्तथा।
योनिजादिर्भवेद्देह इन्द्रियं घ्राणलक्षणम्।
विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्त उदाहृतः।
वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ।
स्नेहस्तत्र द्रवत्वन्तु सांसिद्धिकमुदाहृतम्।
नित्यतादि प्रथमवत् किन्तु देहमयोनिजम्।
इन्द्रियं रसनं सिन्धुर्हिमादिर्विषयो मतः।*।
उष्णः स्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्।
नैमित्तिकं द्रवत्वन्तु नित्यतादि तु पूर्व्ववत्।
इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः।*।
अपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मतः।
तिर्य्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः।
पूर्व्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम्।
प्राणादिस्तु महावायुपर्य्यन्तो विषयो मतः।"
इति भाषापरिच्छेदः।
विषय इति। भोगसाधनं विषयः। सर्व्वमेव हि
कार्य्यं अदृष्टाधीनं यच्च कार्य्यं यददृष्टाधीनं

तत्तदुपभोगं साक्षात्परम्परया जनयत्येव नहि बीजप्रयोजनाभ्यां विना कश्चिदुत्पत्तिरस्ति तेन द्व्यणुकादिब्रह्माण्डान्तं सर्व्वमेव विषयो भवतीत्यर्थः । इति सिद्धान्तमुक्तावली ॥ * ॥ नित्यसेवित: । इति भरतधृताजय: ॥ अयत्त: । शुक्र: । इत्यव्ययपाल: ॥ जनपद: । इति मेदिनी ॥ कान्तादि: । इति शब्दरत्नावली ॥ नियामक: । यथा,—

"विशब्दो हि विशेषार्थः सिनोतेर्बन्ध उच्यते ।
विशेषेण सिनोतीति विषयोऽतो नियामकः ॥"

इति भट्टकारिका ॥ * ॥

आरोपाश्रय: । यथा,—

"आरोपाश्रय तु यथोक्तौ विषयो विषयस्तथा ।
विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका ॥"

यथा, गौर्व्वाहीक: । इति काव्यप्रकाशे २ उल्लास: ॥ ( "भोगसाधनं विषय: ।" इति तर्ककौमुदी ॥ )

विषयाज्ञानं, क्ली, ( विषयस्याज्ञानं यस्याम् । ) तन्द्रा । इति राजनिर्घण्ट: ॥

विषयाजी, [न्] पुं, ( विषयान् अयति प्राप्नोतीति । अय गतौ + णिनि: ।) राजा । वैषयिकजन: । इन्द्रिय: । कामदेव: । विषयासक्तपुरुष: । इति मेदिनी । ने, २४६ ॥

विषयि, [न्] क्ली, ( विषया: सन्त्यस्येति । विषय + इनि: ।) इन्द्रियम् । इति मेदिनी । ने, २११ ॥

विषयी, [न्] त्रि, ( विषयोऽस्यास्तीति । इनि: । ) विषयासक्त: । इति मेदिनी । ने, २११ ॥

विषयी, [न्] पुं, ( विषयोऽस्यास्तीति । इनि: ।) नृपति: । कामदेव: । वैषयिक: । इति मेदिनी । ने, २११ ॥ ध्वनि: । इत्यजयपाल: ॥ आरोप्यमाण: । यथा,—

"विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका ॥"

विषयिणा आरोप्यमाणेन अन्तःकृते निगीर्णेऽन्यस्मिन् आरोपविषये सति सा स्यात् साध्यवसानिका । इति काव्यप्रकाश: ॥

विषरूपा, स्त्री, अतिविषा । इति राजनिर्घण्ट: ॥

विषलं, क्ली, विषम् । इति शब्दचन्द्रिका ॥

विषलता, स्त्री, ( विषस्य लता । ) इन्द्रवारुणी । इति राजनिर्घण्ट: ॥ ( विषप्रधानलतामात्रे । यथा, गीतायां श्रीधर: । २ । ४२ । "विषलतावत् आपाततो रमणीयाम् ॥")

विषविद्या, स्त्री, विषघ्नमन्त्र: । इति विषवैद्यशब्दटीकायां भरत: ॥

विषवैद्य:, पुं, ( विषस्य वैद्य: । ) विषघ्नमन्त्रवेत्ता । ओझा इति ख्यात: । यथा । विषविद्यां वेत्ति अधीते वा विषवैद्य: आसुमाध्यानादित्वादन्यपदवृद्धि: । विषस्य वैद्यश्चिकित्सक: इति वा । इति भरत: ॥ तत्पर्य्याय: । जाङ्गुलिक: २ । इत्यमर: ॥ जाङ्गलिक: ३ नरेन्द्र: ४ कौशिक: ५ कथाप्रसङ्ग: ६ धमाट: ७ । इति जटाधर: ॥ व्यालग्राही ८ जाङ्गुलि: ९ जाङ्गलि: १० अहितुण्डिक: ११ व्यालग्राह: १२ गारुडिक: १३ । इति शब्दरत्नावली ॥

विषवैरिणी, स्त्री, ( विषस्य वैरिणी । ) निर्व्विषा । इति राजनिर्घण्ट: ॥

विषशालूक:, पुं, ( विषस्य शालूक: । ) पद्मकन्द: । अस्य गुणा: । गुरुत्वम् । विष्टम्भित्वम् । शीतलत्वञ्च । इति राजवल्लभ: ॥

विषशूक:, पुं, (विषं शूके यस्य ।) भृङ्गरोल: । इति भूरिप्रयोग: ॥

विषशृङ्गी, [न्] पुं, (विषं विषयुक्तं शृङ्गं तदस्यास्तीति । विषशृङ्ग + इनि: ।) भृङ्गरोल: । इति हारावली ॥

विषसूचक:, पुं, ( विषं सूचयति विषयुक्तान्नादिदर्शने स्वत: सन् ज्ञापयतीति । सूच + णिच् + ण्वुल् । ) चकोरपक्षी । इति हेमचन्द्र: ॥

विषहस्ता, [न्] पुं, ( विषं हस्ते यस्य । ) भृङ्गरोल: । इति त्रिकाण्डशेष: ॥

विषहन्त्री, स्त्री, ( विष + हन + तृच् । स्त्रियां ङीप् । ) अपराजिता । निर्व्विषा । इति राजनिर्घण्ट: ॥

विषहर:, त्रि, ( हरतीति । हृ + अच् । विषस्य हर: । ) मरकताश्मौषधादि: । यथा । ॐ हँ स: ।

"मन्त्रोऽयं हरते सद्य सर्व्वदृश्चिकजं विषम् ।
पिप्पली नवनीतञ्च शृङ्गवेरञ्च सैन्धवम् ।
मरीचं दधि कुष्ठञ्च नस्ये पाने विषं हरेत् ॥
त्रिफला टङ्कणञ्च चन्दनं घृतसंयुतम् ।
गलत्पानाच्च लेपाच्च विषनाशो भवेद्ध्रुवम् ॥
पारावतस्य चान्त्राणि हरितालं मनःशिला ।
एष योगो विषं हन्ति वैनतेय इवोरगान् ॥
सैन्धवं ग्रुषणं चार्कं दधिमध्वाज्यसंयुतम् ।
वृश्चिकस्य विषं हन्ति लेपोऽयं वृषभध्वज ॥"

इति गारुडे १८६ अध्याय: ।

विषहरा, स्त्री, मनसादेवी । इति शब्दरत्नावली ॥ ( यथा, देवीभागवते । ९ । ४७ । ५१ ।

"जरत्कारुप्रियास्तीकमाता विषहरेति च ॥")

विषहरी, स्त्री, मनसादेवी । इति शब्दरत्नावली ॥ ( यथा, देवीभागवते । ९ । ४७ । ४७ ।

"विषं संहर्त्तुमीशा या तस्माद्विषहरी स्मृता ॥")

विषहा, स्त्री, ( विषह + टाप् । ) देवदालीलता । निर्व्विषा । इति राजनिर्घण्ट: ॥

विषा, स्त्री, अतिविषा । इत्यमर: ॥ बुद्धि: । इत्युणादिकोष: ॥ (अस्या: पर्य्यायो गुणाश्च यथा,

"काश्मीरातिविषा श्वेता श्यामा शुक्ला विषा-रुणा ॥"

इति वैद्यकरत्नमालायाम् ॥

"विषाऽतिविषा विश्वा शृङ्गी प्रतिविषारुणा ।
शुक्लकन्दा चोपविषा भङ्गुराघुणवल्लभा ॥
विषा सोष्णा कटुस्तिक्ता पाचनी दीपनी हरेत् ।
कफपित्तातिसारामविषकासवमिक्रिमीन् ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

विषाङ्कुर:, पुं, ( विषस्याङ्कुर: । ) शल्याङ्गम् । इति त्रिकाण्डशेष: ॥

विषाणं, क्ली, कुष्ठौषधम् । पशुशृङ्गम् । ( यथा, साहित्यदर्पणे । १० ।

"पिपसि शुकं दशदंशकवदने
मृगमर्पयसि मृगादनरदने ।
वितरसि तुरगं महिषविषाणे
विदधच्चेतो भोगविताने ॥")

हस्तिदन्त: । इति मेदिनी । णे, ७७ ॥ ( यथा, शिशुपालवधे । १ । ६० ।

"न जातु वैनायकमेकमुद्धृतं
विषाणमद्यापि पुन: प्ररोहति ॥")

कोलदन्त: । इति हेमचन्द्र: ॥ ( विशेषेण मदहातरि, त्रि । यथा, ऋग्वेदे । ५ । ४४ । ११ ।

"विषाणं परिपानमन्ति ते ।"

"विषाणं विशेषेण मदस्य दातारम् ।" इति तद्भाष्ये सायण: ॥ )

विषाणिका, स्त्री, मेषशृङ्गी । इति रत्नमाला ॥ ( अस्या: पर्य्यायो यथा,—

"शृङ्गी कर्कटशृङ्गी स्यात् कुलीरश्च विषाणिका ।
अजशृङ्गी च वक्रा च कर्कटाख्या च कीर्त्तिता ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥) सातला । कर्कटशृङ्गी । आवर्त्तकी । इति राजनिर्घण्ट: ॥

विषाणी, स्त्री, क्षीरकाकोली । अजशृङ्गी । इति मेदिनी । णे, ७७ ॥ वृश्चिकाली । इति राजनिर्घण्ट: ॥ तिन्तिडी । इति शब्दचन्द्रिका ॥

विषाणी, [न्] पुं, (विषाणमस्यास्तीति । विषाण + इनि: । ) हस्ती । शृङ्गी । इत्यजय: ॥ ( यथा, हरिवंशे । २०४ । २७ ।

"शृङ्गा विषाणिनश्चैव वृषभाश्चैव गावस्तथा ॥")

ऋषभनामौषधम् । शृङ्गाटक: । इति राजनिर्घण्ट: ॥

विषाद:, पुं, ( वि + षद + घञ् । ) अवसाद: । यथा,—

"जाड्यं मौर्ख्यं विषादोऽवसाद: सादो विषण्णता ।"

इति हेमचन्द्र: ॥

( यथा, भागवते । १ । ११ । १ ।

"दध्मौ दरवरं तेषां विषादं शमयन्निव ॥")

विषादनी, स्त्री, पलाशीलता । इति राजनिर्घण्ट: ॥

विषानन:, पुं, ( विषमानने यस्य । ) सर्प: । इति शब्दमाला ॥

विषान्तक:, पुं, (विषस्य अन्तक: नाशक: । नीलविषत्वात् । ) शिव: । इति हेमचन्द्र: ॥ विषनाशके, त्रि ॥

विषापह:, पुं, ( विषं अपहन्तीति । हन + ड: । ) मुष्ककवृक्ष: । इति राजनिर्घण्ट: ॥ ( विषनाशके, त्रि । यथा, मनौ । ७ । २१७ ।

"सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्व्विषापहै: ॥")

विषापहा, स्त्री, इन्द्रवारुणी । निर्व्विषा । इति राजनिर्घण्ट: ॥ नागदमनी । इति भावप्रकाश

अर्केन्दुला। ईषुरमूल इति भाषा। इति शब्द-चन्द्रिका॥ (अस्याः पर्यायो यथा,—
"अर्कपत्रा सुनन्दा स्यादर्कनन्दा विषापहा॥"
इति वैद्यकरत्नमालायाम्॥)
सर्पकङ्कालिका। इति रत्नमाला॥

विषाभावा, स्त्री, (विषस्याभावो यत्र सा।) निर्व्विषा। इति राजनिर्घण्टः॥

विषायुधः, पुं, (विषमेवायुधं यस्य।) सर्पः। इति शब्दरत्नावली॥ विषयुक्तास्त्रे, त्री॥

विषारः, पुं (विषेण ऋच्छतीति। ऋत+अच्। तस्य रत्वम्।) सर्पः। इति शब्दचन्द्रिका॥

विषारातिः, पुं, (विषस्यारातिः नाशकः।) कृष्णधत्तूरकः। इति राजनिर्घण्टः॥

विषारिः, पुं, (विषस्यारिः।) महाचञ्चुशाकः। घृतकरञ्जः। इति राजनिर्घण्टः॥ (विषनाशक-मात्रे, त्रि।)

विषास्यः, पुं, (विषमास्ये यस्य।) सर्पः। इति शब्दरत्नावली॥ विषयुक्तमुखे, त्रि॥

विषास्या, स्त्री, भल्लातकः। इति शब्दचन्द्रिका॥ (भल्लातकशब्देऽस्या विषयो विज्ञेयः॥)

विषु, व्य, साम्यम्। इति विषुवच्छब्दटीकायां भरतः॥ नानारूपम्। इति रामाश्रमः॥

विषुणः, पुं, (विषु साम्यमभिव्याप्नोतीति। "क्षोभा-दीनि।" ५।२।१००। इति नः। पश्चात् णत्वम्।) विषुवम्। यथा। "विषु नानारूपं गमनं विष्वक् तदस्यास्तीति विग्रहे पामादि-त्वात्। नः। सप्तदशोपसंख्यानात् वर्णलोपे च णत्वम्।" इत्यमरटीकायां रामाश्रमः॥ (नानारूपम्। यथा, ऋग्वेदे। १।५४।८।
"यस्य त्वमिन्द्र विषुणं वि जानाम्॥"
"विषुणं विषुक् नानारूपम्।" इति तद्भाष्ये सायणः॥ सर्व्वगः। यथा, ऋग्वेदे। ८।२६।१।
"वभ्रुरेको विषुणः।"
"विषुणः विष्वगञ्चनः।" इति तद्भाष्ये सायणः॥ विप्रकीर्णः। यथा, ऋग्वेदे। ५।१२।५।
"सखायस्ते विषुणा अग्न एते।"
"विषुणाः विप्रकीर्णाः सर्व्वव्यापाः।" इति तद्-भाष्ये सायणः॥ पराङ्मुखः। यथा, ऋग्वेदे। ५।३४।६।
"वित्वक्षणः समृतौ चक्रमासजो-ऽसुन्वतो विषुणः सुन्वतो वृधः।"
"विषुणः पराङ्मुखः।" इति तद्भाष्ये सायणः॥)

विषुपं, क्ली, विषुवम्। इत्यमरटीकायां भरतः॥

विषुवं, क्ली, समरात्रिन्दिवकालः। तत्पर्यायः। विषुवत् २। इत्यमरः॥ विषुपम् ३ विष्वक् ४ विष्वक् ५। इति शब्दरत्नावली॥ विषुणः ६। इति रामाश्रमः॥ विषुवः ७। इति मुकुटः॥ तत्तु मेषतुलयोः संक्रान्तौ। यथा,—
"मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने।
विषुवती तुलामेषे गोलमध्ये तथापरा॥"
इति तिथ्यादितत्त्वम्॥*॥
ते तु महाविषुवजलविषुवनामभ्यां क्रमेण ख्याते। यथा,—
"विषुवाख्यौ वत्सरः स्यादिति शब्दविदां मतम्।
महाविषुवमाख्यातं ज्ञातिभिश्चैत्रचिह्नितम्।
तथा स्याज्जलविषुवं क्रमादाश्विनचिह्नितम्॥"
इति शब्दरत्नावली॥*॥
विषुवारम्भकालो यथा,—
"वृषसंक्रान्तितः पूर्व्वं पश्चात् तारा दिनान्तरे।
एकवर्षे चतुःपञ्चपलमानक्रमेण तु।
षट्षष्टिवत्सरानेकदिनं स्यादयनं रवेः।
एवं चतुःपञ्चदिनमयनारम्भकं क्रमात्॥
युग्मक्रमेण च तद्वत् स्यादुदगयनं रवेर्ध्रुवम्।
कर्किसंक्रमणे तद्वदभितो दक्षिणायनम्॥
अयनांशक्रमेणैव विषुवारम्भणं तथा।
रविसंक्रान्तितो मेषतुलयोरभितः पुनः॥
विषुवं मीनकन्यार्द्धे लेकाद्योश्चप्रकाव्दके।
दिनमानाय मीनाद्ध्रमेषार्द्धं पालिकं शतम्॥
ततो वृषार्द्धपर्य्यन्तमशीतिः पलभाजिनी।
मिथुनार्द्धं चतुस्त्रिंशत्पलानां वर्द्धते क्रमात्॥
कर्कटार्द्धन्तु षट्त्रिंशत् सिंहार्द्धन्तु द्व्यशीतकम्।
कन्यार्द्धन्तु द्विनवतिः क्रमात् च्युतति वासरे॥
कन्यार्द्धादिनमीमानं बोध्यं पूर्व्वक्रमेण हि।
दिने दिने भागहाराभ्यां बोध्यं दिवानिशोः॥
एकमानं दशघट्या त्वक्रान्यमाननिर्णयः।
षटषष्टिवत्सरानर्वं ततः स्यात् षोडशांशके।
पुनस्तद्वत्सरात्तद्वत् एव सप्तदशादिके॥"
इति ज्योतिस्तत्त्वम्॥*॥
अन्यच्च
"मेषसंक्रमतः पूर्व्वं पश्चात्तारा दिनान्तरे।
प्रातिलोम्यानुलोम्येन विषुवारम्भणं भवेत्॥
त्रयोदशदिने सौरे चैत्रे नक्तदिनौ शके।
विषुवारम्भणं तत्र समं मानं दिवानिशोः॥
ततः प्रतिदिनं वेला सपादत्रिपलात्मिका।
वर्द्धते मेषविम्बांशपर्य्यन्तं स्वल्पमार्गतः॥
तथा ज्यैष्ठान्तपर्य्यन्तं पादोनत्रिपलात्मिका।
ताढगाषाढपर्य्यन्तं पलैकप्रमिता मता॥
ततः कर्कटविम्बांशपर्य्यन्तं प्रत्यहं क्रमात्।
सपादपलमानेन वेला क्षयति निश्चितम्॥
ताढगभाद्रान्तपर्य्यन्तं पादोनत्रिपलात्मिका।
ताढगाश्विनशेषान्तं चरमत्रयपलात्मिका॥
दिवामानं दशघट्यैकात्मका रात्रेः प्रमाणकम्।
वैशाखादौ दिवामानं रात्रिमानं तुलादिषु॥
षट्षष्टिवत्सरानेवं ततः स्यात् द्वादशांशके।
पुनस्तद्वत्सरात्तद्वत् तत एकादशादिके॥"
इति सत्कृत्यमुक्तावली॥

विषुवत्, क्ली, विषुवम्। इत्यमरः॥ (यथा, महा-भारते। ३।१९९।१२१।
"भवति सहस्रगुणं दिनस्य राहो-र्व्विषुवति चाक्षयमश्नुते फलम्॥"
व्यापकः। यथा, ऋग्वेदे। १।८४।१०।
"स्वादोरित्थाविषूवतो मध्वः पिबन्ति गौर्य्यः॥"
"विषुवत इत्यमनेन प्रकारेण सर्व्वेषु यज्ञेषु व्याप्तियुक्तस्य * * * विषुवत् व्याप्तौ अस्मा-त्पौणादिकः कुप्रत्ययः। ततो मतुप् ह्रस्वनुड्-भ्यां मतुबिति मतुप उदात्तत्वम्। अन्येषामपि दृश्यत इति संहितायां दीर्घः वत्वयेन मतोर्व-त्वम्।" इति तद्भाष्ये सायणः॥)

विषौषधी, स्त्री, (विषस्यौषधी।) नागदन्ती। इति रत्नमाला॥

विष्कम्भः, पुं, सप्तविंशतियोगान्तर्गतप्रथमयोगः। शुभकर्म्मणि तस्य पञ्च दण्डास्त्याज्याः। यथा,—
"वज्रादौ पञ्च विष्कम्भे सप्त शूले च नाडिकाः।
गण्डव्याघातयोः षट् च नव हर्षणवज्रयोः।
वैधृतिव्यतिपातौ च समस्तौ परिवर्ज्जयेत्॥"
इति सत्कृत्यमुक्तावली॥*॥
तत्र जातफलम्।
"विष्कम्भयोगो यदि जन्मकाले
कार्य्यं स्वतन्त्रो मनुजस्तदानीम्।
सुहृत्कलत्रात्मजसौख्ययुक्तं
गृहस्य निर्म्माणविधौ समर्थः॥"
इति कोष्ठीप्रदीपः॥*॥
विस्तारः। (यथा, बृहत्संहितायाम्॥५३।२४।
"उच्छ्रायोऽङ्गुलतुल्यो द्वारस्यार्द्धेन विष्कम्भः॥")
प्रतिबन्धः। रूपकाङ्गभेदः। योगिनां बन्ध-भेदः। इति मेदिनी। भे, १९॥ वृक्षः। इत्य-जयः॥ अर्गला। इति भरतः॥

विष्कम्भी, [न्] पुं, (विष्कभ्नाति रुणद्धीति। वि+स्कम्भ+णिनिः।) अर्गला। यथा।"तद्विष्कम्भो-ऽर्गलं न ना। इत्यमरोक्तौ कपाटधारणकाष्ठं अर्गलं हुड्कादक इति ख्यातम्। तत् कपाटं विष्कभ्नाति रुणद्धि इति ग्रहादित्वाणिन् तद्वि-ष्कम्भी गर्हंणवत् स्वार्थकथनमेतत् विष्कम्भीति नाम च इत्येके। तद्विष्कम्भोऽर्गलमिति मूल-पाठः। विष्कम्भो बन्धननिमित्तदण्डः। इति भट्टः। इति मुकुटः॥
'विष्कम्भो योगभेदे स्यात् विस्तारप्रतिबन्धयोः। कपाटाङ्गप्रभेदे च।' इति मेदिनीदर्शनात् विष्कम्भ इति पाठः।" इति तट्टीकायां भरतः॥

विष्कलः, पुं, (विषं विष्ठां कलयति भक्षयतीति। कल+अच्।) ग्राम्यशूकरः। इति राज-निर्घण्टः॥

विष्किरः, पुं, (विकिरतीति। वि+कॄ ञ विक्षेपे+इगुपधेति कः। "विष्किरः शकुनिर्व्विकिरो वा।" ६।१।१५०। इति सुट्। परिनिविभ्य इति षत्वम्।) पक्षी। इत्यमरः॥ विष्किरास्तित्तिरि-मयूरकुक्कुटादयः।
"लावाद्या वैष्किरो वर्गः प्रतुदा जाङ्गला मृगाः।
लघवः शीतमधुराः सकषाया हिता नृणाम्॥"
इति राजवल्लभः॥*॥
अथ विष्किराणां नामानि गुणाश्च।
"वर्त्तकालावविकिरकपिञ्जलकतित्तिराः।
कलिङ्गकुक्कुटाद्याश्च विष्किराः समुदाहृताः॥
विकीर्य्य भक्षयन्त्येते यस्मात्तस्माद्धि विष्किराः।
कपिञ्जल इति प्राज्ञैः कथितो गौरतित्तिरः॥"
कुलिङ्ग गवैया इति लोके।

"विष्किरा मधुराः शीताः कषायाः कटु-
पाकिनः ।
बल्या वृष्यास्त्रिदोषघ्नाः पथ्यास्ते लघवः स्मृताः ॥"
इति भावप्रकाशः ॥
( "लाववर्त्तीरकवर्त्तिकावर्त्तक-
कपिञ्जलतित्तिरिविष्किरवर्त्तिकावर्त्तक-
नप्तृकावार्त्तीकचकोरकलविङ्कमयूरक्रकरोपचक्र-
कुक्कुटसारङ्गशतपत्रककुतित्तिरिकुरवाकयव-
लकप्रभृतयस्त्वाह्वला विष्किरा लघवः शीत-
मधुराः कषाया दोषशमनाश्च ॥" इति सुश्रुते
सूत्रस्थाने ४६ अध्यायः ॥ * ॥ दर्व्वीकरान्तर्गत-
सर्पविशेषः । यथा,— "पुण्डरीको भृकुटी
मुखो विष्किरः पुष्पाभिकीर्णो गिरिसर्पः ऋजु-
सर्पः श्वेतोदरो महाशिरा अलगर्द्द आशी-
विष इति ।" इति च सुश्रुते कल्पस्थाने चतुर्थे-
ऽध्याये । )

विष्टः त्रि, प्रविष्टः । विशधातोः क्तप्रत्ययेन
निष्पन्नमिदम् ॥

विष्टपं, क्ली, ( "विष्टपविष्टपविशिपोलपाः ।" इत्यु-
णादिसूत्रे पिष्टपस्थाने विष्टपपाठेन विशधातोः
कपन्प्रत्ययेन साधुः इति केचित् । ) भुवनम् ।
इत्यमरः ॥ पिष्टपं पिष्टपः । इति तट्टीकायां
रूपद्वयम् ॥ ( यथा, रघुः । ११ । २१ ।
"बाणभिन्नहृदया निपेतुषी
सा स्वकाननभुवं न केवलाम् ।
विष्टपत्रयपराजयस्थिरां
रावणश्रियमपि व्यकम्पयत् ॥" )

विष्टम्भः, पुं, ( वि + स्तम्भ + घञ् । ) प्रतिबन्धः ।
(यथा, भागवते । ५ । २२ । १२ ।
"स हरिविष्टम्भप्रशोपशमनः ।"* ॥
आक्रमणम् । यथा, भारविः । १२ । १६ ।
"प्रविकसविनिनादभिन्नरन्ध्रः
पदविष्टम्भनिपीडितस्तदानीम् ।" )
रोगविशेषः । इति मेदिनी । भे, २० ॥ स तु
आनाहरोगः । तस्य लक्षणमाह ।
"आमं शकृद्वा निचितं क्रमेण
भूयो विबद्धं विगुणानिलेन ।
प्रवर्त्तमानं न यथास्वमेनं
विकारमानाहमुदाहरन्ति ॥"
आमं अपक्वमाहाररसं शकृत् पुरीषं वा
क्रमेण निचितं सञ्चितम् । भूयो विगुणानिलेन
दुष्टवायुना विबद्धं आमशोषितं वा यथास्वं
पूर्व्ववदप्रवर्त्तमानं एनं विकारं आनाह-
माहुः ॥ * ॥ तत्रामजमानाहमाह ।
"तस्मिन् भवत्यामसमुद्भवे तु
तृष्णा प्रतिश्यायशिरोविदाहाः ।
आमाशये शूलमथो गुरुत्वं
हृत्स्तम्भ उद्गारविघातनञ्च ॥"
विघातनं अप्रवृत्तिः ॥ * ॥ शकृत्सञ्चयजमाह ।
"स्तम्भः कटीपृष्ठपुरीषमूत्रे
शूलोऽथ मूर्च्छा शकृतो वमिश्च ।
श्वासश्च पक्वाशयजे भवन्ति
तथालसोक्तानि च लक्षणानि ॥"
पक्वाशयजे शकृत्सञ्चयजे । अलसोक्तानि
आध्मानवातनिरोधादीनि ॥ * ॥ आनाहोदा-
वर्त्तयोश्चिकित्सायास्तुल्यत्वादुभयचिकित्सा अत्र
लिख्यते । अथोदावर्त्तानां चिकित्सा ।
"अधोवातनिरोधोत्थे गुदावर्त्ते हितं मतम् ।
स्नेहपानं तथा स्वेदो वर्त्तयश्चानुलोमनम् ॥
विड्विघातसमुत्थे तु विड्भेदनं तथौषधम् ।
वर्त्त्यभ्यङ्गावगाहश्च स्वेदो वस्तिर्हितो मतः ॥"
वर्त्तिः फलवर्त्तिः ।
"मूत्रावरोधजनिते क्षीरवारिपिबो पिबेत् ।
दुःस्पर्शास्वरसं चापि कषायं ककुभस्य च ॥
दुःस्पर्शा कण्टकारी दुरालभा च तुल्यगुणत्वात् ।
एर्व्वारुबीजं तोयेन पिबेद्वा लवणीकृतम् ।
सितामिक्षुरसं क्षीरं द्राक्षारसमथापि वा ॥
सर्व्वथैव प्रकुर्व्वीत मूत्रकृच्छ्राश्मरीविधिम् ।
जृम्भाभिघातजे स्नेहं स्वेदं चापि प्रयोजयेत् ॥
अश्वाणपि प्रयुञ्जीत समीरणहरान् विधीन् ।
नेत्रनीरावरोधोत्थे सुखेदुष्णेह शीतजलम् ॥
स्वप्यात् सुखेन तस्याग्रे कथयेच्च कथाः प्रियाः ।
क्षवाभिघातजे तीक्ष्णनस्याञ्जनार्कदर्शनैः ॥
प्रवर्त्तयेत् क्षुतं सक्तां स्नेहस्वेदौ प्रशीलयेत् ॥"
तीक्ष्णं मरीचराजिकादि ।
"उद्गारस्यावरोधे तु स्नैहिकं धूममाचरेत् ॥
छर्द्दिनिग्रहसञ्जाते वमनं लङ्घनं हितम् ।
विरेचनं चात्र मतं तैलेनाभ्यञ्जनं तथा ॥
वस्तिशुद्धिकरैः सिद्धं चतुर्गुणजलं पयः ।
आवारिनाशात् क्वथितं पीतवन्तं प्रकामतः ॥
रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरम् ।
तस्याभ्यङ्गोऽवगाहश्च मदिरा चरणायुधः ॥
शालिः पयो निरूहश्च हितं मैथुनमेव च ।
क्षुद्विघातसमुद्भूते स्निग्धमुष्णं तथा लघु ॥
स्वल्पमन्नं हितं भक्ष्यं पुष्यं सेव्यं सुगन्धि यत् ।
तृषाविघातसंभूते शीतः सर्व्वो विधिर्हितः ॥
कर्पूरशिशिरं स्वच्छं पिबेत्तोयं शनैः शनैः ।
श्रमश्वासे घृते शस्तो विश्रामः घृतौदनः ॥
निद्राभङ्गविघातोत्थे पिबेत्क्षीरं सितायुतम् ।
सुवाहनं सुशय्या च हिताः श्रोत्रप्रियाः कथाः ॥"
वातादिवेगविघातजनितानामुदावर्त्तानां चिकि-
त्सामभिधाय रूक्षादिकुपितवातजनितस्य उदा-
वर्त्तस्य चिकित्सामाह ।
"हिङ्गुमाक्षिकसिन्धूत्थैः पिष्टैर्वर्त्तिं विनिर्म्मिताम् ।
घृताभ्यक्तां गुदे न्यस्येदुदावर्त्तविनाशिनीम् ॥"
फलवर्त्तिः ।
"मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः ।
गुडक्षीरसमायुक्ता फलवर्त्तिरिहोदिता ॥"
मदनफलादिवर्त्तिः ॥ * ॥
"त्रिवृत्पथ्यं निहताश्च श्यामाकर्षं द्वयोस्तथम् ।
प्रातर्भोजनस्य मधुना विडालपदकं नरो
लिह्यात् ॥
एतन्नाराचपुरीषे देयं विशेषदुदावर्त्ते ।
मधुरं नरपतियोग्यं चूर्णं नाराचकं नाम्ना ॥"
इति नाराचचूर्णम् ॥ * ॥
"यवानीं पिप्पलीमूलं चित्रकं नागरं च चित्र-
कम् ।
चूर्णं गुडसंमिश्रं भक्षयेत् प्रातरुत्थितः ॥
एतद्गुडाष्टकं नाम्ना बलवर्णाग्निवर्द्धनम् ।
उदावर्त्तप्लीहगुल्मशोथपाण्ड्वामयापहम् ॥"
इति गुडाष्टकम् ॥ * ॥
"मूलकं शुष्कमार्द्रञ्च वर्षाभूपञ्चमूलकम् ।
लवणाम्लफलं चाप्सु पक्त्वा तेन घृतं
पचेत् ।
तत् पीतं शमयेत् क्षिप्रमुदावर्त्तमशेषतः ॥"
पञ्चमूलकमत्र इहत् । शुष्कमूलकाद्यघृतम् ॥ * ॥
अथ आनाहस्य चिकित्सा ।
"तुल्यकारणकार्य्यत्वादुदावर्त्तहरीं क्रियाम् ।
आनाहेऽपि च कुर्व्वीत विशेषश्चाभिधीयते ॥
त्रिवृत्कृष्णाहरीतक्यो द्विचतुःपञ्चभागिकाः ।
गुडेन तुल्या वटिका हन्त्यानाहमुदग्रकम् ॥
वर्त्तिस्त्रिकटुसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः ।
मधुनि गुडे वा पक्वैर्निहिता अङ्गुष्ठपरि-
माणाः ॥
वर्त्तिरियं दृष्टफला शनैः प्रणिहिता गुदे घृता-
भ्यक्ता ।
आनाहोदावर्त्तौ शमयति जठरं तथा
गुल्मम् ॥"
त्रिकट्वाद्या वर्त्तिः ॥ इति भावप्रकाशः ॥
( त्रि, विशेषेण स्तम्भयिता । यथा, ऋग्वेदे ।
६ । ८६ । ३५ ।
"दिवो विष्टम्भ उपमो विचक्षणः ॥")

विष्टम्भी, [ न् ] त्रि, ( विष्टम्भातीति । वि + स्तम्भ
+ णिनिः । ) विष्टम्भरोगजनकः । यथा,—
"वैदला गुरवो भक्ष्या विष्टम्भिष्टमाहृताः ॥"
इति राजवल्लभः ॥
( यथा च सुश्रुते । १ । ४५ ।
"प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीत-
लम् ॥"
विष्टम्भोऽस्यास्तीति । विष्टम्भ + इनिः । )
विष्टम्भरोगविशिष्टश्च ॥

विष्टरः, पुं, ( विस्तीर्य्यते इति । वि + स्तृ + अप् ।
"वृक्षासनयोर्विष्टरः ।" ८ । ३ । ९३ । इति
निपातनात् षत्वम् । ) विटपी । इभसुदः ।
पीठाद्यासनम् । इत्यमरः ॥ आदिना कुशा-
सनादिग्रहः । इति भरतः ॥ * ॥ ( यथा,
भागवते । ३ । २८ । १६ ।
"काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम् ।
दर्शनीयतमं शान्तं मनोनयनवर्द्धनम् ॥")
विष्टरलक्षणमाह । विष्टरस्तु सार्द्धहस्तप्रमाणा-
वर्त्तवलिताधोमुखाग्रा असंख्यातदर्भा । तथा
च ग्रन्थासंग्रहः ।
"ऊर्द्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः ॥"
इति ॥
छन्दोगपरिशिष्टम् ।
"दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि ॥"

तेऽपि यान्ति परं स्थानं नारायणपरायणाः ॥
दृढ़ा जनार्द्दने भक्तिर्यदैवाव्यभिचारिणी ।
तदा कियत् स्वर्गसुखं सैव निर्व्वाणहेतुकी ॥
भ्राम्यतां तत्र संसारे नराणां कर्म्मदुर्गमे ।
हस्तावलम्बनो ह्येको भक्तिक्रीतो जनार्द्दनः ॥
न शृणोति गुणान् दिव्यान् देवदेवस्य चक्रिणः ।
स नरो बधिरो ज्ञेयः सर्व्वधर्म्मबहिष्कृतः ॥
नाम्नि संकीर्त्तिते विष्णोर्यस्य पुंसो न जायते ।
शरीरं पुलकोद्भासि तद्भवेत् कुणपोपमम् ॥
यस्मिन् न्यस्ते द्विजश्रेष्ठ मुक्तिरप्यचिराद्भवेत् ।
विष्णौ निविष्टमनसां किं पुनर्भुजिनक्षयः ॥
स्वपुरुषमभिवीक्ष्य पाशहस्तं
वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान्
प्रभुरहमन्यनृणां न वैष्णवानाम् ॥
अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं नियच्छति ।
विप्रेन्द्र प्रतिजानीहि विष्णुभक्तो न नश्यति ॥
धर्म्मार्थकामैः किन्तस्य मुक्तिस्तस्य करे स्थिता ।
समस्तजगतां मूले यस्य भक्तिः स्थिरा हरौ ॥
दैवी ह्येषा गुणमयी हरेर्म्माया दुरत्यया ।
तमेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥
कियदाराधने पुंसामिष्यते हरिमेधसः ।
भक्त्यैवाराध्यते विष्णुर्नान्यत्तत्तोषकारणम् ॥
न दानैर्विविधैर्दत्तैर्न पुष्पैर्नानुलेपनैः ।
तोषमेति महात्मासौ यथा भक्त्या जनार्द्दनः ॥
संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे ।
कदाचित् केशवे भक्तिस्तद्भक्तैर्व्वा समागमः ॥
पत्रेषु पुष्पेषु फलेषु तोये-
ष्वक्रयलभ्येषु सदैव सत्सु ।
भक्त्यैकलभ्ये पुरुषे पुराणे
मुक्त्यै कथं न क्रियते प्रयत्नः ॥
आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ।
वैष्णवोऽस्मत्कुले जातः स नः सन्तारयिष्यति ॥
आक्षानिनः सुरवरं समधिक्षिपन्ति
ये पापिनोऽपि शिशुपालसुयोधनाद्याः ।
मुक्तिं गताः स्मरणमात्रविधूतपापाः
कः संशयः परमभक्तिमतां जनानाम् ॥
शरणं तं प्रपन्ना ये ध्यानयोगविवर्ज्जिताः ।
तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥
भवोद्भवक्लेशशताहतस्तथा
परिभ्रमन्निन्द्रियबन्धकैः पथैः ।
नियम्यतां माधव मे मनोहय-
स्त्वदङ्घ्रिशङ्कौ दृढ़भक्तिबन्धने ॥
विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते ।
वेदसिद्धान्तमार्गेषु तं न जानन्ति मोहिताः ॥
वसति हृदि सनातने च तस्मिन्
भवति पुमान् जगतोऽस्य सौम्यरूपः ।
क्षितिरसमतिरम्यमात्मनोऽन्तः
कथयति चारुतयैव शालपोतः ॥"
इति गारुड़े २३१ अध्यायः ॥

विष्णुमाया, स्त्री, (विष्णोर्माया ।) दुर्गा । यथा,—
नारद उवाच ।
"दुर्गा नारायणीशाना विष्णुमाया शिवा सती ।
नित्या सत्या भगवती सर्व्वाणी सर्व्वमङ्गला ॥
अम्बिका वैष्णवी गौरी पार्व्वती च सनातनी ।
नामानि कौथुमोक्तानि शुभानि शुभदानि च ॥
अर्थं षोडशनाम्नाञ्च सर्व्वेषामीप्सितं वरम् ।
ब्रूहि वेदविदां श्रेष्ठ वेदोक्तं सर्व्वसम्मतम् ॥
नारायण उवाच ।
सृष्टा माया पुरा सृष्टौ विष्णुना परमात्मना ।
मोहितं मायया विश्वं विष्णुमाया च
कीर्त्तिता ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५४ अध्यायः ॥
अपि च ।
ब्रह्मोवाच ।
"विष्णुमायान्तते देव महामायां जगन्मयीम् ।
नान्या संमोहकर्त्री स्यात् सन्ध्या सावित्र्य-
पायिका ॥
तस्मादहं विष्णुमायां योगनिद्रां जगत्प्रसूम् ।
स्तौमि सा चारुरूपेण शङ्करं मोहयिष्यति ॥
भर्त्तार्थ देव तामेव यजतां विश्वरूपिणीम् ।
यथा तव सुता भूत्वा हरजाया भविष्यति ॥"
इति कालिकापुराणे ५ अध्यायः ॥

विष्णुयशाः, [स्] पुं, (विष्णु व्यापकं यशो यस्य । नारायणपितृत्वादेवास्य तथात्वम् । यद्वा, विष्णुना गृहीतजन्मना यशो यस्य ।) ब्रह्मयशःपुत्रः । स च कल्किपिता । यथा,—
नारद उवाच ।
"अहो बलवती माया सर्व्वाश्चर्य्यमयी शुभा ।
पितरं मातरं विष्णोर्नैव मुञ्चति कर्हिचित् ॥
पूर्णो नारायणो यस्य सुतः कल्क्यङ्गसम्भवः ।
तं विहाय विष्णुयशा मनो मुक्तिमभीप्सति ॥
विविच्येत्थं ब्रह्मसुतः प्राह ब्रह्मयशःसुतम् ।
विविक्ते विष्णुयशसं ब्रह्मसम्पद्विवर्द्धनम् ॥"
इति कल्किपुराणे ३० अध्यायः ॥

विष्णुरथः, पुं, (विष्णो रथः ।) गरुड़ः । इत्यमरः ॥ विष्णोः स्यन्दनञ्च ॥

विष्णुरातः, पुं, (विष्णुना रातो रक्षितः ।) परीक्षिद्राजः । यथा,—
"दैवेनाप्रतिघातेन शुक्ले संस्थामुपेयुषि ।
रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना ॥
तस्मान्नाम्ना विष्णुरातो लोके ख्यातिं गमिष्यति ।
न सन्देहो महाभाग महाभागवतो महान् ॥"
इति श्रीभागवते १ स्कन्धे १२ अध्यायः ॥

विष्णुलिङ्गी, स्त्री, वर्त्तिकापक्षी । इति त्रिकाण्डशेषः ॥

विष्णुवल्लभा, स्त्री, (विष्णोर्व्वल्लभा ।) तुलसी । इति राजनिर्घण्टः ॥ लक्ष्मीः । यथा,—
"त्रैलोक्यपूजिते मातः कमले विष्णुवल्लभे ।
यथा त्वमचला कृष्णे तथा भव मयि स्थिरा ॥"
इति तन्त्रसारः ॥
अग्निशिखावृक्षः । इति शब्दचन्द्रिका ॥

विष्णुवाहनं, क्ली, (विष्णोर्व्वाहनम् ।) गरुड़ः । इति हेमचन्द्रः । २ । १४४ ॥

विष्णुवाह्यः, पुं, (विष्णुर्व्वाह्यो येन ।) गरुड़ः । इति शब्दरत्नावली ॥

विष्णुशिला, स्त्री, (विष्णुनाधिष्ठिता शिला ।) शालग्रामशिला । कलौ तस्य स्थितिकालो यथा,—
"अयुताब्दे कलेर्याते त्यजेद्विष्णुशिला महीम् ।
सहस्राब्दात् स्वतीर्थं तदर्द्धाद्देवतात्मिका ॥"
इति मेरुतन्त्रे ५ प्रकाशः ॥

विष्णुशृङ्खलः, पुं, योगविशेषः । यथा, मात्स्ये ।
"द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदा ।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः ॥
तस्मिन्नुपोष्य विधिवन्नरः सङ्क्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम् ॥"
इति ॥
विष्णुधर्म्मोत्तरे द्वितीयविष्णुशृङ्खलयोगमाह ।
"एकादशी द्वादशी च वैष्णव्यमपि भं भवेत् ।
तद्विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत् ।
तस्मिन्नुपोषणात् गच्छेत् तद्वैष्णवं ध्रुवम् ॥"
इति श्रीहरिभक्तिविलासे १५ विलासः ॥

विष्फारः, पुं, (वि + स्फुर स्फुरणे + घञ् । "स्फुरति-स्फुलत्योर्घञि ।" ६।१।४७। इत्यात्वम् । "स्फुरति स्फुलत्योर्निर्निविभ्यः ।" ८।३।७६। इति षत्वञ्च ।) धनुर्गुणशब्दः । इत्यमरः ॥ धनुर्गुणस्य स्फालनशब्दः ॥ विष्फारः । स्फुर शि च स्फुर्त्तौ चले घञस्य दैर्घ्यादीति निपातः । किंवा स्फुरधातो रूपं विष्फारयत्यादिना पाक्षिकत्वात् विष्फारो इत्यसौ मूर्द्धन्यषश्च । इति भरतः ॥

विष्यः, त्रि, (विषेण वध्यः । विष + "नौवयो-धर्म्मेति ।" ४ । ४ । ९१ । इति यत् ।) विषेण यो वध्यः । इत्यमरः ॥ (विषेण क्रीतः । विषाय हित इति वा । इत्यर्थे "उगवादिभ्यो यत् ।" ५ । १ । २ । इति यत् ॥)

विष्वः, त्रि, हिंस्रः । इत्युणादिकोषः ॥

विष्वक्, व्य, परितः । सर्व्वतः । इत्यमरः ॥ (यथा, भागवते । ६ । ९ । १३ ।
"कृतान्त इव लोकानां युगान्तसमये यथा ।
विष्वग्विवर्द्धमानं तमिष्टमात्रं दिने दिने ॥")

विष्वक्, क्ली, विषुवम् । इति शब्दरत्नावली ॥ विष्वं अञ्चति इत्यर्थे क्विलिङ्गम् ॥ (यथा, भागवते । १ । ९ । ३४ ।
"युधि तुरगरजोविधूम्रविष्वक्-
कचलुलितश्रमवार्य्यलङ्कृतास्ये ॥")

विष्वक्सेनः, पुं, विष्णुः । इत्यमरः ॥ (यथा, शिशुपालवधे । १० । ५५ ।
"साम्यमाप कमलासखविष्वक्-
सेनसंवलितगात्रपयोधिः ॥")
विष्णोर्निर्म्माल्यधारी । यथा,—
"निर्म्माल्यधारी विष्णोस्तु विष्वक्सेनश्चतुर्भुजः ।
शङ्खचक्रगदापाणिर्दीर्घश्मश्रुर्जटाधरः ॥
रक्तपिङ्गलवर्णस्तु सितपद्मोपरिस्थितः ।

षष्ठतीय: स्वरान्तेन संयुतो बिन्दुनेन्दुना ।
कौशिकस्तस्य मन्त्रोऽयं तेन तं परिपूजयेत् ॥"
इति कालिकापुराणे ८२ अध्याय: ॥

त्रयोदशमनु: । यथा,—
"ततश्च मेरुसावर्णो ब्रह्मसूनुर्मनु: स्मृत: ।
ऋतुश्च ऋतुधामा च विष्वक्सेनो मनुस्तथा ॥"
इति मात्स्ये ९ अध्याय: ॥

**विष्वक्सेनप्रिया**, स्त्री, ( विष्वक्सेनस्य प्रिया । ) वाराही । इत्यमर: ॥ चामार आलु इति भाषा ॥ लक्ष्मी: । इति मेदिनी । ये, १३४ ॥

**विष्वक्सेना**, स्त्री, प्रियङ्गु: । इत्यमर: ॥

**विष्वणनं**, क्ली, भोजनम् । इति जटाधर: ॥ शब्दकरणम् । यथा । विष्वणति वीणा । इति मुग्धबोधव्याकरणम् ॥

**विष्वद्र्यङ्**, [च] त्रि, ( विष्वगञ्चतीति । अञ्च + क्विप् । "विष्वग्देवयोश्चेति ।" ६।३।९२। इति टे: स्थाने अद्र्यादेश: । ) सर्व्वतोगामी । इत्यमर: ॥ (यथा, माघे । १८ । ७५ ।
"विष्वद्रीचीर्विक्षिपन् सैन्यवीची-
राजावन्त: क्वापि दूरं प्रयातम् ॥")

**विष्वाण:**, पु, भक्षणम् । इति हेमचन्द्र: ॥

**बिसं**, क्ली, मृणालम् । इत्यमर: ॥ ( यथा, कलाविलासे । ६ ।
"नवबिसकिसलयकवलन-
कषायकलहंसकलरवो यत्र ।
कमलवनेषु प्रसरति
लक्ष्म्या इव नूपुराराव: ॥")

**विसंवाद:**, पु, ( वि + सं + वद + घञ् । ) विप्रलम्भ: । इत्यमर: ॥ ( यथा, महाभारते ।१२ । ७५८ । ११ ।
"अनोहमविसंवादं प्रवर्त्तन्ते तदाश्रया: ॥")

**बिसकण्ठिका**, स्त्री, ( बिसवदुज्ज्वल: शुभ्र: कण्ठो यस्या इति बहुव्रीहौ कप् टापि अत इत्वम् । ) बलाका । इत्यमर: ॥

**बिसकुसुमं**, क्ली, ( बिसस्य कुसुमम् । ) कमलम् । इति राजनिर्घण्ट: ॥

**बिसकुट:**, पुं, सिंह: । इति शब्दचन्द्रिका ॥ इक्षुरीडक: । इति राजनिर्घण्ट: ॥

**बिसजं**, क्ली, ( बिसाज्जायते इति । जन + ड: । ) पद्मम् । बिसं मृणालं तत्र जातत्वात् ॥

**बिसनाभि:**, पुं, ( बिसं नाभिरुत्पत्तिस्थानं यस्य । ) पद्मिनी । पद्मसमूह: । इति त्रिकाण्डशेष: ॥

**बिसप्रसूनं**, क्ली, पद्मम् । इत्यमर: ॥ (यथा, शिशुपालवधे । ५ । २८ ।
"अम्बुनिधं धृतविकासिबिसप्रसूना: ॥")

**विसर:**, पुं, ( विसरतीति । वि + सृ + पचाद्यच् । ) समूह: । इत्यमर: ॥ प्रसर: । इति मेदिनी । रे, २१७ ॥

**विसर्ग:**, पुं, (वि + सृज + घञ् ।) दानम् । (यथा, रघुवंशे । ४ । ८६ ।
"आदानं हि विसर्गाय सतां वारिमुचामिव ॥")
त्याग: । ( यथा, महाभारते । १ । ३९ । १३ ।
"नानाशस्त्रविसर्गैश्चैर्वध्यमान: समन्तत: ॥")
मलनिर्गम: । विसर्ज्जनीय: । ( यथा, भागवते । ६ । ८ । १० ।
"सविसर्गं फडन्तं तत् सर्व्वदिक्षु विनिर्द्दिशेत् ॥")
सूर्य्यस्यायनभेद: । इति मेदिनी । गे, ५० ॥ मोक्ष: । इति हलायुध: ॥ विरह: । इति शब्दरत्नावली ॥ विशेषसृष्टि: । यथा,—
"पुरुषानुगृहीतानामेतेषां वासनामय: ।
विसर्गोऽयं समाहारो बीजाद्बीजं चराचरम् ॥"
इति श्रीभागवतम् ॥

विसर्ज्जनीयस्य पर्य्याय: ।
"अ: सर्गो रसना वक्त्रं विसर्गश्च द्विबिन्दुक: ।
नारोऽर्द्धेन्दुरहंमात्मा कला रात्री सदाशिव: ।
अनुत्तमा तुरीया च शिवमातृकला परा ॥"
इति बीजाभिधानम् ॥

अपि च ।
"अ: कण्ठको महासेन: कला पूर्णामृता हरि: ।
इच्छा भद्रा गणेशश्च रतिविद्यामुखी सुखम् ॥
द्विबिन्दुरसना सोमोऽनिरुद्धो दु:खसूचक: ।
द्विजिह्व: कुण्डलं वक्त्रं सर्ग: शक्तिर्निशाकर: ।
सुन्दरी सुयशानन्ता गणनाथो महेश्वर: ॥"
इति बीजवर्णाभिधानान्तरम् ॥

अन्यच्च ।
"विसर्ग: सर्गमाख्यातो वियद्विषयमासन: ।
अनिरुद्धो महेशानि कामकोऽपि रमापि च ॥"
इति वर्णाभिधानम् ॥
( प्रयोग: । यथा, भागवते । १ । ५ । ११ ।
"तद्वाग्विसर्गो जनताघविप्लव: ॥")

**विसर्ज्जनं**, क्ली, ( वि + सृज् + ल्युट् । ) दानम् ; परित्याग: । इत्यमर: ॥ (यथा, रघुवंशे ।८।२५।
"स्मृतदेहविसर्ज्जनं पितु-
श्चिरमश्रूणि विमुच्य राघव: ॥")
संप्रेषणम् । इति मेदिनी । ने, २०५ ॥ (पुं, यदुवंशीयानामन्यतम: । यथा भागवते ।११।३०।१८।
"विसर्ज्जना: कुकुरा: कुन्तयश्च
मिथस्तु जघ्नु: सुविसृज्य सौहृदम् ॥"
विशेषेण सृज्यते इति । वि + सृज + कर्म्मणि ल्युट् । उत्पादिते, त्रि । यथा, भागवते । १० । १६ । ५७ ।
"त्वया सृष्टमिदं विश्वं धातुर्गुणविसर्ज्जनम् ॥")

**विसर्प:**, पुं, ( वि + सृप + घञ् । ) रोगविशेष: । तत्पर्य्याय: । विसर्पि: २ सर्व्वामय: ३ । इति राजनिर्घण्ट: ॥ तस्य विप्रकृष्टं निदानं संख्यां निरुक्तिञ्चाह ।
"लवणाम्लकटूष्णादिसेवनाद्दोषकोपत: ।
विसर्प: सप्तधा ज्ञेय: सर्व्वत: परिसर्पणात् ॥"
आदिशब्दाच्चरकोक्तदधिशुक्तशाकप्रभृतीनां ग्रहणम् ॥ * ॥ सप्तधात्वं विवृणोति ।
"पृथक् त्रयस्त्रिभिश्चैको विसर्पा द्वन्द्वजास्त्रय: ।
वातिक: पैत्तिकश्चैव कफज: सान्निपातिक: ।
चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रय: ॥
आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्य: कफवातज: ।
यस्तु कर्द्दमको घोर: स पित्तकफसम्भव: ॥" * ॥
विसर्पदोषदूष्याणि संग्रहाह ।
"रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मला: ।
विसर्पाणां समुत्पत्तौ ज्ञेया: सप्त धातव: ॥"
त्रयो मला: वातपित्तकफा: । दोषा: दूषका इत्यर्थ: । अन्यथा दोषा मला इत्यत्र पुनरुक्तिदोषोऽगतिश्च ॥ * ॥ वातिकस्य लक्षणमाह ।
"तत्र वातात् परीसर्पो वातज्वरसमव्यथ: ।
शोफस्फुरणनिस्तोदभेदायामार्त्तिहर्षवान् ॥"
परीसर्पो विसर्प: । वातज्वरसमव्यथ: शिरोहृद्गात्रोदरशूलादियुक्त: । भेद: विदारणमिव यथा । आयाम: आकर्षणमिव यथा ॥ * ॥ पैत्तिकमाह ।
"पित्ताद्द्रुतगति: पित्तज्वरलिङ्गोऽतिलोहित: ॥"
द्रुतगति: शीघ्रप्रसरणशील: ॥ * ॥ श्लैष्मिकमाह ।
"कफात् कण्डुयुत: स्निग्ध: कफज्वरसमानरुक् ॥"
सान्निपातिकमाह ।
"सन्निपातसमुत्थश्च सर्व्वरूपसमन्वित: ॥" * ॥
वातपैत्तिकस्याग्निविसर्पाख्यस्य च लक्षणमाह ।
"वातपित्तज्वरच्छर्द्दिमूर्च्छातीसारतृड्भ्रमै: ।
अस्थिभेदाग्निसदनतमकारोचकैर्युत: ॥
करोति सर्व्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत् ।
यं यं देशं विसर्पश्च संसर्पति भवेत् स स: ॥
शान्ताङ्गारासितो नीलो रक्तो वा श्वयथीयते ।
अग्निदग्ध इव स्फोटै: शीघ्रगत्वात् द्रुतञ्च स: ॥
मर्म्मानुसारी वीसर्प: स्याद्वातोऽतिबलस्तत: ।
व्यथेताङ्गं हरेत् संज्ञां निद्राञ्च श्वासमीरयेत् ॥
हिक्काञ्च संगतोऽवस्थामीदृशीं लभते नर: ।
क्वचिच्छर्म्मारतिग्रस्तो भूमिशय्यासनादिषु ॥
चेष्टमानस्तत: क्लिष्टो मनोदेहश्रमोद्भवाम् ।
दु:प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ॥"
स्फोटै: उपचीयत इत्यन्वय: । मर्म्मानुसारी हृदयानुसारी । हरेत् वीसर्प इत्यन्वय: । हिक्कां हिक्काम् । ईरयेत् उत्पत्तुं प्रेरयेत् । मनोदेहसमुद्भवां निद्रां मरणरूपाम् । अश्नुते प्राप्नोति ॥ * ॥
वातश्लैष्मिकग्रन्थिविसर्पमाह ।
"कफेन रुद्ध: पवनो भित्त्वा तं बहुधा कफम् ।
रक्तं वा वृद्धरक्तस्य त्वक्शिरास्नायुमांसगम् ॥
दूषयित्वा तु दीर्घाणुवृत्तस्थूलखरात्मनाम् ।
ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम् ॥
श्वासकासातिसारास्यशोषहिक्कावमिभ्रमै: ।
मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युत: ।
इत्ययं ग्रन्थिवीसर्पो वातश्लेष्मप्रकोपज: ॥"
कफेन स्वहेतुदुष्टेन पवनोऽपि स्वहेतुदुष्ट: । तेनायं वातश्लैष्मिक: । तं कफं बहुधा भित्त्वा रक्तं वा दूषयित्वा इत्यन्वय: । त्वगादिकमिति रक्तविशेषणम् ॥ * ॥ पित्तश्लैष्मिकं कर्द्दमाख्यं विसर्पमाह ।
"कफपित्तज्वर: स्तम्भो निद्रा तन्द्रा शिरोरुजा ।
अङ्गावसादविक्षेपप्रलापारोचकभ्रमा: ॥
मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ।

श्यामोपवेशनं लेपश्चोत्सादश्च विसर्पति ॥
प्रायेणामाशये गृह्णन्नेकदेशं न चातिरुक् ।
पिड़काभिरवकीर्णोऽति पीतलोहितपाण्डुरैः ॥
स्निग्धोऽसितो मेचकाभो मलिनः शोथवान् गुरुः ।
गम्भीरपाकः प्राज्योष्मा क्लिन्नः क्लिष्टो विदीर्य्यते ।
पङ्कवत् शीर्णमांसश्च स्पष्टस्नायुशिरागणः ।
शवगन्धिश्च वीसर्पः कर्द्दमाख्यमुशन्ति तम् ॥"
स च सर्पति एकदेशमित्यन्वयः । पिड़कैः पिड़काभिः । अवकीर्णः व्याप्तः । असितः कृष्णः । मेचकः कृष्णकृष्णः । प्राज्योष्मा प्रभूतोष्मा । क्लिष्टः क्लिन्नोऽवदीर्य्यते क्लृप्तः अन्नार्द्रो भवति विदीर्य्यते च । पङ्कवत् कर्द्दमवत् अवगाह्य सः । शीर्णमांसः गलितमांसः । अतएव स्पष्टस्नायुशिरागणः ॥ * ॥ सान्निपातिकमाह ।
"सन्निपातसमुत्थस्तु सर्व्वरूपसमन्वितः ।" * ॥
क्षतजञ्च विसर्पमाह ।
"बाह्यहेतोः क्षतात् क्रुद्धः सरक्तं पित्तमीरयन् ।
वीसर्पं मारुतः कुर्य्यात् कुलत्थसदृशैश्चितम् ।
स्फोटैः शोथज्वररुजा दाहाढ्यं श्यावशोणितम् ॥"
बाह्यहेतोः शस्त्रप्रहारव्यालदन्तनखाद्यागन्तुहेतोः । श्यावशोणितं धूम्रवर्णरक्तम् ॥ * ॥
उपद्रवानाह ।
"ज्वरातीसारवमथुस्त्वङ्मांसदरणक्लमाः ।
अरोचकाविपाकौ च विसर्पाणामुपद्रवाः ॥" * ॥
साध्यत्वादिकमाह ।

"सिध्यन्ति वातकफपित्तकृता विसर्पाः
सर्व्वात्मकः क्षतकृतश्च न सिद्धिमेति ।
पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्यः
कृच्छ्राश्च मर्म्मसु भवन्ति च सर्व्व एव ॥"

पित्तात्मकोऽञ्जनवपुः पित्तजः सन् कृष्णवर्णः । सर्व्वे एवासाध्या अपि ॥ * ॥ अथ विसर्पस्य चिकित्सा ।
"विरेकवमनालेपसेचनासृग्विमोक्षणैः ।
उपाचरेद्यथादोषं विसर्पानविदाहिभिः ॥
रास्ना नीलोत्पलं दारु चन्दनं मधुकं बला ।
घृतं क्षीरयुतो लेपो वातवीसर्पनाशनः ॥"
चन्दनमत्र रक्तं ग्राह्यम् ।

"कसेरुशृङ्गाटकपद्मगुन्द्रैः
सशैवलैः सोत्पलकर्द्दमैश्च ।
वस्त्रान्तरैः पित्तकृते विसर्पे
लेपो विधेयः सघृतः सुशीतः ॥ * ॥

त्रिफलापद्मकोशीरसमङ्गाकरवीरकम् ।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥
समङ्गा लज्जालुः ।
"वातपित्तप्रशमनमग्निवीसर्पके हितम् ।
वातश्लेष्महरं कर्म्म ग्रन्थिवीसर्पके हितम् ॥
पित्तश्लेष्मप्रशमनं हितं कर्द्दमसंज्ञके ।
त्रिदोषजक्रियां कुर्य्यात् विसर्पे त्रिमलात्मके ॥ *

शिरीषयष्टीनतचन्दनैला
मांसीहरिद्राद्वयकुष्ठवालैः ।
लेपो दशाङ्गः सघृतः प्रयोज्यो
विसर्पकुष्ठज्वरशोथहारी ॥"

नतं तगरम् । चन्दनमत्र रक्तं ग्राह्यम् । दशाङ्गो लेपः ॥ * ॥
"पटोलपिचुमर्द्दाभ्यां चिकित्सा त्रिफलास्वपि ।" ... "परिषेकाः प्रलेपाश्च शस्यन्ते पञ्चवल्कलैः ।
पद्मकोशीरमधुकं चन्दनैर्वा विसर्पिणि ॥

भूनिम्बवासा कटुका पटोल-
फलत्रयं चन्दननिम्बसिद्धः ।
विसर्पदाहज्वरशोथकण्डू-
विस्फोटतृष्णावमिनुत् कषायः ॥

कुष्ठानि यानि सर्पींषि प्रोक्तेषु विविधेषु च ।
विसर्पे तानि योज्यानि सेकालेपनभोजनैः ॥ * ॥

करञ्जसप्तच्छदलाङ्गलीक-
स्नुह्यर्कदुग्धानलभृङ्गराजैः ।
तैलं त्रिवृन्मूत्रविषैर्विपक्वं
विसर्पविस्फोटविचर्चिकाघ्नम् ॥
इति करञ्जादितैलम् ॥ * ॥

"कुष्ठामयस्फोटमसूरिकोक्त-
चिकित्सयाप्याशु चरेद्विसर्पान् ।
सर्व्वान् विकारान् परिशोध्य धीमान्
प्रवां क्रमेणोपचरेद्यथोक्तम् ॥"

इति विसर्पाधिकारः । * । इति भावप्रकाशः ॥
( वेगः । यथा, उत्तरचरिते ।
"प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ॥"
नाट्यालङ्कारविशेषः । तल्लक्षणादिकं यथा, साहित्यदर्पणे । ६ । ३८५ ।
"विसर्पो यत्समारब्धं कर्म्मानिष्टफलप्रदम् ।"
यथा वेण्याम् । एकस्य तावत् पाकोऽयमित्यादि ॥ )

विसर्पणं, क्ली, ( वि + सृप + ल्युट् । ) प्रसरः । इत्यमरः ॥ तन्नुन्नविटपादेर्विसर्पणम् । इति भरतः ॥ ( निक्षेपः । यथा, महाभारते । ७ । ८ । १६ ।
"शोषणं सागरस्येव मेरोरिव विसर्पणम् ।
पतनं भास्करस्येव न मृष्ये द्रोणपातनम् ॥")

विसर्पिः, पुं, विसर्पः । इति राजनिर्घण्टः ॥

विसलं, क्ली, (विसं लातीति । ला + कः ।) पल्लवः । इति त्रिकाण्डशेषः ॥

विसारः, पुं, ( विशेषेण सरतीति । सृ गतौ + "व्याधिमत्स्यबलेष्विति वक्तव्यम् ।" ३ । ३ । १७ । इत्यस्य वार्त्तिकोक्त्या घञ् ।) मत्स्यः । इत्यमरः ॥ (भावे घञ् । निर्गमः । यथा, ऋग्वेदे । १ । ७६ । २ ।

"हिरण्यकेशो रजसो विसारे
ऽहिर्धुनिर्वात इव ध्रजीमान् ॥"

"रजस उदकस्य विसारे विसरणे मेघान्निर्गमने ।" इति तद्भाष्ये सायनः ॥ )

विसारिणी, स्त्री, ( विशेषेण सरतीति । सृ + णिनिः । ङीप् । ) माषपर्णी । इति राजनिर्घण्टः ॥ ) प्रसरणशीला । यथा, राजतरङ्गिण्याम् । ८ । १८२ ।
"निर्धूमस्य विसारिण्यो ज्वाला हव्यभुजो दधुः ॥" )

विसारितः, त्रि, प्रसारितः । विपूर्व्वस्त्रगात्वधातोः स्वप्रत्ययेन निष्पन्नमिदम् ॥

विसारी, [न्] त्रि, (वि + सृ + णिनिः ।) प्रसरणशीलः ॥ तत्पर्य्यायः । विसृत्वरः २ विसृमरः ३ प्रसारी ४ । इत्यमरः ॥ ( यथा, रघुः । ३ । ६५ ।

"अरिष्टशय्यां परितो विसारिणा
सुजन्मनस्तस्य निजेन तेजसा ॥")

विसिनी, स्त्री, ( विसमस्त्यस्या इति । विस + "पुष्करादिभ्यश्च ।" इति इनिः । ङीप् । ) पद्मिनी । इत्यमरः ॥ स्थलजम् । इति राजनिर्घण्टः ॥

विसूचिका, स्त्री, ( विसूची + स्वार्थे कन् । ) अजीर्णरोगविशेषः । इति भावप्रकाशः ॥ ( अस्या विशेषविवृतिस्तु अजीर्णविसूचीशब्दयोर्द्रष्टव्या ॥)

विसूची, स्त्री, ( विशेषेण सूचयति मृत्युमिति । वि + सूच + अच् । स्त्रियां ङीष् । यद्वा, विशिष्टा सूचीव । ) अजीर्णरोगविशेषः । ओलाउठा इति भाषा ॥ तस्य निरुक्तिर्यथा,—
"सूचीभिरिव गात्राणि तुदन् सन्तिष्ठतेऽनिलः ।
यस्याजीर्णेन सा वैद्यैर्विसूचीति निगद्यते ॥"
तस्या निदानमाह ।
"न तां परिमिताहारा लभन्ते विदितागमाः ।
मूढ़ास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥"
विदितागमा ज्ञातायुर्व्वेदाः ॥ * ॥
तस्या लक्षणमाह ।

"मूर्च्छातिसारौ वमथुः पिपासा
शूलं भ्रमोद्वेष्टनजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रुजश्च
भवन्ति तस्यां शिरसश्च भेदः ॥"

उद्वेष्टनं हस्तपादयोः । शिरसो भेदः शिरःशूलम् ॥ * ॥ तस्या उपद्रवानाह ।
"निद्रानाशोऽरतिः कम्पो मूत्राघातो विसंज्ञता ।
अमी उपद्रवा घोरा विसूच्याः पञ्च दारुणाः ॥"
अमी उपद्रवा घोराः अमी निद्रानाशादय उपद्रवाः सर्व्वेषामेव रोगाणां घोरा भयङ्कराः । विसूच्याः पञ्च दारुणाः विसूच्यास्तु पञ्चापि यदि स्युस्तदा दारुणाः प्राणभयङ्कराः ॥ * ॥
तस्या अरिष्टमाह ।

"यः श्यावदन्तौष्ठनखोऽल्पसंज्ञ-
श्छर्द्यर्द्दितोऽभ्यन्तरयातनेत्रः ।
क्षामस्वरः सर्व्वविमुक्तसन्धि-
र्यायान्नरः सोऽपुनरागमाय ॥"

सर्व्वविमुक्तसन्धिः सर्व्वे विमुक्ताः शिथिलीभूताः सन्धयो यस्य सः ॥ इति भावप्रकाशः ॥ * ॥
अस्याश्चिकित्सा अजीर्णशब्दे द्रष्टव्या ॥

विसृमरं, क्ली, अनुतापः । इति जटाधरः ॥

विसृतं, त्रि, ( वि + सृ + क्तः । ) विस्तृतम् । इत्यमरः ॥

विसृत्वरः, त्रि, ( विसरति तच्छीलः । वि + सृ + "इण्नश्जिसर्त्तिभ्यः क्वरप् ।" ३ । २ । १६३ ।

इति करप् । कृसञ्ज्ञेति तुक् ।) प्रसरणशीलः । इत्यमरः ॥ “विसरणम् । गतिविशेषः । विसृत्वरो वत्सः । विसृत्वरी नदी । विसृत्वरं तैलमित्यादि । विसरति विसृत्वरः स्र गतौ करप् कृसञ्ज्ञेति तुक् सस्य तत् पिति तत् ।” इति भरतः ॥

विसृमरः, त्रि, (विशेषेण सरति तच्छीलः । वि + सृ + “सृघस्यदः क्मरच् ।” ३ । २ । १६० । इति क्मरच् ।) प्रसरणशीलः । इत्यमरः ॥

विसृष्टः, त्रि, ( वि + सृज् + क्तः । ) निक्षिप्तः । इति जटाधरः ॥ (यथा, मृच्छकटिके । १ अङ्के ।
“उद्भ्रमच्चञ्चलकटाक्षविसृष्टदृष्टि-
र्व्याधानुसारचकिता हरिणीव यासि ॥”)
विशेषेण सृष्टश्च ॥ ( अक्तः । यथा, भागवते । १ । १६ । २७ ।
“अन्तर्हितस्य स्मरती विसृष्टा
कर्म्माणि निर्व्वाणविलम्बितानि ॥”
प्रेषितः । यथा, रघुः । ५ । ३६ ।
“आप्तः कुमारानयनोत्सुकेन
भोजेन दूतो रघवे विसृष्टः ॥”
पुं, विसर्गः । विन्दुद्वयरूपः । यथा, कातन्त्रे । ८ । २ ।
“रसकारयोर्व्विसृष्टः ॥”)

विस्तः, पुं, क्ली, ( विस उत्सर्गे + क्तः । ) हेम्नोऽक्षः । अशीतिरत्तिकापरिमितस्वर्णम् । इत्यमरः ॥

विस्तरः, पुं, ( वि + स्तॄ + “प्रथने वावशब्दे ।” ३।३।३३ । इति घञः प्रतिषेधे “ऋदोरप् ।” इत्यप् ।) शब्दस्य विस्तारः । इत्यमरः ॥ (यथा, शिशुपालवधे । २ । २४ ।
“सुविस्तरतरा वाचो भाष्यभूता भवन्तु मे ॥”
वेदाङ्गम् । यथा, भागवते । ३ । ३ । २ ।
“सान्दीपनेः सकृत्प्रोक्तं ब्रह्माधीत्य सविस्तरम् ॥”)
विस्तारः । ( यथा, गीतायाम् । १० । १९ ।
“प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥”)
प्रणयः । इति मेदिनी ॥ पीठः । समूहः । इति शब्दरत्नावली ॥ (त्रि, बहुः । यथा, साहित्यदर्पणे । ६ । ३१७ ।
“अपेक्षितं परित्यज्य नीरसं वस्तु विस्तरम् ।
यदा सन्दर्शयेच्छेषमामुखानन्तरं तदा ॥”)

विस्तारः, पुं, ( वि + स्तॄ + “प्रथने वावशब्दे ।” ३ । ३ । ३३ । इति घञ् । ) विटपः । विस्तीर्णता । तत्पर्य्यायः । विग्रहः २ व्यासः ३ । इत्यमरः ॥ ( यथा, आर्य्यासप्तशत्याम् । ५५८ ।
“वंशावलम्बनं यदृयो विस्तारो गुणस्य यावनतिः ।
तन्मानस्य धनस्य च भिन्नाङ्कुशप्रकाशाय ॥”)
स्तम्बः । इति मेदिनी । रे, २१५ ॥

विस्तीर्णः, त्रि, ( वि + स्तॄ + क्तः । “रदाभ्यामिति ।” ८ । २ । ४२ । इति नः । ) विपुलम् । विस्तृतम् । यथा,—
“विस्तीर्णं विकटं वत्नं विशालं विपुलं दृढ ।”
इति जटाधरः ॥
( यथा,—
“पर्णानि स्वर्णवर्णानि विस्तीर्णानि कर्णोत्पले ।
तूर्णमानीयतां चूर्णं पूर्णचन्द्रनिभानने ॥”
इत्युद्भटः ॥)

विस्तीर्णपर्णी, स्त्री, ( विस्तीर्णं पर्णं पत्रमस्य । ) मानकम् । इति शब्दचन्द्रिका ॥

विस्तृतः, त्रि, ( वि + स्तृ + क्तः । ) लब्धविस्तारः । तत्पर्य्यायः । विस्तृतम् २ ततम् ३ । इत्यमरः ॥ ( यथा, भागवते । २ । २४ । ६० ।
“तत्त्वं ब्रह्मपरं ज्योतिराकाशमिव विस्तृतम् ॥”)

विस्पष्टः, त्रि, ( विशेषेण स्पष्टः । ) सुस्पष्टः । यथा,
“विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा ।
कलस्वरसमायुक्तं रसभावसमन्वितम् ॥”
इति तिथ्यादितत्त्वम् ॥

विस्फारः, पुं, ( वि + स्फुर + घञ् । “स्फुरतिस्फुलत्योर्घञि ।” ६।१।४७ । इत्यात्वम् । ) धनुर्गुणशब्दः । इत्यमरः ॥ अस्य विवरणं चतुर्थ्यकारमध्यविष्फारशब्दे द्रष्टव्यम् ॥ ( यथा, महाभारते । १ । २७८ । ३६ ।
“विस्फारस्तस्य धनुषो वज्रस्येव तदा बभौ ॥”
विस्तृतिः । यथा, साहित्यदर्पणे । ३ । २०७ ।
“विस्फारकोऽसौ यस्तु स विकाय उदाहृतः ॥”)

विस्फारितः, त्रि, प्रकाशितः । चलितः । विपूर्व्वात् स्फारधातोः क्तप्रत्ययेन निष्पन्नमिदम् ॥ ( यथा, महाभारते । ३ । ११ । २० ।
“स नष्टमायोऽतिबलो क्रोधविस्फारितेक्षणः ।
कामरूपधरः क्रूरः कालकल्पो व्यदृश्यत ॥”
निर्घोषितः । यथा, किराते । १४ । ३० ।
“उदूढवक्षःस्थगितैकदिङ्मुखो
विकृष्टविस्फारितचापमण्डलः ॥”)

विस्फुरितः, त्रि, ( वि + स्फुर + क्तः । ) स्फूर्त्तिविशिष्टः । चञ्चलः । यथा,—
“रक्तरक्तोत्कटाङ्गञ्च रक्तविस्फुरितेक्षणम् ।
वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् ॥”
इति दशभुजादुर्गाध्यानैकदेशः ॥

विस्फुलिङ्गः, पुं, विषभेदः । इति हेमचन्द्रः ॥ ( विशिष्टः स्फुलिङ्गः । ) अग्निकणा च ॥

विस्फोटः, पुं, ( विस्फोटतीति । वि + स्फुट् + अच् । ) विषदुस्फोटकः । विस्फोडा इति भाषा । तत्पर्य्यायः । पिटकः २ पिटका ३ पिटकम् ४ । इत्यमरः । पिटकः ५ पिटका ६ पिटकम् ७ । इति तट्टीका ॥ स्फोटकः ८ स्फोटः ९ । इति राजनिर्घण्टः ॥ ( यथा, कथासरित्सागरे । ८५ । १८ ।
“किमेतदिति संभ्रान्तः प्रबुद्धोऽथ ददर्श सः ।
उत्थाय राजा विस्फोटानङ्गे तस्या विनिर्गतान् ॥”)
तस्य विप्रकृष्टनिदानपूर्व्विकां संप्राप्तिमाह ।
“कट्वम्लतीक्ष्णोष्णविदाहिरूक्ष-
क्षारैरजीर्णाध्यशनातपैश्च ।
तथर्त्तुदोषेण विपर्य्ययेण
कुप्यन्ति दोषाः पवनादयस्तु ॥
त्वचमाश्रित्य ते रक्तमांसास्थीनि प्रदुष्य च ।
घोरान् कुर्व्वन्ति विस्फोटान् सर्व्वान् ज्वरपुरःसरान् ॥”
ऋतुदोषेण ऋतुहेतुकशीतोष्णादीनामतियोगेन । ऋतूचिताहारविहारवैपरीत्येन त्वचमाश्रित्य विस्फोटान् कुर्व्वन्तीत्यर्थः । ज्वरपुरःसरान् ज्वरपूर्व्वान् ॥ * ॥ रूपमाह ।
“अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्तजाः ।
क्वचित् सर्व्वत्र वा देहे विस्फोटा इति ते स्मृताः ॥”
रक्तपित्तजाः इतेन सर्व्वेषु विस्फोटेषु रक्तपित्तयोः प्रधानकारणत्वम् । यथा शूकेषु वातस्य तथा वातानुगतिरपि बोद्धव्या । तथा च भोजः ।
“यदा रक्तञ्च पित्तञ्च वातेनानुगतं त्वचि ।
अग्निदग्धनिभान् स्फोटान् कुरुतः सर्व्वदेहगान् ॥” * ॥
वातिकमाह ।
“शिरोरुक्शूलभूयिष्ठं ज्वरतृट्पर्व्वभेदनम् ।
सकृष्णवर्णता चेति वातविस्फोटलक्षणम् ॥”
शूलमत्र तोदरूपम् ॥ * ॥ पैत्तिकमाह ।
ज्वरदाहरुजापाकः स्रावस्तृष्णासमन्वितम् ।
पीतलोहितवर्णञ्च पित्तविस्फोटलक्षणम् ॥”
रुजादिकं स्फोटेषु ॥ * ॥ वातपैत्तिकमाह ।
“वातपित्तकृतो यस्तु तत्र स्युस्तीव्रवेदनाः ।
स्तैमित्यं गौरवं कण्डूर्भवेदालस्यलावणे ॥” * ॥
पित्तश्लैष्मिकमाह ।
“कण्डूर्दाहो ज्वरश्छर्दिर्जायते कफपैत्तिके ॥”
सान्निपातिकमाह ।
“मध्ये निम्नोन्नतश्चान्तः कठिनः स्वल्पपाकवान् ।
दाहरागतृषामोहच्छर्दिमूर्च्छारुजाज्वराः ।
प्रलापो वेपथुश्चैव सोऽसाध्यश्च त्रिदोषजः ॥”
मोहो विपरीतज्ञानम् । मूर्च्छा सर्व्वथा ज्ञानशून्यता ॥ * रक्तजमाह ।
“वेदितव्याश्च रक्तेन पैत्तिकेन च हेतुना ।
गुञ्जाफलसमा रक्ता रक्तस्रावा विदाहिनः ।
न ते सिद्धिं समायान्ति शुद्धैर्योगशतैरपि ॥”
पैत्तिकेन च हेतुना पित्तस्य हेतुना कट्वादिना रक्तस्य पित्तस्य तुल्यत्वात् न च ते साध्याः ।
“एते चाष्टविधा बाह्या आन्तरोऽपि भवेदयम् ।
तस्मिन्नन्तर्गता लीना ज्वरयुक्ताभिजायते ॥
तस्मिन् बहिर्गते स्वास्थ्यन्तु यानस्य बहिर्गतिः ।
तत्र वातिकविस्फोटक्रिया कार्य्या विजानता ॥”
उपद्रवानाह ।
“हृट्श्वासमांससङ्कोचदाहहिक्कामदज्वराः ।
विसर्पमर्म्मसंरोधास्तेषामुक्ता उपद्रवाः ॥”
मांससङ्कोचः मांसस्य शठितत्वम् । मर्म्मसंरोधो मर्म्मव्यथा । तेषां विस्फोटकानाम् ॥ * ॥
केचिदुपद्रवाणां लक्षणान्तरं पठन्ति ।
“हिक्का श्वासोऽरुचिस्तृष्णा स्वाङ्गमर्द्दो हृदिव्यथा ।
विसर्पज्वरहृल्लासा विस्फोटानामुपद्रवाः ॥”
साध्यत्वादिकमाह ।

"अधोमुखेश्च विहगैर्द्दिवियच्छे महारथान् ॥")
सूर्य्यः । चन्द्रः । इति शब्दरत्नावली । यज्ञः ।
इति धरणिः ॥

विहङ्गः, पुं, ( विहायसा गच्छतीति । ३।२।३८ ।
इत्यत्र "गमेः सुपीति ।" खच् । "विहायसो
विह च ।" इति विहादेशः । "खच्च डिद्वा
वक्तव्यः ।" इति डिच्च । ) पक्षी । इत्यमरः ॥
( यथा, रघुवंशे । १ । ५१ ।
"सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥")
वाणः । ( यथा, महाभारते । ८ । ६६ । २५ ।
"त्वत्प्रेरितैर्लोहिताक्तैर्व्विहङ्गैः ॥")
मेघः । चन्द्रः । सूर्य्यः । इति शब्दरत्नावली ॥
( नागविशेषः । १ । ५७ । ११ ।
"विहङ्गः शरभो मेदः प्रमोदः संहतापनः ॥")

विहङ्गमः, पुं, ( विहायसा गच्छतीति । ३।२।३८ ।
इत्यत्र । "खच्प्रकरणे गमेः सुप्युपसंख्यानम् ।"
इति कात्यायनोक्त्या खच् । "विहायसो विह
च ।" इति विहादेशः । ) पक्षी । इत्यमरः ॥
( यथा, महाभारते । ३ । २७४ । ४८ ।
"आक्रम्य रक्षोऽध्वचरः कामरूपी विहङ्गमः ॥"
सूर्य्यः । यथा, मार्कण्डेये । १०८ । ६७ ।
"छन्दोभिरश्वरूपैश्च यस्ताद्युक्तैर्व्विहङ्ग-
मम् ॥")

विहङ्गमा, स्त्री, भारयष्टिः । इति शब्दरत्नावली ॥
बाँक इति भाषा ॥

विहङ्गराजः, पुं, ( विहङ्गानां राजा । समासे
टच् । ) गरुडः । इति हलायुधः ॥ ( यथा,
शिशुपालवधे । १ । ७ ।
"विहङ्गराजाङ्गरुहैरिवायतै-
र्हिरण्मयोर्व्वीरुहवल्लितन्तुभिः ॥")

विहङ्गिका, स्त्री, भारयष्टिः । इत्यमरः ॥ बाँक
इति भाषा ॥

विहत, स्त्री, गर्भोपघातिनी गौः । इति संक्षिप्त-
सारोणादिवृत्तिः ॥

विहतः, त्रि, विशेषेण हतः । विनष्टः । विपूर्व्वक
हनधातोः क्तप्रत्ययेन निष्पन्नमिदम् ॥

विहननं, क्ली, ( वि + हन + ल्युट् । ) विघ्नः ।
हिंसा । तूलपिञ्जनः । इति मेदिनी । ने, २१० ॥

विहरः, पुं, ( वि + हृ + अप् । ) वियोगः । इति
हलायुधः ॥

विहरणं, क्ली, विहारः । विपूर्व्वकहृधातोरनट्-
प्रत्ययेन निष्पन्नमिदम् ॥ ( यथा, भागवते । १० ।
३१ । १० ।
"विहरणञ्च ते ध्यानमङ्गलम् ॥"
प्रसारणम् । यथा, पाणिनौ । १ । ३ । २० ।
"आङो दोऽनास्यविहरणे ॥"
आहरणम् । यथा, मार्कण्डेये । १६ । ६७ ।
"नाग्निविहरणञ्चैव क्रतुभावश्च लक्ष्यते ।
नवाध्यायनमस्माकं विना होमेन जायते ॥")

विहसितं, क्ली, ( वि + हस + क्तः । ) मध्यम-
हास्यम् । इत्यमरः ॥

विहस्तः, त्रि, व्याकुलः । इत्यमरः ॥ ( यथा,
रघुः । ५ । ४९ ।
"रामापरित्राणविहस्तयोधं
सेनानिवेशं तुमुलं चकार ॥")
पण्डितः । इति मेदिनी ॥ (यथा, हरिवंशे ।
२३७ । २८ ।
"नानायुधविहस्तानां त्वरितानां प्रधावताम् ।
चूडितोत्कृष्टनिनदैर्गर्जद्भिश्चलितस्वनैः ॥")
विकरः । ( यथा, विख्यातविजये । २ अङ्के ।
"विगतरथविहस्तव्यस्तशस्त्रप्रमत्त-
स्खलितगतिभयार्त्तान् नैव जातु प्रहर्त्ता ॥")
षण्डे, पुं । इति शब्दरत्नावली ॥

विहा, व, ( ओहाक् त्यागे + "विहाविहा ।"
उणा० ४ । ३६ । इति निपातनात् आ । )
स्वर्गः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

विहापितं, क्ली, ( वि + हा + णिच् + क्तः । )
दानम् । इत्यमरः ॥

विहायः, [ स् ] क्ली पुं, आकाशः । इत्यमरः ॥
( यथा, साहित्यदर्पणे । १० ।
"कान्तायते स्पर्शसुखेन वारि
वारीयते स्वच्छतया विहायः ॥"
त्रि, महान् । यथा, निरुक्ते । ४ । १५ । "विहा-
यसस्तेभिरित्रम् ।" "विहायसो महान्तः ॥"
इति यास्कः ॥ यथा च निघण्टुटीकायाम् । ३ ।
३।१२ । "विहायाः । वहिहाधाञ्भ्यश्छन्दसि ।
उणा० ४ । २१५ । इति जहातेर्णित्वा
वाहुलकात् युगभावेऽपि युगागमो निपात्यते ॥"
यथा, ऋग्वेदे । ४ । ११ । ४ ।
"तद्वाजी वाजंभरो विहायाः ।"
"विहायाः महान् ।" इति तद्भाष्ये सायणः ॥)

विहायाः, [स्] पुं, पक्षी । इत्यमरः ॥

विहायसं, क्ली पुं, आकाशः । इत्यमरटीकायां
मथुरेशः ॥ ( यथा, महाभारते । १।६३।१४ ।
"आतिष्ठस्व रथं राजन् विक्रमस्व विहाय-
सम् ॥")

विहायसः, पुं, पक्षी । इत्यमरटीकायां भरतः ॥

विहायसा, व्य, आकाशः । इत्यमरटीकायां मथु-
रेशः हेमचन्द्रश्च ॥ ( पाणिनौ च "स्वरादि-
निपातमव्ययम् ।" १।१।३७ । इत्यत्र गणितम् ॥)

विहारः, पुं, ( वि + हृ + घञ् । ) क्रीडार्थं पद्भ्यां
गमनम् । तत्पर्य्यायः । परिक्रमः २ । इत्यमरः ॥
( यथा, गीतायाम् । ११ । ४२ ।
"यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ॥")
भ्रमणम् । स्कन्धः । लीला । ( यथा, रघुवंशे ।
६ । ४८ ।
"प्रस्थानकालादिविहारकाले ॥" )
सुगतालयः । इति मेदिनी ॥ बिन्दुरेखकपक्षी ।
इति शब्दचन्द्रिका ॥ वैजयन्तः । इति शब्द-
माला ॥

विहारी, [न्] त्रि, (विहर्त्तुं शीलमस्येति । वि +
हृ + णिनिः । ) परिक्रमी । विहारकर्त्ता ।
विहारशब्दादस्त्यर्थे इनप्रत्ययेन निष्पन्नमिदम् ॥
( यथा, नैषधे । ३ । १५ ।
"धार्य्यः कथङ्कारमहं भवत्या
वियद्विहारी वसुधैकगत्या ॥")

विहितः, त्रि, (वि + धा + क्तः । ) विधेयः । यथा,
"विहितस्याननुष्ठानात् निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥"
इति प्रायश्चित्ततत्त्वम् ॥

विहितिः, स्त्री, ( वि + धा + क्तिन् । ) विधानम् ।
यथा,—
"स्थितिविनितिस्थितिविहितिव्रतरतयः पर-
गतयः ।
उरु ललघुर्गं वद्युधुर्य्यं धिकुरवः स्मरिकुलम् ॥"
इति दण्डी ॥

विहीनः, त्रि, (वि + हा + क्तः ।) विशेषेण हीनः ।
यथा, तन्त्रसारे ।
"मोहाद्यासविहीनो यः प्रणमेद्दपि पार्व्वतीम् ।
सोऽचिरामृत्युमाप्नोति नरकञ्च प्रपद्यते ॥"
त्यक्तः । यथा,—
"विहीनश्च धनैर्दारैः पुत्रैरादाय मे धनम् ।
वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः ॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥

विहृतं क्ली, (वि + हृ + क्तः ।) स्त्रीणां स्वाभाविक-
दशविधालङ्कारान्तर्गतालङ्कारविशेषः । यथा,
"लीला विलासो विच्छित्तिर्व्विब्वोकः किल-
किञ्चितम्
मोट्टायितं कुट्टमितं ललितं विहृतं तथा ।
विभ्रमश्चेत्यलङ्काराः स्त्रीणां स्वाभाविका दश ॥"
इति हेमचन्द्रः ॥

विहृतिः, स्त्री, विशेषेण हरणम् । विशेषेण बला-
त्कारः । विपूर्व्वहृधातोः क्तिप्रत्ययेन निष्पन्न-
मिदम् ॥

विहेठः, पुं, ( वि + हेठ + अच् । ) विहेठनम् ।
विपूर्व्वहेठधातोरल्प्रत्ययेन निष्पन्नमिदम् ॥

विहेठनं क्ली, ( वि + हेठ + ल्युट् । ) हिंसा ।
मर्द्दनम् । विडम्बनम् । इति मेदिनी ॥ विबाधा ।
इति त्रिकाण्डशेषः ॥

विह्वलः, त्रि, ( वि + ह्वल + अच् । ) भयादिना-
भिभूतः । स्वाङ्गधारणाशक्तः । तत्पर्य्यायः ।
विक्लवः २ । इत्यमरः ॥ ( यथा, रघुः । ८।३७ ।
"क्षणमात्रसखीं सुजातयोः
स्तनयोस्तामवलोक्य विह्वला ।
निमिमील नरोत्तमप्रिया
हृतचन्द्रा तमसेव कौमुदी ॥")
विलीनम् । इति हेमचन्द्रः ॥

वी, ल ईलवत् । कान्तिगतिव्याप्तिक्षेपप्रजनखादने ।
इति कविकल्पद्रुमः ॥ ( अदा०-पर०-कान्तौ
अक०-गतौ व्याप्तौ क्षेपे प्रजने खादने च सक०-
अनिट् । ) ल, वेति । इति दुर्गादासः ॥

वीः, पुं, (वयनमिति । वी गतौ + सम्पदादित्वात् भावे
क्विप् । अभिधानात् पुंस्त्वम् । ) गमनम् । इत्ये-
काक्षरकोषः ॥

वीकः, पुं, (अजतीति । अज + "अजियुधूनीभ्यो दीर्घश्च ।" उणा० ३।४७। कन् । अजो वीभावः ।) वायुः । पक्षी । इत्युणादिकोषः ॥ मनः । इति संक्षिप्तसारोणादिवृत्तिः ॥

वीकाशः, पुं, ( विकाशनमिति । वि + काश + घञ् । "इकःकाशे ।" ६ । ३ । १२३। इति वेरुपसर्गस्य दीर्घः । ) रहः । प्रकाशः । इत्यमरः ॥

वीक्षः, पुं क्ली, दृष्टिः । विपूर्व्वेक्षधातोरल्प्रत्ययेन निष्पन्नमिदम् ॥

वीक्षणं, क्ली, विशेषेण ईक्षणम् । दर्शनम् । विपूर्व्वेक्षधातोरनट् (ल्युट्) प्रत्ययेन निष्पन्नम् ॥ ( यथा, भागवते । ६ । १८ । २८ ।
"मनो जग्राह भावज्ञा सस्मितापाङ्गवीक्षणैः ॥")

वीक्षापन्नः, त्रि, ( वीक्षामापन्नः । ) विस्मयापन्नः । इति हेमचन्द्रः ।३।८७॥ (वीक्ष्यापन्नः । इत्येवमेव॥)

वीक्षितः, त्रि, ( वि + ईक्ष + क्तः । ) विशेषेण ईक्षितः । दृष्टः । यथा,—
"पापर्द्धौ प्रशमने तु पापसंयुतवीक्षिते ।
तथैव चाष्टमस्थाने दीर्घिणां मरणं दिशेत् ॥"
इति दीपिका ॥

वीक्ष्यं, क्ली, ( वीक्ष्यते इति । वि + ईक्ष + ण्यत् ।) विस्मयः । दृश्यम् । इति मेदिनी । ये, ५६ ॥

वीक्ष्यः, पु, ( वि + ईक्ष दर्शने + ण्यत् ।) लासकः । घोटकः । इति मेदिनी ॥ दर्शनीये, त्रि ॥

वीङ्खा, क्ली, ( वीङ्खनमिति । वि + इङ्ख + "गुरोश्च हलः ।" इति अः । टाप् । ) शूकशिम्बी । गतिभेदः । नर्त्तनम् । इति हेमचन्द्रः ॥ अश्वगतिभेदः । सन्धिः । इति शब्दरत्नावली ॥

वीचिः, पुं,स्त्री, (वयति जलं तटे वर्द्धयतीति । वे + "वेञो डिच्च ।" उणा० ४ । ७२ । ईचिः । स च डित् । ) तरङ्गः । इत्यमरः ॥ (यथा, रघुवंशे । १ । ४३ ।
"सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।
आमोदमुपजिघ्रन्तौ स्वनिश्वासानुकारिणम् ॥")
स्वल्पतरङ्गः । अवकाशः । सुखम् । इति मेदिनी । चे, १० ॥ अल्पः । इति हेमचन्द्रः ॥ किरणः । इति जटाधरः ॥

वीची, स्त्री, ( वीचि + कृदिकारादिति ङीष् । ) वीचिः । इत्यमरटीकायां भरतः ॥ ( यथा, बृहत्संहितायाम् । ५६ । ४ ।
"सर तु नलिनीच्छत्रनिरस्तरविरश्मिषु ।
हंसांसाक्षिप्तकह्लारवीचीविमलवारिषु ॥")

वीचीतरङ्गः, पुं, न्यायविशेषः । स तु श्रोत्रे शब्दस्य उत्पत्तिकारणरूपः । यथा,—
"वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता ।
कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥"
इति भाषापरिच्छेदः ॥
ननु व्योमावच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरित्यत आह वीचीति आद्यशब्दस्य बहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते तेन चापरस्तद्व्यापक एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति । कदम्ब इति आद्यशब्दाद्दश दिक्षु दश शब्दा उत्पद्यन्ते तेभ्योऽन्ये दश शब्दा उत्पद्यन्ते इति भावः । अस्मिन् कल्पे गौरवादुक्तं कस्यचिन्मते इति । इति सिद्धान्तमुक्तावली ॥

वी(वी)जं, क्ली, (विशेषेण कार्य्यरूपेण अपत्यतया च जायते इति । वि + जन + "उपसर्गे च संज्ञायाम् ।" इति डः । "अन्येषामपीति ।" उपसर्गस्य दीर्घः । यद्वा विशेषेण ईजते कुक्षिं गच्छति शरीरं वा । ईज गतिकुत्सनयोः + पचाद्यच् । यद्वा, वीजते गच्छति गर्भाशयमिति । वीज् + अच् । यद्वा, "वीजप्रजनन-कान्त्यसनखादनेषु । इत्यस्मादक्प्रत्ययः । तथा च भोजराजीये वियो जक् इति व्युत्पादितम् । बवयोरभेदः । वेति प्रजायते गच्छत्यनेनाकृत्यं पिबतीति वा । अत्र क्षीरस्वामी वीज्यते वेति वा वीजं वाजिलौकिकः इति । वीजिः स्यात् प्रेरणक्रिया इति माधवः ॥ प्रेर्य्यते हि कार्य्यकरणाय वा वीजम् ।" इति सिद्धान्तकौमुदीप्रतिरूपकादि देवराजयज्वा । २ । २ । २५ ।) कारणम् । (यथा, गीतायाम् । ७ । १० ।
"वीजं मां सर्व्वभूतानां विद्धि पार्थ सनातनम् ।"
यथा च मनौ । १ । ५६ ।
"यदाणुमात्रिको भूत्वा वीजं स्थास्नु चरिष्णु च ।")
शुक्रम् । इत्यमरः ॥ ( यथा मनौ । १ । ८ ।
"अप एव ससर्ज्जादौ तासु वीजमवासृजत् ॥"
वीजं शुक्रम् । इति मेधातिथिः ॥ वीजं शक्तिरूपम् । इति कुल्लूकः ॥ यथा च तत्रैव ।१०।७२।
"यस्माद्वीजप्रभावेण तिर्य्यग्जा ऋषयोऽभवन् ।
पूजिताश्च प्रशस्ताश्च तस्माद्वीजं प्रशस्यते ॥")
श्रीकृष्णस्य सर्व्वावतारवीजत्वं यथा,—
दानव उवाच ।
"अधुना कृष्णरूपस्त्वं परिपूर्णतमः स्वयम् ।
सर्व्वेषामवताराणां वीजरूपः सनातनः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २२ अध्यायः ॥
अङ्कुरः । (यथा, महाभारते । ५ । १२ । १६ ।
"न तस्य वीजं रोहति वीजकाले
न चास्य वर्षं वर्षति वर्षकाले ।
भीतं प्रपन्नं प्रददाति शत्रवे
न त्रातारं लभते त्राणमिच्छन् ॥")
तत्त्वाधानम् । इति मेदिनी ॥ मज्जा । इति राजनिर्घण्टः ॥ गणितविशेषः । यथा,—
"उत्पादकं यत्प्रवदन्ति बुद्धे-
रधिष्ठितं सत्पुरुषेण सांख्याः ।
व्यक्तस्य कृत्स्नस्य तदेकवीज-
मव्यक्तमीशं गणितं च वन्दे ॥
पूर्व्वं प्रोक्तं व्यक्तमव्यक्तवीजं
प्रायः प्रश्ना नो विना व्यक्तयुक्त्या ।
ज्ञातुं शक्या मन्दधीभिर्नितान्तं
यस्मात्तस्माद्वच्मि वीजक्रियाञ्च ॥"
इति भास्कराचार्य्यविरचिते सिद्धान्तशिरोमणौ वीजगणिताध्यायस्य प्रथमद्वितीयश्लोकौ ॥ * ॥
मन्त्रः । यथा । अथ भुवनेश्वरीमन्त्रः ।
"नकुलीशोऽग्निमारूढो वामनेत्रार्द्धचन्द्रवान् ।
वीजं तस्याः समाख्यातं सेवितं सिद्धि-
काङ्क्षिभिः ॥"
नकुलीशो हकारः । अग्नी रेफः । वामनेत्रमीकारः । अर्द्धचन्द्रोऽनुस्वारः । ह्रीं ॥ * ॥
अन्नपूर्णाया वीजम् । ह्रीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा ॥ * ॥ अथ त्रिपुटावीजम् । श्रीं ह्रीं क्लीं ॥ * ॥ त्वरितावीजम् । ॐ ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षे ह्रीं फट् ॥ * ॥ अथ नित्यावीजम् । ऐं क्लीं नित्यक्लिन्ने मदद्रवे स्वाहा ॥ * ॥ वज्रप्रस्तारिण्याः । ऐं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा ॥ * ॥ अथ दुर्गावीजम् । ॐ ह्रीं दुं दुर्गायै नमः ॥ * ॥ महिषमर्द्दिनीवीजम् । ॐ महिषमर्द्दिनि स्वाहा ॥ * ॥ जयदुर्गावीजम् । ॐ दुर्गे दुर्गे रक्षणि स्वाहा ॥ * ॥ शूलिनीवीजम् । ज्वल ज्वल शूलिनि दुष्टग्रह हुं फट् स्वाहा ॥ * ॥ वागीश्वरीवीजम् । वद वद वाग्वादिनि स्वाहा ॥ * ॥ पारिजातसरस्वतीवीजम् । ॐ ह्रीं ह्सौं ॐ ह्रीं सरस्वत्यै नमः ॥ * ॥ गणेशवीजम् । गं ॥ * ॥ हेरम्बवीजम् । ॐ गं नमः ॥ * ॥ हरिद्रागणेशवीजम् । ग्लौं ॥ * ॥ लक्ष्मीवीजम् । श्रीं ॥ * ॥ महालक्ष्मीवीजम् । ॐ ऐं ह्रीं श्रीं क्लीं ह्सौं जगत्प्रसूत्यै नमः ॥ * ॥ सूर्य्यवीजम् । ॐ घृणि सूर्य्य आदित्य ॥ * ॥ श्रीरामवीजम् । रां रामाय नमः । जानकीवल्लभाय हुं स्वाहा ॥ * ॥ विष्णुवीजम् । ॐ नमो नारायणाय ॥ * ॥ श्रीकृष्णवीजम् । गोपीजनवल्लभाय स्वाहा ॥ * ॥ वासुदेवस्य । ॐ नमो भगवते वासुदेवाय ॥ * ॥ बालगोपालस्य । ॐ क्लीं कृष्णाय ॥ * ॥ लक्ष्मीवासुदेवस्य । ॐ ह्रीं ह्रीं श्रीं श्रीं लक्ष्मीवासुदेवाय नमः ॥ * ॥ दधिवामनस्य । ॐ नमो विष्णवे सुरपतये महाबलाय स्वाहा ॥ * ॥ हयग्रीवस्य ।
ॐ उद्गिरत्प्रणवोद्गीथसर्व्ववागीश्वरेश्वर ।
सर्व्ववेदमयाचिन्त्य सर्व्वं बोधय बोधय ॥ * ॥
नृसिंहस्य ।
उग्रं वीरं महाविष्णुं ज्वलन्तं सर्व्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥ * ॥
नरहरिवीजम् । क्ष्रौं ह्रौं श्रौं हुं फट् ॥ * ॥ हरिहरस्य । ॐ ह्रीं ह्रौं शङ्करनारायणाय नमः ह्रौं ह्रीं ॐ ॥ * ॥ वराहस्य । ॐ नमो भगवते वराहरूपाय भूर्भुवस्वःपतये भूपतित्वं मे देहि ददापय स्वाहा ॥ * ॥ शिवस्य । ह्रौं ॥ * ॥ मृत्युञ्जयस्य । ॐ जुं सः ॥ * ॥ दक्षिणामूर्त्तिवीजम् । ॐ नमो भगवते दक्षिणामूर्त्तये मह्यं मेधां प्रयच्छ स्वाहा ॥ * ॥ चिन्तामणिवीजम् । र क्ष म र य औं ऊं ॥ * ॥ नीलकण्ठस्य । प्रों ह्रीं ठः नमः शिवाय ॥ * ॥ चण्डस्य । रूक्ष फट् ॥ * ॥ क्षेत्रपालस्य ॐ क्षौं क्षेत्रपालाय नमः ॥ * ॥ वटुकभैरवस्य । ॐ ह्रीं वटुकाय आपदुद्धरणाय कुरु कुरु वटुकाय

ह्रीं ॥ * ॥ त्रिपुरायाः । हसरैं । हसकलरीं । हसरौः ॥ * ॥ सम्पत्प्रदाभैरव्याः । हसरैं । हसकलरीं । हसरौं ॥ * ॥ कौलेशभैरव्याः । सहरैं । सहकलरीं । सहरौं ॥ * ॥ भयविध्वंसिनीभैरव्याः । हसैं । हसकलरीं । हसौं ॥ * ॥ सकलसिद्धिदाभैरव्याः । सहैं । सहकलरीं । सहौं ॥ * ॥ चैतन्यभैरव्याः । सहैं । सकलह्रीं । सहरौः ॥ * ॥ कामेश्वरीभैरव्याः । सहैं । सकलह्रीं । नित्यक्लिन्ने मदद्रवे सहरौः । षट्कूटाभैरव्याः । डरलकसहैं । डरलकसहीं । डरलकसहौं ॥ * ॥ नित्याभैरव्याः । हसकलरडैं । हसकलरडीं । हसकलरडौं ॥ * ॥ रुद्रभैरव्याः । हसखफरैं । हसकलरीं । हसौः ॥ * ॥ भुवनेश्वरीभैरव्याः । हसैं । हसकलह्रीं । हसौः ॥ * ॥ सकलेश्वर्य्याः । सैं । सहकलह्रीं । सहौः ॥ * ॥ त्रिपुराबालायाः । ऐं क्लीं सौः ॥ * ॥ नवकूटाबालायाः । ऐं क्लीं सौः । हसैं । हसकलरीं । हसौः । हसैं हसकलरीं हसरैः ॥ * ॥ अन्नपूर्णाभैरव्याः । ॐ ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा ॥ * ॥ श्रीविद्यायाः । कएईल ह्रीं । हसकहलह्रीं । सकलह्रीं ॥ * ॥ छिन्नमस्तायाः । श्रीं क्लीं ह्रूं ऐं वज्रवैरोचनीये हूं हूं फट् स्वाहा ॥ * ॥ श्यामायाः । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ॥ * ॥ गुह्यकालिकायाः । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं गुह्ये कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ॥ * ॥ भद्रकाल्याः । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं भद्रकालि क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ॥ * ॥ श्मशानकालिकायाः । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं श्मशानकालि क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ॥ * ॥ महाकाल्याः । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं महाकालि क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ॥ * ॥ तारायाः । ह्रीं स्त्रीं हूं फट् ॥ * ॥ चण्डोग्रशूलपाणेः । ॐ ह्रीं हूं शिवाय फट् ॥ * ॥ मातङ्ग्याः । ॐ ह्रीं क्लीं हूं मातङ्ग्यै फट् स्वाहा ॥ * ॥ उच्छिष्टचाण्डालिन्याः । उच्छिष्टचाण्डालिनि सुमुखीदेवी महापिशाचिनी ह्रीं ठः ठः ठः ॥ * ॥ धूमावत्याः । धूं धूं स्वाहा ॥ * ॥ भद्रकाल्याः । ह्रौं कालि महाकालि किलि किलि फट् स्वाहा ॥ * ॥ उच्छिष्टगणेशस्य । ॐ हस्तिपिशाचि लिखे स्वाहा ॥ * ॥ धनदायाः । धं ह्रीं श्रीं रति रतिप्रिये स्वाहा ॥ * ॥ श्मशानकालिकायाः । ऐं ह्रीं श्रीं क्लीं कालिके ऐं ह्रीं श्रीं क्लीं ॥ * ॥ बगलायाः । ॐ ह्लीं बगलामुखि सर्व्वदुष्टानां वाचं मुखं स्तम्भय जिह्वां कीलय कीलय बुद्धिं नाशय ह्लीं ॐ स्वाहा ॥ * ॥ कर्णपिशाच्याः । ॐ कर्णपिशाचि वदातीतानागतशब्दं ह्रीं स्वाहा ॥ * ॥ मञ्जुघोषस्य । क्रीं ह्रीं श्रीं ॥ * ॥ तारिण्याः । क्रौं क्लीं अघादेवि ह्रीं क्रीं ऐं ॥ * ॥ सारस्वतबीजम् । ऐं ॥ * ॥ कात्यायन्याः । ऐं ह्रीं श्रीं चौं चण्डिकायै नमः ॥ * ॥ दुर्गायाः । दुं ॥ * ॥ विशालाक्ष्याः । ॐ ह्रीं विशालाक्ष्यै नमः ॥ * ॥ गौर्य्याः । ह्रीं गौरि रुद्रदयिते योगेश्वरि हूं फट् स्वाहा ॥ * ॥ अश्वारोहमन्त्रः । ह्रीं नमो ब्रह्मश्रीराजिते राजपूजिते जये विजये गौरि गान्धारि त्रिभुवनशङ्करि सर्व्वलोकवशङ्करि सर्व्वस्त्रीपुरुषवशङ्करि सुदुर्दुर्घोररावे ह्रीं स्वाहा ॥ * ॥ इन्द्रस्य । इं इन्द्राय नमः ॥ * ॥ गरुडस्य । क्षिप ॐ स्वाहा ॥ * ॥ विषहराग्निबीजम् । ख: खं ॥ * ॥ वृश्चिकविषहरबीजम् । ॐ सरह स्फुः । ॐ हिलि हिलि चिलि हस्फुः । ॐ हिलि हिलि चिलि चिलि स्फुः । ब्रह्माणी फुः । सर्व्वेभ्यो देवेभ्यस्फुः ॥ * ॥ मूषिकविषहरबीजम् । ॐ गं फ्रं ठं । आगमचन्द्रिकायां ॐ गं गां ठः ॥ * ॥ मूषिकनाशमन्त्रः । ॐ सरणी फुः अमरणी फुः विसरणी फुः । एतन्मन्त्रं जपन् श्वेतसर्षपलेपात् मूषिकनाशो भवति ॥ * ॥ लूताविषहरमन्त्रः । ॐ ह्रीं ह्रीं हूं जलत ॐ स्वाहा गरुड हूं फट् ॥ * ॥ सर्व्वकीटविषहरबीजम् । ॐ नमो भगवते विनायके सर सर हन हन हुं फट् स्वाहा ॥ * ॥ सुखप्रसवमन्त्रः । ॐ मन्मथ मन्मथ वाहि वाहि लम्बोदर मुञ्च मुञ्च स्वाहा । ॐ मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्य्येण रश्मयः । मुक्तः सर्व्वभयाद्गर्भ एह्येहि मारीच मारीच स्वाहा । एतयोरन्यतरेणाष्टधारं जलमभिमन्त्र्य देयं पीत्वा सुखप्रसवा भवति ॥ * ॥ हनूमतः । हं हनूमते रुद्रात्मकाय हुं फट् ॥ * ॥ वीरसाधनस्य । हं पवननन्दनाय स्वाहा ॥ * ॥ अथ आर्द्रपटी । ॐ नमो भगवति मातङ्गि रक्तवाससे अप्रतिहतरूपपराक्रमे अमुकवधाय विचेतसे स्वाहा । आर्द्ररक्तपटेनावृतः समुद्रगामिनीनदीतटे ऊषरभूमौ वा दक्षिणामुख ऊर्द्धबाहुर्जपेत् । यावत् पटः शुष्यति तावत् प्राणाः शुष्यन्ति शत्रोः ॥ * ॥ श्मशानभैरव्याः । श्मशानभैरवि नररुधिरास्थिवसाभक्षिणि सिद्धिं मे देहि मम मनोरथान् पूरय हुं फट् स्वाहा ॥ * ॥ ज्वालामालिन्याः । ॐ नमो भगवति ज्वालामालिनि गृध्रगणपरिवृते हुं फट् स्वाहा ॥ * ॥ महाकाल्याः । ॐ फ्रें फ्रें क्रों क्रों पशून् गृहाण हुं फट् स्वाहा ॥ * ॥ अथ निगडबन्धनमोचनस्य । ॐ मम करे निकृते तिष्ठतेऽओ यन्मयं त्रिवेता बन्धमेतं यमेन दत्तं तस्या संदिदा गोतमे नाके अधोवोऽधैरम ॥ * ॥ अथ चिटिमन्त्रः । ॐ चिटि चिटि चाण्डालि महाचाण्डालि अमुकं मे वशमानय स्वाहा ॥ * ॥ त्र्यम्बकस्य ।

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनात् मृत्योर्मुक्षीयमामृतात् ॥

अथ मृतसञ्जीवनीमन्त्रः । ह्रौं ॐ जुं सः ॐ भूर्भुवः स्वः ।
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ॥

ॐ भूर्भुवः स्वः । इत्यादि मन्त्रसारः ॥ आकर्षणादिबीजानि बाहुल्यभयान्नोक्तानि ॥ * ॥

( अथ बीजाभिधानम् । यथा,

"बीजसङ्केतबोधार्थमाश्रुत्य तन्त्रशासनम् ।
बीजनामानि कतिचित् वक्ष्यामि विदुषां मुदे ॥
माया लज्जा परा संवित् त्रिगुणा भुवनेश्वरी ।
हृल्लेखा शम्भुवनिता शक्तिर्देवीश्वरी शिवा ॥
महामाया पार्व्वती च संस्थानप्लवरूपिणी ।
परमेश्वरी च सुवना धात्री जीवनमध्यगा ॥ ह्रीं ॥
वह्निस्त्रीनेऽक्षयुक्ताया स्थिरमाया प्रकीर्त्तिता ॥ क्रीं ॥

शान्तिशान्तिर्विन्दुनादैर्लक्ष्मीप्रणव उच्यते ।
श्रीर्लक्ष्मीर्विष्णुवनिता रमा क्षीरसमुद्भवा ॥ श्रीं ॥
षोडशस्वरसंयुक्तं बह्निवामाक्षिबिन्दुसंयुतम् ।
चन्द्रबीजसमारूढं वधूबीजमिदं स्मृतम् ।
वधूर्वामेक्षणा योषिदेकाक्षी स्त्रीचकामिनी ॥ स्त्रीं ॥
नादबिन्दुसमायुक्तो द्वादशस्वरो भगम् ।
योनिः सरस्वतीबीजमक्षरं वाग्भवश्च वाक् ॥ ऐं ॥
हकारो वामकर्णाढ्यो नादबिन्दुविभूषितः ।
कूर्च्चं क्रोध उग्रदर्पौ दीर्घहुङ्कार उच्यते ।
शब्दश्च दीर्घकवचं तारा प्रणव इत्यपि ॥ हूं ॥
कामाक्षरं वह्निसंस्थं रतिबिन्दुविभूषितम् ।
कालीबीजमिदं प्रोक्तं रतिबीजं तदेव हि ॥ क्रीं ॥
कामाक्षरं धरासंस्थं रतिबिन्दुविभूषितम् ।
शुभकालीबीजमिदं गोपालबीजमित्यपि ॥
तत्कामबीजं कामेशीबीजं शक्तिस्त्वसौ परा ॥ क्लीं ॥
सध्यान्त्ययुक्तयोमसेन्दुश्चैव प्रासादमुच्यते ॥ हौं ॥
कलादौ क्रोधिनीबीजं क्रोङ्कारस्त्वङ्कुशाभिधः ॥ क्रों ॥
आकारो बिन्दुमान् पाशः शेषश्च समन्वितः ।
सकला भुवनेशानी कामेशी बीजमुच्यते ॥
नमस्तु हृदयं स्वाहा शिरोद्वयगलं ठठः ॥
नमः ॥ स्वाहा ॥
चन्द्रयुग्मं शिवो वेदमाता ज्वलनसुन्दरी ।
स्वाहा परा देवभोग्यं ठद्वयं चन्द्रयुग्मकम् ।
स्रुवो हविर्वेदमाता देवास्यं वह्निसुन्दरी ॥ स्वाहा ॥
शिखा वषट् शिरोमध्य शक्रमाता हरप्रिया ॥
शिखा वषट् च । वषट् कवचं क्रोधो वर्म्महुमित्यपि ।
क्रोधाख्योऽहं तनुत्रश्च शस्त्रादौ रिपुसंज्ञकः ॥ हुं ॥
अस्त्रनेत्रयुगं वौषट् ॥ वौषट् ॥ फडस्त्रं शस्त्रमायुधम् ॥ फट् ॥
तार्त्तीयन्तु हसौः प्रेतबीजम् ॥ हसौः ॥ हंसोऽजपामनुः ॥ हंसः ॥
गकारो बिन्दुमान् विघ्नबीजं गणेशबीजकम् ॥ गं ॥
शक्तिस्थं सोमसौबिन्दुयुतं भूबीजमीरितम् ॥ लं ॥
ठाक्षं दहनवेन्दुयुतन्तु विम्बबीजकम् ॥ ग्लौं ॥
अथ कामकलावामनयनं बिन्दुसंयुतम् ।
अर्कमात्राकलावाणीनादोऽर्द्धेन्दुः महाशिवः ।
अनुस्वारस्तुरीया च विश्वमातृकला परा ॥ ँ ॥
नादः ॥

भूतडामरतन्त्रोक्तबीजार्थं भूतडामरीयबीजनामा-
न्यपि लिख्यन्ते ।
प्रणवो विषबीजं स्यात् ध्रुवं हालाहलं स्मृतम् ।
कालमृत्युनिपथं श्रेयं वज्रकूपी निरञ्जनम् ॥ प्रणवम् ॥
गगनस्थं व्योमवक्त्रं धूम्रभैरवलाञ्छनम् ।
नादबिन्दुसमायुक्तं बीजं प्राणात्मकं स्मृतम् ॥ ह्रीं
क्रोधीशं गगनारूढं धूम्रभैरवलाञ्छनम् ।
विद्या जिह्वा बिन्दुयुतं पितृभूवासिनी स्मृतम् ॥ क्रीं
क्रोधकालात्मकं कूर्चाङ्कुशनिकं वाग्भवं स्मृतम् ।
नादबिन्दुसमायुक्तं समाधायोग्रभैरवीम् ॥
बीजमेतत्तु कथितं शुद्धबुद्धिप्रवर्त्तकम् ॥ ऐं ॥
क्रोधीशं वज्रदंष्ट्रभैरवीनादबिन्दुभिः ।
भिन्नं तमन्मथं कामराजक्लेशौघमोचनम् ।
इन्द्रासनगतो ब्रह्म सन्धात्संस्तु मन्मथः ॥ क्लीं ॥
संयुक्तं धूम्रभैरव्यारक्तस्थं बलिभञ्जनम् ।
नादबिन्दुसमायुक्तं किङ्किणी बीजमुत्तमम् ॥ श्रीं ॥
नादबिन्दुसमायुक्तं रक्तस्थं बलिभोजनम् ।
कालरात्र्यासनोपेतं विघ्नसाख्यं महामनुम् ॥ ह्रीं ॥
विदार्थ्यालिङ्गितोग्राख्यौ विसर्गगगनौ च तौ ।
नादबिन्दुसमायुक्तो विज्ञेयः पिशिताशनम् ॥ हुं ॥
धन्वधनाधः कालाग्निः सोऽर्द्धकेशीन्दुबिन्दुभिः ।
युगान्तकारकं बीजं भैरवेन प्रकाशितम् ॥ स्त्रां ॥
कपर्दिनं समादाय गगनः क्षितिविग्रहम् ।
संयुक्तं धूम्रभैरव्या बीजयं नादबिन्दुमान् ॥ भ्रीं ॥
कपालीद्वयमादाय महाकालेन मण्डितम् ।
समासमिति प्रोक्तं चण्डिकाट्टप्रयोजयेन ॥
ठं ठं ठः ठः ॥
गगनस्थं व्योमवक्त्रं चन्द्रगगनविभूषितम् ।
स्वाहेतिमिति संप्रोक्तं यामिनी कालराशियुक् ॥
हूं हूँ ।
गगनो गगनाकाशं नादबिन्दुविभूषितम् ।
विदारी भूषितश्चैव बीजं वैवस्वतोदकम् ॥ हूँ ॥
कौमाराख्या कालवक्त्रा च महाकालेन साधितम् ॥
नदनादिपञ्चरश्मि: ऊर्द्धस्थितमनन्तविधिः ॥ ॐ ॥
व्योमस्थं नागजङ्घास्थं बिन्दुनादविभूषितम् ।
कूर्चं कालो महाकालः क्रोधबीजं निरञ्जनम् ॥ हूँ ॥
इति प्राणतोषिणी ॥ )

बीजकः, पुं, मातुलुङ्गः इति जटाधरः ॥ वृक्ष-
विशेषः । बिजयासार इति हिन्दी भाषा ।
तत्पर्य्यायः । पीतसारः २ पीतशालकः ३
बन्धूकपुष्पः ४ प्रियकः ५ सर्जकः ६ आसनः ७ ।
अस्य गुणाः । कुष्ठवीसर्पश्वित्रमेहगुदक्रिमि-
श्लेष्मास्रपित्तनाशित्वम् । त्वच्यत्वम् । केश्यत्वम् ।
रसायनत्वञ्च । इति भावप्रकाशः ॥ ( यथा,
हरिवंशे । १५५ । २० ।
“अशनैर्बीजकैश्चैव मन्दारैश्चोपशोभितम् ॥”)
बीजे, क्ली ॥

बीजकृत्, क्ली, ( बीजं वीर्य्यं करोति वर्द्धयतीति ।
कृ + क्विप् । ) वाजीकरणम् । इति राजनिर्घण्टः ॥

बीजकोशः } पुं, ( बीजानां कोष आधार इव । )
बीजकोषः } पद्मबीजाधारचक्रिका । पौँचक
इति ख्यातः । इति भरतः ॥ तत्पर्य्यायः ।

वराटकः २ । इत्यमरः ॥ कर्णिका ३ । इति
जटाधरः ॥ वारिकुब्जः ४ शृङ्गाटकः ५ । इति
शब्दरत्नावली ॥

बीजगर्भः, पुं, ( बीजानि गर्भेऽभ्यन्तरे यस्य । )
पटोलः । इति राजनिर्घण्टः ॥

बीजगुप्तिः, स्त्री, ( बीजानां गुप्तिर्यत्र । ) शिम्बी ।
इति राजनिर्घण्टः ॥

बीजधान्यं, क्ली, ( बीजप्रधानं धान्यम् । ) धान्य-
कम् । इति राजनिर्घण्टः ॥

बीजनं, क्ली, (बीज्यतेऽनेनेति । वि + ईज + करणे
ल्युट् ।) व्यजनम् । (यथा, आर्य्यासप्तशत्याम् । ३५० ।
“मलयजमपसार्य्य घनं बीजनविघ्नं विधाय
बाहुभ्याम् ॥
स्मरसन्तापादगणितनिशाचमालिङ्गते मिथु-
नम् ॥”)
वस्तु । कोके जीवञ्जीवे च पुं । इति सारस्वतः ॥

बीजपादपः, पुं, ( बीजप्रधानः पादपः । ) भल्ला-
तकः । इति राजनिर्घण्टः ॥ ( बीजोत्पन्न-
वृक्षमात्रञ्च ॥ )

बीजपुष्पं, क्ली, ( बीजप्रधानं पुष्पं यस्य । ) मरु-
वकः । मदनवृक्षः । इति मेदिनी । पे, २६ ॥

बीजपूरः, पुं, ( बीजानां पूरः समूहो यत्र । ) फल-
पूरः । इत्यमरः ॥ टावा लेबु इति बङ्गभाषा ॥
बिजौरा इति हिन्दी भाषा ॥ तत्पर्य्यायः ।
बीजपूर्णः २ पूर्णबीजः ३ सुकेशरः ४ बीजकः ५
केशराम्लः ६ मातुलुङ्गः ७ सुपूरकः ८ रुचकः ९
बीजफलकः १० जन्तुघ्नः ११ दन्तुरच्छदः १२
पूरकः १३ रोचनफलः १४ । अस्य फलगुणाः ।
अम्लत्वम् । कटुत्वम् । उष्णत्वम् । श्वासकास-
पवनशमनत्वम् । कण्ठशोधनकरत्वम् । लघु-
त्वम् । हृद्यत्वम् । दीपनत्वम् । रुचिकारि-
त्वम् । पाचनत्वम् । आध्मानगुल्मशूलगरप्लीहो-
दावर्त्तनाशित्वम् । विबन्धे हिक्कायां मुखे
कर्द्दाश्च शस्तत्वञ्च । इति राजनिर्घण्टः ॥ * ॥
अपि च ।
“बीजपूरफलं स्वाद्व रसेऽम्लं दीपनं लघु ।
रक्तपित्तहरं कण्ठजिह्वाहृदयशोधकम् ।
श्वासकासारुचिहरं हृद्यं तृष्णाहरं स्मृतम् ॥”
तद्भेदमधुकर्कटी । यथा,—
“बीजपूरोऽपरः प्रोक्तो मधुरो मधुकर्कटी ।
मधुकर्कटिका स्वादी रोचनी शीतला गुरुः ।
रक्तपित्तक्षयश्वासकासहिक्काभ्रमापहा ॥”
इति भावप्रकाशः ॥
( यथा, महाभारते । ३ । १५८ । ४२ ।
“तस्मान्मातुलुङ्गा जीवान् दाडिमान् बीज-
पूरकान् ॥”)

बीजपूर्णः, पुं, ( बीजेन पूर्णः । ) कोलङ्गः । इति
रत्नमाला ॥ बीजपूरः । इति राजनिर्घण्टः ॥

बीजपेशिका, स्त्री, ( बीजस्य शुक्रस्य पेशिकेव । )
अण्डकोषः । इति राजनिर्घण्टः ॥

बीजफलकः, पुं, ( बीजप्रधानं फलं यस्य । कन् । )
बीजपूरः । इति राजनिर्घण्टः ॥

बीजमातृका, स्त्री, ( बीजानां बीजमन्त्राणां मातेव
उपमानात्वादस्यास्तथात्वम् । ) पद्मबीजम् ।
यथा,—
“पद्मानां पद्मबीजञ्च कर्णिका बीजमातृका ॥”
इति हारावली ॥

बीजरत्नः, पुं, ( बीजं रत्नमिव यस्य । ) माष-
कलायः । इति हेमचन्द्रः ॥

बीजरुहः, पुं, ( बीजात् रोहतीति । रुह +
इगुपधात् कः । ) शाल्यादिः । यथा,—
“करवीराद्या अग्रबीजा मूलजास्तूत्पलादयः ।
पर्व्वयोनय इक्ष्वाद्याः स्कन्दजाः शल्लकीमुखाः ॥
शाल्यादयो बीजरुहाः संमूर्च्छजास्तृणादयः ।
स्युर्वनस्पतिका यस्य सन्ति मूलजातयः ॥”
इति हेमचन्द्रः ॥
( क्वचित् वाच्यलिङ्गोऽपि दृश्यते ॥)

बीजरेचनं, क्ली, ( बीजं रेचनं रेचकं यस्य । )
जयपालः । इति राजनिर्घण्टः ॥

बीजवपनं, क्ली, (बीजानां वपनम् ।) क्षेत्रे बीजस्य
क्षेपणम् । तस्य दिनं दीपिकायाम् ।
“पूर्व्वात्रियाग्न्यमघाभिपित्र्यशिवान्त्यभेषु
रिक्ताष्टमीविगतचन्द्रतिथिं विहाय ।
ह्याङ्गालिगोतसुदये विकुजार्किवारे
शस्तेन्दुयोगकरणेषु हलप्रवाहः ॥
हलप्रवाहवद्बीजवपनस्य विधिः स्मृतः ।
चित्रायाञ्च शुभे कर्म्मे स्थिरस्वमनुजोदये ॥
हेमवारिविलिप्तस्य बीजस्योद्गमनः शुचिः ।
इन्द्रं चित्ते निधायाथ स्वयं मुष्टित्रयं वपेत् ॥
तत्त्वा चान्योन्यप्रोत्साहं तर्णकौ हृष्टमानसः ।
प्राङ्मुखः कलसं ग्राह्य इमं मन्त्रमुदीरयेत् ॥
त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे ।
नमस्ते मे शुभं नित्यं कृषिं मेधां शुभे कुरु ॥
रोहन्तु सर्व्वशस्यानि काले देवः प्रवर्षतु ।
कर्षकास्तु भवन्त्वग्र्या धान्येन च धनेन च
स्वाहा ॥
उप्ता बीजन्तु तत्रैव भोक्तव्यं बान्धवैः सह ।
बीजवपनं प्राजापत्यतीर्थेन । यथा, हारीतः ।
कनिष्ठायाः पश्चात् प्राजापत्यमावपनम् । होम-
तर्पणे प्राजापत्येन कुर्य्यादिति । होमतर्पणे
लाजहोमशूलगवादितर्पणे । पराशरः ।
“वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणीरवौ ।
अतः परस्मिन्नधमं न जातु श्रावणे शुभम् ॥”
ज्योतिषे ।
“पूर्व्वभाद्रपदा मूलं रोहिण्युत्तरफल्गुनी ।
विशाखा शतभिषा चाथ धान्यानां रोपणे
वरा ॥
सदोषा रजनी नीली पुत्रवित्तैर्विमुच्यते ।
स्वयंजाते पुनस्ते हे पालयन् नैव दुष्यति ॥
आरामे गृहमध्ये वा मोहात् सर्षपमावपन् ।
पराभवं रिपोर्याति ससाधनधनन्त्यम् ॥
निशा नीली पलाशश्च चिञ्चा श्वेतापराजिता ।
कोविदारश्च सर्व्वेषु सर्व्वे निघ्नन्ति मङ्गलम् ॥”
निशा हरिद्रा । कोविदारकौ रक्तकाञ्चनः ।

"हेमाम्भसा रूप्यबीजं जातो मन्त्रेण रोपयेत्।
वसुधेति सुधीनेति पुण्यदेति धरेति च।
नमस्ते सुभगे नित्यं द्रुमोऽयं वर्द्धतामिति॥"
इति ज्योतिस्तत्त्वम्॥

बीजरुहः, पुं, (बीजादेव रुहो यस्य। बीजप्रधानो रुहो वा।) अन्नः। इति राजनिर्घण्टः॥

बीजवपनः, पुं, (बीजानां वपनः।) बीजसंग्रहः। तच्छुभाशुभदिनादिर्यथा,—
"हस्ताश्विन्यादितिस्वातीरेवत्यां श्रवणद्वये।
स्थिरे लग्ने गुरौ शुक्रे बीजं धार्य्यं शुभावरे॥
माघे वा फाल्गुने वापि सर्व्वबीजानि संग्रहेत्।
शोषयेत्तापयेद्रौद्रे रात्रौ चोपनिधापयेत्॥
ततश्च पुटिकां बद्ध्वा शोषयेच्च पुनः पुनः।
स्थापयेच्च प्रयत्नेन यथा भूमिश्च न स्पृशेत्॥
दीपाग्निना च संस्पृष्टं दृष्ट्वा चोपहतश्च यत्।
वर्जनीयं तथा बीजं यत् स्यात् कीटसमन्वितम्॥

याम्याहिरुद्राग्निविशाखपूर्व्वा-
माहेन्द्रपित्र्येतरभैः शुभाहे।
धान्यादिसंस्थापनमेव शस्तं
स्वामिस्थरद्व्यङ्गचरोदयेषु॥

सौम्यादितिमघाश्व्यन्तःक्षत्रेषु च कारयेत्।
सौरे लग्ने शुभे चन्द्रे निधनर्क्षविवर्ज्जिते॥
चैत्रर्थं कोलके धान्यं नरो वदति सर्व्वदा।
धनदाय सर्व्वलोकहिताय देहि मे धान्यं
स्वाहा।
नम ईशाये ईशादेवी सर्व्वलोकविवर्द्धनी काम-
रूपिणि धान्यं देहि स्वाहा।
लेखयित्वा इमं मन्त्रं धान्यागारे विनिक्षिपेत्॥"
पुराणसर्व्वस्वे।
"मन्त्रं लिखित्वा पत्रे च मध्ये धान्यस्य धारयेत्।
पतञ्च धान्यराशिस्तु मूषिकादिनिवृत्तये॥
दृश्चिकादिद्विस्वगमनं स्यादभिनवासु नारीषु।
व्ययमपि शस्यफलानां न बुधो बुधवासरे
कुर्य्यात्॥
त्रिपूत्तरेषु रेवत्यां धनिष्ठावारुणीषु च।
एतेषु भट्टेषु विज्ञेयं धान्यनिष्क्रयणं बुधैः॥
भवत्यायं विशाखाभुवपौष्णपुनर्वसुनि पुष्यश्च।
अश्विन्याम्ये ज्येष्ठा धनधान्यविवर्द्धिनी कथिता॥"
इति ज्योतिस्तत्त्वम्॥

बीजसूः, स्त्री, (बीजानि सूते इति। सू + क्विप्।) पृथ्वी। इति हेमचन्द्रः॥

बीजाकृतं, त्रि, (बीजेन सह कृतं कृष्टमिति। "कृञो द्वितीयतृतीयशम्बबीजात् कृषौ।" ५।४।५८। इति डाच्।) उप्तकृष्टम्। इत्यमरः॥ हे बीजेन सह कृष्टे क्षेत्रे। बीजेन सह कृतं कृष्टं बीजाकृतम्। तीयशम्बबीजेति डाच्। आदा-वुप्तं पश्चात् कृष्टं उप्तकृष्टम्। इति भरतः॥

बीजाम्लं, क्ली, (बीजे अम्लोऽम्लरसो यस्य।) वृक्षाम्लम्। इति राजनिर्घण्टः॥

बीजी, [न्] पुं, (बीजमस्यास्तीति। बीज + इनिः।) पिता। इति हेमचन्द्रः॥ (यथा, उद्वाहतत्त्वे।

"अतएव द्वैतनिर्णयेऽपि सापिण्ड्यगणने बीजिन-मारभ्येत्युक्तम्।" यथा च गौतमसंहितायाम्।
४।१।
"अथ मातृप्रवरैर्विवाह ऊर्द्ध्वं सप्तमात् पितृ-बन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्॥")
बीजविशिष्टे, त्रि। (यथा, मनौ। ९।५१।
"तथैवाक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः।
कुर्व्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम्॥")

बीजोदकं, क्ली, (बीजमिव कठिनमुदकम्। तस्य कठिनत्वात्तथात्वम्।) करका। इति त्रिकाण्ड-शेषः॥

बीजोप्तिचक्रं, क्ली, (बीजानामुप्तये शुभाशुभसूचकं चक्रम्।) बीजवपनजन्यशुभाशुभज्ञानार्थसर्पा-कारचक्रम्। यथा,—
"सूर्य्यभाद्गुरगः स्थाप्यस्त्रिनाडीकालरक्रमात्।
मुखे भीणि गले भीणि भानि द्वादश तूदरे॥
पुच्छे चतुर्व्वहिः पञ्च दिनभाच्च फलं वदेत्।
वदने चोपकं विद्यात् गलकेऽङ्गारकस्तथा॥
उदरे धान्यवृद्धिः स्यात् पुच्छे धान्यक्षयो
भवेत्।
ईतिरोगभयं राज्ये चक्रे बीजोप्तिसम्भवे॥"
सूर्य्यभात् सूर्य्यभुज्यमाननक्षत्रात्। त्रिनाडी-कालरक्रमादिति यन्त्रस्थिर्वा रविभादा तामा-रभ्य गणयेत्। त्रिनाडीषु अश्विनीभरणी-कृत्तिकासु दत्त्वा रोहिण्यो वहिः कार्य्या मृग-शिरस आर्द्रापुनर्व्वसुनाडीषु दत्त्वा पुष्यो वहिः कार्य्यः। एवं क्रमेणान्या लेख्याः। चापकं शस्यशून्यताम्। ईतयः।
"अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः।
प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः॥"
इति ज्योतिस्तत्त्वम्॥

बीज्यः, त्रि, (विशिष्टेन इज्यः पूज्यः। अथवा बीजाय हितः इति। "उगवादिभ्यो यत्।" ५।१।२। इति यत्।) यस्य कस्यचित् कुलभवः। तत्पर्य्यायः। कुलसंभवः २। इत्यमरः॥ वंश्यः ३ कौलकेयः ४ कुलजः ५। इति शब्दरत्नावली॥ कुलीनः ६ कुल्यः ७ कुलभवः ८। इति जटाधरः॥

बीटिः, स्त्री, (विशिष्टेन इटति छायानिस्तान-वृक्षादिं वेष्टयित्वा प्रवर्त्तते। वि + इट + "इगु-पधात् कित्।" उणा० ४।११९। इति इन्। स च कित्।) ताम्बूलवल्ली। इति केचित्॥ सुसज्जीकृतताम्बूलम्। पानेर बीड़ा इति भाषा। इति केचित्॥

बीटिका, स्त्री, (बीटिरेव। स्वार्थे कन् स्त्रियामाप्।) ताम्बूलवल्ली। इति केचित्॥ सुसज्जीकृतताम्बू-लम्। पानेर बीड़ि इति भाषा। इति केचित्॥ (यथा, राजतरङ्गिण्याम्। ४।४३०।
"भूर्ज्जशकलि कस्य त्वं एकाथा इति सम्भ्रमः।
दत्त्वा बीटिकास्तस्या हस्तात् समुपलभ्य तान्॥")

बीटी, स्त्री, (बीटि + वा ङीष्।) ताम्बूलवल्ली। इति केचित्। सुसज्जीकृतताम्बूलम्। पानेर बीड़ि इति भाषा। इति केचित्॥

बीणा, स्त्री, (वेति इष्टिमात्रमपगच्छतीति। वी गतौ + "इणाभीकापाशल्यतिमर्चिभ्यः कन्।" "रास्नासास्नास्थूणावीणाः।" उणा० ३।१५। इति नः। निपातनाद्गुणाभावो णत्वञ्च।) विद्युत्। इति मेदिनी। णे, २८॥ (वेति श्रोतृचित्तं व्याप्नोतीति। वी व्याप्तौ + नः।) स्वनामख्यातवाद्यम्। तत्पर्य्यायः। वल्लकी २ विपञ्ची ३। सा तु सप्ततन्त्रीयुक्ता चेत्परिवा-दिनी ४। इत्यमरः॥ ध्वनिमाला ५। इति जटाधरः। घण्टमली ६ विपञ्चिका ७। इति शब्दरत्नावली॥ घोषवती ८ कण्ठकूणिका ९। (यथा, महाभारते। ९।१६४।१४।
"सप्तर्षयः सप्त चाप्यध्वर्य्याणि
सप्ततन्त्री प्रथिता चैव वीणा॥")
तद्भेदा यथा। शिवस्य वीणा नन्दी १ सरस्वत्याः कच्छपी २ नारदस्य महती ३ गणानां प्रभा-वती ४ विश्वावसोः वृहती ५ तुम्बुरोः कला-वती ६ चाण्डालानां कण्डोलवीणा चाण्डालिका च ७। तस्याङ्गादीनां नामादि यथा। तस्याः कायः कोलम्बकः। तस्या निबन्धनं उपनाहः। तस्या दण्डः प्रवालः। तस्याः प्रान्तवक्रकाष्ठं ककुभः प्रसेवकश्च। तस्या नखो वंशशलाका कलिका कूणिकापि च। तस्या वादनं कोणः। इति हेमचन्द्रादयः॥ अस्या विवरणं वाद्यशब्दे द्रष्टव्यम्॥

बीणादण्डः, पुं, (बीणाया दण्डः।) बीणास्थिता-लावूपरिकाष्ठम्। तत्पर्य्यायः। प्रवालः २। इत्यमरः॥

बीणानुबन्धः, पुं, (बीणाया अनुबन्धः।) उपनाहः। इति हारावली॥

बीणावादः, त्रि, (बीणां वादयतीति। वद + णिच् + अण्।) बीणावादकः १ तत्पर्य्यायः। वैणिकः २। इत्यमरः॥ (यथा, वाजसनेय-संहितायाम्। ३०।१९।
"शब्दायाडम्बराघातं महसे बीणावादमिति।")

बीणावादकः, पुं, (बीणाया वादकः।) बीणावाद्य-कर्त्ता। इति शब्दरत्नावली॥

बीणास्यः, पुं, (बीणा आस्यमिव यस्य। तयैव स्फुट-गानकरणात्।) नारदः। इति जटाधरः॥

बीतं, क्ली, (वेति स्म। वी + क्तः। अथवा अजति स्म। अज + गत्यर्थेति क्तः।) असारहस्त्यश्वम्। युद्धाक्षममित्यर्थः। इत्यमरः॥ अङ्कुशकर्म्म। इति मेदिनी। ते, ५८॥ (यथा, माघे। ५।४७।
"निर्धूतबीतमपि बालकमुन्नतस्त्तं
यन्ता क्रमेण परिसान्त्वनतर्ज्जनाभिः॥"
सांख्योक्तानुमानविशेषः। यथा, सांख्यतत्त्व-कौमुद्याम्। ५।
"प्रथमं तावद्द्विविधं वीतमवीतञ्च। अन्वय-मुखेन प्रवर्त्तमानं विधायकं वीतम्॥" अस्य विशेषविवरणं तत्रैव द्रष्टव्यम्॥ त्रि। कमनीयः। यथा, ऋग्वेदे। ४।७।६।
"तं शश्वतीषु मातृषु वन आ वीतमश्रितम्॥"
"वीतं कान्तम्।" इति तद्भाष्ये सायणः॥)

वीतंसः, पुं, (विशेषेण वध्यन्ते तस्यते भूष्यते इति । वि+तनस+घञ् । "उपसर्गस्य घञ्यमनुष्ये बहुलम् ।" ६ । ३ । १२२ । इति दीर्घः ।) मृगपक्षिणां बन्धनोपकरणम् । इत्यमरः ॥ मृगपक्षिणां विश्वासहेतोः प्रावरणम् । इति मेदिनी । से, ४० ॥

वीतः, त्रि, (विशेषेण इतः स्म । वि+इण्+क्तः ।) शान्तः । इति हेमचन्द्रः ॥ गतः । विपूर्व्व-गत्यर्थात् क्तप्रत्ययेन निष्पन्नमिदम् ॥ (यथा, रघौ । ५ । २ ।

"स मृण्मये वीतहिरण्मयत्वात्
पात्रे निधायार्घ्यमनर्घ्यशीलः ॥")

वीतदम्भः, त्रि, (वीतस्त्यक्तो दम्भो येन सः ।) गतदम्भः । तत्पर्य्यायः । अवकल्कनः २ । इति जटाधरः ॥

वीतनः, पुं, गलकपार्श्वद्वयम् । यथा, हेमचन्द्रे ।
"गलस्तु कन्धरामध्यं गलपार्श्वौ तु वीतनौ ॥"

वीतभयः, पुं, (वीतं भयं यस्य यस्माद्वा ।) विष्णुः । यथा,—
"अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणांवरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्त्तनः ॥"
इति तस्य सहस्रनामस्तोत्रम् ॥

वीतरागः, पुं, (वीतो रागो विषयवासना यस्य ।) बुद्धः । इति त्रिकाण्डशेषः ॥ विगतरागे, त्रि । यथा,—
"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥"
इति भगवद्गीता ॥
(यथा च महाभारते । १२ । ३४९ । ४७ ।
"वीतरागश्च मुक्तश्च परमात्मा भविष्यति ।
महेश्वरप्रसादेन नैतद्वचनमन्यथा ॥")

वीतशोकः पुं, अशोकवृक्षः । इति शब्दमाला ॥ (वीतः शोको यस्मात् । अशोकाख्यो तत्पानेन शोकनाशकत्वात्तस्य तथात्वम् । तथा च तिथितत्त्वे ।
"त्वामशोक हराभीष्ट मधुमाससमुद्भव ।
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु ॥"
विगतः शोको यस्य ।) विगतशोके, त्रि । (यथा, महाभारते । १ । १७१ । १० ।
"सर्व्वकामगुणोपेतं वीतशोकमनामयम् ॥")

वीतिः, स्त्री (अयनमिति । वी+क्तिन् ।) गतिः । दीप्तिः । (यथा, गो० रामायणे । २ । १०० । ४७ ।
"सुवर्णवीतिप्रतिमाः पद्मकिञ्जल्कसप्रभाः ।
, दिव्या विभ्रति वासांसि कुबेरप्रहिताः स्त्रियः ॥")
प्रजनम् । असनम् । धावनम् । इति मेदिनी । ते, ५९ ॥ (पानम् । यथा, ऋग्वेदे । ७ । ६२ । २ ।
"प्रवायव्यामि सदान्यसुरं यन्त्रं हविषो
वीतये मे ॥"
"हविषो वीतये पानाय ।" इति तद्भाष्ये सायणः ॥
प्राप्तिः । यथा, ऋग्वेदे । ३ । १२ । ४ ।
"स नः शुमेव वीतयेऽग्निर्यच्छतु शन्तमा ॥"
"वीतये सम्भजनाय अग्निहोत्रादिकर्म्म प्राप्त-र्थम् ।" इति तद्भाष्ये सायणः ॥ यज्ञः । यथा, ऋग्वेदे । ८ । १ । ४ ।
"अध्वर्य्यमद्वरां देवानां वीतिमध्वरा ॥"
"वीतिं यज्ञं अध्वरा सायाहस्रेन सह अध्यर्यं अभिगच्छ ।" इति तद्भाष्ये सायणः ॥)

वीतिः, पुं, घोटकः । इति हेमचन्द्रः ॥ (यथा, राजतरङ्गिण्याम् । ७ । ३११ ।
"अक्षिंस्तु वीतिमाकृष्टे वीतिहोत्रसमे नृपे ।
कम्पना च नदीयानां दक्षानामिव शक्ति-
नाम् ॥")

वीतिहोत्रः, पुं, (वी गतिकान्त्यसनखादनेषु+कर्म्मणि क्तिन् । वीतिः पुरोडाशादिः हूयते अस्मिन्निति । "कृयामाश्रुभविष्यश्चन् ।" उणा० ४ । १६७ । इति त्रन् । अथवा वीतये पानाय होत्रं हवनं यस्य ।) अग्निः । इत्यमरः ॥ सूर्य्यः । इति मेदिनी । ते, २८७ ॥ (यथा, राजतरङ्गिण्याम् । ७ । ३०७ ।
"अक्षिंस्तु वीतिमाकृष्टे वीतिहोत्रसमे नृपे ॥"
प्रियव्रतपुत्रान्यतमः । यथा, भागवते ।५।१।२५।
"अग्नीध्रध्मजिह्वयज्ञबाहुमहावीरहिरण्यरेतो घृतपृष्ठसवनमेधातिथिवीतिहोत्रकवय इति सर्व्व एवाग्निनामानः ॥" राजविशेषः । यथा, महाभारते । ७ । ६८ । १० ।
"रक्षोवाहान् वीतिहोत्रान् विरक्तान् मार्त्ति-कावतान् ॥"
हैहयवंशीयराजविशेषः । यथा, हरिवंशे । ३३ । ५० ।
"तेषां कुले महाराज हैहयानां महात्मनाम् ।
वीतिहोत्रः सुजातश्च भोजाश्चावन्तयः
स्मृताः ॥"
त्रि, प्राप्तयज्ञः । यथा, ऋग्वेदे । १।८४।१८ ।
"कस्मै देवा आवहानाशु होम
को मंसते वीतिहोत्रः सुदेवः ॥"
"वीतिहोत्रः प्राप्तयज्ञः । * * * । वीतिहोत्रः वीगत्यादिषु अस्मात् कर्म्मणि मन्त्रे वृषेत्यादिना क्तिन् स चोदात्तः । होत्रं होमः हुयामाश्रुभसिभ्यस्त्रन् इति त्रन्प्रत्ययः । वीतिः प्राप्तो होमो येन बहुव्रीहौ पूर्ब्बपदप्रकृतिस्वरत्वम् ॥" इति तद्भाष्ये सायणः ॥ कान्तयज्ञः । यथा, ऋग्वेदे । २ । ३८ । १ ।
"नूनं देवेभ्यो विहि धाति रत्न-
मथाभजद्वीतिहोत्रं स्वस्तौ ॥"
"वीतिहोत्रं कान्तयज्ञं यजमानं स्वस्तौ अवि-नाशे क्षेमे आ अभजत् भागिनं करोतु ।" इति तद्भाष्ये सायणः ॥)

वीथिः, स्त्री, (विध्यतेऽनया । विध+बाहुलकात् क्रिदिकारादक्तिनः । वाहुलकाद्दीर्घः ।) वीथी । यथा,—
"पङ्क्तिवर्त्मवयवाश्चैव वीथिर्वीथी च वीथिका ।"
इति रत्नकोषः ॥
(यथा, राजतरङ्गिण्याम् । ३ । ३६२ ।
"लक्ष्मिना नगरं कृत्वा पविनाः सुगमा भुवि ।
सुभगाः सिन्धुपर्य्यन्ता नीरावस्थवीथिषु ॥"
समाप्य यथा, राजतरङ्गिण्याम् । ३ । ३०७ ।
"चिरं खलु स्थिनीभूता क्षलत्वस्य वीथयः ।
धीर त्वयैव न तासु सञ्चारो यदि दर्श्यते ॥")

वीथिका, स्त्री, (वीथिरेव । स्वार्थे कन् ततष्टाप् ।) वीथिः । इति शब्दरत्नावली ॥ (यथा, कथा-सरित्सागरे । ७३ । ४० ।
"अस्ति दक्षिणदिक्प्रान्ते प्राह्वो जम्बूरिव ।
पिहितार्का वनश्यामा तमालवनवीथिका ॥")

वीथी, स्त्री, (वीथि+वा ङीष् ।) पङ्क्तिः । गृहाङ्गम् । (यथा, हरिवंशे । ८३ । १८ ।
"तावब्धभी सुवचनौ जगतुर्मालाकारकात् ।
वीर्थी माल्यापणानां वै गन्धाद्यानौ दिपाविव ॥")
नाट्यरूपकः । वर्त्म । इति मेदिनी । थे, ११ ॥ (यथा, महाभारते । ५ । ५१ । ६२ ।
"वीथीं कुर्व्वन् महाबाहुर्द्रावयन् मम वाहि-
नीम् ।
कृष्णमिव गदापाणिर्युगान्तं दर्शयिष्यति ॥" * ।)
अथ वीथी ।
"वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते ।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः ॥
सूचयेद्भूरि शृङ्गारं किञ्चिदन्यान् रसानपि ।
मुखनिर्व्वहणे सन्धी अर्थप्रकृतयोऽखिलाः ॥
कश्चिदित्युत्तमो मध्यमोऽधमो वा शृङ्गारबहुल-त्वाचास्याः कैशिकीवृत्तिबहुलत्वम् । * ।
अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः ।
उद्घात्यकावलगिते प्रपञ्चस्त्रिगतं छलम् ॥
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि च तानि तु ॥ * ॥
तत्रोद्घात्यकावलगिते प्रस्तावनाप्रस्तावे थोदा-हरणं लक्षिते ॥ * ॥
मिथोवाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः ॥
यथा, विक्रमोर्व्वश्याम् । वसुमत्याविदूषकचेट्यो-रन्योन्यवचनम् । * ।
त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः ॥
यथा । तत्रैव राजा ।
सर्व्वक्षितिभृतां नाथ दृष्टा सर्व्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ॥
नेपथ्ये तत्रैव प्रतिशब्दः राजा कथं दृष्टेत्याह ।
अत्र प्रश्नवाक्यमेवोत्तरवाक्यत्वेन योजितम् ।
नटादित्रितयविषयमेवेदमिति कश्चित् ॥ * ॥
प्रियाभैरप्रियैर्व्वाक्यैर्विलोभ्य छलनात् छलम् ।
यथा, वेण्यां भीमार्ज्जुनौ ।
कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः
सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य
मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य
दासाः
क्वास्ते दुर्य्योधनोऽसौ कथयतु न रुषा द्रष्टुम-
भ्यागतौ स्वः ॥
अन्ये त्वाहुश्छलं किञ्चित् कार्य्यमुद्दिश्य कस्य-
चित् ।

उद्दीपने यद्वचनं वचनाद्वाक्यदीपकम् । * ।
वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितोभवेत् ।
द्वित्र्युक्त्युपलक्षणं यथा,—
भिक्षो मांसनिषेवणं प्रकुरुषे किन्तेन मद्यं विना
मद्यञ्चापि तव प्रियं प्रियमहो वाराङ्गनाभिः
सह ।
वेश्याप्यर्थरुचिः कुतस्तव धनं द्यूतेन चौर्य्येण वा
चौर्य्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य कान्या
गतिः ॥
केचित् प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निवर्त्तनं वाक्केलिरित्याहुः । अन्ये चानेकस्य प्रश्नस्यैकमुत्तरम् । * ॥
अन्योन्यवाक्याधिक्योक्तिः स्पर्द्धयाधिबलं मतम् ॥
यथा, मम प्रभावत्यां वज्रनाभः ।
अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।
लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः ॥
प्रद्युम्नः । अरे रे असुरापसद अलमनुना बहुप्रलापेन मम खलु ।

अद्य प्रचण्डभुजदण्डसमर्पितोरु-
कोदण्डनिर्गलितकाण्डसमूहपातैः ।
आस्तां समस्तदितिजक्षतशोणितैयं
क्षौणी क्षणेन पिशिताशनलोभनीया ॥ * ॥

गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं सत्वरं वचः ॥
यथा वेण्यां राजा ।

अध्यासितुं तव चिराज्जघनस्थलस्य
पर्य्याप्तमेव करभोरु ममोरुयुग्मम् ।

अनन्तरं प्रविश्य कञ्चुकी देव भग्नं भग्नमित्यादि । अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे सम्बन्धे सम्बद्धम् । * ।
व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितं भवेत् ।
यथा छलितरामे सीता । जाद काल्लं क्खु उ अज्झाए एव गन्तव्वं तहिं सो राआ विणएण पणामिदव्वो । लवः । अथ किमावाभ्यां राजोपजीविभ्यां भवितव्यम् । सीता । जादनो तुम्हाणं पिदा । लवः । किमावयो रघुपतिः पिता । सीता । साशङ्कं मा अण्णधा सङ्कधणं क्खु तुम्हाणं क्खु सअलाए एव पुहवीएत्ति ॥ * ॥
प्रहेलिकैव हास्येन युक्ता भवति नालिका ॥
संवरणकार्य्युत्तरं प्रहेलिका । यथा रत्नावल्याम् । सुसङ्गता सहि जस्स कदे तुमं आअदा सो इधज्जेव चिट्ठदि सागरिआ कस्स कदे अहं आअदा सुसंगता चित्तफलअस्स । अत्र त्वं राज्ञः कृते आगतेत्यर्थः संवृतः ॥ * ॥
असत्प्रलापो यद्वाक्यमसम्बद्धं तथोत्तरम् ।
अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं
वचः ॥
तत्राद्यं यथा मम प्रभावत्याम् । प्रद्युम्नः सहकारवल्लीमवलोक्य सानन्दं अहो कथमिहैव ।

अलिकुलमञ्जुलकेशी
परिमलबहुला रसावहा तन्वी ।
किसलयपेशलपाणिः
कोकिलकलभाषिणी प्रियतमा मे ॥

एवमसम्बद्धोत्तरेऽपि । तृतीयं यथा । वेण्यां दुर्य्योधनं प्रति गान्धारीवाक्यम् ।
व्याहारो यत् परस्यार्थे हास्यक्षोभकरं वचः ।
यथा मालविकाग्निमित्रे । लास्यप्रयोगावसाने मालती निर्गन्तुमिच्छति विदूषकः मा दाव उवदेससुद्धा गमिस्ससि । इत्युपक्रमेण हासः । विदूषकं प्रति आर्य्य उच्यतां यस्तया क्रमभेदो लक्षितः । विदूषकः पढमं । बम्हण पूआ भोदि ता इमाए लङ्घिदा मालती कधेत्त इत्यादिना । नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन हास्यलोभकारिणा वचसा व्याहारः ॥ * ॥
दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत् ।
क्रमेण यथा,—
प्रियजीविता क्रौर्य्यं निःस्नेहत्वं कृतघ्नता ।
भूयस्त्वद्दर्शनादेव ममैते गुणतां गताः ॥
तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया ।
सुखैकायतनं जातं दुःखायैव ममाधुना ॥
एतानि चाङ्गानि नाटकादिषु संभवन्त्यपि वीथ्यामवश्यं विधेयानि निबद्धतया नाटकादिषु विनिविष्टान्यपि इहोदाहृतानि । वीथी च नानारसानाञ्च मालारूपतया स्थितत्वाद्वीथीयम् । यथा मालविका ।" इति साहित्यदर्पणम् ॥ * ॥ * ॥ सूर्य्यगमनपथः । यथा,—
"नागवीथ्युत्तरा वीथी अजवीथ्यास्तु दक्षिणा ।
उभे आषाढमूलन्तु अजवीथ्युदयास्त्रयः ॥
अभिजित् पूर्ब्बतः स्वाती नागवीथ्युत्तरास्त्रयः ।
अश्विनी कृत्तिका याम्या नागवीथ्युत्तराः स्मृताः ।
रोहिण्यार्द्रा मृगशिरो नागवीथिरिति स्मृता ॥
पुष्याश्लेषापुनर्व्वसोर्वीथिरैरावती स्मृता ।
तिस्रस्तु वीथयो ह्येता उत्तरो मार्ग उच्यते ॥
पूर्ब्बा उत्तरफल्गुन्योर्मघा चैरावती भवेत् ।
पूर्ब्बोत्तरे प्रोष्ठपदे गोवीथी रेवती स्मृता ।
श्रवणा च धनिष्ठा च वारुणञ्च जरद्गवम् ।
एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥
हस्ता चित्रा तथा स्वाती नागवीथिरिति स्मृता ॥
विशाखमित्रपैत्र्यञ्च नागवीथिरिहोच्यते ॥
मूलपूर्ब्बोत्तराषाढा वीथिर्वैश्वानरी तथा ।
स्मृतास्तिस्रस्तु वीथ्यस्ता मार्गे वै दक्षिणे बुधैः ॥"
इति मात्स्ये १०१ अध्यायः ॥ * ॥
अपि च ।
"उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणम् ।
पितृयानं स वै पन्था वैश्वानरपथाद्बहिः ।
तत्रासते महात्मान ऋषयो येऽग्निहोत्रिणः ॥"
इति विष्णुपुराणे २ अंशे ८ अध्यायः ॥ * ॥
तत्र ज्योतिश्चक्रे वीथीक्रमो वायुनोक्तः ।
"सर्व्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः ।
स्थानं जारद्गवं मध्यं तथैरावतमुत्तरम् ।
वैश्वानरं दक्षिणतो निर्द्दिष्टमिह तत्त्वतः ॥"
तदेव मध्यमोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथित्रयेण त्रिधा भिद्यते । तथा हि त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैर्नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथित्रयम् । आर्षभी गोवीथी जारद्गवी चेति चेत्युते मध्यमार्गे वीथित्रयम् । अजवीथी मृगवीथी वैश्वानरी चेति दक्षिणमार्गे वीथीत्रयम् । तदुक्तं तत्रैव ।
"अश्विनी कृत्तिका याम्या नागवीथीति
शब्दिता ।
रोहिण्यार्द्रा मृगशिरो गजवीथ्यभिधीयते ॥
पुष्याश्लेषे तथादित्या वीथी चैरावती स्मृता ।
एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते ॥
तथा द्वे चापि फल्गुन्यौ मघा चैवार्षभी
मता ।
हस्ता चित्रा तथा स्वाती गोवीथीति तु
शब्दिता ॥
ज्येष्ठा विशाखानुराधा वीथी जारद्गवी मता ।
एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥
मूलाषाढोत्तराषाढा अजवीथीति शब्दिता ।
श्रवणञ्च धनिष्ठा च मार्गी शतभिषस्तथा ॥
वैश्वानरी भाद्रपदे रेवती चैव कीर्त्तिता ।
एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते ॥"
याम्या भरणी । आदित्या अदितिदेवताका पुनर्व्वसुः । मार्गी मृगवीथी । एवं स्थिते अगस्त्यादुत्तरमजवीथ्यास्तु दक्षिणम् । किन्तु अगस्त्यनिरूढ़वर्त्तिनो वैश्वानरपथाद्बहिर्वैश्वानरवीथीं विहाय मृगवीथीमात्रं पितृयानमित्यर्थः । इति तट्टीकायां श्रीधरस्वामी ॥
वीथ्यङ्गः, त्रि, ( वीथ्या अङ्गमिवाङ्गं यस्य । ) नाटकभेदः । इति हेमचन्द्रः ॥ अस्य विवरणं वीथीशब्दे द्रष्टव्यम् ॥
वीध्रं, क्ली, ( विशेषेण इन्धते दीप्यते इति । वि + इन्ध + "वाविन्धेः ।" उणा० २ । २६ । इति क्रन् ।) नभः । (यथा, अथर्व्ववेदे ।४ । २० । ७।
"वीध्रे सूर्य्यमिव सर्पन्तं मा पिशाचं तिर-
स्करः ॥")
वायुः । अग्निः । इति संक्षिप्तसारोणादिवृत्तिः ॥
वीध्रः, त्रि,(वि + इन्ध + क्रन् ।) विमलः । इत्यमरः ॥
वीनाहः, पुं, (विशेषेण नह्यते इति । वि + नह + घञ् । उपसर्गस्य दीर्घः ।) कूपस्य मुखबन्धनम् । इत्यमरः ॥ अस्य कूपस्य यन्मुखबन्धनं येन मुखं बध्यते तत्र वीनाहः नान्दीपट्ट इति ख्यातः । विशेषेण नह्यते कूपमुखमनेन । वीनाहः । नह्य ञौ बन्धे घञ् मनीषादित्वात् वेर्व्वा दीर्घः विनाहः वीनाहः कूपमुखबन्धपट्ट इति स्वामी । इति भरतः ॥
वीपा, स्त्री, विद्युत् । इति शब्दरत्नावली ॥
वीप्सा, स्त्री, क्रियागुणद्रव्ययुगपद्व्याप्तुमिच्छा । यथा,—
"मुक्तिर्नतेऽच्युतोपास्तिं भूतं भूतमभि प्रभुः ।
भक्तो विष्णुमभि प्राणो गोविन्दमभितिष्ठति ॥"
अच्युतोपास्तिं ऋते मुक्तिर्न स्यादित्यर्थः । प्रभुरीश्वरः भूतं भूतं अभि सर्व्वप्राणिषु अस्ति इत्यर्थः । वीप्सायां प्रयुक्तस्य पदस्य द्विर्भावः । इति मुग्धबोधटीकायां दुर्गादासः ॥

वीर, इ त् क शौर्य्ये। इति कविकल्पद्रुमः॥ (अदन्तचुरा०-आत्म०-अक०-सेट्।) इ, अविवीरत। शौर्य्यमुद्यमः। इति दुर्गादासः॥

वीरं, क्ली, (अज्+"स्फायितञ्चिवञ्चीति।" उणा० २। १३। इत्यादिना रक्। अजेर्वीभावः। वीर+अच् वा।) शृङ्गी। नडः। इति मेदिनी। रे, ६७॥ मरिचम्। पुष्करमूलम्। काञ्जिकम्। उशीरम्। आरूकम्। इति राजनिर्घण्टः॥ वीरशब्दो मेदिन्यां पवर्गीयबकारादौ दृष्टोऽपि वीरधातोरन्तःस्थवकारादौ दर्शनादत्र लिखितः॥

वीरः, पुं, (वीरयतीति। वीर विक्रान्तौ+पचाद्यच्। यद्वा, विशेषेण ईरयति दूरीकरोति शत्रून्। वि+ईर+इगुपधात् कः। यद्वा, अजति क्षिपति शत्रून्। अज+स्फायितञ्चीत्यादिना रक्। अजेर्वीः।) शौर्य्यविशिष्टः। तत्पर्य्यायः। शूरः २ विक्रान्तः ३। इत्यमरः। २।८।७७॥ गण्डीरः ४ तरस्वी ५। इति जटाधरः॥ (यथा, महाभारते। १। १४१। ३५।
"मृगराजो वृकश्चैव बुद्धिमानपि मूषिकः।
निर्ज्जिता यत्त्वया वीरास्तस्माद्वीरतरो भवान्॥"
यथा च ऋग्वेदे। १। ११४। ८।
"वीरान्मानो रुद्रभामितो वधी-
र्हविष्मन्तः सदमित्त्वा हवामहे॥"
"वीरान् वीर्य्यवतः।" इति सायणः॥ पुत्त्रः। यथा, ऋग्वेदे। ५। २०। ४।
"वीरैः स्याम सधमादः॥"
"वीरैः पुत्त्रैश्च सधमादः सहमाद्यन्तः स्याम तथा कुरु।" इति तद्भाष्ये सायणः॥ *॥ पतिः। पुत्रश्च। यथा, मार्कण्डेये। २५। ३१।
"न चाजयेर्ज्जनिहितौ वीरहीनां तथा स्त्रियम्।
गृहादुच्छिष्टविण्मूत्रपादाम्भांसि क्षिपेद्बहिः॥"
यथा च अवीरा निष्पतिसुता। इत्यमरदर्शनाच॥*॥ दनायुदैत्यपुत्त्रः। यथा, महाभारते। १। ६५। ३३।
"दनायुषः पुनः पुत्त्राश्चत्वारोऽसुरपुङ्गवाः।
विक्षरो बलवीरौ च वृत्रश्चैव महासुरः॥")
जिनः। नटः। इति हेमचन्द्रः॥ विष्णुः। यथा, वीरोऽनन्तो धनञ्जयः। इति विष्णुसहस्रनाम॥ शृङ्गारादष्टरसान्तर्गतरसविशेषः। तत्पर्य्यायः। उत्साहवर्द्धनः २। इत्यमरः॥
"उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः।
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः॥"
उत्साहं वर्द्धयति इति उत्साहवर्द्धनः नन्द्यादित्वात् ल्युः। दानधर्म्मयुद्धेषु जीवानपेक्ष्योत्साहकारी रसो वीरः। वीरयन्ति अत्र वीरः। वीर तकृत् शौर्य्ये घञ् स्फीततयैव आद्यते इति सर्व्वरसलक्षणं कटाक्षितम्। इति भरतः॥ *॥ तान्त्रिकभावविशेषः। यथा,—
"तत्रैव त्रिविधो भावो दिव्यवीरपशुक्रमः।
दिव्यवीरैकजः प्रोक्तः सर्व्वसिद्धिप्रदायकः॥"
इति रुद्रयामले ११ पटलः॥

अपि च।
"भावस्तु त्रिविधः प्रोक्तो दिव्यवीरपशुक्रमात्।
गुरवश्च त्रिधा चात्र तथैव मन्त्रदेवता॥"
इति तत्रैव ६ पटलः॥

अन्यच्च।
"पशुभावं हि प्रथमे द्वितीये वीरभावकम्।
तृतीये दिव्यभावश्च इति भावत्रयं क्रमात्॥
आदौ दशमदक्षेण पशुभावमथापि वा।
मध्याह्ने दशदक्षेण वीरभावमुदाहृतम्।
सायाह्ने दशदक्षे तु दिव्यभावं शुभप्रदम्॥"
इति च तत्रैव ११ पटलः॥

अन्यच्च।
"जन्ममात्रं पशुभावं वर्षषोडशकावधि।
ततश्च वीरभावस्तु यावत् पञ्चाशतो भवेत्॥
द्वितीयाशे वीरभावस्तृतीये दिव्यभावकः।
एवं भावत्रयेणैव भावमैक्यं भवेत् प्रिये॥"
इति वामकेश्वरतन्त्रे ५१ पटलः॥
वीराचारविशिष्टः। यथा,—
"कुलाचाररतो वीरः कुलसङ्गी सदा भवेत्।
संविदासेवनं कुर्य्यात् सोमपानं महेश्वरि॥
सर्व्वथा कुरुते देवि वीरश्चोद्धतमानसः।
दिव्यस्तु देवता प्रायश्चन्दनागुरुलेपनैः।
रक्तचन्दनगन्धैश्च सुदिव्यो नात्र संशयः॥
भस्माङ्गधूसरो वीर उन्मत्तवद्विचेष्टितः।
सुरापानरतो नित्यं बलिपूजापरायणः॥
नरश्छागश्च महिषो मेषः शूकर एव च।
शशकः शल्लकी गोधा खड्गी कूर्म्मो दश
स्मृताः॥
वानरश्च खरश्चैव गजाश्वादिविहङ्गमाः।
इत्यादिभिर्व्वलिदानैः पूजयेत् स्वेष्टदेवताम्॥
सिद्धमन्त्रो भवेत् वीरो न वीरो मद्यपानतः।
कलौ तु भारते वर्षे लोका भारतवासिनः।
गृहे गृहे सुरां पीत्वा वर्णभ्रष्टा भवन्ति हि॥"
इत्युत्पत्तितन्त्रम्॥ *॥
कलौ तदाचारनिषेधो यथा,—
"दिव्यवीरमयो भावः कलौ नास्ति कदाचन।
केवलं पशुभावेन मन्त्रसिद्धिर्भवेन्नृणाम्॥"
इति महानिर्व्वाणतन्त्रम्॥ *॥
तण्डुलीयः। वराहकन्दः। लताकरञ्जः। करवीरः। अर्ज्जुनः। इति राजनिर्घण्टः॥ यज्ञाग्निः। इति वीरशब्दटीकायां भरतः॥ उत्तरः। सुभटः। इति मेदिनी॥

वीरः, त्रि, श्रेष्ठः। इति हेमचन्द्रः॥ (कर्म्मठः। यथा, ऋग्वेदे। ८। २३। १९।
"इमं घा वीरो अमृतं वीरं लम्ब्रीतमर्त्यः॥"
"वीरः कर्म्मणि समर्थः।" इति तद्भाष्ये सायणः॥ यथा च। तत्रैव। ६। २३। ३।
"कर्त्ता वीराय सुष्वय उलोकं
दाता वसु स्तुवते कीरये चित्॥"
"वीराय यज्ञादि कर्म्मसु दक्षाय।" इति तद्भाष्ये सायणः॥ प्रेरयिता। यथा, तत्रैव। ६। २५। ४।
"इरा हि वो विधते रत्नमस्तीरा
वीराय प्रासुप उचाय:॥"
"वीराय प्रेरयित्रे।" इति तद्भाष्ये सायणः॥)

वीरकः, पुं, (वीर एव। स्वार्थे कन्।) करवीरः। इति राजनिर्घण्टः॥ (विक्रान्तः। समर्थः। यथा, ऋग्वेदे। ८। ८०। २।
"अयौ य यदि वीरको ग्रहं ग्रहं विचाकशत्॥"
"वीरको वीरः समर्थस्त्वम्।" इति तद्भाष्ये सायणः॥ अपरान्तदेशविशेषवासी। यथा, महाभारते। ८। ४४। ४२।
"कारस्करान् माहिषकान् कालिङ्गान् केरलां-
स्तथा।
कर्कोटकान् वीरकांश्च दुर्द्धर्म्मांश्च विवर्ज्जयेत्॥"
चाक्षुषमन्वन्तरीयमुख्यतमः। यथा, भागवते। ८। ५। ८।
"सुमयस्त्वत्र वै राजन् हर्य्यश्ववीरकादयः॥")

वीरजयन्तिका, स्त्री, (वीराणां जयन्तिकेव।) रणे वीराणां नृत्यम्। इति हेमचन्द्रः॥

वीरणं, क्ली, उशीरसदृशम्। तत्पर्य्यायः। वीरणम् २ कटायनम् ३। इति शब्दरत्नावली॥ वीरतरम् ४। इत्यमरः॥ वीरभद्रम् ५। इति रुद्रः॥ (यथा, भागवते। १०। ११। ५१।
"तमापतन्तं स निगृह्य तुण्डयो-
र्दोर्भ्यां बकं कंससखं सतां पतिः।
पश्यत्सु बालेषु ददार लीलया
मुदावहो वीरणवद्दिवौकसाम्॥")
अपि च।
"स्याद्वीरणं वीरतरं वीरञ्च बहुमूलकम्।
वीरणं पाचनं शीतं स्तम्भनं लघु तिक्तकम्॥
मधुरं ज्वरनुद्वान्तिमदजित् कफपित्तहृत्।
तृष्णास्रविषवीसर्पकृच्छ्रदाहव्रणापहम्॥
वीरणस्य तु मूलं स्यादुशीरमभयं तथा।
अमृणालञ्च सेव्यञ्च समगन्धिकमित्यपि॥
उशीरं पाचनं शीतं स्तम्भनं लघु तिक्तकम्।
मधुरं ज्वरवान्तिमदघ्नं कफपित्तनुत्।
तृषास्रविषवीसर्पदाहकृच्छ्रव्रणापहम्॥"
इति भावप्रकाशः॥
(पुं, प्रजापतिविशेषः। यथा, महाभारते। १२। ३४८। ४१।
"सनत्कुमारादपि च वीरणो वै प्रजापतिः।
कृतादौ कुरुशार्द्दूल धर्म्ममेतदधीतवान्॥"
यथा च मात्स्ये। ४। ४०।
"वीरणस्यात्मजायान्तु चक्षुर्म्मनुमजीजनत्॥")

वीरतरं, क्ली, वीरणम्। इत्यमरः॥

वीरतरः, पुं, शरः। इति भूरिप्रयोगः॥ (त्रि, सामर्थ्यवान्। यथा, ऋग्वेदे। ८। २४। १५।
"मद्यक्र पुराचन जज्ञे वीरतरस्त्वत्॥"
"वीरतरः सामर्थ्यवान्।" इति तद्भाष्ये सायणः॥ अयमनयोरतिशयेन वीरः। वीरश्रेष्ठः। यथा, महाभारते। ४। ५२। १४।
"नरर्षभास्ते तु नरर्षभेण
वीरा रणे वीरतरेण भग्नाः॥")

वीरभद्रासनं, क्ली, (वीरभद्राख्यं आसनमिष्टानां आसनम् ।) आसनविशेषः । यथा,—
"यत्तु कौमलमाज्ञीर्णं संग्रामपतितं हि यत् ।
अमुक्तायादितं वापि क्लतं वा वरमासनम् ॥
गर्भच्युतं तथं वापि नारीणां योनिजो
तथम् ।
सर्व्वसिद्धिप्रदं देवि सर्व्वतोऽतिसत्वहितम् ।
तथं वा यौवनस्थानां कुर्य्याद्वीरभद्रासनम् ॥"
इति मुण्डमालातन्त्रे ६ पटलः ॥

वीरतरुः, पुं, (वीरसंज्ञकः तरुः ।) अर्ज्जुनवृक्षः । इत्यमरः ॥ कोकिलाक्षवृक्षः । इति रत्नमाला । विल्वान्तरवृक्षः । भल्लातकः । इति राजनिर्घण्टः ॥

वीरपर्णं, क्ली, सुरपर्णम् । इति राजनिर्घण्टः ॥

वीरपत्नी, स्त्री, (वीराणां पत्नी । यद्वा, वीरः पतिर्यस्याः । "नित्यं सपत्न्यादिषु ।" ४।१।३५। इति पत्युर्नकारादेशः । "ऋन्नेभ्यो ङीप् ।" ४।१।५। इति ङीप् ।) वीरभार्य्या । इत्यमरः ॥ (यथा, मार्कण्डेये । १२५ । ७ ।
"तेषामेतद्वचः श्रुत्वा वीरा वीरप्रजावती ।
वीरगोत्रसमुद्भूता वीरपत्नी प्रहर्षिता ॥"
नदीविशेषः । यथा, ऋग्वेदे ।१।१०४।४।
"अञ्जसी कुलिशी वीरपत्नी
पयो हिन्वाना उदभिर्भरन्ते ॥"
"वीरपत्नी वीरस्य पालयित्री एतत्संज्ञितास्तिस्रो नद्यः ।" इति तद्भाष्ये सायनः ॥)

वीरपत्रा, स्त्री, (वीरप्रियाणि पत्राणि यस्याः ।) विजया । इति राजनिर्घण्टः ॥

वीरपाणं, क्ली, वीराणां श्रमनाशाय पानम् । यथा,—
"वीरपाणन्तु यत् पानं वृत्ते भाविनि वा रणे ।"
इत्यमरः ॥
("वा भावकरणयोः ।" ८ । ४ । १० । इति विकल्पेन णत्वमपि । यथा, गो॰ रामायणे । ४ । ६ । ७१ ।
"मत्तोऽयमिति दुर्बुद्धे मोहात्त्वामवमन्यसे ।
मदीये संप्रहारेऽस्मिन् वीरपाणं समर्प्यताम् ॥")

वीरपुष्पी, स्त्री, सिन्दूरपुष्पी । इति राजनिर्घण्टः ॥

वीरबाहुः, पुं, (वीराः समर्थाः बाहवो यस्य ।) विष्णुः । यथा, "वीरबाहुर्विदारणः ।" इति तस्य सहस्रनामस्तोत्रम् ॥ (धृतराष्ट्रपुत्रान्यतमः । यथा, महाभारते । १ । ६७ । १०३ ।
"जयो भीमरथो वीरो वीरबाहुरलोलुपः ॥"
रावणपुत्रः । इति रामायणम् ॥ वानरविशेषः । यथा, गो॰ रामायणे । ६ । १७ । १५ ।
"वीरबाहुः सुबाहुश्च नलश्च वनगोचरः ॥")

वीरभद्रः, पुं, (वीराणां भद्रं येन ।) अश्वमेधाश्वः । वीरश्रेष्ठः । वीरणम् । इति मेदिनी ॥ शिवगणविशेषः । तस्योत्पत्तिर्यथा,—
"इत्याकर्ण्य महाकालः सम्यक् ज्ञात्वा सतीवधम् ।
वधं मुने सती देवी ह्यमर्षमर्षेणाज्वलितम् ॥
क्रोधं विधिं मुनी तत्र तत्क्षणाक्षणाक्षयात् ।
तज्जटातोवरोदीऽभूत् बहुकोपाग्निदीपितः ॥
ततस्तत्क्रोधजाद्वह्नेरावितरोऽत्यज्ज्वलाकृतिः ।
प्रलयः प्रतिमाकारः कालकल्पः प्रकम्पनः ॥
उवाच च प्रणम्येशं भूस्पृशौ महती दधत् ।
आज्ञां देहि विभः किन्ते करवे दास्यसत्तमम् ।
मद्याक्रमैककवलं करवाणि त्वदाज्ञया ॥
इति प्रतिज्ञां तस्येशः श्रुत्वा तममभ्यत ।
ततस्तमभिवाद्यैनं तं मुदा प्रत्युवाच ह ॥
महावीरोऽसि रे भद्र मम सर्व्वगणेष्विह ।
वीरभद्राख्यया हि त्वं प्रथितिं परमां व्रज ।
कुरु मे सत्वरं कार्य्यं दक्षयज्ञं क्षयं नय ॥"
इति कालिकापुराणे ८६ अध्यायः ॥
(यथा च महाभारते । १२ । २८३ । ५१ ।
"वीरभद्र इति ख्यातो रुद्रकोपाद्विनिःसृतः ।
भद्रकालीति विख्याता देव्याः कोपाद्विनिःसृता ॥")

वीरभद्रकं, क्ली, (वीरभद्रमेव । स्वार्थे कन् ।) वीरणम् । इति जटाधरः ॥

वीरभार्य्या, स्त्री, (वीराणां भार्य्या ।) वीरपत्नी । इत्यमरः ॥

वीरमाता, [ ऋ ] स्त्री, (वीराणां माता ।) वीरजननी । तत्पर्य्यायः । वीरसूः २ । इत्यमरः ॥ (यथा, भागवते । ६ । १४ । ४० ।
"अन्तर्व्वत्नीमुपालक्ष्य देवीं स प्रययौ पुरीम् ।
पुत्रस्य गतोऽभ्यागात् उर्व्वशीं वीरमातरम् ॥")

वीररजः, [स्] क्ली, (वीराणां वीरभाविनां धारणार्थं रजः ।) सिन्दूरम् । इति राजनिर्घण्टः ॥ वीरस्य धूलिश्च ॥

वीररेणुः, पुं, (वीरा रेणव इव यस्य ।) भीमसेनः । इति त्रिकाण्डशेषः ॥

वीरवती, स्त्री, मांसरोहिणी । इति भावप्रकाशः ॥ (विक्रमपुराधीश्वरविक्रमतुङ्गनृपकर्म्मचारिवीरवरस्य कन्या । यथा, कथासरित्सागरे । ५३ । ६० ।
"यस्य धर्म्मवती नाम भार्य्या वीरवती सुता ।
पुत्रः सत्यवरश्चेति त्रयं परिकरो गृहे ॥")

वीरवत्सा, स्त्री, (वीरो वत्सः पुत्रो यस्याः ।) वीरजननी । इति जटाधरः ॥

वीरविप्लावकः, पुं, शूद्रधनेन होमकर्त्ता । यथा,—
"वीरविप्लावको जुह्वन् धनैः शूद्रसमाहृतैः ।"
इति हेमचन्द्रः ॥

वीरवृक्षः, पुं, (वीरनामको वृक्षः ।) भल्लातकः । इत्यमरः ॥ अर्ज्जुनवृक्षः । इति हेमचन्द्रः ॥ विल्वान्तरः । इति राजनिर्घण्टः ॥ वृक्षविशेषः । देधान इति भाषा । तत्पर्य्यायः । वीरतरः २ इन्द्रद्रुमः ३ अश्वरोहकः ४ । इति रत्नमाला ॥

वीरसूः, स्त्री, (वीरान् पुत्रानेव सूते इति । वीर + सू + क्विप् ।) वीरमाता । इत्यमरः ॥ (यथा, महाभारते । १ । २०० । ७ ।
"जीववत्सा वीरसूर्भद्रे बहुसौख्यसमन्विता ।
सुभगा भोगसम्पन्ना यज्ञपत्नी पतिव्रता ॥"
पुत्रप्रसविनी । यथा, ऋग्वेदे ।१०।८५।४४।
"वीरसूर्देवकामा स्योना शन्नो भवद्विपदे शं
चतुष्पदे ॥"
"वीरसूः पुत्राणामेव सवित्री ।" इति तद्भाष्ये सायनः ॥)

वीरसैनं, क्ली, आरूकवृक्षः । इति राजनिर्घण्टः ॥

वीरसेनः, पुं, नलराजपिता । इति नैषधम् ॥ (यथा, महाभारते । ३ । ५२ । ५४ ।
"निषधेषु महीपालो वीरसेन इति श्रुतः ।
तस्य पुत्रोऽभवन्नाम्ना नलो धर्म्मार्थकोविदः ॥")

वीरसेनजः, पुं, (वीरसेनात् जायते इति । जन + डः ।) नलराजः । इति नलोदयः ॥

वीरहा, [ न् ] पुं, (वीरान् हन्तीति । हन + क्विप् ।) नष्टाग्निब्राह्मणः । इत्यमरः ॥ यस्याग्निहोत्रिणः प्रमादादिना कारणान्तरेण वा अग्निर्नष्टो निर्व्वाणः स्यात् स वीरहोच्यते । वीरयति शौर्य्यं कारयति इति वीर इ न् क तु शौर्य्ये इत्यस्मात् चुरादि णिः प्रेरणे अच्प्रत्यात् पचाद्यच्च वीरो यज्ञाग्निः तं हतवान् इति क्विपि वीरहा । इति भरतः ॥ (यथा, वाजसनेयसंहितायाम् । ३० । ५ । "भरताय वीरहणम् ।" "वीरहणं नष्टाग्निं शूरं वा ।" इति तद्भाष्यम् ॥) विष्णुः । यथा । वीरहा माधवो मधुः । इति विष्णुसहस्रनाम । वीरहन्तरि, त्रि ॥

वीरा, स्त्री, सुरा । क्षीरकाकोली । तामलकी ॥ एलवालुका । पतिपुत्रवती । रम्भा । विदारी । दुग्धिका । मलपूः । क्षीरविदारी । इति मेदिनी । रे, ६८ ॥ पुस्तकान्तरे सुरास्थाने सुरा विदारीस्थाने गम्भारी इति पाठः । काकोली महाशतावरी । ब्रह्मकन्या । ब्राह्मी । अतिविषा । मदिरा । इति राजनिर्घण्टः ॥ शिंशपावृक्षः । इति रत्नमाला ॥ (करन्धमराजपत्नी । यथा, मार्कण्डेये । १२३ । १ ।
"वीर्य्यचन्द्रसुता सुभ्रूर्वीरा नाम शुभव्रता ।
स्वयंवरे सा वव्रे महाराजं करन्धमम् ॥"
नदीविशेषः । यथा, महाभारते ।६।९।२२।
"पूर्व्वाभिरामां वीरां च भीमां मोघवतीं
तथा ।"
विक्रमशालिनी । यथा, मार्कण्डेये ।१२५।७।
"तेषामेतद्वचः श्रुत्वा वीरा वीरप्रजावती ।
वीरगोत्रसमुद्भूता वीरपत्नी प्रहर्षिता ॥")

वीराम्लः, पुं, अम्लवेतसः । इति राजनिर्घण्टः ॥

वीरार्कं, क्ली, आरूकम् । इति राजनिर्घण्टः ॥

वीराशंसनं, क्ली, (वीरान् आशंसयति अद्य स्थास्यामि वा नवेति चिन्तां जनयतीति । आ + शंस + णिच् + ल्युः ।) अतिभयप्रदा युद्धभूमिः । इत्यमरः ॥

वीरासनं, क्ली, (वीराणां साधकानामासनम् ।) भिक्षाटनादिसिद्धयुपवेशनम् । यथा,—
"दिवासुगच्छेत्ता गास्तु तिष्ठन्नूर्द्ध्वं रजः पिबेत् ।

शुशूषित्वा नमस्कृत्वा रात्रौ वीरासनं वसेत् ॥"
इति प्रायश्चित्ततत्त्वे मनुः ॥
अन्यच्च ।
"एकपादमथैकस्मिन् विन्यसेदूरु संस्थितम् ।
इतरस्मिन् तथा पश्चाद्वीरासनमिदं विदुः ॥"
इति घेरण्डसंहिता ॥
( यथा, रघुवंशे । १३ । ५२ ।
"वीरासनैर्ध्यानजुषामृषीणा-
ममी समध्यासितवेदिमध्याः ।
निवातनिष्कम्पतया विभान्ति
योगाधिरूढ़ा इव शाखिनोऽपि ॥")
वीरिणी, स्त्री, असिक्नी । यथा,—
"उपयेमे वीरणस्य तनयां दक्ष ईप्सिताम् ।
वीरिणी नाम तस्यास्तु असिक्नीत्यपि सत्तमाः ॥"
इति कालिकापुराणे ८ अध्यायः ॥
( यथा च महाभारते । १ । ७५ । ५ ।
"वीरिण्या सह सङ्गम्य दक्षः प्राचेतसो मुनिः ।
आत्मतुल्यानजनयत् सहस्रं संशितव्रतान् ॥"
वीरः पुत्त्रोऽस्या अस्तीति । वीर + इनि । ङीप् ।
पुत्त्रवती । यथा, ऋग्वेदे । १० । ८६ । ६ ।
"उताहमस्मि वीरिणीन्द्रपत्नी ॥"
"वीरिणी पुत्त्रवती ।" इति तद्भाष्ये सायणः ॥)
वीरुत्, [ध्] स्त्री, (विशेषेण रुणद्धि वृक्षान्तरान् ।
वि + रुध + क्विप् । "अन्येषामपीति ।" दीर्घः ।
अथवा विरोहतीति वीरुत् । विपूर्व्वस्य रुहेः
क्विपि धकारो विधीयते इति काशिका ।७।३।
५३ ।) विस्तृता लता । तत्पर्य्यायः । गुल्मिनी २
उलपः ३ । इत्यमरः ॥ वीरुधा ४ । इति शब्द-
रत्नावली ॥ प्रताना ५ कक्षः ६ । इति जटा-
धरः ॥ ( यथा, रघुवंशे । ८ । ३६ ।
"अभिभूय विभूतिमार्त्तवीं
मधुगन्धातिशयेन वीरुधाम् ॥"
ओषधिः । यथा, ऋग्वेदे । २ । ६७ । ५ ।
"दिवो वीरुत् सुरोधनास्तिष्ठोत प्रजा उतप्रद्ध-
वनतः ॥"
"वीरुत्सु ओषधीषु ।" इति तद्भाष्ये सायणः ॥
वृक्षमात्रे, पुं । यथा, महाभारते ।१।६५।२४।
"यानि मन्यसि वै ब्रह्मन् लतागौहाश्च वीरुधः ।
एते नक्तन्तवस्तान कालेन परिभक्षिताः ॥"
यथा च ऋग्वेदे । ६ । ११३ । २ ।
"सोमं नमस्य राजानं यो जज्ञे वीरुधां पतिः ॥"
"वीरुधां वनस्पतीनामिति ।" इति तद्भाष्ये
सायणः ॥ लतानां वीरुधाञ्च कथञ्चिद्भेदमाह ।
यथा, भागवते । ३ । १० १९ ।
"वनस्पत्योषधिलता त्वक्सारा वीरुधो द्रुमाः ।"
"ये पुष्पं विना फलन्ति ते वनस्पतयः । ओषधयः
फलपाकान्ताः । लता आरोहणापेक्षाः । त्वक्-
सारा वेणादयः । लता एव काठिन्येनारोहणा-
नपेक्षा वीरुधः । ये पुष्पैः फलन्ति ते द्रुमाः ।"
इति तट्टीकायां श्रीधरस्वामी ॥ )
वीरुधा, स्त्री, ( विशेषेण रुणद्धीति । वि + रुध +
इगुपधादिति कः । ततस्त्रियां टाप् । अथवा
वीरुध् शब्दात् भागुरिमते टाप् । यथा,—
"वष्टि भागुरिरल्लोपः अवाप्योरुपसर्गयोः ।
टापञ्चापि हलन्तानां क्षुधा वाचा निशा
गिरा ॥")
वीरुत् । इति शब्दरत्नावली ॥
वीरेशः, पुं, ( वीराणामीशः । ) शिवः । यथा,—
"अथ अघोरशी मासि स्नात्वा त्रिपथगाम्भसि ।
प्रत्यूष एव वीरेशं यावदायाति स द्विजः ॥"
इति वीरेश्वरस्तोत्रम् ॥
वीरेश्वरः, पुं, ( वीराणामीश्वरः । ) महादेवः ।
यथा,—
"तिलान्तरेऽपि नो काश्यां भूमिलिङ्गं विना
क्वचित् ।
परं वीरेशसदृशं न लिङ्गञ्चाशु सिद्धिदम् ॥
धर्म्मदञ्चार्थदं सम्यक् कामदं मोक्षदं तथा ।
यथा वीरेश्वरं लिङ्गं काश्यां नान्यत्तथा ध्रुवम् ॥"
इति काशीखण्डे १० अध्यायः ॥
(मैथिलानां दशकर्म्मपद्धतिकर्त्ता । तत्पद्धतिश्च ॥)
वीरोज्झः, पुं, होमाकर्त्ता । यथा,—
"अभ्युदिताभिनिर्म्मुक्तौ वीरोज्झो न जुहोति
यः ॥"
इति हेमचन्द्रः ॥
वीरोपजीविकः, पुं, अग्निहोत्रमुपजीविका यस्य ।
यथा,—
"अग्निहोत्रच्छलाद्याचापरो वीरोपजीविकः ॥"
इति हेमचन्द्रः ॥
वीर्य्यं, क्ली, (वीरे साधु । तत्र साधुः इति यत् । यद्वा,
वीर्य्यतेऽनेनेति वीर विक्रान्तौ + "अचो यत् ।"
३।१।९७। इति यत् । यद्वा वीरस्य भावः । यत् ।)
चरमधातुः । तत्पर्य्यायः । शुक्रम् २ तेजः ३
रेतः ४ बीजम् ५ इन्द्रियम् ६ । इति मनुष्य-
वर्गे अमरः ॥ वीर्य्यं शक्तिः सा च पृथिव्यादीनां
यः सारभागः तदतिशयरूपा । सा द्विविधा
चिन्त्याचिन्त्यक्रियाहेतुत्वेन । तत्र चिन्त्यक्रिया-
हेतुर्या द्रव्यरसादीनां स्वस्वकर्म्मणि स्वभाव-
सिद्धा शक्तिः । अचिन्त्यक्रियाहेतुश्च प्रभावपर-
पर्य्यायः । द्रव्याणां रसाद्यननुरूपकार्य्यकरण-
शक्तिः । उक्तञ्च ।
"भूतप्रभावातिशयो द्रव्ये पाके रसे स्थितः ।
चिन्त्याचिन्त्यक्रियाहेतुर्वीर्य्यं धन्वन्तरेर्म्मतम् ॥"
इति चक्रदत्तोपरि शिवदासीयटीका ॥ * ॥
परवीर्य्योदरपातदोषो यथा,—
"परवीर्य्यं यदुदरं कामतोऽकामतोऽपि वा ।
अज्ञत्वे याति दैवेन तदुपायं निशामय ॥
अकामतो न दुष्टा सा प्रायश्चित्तेन शुद्ध्यति ।
कामभोगेन व्याप्ता सा कर्म्मभोगेन शुद्ध्यति ॥
मिष्टपाके दैवपाके पूजायां नाधिकारिणी ।
षष्टिं वर्षसहस्राणि वयं लात्वा सकर्म्मणः ।
प्रयाति भोगदेहं सा तस्यान्ते पापकर्म्मणः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४७ अध्यायः ॥
अतिशयशक्तिभागुत्साहः । इति स्वर्गवर्गे
अमरः ॥ कर्म्मसु सुकरः प्रयत्नः उत्साहः ।
इति मधुः । कर्म्मसु दृढ़यत्नकारको भाव
उत्साहः । इति रमानाथः । कर्म्मसु प्रयत्न
उत्साह इति नयनानन्दः । अशक्ये वस्तुनि
उत्साह इति केचित् । स उत्साहः अतिशय-
शक्तिभाक् वीर्य्यम् । अतिशयितोऽध्यवसायो
वीर्य्यं साधु वीर्य्यमित्यर्थः । वीर्य्या स्त्री च वीर्य्यं
वीर्य्ये इति कोषान्तरम् । इति भरतः ॥ * ॥
बलम् । प्रभावः । इति नानार्थे अमरः ॥
( यथा, ऋग्वेदे । ३ । २५ । २ ।
"अग्निः सनोति वीर्य्याणि विद्वान्
सनोति वाजममृताय भूषन् ॥"
"वीर्य्याणि पशुपुत्त्रादिसम्पद्रूपाणि सामर्थ्यानि ।"
इति तद्भाष्ये सायणः ॥ यथा च भागवते । ६ ।
१७ । ३१ ।
"ज्ञानवैराग्यवीर्य्याणां नहि कश्चिद्व्यपाश्रयः ॥"भाग-
शरीरसामर्थ्यम् । यथा, ऋग्वेदे । ४ । ५० । ७
"स इद्राजा प्रतिजन्यानि विश्वाशुष्मेण तस्थावभि वीर्य्येण ।" )
"वीर्य्येण शरीरसामर्थ्येन ।" इति तद्भाष्ये
सायणः ॥ शक्तिः । यथा, मनौ । ११ । ३१ ।
"न ब्राह्मणो वेदयेत किञ्चिद्राजनि धर्म्मवित् ।
स्ववीर्य्येणैव तान् शिष्यान्मानवानपकारिणः ॥
स्ववीर्य्याद्राजवीर्य्याच्च स्ववीर्य्यं बलवत्तरम् ।
तस्मात् स्वेनैव वीर्य्येण निगृह्णीयादरीन् द्विजः ॥"
मनःशक्तिः । यथा, भागवते । ४ । १८ । १५ ।
"कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् ।
हिरण्मयेन पात्रेण वीर्य्यमोजो बलं पयः ॥")
औषधानां वीर्य्यस्य स्थितिकालो यथा,—
"यामं कल्ककषायवीर्य्यमखिलं चूर्णस्य पक्षत्रयं
षण्मासान् घृतमोदकौ बहुगुडौ मासत्रयं
गुग्गुलोः ।
सिद्धानां रसभस्मनां सुविपुलं वीर्य्यञ्च वर्षत्रयं
किञ्चिद्धन्वविवर्जितं गुणपरं तैलं पुराणं महत् ॥"
इति नारायणदासकृतपरिभाषा ॥
तेजः । इति मेदिनी ॥ चेतः । दीप्तिः । इति
शब्दरत्नावली ॥
वीर्य्यजः, पुं, ( वीर्य्याज्जायते इति । जन + डः । )
पुत्त्रः । इति केचित् ॥ ( यथा, भागवते । ३ ।
५ । १९ ।
"नैतच्चित्रं त्वयि कार्ष्णाद्बादरायणवीर्य्यज ॥")
वीर्य्यवान्, [त्] त्रि, (वीर्य्यमस्यास्तीति । मतुप् ।)
मांसलः । इति शब्दरत्नावली ॥ वीर्य्यान् ॥"
( यथा, किराते । २ । ४ ।
"अतिवीर्य्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः ॥")
वीर्य्यवृद्धिकरं, क्ली, (वीर्य्याणां वृद्धिकरम् ।) शुक्र-
वृद्धिकारकौषधादि । तत्पर्य्यायः । वृष्यम् २
वाजीकरणम् ३ बीजलम् ४ । इति राज-
निर्घण्टः ॥
वीर्य्या, स्त्री, ( वीर्य्यतेऽनयेति । वृ + "अचो यत् ।"
इति यत् । टाप् । ) वीर्य्यम् । इत्यमरटीकायां
भरतः ॥

वीवधः, पुं, पर्य्याहारः। यदिन आहियतेऽसौ धान्यतण्डुलादिः। (यथा, माघे। २। ६४। "निरुद्धवीवधासारप्रसारा गा इव व्रजम्। उपरुन्धन्तु दाशार्हाः पुरीं माहिष्मतीं द्विषः॥") मार्गः। पन्थाः। इत्यमरभरतौ॥ भारः। इति शब्दरत्नावली॥

वीवधिकः त्रि, (वीवधेन हरतीति। वीवध+ "विभाषा विवधवीवधात्।" ४। ४। १७। इति ठन्।) भारवाहकः। इति सिद्धान्तकौमुदी॥

वीहारः, पुं, (विहरन्त्यत्रेति। वि+हृ+घञ्। उपसर्गस्य दीर्घः।) महालयः। स तु बुद्धमन्दिरम्। इति शब्दमाला॥ विहारः। इत्यमरटीका॥

बुस त्यागे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-स० सेट्।) र, बुस्यति। इति दुर्गादासः॥

बुस्ट क निशाम्। इति कविकल्पद्रुमः॥ (चुरा०-पर०-सक०-सेट्।) पञ्चमस्वरी। र, बुस्टाते। क, बुस्टयति। निर्लिहिंसा। इति दुर्गादासः॥

बु(बु)द्धिः, स्त्री, (बुध+क्तिन्।) आत्मनो गुणविशेषः। सा त्रिविधा यथा,—

"प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी॥
यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी॥
अधर्म्मं धर्म्ममिति या मन्यते तमसावृता।
सर्व्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी॥"

इति श्रीभगवद्गीतायाम् १८ अध्यायः॥

वृ, क च वृतौ। इति कविकल्पद्रुमः॥ (चुरा०-पर०-सक०-सेट्।) क, वारयति। इति दुर्गादासः॥

वृ, ङ श संभक्तौ। इति कविकल्पद्रुमः॥ (क्र्या०-आत्म०-सक०-सेट्।) संभक्तिः सेवनम्। ङ श, वृणीते। वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः। इति दुर्गादासः॥

वृ, ञ वृतौ। इति कविकल्पद्रुमः॥ (भ्वा०-उभ०-सक०-सेट्।) ञ, वरति वरते। इति दुर्गादासः॥

वृ, श ञ वृतौ। इति कविकल्पद्रुमः॥ (स्वा०-उभ०-सक०-सेट्।) श ञ, वृणोति "वृणो"ञ, वृणुते वृणीते। वकारस्य दन्त्यत्वात् संवृणोति इत्यादौ नानुस्वारस्य मकारः। ओष्ठ्यत्वाच्च दुर्वृणोतीत्यादौ अरिरकाविरूट्। न च दन्त्यस्य कथमोष्ठ्यकार्य्यमिति वाच्यं यतः स्वभावादोष्ठस्य वकारस्य ओष्ठ्यकार्य्यं स्वाभाविकमेव। कश्चिद्दन्त्यमध्ये पाठः मतोकवर्णस्योभयस्थानं सम्भवति। इति दुर्गादासः॥

वृंहणः, त्रि, (वृहि+ल्युः।) पुष्टिकारकः। यथा। संयावो वृंहणो गुरुः। इति शब्दचन्द्रिका॥

वृंहितं, क्ली, (वृहि+क्तः।) हस्तिगर्ज्जनम्। तत्पर्य्यायः। करिगर्ज्जितम् २। इत्यमरः॥ (यथा, महाभारते। ६। १८। २।
"शङ्खदुन्दुभिघोषैश्च वारणानाञ्च वृंहितैः।
नेमिघोषै रथानाञ्च दीर्य्यतीव वसुन्धरा॥")

वृक, ङ आदाने। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-सक०-सेट्।) ङ, वर्कते। वरीवृक्यते। इति दुर्गादासः॥

वृकः, पुं, (वृणोतीति। वृ+"सृवृभृशुषिमुषिभ्यः कक्।" उणा० ३। ४१। इति कक्।) कुक्कुरप्रमाणहरिणादिजन्तुविशेषः। नेकड़ा इति ख्यातः। हुण्डार इति हिन्दी भाषा। तत्पर्य्यायः। कोकः २ ईहामृगः ३। इत्यमरः॥ वत्सादनः ४ विकृत् ५ गोवत्सादी ६ छागभोजी ७ छागलान्त्री ८ जनाग्रजः ९। इति राजनिर्घण्टः॥ (यथा, भागवते। ३। १०। २३।
"श्वा शृगालो वृको व्याघ्रो मार्ज्जारः शशशल्लकौ॥")
काकः। इत्युणादिकोषः॥ (पोतकः। इत्युणादिटीकाधृतविश्वः। ३। ४१॥) वकवृक्षः। इति शब्दरत्नावली॥ शृगालः। इति हारावली॥ (यथा, मनुः। ८। २३५।
"अजाविके तु संरुद्धे वृकैः पाले त्वनायति।
यां प्रसह्य वृको हन्यात् पाले तत् किल्विषं भवेत्॥"
"वृकैः शृगालप्रभृतिभिः।" इति मेधातिथिः॥) क्षत्रियः। अनेकधूपः। सरलद्रवः। इति भरतधृतरभसः॥ (तस्करः। इति निघण्टुः। ३। २४॥ *॥ वर्कते शत्रुप्राणानादत्ते इति। वृक आदाने+कः। वज्रः। इति निघण्टुः। २। २०॥)

वृकदंशः, पुं, (वृकान् दशतीति। दन्श+अण्।) कुक्कुरः। इति हेमचन्द्रः॥

वृकधूपः, पुं, (वृकोऽनेकधूपः स एव धूपः। वृकः सरलद्रवस्तत्प्रधानो धूपो वा।) नानासुगन्धिद्रव्यकृतदशाङ्गादिधूपः। तत्पर्य्यायः। कृत्रिमधूपकः २। इत्यमरः॥ वकधूपः ३। इति तट्टीका॥ सरलद्रवरसः। टारपिन् इति भाषा। तत्पर्य्यायः। पायसः २ श्रीवासः ३ श्रीवेष्टः ४ सरलद्रवः ५। इत्यमरः॥

वृकधूर्त्तः, पुं, (धूर्त्तो वृकः राजदन्तादिवत् पूर्व्वनिपातः।) शृगालः। इति हारावली॥

वृका, स्त्री, अम्बष्ठा। इति रत्नमाला॥

वृकाक्षी, स्त्री, (वृकस्याक्षीव अक्षि चिह्नं यस्याः।) त्रिवृत्। इति रत्नमाला॥

वृकारातिः, पुं, (वृकस्यारातिः।) कुक्कुरः। इति शब्दमाला॥

वृकारिः, पुं, (वृकस्यारिः।) कुक्कुरः। इति राजनिर्घण्टः॥

वृकी, स्त्री, पाठा। इति राजनिर्घण्टः॥

वृकोदरः, पुं, (वृकस्येवोदरो यस्य। यद्वा, वृकः वृकनामकोऽग्निरुदरे यस्य।) भीमसेनः। तत्पर्य्यायः। भीमः २ मरुत्पुत्त्रः ३ किर्म्मीरनिसूदनः ४ कीचकनिसूदनः ५ बकनिसूदनः ६ हिडिम्बनिसूदनः ७। इति हेमचन्द्रः॥ बकवैरी ८ मारुतिः ९। इति जटाधरः॥ अस्य व्युत्पत्तिर्यथा,—

"कथासु भीमसेनेन परिपृष्टः प्रतापवान्।
त्वया पृष्टस्य धर्म्मस्य रहस्यस्यास्य मेऽनघ॥
भविता स तदा ब्रह्मन् कर्त्ता चैव वृकोदरः।
प्रवर्त्तकोऽस्य धर्म्मस्य पाण्डुसूनुर्म्महाबलः॥
यस्य तीक्ष्णो वृको नाम जठरे हव्यवाहनः।
मया दत्तः स धर्म्मात्मा तेन चासौ वृकोदरः॥"

इति मात्स्ये ६५ अध्यायः॥

वृक्णं, त्रि, (व्रश्च+क्तः।) छिन्नम्। इत्यमरः॥ (यथा, सांख्यतत्त्वकौमुद्याम्।
"नहि पाणी वृक्णौ स्तनौ वा जातौ कुमारी कलाभावा वेति॥")

वृच, ङ वृतौ। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-सक०-सेट्।) नवमस्वरी। ङ, वृचते वरं कन्या। इति दुर्गादासः॥

वृक्षः, पुं, (व्रश्च छेदने+"स्नुव्रश्चिकृत्यृषिभ्यः कित्।" उणा० ३। ६६। इति सः। स च कित्। "वृक्ष वरणे। अतोऽच्याऽवृणोतीति वृक्ष इति सिद्धे प्रपञ्चार्थं ग्रहणमेतत्।" इति तट्टीकायामुज्ज्वलदत्तः।) स्थावरयोनिविशेषः। गाछ इति भाषा। तत्पर्य्यायः। महीरुहः २ शाखी ३ विटपी ४ पादपः ५ तरुः ६ अनोकहः ७ कुटः ८ सालः ९ पलाशी १० द्रुः ११ द्रुमः १२ आगमः १३। इत्यमरः॥ अगच्छः १४ विटरः १५ महीरुट् १६ कुचिः १७ स्थिरः १८ कारस्करः १९ नगः २० अगः २१ कुटारः २२। इति शब्दरत्नावली॥ विटपः २३ कुजः २४ वनस्पतिः २५ अद्रिः २६ शिखरी २७ कुठः २८। इति जटाधरः॥ कुञ्जः २९ क्षितिरुहः ३० अङ्घ्रिपः ३१ भूरुहः ३२ भूजः ३३ महीजः ३४ धरणीरुहः ३५ क्षितिजः ३६ शालः ३७। इति राजनिर्घण्टः॥ तस्य षड्जातिर्यथा,—

"कुरण्टाद्या अग्रबीजा मूलजास्तूत्पलादयः।
पर्व्वयोनय इक्ष्वाद्याः स्कन्धजाः सल्लकीमुखाः॥
शाल्यादयो बीजरुहाः संमूर्च्छजास्तृणादयः।
स्युर्व्वनस्पतिकायस्य षडेते मूलजातयः॥"

इति हेमचन्द्रः॥

"संस्वेदजापि त्रिविधा वृक्षगोपशुजन्तवः।"

इत्यग्निपुराणम्॥

भद्रप्रदवृक्षा यथा,—

श्रीभगवानुवाच।

"आश्रमे नारिकेलश्च गृहिणाञ्च धनप्रदः।
शिविरस्य यदीशाने पूर्व्वे पुत्त्रप्रदस्तथा॥
सर्व्वत्र मङ्गलार्हश्च तदराज्ञो मनोहरः।
रसालवृक्षः पूर्व्वस्मिन् वृक्षाः सम्पत्प्रदस्तथा॥
शुभप्रदश्च सर्व्वत्र सुरकारो निशामय॥
बिल्वश्च पनसश्चैव खर्ज्जूरो बदरी तथा।
प्रजाप्रदश्च पूर्व्वस्मिन् दक्षिणे धनदस्तथा॥

सम्पत्प्रदश्च सर्व्वत्र यतो हि वर्द्धते यशो ।
जम्बूरश्च दाडिम्बः कदल्याम्रातकस्तथा ॥
बन्धुप्रदश्च पूर्व्वस्मिन् दक्षिणे निम्बदस्तथा ।
सर्व्वत्र शुभदश्चैव धनपुत्रशुभप्रदः ॥
हर्षप्रदो गुवाकश्च दक्षिणे पश्चिमे तथा ।
ईशाने सुखदश्चैव सर्व्वमेवं निशामय ॥
सर्व्वत्र चम्पकः शुक्लो शुचि मङ्गलप्रदस्तथा ।
अलाबूश्चापि कुष्माण्डो मायाम्बुश्च सुखासुखः ॥
खर्ज्जूरो कर्कटी चापि शिविरे मङ्गलप्रदा ।
वास्तूकः कारविल्लश्च वार्त्ताकुश्च शुभप्रदा ।
लताफलञ्च शुभदं सर्व्वं सर्व्वत्र निश्चितम् ॥”

निषिद्धवृक्षा यथा,—

“प्रशस्तं कथितं कान्ते ! निषिद्धञ्च निशामय ।
वल्यश्वत्थो निषिद्धश्च शिविरे नगरेऽपि च ॥
वटो निषिद्धः शिविरे नित्यं चौरभयं ततः ।
नगरेषु प्रसिद्धश्च दर्शनात् पुण्यदस्तथा ॥
हे कान्ते ! तिन्तिडीवृक्षो यत्नात्तं परिवर्ज्जयेत् ।
शरेश्च धनहानिः स्यात् प्रजाहानिर्भवेद्ध्रुवम् ॥
शिविरेऽतिनिषिद्धश्च नगरे किञ्चिदेव च ।
न निषिद्धः प्रसिद्धश्च नगरेषु तथा पुरे ॥
वाच्यामतिनिषिद्धश्च प्राशस्तं परिवर्ज्जयेत् ।
खर्ज्जूरश्च वकुश्चैव निषिद्धः शिविरे तथा ॥
न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ।
वृक्षश्च चक्रकादीनां धान्यश्च मङ्गलप्रदम् ॥
ग्रामेषु नगरे चापि शिविरे च तथैव च ।
इक्षुदण्डश्च शुभदः कलमं शुभदस्तथा ॥
अशोकश्च शिरीषश्च कदम्बश्च शुभप्रदः ।
कम्पी हरिद्रा शुभदा शुभदश्चार्द्रकस्तथा ॥
हरीतकी च शुभदा ग्रामेषु नगरेषु च ।
न वाच्यां भयदा नित्यं तथा चामलकी ध्रुवम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०२ अः ॥
अपि च ।
“अपुत्रस्य च पुत्रत्वं पादपा इह कुर्व्वते ।
यत्नेनापि च राजेन्द्र ! अश्वत्थारोपणं कुरु ॥
स ते पुत्रसहस्राणां कार्य्यमेकः करिष्यति ।
धनी चाश्वत्थवृक्षेण अशोकः शोकनाशनः ॥
प्लक्षो यज्ञप्रदः प्रोक्तो निम्बश्चायुप्रदः स्मृतः ।
जम्बुकी शाकदा प्रोक्ता भार्य्यादा दाडिमी तथा ॥
उदुम्बरो रोगनाशाय पलाशो ब्रह्मदस्तथा ।
अर्कपुष्पारोपकाणां नित्यं तुष्येद्दिवाकरः ॥
श्रीदश्च शङ्करो देवः पाटलायान्तु पार्व्वती ।
शिंशपायामप्सरसः कुन्दे गन्धर्व्वसत्तमाः ॥
विभीतके दासवृद्धिर्व्वकुलो दासदस्तथा ।
अपत्यनाशकस्तालो बकुलः कुलवर्द्धनः ॥
वधूभार्य्या नारिकेली नाथः सर्व्वाङ्गसुन्दरः ।
रतिप्रदा तथा केली केतकी सर्व्वनाशिनी ।
प्रतिष्ठां ते गमिष्यन्ति ये नराः वृक्षरोपकाः ॥”
इति पाद्मे सृष्टिखण्डे वृक्षारोपणं नाम २६ अध्यायः ॥*॥ अस्य रोपणफलम् ।

यम उवाच ।

“वृक्षगुल्मलतावल्लीत्वक्सारास्तृणजातयः ।
वर्द्धते वृक्षजातीयास्तासां रोपे फलं शृणु ॥
यः पुमान् रोपयेद्वृक्षान् छायापुष्पफलोपगान् ।
सर्व्वसत्त्वोपभोगाय स याति परमां गतिम् ॥
छायापुष्पोपगाश्चिंशत् फलपुष्पद्रुमास्तथा ।
रोपयित्वा दशाशास्तु नरो न नरकं व्रजेत् ॥
देवदानवगन्धर्व्वाः किन्नरोरगगुह्यकाः ।
पशुपक्षिमनुष्याश्च संश्रयन्ति सदा द्रुमान् ॥
पुष्पैः सुरगणाः सर्व्वे फलैश्च पितरः सदा ।
छायया मे मनुष्यास्तु पशुपक्षिगणास्तथा ॥
पुष्पोपगन्धांश्च फलोपगन्धान्
यः पादपान्रोपयते मनुष्यः ।
स्वच्छन्ददेशे नरवेश्मवेद्यां
लभेदधिष्ठानवरं स विप्रः ॥
तस्मात् सुबहवो वृक्षा रोप्याः श्रेयोऽभि-
वाञ्छता ।
पुत्त्रवत् परिपाल्याश्च ते पुत्त्रा धर्म्मतः स्मृताः ॥
किं धर्म्मविमुखैर्मूर्खैः केवलं स्वार्थहेतुभिः ।
तत्पुत्रा वरं ये तु परार्थैकाग्रतत्पराः ॥
पत्रपुष्पफलच्छायामूलवल्कलदारुभिः ।
परेषामुपकुर्व्वन्ति तारयन्ति पितामहान् ॥
हिंसारमपि संप्राप्तं छायापुष्पफलादिभिः ।
पूजयन्त्येव तरवो मुनिवद्दिवर्जिताः ॥
पितरं नोपहिंसन्ति द्रुमा प्रथिवन्नोभतः ।
तारयन्ति च मे सम्यक् सर्व्वस्यातिथ्यदायकाः ॥
तस्मात्ते पुत्रवत् स्थाप्या विधिवद्विजपुङ्गव ।
द्विजैः पितृमनुष्याणामभोज्याः स्युर्यदा यदा ॥
जलदान् वृक्षरोपी यः प्रतिष्ठाशाखनिर्द्दिशः ।
एते स्वर्गात् क्षीयन्ते ये चान्ये सत्यवादिनः ॥”
इत्याद्ये वह्निपुराणे तडागवृक्षप्रशंसानामाध्यायः ॥ * ॥ अपि च ।
“भूमिदानेन ये लोका गोदानेन च कीर्त्तिताः ।
ते लोकाः प्राप्यते पुंभिः पादपानां प्ररोहणे ॥
अश्वत्थमेकं पिचुमर्द्दमेकं
न्यग्रोधमेकं दश पुष्पजातीः ।
द्वे द्वे तथा दाडिममातुलुङ्गे
पञ्चाम्ररोपी नरकं न याति ॥
यथा सुपुत्त्रः कुलमुद्धरेद्धि
यथाभिलषत्ख्यातिमप्रयत्नात् ।
तथाच वृक्षाः फलपुष्पभूताः
स्वं स्वामिनं नरकादुद्धरन्ति ॥

गोकर्ण उवाच ।

इच्छामि यथा गौतममिच्छोर्णं तदुच्यते ।
छायाविश्रामपथिकैः पक्षिणां निलयेन च ।
पत्रमूलत्वगाद्यैश्च औषधार्थेन्तु देहिनाम् ॥
उपकुर्व्वन्ति वृक्षस्य पञ्चयज्ञः स उच्यते ।
यज्ञकर्म्माणि कष्टानि सुफलान्युत्तमास्तथा ॥
तत्रनिर्व्वर्त्तनं प्रोक्तं भिक्षा पर्व्वैः समाहृता ।
भवन्ति वत्सरे मध्ये द्विवारं श्राद्धनादयः ॥
सांवत्सरं पितुर्मातुरुपकारं फलैः कृतम् ।
एवं पुत्त्र समारोप्या एवं तत्त्वविदो विदुः ॥”
इत्यादि वाराहपुराणे गोकर्णमाहात्म्यनामाध्यायः ॥ * ॥ अच्छेद्यवृक्षा यथा,—
“अश्वत्थो वटवृक्षश्च न च्छेत्तव्यः कदाचन ।
न च्छेत्तव्यो बिल्ववृक्ष उदुम्बरश्च कदाचन ।
कर्म्मण्याद्यैव ये वृक्षा न च्छेत्तव्याः कदाचन ॥”
इति च वाराहपुराणे श्राद्धकर्म्मार्हासूत्रं नामाध्यायः ॥ * ॥ वृक्षोत्पाता यथा,—
“पुरेषु येषु दृश्यन्ते पादपाश्चैव रोदिताः ।
हसन्तो वा स्रवन्तो वा स्रवन्तो वा बहून् रसान् ॥
अरोगा वा विना वातं शाखा मुञ्चन्त्यथ
द्रुमाः ।
फलं पुष्पं तथा काले दर्शयन्ति विहायसाः ॥
पुष्पावस्था दर्शयन्ति फलं पुष्पं तथा भवेत् ।
क्षीरं स्नेहं मदं रक्तं मधु तोयं स्रवन्ति च ॥
शुष्यन्त्यरोगाः सहसा शुष्का रोहन्ति वा
पुनः ।
उत्तिष्ठन्तीह पतिताः पतन्ति च तथोन्नताः ॥
एवं वक्ष्यामि ते ब्रह्मन् विपाकफलमेव च ।
रोदने व्याधिमप्येति हसने देशविभ्रमम् ॥
शाखाप्रपतने कुर्य्यात् संग्रामे योधपातनम् ।
बालानां मरणं कुर्य्याद्बालानां फलपुष्पिता ॥
सराष्ट्रभेदं कुरुते फलपुष्पमनन्तरम् ।
क्षयं सर्व्वत्र गोक्षीरे स्नेहे दुर्भिक्षलक्षणम् ॥
वाहनापचयं मद्यं रक्तं संग्राममादिशेत् ।
मधुस्रावे भवेद्व्याधिर्जलस्रावे न वर्षति ॥
अरोगं शोषणं शेयं ब्रह्मन् दुर्भिक्षलक्षणम् ।
शुष्केषु संप्ररोहत्सु वीर्य्यमन्नञ्च हीयते ॥
उत्थाने पतितानाञ्च भयभेदकरं भवेत् ।
स्थानात् स्थानन्तु गमने देशभङ्गन्तथादिशेत् ॥
ज्वलत्स्वपि च वृक्षेषु रोदत्सु च धनक्षयम् ।
एतत् पूजितवृक्षेषु सर्व्वं राज्ञो विपद्यते ॥
पुष्पे फले वा विकृते राज्ञो मृत्युं तथादिशेत् ।
अन्येषु देववृक्षेषु वृक्षोत्पातेषु मन्त्रितः ॥
आच्छादयित्वा तं वृक्षं गन्धमाल्यैर्विभूषयेत् ।
वृक्षोपरि तथा च्छत्रं कुर्य्यात् पापप्रशान्तये ॥
शिवमभ्यर्च्चयेद्देवं पशुनाऽस्मै निवेदयेत् ।
भूतेभ्य इति वक्तोमा तत्वा वत्स अपेत्तथा ॥
मध्वाज्ययुक्तेन तु पायसेन
संपूज्य विप्रांश्चतुरश्च दद्यात् ।
गीतेन नृत्येन तथार्च्चनेन
देवं हरं पापविनाशहेतोः ॥”
इति मात्स्ये अद्भुतशान्तिवृक्षोत्पातप्रशमनं नाम २०६ अध्यायः ॥ * ॥ अथ वृक्षप्रतिष्ठा ।

भीष्म उवाच ।

“पादपानां विधिं ब्रह्मन् यथावद्विस्तराद्वद ।
विधिना येन कर्त्तव्यं पादपोद्यापनं बुधैः ।
ये च लोकाः स्मृतास्तेषां तानि चेदद्य वद मे ॥

पुलस्त्य उवाच ।

पादपानां विधिं वक्ष्ये तथैवोद्यानभूमिषु ।
तडागविधिवत् सर्व्वं समाप्तिं जगदीश्वर ॥
सत्वा मण्डपसंभारं स्नात्वा प्रयतमानसः ।
पूजयेद्वृक्षान् सर्व्वं तद्वत्क्षेमवस्त्रानुलेपनैः ॥
सर्व्वौषध्युदकैः सिक्तान्मानापुष्पविभूषितान् ।
वृक्षान्माल्यैरलंकृत्य वासोभिरभिवेष्टयेत् ॥
सूच्या चैव तथा कार्य्यं सर्व्वेषां कर्णवेधनम् ।

नित्यधामा गुणातीतः साक्षाद्वृन्दावनेश्वरः ।
असौ प्रकटलीलायां वासुदेवोऽभवत् प्रभुः ॥
गोपीनां कामपूर्त्यर्थं नित्यानां रमणाय च ।
गोपालानां विनोदाय स्वयं नन्दसुतोऽभवत् ॥”
इति पाद्मोत्तरखण्डे ६७ अध्यायः ॥

वृन्दावनेश्वरी, स्त्री (वृन्दावनस्येश्वरी ।) राधा । यथा,—
“राघवस्याभवत् सीता रुक्मिणी कृष्णजन्मनि ।
साक्षाल्लक्ष्मीस्तु विज्ञेया प्राकट्येनैव पार्व्वति ! ॥
वृषभानुसुता या तु नित्यानन्दस्वरूपिणी ।
गान्धर्व्विकाख्यलीलायां श्रीः ख्याता कृष्णवल्लभा ।
वृन्दावनेश्वरी राधा साक्षात् कृष्णात्मिका परा ॥”
इति पाद्मोत्तरखण्डे ६७ अध्यायः ॥

वृन्दिष्ठः, त्रि, (अयमेषामतिशयेन वृन्दारकः श्रेष्ठः । वृन्दारक+इष्ठन् । “प्रियस्थिरेति ।” ६।४।१५७ । वृन्दादेशः ।) अयमनयोरेषां वा अतिशयेन वृन्दारको देवो मुख्यो वा । इति मुग्धबोधटीकायां दुर्गादासः ॥

वृन्दीयान्, [स्] त्रि, (अयमनयोरतिशयेन वृन्दारकः । वृन्दारक+ईयसुन् । प्रियस्थिरेति वृन्दादेशः ।) वृन्दिष्ठः । अयमनयोरेषां वा अतिशयेन वृन्दारकः इत्यर्थे ईयसुप्रत्ययेन निष्पन्नमिदम् । इति मुग्धबोधव्याकरणम् ॥

वृश, इर् य वृत्याम् । इति कविकल्पद्रुमः ॥ (दिवा०-पर०-सक०-सेट् ।) इर्, अवृशत् अवर्शीत् । अस्मात् पुष्यादित्वान्नित्यं ङ इत्यन्ये । य, वृश्यति वरं कन्या । इति दुर्गादासः ॥

वृशः, पुं, (वृश+“जनिदाच्युसृवृमदीति ।” उणा० ४ । १०४ । इति शक् ।) उन्दुरः । इति शब्दरत्नावली ॥ वासकः । इत्यमरटीकायां भरतः ॥

वृशा, स्त्री, ओषधीविशेषः । इत्युणादिकोषः ॥

वृश्चिकः, पुं, (व्रश्च छेदने+“वृश्चिकृष्योः किकन् ।” उणा० २ । ४० । इति किकन् ।) शूककीटः । इत्यमरः ॥ सुयापोका इति भाषा ॥ तत्पर्य्यायः । शूककीटकः २ । इति शब्दरत्नावली ॥ कीटविशेषः । विछा इति भाषा । तत्पर्य्यायः । अलिः २ द्रोणः ३ वृश्चनः ४ । इति राजनिर्घण्टः ॥ द्रुणः ५ । इति शब्दरत्नावली ॥ पृदाकुः ६ अवशः ७ अली ८ । इति जटाधरः ॥ * ॥ वृश्चिकविषस्य लक्षणमाह ।
“दहत्यग्निरिवादौ च भिनत्तीवोर्द्ध्वमाशु च ।
वृश्चिकस्य विषं याति पश्चाद्दंशोऽवतिष्ठते ॥”
असाध्यवृश्चिकदष्टस्य लक्षणमाह ।
“दष्टोऽसाध्यैस्तु हृद्घ्राणरसनोपहतो नरः ।
मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसून् ॥”
असाध्यैर्व्वृश्चिकैस्तैरेवासुहृत्तैः । हृदादिमूपहतः हृदादिकार्य्यरहितो भवति । अत्यर्थं वेदनार्त्तः इत्यन्वयः ॥ * ॥ अस्य चिकित्सा ।
“शीरकस्य कृतः कल्को घृतसैन्धवसंयुतः ।
सुखोष्णो मधुना लेपाद्वृश्चिकस्य विषं हरेत् ॥
गन्धमाघ्राय म्रदितस्यार्य्यावर्त्तदलस्य तु ।
वृश्चिकेन नरो विद्धः क्षणाद्भवति निर्व्विषः ॥”
इति भावप्रकाशः ॥ * ॥
अथ वृश्चिकविषहरमन्त्रः । ॐ सर स्फुः छ ॐ श्चिलि मिलि चिलि चिलि स्फुः ब्रह्मणे स्फुः सर्व्वेभ्यो देवेभ्यः स्फुः । इति तन्त्रसारः ॥ * ॥ (यथा, ऋग्वेदे । १ । १९१ । १६ ।
“वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषम् ॥”
“वृश्चिकस्यैतद्विषं अरसमसारं बाधकं न भवति ।” इति तद्भाष्ये सायनः ॥ विषस्य विशेषविवरणन्तु अत्रैव १—१६ मन्त्रेषु द्रष्टव्यम् ॥ * ॥) मेषादिद्वादशराश्यन्तर्गताष्टमराशिः । अस्याधिष्ठात्री देवता वृश्चिकः । विशाखाशेषपादानुराधाज्येष्ठासमुदायेनैतद्राशिर्भवति । स च शीर्षोदयः । श्वेतवर्णः । जलराशिः । उत्तरदिक्पतिः । कफप्रकृतिः । जलचरः । बहुपुत्त्रः । बहुस्त्रीसङ्गः । चित्रतनुः । विप्रवर्णश्च । अस्य विशेषसंज्ञाः । सौम्यः । अङ्गना । युग्मम् । समः । स्थिरः । पुष्करः । सरीसृपजातिः । प्राच्यः । तद्राशिजात एतादृशो भवति । मौनी । मन्दगतिः । कृपालुः । कुबुद्धिः । नीचसङ्गश्च । इति बृहज्जातकादयः ॥ * ॥ तज्जन्मजातफलम् ।
“वृश्चिकोदयसंजातः शौर्य्यवाननिलप्रधीः ।
भवेद्विज्ञानसम्पन्नो विग्रही सुभगः सुधीः ॥”
इति कोष्ठीप्रदीपः ॥ * ॥
ओषधीभेदः । इति मेदिनी ॥ हालिकः । हालः । इति संक्षिप्तसारोणादिवृत्तिः ॥ मदनवृक्षः । कर्कटः । गोमयकीटः । इति भरतः ॥ अग्रहायणमासः । इति सारसुन्दरी ॥

वृश्चिकप्रिया, स्त्री, (वृश्चिकस्य प्रिया ।) पूतिका । इति शब्दमाला ॥

वृश्चिकर्णी, स्त्री, आखुकर्णी । इति राजनिर्घण्टः ॥

वृश्चिका, स्त्री, क्षुद्रक्षुपविशेषः । तत्पर्य्यायः । नवपर्णी २ पिच्छिला ३ अलिपत्त्रिका ४ । अस्या गुणाः । पिच्छिलत्वम् । अम्लत्वम् । अन्तर्वृद्ध्यादिदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

वृश्चिकाली, स्त्री, (वृश्चिकानामालिरिव ।) क्षुपविशेषः । बिछाटी इति भाषा । तत्पर्य्यायः । वृश्चिपत्त्री २ विषघ्नी ३ नागदन्तिका ४ सर्पदंष्ट्रा ५ अमरा ६ काली ७ उष्ट्रधूसरपुच्छिका ८ । इति रत्नमाला ॥ विषाणी ९ नेत्ररोगहा १० उष्ट्रिका ११ अलिपर्णी १२ दक्षिणावर्त्तकी १३ कालिका १४ आगमावर्त्ता १५ देवलाङ्गलिका १६ करभी १७ भूरिदुग्धा १८ कर्कशा १९ स्वर्णदा २० युग्मफला २१ चीरविषाणिका २२ भासुरपुष्पा २३ । अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । मुखशुद्धिकारित्वम् । रक्तपित्तविषभूतरोचकापहत्वम् । बल्यत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
“वृश्चिकाली विषघ्नी तु कासमारुतनाशिनी ॥”
इति राजवल्लभः ॥

वृश्चिपत्त्री, स्त्री, वृश्चिकाली । इति रत्नमाला ॥

वृश्चीरः, पुं, श्वेतपुनर्णवा । इति रत्नमाला ॥

वृष, उ सेचने । प्रजनैश्वर्य्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-अक० च-सेट् । क्त्वावेट् ।) उ, वर्षित्वा वृष्ट्वा । इति दुर्गादासः ॥

वृष, क ङ प्रजनैश्वर्य्ये । इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-अक०-सेट् ।) क ङ, वर्षयते । अस्य पञ्चमस्वरानुबन्धो लेखकभ्रमकृतः सुधीभिर्ज्ञेयः । अन्यैस्तु सर्व्वत्र निवेश् साम्प्रदायिकत्वात् । न च प्राचामनुरोधात् पाठ इति वाच्यम् । तर्हि अहक् वक्ती । क ङ वञ्चने । कुत्स क ङ दीप्तौ । दिव क ङ परिकूजने । कदि वर्द्धे । वृष क ङ शक्तिबन्धे । जसक् वधेऽनादरे । इत्येतेषामपि पञ्चमस्वरानुबन्धापत्तेः वस्तुतस्तु एषां पञ्चमस्वरानुबन्धः प्राचीनपठितोऽप्यनर्थः । अतएव रमानाथोऽपि एषामनुबन्धः पूर्व्वपठितधातवोऽर्थान्तरेषु चुरादयः स्युरन्त्वेते एवम्भावत्व इति ज्ञापनार्थ इत्याह । प्रजनो गर्भग्रहणं ऐश्वर्य्यमैश्वर्य्यम् । इति दुर्गादासः ॥

वृषं, क्ली, (वृष ऐश्वर्य्ये+कः ।) वर्त्म । इति शब्दमाला ॥

वृषः, पुं, (वर्षति सिञ्चति रेत इति । वृष सेचने +कः ।) पुङ्गवः । एँड़ इति भाषा । तत्पर्य्यायः । उक्षा २ भद्रः ३ बलीवर्द्दः ४ ऋषभः ५ वृषभः ६ अनड्वान् ७ सौरभेयः ८ गौः ९ । इत्यमरः ॥ शृङ्गी १० ककुद्वान् ११ । इति शब्दरत्नावली ॥ शिखी १२ गन्धमैथुनः १३ पुङ्गवः १४ । इति जटाधरः ॥ * ॥ अस्य लक्षणादि यथा,—
“अन्येभ्यश्चैव सृष्टा वत्यन्तेऽन्ये चतुष्पदाः ।
गावः कृतयुगे सृष्टाः स्वयमेव स्वयम्भुवा ।
ब्रह्मक्षत्त्रियविट्शूद्रजातिभेदाच्चतुर्व्विधाः ॥
शुक्लाङ्गाः शुचयोऽक्रुद्धा मृदवः शुक्लचेतसः ।
अल्पाशिनो बहुबला वृषभा ब्रह्मजातयः ॥
द्वयोर्व्वर्णसम्बन्धात् द्विजातिर्वृषभो भवेत् ।
त्रितयवर्णसमावेशात् त्रिगुणः स वृषाधमः ॥
पीताङ्गा मृदवः शुक्ला अक्रोधा भारवाहिनः ।
यष्टभोजिनः क्षीणा वृषभा वैश्यजातयः ॥
कृष्णाङ्गाः क्रूरहृदया अपवित्राः सदाशिनः ।
दृढदुष्टशरीराश्च वृषभाः शूद्रजातयः ॥
द्वयोर्व्वर्णसम्पर्कात् द्विजातिर्व्वृषभो भवेत् ॥” * ॥
वात्स्यस्तु ।
“पृथ्वीतले समुत्पन्ना गजाश्वा ये चतुष्पदाः ।
गुणत्रयविभेदेन तेषां भेदत्रयं भवेत् ।
एतन्मतानुसारेण भोजः प्राह महीपतिः ॥
ये शुक्लाः शुचयः शुद्धा भव्या भारवहा अपि ।
बह्वाशिनः स्वल्परोषास्ते वृषाः सात्त्विका मताः ॥
अत्यन्ततरुणाः शुद्धा दृढा भारवहाः शुभाः ।
बह्वाशिनो बहुबलास्ते वृषा राजसा मताः ॥
विवर्णा विकृताङ्गाश्च निर्बला स्वल्पभोजिनः ।
अपवित्रा दृढदोषास्ते वृषास्तामसा मताः ॥
तत्तद्वर्णद्वयसम्बन्धात् द्विगुणो वृषभो भवेत् ।

त्रिलक्षणसमावेशात् त्रिगुणः स वृषाधमः ॥”*॥
अथ गुणाः ।
“नीलः शुभो ध्वजो नाम क्षेमो भद्रः ध्रुवः
स्थिरः ।
भोजदेवेन लिखिता इत्यष्टौ वृषभे गुणाः ॥”
तद्यथा,—
“श्वेतादन्यतरो वर्णः श्वेतः खुरविषाणयोः ।
ललाटपुच्छयोः श्वेतः स नीलः शुभमावहेत् ॥१॥
यो हृष्टपुष्टो रम्याङ्गः सुविभक्ततनुः शुभः ।
कुरुते धनवृद्धिं स दोषैर्मुक्तो यदा स्वयम् ॥२॥
वर्णस्तु सहजः पुच्छो रम्यश्च ध्वज उच्यते ।
भर्त्तुः कुलं धनं धान्यं विवर्द्धयति निश्चयम् ॥३॥
पूर्व्वार्द्धे चोन्नतो यस्तु परार्द्धे चैव नीचकः ।
निर्हाणो नाम इत्येष कुरुते रिपुसंक्षयम् ॥४॥
चन्द्रकं दृश्यते यस्य ललाटे देवनिर्म्मितम् ।
क्षेमनामा वृषः कुर्य्याद् धनधान्यविवर्द्धनम् ॥५॥
आवर्त्ताश्च शुभा यस्य शुक्तयश्चापि वा शुभाः ।
भद्रनामा वृषः कुर्य्यात् भर्त्तुः सर्व्वार्थसाधनम् ॥
६ ॥
आवर्त्तशुक्तिविज्ञानं ज्ञेयेषु वृषभेष्वपि ।
पादाः सर्व्वे सिता यस्य पुच्छभालौ सितौ तथा ॥
मध्याद्या चायते नेत्रे कर्णौ चातिलघू स्थिरौ ।
सृक्वयोः कृष्णता चैव शृङ्गे चातिशुभे दृढे ॥
लघुरोमा महावेगः स्निग्धगम्भीरनिस्वनः ।
ध्रुव इत्येष कथितः ध्रुव प्रकुरुते ध्रुवम् ॥७॥
चरणाः मसृणाः स्थूलाः शिरः सुभ्रं भवेत्तनुः ।
आपुच्छाद्दायता शुभ्रा रेखा मस्तकगामिनी ॥
रक्तताल्वोष्ठजिह्वस्तु स्थिरः स्थैर्य्यकरः श्रियाः ।
नाल्पपुण्येन लभ्योऽयं वृषभः शुभलक्षणः ॥”८॥
गवांस्तु ।
“महत्त्वं तनुलोमत्वं पुष्टता भारवाहिता ।
कुमारकत्वमित्येते वृषभाणां गुणा मताः ॥”*॥
अथ दोषाः ।
“खञ्जो विवर्णो विषमः भिन्नो धूम्रश्चलः खरः ।
एते सप्त महादोषा वृषभाणामुदीरिताः ॥
विषाणौ विषमौ यस्य खुराश्च विषमास्तथा ।
नेत्रकान्तिरथवा गात्रं पञ्जरं वेल्लतं भवेत् ।
खञ्ज इत्येष कथितो धनधान्यविनाशनः ॥१॥
पूर्व्वार्द्धमन्यवर्णन्तु परार्द्धं चान्यवर्णकम् ।
एकं क्रोडे विवर्णो वा विवर्णः कुलनाशनः ॥२॥
परार्द्धमुन्नतं यस्य पूर्व्वार्द्धं चातिनीचकम् ।
गच्छन्खरवच्छब्दो शब्दायेत खरस्वरः ।
विषमो नाम वृषभः सम्पत्तिक्षयकारकः ॥३॥
हिमकुन्देन्दुसङ्काशा गात्रेषु लोमबिन्दवः ।
भिन्नो नाम महादोषो दूरतस्तं परित्यजेत् ॥४॥
शृङ्गाग्रे दीपिकाकारं ज्वलतं कंकरं दृशौ ।
कपिलः पुच्छभागश्चेत् स धूम्रो मृत्युमावहेत् ॥५॥
दन्तशृङ्गखुरादीनां यद्येकोऽपि चलेत् स्वयम् ।
शुष्को वा चलते यस्य स चलः कुलनाशनः ॥६॥
आवर्त्ताः शुक्तयो रेखा विषमाश्च विसंस्थिताः ।
न्यूनाधिकाः पञ्जरास्तु खुरास्तु विषमास्तथा ॥
गुदान्मेढ्रान्तरं यावद्रेखा यत्रैव दृश्यते ।
विस्तृते विषमे चोष्ठे जिह्वा चैवासिता भवेत् ।
स खरो दूरतस्त्याज्यो भर्त्तुः सर्व्वार्थनाशनः ॥
७ ॥
स्वल्पता दीर्घरोमत्वं चीनता भारवाहिता ।
अकुत्वं मारकत्वञ्च वृषदोषा उदाहृताः ॥*॥
ब्रह्मादिजातिभेदेन चत्वारो ये वृषा मताः ।
चतुर्व्विधानां लोकानां त एव स्युः शुभावहाः ॥
यो मोहादन्यजातीयं कुरुते वृषभं नरः ।
तस्य नश्यन्ति वित्तानि धनमायुः कुलं बलम् ॥
वातपित्तकफोद्रेका व्याधयो ये वृषे मताः ।
तेषामुपशमः कार्य्यो यथास्वं विधिना बुधैः ॥”
इति वृषपरीक्षा । इति श्रीभोजराजकृतयुक्तिकल्पतरुः ॥*॥ अस्य लक्षणं उत्सर्गविधिश्च यथा,—

मनुरुवाच ।

“भगवन् श्रोतुमिच्छामि वृषभस्य च लक्षणम् ।
वृषोत्सर्गविधिञ्चैव तथा पुण्यफलं महत् ॥

मत्स्य उवाच ।

धेनुमादौ परीक्षेत सुशीलां लक्षणान्विताम् ।
अव्यङ्गामपरिक्लिष्टां जीववत्सामरोगिणीम् ॥
स्निग्धवर्णां स्निग्धखुरां स्निग्धशृङ्गां तथैव च ।
मनोहराकृतिं सौम्यां सुप्रमाणामनुद्धताम् ॥
आवर्त्तैर्द्दक्षिणावर्त्तैर्युक्ता दक्षिणतश्च या ।
वामावर्त्तैर्व्वामतश्च विस्तीर्णजघना तथा ॥
मृदुसंहतताम्रोष्ठीं रक्तजिह्वां सुपूजिताम् ।
अश्यावदीर्घस्फुटिता रक्तजिह्वा तथा च या ॥
अश्यावाविलनेत्रा च शफैरविरलैर्द्दृढैः ।
वैदूर्य्यमधुवर्णैश्च जलबुद्बुदसन्निभैः ॥
रक्तस्निग्धैश्च नयनैस्तथा रक्तकनीनिकैः ।
सप्त चतुर्द्दश दन्तास्तथा चाश्यामतालुका ॥
षडुन्नता सुपार्श्वोरुः पृथु पञ्च समायताः ।
अष्टायतशिरोग्रीवाधराजश्च सुलक्षणा ॥

मनुरुवाच ।

षडुन्नताः के भगवन् ! के च पञ्च समायताः ।
आयताश्च तथैवाष्टौ धेनूनां के शुभावहाः ॥

मत्स्य उवाच ।

उरः पृष्ठं शिरः कुक्षिः श्रोणी च वसुधाधिप ।
षडुन्नतानि धेनूनां पूजयन्ति विचक्षणाः ॥
कर्णौ नेत्रे ललाटञ्च पञ्च भास्करनन्दन ।।
समायतानि शस्यन्ते पुच्छं सास्ना च सक्थिनी ।
चत्वारश्च स्तना राजन्नेवमष्टौ मनीषिभिः ।
शिरोग्रीवायतान्येते भूमिपाल स्मृता दश ॥
तस्याः सुतं परीक्षेत वृषभं लक्षणान्वितम् ।
उन्नतस्कन्धककुदमृजुलाङ्गूलकम्बलम् ॥
महाकटितटस्कन्धं वैदूर्य्यमणिलोचनम् ।
प्रवालगर्भशृङ्गाग्रं सुदीर्घपृथुवालधिम् ॥
नवाष्टदशसंख्यैर्वा तीक्ष्णाग्रैर्द्दशनैः शुभैः ।
मल्लिकाक्षश्च मोक्तव्यो गृहेऽपि धनधान्यदः ॥
वर्णतस्ताम्रकपिलो ब्राह्मणस्य प्रशस्यते ।
श्वेतो रक्तश्च कृष्णश्च गौरः पाटल एव च ॥
भद्रियस्ताम्रपृष्ठश्च शबलः पञ्चकालकः ।
पृथुकर्णो महास्कन्धः श्लक्ष्णरोमा च यो भवेत् ॥
रक्ताक्षः कपिलो यस्तु रक्तशृङ्गतलो भवेत् ।
श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य प्रशस्यते ॥
स्निग्धरक्तेन वर्णेन क्षत्रियस्य प्रशस्यते ।
काञ्चनाभेन वैश्यस्य कृष्णेनाप्यन्त्यजन्मनः ॥
यस्य प्रागायते शृङ्गे भ्रूमुखाभिमुखे सदा ।
सर्व्वेषामेव वर्णानां स च सर्व्वार्थसाधकः ॥
मार्ज्जारपादः कपिलो धन्यः कपिलपिङ्गलः ।
श्वेतो मार्ज्जारपादस्तु धन्यो मणिनिभेक्षणः ॥
करटः पिङ्गलश्चैव श्वेतपादस्तथैव च ।
सर्व्वपादशिरो यस्य द्विपादश्वेत एव च ॥
कपिञ्जलनिभो धन्यस्तथा तित्तिरिसन्निभः ।
आकर्णमूलात् श्वेतस्तु मुखं यस्य प्रकाशते ॥
नन्दीमुखः स विज्ञेयो रक्तवर्णो विशेषतः ।
श्वेतश्च जठरं यस्य भवेत् पृष्ठञ्च गोपते ॥
वृषभः स समुद्राख्यः सततं कुलवर्द्धनः ।
मल्लिकापुष्पचित्रस्तु धन्यो भवति पुङ्गवः ॥
कमलैर्म्मण्डलैश्चापि चित्रो भवति भाग्यदः ।
अतसीपुष्पवर्णस्तु तथा धन्यतरः स्मृतः ॥*॥
एते धन्यास्तथाधन्यान् कीर्त्तयिष्यामि तेऽनघ ।
कृष्णताल्वोष्ठदशना रूक्षशृङ्गशफाश्च ये ॥
अव्यक्तवर्णा ह्रस्वाश्च व्याघ्रसिंहनिभाश्च ये ।
ध्वाङ्क्षगृध्रसवर्णाश्च तथा मूषिकसन्निभाः ॥
कुण्ठाः काणास्तथा खञ्जाः केकराक्षास्तथैव
च ।
विषमश्वेतपादाश्च उद्भ्रान्तनयनास्तथा ॥
नैते वृषाः प्रमोक्तव्या न च धार्य्यास्तथा गृहे ।
मोक्तव्यानाञ्च धार्य्याणां भूयो वक्ष्यामि लक्ष-
णम् ॥*॥
स्वस्तिकाकारशृङ्गाश्च मेघौघसदृशस्वनाः ।
महाप्रमाणाश्च तथा मत्तमातङ्गगामिनः ॥
महोरस्का महोत्साहा महाबलपराक्रमाः ।
शिरः कर्णौ ललाटञ्च वालधिश्चरणानि च ॥
नेत्रे पार्श्वे च कृष्णानि शस्यन्ते चन्द्रभांसि च ।
श्वेतान्येतानि शस्यन्ते कृष्णस्य तु विशेषतः ॥
भूमौ कर्षति लाङ्गूलं प्रलम्बस्थूलवालधिः ।
पुरस्तादुन्नतो नीलवृषभश्च प्रशस्यते ॥
शुक्तिध्वजपताकाभा येषां राजी विराजते ।
अनड्वाहश्च ते धन्या वित्तसिद्धिजयावहाः ॥
प्रदक्षिणं निवर्त्तन्ते स्वयं ये विनिवर्त्तिताः ।
समुन्नतशिरोग्रीवा धन्यास्ते यूथवर्द्धनाः ॥
रक्तशृङ्गाग्रनयनः श्वेतवर्णो भवेद्यदि ।
शफैः प्रवालसदृशैर्नास्ति धन्यतरस्ततः ॥
एते धार्य्याः प्रयत्नेन मोक्तव्या यदि वा वृषाः ।
धारिता यदि वा मुक्ता धनधान्यविवर्द्धनाः ॥
चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः ।
लाक्षारससवर्णश्च तं नीलमिति निर्द्दिशेत् ॥
वृष एव स मोक्तव्यो न स धार्य्यो गृहे भवेत् ।
तदर्थमेषा चरति लोके गाथा पुरातनी ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
गौरीं वाप्युद्वहेद्भार्य्यां नीलं वा वृषमुत्सृजेत् ॥
एवं वृषं लक्षणसंप्रयुक्तं
गृहोद्भवं क्रीतमथापि राजन् ।

सुक्त्वा च शोभिनमरणं महात्मा
मोक्षं प्रतिष्ठाचमतोऽभिधास्ये ॥"

इति मात्स्ये वृषभलक्षणं नाम १८१ अध्यायः ॥

जलपानार्थमागतवृषस्य निवारणे दोषो यथा,

"गवां तृष्णाभिभूतानां पानार्थमभिधावताम् ।
अन्तरायो भवेद्यस्तु स भवेद्ब्रह्मघातकः ॥"

इति कर्म्मलोचनम् ॥ * ॥

अस्य दानविधिर्यथा,—

वशिष्ठ उवाच ।

"यथेश्वरो दरिद्रो वा करोति विधिना नृप ।
दानं सर्व्वगुणोपेतं तच्छृणुष्व यथातथम् ॥
भारादिश्रिपलान्तञ्च वृषं कृत्वा विधानतः ।
युत धेन्वाथवा दद्याच्छक्तितो नृपसत्तम ॥
अन्यथा धेनवः प्रोक्ता वृषास्तावन्त एव हि ।
चरावेन नियोज्याः स्युर्वराय च तथा वृषाः ॥
सर्व्वाभावात्ततो राजन् तिलपात्राणि नित्यशः ।
सर्व्वपापविनाशाय दीयन्ते नृपसत्तम ॥
गोमयेन समालिप्य ययवत्ससमाहृते ।
वृषं हेममयं तत्र रौप्यं वा रत्नसंयुतम् ॥
तस्य नीलमयैः शृङ्गैर्मौक्तिकाश्चिमयी रदाः ।
हारिंशच्चुभवञ्चाथ विद्रुमोष्ठौ सुनासिका ॥
मारकतौ विनिर्द्दिष्टा कर्णौ चैवास्य कौ मतौ ।
पद्मरागस्य वै पादाः खुरा रौप्यमयास्तथा ॥
राजतान्यस्य रोमाणि चामरञ्च कम्बलम् ।
पट्टेन पुच्छसुद्दिष्टं सर्व्वेषामप्ययं विधिः ॥
वृषणौ स्फाटिकस्यापि लिङ्गं मायाः प्रकीर्त्तितः ।
यथा धेनुस्तथानड्वान् सुवर्णस्य तु कारयेत् ॥
सर्व्वासां फलमाप्नोति धेनूनां वृषभप्रदः ।
राजः स विभवाद्दानं भक्त्या यः प्रतिपादयेत् ॥
वृषभस्याप्यशक्तौ हि तद्दनन्तफलं स्मृतम् ।
निःस्वो वाप्येवमेव हि कृत्वा व्रतमतन्द्रितः ।
तत्फलं समवाप्नोति स्वल्पदानान्न संशय ॥"

इति वह्निपुराणे वृषदानाध्यायः ॥ * ॥

तद्दानफलं यथा,—

"कन्यादानं वृषोत्सर्गं तीर्थसेवां श्रुतं तथा ।
ये कुर्व्वन्ति गृहस्थास्तु न ते तांडूपयोपमाः ॥"

इति तत्रैव कन्यादाननामाध्यायः ॥ * ॥

अपि च ।

ब्रह्मोवाच ।

"वृषगावौ समादाय युवानौ लक्षणान्वितौ ।
हेमशृङ्गौ शुभे रौप्ये सवत्सौ पूजयेन्मुने ॥
शिवोमां पूजयित्वा तु तद्दिने यः प्रयच्छति ।
शिवभक्ताय विप्राय रोहिण्यां वा मघेषु वा ॥
न वियोगो भवेत्तस्य सुतपत्नीपतेः क्वचित् ।
वातरंहसवैमानैर्गच्छेच्छिवपुरं द्विज ॥
तत्र भोगांश्चिरं भुक्त्वा इह आगत्य जायते ।
सम्पन्नो धनधान्याभ्यां पुत्रमित्रसमाकुलः ॥
यो वा रत्नसमायुक्तं गोयुगं पूजयेन्मुने ।
प्रयच्छति शिवोमा च प्रीयतां भावितात्मनः ॥
स सर्व्वपापदुःखाभ्यां विमुक्तः क्रीडते सदा ।
इह लोके भवेद्धन्यो देहान्ते परमं पदम् ॥"

इति देवीपुराणे गोरत्नव्रतनामाध्यायः ॥ * ॥

शिववृषप्रकारणं यथा,—

श्रीकृष्ण उवाच ।

"अथ गर्व्वान्वितो रुद्रो हन्तुं त्रिपुरमक्षयम् ।
मत्वा मनसि संहर्त्ता सर्व्वेषां जगतामिति ।
कोऽयं पतङ्गवद्दैत्य इति मत्वा ययौ रणम् ।
विहाय शूलं महत्तं मदीयं कवचं परम् ॥
चिरं बभूव समरं वर्षमेकं दिवानिशम् ।
न कोऽपि जेतुं कं शक्तो द्वौ समौ समरे
सदा ॥
एतस्मिन् रणं कृत्वा दैत्येन्द्रो मायया प्रिये ।
असूकृत्य समुत्तस्थौ पञ्चाशत्कोटियोजनम् ॥
उत्तस्थौ शङ्करस्तूर्णं हन्तुं दैत्यं जगत्प्रभुः ।
जघान मुष्टिना रुद्रो दानवेन्द्रं प्रकोपतः ॥
वज्रमुष्टिप्रहारेण सद्यो मूर्च्छामवाप सः ।
यदा न चेतनां प्राप्य कोपाद्दानवपुङ्गवः ।
शिवं सयानमुत्तोल्य पातयामास भूतले ॥
तदाहं कलया शीघ्रं वृषरूपं विधाय च ।
सयानं शङ्करं धृत्वा विषाणाभ्यामुदक्रमम् ।
ददौ तस्मै स्वकवचं स्वशूलमरिमर्द्दनम् ॥
मया दत्तेन शूलेन जघान त्रिपुरं हरः ।
मामेव दर्पहन्तारं तुष्टाव शीघ्रितः पुनः ॥
तत्याज शङ्करो दर्पं विज्ञवीतं ततो विभुः ।
ज्ञानानन्दस्वरूपश्च निर्लिप्तः सर्व्वकर्म्मसु ॥
ततोऽहं वृषरूपेण वहामि तेन तं प्रियम् ।
मम प्रियतमा नास्ति त्रैलोक्येषु शिवात् परः ॥"

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३६ अध्यायः ॥

मेषादिद्वादशराश्यन्तर्गतद्वितीयराशिः । तत्प-
र्य्यायः । तावुरिः २ । अस्य विशेषसंज्ञा ।
सौम्यः । अङ्गना । युग्मम् । समः । स्थिरः ।
पुष्करः । अयं चतुष्पात् । निशासु याम्यः ।
दिवा बल्यः । ह्रस्वाङ्गः । दक्षिणदिक्पतिः ।
निशाख्यः।पृष्ठोदयाख्यः । अस्याधिष्ठात्री देवता
वृषः । कृत्तिकापादत्रयरोहिणीमृगशिरोर्द्धशि-
रोऽर्द्धैस्तद्राशिर्भवति । स च शीतस्वभावः ।
सुन्दरभूमिस्वामी । वातप्रकृतिः । श्वेतवर्णः ।
वैश्यजातिः । महाशब्दकरः । मध्यमशरीराङ्गः ।
मध्यमसन्तानश्च । एतद्राशिजात एतादृग्-
भवति । दाता । वागदुःखरः । निर्भयः । पर-
दाराभिलाषी । इति वृहज्जातकादयः ॥ * ॥

एतद्राशिजातफलम् ।

"स्थिरमतिं सुमतिं कमनीयतां
कुशलतां हि कृषासुपभोगताम् ।
वृषगतो हिमगुर्भ्रमादिशेत्
सुजातिनः क्षतिनश्च सुखान्यपि ॥" * ॥

तल्लग्नजातफलम् ।

"वृषलग्ने भवेज्जातो गुरुभक्तः प्रियंवदः ।
गुणी क्षती धनी शुभ्रः शूरः सर्व्वजनप्रियः ॥"

इति कोष्ठीप्रदीपः ॥ * ॥

चतुर्व्विधपुरुषमध्ये पुरुषविशेषः । ( यथा,—

"शशको मृगको चैव वृषभो हयकस्तथा ।
शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम् ॥"

इति रतिमञ्जरी ॥ )

तस्य लक्षणं यथा,—

"बहुगुणबहुबन्धः शीघ्रकामो नताङ्गः
सकलरुचिरदेहः सत्यवादी वृषोऽयम् ॥"

इति च रतिमञ्जरी ॥ * ॥

एकादशमन्वन्तरीयेन्द्रः । यथा,—

"रुद्रपुत्रस्य ते पुत्रान् वक्ष्याम्येकादशस्य तु ।
सर्व्वत्रगः सुशर्म्मा च देवानीकः पुरूद्वहः ॥
क्षत्रवद्धा दृढायुश्च आर्द्रकः पुत्रकस्तथा ।
विहङ्गमाः कामगमा निर्म्माणरुचयस्तथा ॥
एकैकस्त्रिंशकस्तेषां गणाश्चेन्द्रश्च वै वृषः ।
दशग्रीवो रिपुस्तस्य स्त्रीरूपी घातयिष्यति ॥"

इति गारुडे ८७ अध्यायः ॥

( कामान् वर्षतीति । वृष + कः । ) धर्म्मः ।

( यथा, मनुः । ८ । १६ ।

"वृषो हि भगवान् धर्म्मस्तस्य यः कुरुते ह्यलम् ।
वृषलं तं विदुर्द्देवास्तस्माद्धर्म्मं न लोपयेत् ॥")

श्रेष्ठे । उत्तरपदस्थश्चेत् श्रेष्ठः । (यथा, हरि-
वंशे । १४१ । ६८ ।

"शारदं वर्षणं यद्वत् सहेशोरो गवांपतिः ।
तद्दृष्टवृषः सेहे वाणवर्षमरिन्दमः ॥")

शुक्रिकः । शुक्रलः । वास्तुस्थानभेदः । इति
मेदिनी ॥ वासकः । इति विश्वः ॥ श्रीकृष्णः ।
इति त्रिकाण्डशेषः ॥ शत्रुः । इति जटाधरः ॥
कामः । बलवान् । इत्यनेकार्थकोषः ॥ ऋषभ-
नामौषधम् । इति राजनिर्घण्टः ॥ ( पतिः ।
यथा, काशीखण्डे ।

"स्वपतिं या परित्यज्य परवृषे वृषायते ।
वृषली सा हि विज्ञेया न शूद्री वृषली भवेत् ॥")

वृषकर्णी, स्त्री, सुदर्शना । इति रत्नमाला ॥
सुदर्शनगुलञ्च इति भाषा ॥

वृषगन्धा, स्त्री, (वृषस्य गन्धो यस्याः ।) वृद्धदारकः ।
इति राजनिर्घण्टः ॥

वृषचक्रं, क्ली, ( वृषाकारं चक्रम् । ) ज्योतिषोक्त-
वृषाकारचक्रम् । यथा,—

"वृषचक्रं वृषाकारं सर्व्वावयवसंयुतम् ।
लिखित्वा विन्यसेद्भानि वृषनामपूर्व्वकम् ॥
मुखाक्षिकर्णशीर्षेषु शृङ्गे स्कन्धे द्विकं द्विकम् ।
त्रीणि पृष्ठे द्वयं पुच्छेऽष्टौ पादे तूदरे त्रिकम् ॥
इत्यपवाहयोनिप्रारम्भादिदिनर्क्षकम् ।
यदङ्गेषु स्थितं तस्माद्वक्ष्ये सर्व्वं शुभाशुभम् ॥
आस्ये हानिः सुखं नेत्रे कर्णे भिक्षाटनं तथा ।
शीर्षे धृतिस्तथा शृङ्गे सौख्यं स्कन्धे च मङ्गलम् ॥
पृष्ठे कष्टं शुभं पुच्छे भ्रमः पादे सुखं हृदि ।
चक्रयोगादिदं प्रोक्तं वृषचक्रे फलं बुधैः ॥"

इति ज्योतिस्तत्त्वम् ॥

वृषणः, पुं, अण्डकोषः । इत्यमरः ॥ तस्य लक्षणं
यथा,—

"स्थूलस्निग्धो दरिद्रः स्याद्दुःखी कृशवृषणो भवेत् ।
विषमे स्त्रीचलो वै नृपः स्यात् वृषणे समे ।
प्रलम्बवृषणोऽल्पायुर्निर्द्धनो मणिभिर्भवेत् ॥"

अपि च ।

"अथास्ये एकवृषणो वृषणाभ्यां चलः स्त्रियाम् ।

समाख्यां क्षितिपः प्रोक्तः प्रसन्नेन वृषाङ्कवान्॥"
इति गारुडे १४५ अध्यायः॥

वृषणकच्छूः, स्त्री, (वृषणस्य कच्छूः।) क्षुद्ररोगविशेषः। तल्लक्षणं यथा,—
"स्नानोत्सादनहीनस्य मलो वृषणसंस्थितः।
प्रक्लिद्यते तदा स्वेदात् कण्डूं जनयते तदा॥
ततः कण्डूयनात् क्षिप्रं स्फोटं स्रावश्च जायते।
प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम्॥
उत्सादनं उद्वर्त्तनम्। मलः मैल् इति लोके। प्रक्लिद्यते आर्द्रो भवति॥*॥ तच्चिकित्सा यथा,—
"सर्ज्जार्ज्जुनकुष्ठसैन्धवसितसिद्धार्थैः प्रकल्पितो योगः।
उद्वर्त्तनेन नियतं शमयति वृषणस्य कच्छूतिम्॥
भिषग्वृषणकच्छूं तु चिकित्सेत् पामरोगवत्।
अहिपूतननिर्द्दिष्टक्रिययापि च तां हरेत्॥"
इति भावप्रकाशः॥

वृषणश्वः, पुं, इन्द्रस्य घोटकः। इति त्रिकाण्डशेषः॥ (एतन्नामकनृपविशेषः। यथा, ऋग्वेदे। १। ५१। १३।
"मेनाभवो वृषणश्वस्य सुक्रतो॥"
"वृषणश्वस्य एतदाख्यस्य राज्ञः मेनाभवो मेनानाम कन्या भूः।" इति तद्भाष्ये सायणः॥*॥ सेचनसमर्थाश्वयुक्ते, त्रि। यथा, ऋग्वेदे। ८। २०। १०।
"वृषणश्वेन मरुतो वृषप्सुना रथेन वृषनाभिना॥"
"वृषणश्वेन वृषभिः सेचनसमर्थैरश्वैरुपेतेन।" इति तद्भाष्ये सायणः॥)

वृषण्वसु, क्ली, इन्द्रस्य धनम्। इति जटाधरः॥ (त्रि, वर्षकधनः। यथा, ऋग्वेदे।२।४१।८।
"न यत्परो नान्तर आदधर्षद्वृषण्वसू॥"
"वृषण्वसू हे धनस्य वर्षितारौ।" इति तद्भाष्ये सायणः॥)

वृषदंशकः, पुं, (वृषं मूषिकं दशतीति। दंश + ण्वुल्।) विडालः। इत्यमरः॥ (यथा, साहित्यदर्पणे १० परिच्छेदे।
"क्षिपसि शुकं वृषदंशकवदने॥")

वृषध्वजः, पुं, (वृषो ध्वजो वाहनं यस्य।) शिवः। इत्यमरः॥ (यथा, काव्यादर्शे २ अभावाख्याने।
"जटाभिःस्निग्धताम्राभिराविरासीद्वृषध्वजः॥")
हेरम्बः। पुण्यकर्म्मा। इति विश्वः॥

वृषध्वाङ्क्षी, स्त्री, नागरमुस्ता। इति राजनिर्घण्टः॥

वृषनाशनः, पुं, (वृषस्य नाशनं यस्मात्।) विडङ्गः। इति शब्दमाला॥

वृषपतिः, पुं, (वृषस्य पतिः।) षण्डः। शिवः। इति केचित्॥

वृषपर्णिका, स्त्री, वस्तान्त्री। इति राजनिर्घण्टः॥

वृषपर्णी, स्त्री, (वृषस्य मूषिकस्य कर्ण इव पर्णं यस्याः। ङीष्।) आखुपर्णी। इति रत्नमाला॥
वृक्षविशेषः। पुराती इति भाषा। तत्पर्य्यायः। हध्यावी २ चक्राङ्गी ३ सुदर्शना ४। इति राजनिर्घण्टः॥

वृषपर्व्वा, [न्] पुं, शिवः। दैत्यभेदः। (यथा, महाभारते। १। ६७। १३।
"वृषपर्व्वेति विख्यातः श्रीमान् यस्तु महासुरः॥"
अस्य विवरणन्तु तत्रैव द्रष्टव्यम्॥*॥) भृङ्गराजवृक्षः। कशेरुः। इति विश्वः॥ (विष्णुः। यथा, महाभारते। १३। १४९। ९१।
"वृषाही वृषभो विष्णुर्वृषपर्व्वा वृषोदरः॥"
राजविशेषः। यथा, मार्कण्डेयपुराणे।१३४।५।
"जग्राह नरराजस्य सकाशाद्वृषपर्व्वणः॥")

वृषभः, पुं, (वृष सेचने। वृष + "ऋषिवृषिभ्यां कित्।" उणा० ३। १२३। इति अभच्। स च कित्।) वृषः। (यथा, मनौ। ९। ५०।
"यद्वन्यगोषु वृषभो वत्सानां जनयेच्छतम्॥")
श्रेष्ठः। (यथा, महाभारते। ३। ३३। ८७।
"सृञ्जयैः सह कैकेयैर्वृष्णीनां वृषभेण च॥")
वैदर्भीरीतिभेदः। इति मेदिनी॥ आदिजिनः। इति हेमचन्द्रः॥ कर्णरन्ध्रम्। ऋषभनामौषधम्। इत्युणादिकोषः॥*॥ (चतुर्व्विधपुरुषान्तर्गतपुरुषविशेषः। यथा,—
"शशके पद्मिनी तुष्टा चित्रिणी रमते मृगम्।
वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम्॥"
इति रतिमञ्जरी॥)
गोशब्दे कलिखनात् प्रसङ्गादत्र आतिदेशिकगोहत्या लिख्यते।
"गवामाहारं प्रकुर्व्वन्तं पिबन्तं यो निवारयेत्।
याति गोविप्रयोर्मध्ये गोहत्याञ्च लभेत् सः॥
दण्डैर्गास्ताडयन्मूढो यो विप्रो वृषवाहनः।
दिने दिने गवां हत्यां लभते नात्र संशयः॥
ददाति गोभ्य उच्छिष्टं भोजयेद्वृषवाहकम्।
भोजयेद्वृषवाहान्नं स गोहत्यां लभेद्ध्रुवम्॥
वृषलीपतिं याजयेद्यो भुङ्क्तेऽन्नं तस्य यो नरः।
गोहत्याशतकं सोऽपि लभते नात्र संशयः॥
पादं ददाति वह्नौ यो गाश्च पादेन ताडयेत्।
गृहं विशेदधौताङ्घ्रिः स्नात्वा गोवधमालभेत्॥
यो भुङ्क्तेऽस्निग्धपादेन शेते स्निग्धाङ्घ्रिरेव च।
सूर्य्योदये च द्विर्भोजी स गोहत्यां लभेद्ध्रुवम्॥
अवीरान्नञ्च यो भुङ्क्ते योनिजीवी च ब्राह्मणः।
यस्त्रिसन्ध्याविहीनश्च स गोहत्यां लभेद्ध्रुवम्॥
पितॄंश्च पर्व्वकाले च तिथिकाले च देवताः।
न सेवतेऽतिथिं यो हि स गोहत्यां लभेद्ध्रुवम्॥
स्वभर्त्तरि च कृष्णे वा भेदबुद्धिं करोति या।
कटूक्त्या ताडयेत् कान्तं सा गोहत्यां लभेत् ध्रुवम्॥
गोमार्गं खननं कृत्वा ददाति शस्यमेव च।
तडागे वा तदूर्द्धे वा स गोहत्यां लभेद्ध्रुवम्॥
प्रायश्चित्तं गोवधस्य यः करोति व्यतिक्रमम्।
अर्थलोभादथाज्ञानात् स गोहत्यां लभेद्ध्रुवम्॥
राजके दैवके यत्नाद्गोस्वामी गां न पालयेत्।
दुःखं ददाति यो मूढो गोहत्यां लभते ध्रुवम्॥
प्राणिनं लङ्घयेद् यो हि देवार्च्चामनलं जलम्।
नैवेद्यं पुष्पमन्नञ्च स गोहत्यां लभेद्ध्रुवम्॥
शश्वन्नास्तीति यो वादी मिथ्यावादी प्रतारकः।
देवद्वेषी गुरुद्वेषी स गोहत्यां लभेद्ध्रुवम्॥
देवताप्रतिमां दृष्ट्वा गुरुं वा ब्राह्मणं सति।
न सम्भ्रमान्नमेद्यो हि स गोहत्यां लभेत् ध्रुवम्॥
न ददात्याशिषं कोपात् प्रणताय च यो द्विजः।
विद्यार्थिने च विद्याञ्च स गोहत्यां लभेत् ध्रुवम्॥
गोहत्या ब्रह्महत्या च कथिता चातिदेशिकी।
यथा श्रुतं सूर्य्यवक्त्रात् किं भूयः श्रोतुमिच्छसि॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः॥

वृषभगतिः, पुं, (वृषभेण गतिर्यस्य।) शिवः। इति हारावली॥

वृषभध्वजः, पुं, (वृषभः ध्वजो वाहनं यस्य।) शिवः। इति केचित्॥ (यथा, रघुः।२।३६।
"अमुं पुरः पश्यसि देवदारुं
पुत्त्रीकृतोऽसौ वृषभध्वजेन॥")

वृषभाक्षी, स्त्री, इन्द्रवारुणी। इति राजनिर्घण्टः॥
वृषचक्षुषि, क्ली॥

वृषभानुः, पुं, सुरभानपुत्रः। स च राधिकापिता। यथा,—
"सुचन्द्रो वृषभानुश्च लेभाभ जन्म गोकुले।
पद्मावत्याश्च जठरे सुरभानस्य रेतसा॥
जातिस्मरो हरेरंशः शुक्लपक्षे यथा शशी।
ववृधेऽनुदिनं तत्र व्रजगेहे व्रजाधिपः॥
कलावती कान्यकुब्जे बभूवायोनिसम्भवा।
जातिस्मरा महासाध्वी सुन्दरी कमलाकला॥
कान्यकुब्जे नृपश्रेष्ठो भलन्दन उरुक्रमः।
स तां संप्राप योगान्ते यज्ञकुण्डसमुत्थिताम्॥
कृत्वा वयसि राजेन्द्र स्वकान्तायै ददौ मुदा।
मालावती स्वयं दत्त्वा तां पुपोष प्रहर्षिता।
ददर्श नन्दः पथि तां गच्छन्तीञ्च सुतान्वितः॥
नन्द उवाच।
शृणु राजेन्द्र वक्ष्यामि विशेषवचनं शुभम्।
सम्बन्धं कुरु कन्याया विशिष्टेन च साम्प्रतम्॥
सुरभानसुतः श्रीमान् वृषभानुर्व्रजाधिपः।
नारायणांशो गुणवान् सुन्दरश्च सुपण्डितः॥
कन्या तेऽयोनिसम्भूता यज्ञकुण्डसमुद्भवा।
त्रैलोक्यमोहिनी श्यामा कमलांशा कलावती।
स च योग्यस्तदुचितस्तद्योग्या ते च कन्यका॥
भलन्दन उवाच।
सम्बन्धो हि विधिवशो न मे साध्यो व्रजाधिप।
प्रजापतिर्योगकर्त्ता जन्मदाताहमेव च॥
वृषभानुप्रिया भार्य्या लिखिता चेत् सुता मम।
पुरा भूतेव को वाहं केनान्येन निवार्य्यते॥
कृपालुस्तामुपादाय व्रजश्रेष्ठो व्रजं गतः।
गत्वा स कथयामास सुरभानस्य संसदि॥
सुरभानश्च यत्नेन नन्देन च समादरम्।
सम्बन्धं योजयामास गर्गद्वारा च सत्वरम्॥
वृषभानुर्मुदा युक्तः प्राप्य ताञ्च कलावतीम्।

रेमे सुनिर्ज्जने रम्ये पुष्ये च दिवानिशम् ।
तयोः कन्या च कालेन राधिका या बभूव ह ।
दैवात् श्रीदामशापेन श्रीकृष्णस्याज्ञया पुरा ।
अयोनिसम्भवा सा च कृष्णप्राणाधिका सती ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १७ अध्यायः ॥

वृषभासा, स्त्री, (वृषेण धर्म्मेण भासते इति । भास + अच् । स्त्रियां टाप् । ) अमरावती । इति त्रिकाण्डशेषः ॥

वृषयः, पुं, (वृ + “वृषोः सुगवुकौ च ।” उणा० ४ । १०० । इति कयन् सुगागमश्च । ) आश्रयः । इत्युणादिकोषः ॥

वृषलः, पुं, शूद्रः । शूद्रः । ( यथा, मनौ । ४ । १४० ।
“नाज्ञातेन समं गच्छेन्नैको न वृषलैः सह ॥”
अस्य नामनिरुक्तिर्यथा, तत्रैव । ८ । १६ ।
“वृषो हि भगवान् धर्म्मस्तस्य यः कुरुते ह्यलम् ।
वृषलं तं विदुर्द्देवास्तस्माद्धर्म्मं न लोपयेत् ॥”)
चन्द्रगुप्तराजः । वाजी । इति मेदिनी ॥ अधार्म्मिकः । इति जटाधरः ॥

वृषलात्मजः, त्रि, ( वृषलस्यात्मजः । ) अधार्म्मिकजातः । इति केचित् ॥ शूद्रोद्भवश्च ॥

वृषली, स्त्री, पितृगृहे अविवाहिता रजस्वला कन्या । यथा । अत्रिकाश्यपौ ।
“पितुर्गेहे च या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥”
इत्युद्वाहतत्त्वम् ।
स्वपतिं परित्यज्य या परपतिगामिनी । यथा,—
“स्वकं पतिं परित्यज्य परत्रे वृषायते ।
वृषली सा हि विज्ञेया न शूद्री वृषली भवेत् ॥”
इति काशीखण्डः ।
(वृषलस्य भार्य्या । ङीप् ।) शूद्री च ॥ ( यथा, महानिर्व्वाणतन्त्रे । १ । ४७ ।
“शूद्रान्नभोजिनः क्रूरा वृषलीरतिकामुकाः ॥”)

वृषलीपतिः, पुं, (वृषल्याः पतिः ।) वृषलीविवाहकर्त्ता । यथा,—
“यस्तु तां वरयेत् कन्यां ब्राह्मणो ज्ञानदुर्ब्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥”
इत्युद्वाहतत्त्वम् ।
“यदि शूद्रां व्रजेत् विप्रो वृषलीपतिरेव सः ॥”
इति ब्रह्मवैवर्त्तपुराणम् ॥

वृषलोचनः, पुं, (वृषस्य लोचने इव लोचने यस्य ।) मूषिकः । इति हेमचन्द्रः ॥ वृषनयने, स्त्री ॥

वृषवाहनः, पुं, (वृषो वाहनं यस्य ।) शिवः । इति केचित् ॥

वृषशत्रुः, पुं, ( वृषस्यासुरविशेषस्य शत्रुः । ) विष्णुः । इति त्रिकाण्डशेषः ॥

[illegible]ी, [न्] पुं, भल्लूकः । इति शब्दमाला ॥

वृषस्यन्ती, स्त्री, ( वृषं नरं शुक्रं वा इच्छति आत्मन इच्छाय । वृष + “सुप आत्मनः क्यच् ।” ३ । १ । ८ । इति क्यच् । “अश्ववृषयोर्मैथुनेच्छायाम् ।” ७ । १ । ५१ । इति सुगागमः । ततः । “लटः शतृ-शानचाविति ।” ३ । २ । १२४ । इति शतृ ।
“उगितश्च ।” ४।१।६ । इति ङीप् ।) कामुकी । इत्यमरः ॥ वृषेण सङ्गमिच्छन्ती गौः । इति व्याकरणम् ॥ तथा च ।
“वृष्यश्यं या वृषस्यन्ती मन्त्रोच्चं गौरिवागमत् ।
मन्मथाशुशुक्षण्यालम्ब्यमानमतिः पुनः ॥”
इति भट्टिः ॥

वृषा, स्त्री, मूषिकपर्णी । इत्यमरः ॥ कपिकच्छूः । इति हेमचन्द्रः ॥

वृषा, [न्] पुं, ( वर्षतीति । वृष सेचने + “कनिन् युवृषितक्षीति ।” उणा० १ । १५६ । इति कनिन् । ) इन्द्रः । ( यथा, रघुः । १० । ५२ ।
“प्राजापत्योपनीतं तत् अन्नं प्रत्यग्रहीन्नृपः ।
वृषेव पयसां सारमाविष्कृतमुदन्वता ॥” )
कर्णः । वेदशास्त्रम् । दुःखम् । इति मेदिनी ॥ वृषः । ( यथा, ऋग्वेदे । १० । ४३ । ८ ।
“वृषा न क्रुद्धः पतयत् रजःसु ॥”
“रजःसु लोकेषु वृषा न यथा वृषभः क्रुद्धः सन् प्रतिवृषभवधाय पतयत् गच्छति ।” इति तद्भाष्ये सायनः ॥ ) घोटकः । इति हेमचन्द्रः ॥ ( यथा, ऋग्वेदे । ७ । ६८ । १ ।
“आवां रथो रोदसी बद्बधानो
हिरण्ययो वृषभिर्यात्वश्वैः ॥”
“हे अश्विनौ वां रथो वृषभिः युवभिरश्वैर्युक्त आयातु ।” इति तद्भाष्ये सायनः ॥ पिता । यथा, ऋग्वेदे । ७ । २० । ५ ।
“वृषा जजान वृषणं रणाय ॥”
“वृषा सेक्ता पिता कश्यपो वृषणं कामानां वर्षितारमिन्द्रम् ।” इति तद्भाष्ये सायनः ॥ त्रि, वर्षकः । यथा, ऋग्वेदे । १० । ६७ । ७ ।
“ब्रह्मणस्पतिर्वृषभिर्वराहैः ॥”
“वृषभिर्वर्षिभिर्वराहैर्वराहारैः ।” इति तद्भाष्ये सायनः ॥ )

वृषाकपायी, स्त्री, (वृषाकपेः विष्णोः शिवस्य अग्नेरिन्द्रस्य वा भार्य्या । वृषाकपि + “वृषाकप्यग्नीति ।” ४।१।३७। इति ङीप् । ऐकारादेशश्च ।) लक्ष्मीः । गौरी । इत्यमरः ॥ स्वाहा । इति भरतः ॥ शची । इति स्वामी ॥ (यथा, ऋग्वेदे । १० । ८६ । १३ ।
“वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे ॥”
“हे वृषाकपायि कामानां वर्षकत्वादभीष्टदेशगमनाच्चेन्द्रो वृषाकपिस्तस्य पत्नि ।” इति तद्भाष्ये सायनः ॥) जीवन्ती । शतावरी । इति मेदिनी ॥

वृषाकपिः, पुं, ( “वृषः कपिरस्येति । अन्येषामपीति दीर्घः ।” इति उणा० ४ । १४३ । इत्यस्य वृत्तौ उज्ज्वलदत्तः । ) विष्णुः । ( यथा हरिवंशे । २१६ । ४७ ।
“ततो विभुः प्रवरवराहरूपधृक्
वृषाकपिः प्रसभमथैकदंष्ट्रया ॥” )
शिवः । ( यथा, हरिवंशे । ३ । ५२ ।
“वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा ॥” )
अग्निः । इति मेदिनी ॥ इन्द्रः । इति वृषाकपायीशब्दस्य शचीवाचकत्वदर्शनात् ॥ ( यथा, भागवते । ६ । १३ । १० ।
“एवं सञ्चोदितो विप्रैर्मरुत्वानहनद्रिपुम् ।
ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिम् ॥”
सूर्य्यः । यथा, महाभारते । ३ । ३ । ६१ ।
“त्वं हंसः सविता भानुरंशुमाली वृषाकपिः ॥”)

वृषाकरः, पुं, माषः । इति राजनिर्घण्टः ॥

वृषाङ्कः, पुं, ( वृषोऽङ्कोऽस्य । ) शिवः । ( यथा, भागवते । ८ । ८ । १ ।
“पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः ॥”)
साधुः । भल्लातकः । षण्ढः । इति मेदिनी ॥

वृषाङ्कजः, पुं, डमरुः । इति शब्दरत्नावली ॥

वृषाञ्चनः, पुं, ( वृषेण अञ्चति गच्छतीति । अञ्चु गतौ + ल्युः । ) शिवः । इति त्रिकाण्डशेषः ॥

वृषाण्डकः, पुं, शिवः । इति त्रिकाण्डशेषः ॥

वृषान्तकः, पुं, ( वृषस्यासुरस्यान्तकः । ) विष्णुः । इति शब्दरत्नावली ॥

वृषायणः, पुं, चटकः । इति हारावली ॥ ( वृषेण अयनं गमनं यस्य । ) शिवश्च ॥

वृषाहारः, पुं, ( वृष उन्दूर आहारो यस्य । ) विडालः । इति हारावली ॥

वृषी, [न्] पुं, मयूरः । इति शब्दमाला ॥

वृषी, स्त्री, व्रतिनां कुशादिमयासनम् । इत्यमरः ॥ ( यथा, देवीभागवते । ५ । ३४ । ३० ।
“शिष्यो ददौ वृषीं तस्मै गुरवे मोदितस्तदा ॥”)

वृषोत्सर्गः, पुं, ( वृषस्योत्सर्गः । ) अशौचान्तद्वितीयदिनादिकर्त्तव्यविमूलचक्राङ्कितवत्सतरीचतुष्टययुक्तवृषत्यागः । वृषाभावे तत्प्रतिनिधिर्यथा,—
“एकादशेऽह्नि सम्प्राप्ते वृषाभावो भवेद्यदि ।
दर्भैः पिष्टैस्तु संपाद्य तं वृषं मोचयेद्बुधः ॥
वृषोत्सर्ज्जनवेलायां वृषाभावः कथञ्चन ।
मृत्तिकाभिस्तु दर्भैर्व्वा वृषं कृत्वा विमोचयेत ॥”
इति गारुडे प्रेतकल्पे ६ अध्यायः ॥
तस्य विधिर्यथा । कालविवेकेऽप्यग्निपुराणम् ।
“एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः ।
प्रेतलोकं परित्यज्य स्वर्गलोकं स गच्छति ॥
आद्यश्राद्धे त्रिपक्षे वा षष्ठे मासि च वत्सरे ।
वृषोत्सर्गश्च कर्त्तव्यो यावन्न स्यात् सपिण्डना ।
सपिण्डीकरणादूर्द्ध्वं कालोऽन्यः शास्त्रचोदितः ॥”
यस्य प्रेतस्येति सामान्यतः श्रुतेः पितृभिन्नस्यापि वृषोत्सर्गः प्रतीयते ॥ * ॥ अथ वृषोत्सर्गं व्याख्यास्यामः । कार्त्तिक्यां पौर्णमास्यां रेवत्यामाश्वयुज्यां दशाहे गते संवत्सरेऽतीते वेति । अत्र मृततिथिमादाय संवत्सरगणना दशाहवदित्यविरोधः । एकादशाह इति आद्यश्राद्ध इति चाशौचान्तद्वितीयदिनपरम् ।
“अशौचान्ताद्द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम् ।
काञ्चनं पुरुषं तद्वत् फलवस्त्रसमन्वितम् ॥
संपूज्य द्विजदाम्पत्यं नानाभरणभूषणैः ।
वृषोत्सर्गश्च कर्त्तव्यो देया च कपिला शुभा ॥”
इति मत्स्यपुराणैकवाक्यत्वात् ॥
प्रेतवृषोत्सर्गे वृद्धिश्राद्धं न कर्त्तव्यम् ।

"नाब्दात् संवत्सरादूर्द्धं वृषोत्सर्गो विधीयते ।
सपिण्डीकरणादूर्द्धं एकादशाहं विधीयते ॥"
इत्युशनसो वचनात् ॥ * ॥
वृषलक्षणमाह कात्यायनः ।
"अव्यङ्गो जीववत्सायाः पयस्विन्याः सुतो बली ।
एकवर्णो द्विवर्णो वा यो वा स्यादष्टकासुतः ॥
यथाद्युच्चतरो यस्तु समो वा नीच एव वा ।
समावरान् चम परानुत्सृष्टत्सारयेद्वृषः ॥"
अष्टकासुतः अष्टकासु जातः । कामधेनुप्रभृतिषु मत्स्यपुराणम् ।
"चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः ।
लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत् ॥
वृष एव स मोक्तव्यो न सन्धार्य्यो गृहे वसन् ।
तदर्थमेषा चरति लोके गाथा पुरातनी ॥
एष्टव्या बहवः पुत्त्रा यद्येकोऽपि गयां व्रजेत् ।
गौरीं वाप्युद्वहेद्भार्य्यां नीलं वा वृषमुत्सृजेत् ॥"
वत्सतरीर्विशेषयति ।
"अमतो लोहिता यत्नी पार्श्वाभ्यां नीलपाण्डरे ।
पृष्ठतश्च भवेत् सत्या वृषभस्य च मोचयी ॥" * ॥
वैधकर्म्मार्थमक्षपार्श्वान्वितानयुक्तं वृषशीर्षपञ्चरात्रम् । "नवेन चित्रवर्णेन वितानं कल्पयेद्बुधः ।" अत्र च ।
"शुक्लवासाः शुचिर्भूत्वा ब्राह्मणान् स्वस्ति वाच्य च ।
कीर्त्तयेद्भारतञ्चैव तथा स्यादक्षयं हविः ॥"
इति दानधर्म्मस्थवृषोत्सर्गप्रकरणीयवचनात् अक्षयवृद्धिकामेन स्वस्तिवाचनानन्तरं भारतनामोच्चारणं कार्य्यम् ।
"यदह्ना कुरुते पापं ब्राह्मणस्त्विन्द्रियैश्चरन् ।
महाभारतमाख्याय पूर्व्वां सन्ध्यां विमुच्यति ॥"
इत्यादि-पुराणोक्त-प्रातर्म्महाभारतोच्चारणवत् राढ़देशीयास्तु विराटपर्व्व पाठयन्ति । भविष्ये ।
"वृषोत्सर्गश्च द्विविधो जीवतो वा मृतस्य च ।"
इत्युपक्रम्य ।
"चतुर्थ्यां गृह्य च पुनर्म्मौष्यं पूजयेद्गृहे ।
ग्रहांश्चैव यजेत् पश्चात् विष्णुं संपूजयेत् ततः ॥"
छन्दोगपरिशिष्टम् ।
"गोशालायां प्रवीयाग्निं संस्कृत्य श्रौचिनश्रु-
काम् ।
अग्निपूर्व्वेभ्यः सुरेभ्यो निर्व्वपेत् पायसं चरुम् ॥"
गोशालायामिति प्रधानकल्पः । वृषभ इत्युपक्रम्य ।
"उत्सृष्टयो विधानेन श्रुतिस्मृतिनिदर्शनात् ।
प्रागुदक्प्रवणे देशे मनोज्ञे निर्ज्जने वने ॥"
चरुश्रपणानन्तरं यजमान एव प्रथमं ब्रह्मवरणादिकं कुर्य्यात् तत्र ब्रह्मवरणं प्रथमतः । ज्योतिष्टोमे ब्रह्माणमुपवीतव्यत्यु इत्यादिदर्शनम् ।
गृह्यसंग्रहे ।
"दूते च व्यवहारे च प्रवृत्ते यज्ञकर्म्मणि ।
यानि पश्यन्त्युदासीनाः कर्त्ता तानि न पश्यति ।
एकः कर्म्मनियुक्तः स्यात् द्वितीयस्तन्त्रधारकः ॥
तृतीयः प्रब्रूयात् प्रश्नं ततः कर्म्म समाचरेत् ॥"

वरणानन्तरं कुशकण्डिकां समाप्य यथाविधिना चरुपाकञ्च कृत्वा चरुहोमं कुर्य्यात् । ततः स्विष्टकृद्धोममहाव्याहृतिहोमौ कार्य्यौ ॥ * ॥ ततः
"वृषस्य दक्षिणे पार्श्वे त्रिशूलाङ्कं समालिखेत् ।
तथा श्रोणीति सव्येऽस्य चक्राङ्कमपि दर्शयेत् ।
तप्तेन पश्चादयसा अस्तौ तावेव कारयेत् ॥
अथैनं कलसस्थाभिरद्भिरेको वृषेण वा ।
सर्व्वौषधिसुगन्धीभिः स्नापयेद्गलिका अपि ॥
परिधाप्याहते शुक्ले वाससी हैमपट्टकम् ।
सत्यमिश्रावितासोमसामभ्यां शिरसि न्यसेत् ॥"
ततो वृषवत्सतरीणामलङ्कारादिकं दत्त्वा विल्वबकुलनिर्म्मितयूपे उपयूपे च बद्ध्वा एतं युवानं इति मन्त्रं पठित्वा वत्सतरीचतुष्टयसहितं वृषं तत्तत्फलकामी अद्येत्यादिवाक्येनोत्सृजेत ॥ * ॥ ततो यूपाद्विसृज्य वत्सतरीचतुष्टयसहितं वृषमैशान्यां चालयित्वा प्रार्थयेत् । यथा,—
"न खादेत् परशस्यानि नाक्रामेद्गर्भिणीञ्च
गाम् ।
धर्म्मोऽसि त्वं चतुष्पादश्चतस्रस्ते प्रियास्त्विमाः ।
चतुर्णां पोषणार्थाय मयोत्सृष्टास्त्वया सह ॥
देवानाञ्च पितॄणाञ्च मनुष्याणाञ्च पोषितः ।
भूतानां तृप्तिजननात्त्वया सार्द्धं व्रजन्त्विमाः ॥
नमो ब्रह्मण्यदेवेश पितृभूतर्षिपोषक ।
त्वयि मुक्तेऽक्षया लोका मम सन्तु निरामयाः ॥
मा मे ऋणोऽस्तु दैवोऽथ पैत्रो भौतोऽथ
मानुषः ।
धर्म्मस्त्वं त्वत्प्रपन्नस्य या गतिः सास्तु मे ध्रुवा ॥
यत्किञ्चित् दुष्कृतं कर्म्म लोभमोहात् कृतं
भवेत् ।
तस्मादुद्धृत्य देवेश पितुः स्वर्गं प्रयच्छ मे ॥
यावन्ति तव लोमानि शरीरे सम्भवन्ति च ।
तावद्वर्षसहस्राणि स्वर्गे वासोऽस्तु मे पितुः ॥"
इति मत्स्यपुराणोक्तं पठेत् । तत आचाराद्वृषपुच्छगलितोदकेन ब्रह्मपुराणोक्ततर्पणं कुर्य्यात् ततः प्रकृतदक्षिणां कृत्वा कर्म्मकारयितृभ्यो दक्षिणां दद्यात् । इति वृषोत्सर्गतत्त्वम् ॥ * ॥
अपि च ।
"कार्त्तिक्यां कारयेत् पूजां यावां देवीप्रियं
सदा ।
गोत्सर्गन्तु प्रकर्त्तव्यं नीलं वा वृषमुत्सृजेत् ।
सर्व्वयज्ञफलं ब्रह्म प्राप्नुयादविचारयन् ॥
मनुरुवाच ।
अश्वमेधसमं पुण्यं वृषोत्सर्गादवाप्यते ॥
रेवत्याञ्चाश्विने मासि कार्त्तिक्यां कार्त्तिकस्य
वा ॥
गोविवाहोऽथवा कार्य्यो माघ्यां वै फाल्गुनेऽपि वा ॥
शिवोमामङ्गलञ्चैव तृतीयायां महाफलम् ।
अश्वत्थोदुम्बरीयागं विवाहविधिना भवेत् ॥
सतोरथं भवतीर्थे उत्सर्गो गोकुलेऽपि वा ।
चतस्रो वत्सिका भद्रा द्वौ वा संभवतोऽपि वा ॥
चतुर्थं सर्व्वाङ्गसंपूर्णा कन्या सा वत्सिका भवेत् ।
अलंकृत्य यथाशोभमुत्सर्गं कारयेन्मुने ॥
विवाहमेकवत्सीयमीक्षेण भवति सदा ।
तृषेण अश्वमेधस्य यागस्य फलदायकम् ।
आयरन् बहवः पुत्त्रा यद्येकोऽपि गयां व्रजेत् ।
यजेद्वा अश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥
रोहितो यस्तु वर्णेन शङ्खवर्णखुरो वृषः ।
लाङ्गलशिरसश्चैव स वै नीलवृषः स्मृतः ॥
अङ्कितोत्सृज्यते पूर्व्वं गात्राङ्कितश्च सर्व्वतः ।
तप्तेन वामतश्चक्रं याम्ये शूलं समालिखेत् ॥
धातुना हैमतारेण आयसेनाथवाङ्कयेत् ।
एवं कृत्वा अवाप्नोति फलं वाजिमखोदितम् ॥
यस्तु द्विष्टोत्सृजेद्वत्सं स लभेताविचार-
णात् ।
यथा शिवोमया अर्च्चा पूजिता सर्व्वकामदा ।
एवं देवत्रयं यष्ट्वा अनन्तं लभते फलम् ॥
मङ्गलाविष्टितं यत्र यत्र गोदानजं फलम् ।
सप्तसप्ततपस्तेन वृषोत्सर्गादवाप्नुयात् ॥"
इति देवीपुराणे पूजाविधि नामाध्यायः ॥
वृष्टिः, स्त्री, ( वृष + क्तिन् । ) मेघाज्जलबिन्दुपतनम् । तत्पर्य्यायः । वर्षम् २ । इत्यमरः ॥ गोहृतम् ३ परान्तलम् ४ वर्षणम् ५ । इति शब्दरत्नावली ॥ तत्कारणं यथा,—
"अन्नादिभये यत्र भवन्ति सर्व्वखेचराः ।
तदा वृष्टिः क्रमाज्ज्ञेया स्वस्वकेन्द्रगतैः खगैः ॥"
इति स्वरोदयः ॥ * ॥
अपि च ।
"शृणुष्व परमार्थञ्च किमिच्छादुदधिरेव च ।
सूर्य्याद्धि जायते तोयं तोयात् शस्यानि
प्राणिनः ॥
तेभ्योऽन्नानि फलान्येव तेभ्यो जीवन्ति जीविनः ।
सूर्य्यस्तत्र नीरञ्च काले तस्मात् समुद्भवः ।
सूर्य्यो मेघादयः सर्व्वे विधात्रा ते निरूपिताः ॥
यथाब्दे यो जलधरो गजश्च सागरो महत् ।
शस्याधिपो नृपो मन्त्री विधात्रा ते निरू-
पिताः ॥
जलाढ़कानां शस्यानां तृणानाञ्च निरूपितम् ।
अब्देऽब्देऽस्त्येव तत् सर्व्वं कल्पे कल्पे युगे युगे ॥
सूर्य्यो समुद्रादादाय करेण जलमीप्सितम् ।
दद्यादृणाय तद्व्याघातेन प्रेरितो घनः ।
स्थाने स्थाने प्रवर्षाञ्च काले काले यथोचितम् ॥
ईश्वरेच्छयाविर्भूतं तूर्णं भूतं प्रतिबन्धकम् ।
भूतं भव्यं भविष्यञ्च महत् क्षुद्रञ्च मध्यमम् ।
धात्रा निरूपितं कर्म्म केन तात निवार्य्यते ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २१ अः ॥
आसन्नवृष्टिसूचकानि यथा,—
"मयूराः स्तनयित्नूनां शब्देन मुदिता मुहुः ।
केकायन्ति प्रतिवने सततं वृष्टिसूचकाः ॥
मेघोत्सुकानां मधुरस्वानकानां मनोहरः ।
अयतामतिमत्तानां वृष्टिसन्निधिसूचकः ॥
गगने शक्रचापेन कृतं चाम्बुसमाश्रयम् ।
धारासारप्ररैश्चापं छित्त्वा प्रति यथोक्ततः ॥"
इति कालिकापुराणे १५ अध्यायः ॥ * ॥

वृष्टिफलं यथा,—
"पतिव्रताया वचनान्नोद्गच्छति दिवाकरः ।
सूर्य्योदयं विना नैव स्नानदानादिकाः क्रियाः ॥
नाग्नेर्विहरणञ्चैव क्रतुभावश्च जायते ।
नैवाप्यायनमस्माकं विना होमेन जायते ॥
वयमाप्यायिता मर्त्त्यैर्यज्ञभागैर्यथोदितैः ।
वृष्ट्यादिनानुगृह्णीमो मर्त्त्यान् शस्यादिसिद्धये ॥
निष्पादितास्वोषधीषु मर्त्त्या यज्ञैर्यजन्ति नः ।
तेषां वयं प्रयच्छामः कामान् यज्ञादिपूजिताः ॥
अधो हि वर्षाम वयं मर्त्त्याश्चोर्द्ध्वप्रवर्षिणः ।
तोयवर्षेण हि वयं हविर्वर्षेण मानवाः ॥
येऽस्माकं न प्रयच्छन्ति नित्या नैमित्तिकीः
क्रियाः ।
क्रतुभागं दुरात्मानः स्वयं येऽश्नन्ति लोलुपाः ॥
विनाशाय वयं तेषां तोयसूर्य्याग्निमारुतैः ।
क्षितिञ्च सन्दूषयामः पापानामपकारिणाम् ॥
दुष्टतोयादिदोषेण तेषां दुष्कृतकारिणाम् ।
उपसर्गाः प्रवर्त्तन्ते मरणाय सुदारुणाः ॥
ये चास्मान् प्रीणयित्वा तु भुञ्जते शेषमात्मना ।
तेषां पुण्यानिमान् लोकान् वितरामो महा-
त्मनाम् ॥"
इति मार्कण्डेयपुराणे पतिव्रतामाहात्म्यनामा-
ध्यायः ॥ * ॥ वृष्टिजलगुणाः ।
"गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने ।
बल्यं रसायनं मेध्यं पात्रापेक्षि च तत्परम् ॥
दिवार्ककिरणैर्जुष्टं पुष्टमिन्दुकरैर्निशि ।
अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना ॥
वर्षासु चरन्ति वनैः सर्वोरगा विषति कीट-
लूताश्च ।
तद्विषदुष्टमपेयं सजलमगस्त्योदयात् पूर्व्वम् ॥
कालेन पक्वं निर्द्दोषमगस्त्येनाविषीकृतम् ।
हंसोदकमिति ख्यातं शारदं विमलं जलम् ॥"
इति राजवल्लभः ॥ * ॥
अथ तस्य भेदाः ।
"पानीयं मुनिभिः प्रोक्तं दिव्यं भौममिति
द्विधा ।
दिव्यं चतुर्विधं प्रोक्तं धारजं करकाभवम् ॥
तौषारञ्च तथा हैमं तेषु धारं गुणाधिकम् ॥" *
तत्र धारस्य लक्षणं गुणाश्च ।
"धाराभिः पतितं तोयं गृहीतं स्फीतवाससा ।
शिलायां वसुधायां वा धौतायां पतितञ्च यत् ॥
सौवर्णे राजते ताम्रे स्फाटिके काचनिर्म्मिते ।
भाजने मृण्मये चापि स्थापितं धारमुच्यते ॥
धारनीरं त्रिदोषघ्नमनिर्देश्यं रसं लघु ।
सौम्यं रसायनं बल्यं तर्पणं ह्लादि जीवनम् ॥
पाचनं मतिकृन्मूर्च्छातन्द्रादाहश्रमक्लमान् ।
तृष्णां हरति तत् पथ्यं विशेषात् प्रावृषि
स्मृतम् ॥" *
अथ धाराजलस्य भेदौ ।
"धाराजलञ्च द्विविधं गाङ्गसामुद्रभेदतः ।"
तत्र गाङ्गसामुद्रयोर्लक्षणं गुणाश्च ।
"आकाशगङ्गासम्बन्धि जलमादाय दिग्गजाः ।
मेघैरन्तरिता वृष्टिं कुर्व्वन्तीति वचः सताम् ॥
गाङ्गमाश्वयुजे मासि प्रायो वर्षति वारिदः ।
सर्व्वथा तज्जलं पेयं तथैव चरके वचः ॥
स्थापितं हेमजे पात्रे राजते मृण्मयेऽपि वा ।
शाल्यन्नं येन संसिक्तं भवेदक्लेदिवर्णवत् ॥
तत् गाङ्गं सर्व्वदोषघ्नं ज्ञेयं सामुद्रमन्यथा ।
तत्तु सक्षारलवणं शुक्रदृष्टिबलापहम् ॥
विस्रञ्च दोषलं तीक्ष्णं सर्व्वकर्म्मसु गर्हितम् ।
सामुद्रं त्वाश्विने मासि गुणैर्गाङ्गवदादिशेत् ॥
यतोऽगस्त्यस्य विप्रर्षेरुदयात् सकलं जलम् ।
निर्म्मलं निर्व्विषं स्वादु शुक्रलं स्याददोषलम् ॥" *
अन्यच्च ।
"कुल्यारविषवातेन नागानां श्वासवारिणाम् ।
वर्षासु सविषं तोयं दिव्यमप्याश्विनं विना ॥"
इति भावप्रकाशः ।

वृष्टिनी, स्त्री, भद्रपर्णिका । इति शब्दचन्द्रिका ॥ गुजराटी सणाद्य इति भाषा । वृष्टिनाशके, त्रि ॥

वृष्टिजीवनः, पुं, ( वृष्ट्या वृष्टिर्वा जीवनं यस्मिन् ।) देवमातृकदेशः । इति हेमचन्द्रः ॥ वृष्टि जीवने, त्रि ॥

वृष्टिभूः, पुं, (वृष्टौ वर्षाकाले भूरुत्पत्तिर्यस्य ।) भेकः । इति हारावली ॥ वृष्टिभवे, त्रि ॥

वृष्णिः, पुं, ( वृष + "सृवृषिभ्यां कित् ।" उणा० ४ । ४९ । इति निः । स च कित् ।) मेषः । इत्यमरः ॥ यादवः । इति शब्दरत्नावली ॥ ( यथा, महाभारते ।५ । ७२ ।४ ।
"यथा हि सर्व्वास्वापत्सु पासि वृष्णीनरिन्दम ।
तथा ते पाण्डवा रक्ष्याः पाह्यस्मान्महतो
भयात् ॥")
कृष्णः । इति त्रिकाण्डशेषः ॥

वृष्णिः, त्रि, पाषण्डः । चण्डः । इति शब्दरत्नावली ॥

वृष्णिगर्भः, पुं, श्रीकृष्णः । इति हारावली ॥

वृष्यं, क्ली, ( वृष + "विभाषा कृवृषोः ।" ३ । १ । १२० । इति क्यप् । ) वाजीकरम् । इति राजनिर्घण्टः ॥

वृष्यः, पुं, ( वृषाय हितः । वृष + यत् । ) माषः । इति हेमचन्द्रः ॥

वृष्यः, त्रि, ( वृषाय कामुकाय हितः । वृष + "खलयवमाषेति ।" ५ ।१ ।७। इति यत् । ) शुक्रवृद्धिकारकौषधादिः । इति भावप्रकाशः ॥

वृष्यकन्दा, स्त्री, ( वृष्यं बलकारकं कन्दं यस्याः ।) विदारी । इति राजनिर्घण्टः ॥

वृष्यगन्धा, स्त्री, ( वृष्यो गन्धो यस्याः । ) वृद्धदारकः । इति शब्दरत्नावली ॥

वृष्यगन्धिका, स्त्री, ( वृष्यो गन्धो यस्याः । स्वार्थे कन् । टापि अत इत्वम् । ) अतिबला । इति राजनिर्घण्टः ॥

वृष्यवल्लिका, स्त्री, विदारी । इति राजनिर्घण्टः ॥

वृष्या, स्त्री, ऋद्धिनामौषधम् । इति रत्नमाला ॥ शतावरी । आमलकी । इति राजनिर्घण्टः ॥

वृह, वृद्धौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-अक०-सेट् । ) वर्हति । वृहिर्बृंहत्योरित्यनेनैवेष्टसिद्धेरस्य पाठो वृद्धौ इरनुबन्धवर्ज्जनार्थः । किन्तु अनेनैवेष्टसिद्धे तत्र ऋद्धि ग्रहणं परस्मैपदार्थमेव । अयं धातुः कैश्चिन्न मन्यते । इति दुर्गादासः ॥

वृह, इ ध्वने । वृद्धौ । सप्तमस्वरी ॥ ( भ्वा०-पर०-अक०-सेट् ।) इ, वृंहति । वृंहिरे गजपतयः । इति माघः ॥ आत्मनेपदं प्रमादादिति वल्लभः ॥ अगर्च्चति हस्तिकर्त्तृकः । वृंहितं करिगर्जितमित्यमरसिंहात् । वृंहितं करिगर्जायां शब्दमात्रेऽपि कथ्यते । इति शब्दमहार्णवात् । कदाचिदन्यकर्तृकोऽपि । तेन श्रीहर्षचरिते सिंहवृंहितमिति वाणभट्टप्रयोगः । इति दुर्गादासः ॥

वृह, इ कि त्विषि । इति कविकल्पद्रुमः ॥ (चुरा०-पक्षे भ्वा०-पर०-अक०-सेट् । ) सप्तमस्वरी । इ, वृंहति । कि, वृंहयति वृंहति । इति दुर्गादासः ॥

वृह, इ ङ वृद्धौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-अक०-सेट् । ) इ, वृंह्यते । ङ, वृंहते । इति दुर्गादासः ॥

वृह, इर् ध्वने । वृद्धौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-अक०-सेट् । ) इर्, अवृहत् । अवर्हीत् । ध्वनः शब्दः । ऋद्धिर्वृद्धिः । इति दुर्गादासः ॥

वृह, श ऊ उद्यमे । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-अक० वेट् ।) श, वृहति । ऊ, अवर्हीत् । अवृक्षत् । इति दुर्गादासः ॥

वृ(बृ)हच्चञ्चुः, पुं ( वृहती चञ्चुः शाकविशेषः ।) महाचञ्चुशाकः । इति राजनिर्घण्टः ॥ (वृहती चञ्चुर्यस्येति दीर्घचञ्चुयुक्ते, त्रि ॥)

वृ(बृ)हच्चित्तः, पुं, फलपूरः । इति शब्दचन्द्रिका ॥

वृ(बृ)हच्छल्कः, पुं, (वृहत् शल्को यस्य ।) चिङ्गटमत्स्यः । इति जटाधरः ॥

वृ(बृ)हज्जीवन्ती, स्त्री, वृहज्जीवन्तिकाक्षुपः । तत्पर्य्यायः । पत्रभद्रा २ प्रियङ्करी ३ मधुरा ४ जीवपुष्टा ५ वृहज्जीवा ६ यशस्करी ७ । अस्याः गुणाः । वहुवीर्य्यदातृत्वम् । भूतविद्रावणत्वम् । वेगादस्तियामकत्वञ्च । इति राजनिर्घण्टः ॥

वृ(बृ)हड्ढक्का, स्त्री, ( वृहती ढक्का । ) ढक्काविशेषः । यथा,—
"वृहड्ढक्का तु भेरी स्त्री पुमान् दुन्दुभिरा-
नकः ।
दगड़ः प्रतिपत्तूर्य्यमानकः पटहोऽस्त्रियाम् ॥"
इति जटाधरः ॥

वृ(बृ)हतिका, स्त्री, (वृहती + "इवत्या आच्छादने ।" ५ । ४ ।६। इति स्वार्थे कन् ।) उत्तरीयवस्त्रम् । इत्यमरः ॥ वृहती । इति रत्नमाला ॥

वृ(बृ)हती, स्त्री, ( वृहत् + गौरादित्वात् ङीष् । ) क्षुद्रवार्त्ताकी । व्याकुड़ इति भाषा । तत्पर्य्यायः । महती २ कान्ता ३ वार्त्ताकी ४ सिंहिका ५

कुली ६ राष्ट्रिका ७ स्थूलकण्टा ८ भण्टाकी ९ महोटिका १० बहुपर्णी ११ कण्टतनुः १२ कण्टालुः १३ कटुफला १४ कोलघ्नी १५ वनवृन्ताकी १६ । इति राजनिर्घण्टः ॥ सिंही १७ प्रसहा १८ रक्तपाकी १९ लताहतिका २० । इति रत्नमाला ॥ अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । वातज्वरारोचकामकासश्वासहृद्रोगनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।

"बृहती पाचनी सोष्णा ग्राहिणी वातनाशिनी ॥"

इति राजवल्लभः ॥ * ॥

महती । इत्यमरः ॥ ( इयन्तु नारदस्य वीणा । केचित्तु विश्वावसोर्गन्धर्व्वराजस्य वीणां बृहतीमाहुः । तथा च ।

"विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती ।
महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी ॥"

इति माघटीकायां मल्लिनाथधृतवैजयन्ती । १ । १० ॥ * ॥ ) उत्तरीयवस्त्रम् । वारिधानी । वाक् ॥ कण्टकारी । इति मेदिनी ॥ ( मर्म्मस्थानविशेषः । यथा, सुश्रुते । ३ । ६ ।

"स्तनमूलादुभयतः पृष्ठवंशस्य बृहती नाम तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्रियते ॥") छन्दोभेदः । स तु नवाक्षरपादः । यथा,—

"उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुपूर्व्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेव च ॥

इत्यादि । सङ्केतनाम्नि । बृहती नवाक्षरा यथा, भुजगशिशुसृता नौ मः ।

हृदतटनिकटक्षोणी भुजगशिशुसृता यासीत् ।
सुररिपुदलिते नागे व्रजजनसुखदा साभूत् ॥

मुनेत्थं शम्भुप्रभृतिषु पाठः । अतश्चैवमाधुनिकाः पठन्ति । स्थानमिममध्यं वेद्गमताः ।
कालियभोगाभोगगतस्तन्मणिमध्यस्फीतरुचा ।
चित्रपदा भो नन्दसुतश्चारु ननर्त्त स्वैरतरः ॥
सकरैर्भुजङ्गसङ्गता ।
तरला तरङ्गरिङ्गितैर्यमुना भुजङ्गसङ्गता ।
कथमेतु वल्लवारकचपलः सदैव तां हरिः ॥"

इति छन्दोमञ्जरी ॥

बृ(वृ)हतीपतिः, पुं, ( बृहतीनां वाचां पतिः । ) बृहस्पतिः । इति हेमचन्द्रः ॥

बृ(वृ)हत्, त्रि, (बृंह वृद्धौ + "वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ।" उणा० २।८४। इति अतिप्रत्ययेन निपातनात् साधु ।) महत् । इत्यमरः ॥ ( यथा, माघे । २ । १० ।

"बृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति ।
संभूयाम्भोधिमभ्येति महानद्या नगापगा ॥")

बृ(वृ)हत्कः, त्रि, ( बृहत्प्रकारः । बृहत् + "चञ्चद्बृहतोरुपसंख्यानम् ।" ५।४।३। इत्यस्य वार्त्तिकोक्त्या कन् ।) बृहत् । बृहच्छब्दात् कन्प्रत्ययेन निष्पन्नमिदम् ॥

बृ(वृ)हत्कन्दः, पुं, (बृहन् कन्दो यस्य ।) गृञ्जनः । इति रत्नमाला ॥ विष्णुकन्दः । इति राजनिर्घण्टः ॥

बृ(वृ)हत्कालशाकः, पुं, ( बृहन् महान् कालशाकः । ) शोथघ्नः । इति त्रिकाण्डशेषः ॥ बृहत्कालकासुन्दिया इति भाषा ॥

बृ(वृ)हत्काशः, पुं, ( बृहन् काशः । ) खड्गटः । इति हारावली ॥ खागड़ा इति भाषा ॥

बृ(वृ)हत्कुक्षिः, त्रि, (बृहन् कुक्षिर्यस्य ।) तुन्दिलः । इत्यमरः ॥

बृ(वृ)हत्तालः, पुं, ( बृहन् तालः । ) हिन्तालः । इति राजनिर्घण्टः ॥

बृ(वृ)हत्तिक्ता, स्त्री, ( बृहन् तिक्तो यस्याः । ) पाठा । इति राजनिर्घण्टः ॥

बृ(वृ)हत्तृणः, पुं, वंशः । इति शब्दचन्द्रिका ॥ ( क्वचित् क्लीवेऽपि दृश्यते ॥ )

बृ(वृ)हत्त्वक्, [च्] पुं, (बृहती त्वक् यस्य ।) [illegible]वृक्षः । इति रत्नमाला ॥ छातियान् इति भाषा ॥

बृ(वृ)हत्पत्रः, पुं, ( बृहत्पत्रं यस्य । ) हस्तिकन्दः । इति राजनिर्घण्टः ॥

बृ(वृ)हत्पत्रा, स्त्री, (बृहत्पत्रं यस्याः ।) त्रिपर्णिका । इति राजनिर्घण्टः ॥

बृ(वृ)हत्पाटलिः, पुं, धुस्तूरः । इति त्रिकाण्डशेषः ॥

बृ(वृ)हत्पादः पुं. (बृहन् पादो यस्य ।) वटवृक्षः । इति शब्दचन्द्रिका ॥

बृ(वृ)हत्पारेवतं, क्ली, ( बृहत् महत् पारेवतम् । ) महापारेवतम् । इति राजनिर्घण्टः ॥

बृ(वृ)हत्पाली, [न्] पुं, वनजीरः । इति राजनिर्घण्टः ॥

बृ(वृ)हत्पीलुः, पुं, ( बृहन् पीलुः । ) महापीलुः । इति राजनिर्घण्टः ॥

बृ(वृ)हत्पुष्पी, स्त्री, (बृहत् पुष्पं यस्याः । ङीष् ।) घण्टारवा । इति जटाधरः ॥

बृ(वृ)हत्फलः, पुं, ( बृहत् फलं यस्य । ) चिचेण्डा । इति राजनिर्घण्टः ॥

बृ(वृ)हत्फला, स्त्री, ( बृहत् फलं यस्याः । ) कटुतुम्बी । महेन्द्रवारुणी । कुष्माण्डी । महाजम्बूः । इति राजनिर्घण्टः ॥

बृ(वृ)हदङ्गः, पुं, (बृहदङ्गं यस्य ।) मतङ्गजः । इति शब्दचन्द्रिका ॥

बृ(वृ)हदम्लः, पुं, (बृहन् अम्लो यस्य ।) रुजाकरः । इति शब्दचन्द्रिका ॥ कामराङ्गा इति भाषा ॥

बृ(वृ)हदेला, स्त्री, (बृहती एला ।) स्थूलैला । इति राजनिर्घण्टः ॥

बृ(वृ)हद्गृहः, पुं, ( बृहद्गृहं यत्रास्ति । ) कारूषदेशः । स तु विन्ध्यपर्व्वतस्य पश्चात् मालवदेशस्य निकटे वर्त्तते । इति हेमचन्द्रः ॥ त्रिकाण्डशेषे बृहद्गृह इति पाठः ॥

बृ(वृ)हद्गोलं, क्ली, ( बृहत् गोलं गोलाकारफलं यस्य । ) शीर्णवृन्तम् । इति शब्दचन्द्रिका ॥ तरमुज इति भाषा ॥

बृ(वृ)हद्दलः, पुं, (बृहद्दलं यस्य ।) पट्टिकालोध्रः । हिन्तालः । इति राजनिर्घण्टः ॥

बृ(वृ)हद्धलं, क्ली, (बृहत् हलं यस्य ।) महालाङ्गलम् । तत्पर्य्यायः । हलिः २ । इति त्रिकाण्डशेषः ॥

बृ(वृ)हद्बीजः, पुं, (बृहत् बीजं यस्य ।) आम्रातकः । इति शब्दचन्द्रिका ॥

बृ(वृ)हद्भट्टारिका, स्त्री, दुर्गा । इति शब्दमाला ॥

बृ(वृ)हद्भानुः पुं, (बृहन् भानू रश्मिर्यस्य ।) अग्निः । (यथा, महाभारते । १ । २२० । ८ ।

"तपसश्च मनुं पुत्त्रं भानुश्चाप्यङ्गिराः सृजत् ।
बृहद्भानुन्तु तं प्राहुर्ब्राह्मणा वेदपारगाः ॥")

चित्रकवृक्षः । इत्यमरः ॥ ( सत्यभामापुत्त्रः । यथा, भागवते । १० । ६१ । १० ।

"चन्द्रभानुर्बृहद्भानुरतिभानुस्तथाष्टमः ॥"

सत्यायनपुत्त्रः । यथा, भागवते । ८ । १३ । ३५ ।

"सत्यायनस्य तनयो बृहद्भानुस्तदा हरिः ॥"

पृथुलाक्षस्य पुत्त्रः । यथा, भागवते । ९ । २३ । ११ ।

"चतुरङ्गो रोमपादात् पृथुलाक्षस्तु तत्सुतः ।
बृहद्रथो बृहत्कर्म्मा बृहद्भानुश्च तत्सुताः ॥"

बृहद्दीप्तिविशिष्टे, त्रि । यथा, ऋग्वेदे । १ । ३६ । १५ ।

"बृहद्भानो यविष्ठ्य ॥"

"हे अग्ने हे बृहद्भानो बृहन्तो भानवो यस्य तादृश ।" इति तद्भाष्ये सायणः ॥ )

बृ(वृ)हद्रथः, पुं, (बृहन् रथो यस्य ।) इन्द्रः । यज्ञपात्रम् । मन्त्रविशेषः । सामवेदांशः । नदीविशेषे, स्त्री । इति केचित् ॥ ( तिग्मपुत्त्रः । यथा, मात्स्ये । ५० । ८५ ।

"तिग्माद्बृहद्रथो भावी वसुदामा बृहद्रथात् ॥"

शतधन्वपुत्त्रः । यथा, भागवते । १२ । १ । १३ ।

"शतधन्वा ततस्तस्य भविता तद्बृहद्रथः ॥"

देवरातपुत्त्रः । यथा, भागवते । ९ । १३ । १५ ।

"तस्माद्बृहद्रथस्तस्य महावीर्य्यः सुधृतिपिता ॥"

तिमिराजपुत्त्रः । यथा, तत्रैव । ९ । २२ । ४३ ।

"तिमेर्बृहद्रथस्तस्मात् शतानीकः सुदासजः ॥"

पृथुलाक्षस्य पुत्त्रः । यथा, तत्रैव । ९ । २३ । ११ ।

"बृहद्रथो बृहत्कर्म्मा बृहद्भानुश्च तत्सुताः ॥"

प्रभूतरथे, त्रि । यथा, ऋग्वेदे । ५ । ८० । २ ।

"बृहद्रथा बृहती विश्वमिन्वा ।"

"बृहद्रथा प्रभूतरथा ।" इति तद्भाष्ये सायणः ॥)

बृ(वृ)हद्वादी, [न्] पुं, (बृहदतिशयं वदतीति । वद + णिनिः । ) क्षुद्रोलूकः । इति राजनिर्घण्टः ॥

बृ(वृ)हद्वल्कः, पुं, ( बृहद्वल्कः वल्कलं यस्य । ) पट्टिकालोध्रः । इति राजवल्लभः ॥

बृ(वृ)हद्वातः, पुं, (बृहन् वातो यस्मात् ।) अश्मरीहरः । इति रत्नमाला ॥ देधान इति भाषा ॥

बृ(वृ)हद्वारुणी, स्त्री, महेन्द्रवारुणी । इति राजनिर्घण्टः ॥

बृ(वृ)हन्नलः, पुं, ( बृहन् नलः ।) महापोटगलः । इति मेदिनी ॥ अर्ज्जुनः । यथा,—

"पार्थः किरीटी गाण्डीवी गुडाकेशो बृहन्नलः ।
अर्ज्जुनः फाल्गुनो जिष्णुर्विजयश्च धनञ्जयः ॥

(वेदा वदने यस्येति विग्रहे ब्रह्मणि, पुं। यथा, देवीभागवते। ७। ३०। ८१।
"गायत्री वेदवदने पार्व्वती शिवसन्निधौ॥")

वेदवासः, पुं, (वेदानां वासो यस्मिन्।) ब्राह्मणः। इति शब्दरत्नावली॥

वेदवित्, [द्] पुं, (वेदान् वेत्तीति। विद्+क्विप्।) विष्णुः। यथा,—
"वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः॥"
इति तस्य सहस्रनामस्तोत्रम्॥
वेदज्ञे, त्रि। (यथा, मनुः। २। ७८।
"एतदक्षरमेतां च जपन् व्याहृतिपूर्व्विकाम्।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते॥")

वेदव्यासः, पुं, (वेदं व्यस्यति पृथक् करोतीति। वि+अस्+अण्। निरुक्तिस्तु परत्र द्रष्टव्या।) मुनिविशेषः। तत्पर्य्यायः। माठरः २ द्वैपायनः ३ पाराशर्य्यः ४ कानीनः ५ बादरायणः ६ व्यासः ७। इति हेमचन्द्रः॥ कृष्णद्वैपायनः ८ सत्यभारतः ९ पाराशरिः १० सात्यवतः ११। इति त्रिकाण्डशेषः॥ बादरायणिः १२ सत्यवतीसुतः १३ सत्यरतः १४ पाराशरः १५। इति शब्दरत्नावली॥ (यथा, विष्णुपुराणे।
"वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर्विभुः।
करोति बहुलं भूयो वेदव्यासस्वरूपधृक्।
द्वापरे तु युगे विष्णुर्व्यासरूपी महामुने।
वेदमेकं स बहुधा कुरुते जगतो हितः॥
यथा च कुरुते तस्य वेदमेकं पृथक् प्रभुः।
वेदव्यासाभिधाना तु सा सा मूर्त्तिर्मधुद्विषः॥")
अस्यान्यत् विवरणं व्यासशब्दे द्रष्टव्यम्॥

वेदाग्रणीः, स्त्री, (वेदानामग्रणीः।) सरस्वती। इति राजनिर्घण्टः॥

वेदाङ्गं, क्ली, (वेदस्य अङ्गम्।) श्रुत्यवयवषट्प्रकारशास्त्रम्। तद्यथा। शिक्षा १ कल्पः २ व्याकरणम् ३ निरुक्तम् ४ ज्योतिषम् ५ छन्दः ६। यदुक्तम्।
"शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गणः।
छन्दोविचितिरित्येतैः षडङ्गो वेद उच्यते॥" इति॥
तत्र अकारादिवर्णानां स्थानकरणप्रयत्नबोधिका अकुहविसर्ज्जनीयाः कण्ठ्या इत्यादिका शिक्षा। यागक्रियाणामुपदेशः कल्पः। साधुशब्दान्वाख्यानं व्याकरणम्। वर्णागमो वर्णविपर्य्ययश्च इत्यादिना निश्चयेनोक्तं निरुक्तम्। ग्रहण्यादिगणनशास्त्रं ज्योतिः। श्रुतिच्छन्दसां प्रज्ञापकं शास्त्रं छन्दोविचितिः। इत्यमरभरतौ॥ (यथा, मनुः। ४। ९८।
"वेदाङ्गानि च सर्व्वाणि कृष्णपक्षेषु सम्पठेत्॥")

वेदादि, क्ली, (वेदानामादि। "क्वचिदौपचारिकाः शब्दाः स्वलिङ्गमपि त्यजन्तीति" न्यायादस्य क्लीवत्वम्।) प्रणवम्। यथा,—
"वेदादि भुवनेशीञ्च श्रीबीजं द्वयुतं भृगुम्।
कारयित्वा षडेकार्णं शुक्रस्य च मनूत्तरम्॥"
इति रुद्रयामलम्॥
(वेदस्य पूर्व्वं, पुं। यथा, तैत्तिरीयारण्यके।
"यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः॥")

वेदादिबीजं, क्ली, (वेदस्यादौ प्रयुक्तं बीजम्।) प्रणवम्। यथा,—
"वेदादि भुवनेशीञ्च श्रीबीजं द्वयुतं भृगुम्।
कारयित्वा षडेकार्णं शुक्रस्य च मनूत्तरम्॥
ॐ ह्रीँ श्रीशुक्राय। इति रुद्रयामलम्॥
"वेदादिबीजं ह्रूँ बीजं क्लीँबीजं तन्निकेतनम्।
शक्तिबीजं रमाबीजं मायाबीजं सुधाकरम्॥"
इति राजराजेश्वरीतन्त्रम्॥

वेदाधिपः, पुं, (वेदानामधिपः।) चतुर्व्वेदाधिपतिग्रहः। यथा,—
"ऋग्वेदाधिपतिर्जीवो यजुर्व्वेदाधिपः सितः।
सामवेदाधिपो भौमः शशिजोऽथर्व्ववेदराट्॥"
इति ज्योतिस्तत्त्वम्॥

वेदान्तः, पुं, (वेदानां अन्तः।) उपनिषत्। इति हेमचन्द्रः। वेदव्यासप्रणीतदर्शनशास्त्रविशेषोऽपि। यथा। वेदान्तो नाम उपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च। इति परमहंसपरिव्राजकाचार्य्यश्रीसदानन्दयोगीन्द्रविरचितवेदान्तसारः॥ *॥ "इदानीं सर्व्वस्यापि वस्तुविचारोद्देशपूर्व्वकत्वात् प्रतिज्ञातं वेदान्तं नामतो निर्दिशति वेदान्त इति। उपनिषद एव प्रमाणं उपनिषत्-प्रमाणम्। उपनिषदो यत्र प्रमाणमिति वा। तदुपकारीणि वेदान्तवाक्यसंग्राहकाणि शारीरकसूत्रादीनि च। शरीरमेव शारीरं तत्र भवो जीवः शारीरकः स सूत्र्यते याथातथ्येन निरूप्यते यैः, तानि शारीरकसूत्राणि 'अथातो ब्रह्मजिज्ञासा' इत्यादीनि। आदिशब्दो भाष्यादिसंग्रहार्थः। चशब्दो वेदान्तशब्दानुषङ्गार्थः। यद्वा शारीरकसूत्राणि तद्व्याख्यानादिवेदान्तार्थसंग्रहवाक्यानि। 'अथातो ब्रह्मजिज्ञासा' इत्यादिसूत्राणीति। आदिशब्देन भगवद्गीताध्यात्मशास्त्राणि गृह्यन्ते। तेषामपि उपनिषच्छब्दवाच्यत्वादिति भावः।" इति श्रीनृसिंहसरस्वतीकृता तट्टीका सुबोधिनी॥ अस्य नामान्तरं उत्तरमीमांसा। तत्र चत्वारः अध्यायाः। तेषु ब्रह्मनिरूपणम्। तद्विवरणं यथा,—
"अव्यक्तादेकमभूदव्यक्तादात्मका ततः प्रजासर्गः।
मायामयी प्रकृतिः संह्रियते पुनः पुनः क्रमशः॥
मायामयोऽप्यचेता गुणकरणगणः करोति कर्म्माणि।
तदधिष्ठाता देही सचेतनोऽपि न करोति किञ्चिदपि॥
यद्वदचेतनमपि सन्निकटस्थे भ्रामके भ्रमति लौहम्।
तद्वत् करणसमूहश्चेष्टति चिदधिष्ठिते देहे॥
यद्वत् सवितर्य्युदिते करोति कर्म्माणि जीवलोकोऽयम्।
न च तानि करोति रविर्न कारयति तद्वदात्मापि॥
मनसोऽहंकारविमूर्च्छितस्य चैतन्यबोधिस्थेह
गुणवाभिमानसुखदुःखभावना भवति मूढस्य।
कर्त्ता भोक्ता द्रष्टाहं कर्म्मणामुत्तमाधीनाम्।
इति तत्स्वभावविमतोऽभिमन्यते सर्व्वगोऽप्यात्मा।
नानाविधवर्णानां वर्णान् धत्ते यथामलस्फटिकः।
तद्वदुपाधिगुणाभावितस्य भावं विभुर्धत्ते॥
गच्छति गच्छति सलिले दिनकरबिम्बं स्थिते स्थितिं याति।
अन्तःकरणे गच्छति गच्छत्यात्मापि तद्वदिह॥
राहुग्रस्तोऽपि यथा शशिबिम्बः प्रकाशते जगति।
सर्व्वगतोऽपि तथात्मा बुद्धिस्थो दृश्यतामेति॥
आदर्शे मलरहिते यद्वद्रूपं विभाव्यते लोकैः।
आलोकयति तथात्मा विशुद्धबुद्धौ स्वमात्मानम्॥
सर्व्वगतं तत् निरुपममद्वैतं तच्च चेतसा गम्यम्।
यद्बुद्धिगतं बन्धोपलभ्यते शिष्यबोधार्थं तत्॥
बुद्धिमनोऽहंकारास्तन्मात्रेन्द्रियगणाः सभूतगणाः।
संसारसर्गपरिरक्षणक्षमाः प्राकृता ज्ञेयाः॥
धर्म्माधर्म्मौ सुखदुःखकल्पना स्वर्गनरकवासश्च।
उत्पत्तिनिधनवर्णाश्रमा न सन्तीह परमार्थे॥
मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम्।
तैमिरिकचन्द्रयुगवत् भ्रान्तं निखिलं जगद्रूपम्॥
यद्वद्दिनकर एको विभाति सलिलाशयेषु सर्व्वेषु।
तद्वत् सकलोपाधिष्ववस्थितो भाति परमात्मा॥
खमिव घटादिष्वन्तर्बहिःस्थितं ब्रह्म सर्व्वपिण्डेषु।
देहोऽहमित्यनात्मनि बुद्धिः संसारबन्धाय॥
सर्व्वविकल्पनहीनः शुद्धोऽबुद्धोऽजरोऽमरः शान्तः।
अमलः सकृद्विभातश्चेतन आत्मा खवद्व्यापी॥
रसपाकितशर्करिका गुडखण्डा विकृतयो यथैवेक्षोः।
तद्वदवस्थाभेदाः परमात्मन्येव बहुरूपाः॥
विज्ञानान्तर्यामिप्राणविराड्देहजातिपिण्डान्ताः।
व्यवहारस्यात्मन एतेऽवस्थाविशेषाः स्युः॥
रज्ज्वां नास्ति भुजङ्गः सर्पभयं भवति चेतुनाकेन।
तद्वदविकल्पभ्रान्तिरविद्या न सत्यमिदम्॥
एतत्तदन्धकारं यदनात्मन्यात्मताभ्रान्त्या।
न विदन्ति वासुदेवे सर्व्वात्मानं नरा मूढाः॥
प्राणाद्यनन्तभेदैरात्मानं संविसत्य जालमिव।
संहरति वासुदेवः स्वविभूत्या क्रीडमान इव॥
त्रिभिरेव विश्वतैजसप्राज्ञैस्तैरादिमध्यनिधनाख्यैः।
जाग्रत्स्वप्नसुषुप्तैर्भ्रमभूतैश्छादितं तुर्य्यम्॥
मोहयतीवात्मानं स्वमायया द्वैतरूपया देवः।
उपलभते स्वयमेव गुहागतं पुरुषमात्मानम्॥

वेदाभ्यासः, पुं, ( वेदस्य अभ्यासः । ) वेदानुशीलनम् । स च पञ्चविधः । यथा, दक्षः ।
"द्वितीये च तथा भागे वेदाभ्यासो विधीयते ।
वेदाभ्यासो हि विप्राणां परमं तप उच्यते ॥
अध्ययनपरं चैव यज्ञकर्म्मस्थितश्च यः ।
वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः ।
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥
प्रतिलिप्तिनौ । न वेदमनधीत्याप्यो विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः ॥" इत्याह्निकतत्त्वम् ॥

वेदि, स्त्री, ( विद् + इन् । ) अभ्यस्ता । इति शब्दचन्द्रिका ॥

वेदिः, स्त्री, ( विन्दति पुण्यमस्यामिति । विद् + "कृपिविवहिन्दतिविदीति ।" उणा० ४ । ११८ । इति इन् । ) परिष्कृता भूमिः । इत्यमरः ॥ परिष्कृता यज्ञार्थं पशुबन्धनाय यज्ञपात्राधारणाय चातिसंस्कारा भूमिर्वेदिरुच्यते । सा च डमरुकाकाराकारा पिण्डिका । वेदयन्ति निवारयन्ति इयजातं वेदिः । विद ३ क न चेतनाख्याने वाववादे नाम्नीति इः । वेदिः स्त्री वेदी च । इति भरतः ॥ (यथा, रघुः । ११ । २५ ।
"वीक्ष्य वेदिमथ रक्तबिन्दुभिः-
र्बन्धुजीवपृथुभिः प्रदूषिताम् ॥")
अङ्गुलिमुद्रा । इति मेदिनी ॥ ( यज्ञोपकरणविशेषः । यथा, भागवते । १० । ४१ । २१ ।
"वैदूर्य्यवज्रामलनीलविद्रुमैः
मुक्ताहरिद्भिर्वलभीषु वेदिषु ॥")

वेदिः, पुं, ( वेत्तीति । विद् + इन् । ) पण्डितः । इति मेदिनी ॥

वेदिका, स्त्री, ( वेदिरेव । स्वार्थे + कन् ।) मङ्गलकर्म्मार्थं निर्म्मितवेदिः । तत्पर्य्यायः । वितर्द्दिः २ । इत्यमरः ॥ वितर्द्दी ३ वेदिः ४ वेदी ५ । इति तट्टीका ॥ द्वे आरामाङ्गनादिमध्यस्थवेदिकायाम् । देवागारादौ काष्ठादिचतुष्किकायामित्यन्ये । दारुपरिष्कृता चतुरस्रा विश्रामभूमिर्वितर्द्दिरित्यपरे । स्तम्भसंलग्नपीठिका वितर्द्दिरिति केचित् । मङ्गल्याङ्गनमध्यस्थचतुष्ककेति केचित् । मङ्गलस्नानार्थं निर्म्मितवेदिकेति केचित् । अशुभं वितर्दयति वितर्द्दिः । तर्द हिंसे नाम्नीति इः । वेदिका स्वाच्छर्य्यात् स्त्री इदन्तत्वात् पक्षे ईप् वितर्द्दी च । वितर्द्दिः काष्ठलोष्ट्री स्यादिति रत्नं । विनर्द्दिरपीति मधुः । विदन्ति विद्यते वा अस्यामिति वेदिः पूर्व्ववत् स्वार्थे कः । अतएव वेदिर्वेदी च । इति भरतः ॥ ( यथा, कुमारे । ३ । ४४ ।
"स देवदारुद्रुमवेदिकायां
शार्द्दूलचर्म्मव्यवधानवत्याम् ॥")

वेदिजा, स्त्री, ( वेद्या जायते इति । जन + डः । ) द्रौपदी । इति हेमचन्द्रः ॥

वेदितः, त्रि, ज्ञापितः । ज्ञान्तविदधातोः क्तप्रत्ययेन निष्पन्नमिदम् ॥

वेदितव्यं, त्रि, (विद + तव्य । ) वेद्यम् । ज्ञातव्यम् । यथा,—
"आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥"
इति तिथ्यादितत्त्वम् ॥

वेदिता, [ऋ] त्रि, ( विद + तृच् । ) ज्ञाता । तत्पर्य्यायः । विदुरः २ विन्दुः ३ । इति हेमचन्द्रः ॥ यथा, महाभारते । ५ । ४३ । ५२ ।
"न वेदानां वेदिता कश्चिदस्ति
वेदेन वेदं न विदुर्न वेद्यम् ॥")

वेदी, [न्] पुं, ( वेत्तीति । विद् + णिनिः । ) पण्डितः । इति शब्दरत्नावली ॥ ब्रह्मा । इति केचित् ॥ ज्ञातरि, त्रि ॥ ( यथा, रघुः । ८ । २७ ।
"न पराङ्मुखगतेरयोध्यनो
पितुरहिन्न सदर्थवेदिभिः ॥" )

वेदी, स्त्री, ( वेदि + कृदिकारादिति वा ङीष् । ) वेदिः । इत्यमरटीकायां भरतः ॥ सरस्वती । इति शब्दमाला ॥

वेदीशः, पुं, ( वेदीनां पण्डितानामीशः । ) ब्रह्मा । इति त्रिकाण्डशेषः ॥

वेदोक्तः, त्रि, ( वेदे उक्तः । ) श्रुतिकथितः । यथा,
"वेदोक्तमेव कुर्व्वाणो निःसङ्गोऽर्पितमीश्वरे ।
नैष्कर्म्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥"
इति मलमासतत्त्वम् ॥

वेदोदयः, पुं, (वेदः विषयज्ञानमुदये यस्य ।) सूर्य्यः । इति त्रिकाण्डशेषः ॥

वेदोदितः, त्रि, (वेदे उदितः ।) वेदोक्तः । यथा,—
"वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥"
इति मलमासतत्त्वम् ॥

वेद्यं, त्रि, ( विद् + ण्यत् । ) वेदितव्यम् । यथा,—
"धर्म्मः प्रोज्झितकैतवोऽत्र परमो निर्म्मत्सराणां सताम्
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किंवा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥"
इति श्रीभागवते १ स्कन्धे १ अध्यायः ॥
( धनाय हितम् । यथा, ऋग्वेदे । २ । २ । ३ ।
"रथमिव वेद्यं शुक्रशोचिषमग्निम् ।"
"वेद्यं वेदो धनम् । तस्मै हितम् ।" इति तद्भाष्ये सायणः ॥ स्तुत्यम् । तथा, तत्रैव । ५ । १५ । १ ।
"प्रवेधसे कवये वेद्याय गिरम् ।"
"वेद्याय स्तुत्याय ।" इति तद्भाष्ये सायणः ॥ लभ्यम् । यथा, वाजसनेयसंहितायाम् । १८ । ११ ।
"वित्तं च मे वेद्यञ्च मे ।"
"वेद्यं लभ्यम् ।" इति तद्भाष्ये महीधरः ॥ वेदाय हितमिति । वेद + यत् । वेदहितम् । वेदप्रतिपाद्यम् । यथा, महाभारते ।१३।१५८।२६।
"वेद्यञ्च यत् वेदयते च वेद्यं
विधिश्च यश्चाश्रयते विधेयम् ।
धर्म्मे च वेदे च बले च धर्म्मं
चराचरं केशवं त्वं प्रतीहि ॥")

वेधः, पुं, ( विध + घञ् । ) वेधनम् । बँधा इति भाषा । तत्पर्य्यायः । व्यधः २ । इत्यमरः ॥ ( यथा, महाभारते । १२ । १६८ । ३६ ।
"बाणवेधे परं यत्नमकरोच्चैव गौतमः ॥")
गभीरता । गहरा इति चाड़ा इति च भाषा ॥ यथा,—
"गणयित्वा विस्तारं बहुषु स्थानेषु तद्युतिर्भाज्या ।
स्थानकमित्यासमितिरेवन्दैर्घ्ये च वेधे च ॥
विस्तरदैर्घ्यं वेधगुणं स्याद् घनहस्तसंख्या स्यात् ।"
इति लीलावत्यां खातव्यवहारः ॥ * ॥
अथ सप्तशलाकवेधः ।
"कृत्तिकादिचतुःसप्तरेखाराशौ परिभ्रमन् ।
यच्चैकरेखास्थो वेधः सप्तशलाकजः ॥"
इति दीपिका ॥ * ॥
अथ खार्ज्जूरवेधः ।
"एकाङ्गुलतो ऽथोर्द्ध्वं तथा निम्नगताः स्थापयेत्
रेखाश्चक्रमिदं बुधैरभिहितं खार्ज्जूरिकं तत्र तु ।
चाचाताहि तु कृष्णि भयं कथितं तत्रैकरेखास्थयोः
सूर्य्याचन्द्रमसोर्मिथो निगदितो वृक्षपात एकार्गलः ॥"
इति रत्नमाला ॥ * ॥
अथ युतवेधः ॥
"पापात् चन्द्रमसः सप्ती यदि भवेत् पापेन वा संयुतो
यत्नात्तं परिवर्ज्जयेत् शुभमतो दोषो ह्ययं कथ्यते ॥"
अथ यामित्रवेधः ।
"रविमन्दकुजाकान्तं लग्नात् सप्तमं त्यजेत् ।
विवाहयात्राचूडासु गृहकर्म्मप्रवेशने ॥"
इति रत्नमाला ॥
वामदक्षिणवेधौ वामवेधशब्दे द्रष्टव्यौ ॥

वेधकं, क्ली, ( विध + ण्वुल् । ) धान्यकम् । इति राजनिर्घण्टः ॥

वेधकः, पुं, ( विध + ण्वुल् । ) कर्पूरः । इति त्रिकाण्डशेषः ॥ अम्लवेतसः । इति राजनिर्घण्टः ॥ ( मणिमुक्तादिवेधोपजीवी । यथा, रामायणे । २ । ८४ । १३ ।
"मायूरिकाः क्राकचिका वेधका रोचकास्तथा ॥")
वेधकर्त्तरि, त्रि ॥ ( यथा, महाभारते । १३ । २३ । ८० ।
"अप्रमादमकाश्चैव मांसानां वेधकाश्च ये ।
बन्धकाश्च पशूनां ये ते वै निरयगामिनः ॥")

वेधनिका, स्त्री, ( विध्यतेऽनयेति । विध + करणे ल्युट् । ततः स्वार्थे कन् । ) मणिमुक्तादिवेधनोपकरणम् । भोमरी इति भाषा । तत्पर्य्यायः । आस्फोटनी । इत्यमरः ॥ तास्फोटनी ३ स्फोटनी ४ शुषिरप्रिका ५ । इति भरतधृतवाचस्पतिः ॥

वेधनी, स्त्री, ( विध्यतेऽनयेति । विध+ल्युट् । स्त्रियां ङीप् । ) हस्तिकर्णवेधनास्त्रम् । इति त्रिकाण्डशेषः ॥ मेथिका । इति भावप्रकाशः ॥

वेधमुख्यः, पुं, (वेधे वेधने मुख्यः श्रेष्ठः ।) कर्च्चूरः । इति राजनिर्घण्टः ॥

वेधमुख्यकः, पुं, (वेधमुख्य+स्वार्थे कन् ।) हरिद्रा-क्षुपः । आँबा हलदि इति ख्यातः । तत्पर्य्यायः । कर्च्चूरकः २ द्राविड़कः ३ काल्पकः ४ काल्यकः ५ । इत्यमरभरतौ ॥

वेधमुख्या, स्त्री, ( वेधे मुख्या । ) कस्तूरी । इति राजनिर्घण्टः ॥

वेधसं, क्ली, ब्राह्मतीर्थम् । अङ्गुष्ठमूलम् । इति शब्दचन्द्रिका ॥

वेधाः, [स्]पुं,(विदधातीति । वि+धा+"विधाञो वेध च ।" उणा० ४ । २२४ । इति असिः । वेधादेशश्च सोपसर्गधातोः । ) ब्रह्मा । (यथा, रघुः । १ । २९ ।
"तं वेधा विदधे नूनं महाभूतसमाधिना ।
तथाहि सर्व्वे तस्यासन् परार्थैकफला गुणाः ॥")
विष्णुः । इत्यमरः ॥ ( शिवः । यथा, हरिवंशे भविष्यपर्व्वणि । १५ । १२ ।
"नमस्ते शितिकण्ठाय नीलग्रीवाय वेधसे ॥")
सूर्य्यः । इति शब्दरत्नावली ॥ पण्डितः । इति विश्वः ॥ श्वेतार्कवृक्षः । इति शब्दचन्द्रिका ॥ अनन्तपुत्रः । यथा,—
"इक्ष्वाकुर्ज्ज्येष्ठदायादो मध्यदेशमवाप्नवान् ।
सुद्युम्नस्य प्रतिष्ठानं तस्य पुत्त्रः पुरूरवाः ॥
नरिष्यतः शकाः पुत्त्राः प्राक् चन्द्रस्तु शाश्वतम् ।
नाभागस्याम्बरीषोऽभूत् मध्यमं पार्थिवं ततः ॥
कोटवे वार्षकं चैव रथदृष्टिर्बभूव च ।
शर्य्यातेर्मिथुनञ्चासीदनन्तो नाम विश्रुतः ॥
सुकन्या नाम कन्या च या पत्नी च्यवनस्य च ।
अनन्तस्य च पुत्त्रोऽभूत् वेधो नाम महाप्रभुः ।
आनर्त्तविषये तेन पुरी कुशस्थली कृता ॥"
इति वह्निपुराणे सागरोपाख्याननामाध्यायः ॥ ( प्रजापतिर्दक्षादिः । यथा, कुमारे । २ । १४ ।
"परतोऽपि परश्चासि विधाता वेधसामपि ॥"
त्रि, मेधावी । इति निघण्टुः । ३।१५ ॥ विविध-कर्त्ता । यथा, ऋग्वेदे । ५ । ४३ । १२ ।
"आ वेधसं नीलपृष्ठं बृहन्तम् ।"
"कीदृशं देवं वेधसं विविधकर्त्तारम् ।" इति तद्भाष्ये सायणः ॥ )

वेधितः, पुं, ( विध+णिच्+क्तः । ) कारित-विद्धः । छिद्रितः । इत्यमरः ॥

वेधिनी, स्त्री, (विधति त्वचमिति । विध छिद्रीकरणे +णिनिः । ङीप् । ) रक्तपा । इति शब्दरत्नावली ॥ जोँक इति भाषा ॥ मेथिका । इति राजनिर्घण्टः ॥

वेधी, [न्] त्रि, ( विधतीति । विध छिद्रीकरणे + णिनिः । ) वेधकर्त्ता । ( यथा, महाभारते । ५ । ९६ । ३० ।
"तेषामन्यौषि कर्णांश्च नासिकाश्चैव मायया ।
निमित्तवेधी स मुनिरीषीकाभिः समर्पयत् ॥")

वेधविशिष्टः । विधधातोर्णिन्प्रत्ययेन वेधशब्दा-दस्त्यर्थे इन्प्रत्ययेन वा निष्पन्नः ॥ अम्लवेतसे, पुं । इति राजनिर्घण्टः ॥

वेध्यं, क्ली, ( विध+ण्यत् । ) लक्ष्यम् । इति जटा-धरः ॥ ( यथा, मार्कण्डेये । ४२ । ७ ।
"प्रणवो धनुः शरो ह्यात्मा ब्रह्म वेध्यमनुत्तमम् ।
अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ॥")
वेधनीये, त्रि । यथा,—
"षट्कर्णोत्पत्तिमाप्नस्य भानोः शुक्ला समेऽपि च ।
कर्णौ वेध्यौ न दोषः स्यादन्यथा मरणं भवेत् ॥"
इति मलमासतत्त्वम् ॥

वेनः, पुं, ( अजतीति । अज गतौ+"धापृवस्य-ज्यतिभ्यो नः ।"उणा० ३।६। इति नः । अजते-र्वीभावः । ) प्रजापतिः । इत्युणादिकोषः ॥ ( पृथुराजपिता । यथा, मार्कण्डेये । २७।१५।
"हतमेतं तथा लोभात् महादेवं द्विजोत्तमम् ॥"
अस्याख्यायिकरणं मूलेऽस्याख्यावेनशब्दे द्रष्ट-व्यम् ॥*॥ देवविशेषः । इति निघण्टुः । ५।४।२८ ॥ यथा, ऋग्वेदे । १० । १२३ । १ ।
"अयं वेनश्चोदयत् पृश्निगर्भाः ।"
"वेनः कान्तः एतन्नामको मध्यमस्थानो देवः ।"
इति तद्भाष्ये सायणः ॥ * ॥ अजति गच्छत्यनेन स्वर्गमिति । यज्ञः । इति निघण्टुः । ३ । १७२ ॥ त्रि, मेधावी । इति निघण्टुः । ३।१५।५ ॥ यथा, वाजसनेयसंहितायाम् । १३ । ३ ।
"सीमतः सुरुचो वेन आवः ॥"
"वेनः कामनीयो मेधावी वा ।" इति तद्भाष्यम् ।
कामयमानः । यथा, ऋग्वेदे । ८ । ८९ । ५ ।
"आयन्नुमा वेना अरुहन्नृतस्य ॥"
"वेनाः कामयमानाः ।" इति तद्भाष्ये सायणः ॥ )

वेना, स्त्री, ( वन शब्दे संभक्तौ वा+"वनेरिच्चो-पधायाः ।" उणा० ३ । ८ । इति नः उपधाया इत्वञ्च ।) नदीविशेषः । इति सिद्धान्तकौमुद्या-मुणादिवृत्तिः । (यथा, महाभारते । ३।८८।३।
"वेना भीमरथी चोभे नद्यौ पापभयापहे ॥")

वेप, टु ऋ ङ चले । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् । ) चलः कम्पनम् । टु, वेपथुः । ऋ, अविवेपत् । ङ, वेपते वायुना दृमः । इति दुर्गादासः ॥

वेपः, [ स् ] क्ली, ( वेप कम्पने+"सर्व्वधातुभ्यो-ऽसुन् ।" उणा० ४ । १८८ । इत्यसुन् । ) अन-वद्यम् । यथा,—
"स्याद्गकर्ज्योतिषोः क्लीवं वचो वाच्यन्थ धातुषु ।
भेदो वेपोऽनवद्येऽथ समायाञ्च सदो न ना ॥"
इत्युणादिकोषः ॥
( विरेपः । इति वाहुपाठः ॥ इत्युज्ज्वलः । ४ । १८९ ॥ * ॥ कर्म्म । इति निघण्टुः । २।१।५ ॥ यथा, ऋग्वेदे । १० । ४६ । ८ ।
"प्रजिक्रया भरते वेपो अग्निः ॥"
"वेपः कर्म्मनामैतत् ।" इति तद्भाष्ये सायणः ॥ )

वेपथुः, पुं, ( वेपनमिति । वेप+"ट्वितोऽथुच् ।" ३ । ३ । ८९ । इति अथुच् । ) कम्पः । इत्य-मरः ॥ ( यथा, गीतायाम् । १ । २९ ।
"वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥" )

वेपनं, क्ली, ( वेप+ल्युट् । ) कम्पनम् । इति शब्दरत्नावली ॥ ( यथा, सुश्रुते शारीरस्थाने १० अध्यायः । "तत्र विहस्य शोषणविनमन-मोहनभ्रमणवेपनानि मरणं वा भवति ॥")

वेमः, पुं, वायदण्डः । यथा,—
"वायदण्डः पुंसि वेमा वेमो ना वेम न द्वयोः ॥"
इति शब्दरत्नावली ॥

वेमा, [न्] पुं, (वयन्त्यनेनेति । वे+"वेञः सर्व्वत्र ।" उणा० ४ । १४९ । इति इमनिन् ।) वायदण्डः । इत्यमरभरतौ ॥ ( यथा, नैषधे । १ । १२ ।
"सितांशुवर्णैर्वयति स्म तद्गुणै-
र्महासिवेम्नः सहकृत्वरी बहुम् ॥"
अर्द्धर्चादित्वात् क्लीवलिङ्गोऽपि । यथा, वाज-सनेयसंहितायाम् । १९ । ८३ ॥
"नग्नहुधीरस्तसरं न वेम ॥" )

वेरं, क्ली, शरीरम् । वार्त्ताकुः । कुङ्कुमम् । इति मेदिनी ॥

वेरकं, क्ली, कर्पूरम् । इति हारावली ॥

वेल, ऋ चाले । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) ऋ, अविवेलत् । इति दुर्गादासः ॥

वेल, तु क कालार्थे । इति कविकल्पद्रुमः ॥ (अदन्त-चुरा०-पर०-अक०-सेट् । ) कालार्थः कालो-पदेशः । अविवेलत् । कालमियत्तया गणकः एतावती वेलेति कथितवानित्यर्थः । इति दुर्गा-दासः ॥

वेलं, क्ली, उपवनम् । यथा, हेमचन्द्रे ।
"अथोपाश्यं वनं वेलमारामः कृत्रिमे वने ॥"

वेला, स्त्री, ( वेल्यतेऽनयेति । वेल+गुरोश्च हलः इत्यः । ततष्टाप् । ) कालः । तत्पर्य्यायः । समयः २ क्षणः ३ वारः ४ अवसरः ५ प्रस्तावः ६ प्रक्रमः ७ अन्तरम् ८ । इति हेमचन्द्रः ॥ तत्परिमाणानि यथा,—
"अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्त्तितः ।
द्वौ निमेषौ त्रुटिर्नाम द्वे त्रुटी तु लवः स्मृतः ॥
द्विलवः क्षण इत्युक्तः काष्ठा प्रोक्ता दश क्षणाः ।
दश काष्ठाः कला नाम तत्संज्ञा स्याच्च नाड़िका ॥
घटिके द्वे मुहूर्त्तः स्यात्त्रिंशता दिवानिशम् ।
चतुर्व्विंशतिवेलाभिरहोरात्रं प्रचक्षते ॥
सूर्य्योदयादि विज्ञेयो मुहूर्त्तानां क्रमः सदा ।
पश्चिमादर्द्धरात्रादि होराणां विद्यते क्रमः ॥
पैत्र्यं पित्र्यमहोरात्रं पक्षौ तत्र सितासितौ ।
त्रिंशता च दिनैर्मासो द्विमासश्च ऋतुरुच्यते ।
मर्त्त्यं द्वयमहोरात्रं षड़्भिरुत्तरदक्षिणौ ।
वर्षं द्वादशभिर्मासैर्मासास्त्वयोदशः ॥"
इति वह्निपुराणे गणभेदनामाध्यायः ॥ * ॥ मर्य्यादा । इत्यमरः ॥ ( यथा, महाभारते । २ । ६३ । ३९ ।

"धिगस्तु वट: खलु भारतानां
प्रमीलया चन्नविहाय हलम् ।
अत्र यतीतां कुरुबन्धुवेलां
प्रियन्ति सर्व्वे कुरव: सभायाम् ॥")
समुद्रकूलम् । ( यथा, रघु: । १ । ३० ।
"स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्व्वीं शशासैकपुरीमिव ॥")
समुद्रजलविकार: । ( यथा, रघु: । १२ । ३६ ।
"संरम्भं मैथिलीहास: क्षणसौम्यां निनाय
ताम् ।
निदाघकालमिनीं वेलां चन्द्रोदय इवोदधे: ॥")
अक्लिष्टमरणम् । राग: । ईश्वरस्य भोजनम् ।
इति मेदिनी ॥ अत्र पवर्गीयबकारादौ
लिखित: । रागस्थाने रोग: । वाक् । बुधस्त्री ।
इति विश्व: ॥ दन्तमांसम् । इति हारावली ॥
वेलाकूलं, क्ली, (वेला एव कूलं यस्य ।) ताम्रलिप्त-
देश: । यथा,—
"वेलाकूलं ताम्रलिप्तं ताम्रलिप्ती तमालिका ॥"
इति त्रिकाण्डशेष: ॥
( समुद्रकूलम् । यथा, भागवते । १० । ६७ । ५ ।
"क्वचित् समुद्रमध्यस्थो दोर्भ्यामुत्क्षिप्य तज्जलम् ।
देशान् नाशयन्नप्राप्तो वेलाकूले न्यमज्जयत् ॥")
वेलिभुक्प्रिय:, पुं, चौरभक्तावत: । यथा,—
"——————इत्यादे तस्तिचौरभे ।
महाकालश्च किम्पाक कर्कटी वेलिभुक्प्रिय: ॥"
इति शब्दरत्नावली ॥
( वलिभुक्प्रिय इत्येव पाठ: साधु: ॥ )
वेल्ल, ऋ चाले । इति कविकल्पद्रुम: ॥ (भ्वा०-
पर०-सक०-सेट् ।) ऋ, अविवेल्लत् । चाल:
सञ्चलनम् । उद्दं अक्षुल्लकलिकस्यभागतुल्यारः
चत्वं चार्थतास्। गताविल्लके । इति दुर्गादास: ॥
वेल्लं, क्ली पुं, (वेल्लतीति । वेल्ल चलने + पचाद्यच् ।)
विडङ्ग: । इत्यमर: ॥ (भावे घञ् ।) गमने, पुं ।
इति वेल्लधात्वर्थदर्शनात् ॥
वेल्लजं, क्ली, ( वेल्लवत् जायते इति । जन + ड: । )
मरिचम् । इत्यमर: ॥
वेल्लनं, क्ली, ( वेल्ल + ल्युट् । ) भूमौ अश्वस्य
लुण्ठनम् । तत्पर्य्याय: । लुण्ठनम् २ । इति
त्रिकाण्डशेष: ॥ ( चञ्चलनम् । यथा, राज-
तरङ्गिण्याम् । ८ । १५८५ ।
"अदा सरित् अवनतेजलविभवेषि
वेल्लोर्म्मिवेल्लनवशेन विवर्त्तमाना ॥")
रोटिकादिनिर्म्माणार्थक्षुद्रवर्त्तुलकाष्ठविशेष: ।
इति भावप्रकाश: ॥ वेलन् इति भाषा ॥
वेल्लनी, स्त्री, ( वेल्लति लुठति अश्वादिरस्यामिति ।
वेल्ल + ल्युट् । ङीप् । ) मालादूर्व्वा । इति
राजनिर्घण्ट: ॥
वेल्लन्तर:, पुं, वीरतरु: । यथा, भावप्रकाशे ।
"वेल्लन्तरो जगति वीरतरु: प्रसिद्ध:
श्वेतासिताद्युभयलोहितनीलपुष्प: ।
स्याज्जातितुल्यकुसुम: शमिकल्पपत्र:
स्यात् कण्टकी च खदिरेण समो दृढ: ।"

अस्य गुणा: ।
"वेल्लन्तरो रसे पाके तिक्तस्तुवरकाषायक: ।
मूत्राघाताश्मजिद्ग्राही योनिमूत्रानिलार्त्ति-
जित् ॥"
वेल्लहल:, पुं, केलिनागर: । इति जटाधर: ॥
वेल्लि:, स्त्री, ( वेल्लति चञ्चलतीति । वेल्ल + इन् । )
लता । इति शब्दरत्नावली ॥
वेल्लिकाख्या, स्त्री, ( वेल्लिका आख्या यस्या: । )
तृणविशेष: । वेलसुठा इति भाषा । यथा,—
"भद्रकाया वेल्लिकाख्या त्रिकपत्री ज्वरा-
पहा ॥"
इति शब्दचन्द्रिका ॥
वेल्लितं, क्ली, (वेल्ल + क्त: ।) गमनम् । इति मेदिनी॥
वेल्लित:, त्रि, ( वेल्ल + क्त: । ) कुटिल: । कम्पित: ।
इत्यमर: ॥
वेवी, ङ य धु ङ कान्तिगतिव्याप्तिक्षेपप्रजनखादने ।
इति कविकल्पद्रुम: ॥ ( अदा०-आत्म०-कान्तौ
अक०-अन्यत्र सक०-सेट् । ) ङ, वेविते ।
य, अवेवयु: । बहुलं छन्दसीति परस्मैपदे
अनुम् विद् रित्यम् उम् अश्वत्थामिति ग्रन्थ: ।
धु ङ, वेवीते । इति दुर्गादास: ॥
वेश:, पुं, ( विशन्ति नगरमत्रास्मिन्निति । विश् +
अधिकरणे घञ् । यद्वा, विशति अङ्गमिति ।
"पदरुजविशस्पृशो घञ् ।" ३।३।१६। इति घञ् ।)
अलङ्कारचनादिकृतशोभा । तत्पर्य्याय: ।
आकल्प: २ नेपथ्यम् ३ प्रतिकर्म्म ४ प्रसा-
धनम् ५ । इत्यमर: ॥ वेष: ६ । इति तट्टीकायां
भरत: ॥ ( यथा, भागवते । १ । १७ । ५ ।
"नरदेवोऽसि वेषेण नटवत् कर्म्मणा द्विज: ॥"* ।
विशन्ति कामुका अस्मिन्निति । अधिकरणे घञ् ।)
वेश्यागृहम् । गृहमात्रम् । इति मेदिनी ॥
( वस्त्रगृहम् । ताँबु इति भाषा ॥ यथा,
महाभारते । ५ । १५१ । ५३ ।
"शकटापणवेशाश्च यानयुग्यञ्च सर्व्वश: ।
*        *        *
तत् संयत्तं ययौ राजा ये चापि परिचारका: ॥")
प्रवेश: । इति विशधात्वर्थदर्शनात् ॥ ( पण्य-
स्त्रिया वृत्ति: । यथा, मनु: । ४ । ८४—८५ ।
"न राज्ञ: प्रतिगृह्णीयादराजन्यप्रसूतित: ।
सूनाचक्रध्वजवतां वेशेनैव च जीवताम् ॥
दशसूनासमं चक्रं दशचक्रसमो ध्वज: ।
दशध्वजसमो वेशो दशवेशसमो नृप: ॥")
वेशक:, पुं, (वेश एव । स्वार्थे कन् ।) गृहम् । इति
शब्दरत्नावली ॥ वेशकारके, त्रि ॥
वेशदान:, पुं, सूर्य्यशोभा । इति शब्दचन्द्रिका ॥
वेशधारी, [न्] पुं, ( वेशं तापसलिङ्गं धरतीति ।
धृ + णिनि: । ) कृतकपस्वी । इति शब्दरत्ना-
वली ॥ ( शङ्करजातिविशेष: । यथा, ब्रह्म-
वैवर्त्ते ब्रह्मखण्डे । १० अध्याय: ।
"गङ्गापुत्त्रस्य कन्यायां वीर्य्येण वेशधारिण: ।
बभूव वेशधारी च पुत्त्रो युङ्गी प्रकीर्त्तित: ॥")
वेशधारके, त्रि ॥

वेशन्त:, पुं, ( विशन्त्यत्र भेकादय इति । विश +
"जृविशिभ्यां झच् ।" उणा० ३ । १२६ । इति
झच् । ) क्षुद्रसरोवर: । इत्यमर: ॥ अग्नि: ।
इत्युणादिकोष: ॥
वेशर:, पुं, अश्वतर: । इति त्रिकाण्डशेष: ॥
वेशवार:, पुं, वेसवार: । इत्यमरटीकायां राय-
मुकुट: ॥
वेशीवाला, स्त्री, पुत्त्रदात्रीलता । इति राज-
निर्घण्ट: ॥
वेश्म, [न्] क्ली, ( विशन्त्यस्मिन्निति । विश + मनिन् । )
गृहम् । इत्यमर: ॥ ( यथा, मनु: । ४ । ७३ ।
"अद्वारेण च नातीयात् ग्रामं वा वेश्म वावृ-
तम् ॥" )
वेश्मकलिङ्ग:, पुं, ( वेश्मन: कलिङ्ग: । ) चटक: ।
अस्य मांसगुणौ । सन्निपातनाशित्वम् । अति-
शुक्रकारित्वञ्च । इति राजवल्लभ: ॥
वेश्मकूल:, पुं, (वेश्म एव कूलयतीति । कूल + क: ।)
चविका । इति राजनिर्घण्ट: ॥
वेश्मनकुल:, पुं, ( वेश्मनो गृहस्य नकुल: । ) गन्ध-
मूषिक: । यथा,—
"सिद्ध: स्यादृ गृहनकुलश्छिकश्च वासनाशिका ।
गन्धमुखी गन्धमुखी गिरिका स्याच्छुन्दरी ॥"
इति शब्दरत्नावली ॥
वेश्मभू:, स्त्री, ( वेश्मनो भू: । ) गृहकरणयोग्य-
भूमि: । तत्पर्य्याय: । वास्तु: २ । इत्यमर: ॥
वेश्यं, क्ली, ( वेशे भवम् । वेश + "दिगादिभ्यो
यत् ।" ४ । ३ । ५४ । इति यत् । यद्वा, वेश्यायै
हितम् । वेश्या + यत् । ) वेश्यालय: । इति
मेदिनी ॥ ( प्रवेशार्हे, त्रि । यथा, ऋग्वेदे ।
४ । २६ । ३ ।
"शततमं वेश्यं सर्व्वताता दिवोदासमतिथिग्वं
यदावम् ॥"
"वेश्यं दिवोदासनाम्नं प्रवेशार्हम् ।" इति
तद्भाष्ये सायण: ॥ )
वेश्या, स्त्री, टकुकारच: । आकनादि इति भाषा ।
इति शब्दचन्द्रिका ॥ ( वेशमर्हतीति वेशेन
दीव्यमाचरति वेशेन पण्ययोगेन जीवति वा ।
वेश + यत् । ) जनाभक्यालनारी । खानकी
इति भाषा । तत्पर्य्याय: । वारस्त्री २
गणिका ३ रूपाजीवा ४ । इत्यमर: ॥ वेश्या ५ ।
इति तट्टीका ॥ खुना ६ शालभञ्जिका ७ ।
इति जटाधर: ॥ भर्ज्जरा ८ सूला ९ वार-
विलासिनी १० वारवासि: ११ मदनाशिनी
१२ । इति शब्दरत्नावली ॥ लञ्जिका १३
मधुरा १४ कुम्भा १५ कामरेखा १६ वर्ब्बटी
१७ । इति शब्दमाला ॥ साधारणस्त्री १८
भगयाङ्गना १९ पण्याङ्गना २० भुजिष्या २१
वारवधू: २२ । इति हेमचन्द्र: ॥ भोग्या २३
स्मरवीथिका २४ । इति राजनिर्घण्ट: ॥ तस्या
अन्यगमनफलादि यथा,—
"पतिव्रता चैकपत्नी द्वितीये कुलटा स्मृता ।
तृतीये धर्षणी ज्ञेया चतुर्थे पुंश्चली स्मृता ॥

वेश्या च पञ्चमे षष्ठे पुंश्ली च सप्तमेऽष्टमे ।
तत ऊर्द्ध्वं महावेश्या साऽस्पृश्या सर्व्वजातिषु ॥*॥
यो द्विजः कुलटां गच्छेत् स्वैरिणीं पुंश्चलीमपि ।
पुंश्चलीं वेश्यां महावेश्यां अवटोदं प्रयाति सः ॥
शताब्दं कुलटागामी स्वैरागामी चतुर्गुणम् ।
षड्गुणं पुंश्चलीगामी वेश्यागामी गुणाष्टकम् ॥
पुंश्चलीगामी दशगुणं वसेत्तत्र न संशयः ।
महावेश्यागामुकश्च ततः शतगुणं भवेत् ॥
सर्व्वैव सर्व्वगामी चेत्येवमाह पितामहः ।
तत्रैव यातनां भुङ्क्ते यमदूतेन ताडितः ॥
तित्तिरिः कुलटागामी स्वैरागामी च वायसः ।
कोकिलः पुंश्चलीगामी वेश्यागामी वृकस्तथा ॥
पुंश्चलीगामी शूकरश्च सप्तजन्मसु भारते ।
महावेश्यागामुकश्च जायते शाल्मलितरुः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २८ अध्यायः ॥*॥
वेश्यागमनपापं प्रकीर्णकम् । तस्य प्रायश्चित्तम् ।
तत्र सम्वर्त्तः ।
“पशुवेश्याभिगमने प्राजापत्यं विधीयते ।”
तेन वेश्यागमने प्राजापत्यम् । तत्प्रत्याम्नायो धेनु-
रेका । एतत् सकृद्गमने । अभ्यासे तु । चान्द्रा-
यणेन चैकेन सर्व्वपापक्षयो भवेदिति आप-
स्तम्बवचनाच्चान्द्रायणम् । इति प्रायश्चित्त-
विवेकः ॥*॥ तद्गमनादिकं निषिद्धम् । यथा,—
“पुंश्चल्यन्नञ्च यो भुङ्क्ते पुंश्चल्याजीवजीवनः ।
वर्षोत्तममासपर्य्यन्तं कालसूत्रे वसेद्ध्रुवम् ।
ताडितो यमदूतेन तद्भोजी तत्र तिष्ठति ।
ततश्च जन्मनि भवेत् सप्तवर्षः पशुः शुचिः ॥
त्रिजन्मनि भवेत्तज्जातस्ततो भवेत् सुदुःखितः ।
ततश्चक्षुःशूलरोगी ततः शुद्धः क्रमेण च ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥*॥
अपि च ।
“पुंश्चल्यन्नञ्च यो भुङ्क्ते वेश्यान्नञ्च पतिव्रते ।
तदूर्द्ध्वेषु द्विजो यो हि कालसूत्रं प्रयाति सः ॥
शतवर्षं कालसूत्रे स्थित्वा शूद्रो भवेद्ध्रुवम् ।
तत्र जन्मनि रोगी च ततः शुद्धो भवेद्द्विजः ॥”
इति तत्रैव २८ अध्यायः ॥*॥
यात्राकाले तस्या दर्शनं शुभम् । यथा,—
“विप्रश्वत्थप्रयुक्ता हयगजवृषभा दक्षिणावर्त्तवह्नि-
र्दिव्यस्त्रीपूर्णकुम्भा द्विजनृपगणिकाः पुष्पमाला
पताका ।
सद्योमांसं घृतं वा दधि मधु रजतं काञ्चनं
शुक्लधान्यं
दृष्ट्वा श्रुत्वा पठित्वा फलमिह लभते मानवो
गन्तुकामः ॥”
इति वसन्तराजीयः ॥

वेश्यागमः, पुं, ( वेश्यानां गमः । ) वेश्यासम्बन्धः ।
तत्पर्य्यायः । वेश्याचारः २ । इति शब्द-
माला ॥

वेश्याचार्य्यः, पुं, ( वेश्यानां आचार्य्यः । ) पीठ-
मर्द्दः । इति हेमचन्द्रः ॥

वेश्याजनसमाश्रयः, पुं, ( वेश्याजनानां समाश्रयः
आश्रयस्थानम् । ) वेश्याश्रयः । तत्पर्य्यायः ।
वेशः २ । इत्यमरः ॥ वेश्याश्रयः ३ पुरम् ४ ।
इति हेमचन्द्रः ॥ वेशनम् ५ । इति जटा-
धरः ॥

वेश्वरः, पुं, अश्वतरः । यथा । वेश्वरोऽश्वतरः
खरः । इति भूरिप्रयोगः । क्वचित्पुस्तके वेसर
इति पाठः ॥

वेषः, पुं, वेवेष्टि व्याप्नोति अङ्गं वेषः पचाद्यच्
कर्त्तव्यान्तः । विशन्ति नयनमनांसि यस्मिन्नाकारे
चर्म्मणि वेशस्त्वाकल्पार्थस्त्वाकल्पः । इति भरतः ॥ नेप-
थ्यम् । ( यथा, मनुः । ८ । २ ।
“विनीतवेषाभरणः पश्येत्कार्य्याणि कार्य्यि-
णाम् ॥”)
वेश्याजनाश्रयः । “के शारिकायां निवासस्थाने ।
विशन्ति यत्र मनः कामुको वा वेशः स्तौ विश
प्रवेशे घञ् ।
‘नेपथ्ये गृहमात्रे च वेशो वेश्याश्रयेऽपि च ।’
इति तालव्यान्ते रभसः ॥
‘गृहमात्रे गणिकायाः सद्मनि वेशो भवेत्तु
तालव्यः ।
तालव्यो मूर्द्धन्योऽप्युभयो कथित आचार्य्यैः ॥’
इत्यूष्मविवेकः ।
वेविषति व्याप्नुवन्ति जनमनांसीति धाञि वेषो
मूर्द्धन्यान्तोऽपि इत्येके तत्तु न युक्तं मूर्द्धन्यान्तेषु
सर्व्वत्र कोषादावनुपात्तत्वादिति मुकुटः ।” इति
च भरतः ॥ ( संग्रामविशेषः । यथा, रामा-
यणे । १ । १७ । १८ ।
“यस्य देवस्य यद्रूपं वेषो यश्च पराक्रमः ॥”
“वेषः संग्रामविशेषः ।” इति तट्टीका ॥*॥
वेवेष्टि व्याप्नोति कर्त्तृनिति । पचाद्यच् । कर्म्म ।
इति निघण्टुः । २ । १ ॥*॥ विष व्याप्तौ +
घञ् । व्याप्तिः । यथा, वाजसनेयसंहितायाम्
१ । ६ ।
“कर्म्मणे वां वेषाय वाम् ।”
“वेषाय च । विष्लृ व्याप्तौ । घञ् वेषो व्याप्तिः ।
कथितकर्म्मसु व्याप्तये च वां युवामह-
माददे ।” इति तद्भाष्ये महीधरः ॥)

वेषणः, पुं, ( विष व्याप्तौ + ल्युः । ) कासमर्द्दः ।
इति हारावली ॥ ( स्त्री, विष + ल्युट् । )
प्रवेशनञ्च ॥ ( परिचर्य्या । यथा, ऋग्वेदे । ५ ।
७ । ५ ।
“आवकायस्य वेषणे स्वेदं पथिषु जुह्वति ॥”
“यस्याः वेषणे परिचर्य्यायाम् ।” इति तद्भाष्ये
सायनः ॥)

वेषणा, स्त्री, ( वेवेष्टि व्याप्नोतीति । विष + ल्युः ।
टाप् । ) पितृमलकम्बुः । इति रत्नमाला ॥
मग्ना इति भाषा ॥

वेषवारः, पुं, वेशवारः । इत्यमरटीकायां राय-
मुकुटः ॥

वेष्ट, ङ वेष्टे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-
सक०-सेट् । ) ङ, वेष्टते । इति दुर्गादासः ॥

वेष्टः, पुं, ( वेष्ट + घञ् । ) वेष्टनम् । इति शब्द-
माला ॥ (यथा, महाभारते । ७ । २५ । २७ ।
“ग्रीवायां वेष्टयित्वैनं स गजो हन्तुमैहत ।
करवेष्टं भीमसेनो भ्रमं दत्त्वा व्यमोचयत् ॥”)
श्रीवेष्टः । इति राजनिर्घण्टः ॥ निर्य्यासः ।
आठा इति भाषा ॥ इति वैद्यकम् ॥ ( मुख-
रोगविशेषः । यथा, सुश्रुते । २ । १६ ।
“दन्तावलानि वेष्टेभ्यस्तासु चाप्यवदीर्य्यते ॥”)

वेष्टकं, क्ली, (वेष्टते इति । वेष्ट + ण्वुल् ।) उष्णीषः ।
इति शब्दरत्नावली ॥ निर्य्यासः । इति शब्द-
माला ॥ श्रीवेष्टः । इति राजनिर्घण्टः ॥

वेष्टकः, पुं, (वेष्टते इति । वेष्ट + ण्वुल् ।) प्राचीरः ।
यथा प्राचीनावेष्टको वृतिः । इति हेमचन्द्रः ॥
कुष्माण्डः । यथा,—
“कुष्माण्डकः पुष्पफलो वनवासश्च वेष्टकः ॥”
इति हारावली ॥
श्रीवेष्टः । इति राजनिर्घण्टः ॥ वेष्टनकारके,
त्रि ॥ ( यथा, महाभारते । ७ । १९६ । २१ ।
“वलयैरपरिक्लिष्ट तथैवाङ्गुलिवेष्टकैः ॥” )

वेष्टनं, क्ली, ( वेष्टते इति । वेष्ट + ल्युः । ) कर्ण-
शष्कुली । उष्णीषः । ( यथा, रघुः । ८ । १२ ।
“तमरण्यसमाश्रयोन्मुखं
शिरसा वेष्टनशोभिना सुतः ॥”)
मुकुटः । वृतिः । इति मेदिनी ॥ गुग्गुलुः ।
इति शब्दचन्द्रिका ॥ (वेष्ट + ल्युट् । वलयनम् ।
यथा, रघुः । ४ । ४८ ।
“भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ॥”)

वेष्टनकः, पुं, ( वेष्टनेन कायतीति । कै + कः । )
रतिबन्धविशेषः । यथा,—
“जङ्घे पादमेकञ्च भुजाभ्यां वेष्टयेद्यदि ।
कान्तकण्ठाश्रिता नारी बन्धो वेष्टनकः स्मृतः ॥”
इति रतिमञ्जरी ॥

वेष्टनवेष्टकः, पुं, ( वेष्टनेन वेष्टते इति । वेष्ट +
ण्वुल् । ) रतिबन्धविशेषः । यथा,—
“ऊर्द्ध्वं पादद्वयं नार्य्या भुजाभ्यां वेष्टयेद्यदि ।
कराभ्यां कण्ठमालिङ्ग्य बन्धो वेष्टनवेष्टकः ॥”
इति रतिमञ्जरी ॥

वेष्टवंशः, पुं, ( वेष्टः वेष्टनकारी वंशः । ) कण्ट-
किवः । इति शब्दचन्द्रिका ॥ वेडुवांश इति
भाषा ॥

वेष्टसारः, पुं, ( वेष्टानां सारो यत्र । ) श्रीवेष्टः ।
इति राजनिर्घण्टः ॥

वेष्टितं, क्ली, ( वेष्ट + क्तः । ) रुद्धम् । लावकः ।
करणान्तरम् । इति मेदिनी ॥

वेष्टितः, त्रि, ( वेष्ट + क्तः । ) वस्त्रप्राचीरादिना
कृतवेष्टनः । वेढा इति भाषा । तत्पर्य्यायः ।
वलयितम् २ संवीतम् ३ रुद्धम् ४ आवृतम् ५ ।
इत्यमरः ॥

वेष्यः, पुं, ( वेवेष्टीति । विष व्याप्तौ + “पानी-
विषिभ्यः पः ।” उणा० ३ । २३ । इति पः । )
पानीयम् । इत्युणादिकोषः ॥

वेस, ऋ गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-
पर०-सक०-सेट् ।) ऋ, अविवेसत् । विवेसतुः ।
इतौ गत्याम् । इति दुर्गादासः ॥

वेसनं, क्ली, (वेस + ल्युट् ।) द्विदलचूर्णम् । यथा,—
"द्विदलचणकादीनां निस्तुषा यव्यपेषिताः ।
तच्चूर्णं वेसनं प्रोक्तं पाकशास्त्रविशारदैः ॥"
तद्वटिकागुणाः ।
"वटिका वेसनस्यापि कथितायां निमज्जति ।
तथा विड्भञ्जनी पथ्या पुष्टिकरी स्मृता ॥"
इति भावप्रकाशः ॥

वेसरः, पुं, अश्वतरः । इति हेमचन्द्रः ॥ (यथा, माघे । १२ । १६ ।
"तूर्णं प्रणेत्रा कृतनादमुच्चकैः
प्रणोदितं वेसरयुग्ममध्वनि ॥")

वेसवारः, पुं, सम्भारसर्षपादिपिष्टः । वेसार इति वाटना इति च ख्यातः । तत्पर्य्यायः । उपस्करः २ । इत्यमरः ॥ वेषवारः ३ । इति भरतः ॥ वेश्रवारः ४ । इति मुकुटः ॥ (यथा, सुश्रुते । १ । ४६ ।
"मांसादिवेसवाराणां पूर्व्वा विद्भिन्नो मताः ।
वेसवारैः कपिशितैः सम्पूर्णा गुरवस्तथा ॥")
व्यञ्जनविशेषः । यथा,—
"निरस्थि पिशितं पिष्टं स्विन्नं गुडघृतान्वितम् ।
कृष्णामरिचसंयुक्तं वेसवार इति स्मृतम् ॥"
अस्य गुणाः ।
"वेसवारो गुरुः स्निग्धो बलोपचयवर्द्धनः ॥"
इति राजवल्लभः ॥
शिङ्ग्यार्द्रकमरीचजीरकहरिद्राधन्याकाः क्रमेण द्विगुणपरिमाणेनैकत्रीकृताः । इति पाकराजेश्वरे पाकपरिभाषा ॥

वेह, ऋ ङ यत्ने । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।) ऋ, अविवेहत् । ङ, वेहते । विवेहे । इति दुर्गादासः ॥

वेहत्, स्त्री, (विशेषेण हन्ति गर्भमिति । वि + हन + "वर्त्तमाने पृषद्बृहत् ।" उणा० २ । ८५ । इति अतिप्रत्ययेन निपातनात् साधुः ।) गर्भोपघातिनी गौः । इत्यमरः ॥ ऋतौ वृषोपगमनादिवशात् यस्या गर्भपातो भवति सा । विहन्ति गर्भं शब्दात् वेहत् । हन क्लौ गतौ वधे क्विप् निपातः । इति भरतः ॥ (यथा, वाजसनेयसंहितायाम् । १८ । २७ ।
"वशा च मे ऋषभश्च मे वेहच्च मे ऽनड्वांश्च मे ॥")

वेहारः, पुं, मगधमध्यस्थदेशः । यथा,—
"वेहारे चैव श्रीकूटे कोशले प्रवर्त्तिनी ।
अट्टाट्टहासा कामाख्या माहेन्द्रे च हिमालये ॥"
इति मत्स्यसूक्ते ५० पटलः ॥

वेल्ल, ऋ चाले । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) ऋ, अविवेल्लत् । अयं पवर्गीयबकारादिरपि । चालः चलनं गतिविशेषः । इति दुर्गादासः ॥

वै, ओ शोषे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-अनिट् ।) वकारादिः । वायति । ओ, वानः । इति दुर्गादासः ॥

वै, व, पादपूरणम् । यथा । तु हि च स्म ह वै पादपूरणे । इत्यमरः ॥ (यथा, भागवते । ४ । १ । २८ ।
"अङ्गुष्ठमात्रं ते भक्तम् ! यत्ते ध्यायति ते वयम् ॥")
सम्बोधनम् । अनुनयः । इति मेदिनी ॥ (निश्चयः । यथा, मनुः । १ । १०० ।
"सर्व्वं स्वं ब्राह्मणस्येदं यत्किञ्चिज्जगतीगतम् ।
श्रैष्ठ्येनाभिजनेनेदं सर्व्वं वै ब्राह्मणोऽर्हति ॥")

वैंशतिकः, त्रि, विंशत्या क्रीतः । विंशतिकशब्दाट्ठक्प्रत्ययेन निष्पन्नमिदम् । इति सिद्धान्तकौमुदी ॥ (पा० ५ । १ । २७ ॥)

वैकक्ष्यं, क्ली, (विशिष्टः कक्षः विकक्ष उरस्तस्य अयम् । विकक्ष + ष्यञ् ।) तिर्य्यग्वक्षोविलम्बिमाल्यम् । इति हेमचन्द्रः ॥

वैकक्षकं, क्ली, (वैकक्ष्यमेव । स्वार्थे कन् ।) उरसि तिर्य्यक् उपवीतवत् कक्षात् क्षिप्तमाल्यम् । इत्यमरः ॥

वैकङ्कतः, पुं, (विकङ्कत एव । स्वार्थे अण् ।) वृक्षविशेषः । वैँच इति भाषा । तत्पर्य्यायः । हलिकुरः २ स्रुवावृक्षः ३ ग्रन्थिलः ४ स्वादुकण्टकः ५ व्याघ्रपात् ६ कण्टिकारी ७ विकङ्कतः ८ । इति शब्दरत्नावली ॥ (विकङ्कतस्यावयवो विकारो वा । "पलाशादिभ्यो वा ।" ४ । ३ । १४१ । इत्यण् । विकङ्कतनिर्म्मितस्रुवादौ, त्रि । यथा, शतपथब्राह्मणे । ५ । २ । ४ । १५ ।
"स पालाशे वा स्रुवे वैकङ्कते वा ॥")

वैकटिकः, पुं, मणिकारः । इति हेमचन्द्रः ॥

वैकर्णः, पुं, (विकर्णस्यापत्यमिति । विकर्ण + "विकर्णशुङ्गच्छगलात् वत्सभरद्वाजात्रिषु ।" ४ । १ । ११७ । इत्यण् ।) वात्स्यमुनिः । इति सिद्धान्तकौमुदी ॥ (जनपदविशेषः । यथा, ऋग्वेदे । ७ । १८ । ११ ।
"वैकर्णयोर्जनान् राजा न्यस्तः ।"
"वैकर्णयोर्जनपदयोर्विद्यमानान् ।" इति तद्भाष्ये सायणः ॥)

वैकल्पिकः, त्रि, विकल्पेन भवः । विकल्पशब्दात् ठक्प्रत्ययेन निष्पन्नमिदम् ॥

वैकल्यं, क्ली, विकलत्वम् । विकलस्य भाव इत्यर्थे ष्यञ्प्रत्ययेन निष्पन्नमिदम् ॥ (यथा, कथासरित्सागरे । ७४ । २१० ।
"जगाद्वृत्तसचिवं चक्षुर्वैकल्यमागतम् ॥")

वैकुण्ठः, पुं, कृष्णः । (यथा, भागवते । १ । १५ । ४६ ।
"ते साधुकृतसर्व्वार्था ज्ञात्वात्यन्तिकमात्मनः ।
मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम् ॥")
इन्द्रः । इति मेदिनी ॥ सितार्ज्जकः । इति राजनिर्घण्टः ॥ अस्य व्युत्पत्तिर्यथा । "विकुण्ठाया अपत्यं वैकुण्ठः शाकटायन इति शिवादित्वात् अः ।
'चाक्षुषस्यान्तरे देवो वैकुण्ठः पुरुषोत्तमः ।
विकुण्ठायामसौ जज्ञे वैकुण्ठो दैवतैः सह ॥'
इति विष्णुपुराणम् ॥
किंवा कुण्ठत्वमया कुण्ठा माया । कुठि खोटनवैकल्यालस्ये इत्यस्मात् भरोदिति अः । विविधा कुण्ठा माया विद्यतेऽस्य वैकुण्ठः विकारसंघेति अस्मर्थे अः । विष्णुसहस्रनामटीकायां शङ्कराचार्य्यस्तु विविधा कुण्ठा गतेः प्रतिहतिर्यस्याः कर्त्ता इति वैकुण्ठः । जगदारम्भे विश्लिष्टानि भूतानि परस्परं संश्लेषयन् तेषां गतिं प्रतिबध्नातीति वा वैकुण्ठः ।
'मयाश्लेषिता भूमिरद्भिर्व्योमा च वायुना ।
वायुश्च तेजसा सार्द्धं वैकुण्ठत्वं ततो मम ॥'
इति शान्तिपर्व्वणीति ।"
इत्यमरटीकायां भरतः ॥ * ॥ अपि च ।
"कुण्ठं जडञ्च विज्ञेयं विशिष्टञ्च करोति वा ।
विकुण्ठा प्रकृतिं वेदाश्चत्वारश्च वदन्ति ताम् ॥
गुणाश्रयेण भगवान् तस्या जातः स्वरूपतः ।
परिपूर्णतमं तेन वैकुण्ठञ्च विदुर्ब्बुधाः ॥" * ॥
अस्य नाम्नो माहात्म्यम् । यथा,—
"राम नारायणानन्त मुकुन्द मधुसूदन ।
कृष्ण केशव कंसारे हरे वैकुण्ठ वामन ॥
इत्येकादश नामानि पठेद्वा पाठयेद्यदि ।
जन्मकोटिसहस्राणां पातकादवमुच्यते ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११० अध्यायः ॥
"साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥"
इति श्रीभागवते अजामिलोपाख्यानाध्यायः ॥ *
विष्णुधामविशेषः । तद्वर्णनं यथा,—
"उपरिष्टाच्चितेरष्टौ कोटयः सत्यमीरितम् ।
तस्मादुपरि वैकुण्ठो योजनानां प्रमाणतः ॥
भूर्लोकात् परिसंख्यातः कोटिरष्टादश प्रभो ।
यत्रास्ते श्रीपतिः साक्षात् सर्व्वेषामभयप्रदः ॥
वैकुण्ठादुत्तरे शैवो लोकः कोटिप्रकोटयः ।
तिर्य्यगेव महाराज कैलासाख्यस्तु पर्व्वतः ।
पार्व्वत्या सहितः शम्भुर्यत्रास्ते गणैर्वृतः ॥"
इति पाद्मे स्वर्गखण्डे ६ अध्यायः ॥ * ॥
अपि च ।
"अक्षतं शाश्वतं नित्यमनन्तं परमं पदम् ।
हिरण्मयं मोक्षपदं ब्रह्मानन्दसुखाश्रयम् ॥
एवमादिगुणोपेतं तद्विष्णोः परमं पदम् ।
गत्वा न निवर्त्तन्ते तद्धाम परमं हरेः ॥
नहि वर्णयितुं शक्यं कल्पकोटिशतैरपि ।
अपि द्रष्टुमशक्यं तद्ब्रह्मरुद्रादिदैवतैः ॥
ध्यानेन शास्त्रमार्गेण दृश्यते योगिपुङ्गवैः ।
तत् स्थानमुपभोक्तव्यमत्यक्तभक्तिसेविनाम् ॥
श्रीशार्ङ्गिभक्तिसेवैकरसाभोगविवर्ज्जिताः ।
महात्मानो महाभागा भगवत्पदसेवकाः ॥
तद्विष्णोः परमं धाम यान्ति ब्रह्मसुखप्रदम् ।
नानाजनपदाकीर्णं वैकुण्ठं तद्धरेः पदम् ॥
प्राकारैश्च विमानैश्च सौधै रत्नमयैर्युतम् ।
तन्मध्ये नगरी दिव्या सायोध्येति प्रकीर्त्तिता ॥
चतुर्द्वारसमायुक्ता हेमगोपुरसंयुता ।
चक्रादिद्वारपालैस्तु कुमुदाद्यैः सुरक्षिता ॥
चण्डप्रचण्डौ प्राग्द्वारे याम्ये भद्रसुभद्रकौ ।

"सन्धारिते चाप्युदधारयोगी
यूपे सहस्रार्पयति वैजयन्ती: ॥")
जयन्तीध्वज: । इति मेदिनी ॥ अभिमन्युसुत: ।
इति हेमचन्द्र: ॥ पञ्चवर्णमयी आजानुलम्बिता माला । यथा,—
"उपनीयमान उपायन् वनिताशतयूथप: ।
मालां बिभ्रद्वैजयन्तीं व्यचरन् मण्डयन् वनम् ॥"
इति श्रीभागवते १० स्कन्धे ३१ अध्याय: ॥

वैजयि:, पुं, मघवा । स तु जिनचक्रवर्त्तिविशेष: ।
इति हेमचन्द्र: ॥

वैजयिकं, त्रि, (विजयस्य निमित्तं विजयिना संयोग इति वा । विजय+"तस्य निमित्तमिति ।" ५ । १ । ३८ । इति ठञ् ।) विजयसम्बन्धि । इति सिद्धान्तकौमुदी ॥ (यथा, हरिवंशे ।२४२।११।
"इमौ प्रवेशसदृशं कर्म्म वैजयिकं शतम् ॥")

बै(वै)जिकं, क्ली, (बीजादुत्पन्नम् । बीज+ठक् ।) शिग्रुतैलम् । हेतु: । इति मेदिनी ॥ आत्मा ।
इति शब्दमाला ॥

बै(वै)जिक:, पुं, सद्योऽङ्कुर: । इति मेदिनी ॥ बीजसम्बन्धिनि, त्रि ॥ (वीर्य्यसम्बन्धिनि च त्रि ।
यथा, मनौ । २ । २७ ।
"गार्भैर्होमैर्जातकर्म्मचौडमौञ्जीनिबन्धनै: ।
वैजिकं गार्भिकञ्चैनो द्विजानामपमृज्यते ॥")

वैज्ञानिक:, त्रि, (विज्ञाने युक्त: । विज्ञान+"तत्र नियुक्त: ।" ४ । ४ । ६९ । इति ठक् ।) निपुण: ।
इत्यमर: ॥

बै(वै)ड़ालव्रतं, क्ली, (वैड़ालं बिड़ालसम्बन्धि व्रतम् ।) दुराचारविशेष: । यथा,—
"यस्य धर्म्मध्वजो नित्यं शक्रध्वज इवोच्छ्रित: ।
प्रच्छन्नानि च पापानि वैड़ालं नाम तद्व्रतम् ॥"
इति उद्वाहतत्त्वे यमवचनम् ॥

वै(बै)ड़ालव्रति:, पुं, अङ्गनाद्यभावात् व्रतचर्य्य: । इति जटाधर: ॥

वै(बै)ड़ालव्रतिक:, पुं, (बिड़ालव्रतेन चरतीति । बिड़ालव्रत+ठक् ।) छद्मतपस्वी । तत्पर्य्याय: ।
छद्मतापस: २ सर्व्वाभिसन्धी ३ । इति त्रिकाण्डशेष: ॥ तस्यासंभाष्यत्वं यथा,—
"पाषण्डिनो विकर्म्मस्थान् वैड़ालव्रतिकान्
शठान् ।
हैतुकान् । ।१२। वाङ्मात्रेणापि नार्च्चयेत् ॥"
इति विष्णुपुराणे ३ अंशे १८ अध्याय: ॥
"यस्य धर्म्मध्वजो नित्यं सुरध्वज इवोच्छ्रित: ।
प्रच्छन्नानि च पापानि वैड़ालं नाम तद्व्रतम् ॥"
तद्वान् वैड़ालव्रतिक: । इति तट्टीका ॥

वै(बै)ड़ालव्रती, [न्] पुं, (वैड़ालव्रतमस्यास्तीति । इनि: ।) भण्डतापस: । बिड़ालतपस्वी । इति भाषा । यथा, कौर्म्मे उपविभागे ५ अध्याये ।
"छद्मना चरितं यच्च व्रतं रक्षांसि गच्छति ।
अलिङ्गी लिङ्गवेशेन यो लिङ्गमुपजीवति ।
स लिङ्गिनां हरेदेनस्तिर्य्यग्योनौ च जायते ॥
वैड़ालव्रतिन: पापा: सर्व्वधर्म्मविनाशका: ।
...: पतन्ति पापिष्ठ कर्म्मणस्तस्य तत्फलम् ॥

पाषण्डिनो विकर्म्मस्थान् वामाचारांस्तथैव च ।
पञ्चरात्रान् पाशुपतान् वाङ्मात्रेणापि नार्च्चयेत् ॥"

वैण:, पुं, वेणुजीवी । वेणुशब्दादण्प्रत्ययेन उकारस्य लोपेन च निष्पन्नमिदम् । इति सिद्धान्तकौमुदी ॥ (यथा, याज्ञवल्क्ये । १ । १६१ ।
"वैणाभिशस्तवार्द्धुषिगणिका गणदीक्षिणाम् ॥")

वैणवं, क्ली, (वेणोरिदम् । वेणु+अण् ।) वेणुफलम् । इत्यमर: ॥ वेणुसम्बन्धिनि, त्रि ॥
(यथा, भागवते । ११ । ३० । २४ ।
"मत्ताभ्यापीपकण्टानां छन्नमायाहतात्मनाम् ।
स्पर्द्धाक्रोध: क्षयं निन्ये वैणवोऽग्निर्य्यथा वनम् ॥")

वैणव:, पुं, (वेणोरवयवो विकारो वा । वेणु+"विल्वादिभ्योऽण् ।" ४ । ३ । १३६ । इत्यण् ।) उपनयने वेणुदण्ड: । तत्पर्य्याय: । राम्भ: २ ।
इत्यमर: ॥ (वेणु: । यथा, महाभारते । ५ ।
९० । १६ ।
"भेरीमृदङ्गनिनदै: शङ्खवैणवनिस्वनै: ॥")

वैणविक:, त्रि, (वेणवो वेणुसम्बन्धि वादनं शिल्पमस्य । वैणव+"शिल्पम् ।" ४ । ४ । ५५ । इति ठक् ।)
वेणुवादक: । तत्पर्य्याय: । वेणुध्मा: २ । इत्यमर: ॥ वैणुक: ३ । इति शब्दरत्नावली ॥

वैणवी, स्त्री, (वेणोर्विकृति: । वेणु+"विल्वादिभ्योऽण् ।" ४ । ३ । १३६ । इत्यण् । ततो ङीप् ।)
वंशलोचना । इति राजनिर्घण्ट: ॥ (वेणुसम्बन्धिनी । यथा, मनु: । ४ । ३६ ।
वैणवीं धारयेद्यष्टिं सोदकञ्च कमण्डलुम् ॥")

वैणिक:, त्रि, (वीणावादनं शिल्पमस्य । वीणा+"शिल्पम् ।" ४ । ४ । ५५ । इति ठक् ।) वीणावादक: । इत्यमर: ॥ (यथा, कथासरित्सागरे ।
६३ । १६९ ।
"तच्छ्रुत्वा विहसन्नेषोऽपि हसित्वा वैणिको
ययौ ॥")

वैणुकं, क्ली, गजस्य तोदनदण्डम् । तत्तु हस्तिचालनार्थं लौहसुखवंशदण्डम् । तत्पर्य्याय: ।
तोत्रम् २ । इत्यमर: ॥ वैणुकम् ३ । इति भरत: ॥

वैणुक:, पुं, (वेणुना कायति शब्दायते इति । कै+क: । तत: स्वार्थे अण् ।) वेणुवादक: । इति शब्दरत्नावली ॥

वैणुकीय:, त्रि, (वेणुकस्यायमिति । "वेणुकादिभ्यश्छण् ।" ४ । २ । १३८ । इत्यस्य वार्त्तिकोक्त्या छण् ।) वेणुसम्बन्धीय: । इति सिद्धान्तकौमुदी ॥

वैण्य:, पुं, (वेणोरपत्यमिति । वेन+ष्यञ् ।)
पृथु: । स तु सूर्य्यवंशीयप्रथमराज: । यथा,—
"आदिराज: पृथुर्वैण्यो मान्धाता यौवनाश्वक: ॥"
इति जटाधर: ॥

वैतंसिक:, त्रि, (वीतंसो मृगपक्ष्यादिबन्धनोपायस्तेन चरतीति । वितंस+"चरति ।" ४ । ४ । ८ । इति ठक् ।) मांसविक्रेता । तत्पर्य्याय: ।
कौटिक: २ मांसिक: ३ । इत्यमर: ॥ कौटलिक: ४ । इति शब्दरत्नावली ॥ मृगपक्ष्यादिबन्धनोपायो वीतंस: तेन चरतीति वैतंसिक: । इति भरत: ॥ (यथा, महाभारते । ३ । ३२ । ३२ ।
"इमान् शकुनकानाजन् हन्ति वैतंसिको यथा ।
एतद्रूपमधर्म्मस्य भूतेषु हि विहिंसता ॥" )

वैतनिक:, त्रि, (वेतनेन जीवतीति । वेतन+"वेतनादिभ्यो जीवति ।" ४ । ४ । १२ । इति ठक् ।) वेतनभुग्भृत्य: । तत्पर्य्याय: भृतक, २ भृतिभुक् ३ कर्म्मकर: ४ । इत्यमर: ॥ (यथा, उपदेशशतके । २० ।
"वीरो वैतनिक: सन्विराटनगरोषित: कुमारीणाम् ।
नर्त्तयिताऽर्ज्जुन आसीत् भवेदवस्थोचितं
वृत्तम् ॥" )

वैतरणि:, } स्त्री, नरकसिन्धु: । इत्यमर: ॥ "वितरणेन दानेन तीर्य्यते वैतरणी । स्य:
वैतरणी, } शिल्पादौ वा वैतरणिश्च । अटविपटिचाटीवैतरण्यविशुद्धीरिति हस्वान्तेषु वत: । ततोऽपि पाद्दोमादीति वा ङीप् । वितरणं तरणं वितरणं तदस्यामस्तीति वैतरण्यन्ये । वितरणौ विशुद्धौ पातात्र भवा वैतरणीत्यन्ये ।
वितरणिर्विनौका तरणमुक्त्यर्थ: स्वार्थे ष्णे वैतरणीत्यन्ये । सिन्धुर्नदी ।
'नारका जन्तव: प्रेता नदी वैतरणी स्मृता ।'
इति त्रिकाण्डम् ॥"
इति भरत: ॥ ० ॥ सा नदी दुर्गन्धा तप्तजला महावेगा अस्थिकेशरक्तपरिपूर्णा यमद्वारे वर्त्तते । यथा,—
"नदी वैतरणी नाम दुर्गन्धा रुधिरावहा ।
उष्णतोया महावेगा अस्थिकेशतरङ्गिणी ॥"
इति प्रायश्चित्तविवेकधृतयमदग्निवचनम् ॥ ० ॥
अस्य उत्पत्तिर्यथा,—

मार्कण्डेय उवाच ।

"ततो ब्रह्मादयो देवा: सर्व्वे ते शङ्करान्तिकम् ।
गत्वा हरं संस्तुवु: स्वासायां योगमायया ॥
शर्व्वेश्वरोऽपि भूतश्च माया चान्तर्हितस्तदा ।
वाप्यद्रिं दुराधर्षामिव जग्राह मायया ॥
यदा स नाशकत्ताभ्यां सन्धारयितुमञ्जस: ।
तदा महागिरौ चिप्ता वाप्यास्ते जलधारके ॥
लोकालोकस्य निकटे जलधाराख्यो गिरि: ।
पुष्करद्वीपपृष्ठस्थस्तोयसागरपश्चिमे ॥
स तु सर्व्वप्रमाणेन मेरुपर्व्वतसन्निभ: ।
तस्मिन् विन्यस्तवान् वाप्यान् न धर्त्तुं क्षम
ईशितु: ॥
विदीर्णस्तेस्तु वाप्यौघैर्मध्यमध्योऽभवद्द्रुतम् ।
ते वाप्यर: पर्व्वतं भित्त्वा विविशुस्तोयसागरम् ॥
सागरोऽपि यदीनु तास प्रपाक स्वरान्वित ।
ततस्तु सागरं मध्ये भित्त्वा वाप्या: समागता: ॥
तोयधे: प्रागभवा वेला पार्श्वमात्राद्बिभेद ताम् ।
विभिद्य वेलां ते वाप्या: पुष्करद्वीपमध्यगा: ॥
नदी वैतरणी भूत्वा पूर्व्वसागरगाभवन् ।
जलधारस्य वेगेन संसर्गात् सागरस्य च ॥
अवाप्य सौम्यतां किञ्चिदाप्यास्ते नाभिदम्
निर्मितम् ।
महाव्यथाकुला पृथ्वी विदीर्णा स्यान्न चेच्छनि: ॥

अवतनयाह ते वाक्यं सोऽपि कायोऽभवत्तदात् ।
धर्मेश्वरेण ते योद्धमसमर्थेन जीवके ॥
निर्मितं दारितः सोऽसौ जलधारो महागिरिः ।
विभिद्य पर्वतं प्रायोऽसौ यास्ते सागरं ययुः ॥
वैवस्वतपुरद्वारे योजनद्वयविस्तृता ।
अद्यापि तिष्ठत्यमला चरलोकसमन्वता ॥
भित्त्वा वेलां तत: पूर्वां विभिद्याशु तरङ्गिणीम् ।
चक्रुर्वैतरणीनाम्ना पूर्वसागरगामिनीम् ॥
नानायानविमानेन न नौका स्यन्दनेन च ।
तर्तुं शक्या सा तु नदी तप्ततोया विभीषणा ॥
दुःखेन तां तु पृथिवीं बिभर्त्ति महताधुना ।
सदा घोरं गतैर्वारिभिर्विष्विमन्ति भयङ्करान् ॥
तस्या उपरि नो यान्ति देवा अपि भयातुराः ।
यमद्वारं समाश्रित्य योजनद्वयविस्तृता ।
नित्यं वहति संपूर्णा भीषयन्ती जगत्त्रयम् ॥"

इति कालिकापुराणे १८ अध्यायः ॥ * ॥

आसन्नमृत्युकाले वैतरणीगोदानं यथा,—

"आसन्नमृत्युना देया गौः सवत्सा च पूर्ववत् ।
तदभावे च गौरेका नरकोद्धारणाय वै ॥
तदा यदि न शक्नोति दातुं वैतरणीञ्च गाम् ।
शक्तोऽन्योऽथवा दद्यात् तदा दत्ता श्रेयो दयान्वितस्य च ॥"

पूर्ववच्छिमद्गुणादिना । अत्र मृतस्य नेति अवगा-
हेकादशाहेऽपि वैतरणीदानाचारः । इति
शुद्धितत्त्वम् ॥ * ॥ वैतरणीगोदानाकन्तरं
प्रार्थनामन्त्रो यथा,—

"यमद्वारे महाघोरे तप्ता वैतरणी नदी ।
तां च तर्तुं ददाम्येनां कृष्णां वैतरणीञ्च गाम् ॥"

इति तत्त्वयोगः ॥ अन्यत् सुतद्वा शब्दे द्रष्टव्यम् ॥
पितृकन्या । यथा,—

"अयज्वानश्च यज्वानः पितरो अश्वयः स्मृताः ।
अग्निष्वात्ता बर्हिषदो द्विधा तेषां व्यवस्थितिः ।
तेभ्यः स्वधा सुता जज्ञे मेना वैतरणी तथा ॥"

इति कौर्म्मे १३ अध्यायः ॥ * ॥

( कलिङ्गदेशस्थ-नदीविशेषः । यथा, महा-
भारते । ३ । ११४ । ४ ।

"एते कलिङ्गाः कौन्तेय ! यत्र वैतरणी नदी ।
यत्रायजत धर्मोऽपि देवाञ्छरणमेत्य वै ॥")

वैतसः, पुं, ( वेतस एव । स्वार्थे अण् । ) अम्ल-
वेतसः । इति जटाधरः ॥ ( पुंस्प्रजननम् ।
शिश्नस्थम् । इति निघण्टुः । ३ । २९ ॥ यथा,
ऋग्वेदे । १० । ९५ । ४ ।

"त्रिः स्म माह्नः श्नथयो वैतसेन ।"

"वैतसेन शेपो वैतस इति पुंस्प्रजननस्येति
निरुक्तम् । ३ । २१ । पुंस्प्रजननेन श्नथिता
ताड़िता भवति ।" इति तद्भाष्ये सायणः ॥ * ॥
वेतसस्यायमिति । तस्येदमिति अण् । वेतस-
सम्बन्धिनि, त्रि । यथा, रघुः । ४ । ३५ ।

"आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैत-
सीम् ॥")

वैतानिकः, पुं, ( वितानो भवः । वितान+ठक् । )
श्रौतहोमः । यथा,—

"मरणादेव कर्त्तव्यं संयोगो यस्य नाग्निना ।
दाहादूर्द्ध्वमशौचं स्याद्यस्य वैतानिको विधिः ॥"

इति शुद्धितत्त्वम् ॥

वितानसम्बन्धीये, त्रि । वितानशब्दात् ष्णिक-
प्रत्ययेन निष्पन्नमेतत् ॥ ( यज्ञादिकार्य्यकारी ।
यथा च भागवते । १० । ४० । ५ ।

"त्वां यथा च विद्यया केचित् त्वां वै वैतानिका
द्विजाः ।
यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया ॥")

वैतालिकः, पुं, ( विविधेन तालेन चरतीति ।
विताल+ठक् । ) बोधकरः । इत्यमरः ॥ हे
निशान्ते बोधकारके । विविधो मङ्गलगीति-
वाद्यादिजनकस्तालशब्दः तेन व्यवहरन्ति वैता-
लिकाः ष्ठे कार्त्तिति ष्णिकः । निशान्ते निर्द-
यन्तो ये नृपं बोधयन्ति जागरयन्ति ते बोध-
कराः स्तुत्यार्थ इति टः । इति भरतः ॥ ( यथा,
शिशुपालवधे । ५ । ६७ ।

"वैतालिकाः स्फुटपदप्रकटार्थमुच्चै-
र्भोगावलीः कलगिरोऽवसरेषु पेठुः ॥")

खेड्डिताल: । यथा,—

"वैतालिकः पुमान् खेड्डिताले बोधकरे त्रिषु ॥"

इति मेदिनी ॥

हेमचन्द्रे तु पाठान्तरं यथा,—

"वैतालिकः अङ्कताले मङ्गलपाठकेऽपि च ॥"

वेतालसम्बन्धिनि, त्रि ॥

वैत्तकः, त्रि, वित्तसम्बन्धी । वित्तशब्दात् कण्प्रत्ययेन
निष्पन्नमिदम् ॥

वैत्तेयः, त्रि, वित्तसम्बन्धीयः । वित्तशब्दात् ढञ्
प्रत्ययेन निष्पन्नमेतत् ॥

वैदः, त्रि, पण्डितसम्बन्धी । विद्शब्दात् ष्णप्रत्ययेन
निष्पन्नमेतत् ॥

वैदग्धं, क्ली, ( विदग्धस्य भावः । ष्यञ् । ) विदग्ध-
त्वम् । यथा । वैदग्धमपि वैदग्धी । इति भरत-
द्विरूपकोषः ॥ ( यथा, साहित्यदर्पणे । १ ।

"वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ॥")

वैदग्धी, स्त्री ( विदग्धस्येयमिति । विदग्ध+अण् ।
स्त्रियां ङीप् । ) भङ्गिः । यथा,—

"तत्तं मिवञ्च वैदग्धी भङ्गिस्त्रिभङ्गिमौलिका ॥"

इति त्रिकाण्डशेषः ॥

( यथा, कथासरित्सागरे । ७० । १०६ ।

"धात्रा वैदग्ध्यनिर्म्माणवैदग्धीं दर्शितामिव ॥")

वैदग्ध्यं, क्ली, ( विदग्ध+ष्यञ् । ) विदग्धस्य
भावः । विदग्धशब्दात् ष्यञ्प्रत्ययेन निष्पन्न-
मेतत् ॥ ( यथा, कथासरित्सागरे । १ । ३२ ।

"वैदग्ध्यख्यातिलोभाय मम नैवायमुद्यमः ॥")

वैदर्भं, क्ली, वाक्यप्रकारम् । इति मेदिनी ॥ विदर्भ-
सम्बन्धिनि, त्रि ॥

वैदर्भः, पुं, ( विदर्भो निवासोऽस्येति । विदर्भ+
अण् । ) विदर्भदेशीयराजः । ( यथा, रघुः ।
५ । ६० ।

"मेने यथा तत्र जनः समेतो
वैदर्भमागन्तुमजं गृहेशम् ॥")

दमयन्तीपिता भीमसेनः । रुक्मिणीपिता भीष्म-
कश्च । वाक्यरुक्मिणा । इति धरणिः ॥

वैदर्भी, स्त्री, वाक्यरीतिभेदः । इति मेदिनी ॥
यथा, रीतिमाह ।

"पदसंघटना रीतिरङ्गसंस्था विशेषवत् ।
उपकर्त्री रसादीनां—————॥"
रसादीनामर्थात् शब्दार्थशरीरस्य काव्यस्यात्म-
भूतानाम् ।
"—————सा पुनः स्याच्चतुर्विधा ।
वैदर्भी चाथ गौड़ी च पाञ्चाली लाटिका
तथा ॥"

ता रीतिः । तत्र ।

"माधुर्य्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥"

यथा । अनङ्गमङ्गलभुव इत्यादि । रुद्रटस्त्वाह ।

"असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी ।
वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुवि-
धेया ॥"

अत्र दशगुणास्त्वन्मतोक्ताः श्लेषादयः ।

"ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ।
समासबहुला गौड़ी—————॥"

यथा । चञ्चद्भुजेत्यादि । पुरुषोत्तमस्त्वाह ।

"बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च
गौड़ीया ।
रीतिरनुप्रासमहिमपरतन्त्रा स्तोकवाक्या च ॥"
"—————वर्णैः शेषैः पुनर्द्वयोः ।
समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ॥"

द्वयोर्वैदर्भीगौड्योः । यथा,—

"मधुरया मधुबोधितमाधवी-
मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मद-
ध्वनिभृता निभृताक्षरमुज्जगे ॥" * ॥

भोजस्त्वाह ।

"समस्तपञ्चषपदामोजःकान्तिसमन्विताम् ।
मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः ॥"
"लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरा
स्थिता ॥"

यथा,—

"अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोड़ताम्रस्तमांसि ॥"

कश्चिदाह ।

"मृदुपदसमाससुभगा युक्तैर्वर्णैर्न चातिभूयिष्ठा ।
उचितविशेषणपूरितवस्तुन्यासा भवेल्लाटी ॥"

अन्ये त्वाहुः ।

"गौड़ी डम्बरबद्धा स्यात् वैदर्भी ललिताक्रमा ।
पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः ॥"

क्वचित्तु वक्त्राद्यौचित्यादन्यथा रचनादयः ।
वक्त्रादीत्यादिशब्दाद्वाच्यप्रबन्धौ रचनादीत्यादि-
शब्दाद्वृत्तिवर्णौ । तत्र वक्त्रौचित्याद्यथा ।
मन्थायस्तार्णवाम्भ इत्यादि । अत्र वाच्य

ओजःप्रायबन्धकत्वेऽपि भीमसेनवक्तृत्वेनोद्धता वचनादयः। वाच्यौचित्याद्यथोदाहृते। स्फुर्द्दवाधूयमानेत्यादौ ॥ * ॥ प्रबन्धौचित्याद्यथा। नाटकादौ रौद्रेऽप्यभिनयप्रतिकूलत्वेन न दीर्घसमासादयः। एवमाख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः। कथायां रौद्रेऽपि नात्यन्तमुद्धताः। एवमन्यदपि ज्ञेयम्। इति साहित्यदर्पणे रीतिविवेको नाम ९ परिच्छेदः ॥ * ॥ अगस्त्यपत्नी। इति शब्दरत्नावली ॥ दमयन्ती। यथा,—

"वैदर्भी विपुलानुरागकलना सौभाग्यसन्नाखिल-
स्त्रीणीचक्रमुपासकौ निजगदे तद्वृत्ततत्क्रमैः।
किन्नाश्चाकनरेन्द्रभूसुभगता संभूतये तत्पदौ
ईर्ष्याभारवशप्रसादितमृग्याविस्मापिताप्यौल्वणः ॥"
इति उत्तरनैषधे १५ सर्गः ॥

रुक्मिणी। यथा,—
"वैदर्भ्याः स तु सन्देशं निशम्य यदुनन्दनः।
प्रगृह्य पाणिना पाणिं प्रहसन् इदमब्रवीत् ॥"
इति श्रीभागवते १० स्कन्धे ५३ अध्यायः ॥

वैदलं, क्ली, भिक्षुकस्य वंशमयादिपात्रम्। यथा,
"पात्रन्तु दारवालाबुवंशमयान्यपि वैदलम् ॥"
इति जटाधरः ॥

वैदलः, पुं, (विदलो दालिस्तस्मात् जातः। विदल + अण्।) पिष्टकः। यथा,—
"पूपोऽपूपः पिष्टकः स्याद्वैदलो विदलोऽपि च।"
इति शब्दचन्द्रिका ॥
विदलो दालिस्तन्निर्म्मितपिष्टको वैदलः। तद्गुणाः।
"वैदला गुरवो भक्ष्या विष्टम्भकृद्धमारुताः ॥"
इति राजवल्लभः ॥

वैदिकः, पुं, (वेदं जानातीति। वेद+ठञ्।) वेदज्ञब्राह्मणः। वेदोक्ते, त्रि। यथा, तन्त्रसारे।
"वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगतः ॥"

वैदिशं, त्रि, विदिशाया अदूरभवं नगरम्। इति सिद्धान्तकौमुदी ॥

वैदुष्यं, क्ली, (विदुषः कर्म्म भावो वा। विद्वस्+ष्यञ्।) विदुषो भावः। विद्वस्शब्दात् ष्यञ्प्रत्ययेन निष्पन्नमिदम्। (यथा, राजतरङ्गिण्याम्। १।१२।
"पाटवं दृष्टवैदुष्यलीला सुजनभारती ॥")

वैदूर्य्यं, क्ली, (विदूरात् प्रभवतीति। विदूर+"विदूरात् ञ्यः।" ४।३।८४। इति ञ्यः।) मणिविशेषः। स तु श्यामपीतवर्णः। लहसुनीया इति हिन्दी भाषा। अस्य देवता केतुः। तत्पर्य्यायः। बालवायजम् २। इति हेमचन्द्रः ॥ केतुरत्नम् ३ कैतवम् ४ प्रावृष्यम् ५ अभ्ररोहम् ६ खराब्दाङ्कुरकम् ७ विदूररत्नम् ८ विदूरजम् ९। अस्य गुणाः। अम्लत्वम्। उष्णत्वम्। कफवातघ्नत्वम्। गुल्मशूलप्रशमनत्वम्। भूषितस्य शुभावहत्वञ्च। इति राजनिर्घण्टः ॥ अपि च।

"मुक्ताविद्रुमवज्रेन्द्रवैदूर्य्यस्फटिकादिकम्।
मणिरत्नं सरं शीतं कषायं स्वादु लेखनम्।
चक्षुष्यं धारणात्तच्च पापालक्ष्मीविनाशनम् ॥"
इति राजवल्लभः ॥ * ॥

तच्छायलक्षणं यथा,—
"एकं वेणुपलाशपेशलरुचा मायूरकण्ठत्विषा
मार्ज्जारेक्षणपिङ्गलच्छविरुचा ज्ञेयं त्रिधा छायया।
यद्गात्रं गुरुतां दधाति नितरां स्निग्धन्तु दोषोज्झितं
वैदूर्य्यं विमलं वदन्ति सुधियः स्वच्छञ्च तच्छोभनम् ॥"

तस्य कुलक्षणं यथा,—
"विच्छायं मृच्छिलागर्भं लघु रूक्षञ्च सक्षतम्।
सत्रासं परुषं कृष्णं वैदूर्य्यं दूरतस्त्यजेत् ॥"

तत्परीक्षा यथा,—
"घृष्टं यदात्मना स्वच्छं स्वच्छायां निकषाश्मनि।
स्फुटं प्रदर्शयेदेतद्वैदूर्य्यं जात्यमुच्यते ॥"
इति राजनिर्घण्टः ॥ * ॥

सूत उवाच।
"वैदूर्य्यपुष्परागाणां कर्क्केतभीष्मके वदे।
परीक्षां लक्षणा प्रोक्ता व्यासेन कथिता द्विज ॥
कल्पान्तकालक्षुभिताम्बुराशि-
निर्ह्रादकल्पाद्दितिजस्य नादात्।
वैदूर्य्यमुत्पन्नमनेकवर्णं
शोभाभिरामं द्युतिवर्णबीजम् ॥
अविदूरे वैदूर्य्यस्य गिरेरुत्तुङ्गरोधसः।
कामभूतिकसीमानमनु तस्याकरोऽभवत् ॥
तस्य नादसमुत्थत्वादाकरः सुमहागुणः।
अभूदुत्तरितो लोके लोकत्रयविभूषणः ॥
तस्यैव दानवपतेर्निनदानुरूप-
प्रावृट्पयोदवरदर्शितचारुरूपाः।
वैदूर्य्यरत्नमणयो विविधावभासा-
स्तस्मात् स्फुलिङ्गनिवहा इव सम्बभूवुः ॥
पद्मरागमुपादाय मणिवर्णा हि ये क्षितौ।
सर्व्वांस्तान् वर्णशोभाभिर्वैदूर्य्यमनुगच्छति ॥
तेषां प्रधानं शिखिकण्ठनीलं
यद्वा भवेद्वेणुदलप्रकाशम्।
चाषाग्रपत्रप्रतिमश्रियो ये
न ते प्रशस्ता मणिशास्त्रविद्भिः ॥
गुणवान् वैदूर्य्यमणिर्योजयति स्वामिनं परभाग्यैः।
दोषैर्युक्तो दोषैस्तस्माद्यत्नात् परीक्षेत ॥
गिरिकाचशिशुपालौ काचस्फटिकाश्च भूमिनिर्भिन्नाः।
वैदूर्य्यमणेरेते विजातयः सन्निभाः सन्ति ॥
लिख्याभावात् काचं लघुभावाच्छैशुपालकं विद्यात्।
गिरिकाचमदीप्तित्वात् स्फाटिकं वर्णोज्ज्वलत्वेन ॥
यदिन्द्रनीलस्य महागुणस्य
सुवर्णसंख्यातुलितस्य मूल्यम्।
तदेव वैदूर्य्यमणेः प्रदिष्टं
पलद्वयोन्मापितगौरवस्य ॥
जातस्य सर्व्वेऽपि मणेस्तु यादृग्-
विजातयः सन्ति समानवर्णाः।
तथापि नानाकरणानुमेय-
भेदप्रकारः परमः प्रदिष्टः ॥
सुखोपलक्ष्यश्च सदा विचार्य्यो
स्वयं प्रभेदो विदुषा नरेण।
स्नेहप्रभेदो लघुता मृदुत्वं
विजातिलिङ्गं खलु सार्व्वजन्यम् ॥
कुशलाकुशलैः प्रयुज्यमानाः
प्रतिबद्धाः प्रतिसत्क्रियाप्रयोगैः।
गुणदोषसमुद्भवं लभन्ते
मणयोऽर्थान्तरमूल्यमेव भिन्नाः ॥
क्रमशः समतीतवर्त्तमानाः
प्रतिबद्धा मणिबन्धकेन यत्नात्।
यदि नाम भवन्ति दोषहीना
मणयः षड्गुणमाप्नुवन्ति मूल्यम् ॥
आकरात् समतीतानामुदधेस्तीरसन्निधौ।
मूल्यमेतन्मणीनान्तु न सर्व्वत्र महीतले ॥
सुवर्णो मनुना यस्तु प्रोक्तः षोडशमाषकः।
तस्य सप्ततमो भागः संज्ञारूपं करिष्यति ॥
शाणश्चतुर्थमाषो माषकः पञ्चकृष्णलः।
पलस्य दशमो भागो धरणः परिकीर्त्तितः ॥
इति मानविधिः प्रोक्तो रत्नानां मूल्यनिश्चये ॥"
इति गारुडे वैदूर्य्यपरीक्षा ७३ अध्यायः ॥ * ॥

अन्यच्च।
"सितश्च धूम्रसङ्काशमीषत्कृष्णसितं भवेत्।
वैदूर्य्यं नाम तद्रत्नं रत्नविद्भिरुदाहृतम् ॥
ब्रह्मक्षत्रियविट्शूद्रजातिभेदाच्चतुर्व्विधम्।
सितनीलो भवेद्विप्रः सितारक्तस्तु बाहुजः ॥
पीतनीलस्तु वैश्यः स्यात् नील एव हि शूद्रकः ॥"

अथ गुणाः।
"मार्ज्जारनयनप्रख्यं स्वोनप्रतिमं हि वा।
कलितं निर्म्मलं स्वच्छं वैदूर्य्यं देवभूषणम् ॥
सुतारं घनमत्यच्छं कलितं स्वच्छमेव च।
वैदूर्य्याणां समाख्याता एते पञ्च महागुणाः ॥"

तद्यथा,—
"उद्गिरन्निव दीप्तिं योऽसौ सुतार इति गद्यते।
प्रमाणतोऽल्पं गुरु यत् घनमित्यभिधीयते ॥
कलङ्कादिविहीनं तदत्यच्छमिति कीर्त्तितम्।
अन्तःसूत्रं कलाकारश्चलो यत्र दृश्यते ॥
कलितं नाम तत्प्राज्ञः सर्व्वसम्पत्तिकारकम्।
विशिष्टाङ्गन्तु वैदूर्य्यं स्वच्छमित्यभिधीयते ॥ * ॥
कर्करं कर्कशं त्रासः कलङ्को देह इत्यपि।
एते पञ्च महादोषा वैदूर्य्याणामुदीरिताः ॥
शर्करायुक्तमिव यत् प्रतिभाति च कर्करम्।
स्पर्शेऽपि च यतश्चेयं कर्कशं बन्धुनाशनम्।
भिन्नमालिकरत्रासः स कुर्य्यात् कुलसंक्षयम् ॥
विरुद्धवर्णो यस्याङ्गे कलङ्कः क्षयकारकः।
मलदिग्ध इवाभाति देहो देहविनाशनः ॥
जयति यदि सुवर्णं त्यागशीलो यदा वा
बहुविधमणिहारी भूपतिर्व्वा यतिर्व्वा।

दधदपि धृतदोषं जातु वैदूर्य्यरत्नं
प्रतिघ्नतमलरूपः पातमेध्यत्ववाप्तम् ॥"
इति युक्तिकल्पतरौ वैदूर्य्यपरीक्षा ॥
अन्यत् गरुडपुराणवत् ॥

वैदेहः, पुं, वणिक् । इत्यमरटीकायां भरतः ॥ (विदेहस्यापत्यमिति । विदेह + अण् ।) निमिराजपुत्रः । अस्योत्पत्तिर्यथा । अपुत्रस्य तस्य भूभुजः शरीरमराजकभीरवस्ते मुनयः अरण्यां ममन्थुः । तत्र च कुमारो जज्ञे । जननाज्जनकसंज्ञां चावाप । अभूद्विदेहोऽस्य पितेति वैदेहः । मथनान्मिथिरभूत्तस्योदावसुः पुत्रोऽभवत् । इति विष्णुपुराणे ४ अंशे निमिवंशकथनं नाम ५ अध्यायः ॥ तस्य विदेहनामकारणं निमिशब्दे द्रष्टव्यम् ॥ ( वर्णसङ्करजातिविशेषः । स तु वैश्यात् ब्राह्मण्यां जातः । यथा, मनुः । १० । ११ ।
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥")

वैदेहकः, पुं, ( वैदेह एव । स्वार्थे कन् ।) वणिक् । इत्यमरः ॥ शूद्रात् वैश्यासुतः । इति मेदिनी ॥ ( वैश्याद्ब्राह्मण्यां जातो वर्णसङ्करविशेषः । यथा, मनुः । १० । १९ ।
"वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते ॥"
अस्यान्तःपुररक्षणं कार्य्यम् । यथा, तत्रैव । १० । ४७ ।
"वैदेहकानां स्त्रीकार्य्यं मागधानां वणिक्पथः ॥")

वैदेहिकः, पुं, वणिक् । इत्यमरटीकासारसुन्दरी ॥ ( वर्णसङ्करविशेषः । यथा, मनुः । १० । ३६ ।
"वैदेहिकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ ॥" )

वैदेही, स्त्री, ( विदेहेषु भवा विदेहस्यापत्यं स्त्री वा । विदेह + अण् । ङीप् । ) रोचना । सीता । ( यथा, रघुः । १२ । २० ।
"रामोऽपि सह वैदेह्या वने वन्येन वर्त्तयन् ।
चचार सानुजः शान्तो वृद्धेक्ष्वाकुव्रतं युवा ॥"
यथा च ।
"वैदेहि ! याहि कलसोद्भवधर्म्मपत्नीं
तस्याः पुरः कथय पूर्व्वकथाः समस्ताः ।
एतापि मा वद पयोनिधिबन्धनं मे
सेयं पुनश्चुलुकिताम्बुनिधिः कलत्रम् ॥"
हनुमन्नाटकः ॥)
वणिक्स्त्री । पिप्पली । इति मेदिनी ॥ ( वैदेहपत्नी । यथा, मनुः । १० । ३७ ।
"आहिण्डिको निषादेन वैदेह्यामेव जायते ॥"
विदेहदेशोत्पन्नमात्रे च । यथा, महाभारते । १ । ९५ । २३ । "देवातिथिः खलु वैदेहीमुपयेमे मर्य्यादां नाम तस्यामस्य जज्ञे अरिहो नाम ॥")

वैद्यः, पुं, ( विद्यां वेदेति । विद्या + "तदधीते तद्वेद ।" ४ । २ । ५९ । इति अण् ।) पण्डितः । यथा । कात्यायनः ।
"नाविद्यानान्तु वैद्येन देयं विद्याधनं क्वचित् ।
समविद्याधिकानान्तु देयं वैद्येन तद्धनम् ॥"
वैद्येन विदुषा । इति दायतत्त्वम् ॥ वासकवृक्षः । इति शब्दचन्द्रिका ॥ आयुर्व्वेदवेत्ता । स चाम्बष्ठजातिश्चिकित्साशास्त्रज्ञश्च । तत्पर्य्यायः । रोगहारी २ अगदङ्कारः ३ भिषक् ४ चिकित्सकः ५ । इत्यमरभरतौ ॥ दस्रा ६ विधिः ७ विद्वान् ८ आयुर्व्वेदी ९ । इति राजनिर्घण्टः ॥ स चतुर्व्विधः । रोगहरः १ विषहरः २ शल्यहरः ३ कृत्याहरः ४ । इति महाभारते राजधर्म्मः ॥ अस्योत्पत्तिर्यथा,—
"वैद्योऽश्विनीकुमारेण जातश्च विप्रयोषिति ।
वैद्यवीर्य्येण शूद्रायां बभूवुर्बहवो जनाः ॥
ते च ग्रामगुणज्ञाश्च मन्त्रौषधिपरायणाः ।
तेभ्यश्च जाताः शूद्रायां ते व्यालग्राहिणो भुवि ॥
शौनक उवाच ।
कथं ब्राह्मणपत्न्यान्तु सूर्य्यपुत्रोऽश्विनीसुतः ।
अहो केन विपाकेन वीर्य्याधानं चकार सः ॥
सौतिरुवाच ।
गच्छन्तीं तीर्थयात्रायां ब्राह्मणीं कुरुनन्दन ।
ददर्श कामुकीं कान्तः पुष्पोद्याने मनोहरे ॥
तया निवारितो यत्नात् बलेन बलवान् सुरः ।
अतीव सुन्दरीं दृष्ट्वा वीर्य्याधानं चकार सः ॥
द्रुतं तत्याज गर्भं सा पुष्पोद्याने मनोरमे ।
सद्यो बभूव पुत्रश्च तप्तकाञ्चनसन्निभः ॥
सपुत्रा स्वामिनो गेहं जगाम व्रीडिता तदा ।
स्वामिनं कथयामास यन्मार्गे दैवसङ्कटम् ।
विप्रो रोषेण तत्याज तञ्च पुत्रं स्वकामिनीम् ।
सरिद्बभूव योगेन सा च गोदावरी स्मृता ॥
पुत्रं चिकित्साशास्त्रञ्च पाठयामास यत्नतः ।
नानाशिल्पञ्च मन्त्रञ्च स्वयं स रविनन्दनः ॥
विप्रश्च ज्योतिर्गणनात् वेदनाच्च निरन्तरम् ।
वेदधर्म्मपरित्यक्तो बभूव गणको भुवि ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥ * ॥
नरकभोगान्ते वैद्यजन्म यथा,—
"यः करोत्युपहारञ्च देवब्राह्मणयोर्धनम् ।
पातयित्वा स्वपुरुषान् दश पूर्व्वान् दशापरान् ।
स्वयं याति च धूमान्धं धूमध्वान्तसमन्वितम् ।
धूमक्लिष्टो धूमभोजी वसेत्तत्र चतुर्युगम् ।
ततो मूषिकजातिश्च शतजन्मानि भारते ।
ततो नानाविधाः पक्षिजातयः कृमिजातयः ॥
ततो नानाविधा वृक्षजातयश्च ततो नरः ।
भार्य्याहीनो वंशहीनः शठरो व्याधिसंयुतः ॥
ततो भवेत् स्वर्णकारः स सुवर्णवणिक् ततः ।
ततो यवनसेवी च ब्राह्मणो गणकस्ततः ।
विप्रो देवलोपजीवी वैद्यजीवी चिकित्सकः ॥" *
अपि च ।
"आत्माणोहादिव्यापारी रसादिविक्रयी च यः ।
स याति नागवेष्टञ्च नागैर्व्वेष्टित एव च ।
वसेत् स लोममानाब्दं तत्रैव नागदंशितः ॥
ततो भवेत् स गणको वैद्यश्च सप्तजन्मसु ।
गोपश्च कर्म्मकारश्च शङ्खकारस्ततः शुचिः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २८ अध्यायः ॥ * ॥
राजवैद्यस्य लक्षणं यथा,—
"परं पारं गतो यः स्यादष्टाङ्गे तु चिकित्सिते ।
अनाहार्य्यः स वैद्यः स्याद्धर्म्मात्मा च कुलोद्गतः ।
प्राणाचार्य्यः स विज्ञेयो वचनं तस्य भूभुजः ।
राजन् राज्ञा सदा कार्य्यं यथा कार्य्यं पृथग्जनैः ॥"
इति मात्स्ये १८९ अध्यायः ॥ * ॥
सामान्यवैद्यलक्षणं यथा,—
"चिकित्सां कुरुते यस्तु स चिकित्सक उच्यते ।
स च यादृक् समीचीनस्तादृशोऽपि निगद्यते ॥
तत्त्वाधिगतशास्त्रार्थो दृष्टकर्म्मा स्वयं कृती ।
लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः ॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी प्रियंवदः ।
सत्यधर्म्मपरो यश्च वैद्य ईदृक् प्रशस्यते ॥"
दृष्टकर्म्मा दृष्टा परेण कृता चिकित्सा येन सः । स्वयंकृती स्वयंचिकित्साकुशलः । लघुहस्तः क्षिप्रहस्तः ॥ * ॥ निषिद्धवैद्यो यथा,—
"कुचैलः कर्कशः स्तब्धो ग्रामीणः स्वयमागतः ।
पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा अपि ॥"
कर्कशः अप्रियवादी । स्तब्धः साभिमानः । ग्रामीणः व्यवहारानभिज्ञः ॥ * ॥
अथ वैद्यस्य कर्म्म आह ।
"व्याधितत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥"
अस्यायमर्थः । व्याधिः सम्यक् परिचयः । यथा-शान्तिकरणं वैद्यस्य कर्म्म । न तु वैद्यः आयुषः प्रभुरित्यर्थः । अपरं स्पष्टं व्याचष्टे । व्याधेस्तत्त्वपरिचयः । वेदनायाः शान्तिकरणञ्च । एतदेव वैद्यस्य वैद्यत्वं न किन्तु वैद्य आयुषः प्रभुरित्यर्थः ॥ * ॥
अथ वैद्यानयनदूतस्य लक्षणम् ।
"यश्चिकित्सकमानेतुं याति दूतः स कथ्यते ।
स च यादृक् शुभस्तादृगत्र निगद्यते ॥
दूताः स्वजातयोऽव्यङ्गाः पटवो निर्म्मलाम्बराः ।
सुखिनोऽश्ववृषारूढाः शुभपुष्पफलैर्युताः ॥
सजातयः सुचेष्टाश्च स्वजीविनो [illegible] ॥"
भिषजं समये प्राप्ता रोगिणो पाचाल्योऽन्तरा
सजातयः रोगिसमानज [illegible] स्थिता ॥"
"यस्मा प्रायमवद्गतानि सा [illegible]
संश्रिता ॥" * ॥
अथ दूतयात्रायां शकुनविचारः ।
"वैद्याकारणाय दूतस्य गच्छतो रोगिणः कृते ।
न शुभं सौम्यशकुनप्रदीप्तन्तु सुखावहम् ॥"
प्रदीप्तमशुभः । दूतो रोगी च रिक्तहस्तो वैद्यं न पश्येत् । तथा च ।
"रिक्तहस्तो न पश्येत्तु राजानं भिषजं गुरुम् ।"
अथ आयुर्व्वेदप्रादुर्भावः । तत्रादौ ब्रह्म प्रादुर्भावः । [illegible]
"विधाताथर्व्वसर्व्वस्वमायुर्व्वेदं प्रकाशयन् । [illegible] ॥"
स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम् ॥ ।
ततः प्रजापतिं दक्षं दक्षं सकलकर्म्मसु । [illegible]
विधिर्धीरधिः साङ्गमायुर्व्वेदमुपादिशत् ॥" ।

# शब्दकल्पद्रुमः ।

अर्थात्

एतद्देशप्रचलितसमस्तकोषाशेषशास्त्रसङ्कलिताकारादिवर्णक्रमविन्यस्तशब्द-तल्लिङ्ग-नानार्थ-पर्य्याय-प्रमाण-प्रयोग-धातु-तदनुबन्धाभिधेय-

वर्णित-तत्तच्छब्दप्रसङ्गोत्थित-वेद-वेदाङ्ग-वेदान्त-न्याय-पुराणेतिहास-सङ्गीत-शिल्प-सूपकारशास्त्र-ज्योतिष-

तत्त्वाख्यान-काव्यालङ्कार-छन्दःप्रभृति-नाम-लक्षणोदाहरण-द्रव्यगुण-रोगनिदानौषध-

स्मृत्युक्तव्यवस्थादिसंयुत-सर्व्वदर्शनमतानुसारि-संस्कृताभिधानग्रन्थः ।

## स्यार-राजा-राधाकान्तदेव-बाहादुरेण

विरचितः ।

पाणिनिमतानुसारि-प्रत्येकशब्दव्युत्पत्ति-मूलग्रन्थातिरिक्तबहुतरशब्दार्थ-प्रमाण-प्रयोग-पर्य्याय-धातुपदोदाहरणादिभिः

नूतनसङ्कलितबहुतरशब्द-तदर्थ-तत्प्रमाण-प्रयोगादिवर्णित-

सम्पूर्णपरिशिष्टेन च सार्द्धम्

## श्रीवरदाप्रसादवसुना तदनुजेन श्रीहरिचरणवसुना च

सर्व्वशास्त्रविशारदकोविदवृन्दसाहाय्येन संपरिवर्द्धितः । नागराक्षरैः प्रकाशितश्च ।

चतुर्थः काण्डः ।

अन्तस्थवर्गः । य—व ।

विद्वत् ... ।
वैदुर्ष्यं, क्ली, ( विदुषः
ष्यञ् । ) विदुषो भ
प्राधान्येन ...

कलिकाता-राजधान्यां

रामनारायण-यन्त्रे मुद्रितः । ७१ नं पाथुरियाघाट-ष्ट्रीट्-भवनात् प्रकाशितश्च । शकाब्दाः १८१४

PRINTED BY K. P. BASU, RAMNARAYAN PRESS; AND CONSIDERABLY IMPROVED, CAREFULLY REVISED AND PUBLISHED BY BARADA PRASAD BASU, AND HARI CHARAN BASU. 71, PATHURIAGHATA STREET CALCUTTA:

To be had at the Sabdakalpadruma Office, No. 71, Pathuriaghata Street, Calcutta; and at the Baptist Mission Press, No. 24 Lower Circular Road Calcutta: Price for Subscribers in India, Re. 1. and Countries out of India 3s. for each number.

अथ दक्षप्रादुर्भावः ।
"अथ दक्षः क्रियादक्षः सर्व्वज्ञो वेदमायुषः ।
वेदयामास विद्वांसौ सुधीमन्तौ सुरसत्तमौ ॥"*
अथाश्विनीसुतप्रादुर्भावः ।
"दक्षादधीत्य दस्रौ विलिखतुः संहितां स्वकीयाम् ।
सकलचिकित्सकलोकप्रतिपत्तिविवृद्धये धन्याम् ॥
अयज्ञस्य शिरश्छिन्नं भैरवेण वधाय तत् ।
अश्विभ्यां संहितं तस्मात्तौ जातौ यज्ञभागिनौ ॥
देवासुररणे देवा दैत्यैर्ये च क्षताः क्षताः ।
अघातास्ते क्षताः सद्यो दस्राभ्यामक्षतं मतम् ॥
वज्रिणोऽभूद्भुजस्तम्भः स दस्राभ्यां चिकित्सितः ।
सोमाभिपतितश्चन्द्रस्ताभ्यामेव सुखीकृतः ॥
विशीर्णा दशनाः पूष्णो नेत्रे नष्टे भगस्य च ।
शशिनो राजयक्ष्माभूदश्विभ्यां ते चिकित्सिताः ॥
भार्गवश्च्यवनः कामी वृद्धः सन् विकलतां गतः ।
वीर्य्यवर्णस्वरोपेतः कृतोऽश्विभ्यां पुनर्युवा ॥
एतैश्चान्यैश्च बहुभिः कर्म्मभिर्भिषजां वरौ ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां दिवौकसाम् ॥"*
अथेन्द्रप्रादुर्भावः ।
"संहृत्य दस्रयोरिन्द्रः कर्म्माण्येतानि यत्नवान् ।
आयुर्वेदं निरुद्वेगं तौ ययाचे शचीपतिः ॥
नासत्यौ सत्यवन्तेन शक्रेण किल याचितौ ।
आयुर्वेदं यथाधीतं ददतुः शतमन्यवे ॥
नासत्याभ्यामधीत्यैव आयुर्वेदं शतक्रतुः ।
अध्यापयामास बहूनात्रेयप्रमुखान् मुनीन् ॥"*
अथात्रेयप्रादुर्भावः ।
"एकदा जगदालोक्य गदाकुलमितस्ततः ।
चिन्तयामास भगवानात्रेयो मुनिपुङ्गवः ॥
किं करोमि क गच्छामि कथं लोका निरामयाः ।
भवन्ति नामयानेतान् शक्नोमि निरीक्षितुम् ॥
दयालुरहमत्यर्थं स्वभावो दुरतिक्रमः ।
एतेषां दुःखतो दुःखं ममापि हृदयेऽधिकम् ॥
आयुर्वेदं पठिष्यामि नैरुज्याय शरीरिणाम् ।
इति निश्चित्य गतवानात्रेयस्त्रिदशालयम् ॥
तत्र मन्दिरमिन्द्रस्य गत्वा शक्रं ददर्श सः ।
सिंहासनसमासीनं स्तूयमानं सुरर्षिभिः ॥
भासयन्तं दिशो भासा भास्करप्रतिमं त्विषा ।
आयुर्वेदमहाचार्य्यं शिरोधार्य्यं दिवौकसाम् ॥
शक्रस्तु तं निरीक्ष्यैव त्यक्तसिंहासनो ययौ ।
तदग्रे पूजयामास भृशं भूरितपःक्षयम् ॥
कुशलं परिपप्रच्छ तथागमनकारणम् ।
स मुनिर्व्वक्तुमारेभे निजागमनकारणम् ॥
देवराज न राजासि दिव एव यतो भवान् ।
विधात्रा विहितो यस्मात्त्रिलोकी लोकपालकः ।
व्याधिभिर्व्यथिता लोकाः शोकाकुलितचेतसः ।
भूतले सन्ति सन्तापं तेषां हर्त्तुं क्षमां कुरु ॥
आयुर्वेदोपदेशं मे कुरु कारुण्यतो नृणाम् ।
तथेत्युक्त्वा सहस्राक्षोऽध्यापयामास तं मुनिम् ॥
मुनीन्द्र इन्द्रतः साङ्गमायुर्वेदमधीत्य सः ।
अभिनन्द्य तमाशीर्भिराजगाम पुनर्महीम् ॥
अथात्रेयो मुनिश्रेष्ठो भगवान् करुणापरः ।
स्वनाम्ना संहितां चक्रे गदचक्रानुकम्पया ॥
ततोऽग्निवेशं भेडञ्च जातूकर्णं पराशरम् ।
क्षीरपाणिञ्च हारीतमायुर्व्वेदमपाठयत् ॥
तन्त्रस्य कर्त्ता प्रथममग्निवेशोऽभवत् पुरा ।
ततो भेडादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च ॥
श्रावयामासुरात्रेयं मुनिवृन्देन वन्दितम् ।
श्रुत्वा च तानि तन्त्राणि हृष्टोऽभूदत्रिनन्दनः ॥
यथावत् सूचितं तस्मात् प्रहृष्टा मुनयोऽभवन् ।
दिवि देवर्षयो देवाः श्रुत्वा साध्विति चाब्रुवन् ॥"
अथ भरद्वाजप्रादुर्भावः ।
"एकदा हिमवत्पार्श्वे दैवादागत्य संगताः ।
मुनयो बहवस्तेषां नामभिः कथयाम्यहम् ॥
भरद्वाजो मुनिवरः प्रथमं समुपागतः ।
ततोऽङ्गिरास्ततो गर्गो मरीचिर्भृगुभार्गवौ ॥
पुलस्त्योऽगस्तिरसितो वशिष्ठः सपराशरः ।
हारीतो गौतमः सांख्यो मैत्रेयश्च्यवनोऽपि च ॥
जमदग्निश्च गार्ग्यश्च काश्यपः कश्यपोऽपि च ।
नारदो वामदेवश्च मार्कण्डेयः कपिष्ठलः ॥
शाण्डिल्यः सहकौण्डिन्यः शाकुनेयः सशौनकः ।
आश्वलायनसांकृत्यौ विश्वामित्रः परीक्षितः ॥
देवलो गालवो धौम्यः काप्यकात्यायनावुभौ ।
काङ्कायनो वैजवापः कुशिको बादरायणिः ॥
हिरण्याक्षश्च लोकाक्षिः शरलोमा च गोभिलः ।
वैखानसा बालखिल्यास्तथैवान्ये महर्षयः ॥
ब्रह्मज्ञानस्य निधयो यमस्य नियमस्य च ।
तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः ॥
सुखोपविष्टास्ते तत्र सर्व्वे चक्रुः कथामिमाम् ।
धर्म्मार्थकाममोक्षाणां मूलमुक्तं कलेवरम् ॥
तच्च सर्व्वार्थसंसिद्धैर्भवेद्यदि निरामयम् ।
तपःस्वाध्यायधर्म्माणां ब्रह्मचर्य्यव्रतायुषाम् ॥
हर्त्तारः प्रबला रोगा यत्र तत्र च सर्व्वतः ।
रोगाः कार्श्यकरा बलक्षयकरा देहस्य चेष्टा-
हरा-
दृष्टादीन्द्रियशक्तिसंक्षयकराः सर्व्वाङ्गपीडा-
कराः ।
धर्म्मार्थाखिलकाममुक्तिषु महाविघ्नस्वरूपा
बलात्
प्राणानाशु हरन्ति सन्ति यदि ते क्षेमं कुतः
प्राणिनाम् ॥
तत्तेषां प्रशमाय कश्चन विधिश्चिन्त्यो भवद्भि-
र्बुधै-
र्योगैरित्यभिधाय संसदि भरद्वाजं मुनिं तेऽब्रु-
वन् ।
त्वं योग्यो भगवान् सहस्रनयनं याचस्व लब्धुं
क्रमात्
आयुर्वेदमधीत्य यं गदभयान्मुक्ता भवामो
वयम् ॥
इत्थं स मुनिभिर्योग्यैः प्रार्थितो विनयान्वितैः ।
भरद्वाजो मुनिश्रेष्ठो जगाम त्रिदशालयम् ॥
तत्रेन्द्रभवनं गत्वा सुरर्षिगणमध्यगम् ।
दृष्टवान् वृत्रहन्तारं दीप्यमानमिवानलम् ॥
दृष्ट्वैव स मुनिं प्राह भगवान् मघवा मुदा ।
धर्म्मज्ञ स्वागतं तेऽथ मुनिं तं समपूजयत् ॥
सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम् ।
ऋषीणां वचनं सम्यगश्रावयत सत्तमम् ॥
व्याधयो हि समुत्पन्नाः सर्व्वप्राणिभयङ्कराः ।
तेषां प्रशमनोपायं यथावद्वक्तुमर्हसि ॥
तमुवाच मुनिं साङ्गमायुर्व्वेदं शतक्रतुः ।
जीवेद्वर्षसहस्राणि देही नीरुङ्निशम्य यम् ॥
सोऽनन्तागारं त्रिस्कन्धमायुर्व्वेदं महामतिः ।
यथावदचिरात् सर्व्वं बुबुधे तन्मना मुनिः ॥
तेनायुः सुचिरं लेभे भरद्वाजो निरामयम् ।
अन्यानपि मुनींश्चक्रे नीरुजः सुचिरायुषः ॥
ततश्च जनितज्ञानचक्षुषा ऋषयोऽखिलाः ।
गुणान् द्रव्याणि कर्म्माणि दृष्ट्वा तद्विधि-
माश्रिताः ॥
आरोग्यं लेभिरे दीर्घमायुश्च सुखसंयुतम् ।
आयुर्वेदोक्तविधिनान्येऽपि स्युर्गतो यथा ॥"
अथ चरकप्रादुर्भावः ।
"यदा मत्स्यावतारेण हरिणा वेद उद्धृतः ।
तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान् ॥
अथर्व्वान्तर्गतं सम्यगायुर्व्वेदञ्च लब्धवान् ।
एकदा स महीवृत्तं द्रष्टुं चर इवागतः ॥
तत्र लोकान् गदैर्ग्रस्तान् व्यथया परिपीडितान् ।
स्थलेषु बहुषु व्यग्रान् म्रियमाणांश्च दृष्टवान् ॥
तान् दृष्ट्वातिदयायुक्तस्तेषां दुःखेन दुःखितः ।
अनन्तश्चिन्तयामास रोगोपशमकारणम् ॥
सञ्चिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह ।
यतश्चर इवायातो न ज्ञातः केनचिद्यतः ॥
तस्माच्चरकनामासौ विख्यातः क्षितिमण्डले ।
स भाति चरकाचार्य्यो देवाचार्य्यो यथा दिवि ॥
सहस्रवदनस्यांशो येन ध्वंसो रुजां कृतः ।
आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन् ॥
मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम् ।
तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता ।
चरकेणात्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः ॥"
अथ धन्वन्तरिप्रादुर्भावः ।
"एकदा देवराजस्य दृष्टिर्निपतिता भुवि ।
तत्र तेन नरा दृष्टा व्याधिभिर्भृशपीडिताः ॥
तान् दृष्ट्वा हृदयं तस्य दयया परिपीडितम् ।
दयार्द्रहृदयः शक्रो धन्वन्तरिमुवाच ह ॥
धन्वन्तरे सुरश्रेष्ठ भगवन् किञ्चिदुच्यते ।
योग्यो भवसि भूतानामुपकारपरो भव ॥
उपकाराय लोकानां केन किं न कृतं पुरा ।
त्रैलोक्याधिपतिर्व्विष्णुरभून्मत्स्यादिरूपवान् ॥
तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव ।
प्रतीकाराय रोगाणामायुर्व्वेदं प्रकाशय ॥
इत्युक्त्वा सुरशार्दूलः सर्व्वभूतहितैषया ।
समस्तमायुषो वेदं धन्वन्तरिमुपादिशत् ॥
अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरिः पुरा ।
आगत्य पृथिवीं काश्यां जातो बाहुजवेश्मनि ॥
नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति
क्षितौ ।
बाल एव विरक्तोऽभूच्चचार च महत्तपः ॥
यत्नेन महता ब्रह्मा तं काश्यामकरोन्नृपम् ।

ततो धन्वन्तरिर्लोकैः काशीराजोऽभिधीयते ॥
हिताय देहिनां सोऽयसंहिता विहितासुना ।
अयं विद्यार्थिनो लोकान् संहितां तामपाठ-
यत् ॥"

अथ सुश्रुतप्रादुर्भावः ।
"अथ ज्ञानदृशा विश्वामित्रप्रभृतयोऽवदन् ।
अयं धन्वन्तरिः काश्यां काशीराजोऽयमुच्यते ॥
विश्वामित्रो मुनिस्तेषु पुत्रं सुश्रुतमुक्तवान् ।
वत्स ! वाराणसीं गच्छ त्वं विश्वेश्वरवल्लभाम् ॥
तत्र नाम्ना दिवोदासः काशीराजोऽस्ति
बाहुजः ।
स हि धन्वन्तरिः साक्षादायुर्वेदविदां वरः ॥
आयुर्वेदं ततोऽधीत्य लोकोपकृतिहेतवे ।
सर्व्वप्राणिदया तीर्थमुपकारो महामखः ॥
पितुर्व्वचनमाकर्ण्य सुश्रुतः काशिकां गतः ।
तेन सार्द्धं समध्येतुं मुनिपुत्रशतं ययौ ॥
अथ धन्वन्तरिं सर्व्वे वानप्रस्थाश्रमे स्थितम् ।
भावयन्तं सुरश्रेष्ठं मुनिभिर्बहुभिः स्तुतम् ॥
काशीराजं दिवोदासं तेऽपश्यन् विनयान्विताः ।
आगताश्च इति स्माह दिवोदासो यशोधनः ॥
कुशलं परिपप्रच्छ तथागमनकारणम् ।
ततस्ते सुश्रुतद्वारा कथयामासुरुत्तरम् ॥
भगवन् मानवान् दृष्ट्वा व्याधिभिः परिपीड़ितान् ।
क्रन्दतो म्रियमाणांश्च जाताक्रान्तं हृदि व्यथा ॥
आमयानां शमोपायं विज्ञातुं वयमागताः ।
आयुर्व्वेदं भवानस्मानध्यापयतु यत्नतः ॥
अङ्गीकृत्य वचस्तेषां नृपतिस्तानुपादिशत् ।
व्याख्यातं तेन ते तत्त्वाच्चक्रुस्तं नमो मुदा ॥
काशीराजं ययाशीभिरभिनन्द्य मुदान्विताः ।
सुश्रुताद्याः सुसिद्धार्थां जग्मुर्गेहं स्वकं स्वकम् ॥
प्रथमं सुश्रुतस्तेषु स्वं तन्त्रं कृतवान् स्फुटम् ।
सुश्रुतस्य सखायोऽपि पृथक् तन्त्राणि तेनिरे ।
सुश्रुतेन कृतं तन्त्रं सुश्रुतं बहुभिर्यतः ।
तस्मात्तं सुश्रुतं नाम्ना विख्यातं क्षितिमण्डले ॥"
इति भावप्रकाशः ॥

अथ मतान्तरे वैद्योत्पत्तिकथनम् ।
"सत्यत्रेताद्वापरेषु युगेषु ब्राह्मणाः किल ।
ब्रह्मक्षत्रियविट्शूद्रकन्यका उपयेमिरे ॥
तत्र वैश्यसुतायां ये जज्ञिरे तनया अमी ।
सर्व्वे ते मुनयः ख्याता वेदवेदाङ्गपारगाः ॥
तेषां मुख्योऽम्बताचार्य्यस्तस्यामष्ठा कुले हि तत् ।
अम्बष्ठ इत्यथाप्युक्तस्तो जातिप्रवर्त्तनात् ॥
परे सर्व्वेऽपि चाम्बष्ठा वैश्या ब्राह्मणसम्भवाः ।
जननीतो जघुर्लब्ध्वा यज्ञाता वेदसंस्कृतेः ॥
आयुःशास्त्रेण ते सर्व्वे द्विजा वैद्याः प्रकीर्त्तिताः ।
अथ चक्रप्रतिकारित्वाद्भिषजस्ते प्रकीर्त्तिताः ॥
सत्ये वैद्याः पितुस्तुल्यास्त्रेतायाञ्च तथा स्मृताः ।
द्वापरे चाम्बष्ठप्रोक्ताः कलौ वैश्योपमाः स्मृताः ॥
अथाम्बष्ठेषु सर्व्वेषु विख्याता अभवन्नमी ।
सेनो दासश्च गुप्तश्च दत्तो देवः करो धरः ॥
राजः सोमश्च नन्दिश्च कुण्डश्चन्द्रश्च रक्षितः ।
एषां वंशाः समुत्पन्ना एतत्प्रभृतयो मताः ॥
अन्यप्रभृतयोऽप्येवं सन्ति वैद्या न ते श्रुताः ।
बहवश्चैकनामानो नानागोत्रसमुद्भवाः ॥
यथाष्टौ विश्रुताः सेना इत्येवमपरे मताः ।
यस्य यस्य मुनेर्यो यः सन्तानः स स विश्रुतः ॥
तत्तद्गोत्राद्विना वैद्यः सैत्राद्यस्तु सकर्म्मका ॥"
तथा हि ।
"तिस्रो वर्णानुपूर्व्वेण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्य्याः स्वाः शूद्रजन्मनः ॥
यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥
पाणिं भर्त्तुः सवर्णासु गृह्णीयात् क्षत्रिया शरम् ।
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥
सवर्णेभ्यः सवर्णासु जायन्ते च सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्द्धनाः ॥
विप्रान्मूर्द्धाभिषिक्तो हि क्षत्रियायां विशः
स्त्रियाम् ।
जातोऽम्बष्ठस्तु शूद्रायां निषादः पार्शवोऽपि वा ॥
वैश्याशूद्र्योश्च राजन्यान्माहिष्योग्रौ सुतौ
स्मृतौ ।
वैश्यात्तु करणः शूद्रां विन्नास्वेष विधिः स्मृतः ॥"
एते षट् श्लोका याज्ञवल्कीयाः ॥
"शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते ।
ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मनः ॥
पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्म्मणि ॥
शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ।
वसनस्य दशा ग्राह्याः शूद्रयोत्कृष्टवेदने ॥"
इति पद्यत्रयम् ॥
"ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते ॥"
इति च पद्यार्द्धं मानवीयम् ॥
"वैश्यायां ब्राह्मणाज्जातोऽम्बष्ठो हि मुनि-
सत्तम ।
ब्राह्मणानां चिकित्सार्थं निर्द्दिष्टो मुनिपुङ्गवैः ॥"
इति पराशरः ॥
"वेदाज्जातो हि वैद्यः स्यादम्बष्ठो ब्रह्मपुत्रकः ।"
इति शङ्खः ॥
ब्रह्मा मूर्द्धाभिषिक्तश्च वैद्यः क्षत्रविशावपि ।
अमी पञ्च द्विजा एषां यथापूर्व्वञ्च गौरवम् ॥"
इति हारीतः ॥
"मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥"
इति याज्ञवल्क्यवचनम् ॥
मूर्द्धाभिषिक्ताम्बष्ठयोरपि पितृवत्त्वात् द्विजत्वम् ॥
इति वृद्धाः ॥
"आयुर्व्वेदोपनयनाद्वैद्यो द्विज इति स्मृतः ॥"
इति वैद्यकेऽभिधेयः ॥
"तपोयोगात् पुरा वैद्यस्तेनवा पितृवत् स्मृताः ।
विप्रात् पश्चाद्युतो न्यूनाः क्रियया वैश्यवत्
स्मृताः ॥
शनैः शनैः क्रियालोपादथ ता वैद्यजातयः ।
कलौ शूद्रत्वमापन्ना यथा चान्ये यथा विशः ॥"
इति विष्णुः ॥
"युगे जघन्ये द्वे जाती ब्राह्मणः शूद्र एव च ।"
इति यमः ॥
"शनकैश्च क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वङ्गता लोके ब्राह्मणादर्शनेन च ॥"
इति मनुवचनं धृत्वा एवमम्बष्ठादीनामपि कलौ
शूद्रत्वमिति स्वग्रन्थेषु वाचस्पतिमिश्रादिभि-
स्तथा शुद्धितत्त्वे कालभट्टाचार्य्येणाप्युक्तम् ।
अतएव कुलपञ्जिकायामुक्तम् । अतिदिष्टं हि
वैद्यस्य शूद्रत्वं क्षत्रियादिवदिति । तस्मात्
क्षत्रविप्रोस्तुल्यो वैद्यः शूद्रस्य पूजित इति ॥*॥
"युगे युगे कर्म्मणैवोत्कर्षापकर्षावाह मनुः ।
तयोरीतिप्रभावेण ते गच्छन्ति युगे युगे ॥"
मनुर्व्विविध जन्मत इति ॥
"अम्बष्ठोऽम्बष्ठताचार्य्यः ख्यातोऽभूद्भुवनत्रये ।
सिद्धविद्याकरीं कन्यां अवैद्यस्य तु मानवीम् ॥
उपयेमे महीना धर्म्मचिकित्सतत्त्वाः श्रुतः ।
अथैतस्य वरेणैव ख्याता वैद्या महौजसः ॥
सेनो दासश्च गुप्तश्च दत्तो देवः करो धरः ।
राजः सोमश्च नन्दिश्च कुण्डश्चन्द्रश्च रक्षितः ॥
सन्तानां बहवस्तेषां बभूवुश्च चिकित्सकाः ।
कुलानुरूपतस्तेषां जाताः प्रकृतयोऽपराः ॥
तेषां प्रशंसा निन्दा च बभूव स्वेन कर्म्मणा ।
उत्तमौ सेनदासौ च गुप्तदत्तौ तथैव च ॥
देवः करश्च मध्यस्थौ राजसोमौ कुलाधमौ ।
नन्दिप्रभृतयो निन्द्या गुप्तप्रभृतयोऽपि च ॥
केचिच्छात्रा परिख्यातास्तथा वृत्त्यनुसारतः ।
सर्व्वासामेव जातीनां वृत्तिरेव गरीयसी ।
वृत्तिः श्लाघ्या च पथ्या च वृत्त्या जातिः प्रव-
र्त्तते ॥"
इति प्राचीनकुलपञ्जिकाधृतव्यासवचनानि ॥
इति वैद्योत्पत्तिकथनम् ॥*॥ अथ वैद्यानां
गोत्राणि ।
"अष्टाविंशतिरमी गोत्राः सर्व्वेषां भिषजामपि ।
प्रत्येकन्ते लिलिख्यन्ते सेनदासादितः क्रमात् ॥
धन्वन्तरिश्च शक्तिश्च तथा वैश्वानराह्वकौ ।
मौद्गल्यकौशिकौ शाण्डिल्य आङ्गिरसोऽपि च ॥
अष्टौ गोत्राणि सेनानां दासानां तदनन्तरम् ।
मौद्गल्योऽथ भरद्वाजः शालङ्कायन एव च ॥
शाण्डिल्यश्च वशिष्ठश्च वात्स्यश्च सप्तमी मताः ।
गुप्तानां त्रीणि गोत्राणि काश्यपो गौतमस्तथा ॥
आत्रेयैरपि दत्तानां चत्वारः परिकीर्त्तिताः ।
कौशिकः काश्यपश्चैव शाण्डिल्यश्चापि तत्परः ॥
मौद्गल्य इति विज्ञेयाश्चत्वारो देवसम्भवाः ।
आत्रेयशाण्डिल्यौ च शाण्डिल्य आलमालकः ॥
धरस्य काश्यपः प्रोक्तो भरद्वाजश्च कुण्डजः ।
काश्यपो रक्षितस्यैको गोत्रा एते प्रकीर्त्तिताः ॥
दत्तानामाद्यगोत्राणां देशभेदेऽस्ति सन्ततिः ।
एवमात्रेयगोत्रोऽपि दत्तो देशान्तरे श्रुतः ॥
दत्ताः शाण्डिल्यगोत्रा दृश्यन्ते बहवस्तथा ।
तस्मादुक्तस्य गोत्राणि यत्र ज्ञेयानि पण्डितैः ॥
कराणां काश्यपो गोत्रो वात्स्यमौद्गल्यकावपि ।
देशभेदे हि विद्यन्ते तस्मात् सप्तगोत्रकः ॥

दाशः काश्यपगोत्रोऽप्यस्ति तथा शाण्डिल्यगोत्रजः।
अथान्ये च जामदग्न्यगोत्रा देशान्तरे धराः॥
बहवोऽपि भरद्वाजगोत्रजाः सन्ति रक्षिताः।
इत्यादिकौ परौ यौ द्वौ वैद्यौ गोत्राख्ययोरिति॥
इन्द्रस्य काश्यपो गोत्र एक एव प्रकीर्त्तितः।
आदित्यानामिमौ गोत्रावादित्यकौशिकौ
स्मृतौ॥
यच्चाग्रदेते विख्याताखण्डगोत्रा भिषक्कुले।
यत्तु देशान्तरे गोत्रमन्यत् किमपि च श्रुतम्।
इत्यादीनां न तत् प्रोक्तमप्रसिद्धमतीव तत्॥"●
अथ पञ्जिकान्तरोक्तराढ़ीयवैद्यकुलाष्टकीय-
गोत्रसंख्याभेदादि लिख्यते।
"काश्यपादृषिसेनस्य गोत्राख्यष्टौ भवन्ति
च।
शाण्डिल्यधन्वन्तरी मौद्गल्यौ वैश्वानराख्यकौ।
मौद्गल्यकौशिकौ कश्यपेय आङ्गिरसोऽष्टमाः॥"
अथ राढ़ीयाष्टघरवैद्यानां प्रवरानाह।
"प्रवराः पञ्च सेनानां धन्वन्तरिकुलोद्भवाम्।
विनिर्दिष्टा यथा ते च धन्वन्तर्यपराग्रतौ॥
नैध्रुवश्चाङ्गिरसो वार्हस्पत्य इति क्रमात्।
शाण्डिल्यगोत्रे त्रयः शाण्डिल्यराग्रदवशिष्टकाः॥
प्रवराः पञ्च दासानामौर्व्वच्यवनभार्गवाः।
जामदग्न्याप्नुवानः प्रोक्ता मौद्गल्यगोत्रजाः॥
गुप्तानां त्रय एवैते काश्यपोऽप्यपसारकः।
नैध्रुवोऽमी प्रवराः काश्यपान्वयसम्भुवाम्॥
दत्ते त्रयं कौशिकानां शाण्डिल्यासितदेवलाः।
कण्वात्रेयो वशिष्ठश्च आत्रेयश्चेति ते त्रयः॥
दत्तानां प्रवरा एते दत्तात्रेयकुलोद्भवाम्।
आत्रेयगोत्रजातानां देवानाञ्च तथा त्रयः॥
आत्रेय आङ्गिरसको वार्हस्पत्य इति क्रमात्।
करे भरद्वाजगोत्रे त्रयोऽमी प्रवराः स्मृताः॥
भरद्वाजो भार्गवश्च च्यवनश्च क्रमादमी।
राजवंशे वात्स्यगोत्रे कथिताः प्रवरास्त्रयः॥
वात्स्योऽसितस्तथा मार्कण्डेय एवं क्रमादिति।
अथ कौशिकगोत्रस्य सोमस्य प्रवरास्त्रयः॥
कौशिकः काश्यपश्चैव भार्गवश्चेत्यमी क्रमात्।
सेनादीनामनुक्ता ये आद्यगोत्रादिसम्भुवाम्॥
प्रवरास्तेऽपि विज्ञेयास्तत्तत्कुलसुधां सुखात्।
नन्द्यादीनां वरेन्द्रेषु चतुर्णां प्रवराश्च ये।
विज्ञेयास्ते च निखिलास्तेषां कुलसुधां सुखात्॥"
इति वैद्यानां प्रवराः॥●॥
अथ वैद्येषु राढ़ीयादिकथनम्।
"सेनो दाशश्च गुप्तश्च दत्तो देवः करस्तथा।
राजसोमावपीत्यष्टौ राढ़ीयाः परिकीर्त्तिताः॥
नन्दिश्चन्द्रो धरः कुण्डो रक्षितश्चेति पञ्च ये।
ते वरेन्द्रेषु विख्याता दासदत्तकरा अपि॥
राढ़ीया भिषजो ये ये प्रायस्ते वङ्गगा अपि।
नन्द्यादयो महाराष्ट्रे निवसन्ति च केचन॥"
तथा च पञ्जिकान्तरे।
"सेनो दाशश्च गुप्तश्च मध्ये दत्तादयस्तथा।
अष्टौ राढ़ासु विख्याताः प्रायोऽमी वङ्गगा
अपि॥"

तथान्यच्च।
"नन्दिचन्द्रधरदत्तरक्षिता-
स्ते समासमिति वरेन्द्रविश्रुताः।
कीर्त्तिपूर्वक इहैव वक्ष्यते
तत्कुलं स्फुटु वरेन्द्रजं पुनः॥"
तथा हि नारायणदासोऽन्तरङ्गस्तावच्च।
"दासो दत्तो धरश्चैव नन्दिकुण्डौ करस्तथा।
चन्द्रश्च रक्षितश्चेति वरेन्द्रकुलमष्टकम्॥"इति॥
तथान्यच्च।
"अष्टौ सेनादयो राढ़े वङ्गेष्वपि वसन्त्यमी।
नन्द्यादयो महाराष्ट्रे गुप्तचक्रयोऽपि च।
केचिच्चाद्या परिख्याता दृष्टा देशान्तरेष्वपि॥"
इति॥
"सम्बन्धः क्रियते सर्व्वैरेकदेशनिवासिभिः।
निन्द्यते किन्तु सम्बन्धो भिन्नदेशनिवासिनोः॥"
इति वैद्येषु राढ़ीयादिकथनम्॥●॥
अथ सेनादीनां पूर्व्वस्थानमाह।
"श्रीकाञ्चीग्रा गोवरं करङ्ककोठ एव च।
मोरग्रावनकान्तारौ चमातुस्थानमेव च॥
मेढाग्रावनमप्यन्यो वासग्रामस्तथैव च।
अष्टानां सेनमुख्यानां राढ़ायां स्थानमष्टकम्॥"
तथाह दुर्ज्जयः।
"काञ्ची गोरं करङ्कश्च मोरकान्तारमातुकाः।
मेढ्रो मानश्च राढ़ायां वैद्यानां कुलमष्टकम्॥"
इति वैद्यानां पूर्व्वस्थानकथनम्॥●॥
अथ स्थानभेदेन सेनादिभेदमाह।
"ऊनविंशतिधा सेना अष्टाविंशतिधा परम्।
भवन्ति भेदैस्तेषां वक्ष्यते कुलसञ्चयम्॥
एको विनायकः सेनो भेदेन नवधाभवत्।
मानचो धलहकीयः स्नानाज सिमहाटिकः॥
नारहट्टो गिरोलीयस्तथा मङ्गलकोटजः।
रायिग्रामी वैनणीयो नव वैनायका अमी॥
विशेषतो विनिर्दिष्टा ज्ञेयाश्चान्यस्थलोद्भवाः।
सामान्यस्थानकथने सम्बन्धभागपी तथा।
सर्व्वेषामेव वैद्यानामितरेषामयं क्रमः॥"
इति विनायकसेनवंशनिर्णयः॥
"एकः पुनर्गयीसेनो भेदेनैव चतुर्विधः।
विश्वपाकाभवः श्रेष्ठिकायिपुरजस्तथा।
अन्यः कड़ूयिसम्भूतो धाकुाग्रामी ततः परः॥"
इति गयीसेनवंशनिर्णयः॥
"एको राघवसेनोऽभूत् खयग्रामेऽत्र विश्रुतः।
स खश्च इति ख्यातो नापरा तस्य च स्थली॥"
इति राघवसेनवंशनिर्णयः॥
"राणा विमलसेनोऽभूत् सेनभूमिकृताश्रयः।
स सेनभूमौ विख्यातो नापरं तस्य च स्थलम्॥"
इति राज्ञो विमलसेनस्य वंशनिर्णयः॥
"पाञ्चदामोदरः सेनः पाञ्चः शिखरभूपतेः।
असौ शिखरभूणातो नापरं तस्य च स्थलम्॥"
इति पाञ्चदामोदरवंशनिर्णयः॥
"विनसेनोऽपि यश्चैको मल्लभूमिकृताश्रयः।
स एव मल्लभूमिको नापरा तस्य च स्थली॥"
इति विनसेनवंशनिर्णयः॥

"सप्तमो वृषिसेनो यो वङ्गभूमौ प्रतिष्ठितः।
शाकियाग्रामसम्भूतस्तन्नाम्ना तस्य तत्कुलम्॥"
इति शाकियावृषिसेनवंशनिर्णयः॥
इति धन्वन्तरिगोत्रजातानां सप्तविधानां
सेनानां भेदेनाष्टादशप्रकारनिर्णयः॥
"श्रीवत्ससेनप्रमुखाः षड़मी शाण्डिल्यगोत्रजाः।
भेदेन सप्तधा ज्ञेया यथाक्रममसी पुनः॥
एकः श्रीवत्ससेनोऽभूत्तिहडुग्रामविश्रुतः।
तैहडुज इति ख्यातो नापरं तस्य च स्थलम्॥"
इति श्रीवत्ससेनवंशनिर्णयः॥
"एकः प्रियाजसेनोऽसौ भेदेन द्विविधोऽभवत्।
पोड़ागाछाभवः श्रेष्ठः परः पोखरियाभवः॥"
इति प्रियाजसेनवंशनिर्णयः॥
"एको यः पुरुसेनोऽभूद्भूठिनागङ्गिमाश्रितः।
भूठिनागङ्गिजत्वेन ख्यातोऽसौ नापरं स्थलम्॥"
इति पुरुसेनवंशनिर्णयः॥
"चन्द्रसेनोऽपरश्चैकश्चन्द्रद्वीपनिवासकृत्।
शाण्डिल्यगोत्रसम्भूत इदीलपुरमाश्रितः॥"
इति चन्द्रसेनवंशनिर्णयः॥
"एको सुक्षीरसेनोऽसौ स्वर्णपीठीकृपाश्रयात्।
स एव स्वर्णपीठीति विख्यातो मल्लभूभवः॥"
इति सुक्षीरसेनवंशनिर्णयः॥
"रामसेनः परस्तस्यैवान्वभूतो बभूव यः।
स मल्लभूमिवसतौ विदितानेकपौरुषः॥"
इति शाण्डिल्यगोत्रजातानां श्रीवत्ससेनप्रमुखानां
षण्णां सप्तप्रकारनिर्णयः॥
"आद्यसेनस्तु षड्बीजो भेदेन विविधोऽभवत्।
नपाड़ासम्भवश्चैकः प्राणग्रामभवोऽपरः॥
मानकरीय एवान्यश्च आद्याः प्रकीर्त्तिताः।
आद्यर्षिगोत्रसम्भूताः स्वतन्त्राः सर्व्व एव हि॥"
इति सकलसेनानां भेदनिर्णयः॥ * ॥
अथ दाशानां भेदमाह।
"पञ्चदशविधा दाशास्तेऽमी विंशतिधा पुनः।
एकः पुनश्चायुदासो भेदेन द्विविधोऽभवत्।
एकस्तेहडुसम्भूतो मालिकाहारजः परः॥"
इति चायुवंशे द्विविधनिर्णयः॥
"पन्थदासः पुनस्त्वेको भेदेन पञ्चधाभवत्।
वालिनाड़ीभवश्चैकः परो मङ्गलनालिकः।
मौड़ुम्बरभवः पालिग्रामजः पाणगौरजः॥"
इति पन्थवंशे पञ्चविधनिर्णयः॥
"एकोऽपरः कायुदासो वङ्गभूमौ प्रतिष्ठितः।
कोग्रामीय इति ख्यातो दासो मौद्गल्यगोत्रजः॥"
इति कायुदासवंशनिर्णयः॥
भोयीदासोऽपि तत्पुत्रौ ख्यातौ दीघलकेकरौ।
अमी त्रयो वङ्गभूमौ प्रतिष्ठाः सर्व्व एव हि॥"
इति भोयीदासस्य तत्पुत्रयोश्च वंशनिर्णयः॥
"एको वराहदासोऽसौ वीढारियामवासकृत्।
स वीढारिजदासोऽपि मतो मौद्गल्यगोत्रजः॥"
इति वीढारीयवराहदासवंशनिर्णयः॥
"नृसिंहनामदासौ द्वौ वङ्गदेशे प्रतिष्ठितौ।
तौ वङ्गजाविति ख्यातौ कुलकार्य्यपरायणौ॥"
इति नृसिंहदासयोर्वंशनिर्णयः॥

"वीरदासोऽपि यस्त्वेकः स वङ्गज इति स्मृतः।
तत्रैव वङ्गे सम्बन्धस्तस्याभूद्बरकन्ययोः॥"
इति वीरदासवंशनिर्णयः॥
"ख्यातः पाषरड़ाग्रामे रामदासोऽपि तादृशः।
सुतवस्तस्य चत्वारो वीजिनस्तेऽपि विश्रुताः॥
ख्याता हमेड़-शामेड़-धाड़-वीड़ालदासकाः।
मौद्गल्यगोत्रसम्भूताः स्वतन्त्राः सर्व्व एव हि॥"
इति रामदासस्य तत्पुत्राणाञ्च वंशनिर्णयः॥
इति मौद्गल्यगोत्रजानां सकलदासानां पञ्चदशप्रकाराणां भेदेन विंशतिप्रकारनिर्णयः॥*
अथ गुप्तानां भेदमाह।
"गुप्ताश्च षड्विधा भेदास्त्रयोदशविधाः पुनः।
काश्यपान्वयसंभूताः स्वतन्त्राः सर्व्व एव हि॥
एकः पुनः कायुगुप्तो भेदेनाष्टविधोऽभवत्।
वराह नगरीयश्च श्रेष्ठोऽभून् कुलकर्म्मणि॥
पश्चिमालाभवश्चान्यस्तथैव कुलशीलवान्।
वाराशतसमुद्भूतस्तृतीयस्तदनन्तरम्॥
भीलगुप्तभवा ये ते निरोलत्रिपुराश्रिताः।
भरश्वालीनिवासस्थाः कायुगुप्तोद्भवाश्च ये॥
माटियारीभवाः केचिल्लोकगुप्तस्य वंशजाः।
पश्चिमस्थानमाश्रित्य केचित्सन्ति निजेच्छया॥"
इति कायुगुप्तवंशस्याष्टविधनिर्णयः॥
"परमेश्वरगुप्तो यः श्रेष्ठस्तद्वंशसम्भवः।
योऽभूत्त्रिपुरगुप्तोऽसौ धौड़ालाविहितस्थितिः॥"
इति धौड़ालीयत्रिपुरगुप्तवंशनिर्णयः॥
"परमेश्वरगुप्तस्य वंशजौ द्वौ प्रतिष्ठितौ।
भौँपुरीखाड़िग्रामस्थौ महत्स्वत्वाधिकारिणौ॥"
इति महाधिकारिस्वत्वाधिकारिणोर्वंशनिर्णयः॥
"अड़ालगुप्तो यः प्रोक्तः स तु शिङ्गालसम्भवः।
काश्यपान्वयसंभूतः कुलकार्य्यपरायणः॥"
इत्यड़ालगुप्तवंशनिर्णयः॥
"वीरगुप्तस्तु यः प्रोक्तो भौँपुरग्रामवासकृत्।
भौँपुरीय इति ख्यातः स च काश्यपगोत्रजः॥"
इति वीरगुप्तवंशनिर्णयः॥ इति काश्यपगोत्रजातानां सकलगुप्तानां षड्विधानां भेदेन त्रयोदशप्रकारनिर्णयः॥
"दत्तौ च द्विविधौ ज्ञेयौ रामदत्तश्च पावितः।
पूर्व्वः शाण्डिल्यगोत्रीयो वटग्रामसमुद्भवः॥
अपरः पावितो दत्तः खाँगड़ीयः स एव हि।
जातः कौशिकगोत्रे च स्वतन्त्रौ द्वौ गुणान्वितौ॥"
इति दत्तवंशनिर्णयः॥
"विकारवस्य देवस्य वंशजा आत्रेयगोत्रजाः।
समागुस्थानसंभूताः केतुग्रामेऽधुना तु ते॥
केतुग्रामीयदेवोऽसौ निकारवकुलोद्भवः।
निर्जेश्च पौषधैरेव कुलकार्य्यपरायणः॥
शाण्डियभवा ये च ये च शाण्डिल्यगोत्रजाः।
आलमालभवा ये च ते नानादेशवासिनः॥"
इति देववंशनिर्णयः॥
"एकः कान्तारवासी च करो भेदात्मनो त्रयः।
वशिष्ठशक्तिगोत्रे द्वौ वङ्गदेशे च विश्रुतौ॥
यस्तु धर्म्मकरो वीजी भरद्वाजकुलोद्भवः।
तद्वंशाः साम्प्रतं सन्ति हिमोड़ायाश्चिगाँपुरे॥"
इति करवंशनिर्णयः॥
"सेटाशासनसंभूतौ राजवंशोद्भवावुभौ।
शशिराजमहीराजौ वात्स्यगोत्रसमुद्भवौ॥
एलाचिधामनगरे शशिराजः कृताश्रयः।
महीराजः खेपड़ीयो वङ्गभूमौ च संस्थितः॥"
इति राजवंशे द्विविधनिर्णयः॥
"मालग्रामसमुद्भूतो धर्म्मसोमो महामतिः।
जातः कौशिकगोत्रे च तद्वंश्या बहुदेशगाः॥"
इति सोमवंशनिर्णयः॥ इति राढ़ाप्रसिद्धानामष्टानां सेनादीनां भेदेन वंशनिर्णयः॥*॥
"अपरे ये नन्दिचन्द्रौ धरकुण्डौ च रक्षितः।
वारेन्द्रा अपि पञ्चैते प्रसिद्धास्तत्र ते पुनः॥"
इति त्रयोदशसङ्ख्यानां वैद्यानां यथाक्रमभेदेन कुलनिर्णयः॥*॥ अथ सेनादीनां सामान्यतः सम्बन्धनिबन्धनानुरोधाद्वसतिस्थानमाह।
"श्रीखण्डनामनगरी राढ़े वङ्गे च विश्रुता।
सर्व्वेषामेव वैद्यानामाश्रयो यत्र विद्यते॥
यत्र गोष्ठी कृता वैद्यैः स्वच्छोऽभूद्विमलप्रियः।
विशेषतः कुलीनानां सर्व्वेषामेव वासभूः॥"
इति सामान्यतः सकलवैद्यानां वासस्थानसूक्तम्॥*॥ इति गौराङ्गमल्लिकाख्यभरतसेनकृतवैद्यकुलतत्त्वम्॥

वैद्यः, त्रि, वेदसम्बन्धीयः। वेदशब्दात् ष्यप्रत्ययेन निष्पन्नमेतत्॥

वैद्यकं, क्ली, आयुर्व्वेदः। चिकित्साशास्त्रम्। यथा,—
"यस्य व्याकरणे वरेण्यघटनाः स्फीताः प्रबन्धा दश
प्रख्याता नव वैद्यकेऽपि तिथिनिर्द्धारार्थमेकोऽद्भुतः।
साहित्ये त्रय एव भागवततत्त्वोक्तौ त्रयस्तस्य च
भूमन्त्वापि शिरोमणेरिह गुणाः के के न लोकोत्तराः॥"
इति मुग्धबोधव्याकरणटीकायां वोपदेवप्रशंसाश्लोकः॥*॥ तच्छास्त्रकर्त्तृनामानि यथा,—
"ऋग्यजुःसामाथर्व्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः।
विचिन्त्य तेषामर्थञ्चैवायुर्व्वेदं चकार सः॥
कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः।
स्वतन्त्रसंहितां तस्माद्भास्करश्च चकार सः॥
भास्करश्च स्वशिष्येभ्य आयुर्व्वेदं स्वसंहिताम्।
प्रददौ पाठयामास ते चक्रुः संहितास्ततः॥
तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च।
व्याधिप्रणाशबीजानि साध्वि मत्तो निशामय॥
धन्वन्तरिर्दिवोदासः काशीराजोऽथाश्विनौ।
नकुलः सहदेवोऽर्किश्च्यवनो जनको बुधः॥
जाबालो जाजलिः पैलः करथोऽगस्त्य एव च।
एते वेदाङ्गवेदज्ञाः षोड़श व्याधिनाशकाः॥*॥
चिकित्सातत्त्वविज्ञानं नाम तन्त्रं मनोरमम्।
धन्वन्तरिश्च भगवांश्चकार प्रथमे सति!॥
चिकित्सादर्पणं नाम दिवोदासश्चकार सः।
चिकित्साकौमुदीं दिव्यां काशीराजश्चकार सः॥
चिकित्सासारतन्त्रञ्च भ्रमघ्नं चाश्विनीसुतौ।
तन्त्रं वैद्यकसर्व्वस्वं नकुलश्च चकार सः॥
चकार सहदेवश्च व्याधिसिन्धुविमर्द्दनम्।
ज्ञानार्णवं महातन्त्रं यमराजश्चकार सः॥
च्यवनो जीवदानञ्च चकार भगवानृषिः।
चकार जनको योगी वैद्यसन्देहभञ्जनम्॥
सर्व्वसारं चन्द्रसुतो जाबालस्तन्त्रसारकम्।
वेदाङ्गसारं तन्त्रञ्च चकार जाजलिर्मुनिः॥
पैलो निदानं करथस्तन्त्रं सर्व्वधरं परम्।
द्वैधनिर्णयतन्त्रञ्च चकार कुम्भसम्भवः॥
चिकित्साशास्त्रबीजानि तन्त्राण्येतानि षोड़श।
व्याधिप्रणाशबीजानि बलाधानकराणि च॥
मथित्वा ज्ञानमन्थानैरायुर्व्वेदपयोनिधिम्।
ततस्तस्मात् समुद्धृत्य नवनीतानि कोविदाः॥
एतानि क्रमशो दृष्ट्वा दिव्यां भास्करसंहिताम्।
आयुर्व्वेदं सर्व्वबीजं सर्व्वं जानामि सुन्दरि!॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १६ अध्यायः॥

वैद्यनाथः, पुं, देवविशेषः। यथा,—
"करवीरे महालक्ष्मीरुमादेवी विनायके।
आरोग्या वैद्यनाथे तु महाकाले महेश्वरी॥"
इति मात्स्ये गौरीनामाष्टशतं १३ अध्यायः॥
(तथा देवीभागवते पीठस्थान माहात्म्ये। ७। ३०। ७१॥) अपि च।
"वैद्यनाथं समारभ्य भुवनेशान्तगं शिवे।
तावद्वङ्गाभिधो देशो यात्रायां न हि दुष्यति॥"
इति शक्तिसङ्गमतन्त्रे ७ पटलः॥
भैरवविशेषः। यथा,—
"हार्द्दपीठं वैद्यनाथे वैद्यनाथस्तु भैरवः।
देवता जयदुर्गाख्या नेपाले जानुनो मम॥"
इति तन्त्रचूड़ामणौ पीठनिर्णयः॥
अपि च।
"हरिद्वानगरे यत्र वैद्यनाथो महेश्वरः।
तत्राश्रयो विश्वरूपः स्वर्गदश्च उदाहृतः॥"
इति बृहद्धर्म्मपुराणे ११ अध्यायः॥
अन्यच्च।
"झारखण्डे वैद्यनाथो वक्रेश्वरस्तथैव च।
वीरभूमौ सिद्धिनाथो राढ़े च तारकेश्वरः॥"
इति महालिङ्गेश्वरतन्त्रे पीठादिक्रमेण शिवशतनामस्तोत्रम्॥

वैद्यबन्धुः, पुं, (वैद्यानां बन्धुरिव।) आरग्वधवृक्षः। इति शब्दचन्द्रिका॥ वैद्यस्य बन्धुश्च॥

वैद्यमाता, [ऋ] स्त्री, (वैद्यानां मातेव।) वासकः। इत्यमरः॥ भिषग्जननी च॥

वैद्यसिंही, स्त्री, (वैद्ये वैद्यशास्त्रोक्तौषधादौ सिंहीव प्रभूतवीर्य्यवत्त्वात्।) वासकवृक्षः। इति शब्दरत्नावली॥

वैद्या, स्त्री, काकोली। इति शब्दचन्द्रिका॥

वैधः, त्रि, (विधिना बोधितः। विधि + अण्।) विधिबोधितः। यथा। अदृष्टार्थकजातीयकर्म्मणः कालदेशकर्त्रादीनां प्रयोगानुबन्धवैधहेतुभूतानामभेदे उद्देशविशेषायत्तः। इति

प्रायश्चित्ततत्त्वम् ॥ ० ॥ अथ वैधहिंसाविचारः । “मा हिंस्यात् सर्व्वा भूतानि इत्यत्र सर्व्वशब्दस्य व्यापकार्थपरतया एतद्विधिमनुरुध्य वायव्यं श्वेतमालभेत । इत्यादिविधिविषयाप्राप्तेरस्या वैधातिरिक्तविषयत्वम् । सर्व्वाः सर्व्वाणि छन्दसि वा इत्यनेन तत् पदं सिद्धम् । यदपि नाना-धर्म्मटीकाकृद्भिर्व्वाचस्पतिमिश्रैस्तत्त्वकौमुद्याम-भिहितम् । ‘न च मा हिंस्यात् सर्व्वा भूतानि इति सामान्यशास्त्रं विशेषशास्त्रेण अग्नीषोमीयं पशुमालभेत इत्यनेन बाध्येत इति वाच्यं विरोधाभावात् । विरोधे हि बलीयसा दुर्ब्बलं बाध्यते । न चास्ति विरोधः भिन्नविषयत्वात् । तथा हि । मा हिंस्यादिति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न पुनरक्रत्वर्थत्वमपि । न चानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिदस्ति विरोधः । हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्च उपकरिष्यति’ इत्यन्तेन । तदपि सांख्य-नये । मीमांसकमते तु विरोध एव । तथा हि । गुरुनये न खलु सर्व्वभूतहिंसाभावविषयकं कार्य्यमिति निषेधविध्यर्थस्य बाधं विना अग्नी-षोमीयपश्वालम्भनविषयकं कार्य्यमिति भाव-विध्यर्थ उपपद्यते । भट्टनये तु अङ्गे यथा तथास्तु । न च तत्र पशुयागे पुरुषार्थे पशु-हिंसनस्यार्थसाधनत्वमनर्थ-साधनत्वञ्चोपपद्यते विरोधात् । वस्तुतस्तु अङ्गेऽपि विरोधोऽस्त्येव कुतः विधेरेव स्वभावो यः स्वविषयस्य साक्षात् परम्परया वा पुरुषार्थसाधनत्वमवगमयति । अन्यथा अङ्गानां प्रधानोपकारकत्वमपि नाङ्गी-क्रियते । अर्थसाधनत्वं बलवदनिष्टाननुबन्धीष्ट-साधनत्वं अनर्थसाधनत्वं बलवदनिष्टसाधनत्वं न चानयोरेकत्र समावेश इति । अतएवोक्तं तस्मादयज्ञे वधोऽवधः इति । नन्वेवं श्येनेनाभि-चरन् यजेत इत्यत्र श्येनस्य प्रत्यवायरूपेष्ट-साधनत्वमवगतम् । अभिचारो मूलकर्म्म च इति मनुना उपपातकगणमध्ये पाठादनिष्ट-साधनत्वमवगतम् । तदेतत् कथमुपपद्यतामिति चेदेवम् । आततायिनमायान्तं हन्यादेवा-विचारयन् इत्येकवाक्यतया आततायिवधे इष्टसाधनत्वं अनाततायिवधे तूपपातकत्वेन बलवदनिष्टसाधनत्वमित्यविरोध इति । गुरु-चरणा अप्येवम् ।” इति तिथ्यादितत्त्वम् ॥

**वैधात्रः**, पुं, ( विधातुरपत्यं पुमान् । विधातृ + अण् । ) सनत्कुमारः । स च विधातृपुत्रः । इत्यमरः ॥

**वैधात्री**, स्त्री, (विधातुरियमिति । विधातृ + अण् । ङीप् ।) ब्राह्मी । इति राजनिर्घण्टः ॥ (विधातृ-सम्बन्धिनि, त्रि । यथा, राजतरङ्गिण्याम् । ४ । ४१३ ।
“अभङ्गुराभिरभिमानाभ्रस्रैवासन् मनस्विनः । अभ्यवर्त्तत येनैव वैधात्र्योरपि वामताः ॥” )

**वैधूमाग्नी**, स्त्री, प्राच्यदेशीयनगरी । इति सिद्धान्तकौमुदी ॥

**वैधृतिः**, पुं, विष्कम्भादिसप्तविंशतियोगान्तर्गतशेष-योगः । तस्य त्याज्यत्वं यथा,—
“परिघस्य त्यजेदर्द्धं सप्त शूले च नाडिकाः ।
गण्डव्याघातयोः षट् च नव हर्षणवज्रयोः ।
वैधृतिव्यतिपातौ च समस्तौ परिवर्ज्जयेत् ॥”
इति ज्योतिस्तत्त्वम् ॥ * ॥
तत्र जातफलं यथा, कोष्ठीप्रदीपे ।
“मैत्रीविहीनः कुटिलः खलश्च
मर्त्यो दरिद्रः परवञ्चकश्च ।
कुकर्म्मकर्त्ता परदारभर्त्ता
भवेन्नरो वैधृतिजातजन्मा ॥”
अमृतयोगे तस्य वर्ज्यत्वमवर्ज्यत्वञ्च यथा,—
“यदि रविव्यतीपातौ दिनं चाप्यशुभं भवेत् ।
हन्यतेऽमृतयोगेन भास्करेण तमो यथा ॥
अमृताख्यो योगः सर्व्वाण्यशुभानि हेलया
नियतम् ।
न भवति पुनरिह शक्तो वैधृतिरविव्यतीपाते ॥”
इति ज्योतिस्तत्त्वम् ॥
( देवताविशेषः । यथा, भागवते । ८ । १ । २८ ।
“देवा वैधृतयो नाम विधृतेस्तनया नृप ।
नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा ॥” )

**वैधेयः**, त्रि, ( विधिं पद्धतिमेवानुसृत्य व्यवहरति । विधि + ढक् । यद्वा, विधेये कर्त्तव्ये अनभिज्ञः । विधेय + अण् । यद्वा, विरुद्धं धेयमस्य । ततः स्वार्थे अण् । पद्धतिमाश्रित्य क्रियाकारित्वात् युक्तायुक्तविवेकशून्यत्वाच्च तथात्वमस्य ।) मूर्खः । इत्यमरः । ३ । १ । ४८ ॥ ( यथा, राजतरङ्गिण्याम् । ६ । १५६ ।
“पुंश्चली जाल्मवैधेयबालकामोद्यनिर्भरा ।
समभूत्प्रवेशार्ह्या राजपर्षन्ननर्त्तिनाम् ॥” )
विधिसम्बन्धी विधेयसम्बन्धी च ॥

**वैध्यतः**, पुं, यमप्रतीहारः । इति हेमचन्द्रः ॥

**वैनतेयः**, पुं, ( विनताया अपत्यमिति । विनता + “स्त्रीभ्यो ढक् ।” ४ । १ । १२० । इति ढक् । ) गरुडः । इत्यमरः ॥ ( यथा, देवीभागवते । २ । १२ । २८ ।
“समानीयामृतं मात्रे वैनतेयः समर्पयत् ॥”)
अरुणः । इति मत्स्यपुराणम् ॥ ( विनतापत्य-मात्रे । यथा, महाभारते । १ । ६५ । ४० ।
“तार्क्ष्यश्चारिष्टनेमिश्च तथैव गरुडारुणौ ।
आरुणिर्वारुणिश्चैव वैनतेयाः प्रकीर्त्तिताः ॥”)

**वैनयिकः**, पुं, शस्त्राभ्यासरथः । तत्पर्य्यायः । योग्यरथः २ । इति हेमचन्द्रः । ३ । ४१६ ॥ (विनय एव । “विनयादिभ्यष्ठक् ।” ५ । ४ । ३४ । इति स्वार्थे ठक् । विनयः ॥ ) विनयसम्बन्धिनि, त्रि ॥ ( यथा, महाभारते । १२ । ६८ । ४ ।
“सर्व्वं वैनयिकं श्रुत्वा विनयज्ञो बृहस्पतिम् ।
दण्डिकावन्तरो भूत्वा प्रणम्य विधिपूर्व्वकम् ।
विधिं पप्रच्छ राज्यस्य सर्व्वलोकहिते रतः ॥”)

**वैनाशिकः**, पुं, बौद्धः । इति त्रिकाण्डशेषः ॥ यथा,
“भिक्षुकः क्षपणोऽश्लीको बौद्धो वैनाशिकः स्मृतः ॥”
इति त्रिकाण्डशेषः ॥

**वैनाशिकं**, क्ली, (विनाशं सूचयतीति । विनाश + ठक् । ) नाडीनक्षत्रविशेषः । स तु जन्मर्क्षा-वधित्रयोविंशनक्षत्रम् । यथा । जन्माद्यं कर्म्म ततोऽपि दशमं सांघातिकं षोडशभम् । समु-दयमष्टादशभं विनाशसंज्ञं त्रयोविंशं आद्यात् पञ्चविंशं मानसमेवं नरः षड्भः स्यात् ॥ तत्फलं यथा —
“देहादेहार्थहानिः स्याज्जन्मर्क्षे उपतापिते ।
कर्म्मर्क्षे कर्म्मणो हानिः पीडा मनसि मानसे ॥
ज्ञातिवित्तबन्धूनां हानिः सांघातिके तथा ।
अंतशे सामुदयिके मित्रभृत्यार्थसंक्षयः ॥
वैनाशिके विनाशः स्यात् देहद्रविणसम्पदाम् ॥”
इति ज्योतिस्तत्त्वम् ॥
निधनतारा । यथा,—
“वैनाशिकर्क्षे दृष्टं ग्रहणं सुधांशुभास्करयोः ।
जनयति रोगं वसुधा क्षोभं विलयञ्चाशु ॥”
वैनाशिकर्क्षं त्रयोविंशनक्षत्रं । इति केचित् । वस्तुतस्तु वैनाशिकपदं निधनतारापरम् । निधने-ऽपि चैकवाक्यत्वात् । इति तिथ्यादितत्त्वम् ॥

**वैनाशिकः**, पुं, ( विनाशो मतमस्य । विनाश + ठक् । सर्व्वं क्षणं क्षणिकमिति क्षणिकविज्ञान-वादित्वादस्य तथात्वम् ।) क्षणिकः । परतन्त्रः । ऊर्णनाभः । इति मेदिनी ॥ विनाशसम्बन्धिनि, त्रि ॥

**वैनीतकः**, पुं, क्ली, परम्परावाहनम् । इत्यमरः ॥ आरूढं वाह्यं यत् साक्षात् न वहति परम्परयैव वहति तद्वैनीतकम् । यथा दोलां वहन् दोला-वाहकः विनीयते स्मेति क्तात् विकारसंधैति के विनीतकः तेनैव स्वार्थे अणि कृते वैनीतकम् । इति भरतः ॥ विनीतसम्बन्धिनि, त्रि ॥

**वैन्यः**, पुं, ( वेनस्यापत्यं पुमान् । वेन + “कुर्व्वा-दिभ्यो ण्यः ।” ४ । १ । १५१ । इति ण्यः । ) वेनपुत्रः । स तु पृथुराजः । यथा,—
“वेनस्य मथिते पाणौ स बभूव महाद्युमान् ।
वैन्यो नाम महीपालो यः पृथुः परिकीर्त्तितः ।
येन दुग्धा मही पूर्व्वं प्रजानां हितकारणात् ॥”
इति वह्निपुराणे सर्गानुषङ्गनामाध्यायः ॥
(यथाच ऋग्वेदे । ८ । ९ । १० ।
“पृथी यद्वां वैन्यः सादनेष्वेव ।”
“वैन्यो वेनस्य पुत्रः पृथी एतत्संज्ञो राजर्षिः ।”
इति तद्भाष्ये सायणः ॥ )

**वैपरीत्यं**, क्ली, ( विपरीत + ष्यञ् । ) विपरीतस्य भावः । तत्पर्य्यायः । व्यत्यासः २ विपर्य्यासः ३ विपर्य्ययः ४ अत्ययः ५ । इति हेमचन्द्रः ॥ ( यथा, मार्कण्डेये । ४३ । ३४ ।
“स्वभाववैपरीत्यञ्च प्रकृतेश्च विपर्य्ययः ॥”)

**वैपरीत्यलज्जालुः**, स्त्री, पुं, (वैपरीत्या लज्जालुः ।) स्वल्पक्षुपरक्तफला लज्जालुः । यथा,—
“लज्जालुर्वैपरीत्याख्या स्वल्पक्षुपरक्तफला ।
वैपरीत्या च लज्जालुराभिधाने प्रयोजयेत् ॥
लज्जालुर्वैपरीत्याख्यः कटुरुष्णः कफापहः ।
इति नियामकश्चैव नानाविज्ञानकारकः ॥”
इति राजनिर्घण्टः ॥

वैभवं, क्ली, विभवस्य भावः। विभवशब्दात् ष्यप्रत्ययेन निष्पन्नमिदम्॥ (यथा, कथासरित्सागरे। ६६। १६१।
"सोऽप्यावेद्य यथार्थमम्बरचराधीशः स्वयात् कल्पिताशेषस्त्रोचितदिव्यवैभवविधिः सिद्धिप्रभावात्ततः॥"
अतिशयः। यथा, भागवते। ५। १८। ११।
"यत्तत्कृतज्ञं निजवीर्य्यवैभवं
सौघं सजुः संस्पृशतां हि मानसम्॥"
विभोर्भाव इत्यर्थे अण्प्रत्यये ऐश्वर्य्यम्। यथा, भागवते। १०। १४। ३८।
"जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभो। मनसो वपुषो वाचो वैभवं तव गोचरः॥")

वैभाजित्रं, क्ली, (विभाजयितुर्धर्म्मोऽम्नायम्। विभाजयितृ + "ऋतोऽञ्।" ४। ४। ४६। इति अञ्। विभाजयितुर्णिलोपश्चेति काशिकोक्त्या णिलोपः।) विभाजयितुर्धर्म्मोऽम्नायम्। इति सिद्धान्तकौमुदी॥

वैभ्राजं, क्ली, देवोद्यानम्। इति त्रिकाण्डशेषः॥ (यथा, मार्कण्डेये। ५५। २।
"पूर्व्वे चैत्ररथं नाम दक्षिणे नन्दनं वनम्। वैभ्राजं पश्चिमे शैले सावित्रश्चोत्तराचले॥"
विभ्राजराजस्य तपःस्थानम्। यथा, हरिवंशे। २३। १४।
"ततो विभ्राजितं तेन वैभ्राजं नाम तद्वनम्॥"
पुं, पर्व्वतविशेषः। यथा, मार्कण्डेये। ५६। १३।
"तरसुरिति विख्याता वैभ्राजं चापरं ययौ।"
लोकविशेषः। यथा, हरिवंशे। १८। ४६।
"वैभ्राजा नाम ते लोका दिवि भान्ति सुदर्शनाः॥")

वैमात्रः, पुं, (विमातुरपत्यमिति। विमातृ + अण्।) वैमात्रेयः। इति जटाधरः॥

वैमात्रा, स्त्री, (विमातुरपत्यं स्त्री।) विमातृकन्या। वैमात्रशब्दाट्टाप्प्रत्ययेन निष्पन्नम्॥

वैमात्रेयः, पुं, (विमातुरपत्यम्। विमातृ + "शुभ्रादिभ्यश्च।" ४।१।१२३। इति ढक्।) विमातृपुत्रः। तत्पर्य्यायः। विमातृजः २ वैमात्रः ३। इति जटाधरः॥ ("तयोरभावे तथाविधौ वैमात्रेयौ।" इति शुद्धितत्त्वे प्रेतश्राद्धाधिकारिप्रस्तावे॥)

वैमात्रेयी, स्त्री, (विमातुरपत्यं स्त्री। विमातृ + ढक्। ततो ङीप्।) विमातृकन्या। वैमात्रेयशब्दान्ङीप्प्रत्ययेन निष्पन्नमिदम्॥

वैमुक्तः, त्रि, विमुक्तिविशिष्टः। तद्भावे, क्ली। विमुक्तशब्दात् ष्यप्रत्ययेन निष्पन्नमिदम्॥

वैमेयः, पुं, विनिमयः। इति हेमचन्द्रः॥

वैयाकरणः, त्रि, (व्याकरणं वेत्ति अधीते वा। व्याकरण + "ऋगयनादिभ्यः।" ४। ३। ७३। इति अण्। "न य्वाभ्यां पदान्ताभ्यामिति।" ७। ३। ३। इति यकारात् पूर्व्वं ऐच्।) व्याकरणवेत्ता। व्याकरणाध्येता। व्याकरणशब्दात् ष्णप्रत्ययेन योर्युमेति इमा स्त्रियं विरिति शब्दौ च निष्पन्नमिदम्। व्याकरणसम्बन्धी च॥ (यथा, पाणिनौ। ६। ३। ७।
"वैयाकरणाख्यायां चतुर्थ्याः॥"
यथा च महाभारते। ५। ४३। ६१।
"सर्व्वार्थानां व्याकरणाद्वैयाकरण उच्यते। तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा॥")

वैयाकरणभार्य्यः, पुं, वैयाकरणी भार्य्या यस्य। इति मुग्धबोधव्याकरणम्॥

वैयाघ्रः, पुं, (व्याघ्रस्य विकारः। व्याघ्र + "प्राणिरजतादिभ्यः।" ४। ३। १५४। इति अञ्। ततः वैयाघ्रेण चर्म्मणा परिवृतो रथः। "द्वैपवैयाघ्रादञ्।" ४।२।१२। इति अञ्।) व्याघ्रचर्म्माच्छादितरथः। तत्पर्य्यायः। द्वैपः २। इत्यमरः। २।८।५२॥ (यथा, महाभारते। २।५८।४।
"अयं सहस्रसमितो वैयाघ्रः सुप्रतिष्ठितः। सुचक्रोपस्करः श्रीमान् किङ्किणीजालमण्डितः॥")
व्याघ्रसम्बन्धिनि, त्रि। यथा,—
"उत्तराभिमुखो भूत्वा निराहारो निरम्बरम्। वैयाघ्रचर्म्मवसना सोऽर्द्धमङ्गणना सती॥ ज्योतिर्मयं शिवं ध्यात्वा परं शिवकरं परम्॥"
इति कालिकापुराणे ४४ अध्यायः॥
(यथा च बृहत्संहितायाम्। ४४। १३।
"पूर्व्वाभिमुखः श्रीमान् वैयाघ्रे चर्म्मणि स्थितो राजा॥")

वैयाघ्रपद्यः, पुं, (व्याघ्रपदोऽपत्यमिति। व्याघ्रपद् + यञ्। यद्वा, व्याघ्रस्येव पादावस्य इति बहुव्रीहौ "पादस्य लोपः इति।" ५।४।१३८। इति अकारलोपे गर्गादित्वात् यञ्। "पादः पत्।" ६।४।१३०। इति पदादेशः। "न य्वाभ्यामिति।" ७। ३। ३। यकारात् पूर्व्वमैच्।) गोत्रकारकमुनिविशेषः। यथा, तिथ्यादितत्त्वे।
"वैयाघ्रपद्यगोत्राय सांकृतिप्रवराय च। अपुत्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे॥"
(यथा, महाभारते। ४। ६। ११।
"युधिष्ठिरस्यासमहं पुरा सखा
वैयाघ्रपद्यः पुनरस्मि विप्रः॥")

वैयासकिः, पुं, (व्यासस्यापत्यम्। "व्यासवरुडनिषादेति।" ४। १। ९७। इत्यस्य काशिकोक्त्या इञ् अकङादेशश्च। न य्वाभ्यामिति ऐच्।) व्यासस्यापत्यम्। इति मुग्धबोधव्याकरणम्॥ (यथा, भागवते। १०। १। १४।
"एवं निशम्य भृगुनन्दन साधुवादं
वैयासकिः स भगवानथ विष्णुरातम्।
प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं
व्याहर्तुमारभत भागवतप्रधानः॥")

वैयासिकः, त्रि, (व्यासेन कृतः। व्यास + ठञ्। तत ऐच्।) व्यासकृतसंहितादिः। इति श्रीभागवतम्॥

वैयुष्टः, त्रि, (व्युष्टे दीयते कार्य्यम्। "व्युष्टादिभ्योऽण्।" ५।१।९७। इति अण्। नय्वाभ्यामित्यैच्।) प्रातर्भवः। इति सिद्धान्तकौमुदी॥

वैरं, क्ली, (वीरस्य कर्म्म भावो वा। वीर + अण्।) विरोधः। इत्यमरः॥ (यथा, भागवते। ८। ७। ३९।
"बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया॥")
तस्य पञ्चस्थानानि यथा। स्त्रीजम् १ यथा कृष्णशिशुपालयोः। वास्तुजम् २ यथा कौरवपाण्डवानाम्। वाग्जम् ३ यथा द्रोणद्रुपदयोः। सापत्नम् ४ यथा मूषिकमार्जारयोः। अपराधजम् ५ यथा पूजनीब्रह्मदत्तयोः। इति महाभारतम्॥

वैरक्त्यं, क्ली, (विरक्तस्य भावः। विरक्त + ष्यञ्।) विरक्तता। विरक्तशब्दाद्भावार्थे ष्यप्रत्ययेन निष्पन्नमिदम्॥

वैरङ्गिकः, त्रि, (विरङ्गं नित्यमर्हतीति। "छेदादिभ्यो नित्यम्।" ५। १। ६४। इति ठञ्।) विरागार्हः। इति हेमचन्द्रः॥

वैरनिर्यातनं, क्ली, (वैरस्य निर्यातनम्।) कृतापकारस्य प्रत्यपकारः। तत्पर्य्यायः। वैरशुद्धिः २ प्रतीकारः ३। इत्यमरः॥

वैरप्रतिक्रिया, स्त्री, (वैरस्य प्रतिक्रिया।) वैरनिर्यातनम्। इति हेमचन्द्रः॥

वैरशुद्धिः, स्त्री, (वैरस्य शुद्धिः।) वैरनिर्यातनम्। इत्यमरः॥

वैरागिकः, त्रि, (विरागं नित्यमर्हतीति। विराग + ठञ्।) विरागार्हः। इति सिद्धान्तकौमुदी॥

वैरागी, [न्] त्रि, (विरागस्य भावो वैरागम्। तदस्यास्तीति इनिः।) विषयेच्छारहितः। वैराग्ययुक्तः। यथा,—
"सनकश्च सनन्दश्च तृतीयश्च सनातनः। सनत्कुमारो वैरागी चतुर्थः पुत्र एव च॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे २४ अध्यायः॥

वैराग्यं, क्ली, (विरागस्य भावः। विराग + ष्यञ्।) विषयतुच्छधीः। यथा,—
"ज्ञानवैराग्ययोर्भक्तिप्रवेशायोपयोगिता। ईषत् प्रथममेवेति नाङ्गत्वमुचितं तयोः॥ यदुभे चित्तकाठिन्यहेतू प्रायः सतां मते। सुकुमारस्वभावेयं भक्तिस्तद्धेतुरीरिता॥"
यथा एकादशस्कन्धे।
"तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः। न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह॥" इति॥
किन्तु ज्ञानविरक्त्यादिसाध्यं भक्त्यैव सिद्ध्यति। यथा तत्रैव।
"यत् कर्म्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। योगेन दानधर्म्मेण श्रेयोभिरितरैरपि॥ सर्व्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा। स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति॥ कश्चित्तदर्हतस्तस्य जनस्य भजने हरेः। विषयेषु गरिष्ठोऽपि रागः प्रायो विलीयते॥ अनासक्तस्य विषयान् यथार्हमुपयुञ्जतः। निर्ब्बन्धः कृष्णसम्बन्धे युक्तं वैराग्यमुच्यते॥ प्रापञ्चिकतया बुद्ध्या हरिसम्बन्धिवस्तुनः॥

सुहृद्भिः परित्यागो वैराग्यं बन्धु कथ्यते ॥”
इति भक्तिरसामृतसिन्धौ पूर्व्वभागे साधन-
लहरी ॥

वैराटः, पुं, इन्द्रगोपकीटः । इति हेमचन्द्रः ॥
विराटसम्बन्धिनि, त्रि ॥ ( क्ली, विराटपर्व्व ।
यथा, महाभारते । १ । २ । ५७ ।
“आरण्येयन्ततः पर्व्व वैराटन्तदनन्तरम् ॥”
विराटकन्यायां स्त्री । यथा, तत्रैव । १।७।५८ ।
“अभिमन्योश्च वैराट्या पर्व्व वैवाहिकं स्मृतम् ॥”
तथा च देवीभागवते । २ । ७ । ४ ।
“अभिमन्योर्वरा भार्य्या वैराटी चाति-
सुन्दरी ॥”
विस्तृते च त्रि । यथा, महाभारते ।१३।७८।२१।
“वैराटदक्षयावां सर्व्वरत्नैरलङ्कृतम् ।
प्रदाय भवतो लोकान् स राजन् प्रतिपद्यते ॥”)

वैराट्या, स्त्री, जिनयोक्तृषोडशविद्यादेव्यन्तर्गतदेवी-
विशेषः । इति हेमचन्द्रः ॥

वैरातङ्कः, पुं, अर्ज्जुनवृक्षः । इति राजनिर्घण्टः ॥

वैरी, [न्] पुं, (वैरमस्यास्तीति । इनिः ।) शत्रुः ।
इत्यमरः ॥ ( यथा, मनौ । ४ । १३३ ।
“वैरिणं नोपसेवेत सहायञ्चैव वैरिणः ॥”)
वीरसम्बन्धिनि, त्रि ॥

वैरूप्यं, क्ली, ( विरूपस्य भावः । ) विरूपता ।
यथा,—
“वैरूप्यमङ्गेषु कशानिपातो
मौण्ड्यं तथा कल्मषसन्निवेशः ।
एतान् वधानर्हति रूपवादी
प्राणेषु दूतस्य वधो न दृष्टः ॥”
इति महानाटके ५ अङ्कः ॥
( असाधारणत्वम् । यथा, महाभारते । ५ ।
४३ । ७ ।
“निर्द्दिश्य सम्यक् प्रवदन्ति वेदा-
स्तं विश्ववैरूप्यमुदाहरन्ति ॥”
विपरीतत्वम् । यथा, तत्रैव । १२ । २४० । २ ।
“एतयोरन्यवैरूप्यं वर्त्तते प्रतिकूलतः ॥”)

वैरोचनः, पुं, ( विरोचनस्यापत्यम् । विरोचन+
अण् । ) बुद्धः । बलिराजः । ( यथा, महा-
भारते । ३ । १८ । १७ ।
“अथ वैरोचने दोषानिमान् विद्धि क्षमा-
वताम् ॥”)
अग्निपुत्रः । सूर्य्यपुत्रः । सिद्धगणः । इति
शब्दरत्नावली ॥

वैरोचननिकेतनं, क्ली, ( वैरोचनस्य बलेर्निके-
तनम् । ) पातालम् । इति हलायुधः ॥

वैरोचनिः, पुं, (विरोचनस्यापत्यम् । विरोचन+
इञ् । ) बुद्धः । बलिराजः । ( यथा, विष्णु-
पादादिकेशवर्णनस्तोत्रे । १ ।
“बाध्यां वैरोचनीन्द्रौ युगपदपि विपत्सम्पदो-
रेकधाम ॥”)
सूर्य्यपुत्रः । इति मेदिनी ॥

वैरोचिः, पुं, बाणदैत्यः । यथा । वैरोचिर्बलि-
नन्दनः । इति शब्दरत्नावली ॥

वैरोद्धारः, पुं, ( वैरस्योद्धारः । ) अपकारस्य
प्रत्यपकारः । यथा,—
“प्रतिकारः प्रतीकारो वैरनिर्यातनं तथा ।
निर्यातनं वैरशुद्धिर्वैरोद्धारो निगद्यते ॥”
इति शब्दरत्नावली ॥

वैलक्षण्यं, क्ली, ( विलक्षणस्य भावः । विलक्षण+
ष्यञ् । ) विलक्षणत्वम् । विलक्षणस्य भाव
इत्यर्थे ष्यप्रत्ययेन निष्पन्नमिदम् । ( यथा,
भागवते । १० । ५५ । २९ ।
“अवधार्य्य शनैरीषद्वैलक्षण्येन मोचितः ॥”
विभिन्नत्वम् । यथा, मनौ कुल्लूकः । १ । ८५ ।
“त्रेतादिष्वपि युगापचाररूपेण धर्म्मवैल-
क्षण्यम् ॥” )

वैल्वं, क्ली, ( विल्वस्येदम् । अण् । ) विल्वफलम् ।
इत्यमरटीका ॥ विल्वसम्बन्धिनि, त्रि ॥ ( यथा,
मनौ । २ । ४५ ।
“ब्राह्मणो वैल्वपालाशौ क्षत्रियो वाट-
खादिरौ ॥”)

वैवधिकः, त्रि, ( विवधेन धान्यतण्डुलादिना व्यव-
हरति । “विभाषा विवधवीवधात् ।” ४ । ४ ।
१७ । इति ठक् । ) विवधेन धान्यतण्डुलादिना
व्यवहरति यः । पसारि इति भाषा । ( यथा,
राजतरङ्गिण्याम् । ६ । ३०८ ।
“वल्गाभिधा वैवधिको वल्गामठमकारयत् ॥”)
तत्पर्य्यायः । वार्त्तावहः २ । इत्यमरभरतौ ॥
वार्त्तिकः ३ । इति शब्दरत्नावली ॥

वैवर्ण्यं, क्ली, ( विवर्णस्य भावः । ) विवर्णता ।
विवर्णस्य भाव इत्यर्थे ष्यप्रत्ययेन निष्पन्न-
मिदम् ॥ ( यथा, कथासरित्सागरे ।१६।६८।
“सा वार्त्ता कर्णमागत्य तस्या वैवर्ण्यदायिनी ॥”
तत्तु स्त्रीणां सात्त्विकभावानामन्यतमम् । यथा,
साहित्यदर्पणे । ३ । १६६ ।
“स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥”)

वैवस्वतः, पुं, (विवस्वतोऽपत्यमिति । अण् ।) यमः ।
इत्यमरः ॥ (यथा, बृहत्संहितायाम् ।६९।२३।
“एवं प्रायः सप्ततिहायनोऽयं
वैवस्वतस्यालयमभ्युपैति ॥”
यथा च ऋग्वेदे । १० । १४ । १ ।
“वैवस्वतं सङ्गमनं जनानां
यमं राजानं हविषा दुवस्य ॥”
“वैवस्वतं विवस्वतः सूर्य्यस्य पुत्रम् ।”इति तद्-
भाष्ये सायणः ॥ यथा च राजतरङ्गिण्याम् ।
४ । ६५१ ।
“नगराजिप्रामकोन दिशं वैवस्वताङ्किताम् ॥”)
रुद्रविशेषः । इति जटाधरः ॥ शनिः । सप्तमो
मनुः । (यथा, रघुवंशे । १ । ११ ।
“वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ॥”)
वर्त्तमानोऽयम् । अस्मिन्मन्वन्तरे वामनोऽव-
तारः । पुरन्दरः इन्द्रः । आदित्या वसवो
रुद्रा विश्वेदेवा मरुद्गणाः । अश्विनावृभवः ।
इत्याद्या देवाः । काश्यपः अत्रिः वशिष्ठः
विश्वामित्रः गोतमः जमदग्निः भरद्वाजः एते
सप्तर्षयः । इक्ष्वाकुः नृगः शर्य्यातिः दिष्टः धृष्टः
करूषकः नरिष्यन्तः पृषध्रः नाभागः कविः
एते मनुपुत्रा दश । इति श्रीभागवतमतम् ॥ *॥
अपि च ।
“सप्तमञ्च प्रवक्ष्यामि यद्वैवस्वतमुच्यते ।
अत्रिश्चैव वशिष्ठश्च काश्यपो गौतमस्तथा ॥
भरद्वाजस्तथा योगी विश्वामित्रः प्रतापवान् ।
जमदग्निश्च सप्तैते साम्प्रतं ये महर्षयः ॥
साध्या विश्वाश्च रुद्राश्च मरुतो वसवोऽश्विनौ ।
आदित्याश्च सुरास्तद्वत् सप्त देवगणाः स्मृताः ॥
इक्ष्वाकुप्रमुखाश्चास्य दशपुत्राः स्मृता भुवि ।
मन्वन्तरेषु सर्व्वेषु सप्त सप्त महर्षयः ॥
कृत्वा धर्म्मव्यवस्थानं प्रयान्ति परमं पदम् ॥”
इति मात्स्ये मन्वन्तरानुकीर्त्तनो नाम ९ अः ॥
अन्यच्च ।
श्रीमार्कण्डेय उवाच ।
“आदित्या वसवो रुद्राः साध्या विश्व मरुद्-
गणाः ।
भृगवोऽङ्गिरसश्चाष्टौ यत्र देवगणाः स्मृताः ॥
आदित्या वसवो रुद्रा विज्ञेयाः कश्यपात्मजाः ।
साध्याश्च मरुतो विश्वे धर्म्मपुत्रा गणास्त्रयः ॥
भृगोस्तु भृगवः पुत्राः अङ्गिरोऽङ्गिरसः सुताः ।
एष .....स्तु मारीचो विज्ञेयः साम्प्रताधिपः ॥
तेजस्वी नाम चेन्द्रोऽपि महात्मा यज्ञभागभुक् ।
अतीतानागता ये च वर्त्तन्ते ये च साम्प्रतम् ॥
सर्व्वे ते त्रिदशेन्द्रास्तु विज्ञेयास्तुल्यलक्षणाः ।
सहस्राक्षाः कुलिशिनः सर्व्व एव पुरन्दराः ॥
मघवन्तो वृषाः सर्व्वे शृङ्गिणो गजगामिनः ।
ते शतक्रतवः सर्व्वे भूताभिभवतेजसः ॥
धर्म्माद्यैः कारणैरेतैराधिपत्यगुणान्विताः ।
भूतभव्यभवन्नाथाः शृणु चैतत् त्रयं द्विज ॥
भूर्लोकोऽयं स्मृता भूमिरन्तरीक्षं भुवः स्मृतम् ।
स्वराख्यञ्च तथा स्वर्गस्त्रैलोक्यमिति गद्यते ॥
अत्रिश्चैव वशिष्ठश्च काश्यपश्च महानृषिः ।
गौतमश्च भरद्वाजो विश्वामित्रश्च कौशिकः ॥
तथैव पुत्रो भगवानृचीकस्य महात्मनः ।
जमदग्निश्च सप्तैते मुनयोऽत्र तथान्तरे ॥
इक्ष्वाकुर्नभगश्चैव धृष्टः शर्य्यातिरेव च ।
नरिष्यन्तश्च विख्यातो नाभागो दिष्ट एव च ॥
करूषश्च पृषध्रश्च भूमिपा लोकविश्रुताः ।
मनोर्व्वैवस्वतस्यैते नव पुत्राः प्रकीर्त्तिताः ॥
वैवस्वतमिदं देवि ! कथितं ते मयान्तरम् ।
अस्मिन् श्रुते नरः सद्यः पठिते चैव सत्तम ।
मुच्यते पातकैः सर्व्वैः पुण्यञ्च महदश्नुते ॥”
इति मार्कण्डेयपुराणे वैवस्वतमन्वन्तरं समाप्तम् ॥

वैवस्वती, स्त्री, ( वैवस्वतस्य इयम् । अण् । ततो
ङीप् । ) दक्षिणदिशा । इति राजनिर्घण्टः ॥

वैवाहिकः, पुं, (विवाहाद्भवः । विवाह+ठञ् ।)
कन्यापुत्रयोः श्वशुरः । वेयाइ इति वङ्गभाषा ॥
समधी इति हिन्दीभाषा । (तत्पर्य्यायः । सम्बन्धी
२ ॥ यथा, कौतुकसर्व्वस्वे । १ ।

त्यादि कृतेनत् जलघटान्वितग्रतुदानकर्म्मणः
प्रतिष्ठार्थं दक्षिणां किञ्चित् काञ्चनमथवा ताम्र-
खण्डार्थं ददामीति । ततः अच्छिद्रावधारणम् ।
ब्राह्मणविप्राणुपदेशे यथासम्भवगोत्रनाम्ना
ब्राह्मणायेति विशेषः । तत्र ब्राह्मणाभिधाने
तुभ्यमिति न देयम् । भूमौ जलादानप्रक्षेपः ।
एवमन्यत्रापि सम्प्रददे इति वाक्ये विशेषः ।
सत्पात्राभावे तत्सत्त्वेऽपि तत्कामो विष्णुप्रीति-
कामो वा विष्णवे दत्त्वा ब्राह्मणाय पश्चात्
प्रतिपादयेत् ।
"देवे दत्त्वा तु दानानि देवे दत्त्वा तु दक्षिणाम् ।
तत् सर्व्वं ब्राह्मणे दद्यादन्यथा निष्फलं भवेत् ॥"
इति मत्स्यसूक्तात् ॥
एवमेव देयानीति वाराहीये पाठः ॥ * ॥
"वैशाखे यो घटं पूर्णं सभोज्यं वै द्विजन्मने ।
ददात्यसुक्ता राजेन्द्र स याति परमां गतिम् ॥"
अत्रापि यथायोग्यं संपूज्य पूर्व्ववद्वाक्येन मनो-
रथफलार्थिना सभोज्यघटो देयः ॥*॥ स्मृतिः ।
"मेषादौ सक्तवो देया वारिपूर्णा च गर्गरी ॥"
तत्रापि यथायोग्यं संपूज्य पूर्व्ववत् वाक्यं कृत्वा
पठेत्
"ॐ एष धर्म्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात् सफला मम सन्तु मनोरथाः ॥"
इति मन्त्रलिङ्गान्मनोरथफलत्वं ज्ञेयम् ॥*॥
कृत्यचिन्तामणौ ।
"मधुरं निम्बपत्राभ्यां योऽत्ति मेषगते रवौ ।
अपि रोषान्वितस्तस्य तक्षकः किं करिष्यति ॥"
उत्तरार्द्धे तु ।
"मेषस्थे च विधौ तत्र नाद्यपङ्क्ते विषजं भयम् ॥"
इति संवत्सरप्रदीपे पाठः ॥
ततश्च मेषसंक्रान्तिदिनकाले मधुरं निम्बपत्र-
द्वयञ्च भक्षयेत् ॥ * ॥ भविष्ये ।
"या शुक्ला नरशार्दूल वैशाखे मासि वै तिथिः
तृतीया साक्षया ख्याता गीर्व्वाणैरपि वन्दिता ॥
योऽस्यां ददाति करकान् वारिवाजसमन्वितान् ।
स याति पुरुषो वीर लोकान् वै हेममालिनः ॥"
वाजमन्नम् । हेममालिनः सूर्य्यस्य । ततो जलान्न-
समन्वितकरकदाने सूर्य्यलोकगमनं फलम् ।
दानानुष्ठानं पूर्व्ववत् ॥ * ॥ ब्रह्मपुराणम् ।
"वैशाखे शुक्लपक्षे तु तृतीयायां कृतं युगम् ।
कार्त्तिके शुक्लपक्षे च त्रेता च नवमेऽहनि ॥
अथ भाद्रपदे मासि त्रयोदश्यान्तु द्वापरम् ।
माघे तु पौर्णमास्यान्तु घोरं कलियुगं स्मृतम् ॥
युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः ॥"
अत्र वैशाखादयः पौर्णमास्यन्ता एव तथैव
तिथितत्त्वाभिधानात् । शुक्लपाक्षिके कार्त्तिके
नवमेऽहनीति सिद्धौ शुक्लपक्ष इति व्यर्थं
स्यात् ॥*॥ आसां प्रशंसामाह विष्णुपुराणम् ।
"एता युगाद्याः कथिताः पुराणै-
रनन्तपुण्यास्तिथयश्चतस्रः ।
उपप्लवे चन्द्रमसो रवेश्च
त्र्यष्टकास्वप्ययनद्वये च ॥
पानीयमप्यत्र तिलैश्च मिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं
रहस्यमेतत् पितरो वदन्ति ॥"
उपप्लवे ग्रहणे । * । देवीपुराणम् ।
"युगाद्या वर्त्तते ह्यत्र सप्तमी पार्व्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥"*॥
अक्षयतृतीयामधिकृत्य ब्रह्मपुराणम् ।
"तस्यां कार्य्यो यवैर्होमो यवैर्विष्णुं समर्च्चयेत् ।
यवान् दद्यात् द्विजातिभ्यः प्रयतः प्राशयेद्-
यवान् ॥
पूजयेच्छङ्करं गङ्गां कैलासञ्च हिमालयम् ।
भगीरथञ्च नृपतिं सागराणां सुखावहम् ॥"*॥
स्कान्दे ।
"वैशाखस्य सिते पक्षे तृतीयाक्षयसंज्ञिता ।
तत्र मां लेपयेद्गन्धैर्लेपनैरतिशोभनैः ॥"
मां जगन्नाथम् । * । अन्यत्रापि ।
तथा च जगन्नाथयात्रामधिकृत्य भविष्ये ।
"संवत्सरफलं राजन् नवम्यां कार्त्तिके तथा ।
मन्वादौ च युगादौ च मासत्रयफलं भवेत् ॥"*
मन्वादयस्तु भविष्यमात्स्ययोः ।
"अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकी तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा ।
आषाढस्यापि दशमी तथा माघस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाषाढस्य पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी
सिताः ॥
मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः ॥"
अमावास्याष्टमीव्यतिरिक्ताः शुक्लाः उपक्रमोप-
संहारयोः शुक्लत्वकीर्त्तनात् ॥ * ॥ वाराहीये ।
"वैशाखे शुक्लपक्षे तु द्वादशी वैष्णवी तिथिः ।
तस्यां शीतलतोयेन स्नापयेत् केशवं शुचिः ॥"
इयं पिपीतकद्वादशी । नात्र शुद्ध्यादरापेक्षा ।
तत्र विष्णुपूजने उपवासोत्तरविधानात् ॥ * ॥
अथ चन्दनयात्रा । तत्र वैशाखशुक्लपक्षे कृत-
प्रतिशुक्लेतरवारे नन्दारिक्तात्रयोदशीतरतिथौ
[illegible]-
मत्ताराजयेतरेषु पूर्व्वफल्गुनीपूर्व्वभाद्रपदपूर्व्वा-
षाढामघाभरण्यश्लेषार्द्रेतरनक्षत्रेषु [illegible]
कर्त्तव्यम् । तच्छेषभोजनन्तु कृताङ्गनिषिद्धायां
विषुवसंक्रान्तौ अक्षयतृतीयायाञ्च विशेषतः
कर्त्तव्यम् । वैशाखाकरणे ज्यैष्ठशुक्लपक्षे
आषाढशुक्लपक्षे च हरिशयनेतरत्र कर्त्तव्यम् ।
इति कृत्यतत्त्वम् ॥ * ॥ * ॥ अथ वैशाख-
माहात्म्यम् ।
"ये कार्त्तिकव्रतपरा ये माघपरिनिष्ठिताः ।
ये वैशाखव्रतासक्तास्तेषां तुष्टः सदा हरिः ॥
सर्व्वेषामेव मासानां वैशाखः प्रवरः स्मृतः ।
पुरा हरिसुते राजन् श्रुतमेतन्न संशयः ॥
तत्र स्नानं जपो होमः श्राद्धं दानादि यत्
कृतम् ।
तत् सर्व्वं भूपतिश्रेष्ठ अक्षयमक्षयमुच्यते ॥
एकतः सर्व्वतीर्थानि सर्व्वे यज्ञाः सदक्षिणाः ।
भूप वैशाखमासस्य कोट्यंशेनापि नो समाः ॥
मेरुतुल्यानि हेमानि सर्व्वदानानि चैकतः ।
एकतः सर्व्वदा भूप माधवो माधवप्रियः ॥
असंख्यानि च पापानि बहुजन्मार्ज्जितानि च ।
निमेषार्द्धेन राजेन्द्र विलयं यान्ति माधवे ॥
वैशाखमागतं दृष्ट्वा पितृणामुत्सवो भवेत् ।
पुत्रो नियममाचर्य्य अस्मानुद्धरिष्यति ॥
आगतं माधवं दृष्ट्वा कम्पन्ते पापसञ्चयाः ।
अस्माकं नाशकालोऽयं भूपते ध्रुवमागतः ॥
वैशाखं परमं मासं माधवस्येति च प्रियम् ।
नियमेन समाचर्य्य न भूयो जायते नरः ॥
मनसा संस्मरेद्यस्तु नियमं माधवोद्भवम् ।
पूयते पातकैः सर्व्वैः शक्रेण सह मोदते ॥
वचसा यो वदेद्भूप वैशाखं माधवप्रियम् ।
अहं समाचरिष्यामि स गच्छेद्ब्रह्मणः पुरम् ॥
यः समाचरते भूप नियमेन तु माधवम् ।
स विष्णोः रूपमासाद्य विष्णुना सह मोदते ॥
नियमेन समाचर्य्य एकाहमपि भूपते ।
पितरस्तारितास्तेन यास्यन्ति परमां गतिम् ॥
तस्मिन् स्नात्वा विशुद्धात्मा दानमानार्च्चनैर्नरः ।
ईप्सितान् लभते कामान् श्रीविष्णोर्दयितो भवेत् ॥
ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो विश्वघातकः ।
नियमेन नयेन्मासं स मुक्तः सर्व्वपातकात् ॥
पातकानामेकमेव प्रायश्चित्तं विदुर्बुधाः ।
सर्व्वपापसमुद्भूतौ नात्र कार्य्या विचारणा ॥
वैशाखव्रतिनो लोकाः श्रीविष्णुसेवनोत्सुकाः ।
पापं न तेषां मतिमन्निह लोके परत्र च ॥
सर्व्वस्वदानं विधिवत् सर्व्वदा परिशोधनम् ।
चान्द्रायणञ्च विधिना कृच्छ्रं चैवातिकृच्छ्रकम् ॥
पुण्यक्षेत्राभिगमनं सर्व्वपापप्रणाशनम् ।
देवताभ्यर्च्चनं चैव तथैवातिथिसेवनम् ॥
कदापि यैर्नाचरितं वाङ्मनःकायकर्म्मभिः ।
संप्राप्य ते तु कुर्व्वन्तु माधवे नियमं नराः ॥
समाचरन्ति ये मासं माधवं कृतबुद्धयः ।
सदा प्रीतिमनास्तेषां श्रीकृष्णो देवकीसुतः ॥
या नारी विधवा भूत्वा माधवे नियमं चरेत् ।
कुलायुतसमेतन्तु नयते परमं पदम् ॥
पुत्त्रेणापीह किं कार्य्यं येन नाचरितं नृप ।
वैशाखं पुत्त्रशतकात् नारी धन्या हरिप्रिया ॥
यो माधवेऽर्च्चयेद्राजन् गोविन्दं गोपवल्लभम् ।
न तस्य विद्यते संख्या पूजनस्य फलस्य च ॥
वैशाखस्य तु धर्म्मस्य पारं गन्तुं यदीच्छसि ।
नरेन्द्र माधवं मासं नियमेन समाचर ॥
किं करिष्यति सांख्येन योगेन नरनायक ।
मुक्तिमिच्छसि चेद्राजन् माधवं माधवेऽर्च्चय ॥
अभक्ष्यभक्षणं राजन् क्रूरसिंहसम्भवम् ।
तत्पापं संक्षयं याति माधवे नियमे कृते ॥
रणे यदि रिपुं जेतुं त्वमिच्छसि नराधिप ।
नियमेन सदा विष्णोः प्रियं माधवमाचर ॥
यदि सांसारिकं दुःखं हन्तुमिच्छसि भूमिप ।

तदा नियममास्थाय माधवे माधवं भज ॥
राज्यभोगांश्च विपुलान् पुत्त्रमित्रादिसम्पदम् ।
यदिच्छसि तदा विष्णोः प्रियं माधवमाचर ॥
अकामिच्छसि राजेन्द्र अकालमृत्युजरादिकम् ।
अर्थं यदि तदा विष्णोः प्रियं माधवमाचर ॥
येनाचरितो मासो माधवः पापबुद्धिभिः ।
नरकाग्नि निवर्त्तन्ते दग्धाः कोपाग्निना हरेः ॥
न वैशाखसमो मासो विशेषः केशवप्रियः ।
अव्रतेन क्षिपेद्यस्तु तं विद्यात्रिकवाहनम् ॥
व्रतिनश्च विधवा चैव विशेषेण वनाश्रमी ।
वैशाखे नरकं याति त्यक्त्वा नियमं नरः ॥
तस्माद्राजन् प्रयत्नेन कुरु त्वं माधवव्रतम् ।
अश्वमेधसहस्राणां फलमाप्नोति मानवः ॥
तावद्गर्जन्ति पुण्यानि कर्म सर्वं रसातले ।
यावन्नायाति राजेन्द्र माधवो माधवप्रियः ॥
अल्पमात्रन्तु यत्किञ्चिद्वयो ददाति च माधवे ।
काले वा यदि वाकाले कोटिकोटिगुणं भवेत् ॥
कर्मोद्भवो राजर्षे ! यथो नैवोपपद्यते ।
तथैव माधवे मासि न क्षयं पापपुण्ययोः ॥
यत्पादि धर्मांचरणेन माधवं
नाराधितो यैः पुरुषप्रधानः ।
येन श्रुता भूप कथा मुरारे-
स्तेषां वृथा जन्म नराधमानाम् ॥
न पीडयन्ति यमदूतगणा यथा
कृत्याः पिशाचोरगभूतदानवाः ।
ये माधवे मासि नरेन्द्रवर्य
शुभं मुरारेर्व्रतमाचरन्ति च ॥"
इति पाद्मोत्तरखण्डे वैशाखमाहात्म्यकथने १६८ अध्यायः ॥

वैशाखी, स्त्री, ( विशाखया युक्ता पौर्णमासी । "नक्षत्रेण युक्तः कालः ।" ४ । २ । ३ । इत्यण् । ततो ङीप् ।) वैशाखमासस्य पूर्णिमा । यथा,
"विशाखातारकायुक्ता वैशाखी पूर्णिमा भवेत् ।"
इति शब्दरत्नावली ॥
तत्र तर्पणफलम् । वैशाखीमुपक्रम्य यमः ।
"गौरान् वा यदि वा कृष्णान् तिलान् क्षौद्रेण संयुतान् ।
प्रीयतां धर्मराजेति पितॄन् देवांश्च तर्पयेत् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ।
अभ्युदयस्त तिष्ठन्तु स्वर्गलोके न संशयः ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
रक्तपुनर्नवा । इति राजनिर्घण्टः ॥ (वसुदेवस्य स्त्रीनामान्यतमा । यथा, हरिवंशे । ३५ । २ ।
"वैशाखी च तथा भद्रा सुनामा चैव पञ्चमा ॥")

वैशिकः, पुं, ( वेशेन जीवतीति । वेश + "वेतनादिभ्यो जीवति ।" ४ । ४ । १२ । इति ठक् । ) त्रिविधनायकान्तर्गतनायकविशेषः । यथा,— शृङ्गारस्य उभयथाप्यालम्बनायकोऽपि निरूप्यते । स च त्रिविधः । पतिरुपपतिर्वैशिकश्च । बहुवेश्याभोगोपरसिको वैशिकः । यथा,—
"काञ्चीकलकलितकोमलनाभिकान्तिं
पारावतध्वनितविच्छितिसत्कपालिम् ।
उद्भ्रान्तलोचनचकोरमनङ्गरङ्ग-
माश्रावणे कमपि वारविलासवत्याः ॥" * ॥
वैशिकश्चोत्तममध्यमाधमभेदात् त्रिविधः । दयिताजनप्रकोपे अपि उपचारपरायणः उत्तमः । यथा,—
"चक्षुःप्रान्तमुदीक्ष्य पञ्चलहराः पौष्पारविन्दश्रियं
नोच्छेत्स्यति न स्मितं वितनुते गृह्णाति वीणां न वा ।
तल्पोपान्तमुपेत्य किञ्चु पुलकव्याजात्स्वपोलद्युतिः
कान्तः केवलमानतेन शिरसा मुक्ताक्षरं गृह्णति ॥" * ॥
प्रियायाः प्रकोपे यः प्रकोपमनुरागं वा न प्रकटयति चेष्टया मनोभावं गृह्णाति स मध्यमः ।
यथा,—
"कान्तं यद्यपि वाक्यवर्जितमिदं लाक्षेव चीनं वचो
नैव प्राणसरोजकान्तिरुचिरे क्वापि वक्त्रं क्षीयते ।
मानायाः करपोदमो न कविकारम्भः कृपालोचयो-
र्भूपः कुन्तलधोरणीषु सुतनोः कायलग्नो दृश्यते ॥" * ॥
भयलपालज्ज्यामुक्तः कामक्रीडायामलज्जकार्याकार्यविचारोऽधमः । यथा,—
"उदयति हृदि नैव यस्य लज्जा
न च करुणा न च कोऽपि भीतिलेशः ।
मधुमधुकुलकोमलकोमलां मां
पुनरपि तस्य करेण वासयेथाः ॥" * ॥
मानी चतुरः शठ इत्यादयोऽभेदभेदाः । मानी यथा,
"वाग्व्याकुलपराजयं तव वचो वक्त्रोपमेयं मनः
श्रुत्वा वाचमिमामपास्य विनयं यात्राऽद्य वः प्रस्थिते ।
प्रातर्व्यक्तविलोकने परिहृताकारे विलासाचने
प्राणेशे नियतं पतन्ति कृपया वामभ्रुवो हृदयः ॥"
वाक्चेष्टाव्यङ्ग्यसमागमश्चतुरः । वचनव्यङ्ग्यसमागमो यथा,—
"तमोऽण्टाके हरिदन्तराले
काले निशायाश्च निशीथभाजः ।
तटे नदीनां निकटे वनानां
घटेत शालीदरि ! कः सहायः ॥"
चेष्टाव्यङ्ग्यसमागमो यथा,—
"कान्ते कनककमलोरं करे कमपि कुर्वति ।
कमलविलिखिते भाली बिन्दुमिन्दुमुखी ददौ ॥"
इति रसमञ्जरी ॥
( वेश्यासम्बन्धि, त्रि । यथा, मृच्छकटिके ।
१ अङ्के ।
"शास्त्रेदं सामवेदं गणितमथ कला वैशिकीं हस्तिशिक्षां
ज्ञात्वा शर्वप्रसादात् व्यपगततिमिरे चक्षुषी चोपलभ्य ॥")

वैशिष्ट्यं, क्ली, ( विशिष्टस्य भावः । ) विशिष्टत्वम् । तत्तु सम्बन्धपदार्थः । विशिष्टधीनियामक इति यावत् । यथा । "विशिष्टवैशिष्ट्यावगाह्यनुपगमवादः ।" इति शिरोमणिः । एकसंयोगवान् इति शाब्दबोधो न विशिष्टवैशिष्ट्यावगाही । अपि तु प्रतीत्याकारेणैव तद्बोधाकारात् । इति भावः । इति जागदीशी सामान्यलक्षणा । * । (असाधारणत्वम् । यथा, महाभारते । १३ । १५८ । ४९ ।
"त्रिषु लोकेषु तावच्च वैशिष्ट्यं प्रतिपत्स्यसि ।
सुप्रियः सर्वलोकस्य भविष्यसि जनार्दन ॥")

वैशेषिकः, पुं, (विशेषं वेत्ति अधीते वा । विशेष + ठक् । ) कणादमुनिकृतदर्शनशास्त्रवेत्ता । तत्पर्य्यायः । औलूक्यः २ । इति हेमचन्द्रः ॥ (विशेषमधिकृत्य कृतो ग्रन्थः । विशेष + "अधिकृत्य कृते ग्रन्थे ।" ४ । ३ । ८७ । इति ठक् । ) कणादमुनिकृतदर्शनशास्त्रविशेषः । स तु विशेषपदार्थनिरूपकग्रन्थः । अस्य मतं न्यायदर्शनमततुल्यम् । अत्र जगतः कारणं परमाणुपुञ्जं निरूपितम् । * । इह खलु निखिलप्रेक्षावन्निसर्गप्रतिकूलवेदनीयतया निखिलात्मसंवेदनसिद्धं दुःखं जिहासवस्तद्धानोपायं जिज्ञासुः परमेश्वरसाक्षात्कारमुपायमाकलयति ।
"यदा चर्म्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥"
इत्यादिवचननिचयप्रामाण्यात् । परमेश्वरस्य साक्षात्कारश्च श्रवणमननभावनाभिर्भावनीयः ।
यदाह ।
"आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥"
इति ॥
तत्र मननमनुमानाधीनम् । अनुमानञ्च व्याप्तिज्ञानाधीनम् । व्याप्तिज्ञानञ्च पदार्थविवेकसापेक्षम् । अतः पदार्थषट्कम् "अथातो धर्म्मं व्याख्यास्यामः ।" इत्यादिकायां दशलक्षण्यां कणभक्षेण भगवता व्याख्यायि । तत्राह्निकद्वयात्मके प्रथमेऽध्याये समवेताशेषपदार्थकथनमकारि । तत्रापि प्रथमाह्निके जातिमन्निरूपणम् । द्वितीयाह्निके जातिविशेषयोर्निरूपणम् । आह्निकद्वयात्मके द्वितीये भूतविशेषलक्षणम् । तत्रापि प्रथमाह्निके भूतविशेषलक्षणम् । द्वितीये दिक्कालप्रतिपादनम् । आह्निकद्वयात्मके तृतीये आत्मान्तःकरणलक्षणम् । तत्रात्मलक्षणं प्रथमे । द्वितीये अन्तःकरणलक्षणम् । आह्निकद्वययुक्ते चतुर्थे शरीरतदुपयोगिविवेचनम् । तत्रापि प्रथमे तदुपयोगिविवेचनम् । द्वितीये शरीरविवेचनम् । आह्निकद्वयवति पञ्चमे कर्म्मप्रतिपादनम् । तत्रापि प्रथमे शरीरकर्म्मनिरूपणम् । आह्निकद्वयशालिनि षष्ठे श्रौतधर्म्मनिरूपणम् । तत्रापि प्रथमे दानप्रति-

सम्बन्धविशेषः । द्वितीये चातुरादाकारोचित-धर्मनिरूपणम् । तथापि सप्तमे गुणसमवाय-प्रतिपादनम् । तथापि प्रथमे बुद्धिनिरपेक्षगुण-प्रतिपादनम् । द्वितीये तदापेक्षगुणप्रतिपादनं समवायप्रतिपादनञ्च । षष्ठे निश्चितव्यक-सविकल्पकप्रत्यक्षप्रमाणविवेचनम् । नवमे बुद्धि-विशेषप्रतिपादनम् । दशमे अनुमानप्रतिपाद-नम् । तत्र उद्देशो लक्षणं परीक्षा चेति त्रिविधास्य शास्त्रस्य प्रवृत्तिः । इति वैशेषिक-ग्रन्थविवरणम् ॥ * ॥

(न्यायमते आत्मादिगतपारिभाषिकगुणः । यथा, भाषापरिच्छेदे ।

"बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको-द्रवः ।

अदृष्टभावना शब्दा अमी वैशेषिका गुणाः ॥"

विशेष एव । "विनयादिभ्यष्ठक् ।" ५ । ४ । ३४ । इति स्वार्थे ठक् ॥ असाधारणे, त्रि । यथा, महाभारते । ७ । ५ । १५ ।

"युगपत्तु ते शक्या कर्त्तुं सर्वे पुरःसरा ।

एक एव तु कर्त्तव्यो यस्मिन् वैशेषिका गुणाः ॥")

वैश्यः, पुं, (विश् + ष्यञ् ।) ब्राह्मणदेशजातस्तृतीय-वर्णः । (यथा, ऋग्वेदे । १० । ९ । १२ ।

"ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।

ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥")

तत्पर्य्यायः । ऊरव्यः २ ऊरुजः ३ अर्य्यः ४ भूमिस्पृक् ५ विट् ६ । इत्यमरः ॥ द्विजः ७ । इति जटाधरः ॥ भूमिजीवी ८ । इति शब्द-रत्नावली ॥ वणिक्जनः ९ वार्त्तिकः १० वणिकः ११ पणिकः १२ । इति राजनिर्घण्टः ॥ जम्बु-द्वीपे अस्य संज्ञा ऊरव्यः । प्लक्षद्वीपे वसुन्धरः । कुशद्वीपे अभियुक्तः । क्रौञ्चद्वीपे द्रविणः । शाकद्वीपे दानव्रतः । पुष्करद्वीपे सर्वे एकवर्णाः । इति भागवतमतम् ॥ अस्य शास्त्रनिरूपितधर्म्माश्रयः । अध्ययनम् १ यज-नम् २ दानम् ३ । चतस्रो जीविकाः । कृषिः १ गोरक्षणम् २ वाणिज्यम् ३ कुसीदम् ४ । अस्याश्रमाश्रयः । ब्रह्मचर्य्यम् १ गार्हस्थ्यम् २ वानप्रस्थम् ३ ॥ तस्य लक्षणादिर्यथा,—

"विप्राज्ञातु पशुस्यश्च कृष्यादानरतिः शुचिः ।

वेदाध्ययनसम्पन्नः स वैश्य इति संज्ञितः ॥

वैश्यस्य च प्रवक्ष्यामि यो धर्म्मो वेदसम्मतः ।

दानमध्ययनं शौचं यज्ञश्च धनसञ्चयः ॥

पालयेच्च पशून् वैश्यः पितृवत्कर्म्मसञ्चयम् ।

विकर्म्म तद्भवेदन्यत् कर्म्म यत् स समाचरेत् ॥

रक्षया स हि तेषां वै महत् सुखमवाप्नुयात् ।

प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे प्रजाः ॥

ब्राह्मणेभ्यश्च राज्ञे च सर्व्वाः परिददे प्रजाः ।

तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ॥

षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं भवेत् ।

लब्धाच्च सप्तमं भागं तथा षड्भेकखुरे ॥

शस्यानां सर्व्वबीजानि एषा सांवत्सरी भृतिः ।

न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ॥

वैश्ये रक्षति नान्येन रक्षितव्याः कथञ्चन ॥"

इति वाह्नि सार्थस्थके वर्णविभागः २६ अः ॥

अन्यच्च ।

"दानमध्ययनं यज्ञो धर्म्मः क्षत्त्रियवैश्ययोः ।

दण्डस्तथा क्षत्त्रियस्य कृषिर्वैश्यस्य शस्यते ॥

शासनमेकं क्षत्त्रियाणां संग्रामेष्वपलायिनाम् ।

वैश्यानां मारुतं स्थानं स्वधर्म्ममनुवर्त्तताम् ॥"

इति गारुडे ४९ अध्यायः ॥

(वैश्यसम्बन्धिनि, त्रि । यथा, महाभारते । १२ । ६२ । ४ ।

"शास्त्राणि वैश्यानि च सेवमानः

शौद्राणि कर्म्माणि च ब्राह्मणः सन् ।

अस्मिँल्लोके निन्दितो मन्दचेताः

परे च लोके निरयं प्रयाति ॥")

वैश्या, स्त्री, (वैश्य + टाप् ।) वैश्यजातिस्त्री । तत्पर्य्यायः । अर्य्याणी २ अर्य्या ३ । इति जटा-धरः ॥ (यथा, मनौ । ८ । ३८२ ।

"वैश्यश्चेत् क्षत्त्रियां गुप्तां वैश्यां वा क्षत्त्रियो व्रजेत् ॥")

वैश्रवणः, पुं, (विश्रवसोऽपत्यम् । "शिवादिभ्यो-ऽण् ।" ४ । १ । ११२ । इति अण् ।) कुबेरः । इत्यमरः ॥ (यथा, महाभारते । २ । १० । २ ।

"तपसा निर्म्मिता राजन् स्वयं वैश्रवणेन सा ॥"

शिवः । यथा, महाभारते । १३ । १७ । १०३ ।

"धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा ॥")

वैश्रवणालयः, पुं, (वैश्रवणस्यालयः ।) वटवृक्षः । इति हेमचन्द्रः ॥ (यथा, देवीभागवते । ७ । ३० । ८१ ।

"अमात्ये वन्दनीया तु निधिर्वैश्रवणालये ॥")

कुबेरपुरी च ॥

वैश्रवणावासः, पुं, (वैश्रवणस्यावासः ।) वट-वृक्षः । इति जटाधरः ॥ कुबेरपुरञ्च ॥

वैश्रवणोदयः, पुं, (वैश्रवणस्योदयो यस्मिन् ।) वटवृक्षः । इति रत्नमाला ॥

वैश्वदेवः, पुं, (विश्वदेवस्यायम् । विश्वदेव + अण् ।) विश्वदेवसम्बन्धिहोमादिः । यथा,—

ब्रह्मोवाच ।

"वैश्वदेवं प्रवक्ष्यामि होमकर्म्मसुसत्तमम् ।

पर्य्युक्षणमग्निं पर्य्युक्ष्य । क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः । इहैवाय-मितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् । ॐ पावक वैश्वानर इदमासनम् । अवनीगर्भ-संभूतः तेजोरूपी महाबलप्रसूर्त्तानिह वैश्वानरं प्रतिबोधयामि । वैश्वानरोऽथ उभयं प्रयातु परावतः । अग्निर्मूर्द्धा तृतीयपृष्ठे दिवि दृष्टोऽग्निः पृथिव्यां दृष्टो विश्वा ओषधी-राविवेश । वैश्वानरः सहसा दृष्टोऽग्निः स नोऽग्निः सं दिवा सर्व्वकालं नक्तं ॐ प्रजापतये स्वाहा । सोमाय स्वाहा । बृहस्पतये स्वाहा । अग्नीषोमाभ्यां स्वाहा । इन्द्राग्नीभ्यां स्वाहा । द्यावापृथिवीभ्यां स्वाहा । धन्वन्तरये स्वाहा । इन्द्राय स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा । भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । भूर्भुव स्वः स्वाहा । देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । आत्म-कृतस्यैनसोऽवयजनमसि स्वाहा । एनस एनसो-ऽवयजनमसि स्वाहा । यच्चाहमेनो विद्वांश्चकार यच्चाविद्वांस्तस्य सर्व्वस्यैनसोऽवयजनमसि स्वाहा । अग्नये स्विष्टकृते स्वाहा । धर्म्माय स्वाहा । प्रजापतये स्वाहा । वनस्पतये स्वाहा । अद्भ्यः स्वाहा । ओषधिवनस्पतिभ्यः स्वाहा । गृहाय स्वाहा । गृहदेवताभ्यः स्वाहा । वास्तु-देवताभ्यः स्वाहा । इन्द्राय स्वाहा । इन्द्र-पुरुषेभ्यः स्वाहा । यमाय स्वाहा । यमपुरुषेभ्यः स्वाहा । वरुणाय स्वाहा । वरुणपुरुषेभ्यः स्वाहा । सोमाय स्वाहा । सोमपुरुषेभ्यः स्वाहा । ब्रह्मणे स्वाहा । ब्रह्मपुरुषेभ्यः स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा । सर्व्वेभ्यो भूतेभ्यः स्वाहा । दिवाचारिभ्यः स्वाहा । रक्षोभ्यः स्वाहा । स्वधा पितृभ्यः स्वाहा । ये भूताः प्रचरन्ति दिवा चरन्ति दिवाचरमिच्छन्तो भुवनस्य मध्ये तेभ्यो बलिं पुष्टिकामो ददामि । मयि पुष्टिं पुष्टिपतिर्ददातु । श्वचाण्डालपतित-वायसेभ्यः ।" इति गारुडे वैश्वदेवविधिः २१९ अध्यायः ॥ * ॥ तस्य प्रयोगो यथा । पूर्व्वाभि-मुखः शुचिरुपवीती कृताञ्जलिः कुशासनोपविष्टः अन्नं घृताक्तं दुग्धाक्तं तैलाक्तं जलाक्तं अन्नं आमान्नं वा फलं जलं वा जुहुयात् । यथा जपे ॐ भूः स्वाहा । ॐ भुवः स्वाहा । ॐ स्वः स्वाहा । ॐ भूर्भुवः स्वः स्वाहा । ॐ देव-कृतस्यैनसोऽवयजनमसि स्वाहा । ॐ पितृ-कृतस्यैनसोऽवयजनमसि स्वाहा । ॐ मनुष्य-कृतस्यैनसोऽवयजनमसि स्वाहा । ॐ आत्म-कृतस्यैनसोऽवयजनमसि स्वाहा । ॐ यद्दिवा च नक्तञ्चैनश्चकृम तस्यावयजनमसि स्वाहा । ॐ यत् स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्याव-यजनमसि स्वाहा । ॐ विद्वांसश्चाविद्वांस-श्चैनश्चकृम तस्यावयजनमसि स्वाहा । ॐ एनस एनसोऽवयजनमसि स्वाहा । ॐ अग्नये स्विष्ट-कृते स्वाहा । इत्यनेन जुहुयात् । इति वैश्व-देवकर्म्म । इत्याह्निकप्रयोगतत्त्वम् ॥

(विश्वदेव एव । स्वार्थे अण् । गणदेवताविशेषः । बन्धुभिरकृतविवाहस्यैव वैश्वदेवलोकप्राप्तिः । यथा, मनौ । ४ । १८३ ।

"आमयोऽप्सरसां लोके वैश्वदेवस्य बान्धवाः ।

सम्बन्धिनो ह्यपां लोके पृथिव्यां मातृमातुलौ ॥"

विश्वदेवसम्बन्धिनि, त्रि । यथा, महाभारते । १२ । ३०१ । ८ ।

"आसुरान् विषयान् ज्ञात्वा वैश्वदेवांस्तथैव च ॥")

वैश्वानरः, पुं, (विश्वश्चासौ नरश्चेति । "नरे संज्ञायाम् ।" ६ । ३ । १२९ । इति दीर्घः । ततो

विश्वानर एव। स्वार्थे अण्। यद्वा, "विश्वान् नरान् इतो लोकात् लोकान्तरं नयति। इदमर्थेन विश्वानराणां नेतृत्वेन सम्बन्धात् वा कर्म्मार्थप्रतिष्ठत्वेन सम्बन्धिनोऽस्य वैश्वानरः। 'अन्येषामपि दृश्यते।' ६।३।१३७। इति दीर्घः। अपि वा विश्वान् जन्तून् नरः। नर गतौ इत्यस्य छान्दसत्वात् पचाद्यच् उपपदविभक्त्यालुक्। 'सर्व्वाणि भूतानि नरः प्रत्यृतः प्रतिमनः प्रविशति विश्वानरः प्राणः। तेन जन्यमानत्वात् तस्यापत्यं वैश्वानरः॥" इति निघण्टुटीकायां देवराजयज्वा।५।२।) अग्निः। (यथा, गीतायाम्।१५।१४।
"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्व्विधम्॥")
चित्रकवृक्षः। इत्यमरः॥ अग्नेस्तन्नामकारणं यथा,—
"तथापि दृष्टिं यो रूपे देहे प्रत्येकशोऽधुना।
भूतकार्य्येष्वभूतेन देवलोके तु मूर्त्तिना॥
निरुद्धमपि कालान्ते लयं त्वाविशतु द्रुतम्।
शरीराणि पुनर्न्नैव कर्त्तव्योऽहमिति क्वचित्॥
कर्म्माणाञ्च तथा तुभ्यं दृष्टिं नामानि वोऽधुना।
अग्निर्व्वैश्वानरो नाम प्राणापानौ तथाश्विनौ॥
भविष्यति तथा गौरी हिमशैलसुता तथा।
पृथिव्यादिगणश्चैव मजश्चो भविष्यति॥
शरीरधानवच्चैते नानाभूतानि एव तु।
अहङ्कारस्तथा स्कन्दः कार्त्तिकेयो भविष्यति॥"
इति वाराहे आदिकृतायां महातपोपाख्याननामाध्यायः॥

वैश्वी, स्त्री, उत्तराषाढ़ानक्षत्रम्। इति हेमचन्द्रः॥

वैषम्यं, क्ली, (विषम+भावे ष्यञ्।) विषमत्वम्। विषमशब्दात् भावे ष्यञ्प्रत्ययेन निष्पन्नम्॥ (नतोन्नतत्वम्। यथा, महाभारते।१२।५९।११४।
"समतां वसुधायाश्च स सम्यगुदपादयत्।
वैषम्यं हि परं भूमेरासीदिति च नः श्रुतम्॥"
तारतम्यम्। यथा, महाभारते।३।२०८।७१।
"नहि च फलवैषम्यं दृश्यते कर्म्मवत्स्विह॥"
दुःखम्। यथा, तत्रैव।३।६१।२०।
"वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः।
भर्त्ता तेऽहं निबोधेदं वचनं हितमात्मनः॥")

वैषयिकः, त्रि, विषयसम्बन्धी। विषयशब्दात् ठक्प्रत्ययेन निष्पन्नः॥ (यथा, साहित्यदर्पणे।३।८४।
"यच्चास्मिन् सुखाभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः॥")

वैष्टुतं, क्ली, होमभस्म। इति हेमचन्द्रः॥

वैष्टं, क्ली, (विष्+ "अमृजिगमिनमिहनिविश्यशां वृद्धिश्च।" उणा० ४।१५९। इति त्रन् वृद्धिश्च।) पिष्टपम्। इत्युणादिकोषः॥ द्यौः। वायुः। विष्णुः। इति संक्षिप्तसारोणादिवृत्तिः॥

वैष्णवं, क्ली, (विष्णोरिदम्। विष्णु+अण्।) होमभस्म। इति शब्दरत्नावली॥ (महापुराणविशेषः। यथा, देवीभागवते।१।१।८।
"त्रयोविंशतिसाहस्रं वैष्णवं परमाद्भुतम्॥")
विष्णुसम्बन्धिनि, त्रि॥ (यथा, रघुः।११।८५।
"तां गतस्य तव धाम वैष्णवं
कोपितो ह्यसि मया दिदृक्षुणा॥")

वैष्णवः, पुं, (विष्णुर्देवता अस्य। अण्।) विष्णुमन्त्रोपासकः। विष्णुभक्तः। तत्पर्य्यायः। कार्ष्णः २ हारः ३। तस्य लक्षणं यथा,—
"गृहीतविष्णुदीक्षाको विष्णुसेवापरो नरः।
वैष्णवश्चाव संख्यातः स्कान्दाद्युक्तानुसारतः॥"
तथा च स्कान्दे।
"परमापदमापन्नो हर्षे वा समुपस्थिते।
नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी॥
समात्मा सर्व्वजीवेषु निजाचारादविप्लुतः।
विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते॥"
इति श्रीहरिभक्तिविलासे ११ विलासः॥ *॥
अथ श्रीवैष्णवनिन्दादिदोषः। स्कान्दे मार्कण्डेयभगीरथसंवादे।
"यो हि भागवतं लोकमुपहासं नृपोत्तम।
करोति तस्य नश्यन्ति अर्थधर्म्मयशःसुताः॥"*॥
अथ वैष्णवसमागमविधिः। तैत्तोद्भवपञ्चरात्रे।
"वैष्णवो वैष्णवं दृष्ट्वा दण्डवत् प्रणमेद्भुवि।
उभयोरन्तरा विष्णुः शङ्खचक्रगदाधरः॥"*॥
अथ वैष्णवसम्माननित्यता। स्कान्दे श्रीमार्कण्डेयभगीरथसंवादे।
"दृष्ट्वा भागवतं दूरात् संमुखे यो न याति हि।
न गृह्णाति हरिस्तस्य पूजां द्वादशवार्षिकीम्॥"
अथ वैष्णवस्तुतिः। स्कान्दे।
"धन्योऽहं कृतकृत्योऽहं यद्यूयं गृहमागताः।
दुर्लभं दर्शनं नूनं वैष्णवानां यथा हरेः॥"*॥
अथ वैष्णवाभिगमनमाहात्म्यम्। स्कान्दे श्रीमार्कण्डेयभगीरथसंवादे।
"संमुखं व्रजमानस्य वैष्णवानां नराधिप।
पदे पदे यज्ञफलं प्राहुः पौराणिका द्विजाः॥"
अथ वैष्णवस्तुतिमाहात्म्यम्। तत्रैव।
"प्रत्यक्षं वा परोक्षं वा यः प्रशंसति वैष्णवम्।
ब्रह्महा मद्यपः स्तेयी गुरुगामी सदा नृणाम्।
मुच्यते पातकात् सद्यो विष्णुराह नृपोत्तम॥"*॥
अथ वैष्णवसम्मानमाहात्म्यम्। तत्रैवामृतसारोद्धारे।
"श्रद्धया दत्तमन्नञ्च वैष्णवानिषु जीर्य्यति।
तदन्नं सेवया तुल्यं भवति च दिने दिने॥"*॥
अथ वैष्णवशास्त्रमाहात्म्यम्। स्कान्दे श्रीब्रह्मनारदसंवादे।
"वैष्णवानि च शास्त्राणि ये शृण्वन्ति पठन्ति च।
धन्यास्ते मानवा लोके तेषां कृष्णः प्रसीदति॥"
इति च श्रीहरिभक्तिविलासे १० विलासः॥
तस्य जन्ममाहात्म्यादि यथा,—
"फलसन्धानरहिता विष्णुभक्ताश्च वैष्णवाः।
सन्नीतिभक्तिकामास्ते सर्व्वदा सर्व्वकर्म्मसु॥
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रवेक्ष्यति।
जीवन्मुक्तं वैष्णवं तं वेदाः सर्व्वे वदन्ति च॥
पुरुषाणां शतं पूर्व्वं पैतृकञ्च शतं परम्।
मातामहस्य च शतं मातरं मातृमातरम्॥
भगिनीं भ्रातरञ्चैव भागिनेयञ्च मातुलम्।
श्वश्रूञ्च श्वशुरञ्चैव गुरुपत्नीं गुरोः सुतम्॥
गुरुञ्च जामदातारं मित्रञ्च सहचारिणम्।
भृत्यं शिष्यं तथा चेटीं प्रजाः स्वाश्रमसन्निधौ॥
उद्धरेदात्मना सार्द्धं मन्त्रग्रहणमात्रतः।
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः॥
तस्य संस्पर्शमात्रेण पूतं तीर्थञ्च भारतम्।
तस्यैव पादरजसा सद्यः पूता वसुन्धरा॥
पादोदकन्तु तस्यापि तीर्थमेव भवेत् ध्रुवम्॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ८ अध्यायः॥ *॥
अपि च।

श्रीशिव उवाच।
"शिवमस्तु च साधूनां वैष्णवानां सतामिह।
अवैष्णवानामसतामशिवञ्च पदे पदे॥
ददाति वैष्णवेभ्यश्च यो दुःखं कल्पितो जनः।
श्रीकृष्णस्य च संहर्त्ता विघ्नस्तस्य पदे पदे॥
अवैष्णवानां हृदयं न हि शुद्धं सदा मलम्।
श्रीकृष्णमन्त्रस्मरणं मनोनैर्म्मल्यकारणम्॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः।
विष्णुमन्त्रोपासनया क्षीयते कर्म्म वै नृणाम्॥
ये ब्राह्मणा वैष्णवाश्च लभन्ते परमं पदम्।
यान्त्यन्योपासकाश्चान्ये सार्द्धञ्च प्रकृतेर्लये॥
वर्णानां ब्राह्मणाः श्रेष्ठाः साधवो वैष्णवा यदि।
विष्णुमन्त्रविहीनेभ्यो द्विजेभ्यः श्वपचो वरः॥
परिपक्वाश्चापक्वा वैष्णवाः साधवश्च ते।
सततं पतिताश्चैव विष्णुचक्रं सुदर्शनम्॥
यथा वह्नौ शुष्कतृणं भस्मीभूतं भविष्यति।
तथा पापं वैष्णवेषु तेजस्विषु हुताशनात्॥
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रवेक्ष्यति।
तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः॥
प्रशंसितं पितॄणाञ्च शतं मातामहस्य च
सहोदरांश्च जननीसुहृदन्यैश्च वैष्णवाः॥
गयायां पिण्डदानेन पिण्डदः पिण्डभोजिनम्।
समुद्धरन्ति पुंसाश्च वैष्णवाश्च शतं शतम्॥
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः।
यमस्तस्माद्भयभीतो वैनतेयादुरगो यथा॥
निष्पुनन्त्यैव तीर्थानि गङ्गादीनि च भारते।
कृष्णमन्त्रोपासकाश्च स्पर्शमात्रेण वाक्पते॥
पापानि पापिनां तीर्थे यावन्ति प्रभवन्ति च।
नश्यन्ति तानि कर्म्माणि वैष्णवस्पर्शमात्रतः॥
कृष्णमन्त्रोपासकानां रजसा पादपद्मयोः।
सद्यो मुक्ता पातकेभ्यो स्पृष्टा पूता वसुन्धरा॥
वायुश्च वरुणो वह्निः सूर्य्यः सर्व्वं पुनाति च।
एते पूता वैष्णवानां स्पर्शमात्रेण लीलया॥
अहं ब्रह्मा च धर्म्मश्च साक्षी सर्व्वस्य कर्म्मणाम्।
एते कृत्याश्च वाञ्छन्ति वैष्णवानां समागमम्॥
फलं कर्म्मानुसारेण सर्व्वेषां भारते भवेत्।
न भवेत्तद्वैष्णवे च निष्कामे यथाङ्कुरम्॥
हन्ति तेषां कर्म्म पूर्व्वं भक्तानां भक्तवत्सलः।

कृपया स्वपदं तेभ्यो ददात्येव कृपानिधिः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५७ अध्यायः ॥*॥
अन्यच्च ।

श्रीभगवानुवाच ।

“अहं प्राणा वैष्णवानां मम प्राणाश्च वैष्णवाः ।
तानेव द्वेष्टि यो मूढ़ो मत्प्राणान् स हिंसकः ॥
पुत्त्रान् पौत्त्रान् कलत्त्रांश्च राज्यलक्ष्मीं विहाय च ।
ध्यायन्ते सततं ये मां को मे तेभ्यः परः प्रियः ॥
यथा भक्ता हि मे प्राणा न च लक्ष्मीर्न शङ्करः ।
न भारती न च ब्रह्मा न दुर्गा न गणेश्वरः ॥
न साध्या न वेदाश्च न वेदजननी सुराः ।
न गोपी न च गोपाला न राधा प्राणतः प्रिया ॥
इत्येवं कथितं सर्व्वं सत्यं सारञ्च वास्तवम् ।
न प्रशंसापरं तेषां ते च प्राणाधिकाः प्रियाः ॥
मां द्विषन्ति च ये मूढ़ा ब्राह्मणाश्च वञ्चिताः ।
स्वात्मानञ्च न जानन्ति ते यान्ति निरयं चिरम् ॥
ये द्विषन्ति च मद्भक्तान् प्राणानामधिकप्रियान् ।
तेषां शास्ताहं दूतश्च परत्र निरयं चिरम् ॥
प्रभवोऽहञ्च सर्व्वेषामीश्वरः परिपालकः ।
तथापि न स्वतन्त्रोऽहं भक्ताधीनो दिवानिशम् ॥
गोलोके वाथ वैकुण्ठे द्विभुजश्च चतुर्भुजः ।
रूपमात्रमिदं सर्व्वं प्राणा मे भक्तसन्निधौ ॥
यद्दत्तं भक्तदत्तञ्च भक्षणीयञ्च तन्मम ।
अभक्ष्यं द्रव्यमन्येन दत्तञ्चेद्दन्तोपमम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २५ अध्यायः ॥
अपि च ।
“सर्व्वान् कामान् परित्यज्य हरिभक्तिञ्च साधयेत् ।
स एव वैष्णवाचारः कामसङ्कल्पवर्ज्जितः ॥”
इत्याचारभेदलक्षणम् ॥*॥
अपरञ्च ।
“रजस्वलायाः संभोगे कर्म्मक्षेत्रे च भारते ।
स्वयोनौ च भवेत् पापं नात्र स्वर्गे च सुन्दरि !
कर्म्मक्षेत्रे च यत् कर्म्म वेदोक्तं शुभाशुभम् ।
न भवेद्वैष्णवानाञ्च ज्वलतां ब्रह्मतेजसा ॥
यथा प्रदीप्तवह्नौ च शुष्काणि च तृणानि च ।
भवन्ति भस्मीभूतानि तथा पापानि वैष्णवे ।
वह्निसूर्य्यब्राह्मणेभ्यस्तेजीयान् वैष्णवः सदा ।
रक्षितो विष्णुचक्रेण स्वतन्त्रो मत्तकुञ्जरः ॥
न विचारो न भोगश्च वैष्णवानां स्वकर्म्मणाम् ।
लिखितं सन्ति कौथुम्यां कृष्ण धर्म्मं हरव्यासितम् ॥
अस्मांश्च सर्व्वे जानन्ति चक्रसंस्थांश्च वैष्णवान् ।
देवमन्यं न सेवन्ते चक्रसंस्था हरिं विना ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ६ अध्यायः ॥
अपि च ।

सूत उवाच ।

“अथ वेन इयाजाथ सोऽश्वमेधेन भूपतिः ।
ब्राह्मणेभ्यो ददौ दानं नानारूपमनेकधा ॥
जगाम वैष्णवं लोकं सकायो जगतीपतिः ।
विष्णुना सह धर्म्मात्मा नित्यमेव प्रवर्त्तते ।
एतत्ते सर्व्वमाख्यातं चरितं तस्य भूपतेः ॥
यदेको वैष्णवश्रेष्ठी सर्व्वधर्म्मबहिष्कृतः ।
पृथुना पुत्त्रतीर्थेन पवित्रोऽगात् परं पदम् ॥

सत्पुत्त्रं परमं तीर्थं प्राप्य तरन्ति पूर्ब्बजाः ।
पितापि ब्रह्मसुतः स्यात् जाते पुत्त्रे महात्मनि ॥
वैष्णवो यदि पुत्त्रः स्यात् स तारयति पूर्ब्बजान् ।
पितृवंशकता वंशांस्तारयत्यतिपावनाः ॥”
इति पाद्मे भूमिखण्डे १२० अध्यायः ॥*॥
अथ वैष्णवधर्म्मतत्कर्त्तव्यपञ्चविधपूजे । यथा,—

श्रीपार्व्वत्युवाच ।

“वैष्णवानाञ्च सद्धर्म्मं कर्म्मापि तस्य तद्वद ।
यत् कृत्वा मानवाः सर्व्वे भवाब्धौ तरन्ति वै ॥

ईश्वर उवाच ।

अथ द्वादश शुद्धिश्च वैष्णवानामिहोच्यते ।
गृहोपलेपनञ्चैव तथानुगमनं हरेः ॥
भक्त्या प्रदक्षिणञ्चैव पादयोः शोधनं पुनः ॥१।२
पूजार्थं पत्रपुष्पाणां भक्त्यैवोत्तोलनं हरेः ।
करयोः सर्व्वशुद्धीनामियं शुद्धिर्विशिष्यते ॥३।४॥
तन्नामकीर्त्तनञ्चैव गुणानाञ्चैव कीर्त्तनम् ।
भक्त्या श्रीकृष्णदेवस्य वचसः शुद्धिरिष्यते ॥ ५ ॥
तत्कथाश्रवणञ्चैव तस्योत्सवनिरीक्षणम् ।
श्रोत्रयोर्नेत्रयोश्चैव शुद्धिः सम्यगिहोच्यते ॥ ६ ॥
७ । ८ । ९ ॥
पादोदकञ्च निर्म्माल्यं मालानामपि धारणम् ।
उच्यते शिरसः शुद्धिः प्रणतस्य हरेः पुनः ॥१०॥
आघ्राणं गन्धपुष्पादेर्निर्म्माल्यस्य तपोधने ।
विशुद्धिः स्यादनन्तस्य घ्राणस्यापि विधीयते ॥११।
१२ ॥
पत्र पुष्पादिकं यच्च कृष्णपादयुगार्पितम् ।
तदेव पावनं लोके तद्धि सर्व्वं विशोधयेत् ॥*॥
पूजा च पञ्चधा प्रोक्ता तासां भेदान् शृणुष्व मे ।
अभिगमनमुपादानं योगः स्वाध्याय एव च ॥
इज्याः पञ्चप्रकारार्च्चाः क्रमेण कथयामि ते ।
तत्राभिगमनं नाम देवतास्थानमार्ज्जनम् ॥
उपलेपनं निर्म्माल्यदूरीकरणमेव च । १ ।
उपादानं नाम गन्धपुष्पादिचयनं यथा । २ ॥
इज्या नाम हि देवादेः पूजनञ्च यथार्थतः ।३ ।
स्वाध्यायो मन्त्रराजस्य अर्थसन्धानतो जपः ॥
सूक्तस्तोत्रादिपाठश्च हरेः संकीर्त्तनं तथा ।
तन्नामशास्त्राभ्यासश्च स्वाध्यायः परिकीर्त्तितः ॥
४ ॥
योगो नाम स्वदेवस्य चात्मन्येव भावना ।५ ।
इति पञ्चप्रकारार्च्चाः कथितास्तव सुव्रते ॥”
इति पाद्मे पातालखण्डे १० अध्यायः ॥*॥
अथ वैष्णवानां खाद्याखाद्यम् ।
“सायं प्रातर्द्विजातीनां स्वल्पमशनं तथा ।
विष्णुभक्तावशिष्टेन दिनपापात् प्रमुच्यते ॥
अन्नं ब्रह्मा रसो विष्णुः स्वादकस्तु महेश्वरः ।
एवं ज्ञात्वा तु यो भुङ्क्ते सोऽन्नदोषैर्न लिप्यते ॥
अलाबुं वर्त्तुलाकारं मसूरञ्च कवकजम् ।
तालं भुक्तञ्च वार्त्ताकुं न खादेद्वैष्णवो जनः ॥
वटाश्वत्थार्कपत्रेषु कुम्भीतिन्दुकपत्रयोः ।
कोविदारकदम्बे च न खादेद्वैष्णवो नरः ॥
श्रावणे वर्ज्जयेच्छाकं दधि भाद्रपदे त्यजेत् ।
दुग्धञ्च आश्विने मासि कार्त्तिके चामिषं त्यजेत् ॥
दुष्टमन्नञ्च क्षीरं यद्विष्णोरनिवेदितम् ।
वीजपूरञ्च शाकञ्च प्रत्यक्षलवणं तथा ॥
यदि दैवाच्च भुञ्जन्ते तदा तन्नामकं स्मरेत् ॥
कलायं मुद्गधान्यानि शाकञ्च हिलमोचिकाम् ।
षष्टिकाकालशाकञ्च मूलकं केमुकं तथा ॥
लवणे सैन्धवं प्रोक्तं गव्यञ्च दधिसर्पिषी ।
पयोऽनुद्धृतसारञ्च पनसाम्रे हरीतकी ॥
पिप्पलीजीरकञ्चैव नागरङ्गकतिन्तिडी ।
कदलीलवलीधात्रीफलान्यगुड़मैक्षवम् ।
अतैलपक्वं मुनयो हविष्येषु प्रचक्षते ॥”
इति पाद्मे पातालखण्डे ११ अध्यायः ॥*॥
अथ वैष्णवलक्षणविशेषादिः ।
“माहात्म्यमथ भक्तानां यत् कार्य्यं यच्च लक्षणम् ।
करणीयं हरेर्विप्र सावधानमनाः शृणु ॥
हरिरेव सदा सेव्यो नान्यो यस्य महात्मनः ।
लोकस्य जगदाराध्यो हरिभक्तः स उच्यते ॥
अनन्यनिर्म्माल्यभुजो भक्तास्तेऽनन्यमानसाः ।
गोविन्दोपासका ये तु नित्यं देवान्तरं विना ॥
अनन्यविषयोऽनन्यहृदयोऽनन्यसेवकः ।
केवलं हरिसेवस्तु स भक्तः परिकीर्त्तितः ॥
सत्त्वं सत्त्वाश्रयं सत्त्वगुणं सेवेत केशवम् ।
योऽनन्यत्वेन मनसा सात्त्वतः समुदाहृतः ॥
सर्व्वदेवान् परित्यज्य नित्यं भगवदाश्रयः ।
तत्तदीयसेवायां स भागवत उच्यते ॥
विहाय काम्यकर्म्मादीन् भजेदेकाकिनं हरिम् ।
सत्यं सत्त्वगुणोपेतो भक्त्या तं सात्त्वतं विदुः ॥
मुकुन्दपादसेवायां तन्नामश्रवणेऽपि च ।
कीर्त्तने च रतो भक्तो नाम्नः स्यात् स्मरणे हरेः ॥
वन्दनार्च्चनयोर्भक्तिरनिशं दास्यसख्ययोः ।
रतिरात्मार्पणे यस्य दृढ़ानन्तस्य सात्त्वतः ॥
स्मर्त्तव्यः कीर्त्तनीयश्च श्रोतव्यः पूज्य एव च ।
यस्यैको विष्णुराराध्यो वैष्णवः समुदाहृतः ॥
यथालब्धोऽपि सन्तुष्टः समचित्तो जितेन्द्रियः ।
हरिपादाश्रयो लोके विप्राः साधुरनिन्दकः ॥
निर्व्वैरः सदयः शान्तो दम्भाहङ्कारवर्ज्जितः ।
निरपेक्षो मुनिर्वीतरागः साधुरिहोच्यते ॥
लोभमोहमदक्रोधकामादिरहितः सुखी ।
कृष्णाङ्घ्रिशरणः साधुः सहिष्णुः समदर्शनः ॥
यद्विष्णूपासना नित्यं विष्णुर्यस्येश्वरो मुने ।
पूज्यो यस्यैकविष्णुः स्यादिष्टो लोके स वैष्णवः ।
हरेः सर्व्वावताराणां मत्स्यादीनामुपासकाः ।
तत्तदिष्टा अनन्याश्च वैष्णवास्ते न संशयः ॥
यदिष्टो रघुनाथस्तु नृसिंहो वामनो हरिः ।
एतत्सखो वराहादिर्वासुदेवः स वैष्णवः ॥
विष्णोरुपासको दासस्तत्त्वमन्तःकदाश्रयः ।
तमाहुर्वैष्णवं लोके विष्णुसेवापरायणम् ॥
साध्वी यथा पतिं नारी नान्यं जानाति तं विना ।

जगद्धितं तथानन्यो यदि विष्णुं स वैष्णवः ॥
सर्वान्तो मुनिः पूर्णो गोविन्दचरणाश्रयः ।
सर्वभूतदयः शान्तो विवेकी साधुरुत्तमः ॥
कृष्णार्पितप्राणशरीरबुद्धिः
प्रान्तेन्द्रियस्त्रीसुतसम्पदादिः ।
आसक्तचित्तः श्रवणादिभक्ति-
ष्वस्त्रेव साधुः सततं हरेर्यः ॥
कृष्णाश्रयः कृष्णकथानुरक्तः
कृष्णेष्टमन्त्रस्तुतिपूजनीयः ।
कृष्णाभिध्यानमनास्वनन्तो
यो वै स साधुर्मुनिवर्य्य शान्तः ॥
यस्येदं श्रीभागवतं प्राणं श्रीभगवान् हरिः ।
भगवद्भक्तं कृष्णा भक्ता भागवतश्च सः ॥
ये कृष्णश्रवणासक्ता ये तदुच्छिष्टभोजिनः ।
ये कृष्णोपासका लोका दासास्ते परि-
कीर्त्तिताः ॥"
इति पाद्मे उत्तरखण्डे ८८ अध्यायः ॥*॥
अपि च ।
ब्रह्मोवाच ।
"अहो ध्यानैरपि ध्यातुं दैवैस्त्वं न हि शक्यसे ।
स त्वं वैष्णवदेहेषु तिष्ठसीत्यद्भुतं महत् ॥
क्षणमात्रमपि स्वामिंस्तुष्टे त्वयि न किं भवेत् ।
स त्वं वैष्णवरूपेण भ्रमसीत्यद्भुतं महत् ॥
के वैष्णवाः कैटभारे ! किं वा तेषाञ्च लक्षणम् ।
कथं श्रेयाश्च ते सर्व्वे तन्मे कथय केशव ॥
भगवानुवाच ।
वैष्णवानां लक्षणानि कल्पकोटिशतैरपि ।
वक्तुं न शक्नोमि संक्षेपात् शृणु सत्तम ॥
संसारो वैष्णवाधीनो देवा वैष्णवपालिताः ।
अहञ्च वैष्णवाधीनस्तस्मात् श्रेष्ठाश्च वैष्णवाः ॥
क्षणमात्रमपि ब्रह्मन् विहाय वैष्णवं जनम् ।
तिष्ठामि नाहमन्यत्र वैष्णवो मम बान्धवः ॥
कामक्रोधविहीना ये हिंसादम्भविवर्ज्जिताः ।
लोभमोहविहीनाश्च ते ज्ञेया वैष्णवा जनाः ॥
अमत्सरा दयायुक्ताः सर्व्वभूतहिते स्थिताः ।
सत्याभिभाषिणश्चैव ज्ञेयास्ते वैष्णवा जनाः ॥
पितृभक्ता मातृभक्ता अतिथिपोषणतत्पराः ।
धर्म्मोपदेशिनो ये च ज्ञेयास्ते वैष्णवा जनाः ॥
समानं ये च पश्यन्ति त्वाञ्च माञ्च महेश्वरम् ।
कुर्व्वन्ति पूजामतिथेर्ज्ञेयास्ते वैष्णवा जनाः ॥
वेदविद्यानुरक्ता ये द्विजभक्तिरताः सदा ।
नपुंसकाः परस्त्रीषु ज्ञेयास्ते वैष्णवा जनाः ॥
एकादशीव्रतं ये च भक्तिभावेन कुर्व्वते ।
गायन्ति मम नामानि ज्ञेयास्ते वैष्णवा जनाः ॥
देवायतनकर्त्तारस्तुलसीमाल्यधारिणः ।
सदाचारधारिणो ये च ज्ञेयास्ते वैष्णवा जनाः ॥
मत्पादसलिलैर्येषां सिक्तानि मस्तकानि वै ।
मम नैवेद्यमश्नन्ति ज्ञेयास्ते वैष्णवा जनाः ॥
शङ्खचक्रगदापद्मैरङ्कितानि ममायुधैः ।
सन्ति येषां शरीराणि ज्ञेयास्ते वैष्णवा जनाः ॥
कर्णयोश्चैव शीर्षेषु तुलसीपत्रमुत्तमम् ।
सततं दृश्यते येषां ज्ञेयास्ते वैष्णवा जनाः ॥
क्षयाणि तुलसीमूलाद्ये सिञ्चन्ति नरोत्तमाः ।
सिञ्चन्ति तुलसीं ये च विज्ञेयास्ते च वैष्णवाः ॥
तुलसीमूलमृद्भिश्च तिलकानि नयन्ति ये ।
तुलसीकाष्ठपङ्केश्च विज्ञेया वैष्णवा जनाः ॥
गङ्गास्नानपरा ये च गङ्गानामपरायणाः ।
गङ्गामाहात्म्यवक्तारो विज्ञेयास्ते च वैष्णवाः ॥
धात्रीफलस्रजो येषां गलेषु कमलासन ।
यजन्ति ये च तत्पत्रैर्व्विज्ञेयास्ते च वैष्णवाः ॥
शालग्रामशिला येषां गृहे वसति सर्व्वदा ।
शास्त्रं भागवतञ्चैव ज्ञेयास्ते वैष्णवा जनाः ॥
सम्मार्ज्जयन्ति ये नित्यं मम स्थानानि सर्व्वदा ।
दीपं यच्छन्ति तत्रैव ज्ञेयास्ते वैष्णवा जनाः ॥
शीर्णं मन्मन्दिरं ये च कुर्व्वते नूतनं पुनः ।
तत्रायतनशोभाञ्च ज्ञेयास्ते वैष्णवा जनाः ॥
अभयं ये च यच्छन्ति भीतेभ्यश्चतुरानन ।
विद्यादानञ्च विप्रेभ्यो ज्ञेयास्ते वैष्णवा जनाः ॥
क्षुत्तृट्प्रपीडितेभ्यश्च ये यच्छन्त्यन्नमम्बु च ।
कुर्व्वते रोगिशुश्रूषां ज्ञेयास्ते वैष्णवा जनाः ॥
आरामकारिणो ये च पिप्पलारोपिणोऽपि च ।
गोसेवां ये च कुर्व्वन्ति ज्ञेयास्ते वैष्णवा जनाः ॥
अनन्यभक्ता ये ब्रह्मन् पितृयज्ञं प्रकुर्व्वते ।
कुर्व्वन्ति दीनशुश्रूषां ज्ञेयास्ते वैष्णवा जनाः ॥
तडागग्रामकर्त्तारः कन्यादानप्रदाश्च ये ।
सेवन्ते श्वशुरौ ये च ज्ञेयास्ते वैष्णवा जनाः ॥
सेवन्ते ज्येष्ठभगिनीं ज्येष्ठं भ्रातरमेव च ।
परनिन्दां न कुर्व्वन्ति ज्ञेयास्ते वैष्णवा जनाः ॥
देवस्वं ब्राह्मणस्वं परस्वञ्च चतुर्म्मुख ।
पश्यन्ति विषवद्ये च ज्ञेयास्ते वैष्णवा जनाः ॥
पापसङ्गरहिताः शिवभक्तिपरायणाः ।
चतुर्द्दशीव्रतरता ज्ञेयास्ते वैष्णवा जनाः ॥
बहुनात्र किमुक्तेन भाषितेन पुनः पुनः ।
मदर्चां ये च कुर्व्वन्ति ज्ञेयास्ते वैष्णवा जनाः ॥
वैष्णवेषु गुणाः सर्व्वे दोषलेशो न विद्यते ।
तस्माच्चतुर्मुख त्वञ्च वैष्णवो भव साम्प्रतम् ॥
समाराधय मां नित्यं क्रियायोगैः प्रजापते ।
सर्व्वमेव शुभदं ते भविष्यति न संशयः ॥
भूयः पूर्व्वस्थितमिव द्रक्ष्यसि सकलं जगत् ।
इत्युक्त्वान्तर्दधे देवस्तत्रैव जगदीश्वरः ॥
ततस्तु पूर्व्ववद्ब्रह्मा ददर्श सकलं जगत् ।
क्रियायोगैर्हरिं यष्ट्वा जगाम परमं पदम् ॥
ये पठन्ति ममाध्यायं भक्त्या नारायणाग्रतः ।
सर्व्वपापविनिर्म्मुक्ता अन्ते यान्ति हरेः पदम् ॥"
इति पाद्मे क्रियायोगसारे २ अध्यायः ॥*॥
कालिङ्ग उवाच ।
"जातिस्मरेण कथितो रहस्यः परमो मम ।
यमकिङ्करयोर्योऽभूत् संवादस्तं ब्रवीमि ते ॥
स्वपुरुषमभिवीक्ष्य पाशहस्तं
वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान्
प्रभुरहमन्यनृणां न वैष्णवानाम् ॥"
इति श्रीविष्णुपुराणे तृतीयेऽंशे यमगीतं ७ अध्यायः ॥*॥ अपि च ।
"कर्म्मण्यथापि कलौ यतः साधुर्हरिः
स्वयम् ।
मन्ये न भौतिको देहो वैष्णवस्य जगत्त्रये ॥"
इति कल्किपुराणे १० अध्यायः ॥
वैष्णवाचमनं, क्ली, ( वैष्णवस्याचमनम् । ) विष्णुपूजादिपूर्व्वकर्त्तव्यकर्म्मकारकाङ्ग--ॐकारादिनमोऽन्तचतुर्थ्यन्तनामोच्चारणपूर्व्वकजलपानादि । यथा,—
"त्रिःपाने केशवं नारायणं माधवमप्युत ।
प्रक्षालने द्वयोः पाण्योर्गोविन्दं विष्णुमप्युभौ ॥
मधुसूदनमेकञ्च मार्ज्जनेऽन्यं त्रिविक्रमम् ।
उन्मार्ज्जनेऽप्यधरयोर्व्वामनश्रीधरावुभौ ॥
प्रक्षालने पुनः पाण्योर्हृषीकेशञ्च पादयोः ।
पद्मनाभं प्रोक्षणे तु मूर्द्ध्नि दामोदरं ततः ॥
वासुदेवं मुखे सङ्कर्षणं प्रद्युम्नमित्युभौ ।
नासयोर्नेत्रयुगलेऽनिरुद्धं पुरुषोत्तमम् ॥
अधोक्षजं नृसिंहञ्च कर्णयोर्नाभितोऽच्युतम् ।
जनार्दनञ्च हृदये उपेन्द्रं मस्तके ततः ॥
दक्षिणे तु हरिं बाहौ वामे कृष्णं यथाविधि ।
नमोऽन्तञ्च चतुर्थ्यन्तमाचामेत् क्रमतो जपन् ॥
अशक्तः केवलं दक्षं स्पृशेत् कर्णं तथा च वाक् ।
कुर्व्वीताचमनं वापि दक्षिणश्रवणस्य वै ॥"
तथा च वाक् इति यतस्तथैव वचनमस्ति ।
कुर्व्वीताचमनं वापीति मार्कण्डेयपुराणवचनमतो न पौनरुक्त्यम् । इति श्रीहरिभक्तिविलासे ३ विलासः ॥
वैष्णवाचारः, पुं, ( वैष्णवानामाचारः । ) विष्णुभक्तानामाचरणम् । यथा,—
"सदाचारा बहुविधाः शिष्टाचारानुसारतः ।
श्रीवैष्णवानां कर्त्तव्या लिख्यन्तेऽत्र समासतः ॥"
सदाचाराः श्रीविष्णुपुराणे और्व्वसगरसंवादे सदस्याचारकथनारम्भे ।
"देवगोब्राह्मणान् सिद्धान् वृद्धाचार्य्यांस्तथा-
र्च्चयेत् ।
द्विकालञ्च नमेत् सन्ध्यामग्नीनुपचरेत्तथा ॥
सदानुपहते वस्त्रे प्रशस्ताश्च तथौषधीः ।
गारुडानि च रत्नानि बिभृयात् प्रयतो नरः ॥
प्रसिद्धामलकेशश्च सुगन्धिश्चारुवेशधृक् ।
किञ्चित् परस्वं न हरेन्नाल्पमप्यप्रियं वदेत् ।
प्रियञ्च नानृतं ब्रूयान्नान्यदोषानुदीरयेत् ।
नान्याश्रयं तथा वैरं रोचयेत् पुरुषेश्वरः ॥
न दुष्टयानमारोहेत् कूलच्छायां न संश्रयेत् ।
विद्विष्टपतितोन्मत्तबहुवैरातिकीटकैः ॥
बन्धकीबन्धकीभर्तृक्षुद्रानृतकथैः सह ।
तथातिव्ययशीलैश्च परिवादरतैः शठैः ॥
बुधो मैत्रीं न कुर्व्वीत नैकः पन्थानमाश्रयेत् ।
नावगाहेज्जलौघस्य वेगमग्रे नरेश्वर ॥
प्रदीप्तं वेश्म न विशेन्नारोहेच्छिखरं तरोः ।
न कुर्य्याद्दन्तसङ्घर्षं न कुष्णीयाच्च नासिकाम् ।
नासंवृतमुखो जृम्भेत् श्वासकासौ विवर्ज्जयेत् ।
नोच्चैर्हसेत् सशब्दञ्च न मुञ्चेत् पवनं बुधः ॥
नखान्न खादयेच्छिन्द्यान्न तृणं न महीं लिखेत् ।

न चाश्नु भक्षयेत्कोद्रान् शचीयादिष्वनक्तः ।
ज्योतींष्यमेध्यशस्तानि नाभिवीक्षेत च प्रभो ।
न हुङ्कुर्य्याच्छवं चैव शवगन्धो हि सोमजः ॥
चतुष्पथं चैत्यतरुं श्मशानोपवनानि च ।
दुष्टस्त्रीसन्निकर्षञ्च वर्ज्जयेन्निशि सर्व्वदा ॥
पूज्यदेवद्विजज्योतिश्छायां नातिक्रमेद्बुधः ।
नैकः शून्याटवीं गच्छेन्न च शून्यं गृहं व्रजेत् ॥
केशास्थिकण्टकामेध्यबलिभस्मतुषांस्तथा ।
स्नानार्द्रधरणीं चैव दूरतः परिवर्ज्जयेत् ॥
नानार्य्यानाश्रयेत् कांश्चिन्न जिह्मं रोचयेद्बुधः ।
उपसर्पेन्न च व्यालं चिरं तिष्ठेन्न चोत्थितः ॥
घण्टेकभोजकांश्चैव तथा देवपराङ्मुखान् ।
सर्व्वाश्रमक्रियातीतान् दूरतः परिवर्ज्जयेत् ॥
अतीवजागरस्वप्नौ तद्वत् स्नानासने बुधः ।
न सेवेत तथा शय्यां व्यायामञ्च नरेश्वर ॥
दंष्ट्रिणः शृङ्गिणश्चैव प्राज्ञो दूरेण वर्ज्जयेत् ।
अवश्यायञ्च राजेन्द्र पुरोवातातपौ तथा ॥
न स्नायान्न स्वपेन्नग्नो न चैवोपस्पृशेद्बुधः ।
मुक्तकच्छश्च नाचामेद्देवार्च्चाञ्च विवर्ज्जयेत् ॥
नैकवस्त्रः प्रवर्त्तेत द्विजवाचनके जपे ।" * ॥
किञ्च ।
"न च निर्द्धूनयेत् केशानाचामेन्नैव चोत्थितः ।
पादेन नाक्रमेत् पादं न पूज्याभिमुखं नयेत् ॥
अपसव्यं नैव गच्छेद्देवागारचतुष्पथान् ।
मङ्गल्यपूज्यांश्च तथा विपरीतान्न दक्षिणान् ॥
सोमार्काग्न्यम्बुवायूनां पूज्यानाञ्च न सम्मुखम् ।
कुर्य्यात् ष्ठीवनविण्मूत्रसमुत्सर्गञ्च पण्डितः ॥
तिष्ठन्न मूत्रयेत्तद्वत् पथ्यासु नैव मूत्रयेत् ।
श्लेष्मविण्मूत्ररक्तानि सर्व्वदैव न लङ्घयेत् ॥
श्लेष्मष्ठीवनकोत्सर्गो नान्नकाले प्रशस्यते ।
बलिमङ्गलजप्यादौ न होमे न महाजने ॥
योषितो नावमन्येत न चासां विश्वसेद्बुधः ।
न चैवेर्ष्युर्भवेत्तासु नाधिकुर्य्यात् कदाचन ॥
मङ्गल्यपुष्परत्नाज्यपूज्याननभिवाद्य च ।
न निष्क्रामेद् गृहात् प्राज्ञः सदाचारपरो नरः ॥
आकाशगर्ज्जितादौ तु पर्व्वस्वशौचकादिषु ।
अनध्यायं बुधः कुर्य्यादुपरागादिके तथा ॥
वर्षलपादिके क्रुद्धौ दक्षौ दावाटवीषु च ।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् ।
नोर्द्ध्वं न तिर्य्यक् दूरं वा निरीक्षन् पर्य्यटेद्बुधः ।
युगमात्रं महीपृष्ठं नरो गच्छेद्विलोकयन् ॥" * ॥
किञ्च ।
"प्रियमुक्तं हितं नैतदिति मत्वा न तद्वदेत् ।
श्रेयस्तदहितं वाच्यं यद्यप्यत्यन्तमप्रियम् ॥
प्राणिनामुपकाराय यदेवेह परत्र च ।
कर्म्मणा मनसा वाचा तदेव मतिमान्
भजेत् ॥" * ॥
हरभारतीये सदाचारप्रसङ्गे ।
"समावर्त्तमिति मूढाह्वो वै ह्यभिवादने ।
स्नानं व्रतं जपं दानं देवताभ्यर्च्चनं तथा ॥
यज्ञञ्च तर्पणञ्चैव कुर्व्वन्तं नाभिवादयेत् ।
तथा स्नानं प्रकुर्व्वन्तं धावन्तमशुचिन्तथा ॥
सन्ध्यानञ्च शयानञ्च अव्यक्तशिरसन्तथा ।
भिक्षान्नधारिणं चैव वमन्तं जलमध्यगम् ॥
कृताभिवादनो यो न कुर्य्यात् प्रत्यभिवादनम् ।
नाभिवाद्यः स विज्ञेयो यथा शूद्रस्तथैव सः ॥" *
मार्कण्डेयपुराणे मदालसालर्कसंवादे ।
"असत्प्रलापमनृतं वाक्पारुष्यञ्च वर्ज्जयेत् ।
असच्छास्त्रमसद्वादमसत्सेवाञ्च पुत्रक ॥
केशप्रसाधनादर्शदर्शनं दन्तधावनम् ।
पूर्व्वाह्ण एव कार्य्याणि देवतानाञ्च तर्पणम् ॥
उदक्यादर्शनं स्पर्शं वर्ज्जेत् संभाषणं तथा ।
न चाभीक्ष्णं शिरःस्नानं कुर्य्यान्निष्कारणं नरः ॥
शिरःस्नातश्च तैलेन नाङ्गं किञ्चिदपि स्पृशेत् ।
पन्था देयो ब्राह्मणानां राज्ञो दुःखातुरस्य च ॥
विद्याधिकस्य गुर्व्विण्या भारार्त्तस्य महीयसः ।
मूकान्धबधिराणाञ्च मत्तस्योन्मत्तकस्य च ॥
पुंश्चल्याः कृतवैरस्य बालस्य पतितस्य च ।
उपानद्वस्त्रमाल्यानि धृतान्यन्यैर्न धारयेत् ॥
उपवीतमलङ्कारं करकञ्चैव वर्ज्जयेत् ।
न विप्रवाङ्मुखस्य प्राज्ञस्तिष्ठेत् कदाचन ॥
न चापि विक्षिपेत् पादौ वाससी न च धूनयेत् ।
नखोन्मत्तप्रसनिनो विरूपान् मायिनस्तथा ॥
न्यूनाङ्गानधमांश्चैव नोपहासैर्न्न दूषयेत् ।
परस्य दण्डं नोद्यच्छेत् शिक्षार्थं पुत्रशिष्ययोः ॥
नानुवेपनमादद्यादस्नातः स्नानकी क्वचित् ।
न चापि रक्तवासाः स्याच्चित्रवासधरोऽपि वा ॥
क्षुरकर्म्मणि चान्ते च स्त्रीसम्भोगे च पुत्रक ।
स्नायीत चैलवान् प्राज्ञः कटभूमिमुपेत्य च ॥
युगपञ्जलमग्निञ्च बिभृयान्न विचक्षणः ॥"
कटभूमिं श्मशानम् ।
"नाचक्षीत धयन्तीं गां नाम्भोऽञ्जलिना
पिबेत् ॥"
धयन्तीं पिबन्तीम् ।
"शौचकालेषु सर्व्वेषु गुरुष्वल्पेषु वा पुनः ।
न विलम्बेत शौचार्थं न मुखेनानलं धमेत् ॥
विप्रुषो मक्षिकाद्याश्च दुष्टसङ्गादिदोषिणः ।
अजाश्वौ मुखतो मेध्यौ न गोर्व्वत्सस्य चाननम् ॥
मातुः प्रस्रवणे मेध्यं शकुनिः फलपातने ।
उदक्याशौचिकश्वाश्च सूतिकान्त्यावसायिनः ।
स्पृष्ट्वा स्नायीत शौचार्थं तथैव मृतहारिणः ॥
नारं स्पृष्ट्वास्थि सस्नेहं स्नातः शुध्यति मानवः ।
आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा ॥
न चालपेत् जनं द्विष्टं वीरहीनां तथा स्त्रियम् ॥
देवतापितृसच्छास्त्रयज्ञविप्रादिनिन्दकैः ।
कृत्वा तु स्पर्शमालापं शुध्येदर्कावलोकनात् ॥
अवलोक्य तथोदक्यामन्त्यजान् पतितं शठम् ।
विधर्म्मिसूतिकाषण्डविवस्त्रान्त्यावसायिनः ॥
मृतनिर्यातकाश्चैव परदाररताश्च ये ।
एतदेव हि कर्त्तव्यं प्राज्ञैः शोधनमात्मनः ॥" * ॥
किञ्च ।
"यच्चापि कुर्व्वतो नात्मा जुगुप्सामेति पुत्रक ।
तत् कर्त्तव्यमशङ्केन यन्न गोप्यं महाजने ॥" * ॥
भविष्योत्तरे श्रीकृष्णयुधिष्ठिरसंवादे ।
"उपासते न ये पूर्व्वां द्विजाः सन्ध्यां न पश्चि-
माम् ।
सर्व्वांस्तान् धार्म्मिको राजा शूद्रकर्म्मणि योज-
येत् ॥
दूरादावसथान्मूत्रं दूरात् पादावसेचनम् ।
उच्छिष्टोत्सर्ज्जनं भूप सदा कार्य्यं हितैषिणा ॥
उच्छिष्टो न स्पृशेच्छीर्षं सर्व्वे प्राणास्तदाश्रयाः ।
केशग्रहान् प्रहारांश्च शिरस्येतानि वर्ज्जयेत् ॥
न पाणिभ्यामुभाभ्यान्तु कण्डूयात्तु वै शिरः ॥"
किञ्च ।
"सुवासिनीं गुर्व्विणीञ्च वृद्धं बालातुरौ तथा ।
भोजयेत् संस्कृतान्नेन प्रथमं चरमं गृही ॥
अघं स केवलं भुङ्क्ते यद्ध गोवाहनादिके ।
यो भुङ्क्ते पाकवन्तेषु प्रेक्षतामप्रदाय च ।
वर्ज्जयेद्दधि सक्तुञ्च रात्रौ धानाञ्च वासरे ॥"
किञ्च ।
"सजञ्च नापकर्षेत न बहिर्धारयीत च ।
गृहे पारावता धन्याः शुकाश्च सहकारिकाः ॥"
कौर्म्मे व्यासगीतायाम् ।
"स्वर्णं वा यदि वा धान्यं स्वर्णं वा जलमेव वा ।
परस्यापहरन् जन्तुर्नरकं प्रतिपद्यते ॥
न राज्ञः प्रतिगृह्णीयान्न शूद्रात् पतितादपि ।
नान्यस्मादयाचकत्वञ्च निन्दिताद्वर्ज्जयेद्बुधः ॥
नित्यं याचनको न स्यात् पुनस्तन्नैव याचयेत् ।
प्राणानपहरत्येष याचकस्तस्य दुर्म्मतिः ॥
न देवद्रव्यहारी स्याद्विशेषेण द्विजोत्तमाः ।
ब्रह्मस्वञ्च नापहरेदापद्यपि कदाचन ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
देवस्वं चापि यत्नेन सदा परिहरेत्ततः ॥
न धर्म्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ।
व्रतेन पापं प्रच्छाद्य कुर्व्वन् स्त्रीशूद्रदम्भनम् ॥
प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः ।
देवद्रोहाद्गुरुद्रोहः कोटिकोटिगुणाधिकः ॥
ज्ञानापवादो नास्तिक्यं तस्मात् कोटिगुणा-
धिकम् ॥" * ॥
किञ्च ।
"हिमवद्विन्ध्ययोर्मध्ये पूर्व्वपश्चिमयोः शुभम् ।
मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसेद्द्विजः ॥
कृष्णो वा यत्र चरति मृगो नित्यं स्वभावतः ।
पुण्याश्च विश्रुता नद्यस्तत्र वा निवसेद्द्विजः ॥
अर्द्धक्रोशान्नदीकूलं वर्ज्जयित्वा द्विजोत्तमाः ॥"
किञ्च ।
"अग्निना भस्मना चैव सलिलेन विशेषतः ।
द्वारेण स्तम्भमार्गेण षड्भिः पङ्क्तिर्व्विभिद्यते ॥
परक्षेत्रे चरन्तीं गां न चाचक्षीत कस्यचित् ।
न सूर्य्यपरिवेषं वा नेन्द्रचापं न चाग्निकम् ॥
परस्मै कथयेद्विद्वान् शशिनं वा कथञ्चन ।
तिथिं पक्षस्य न ब्रूयान्नक्षत्राणि विनिर्द्दिशेत् ॥
न देवगुरुविप्राणां दीयमानन्तु वारयेत् ।
निन्दयेद्यो गुरून् देवान् वेदं वा सोपबृंहणम् ॥
कल्पकोटिशतं साग्रं रौरवे पच्यते नरः ।
तूष्णीमासीत निन्दायां न ब्रूयात् किञ्चिदुत्तरम् ॥

कर्णौ पिधाय गन्तव्यं न चैनमवलोकयेत् ।
वर्ज्जयेद्वै रहस्यञ्च परेषां गूहयेद्बुधः ॥
विवादं स्वजनैः सार्द्धं न कुर्य्याद्वै कदाचन ।
न पापं पापिनां ब्रूयादपापं वा द्विजोत्तमाः ॥
नेक्षेतोद्यन्तमादित्यं शशिनं चानिमित्ततः ।
नास्तं यान्तं न वारिस्थं नोपसृष्टं न मध्यगम् ॥
तिरोहितं वाससा वा नादर्शान्तरगामिनम् ।
नग्नां स्त्रियं पुमांसं वा पुरीषं मूत्रमेव वा ॥
पतितव्यङ्गचाण्डालानुच्छिष्टान्नावलोकयेत् ।
न मुक्तबन्धनाङ्गां वा नोन्मत्तं मत्तमेव वा ॥
नाश्नीत भोजने पत्नीं नैवामीक्षेत मेहतीम् ।
क्षुवन्तीं जृम्भमाणां वा नासनस्थां यथासुखम् ॥
नोदके चात्मनो रूपं न कूपं श्वभ्रमेव वा ।
न शूद्राय मतिं दद्यात् कृशरं पायसं दधि ॥
नोच्छिष्टं वा घृतमधु न च कृष्णाजिनं हविः ।
न कुर्य्यात् कस्यचित् पीडां सुतं शिष्यञ्च ताड-येत् ॥
नात्मानमवमन्येत दैन्यं यत्नेन वर्ज्जयेत् ।
न च शिष्टानसत् कुर्य्यान्नात्मानं शंसयेद्बुधः ॥
न नद्याञ्च नदीं ब्रूयात् पर्व्वतेषु न पर्व्वतम् ।
आवसेत्तेन नैवापि न त्यजेत् सहवासिनम् ॥
शिरोऽभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत् ।
रोमाणि च रहस्यानि स्वानि स्वानि च न स्पृशेत् ॥
न पाणिपादवाङ्नेत्रचापलानि समाश्रयेत् ।
नाभिहन्याज्जलं पद्भ्यां पाणिना न कदाचन ॥
न घातयेदिष्टकाभिः फलानि न फलेन च ।
न म्लेच्छभाषां शिक्षेत कर्षेच्च पदासनम् ॥
नोत्सङ्गे भक्षयेद्भक्ष्यान् गात्रं संवेष्टयेन च ।
नाक्षैः क्रीडेन्न धावेत स्त्रीभिर्व्वादं न चाचरेत् ॥
न दन्तैर्नखलोमानि छिन्द्यात् सुप्तं न बोधयेत् ।
न बालातपमासेवेत् प्रेतधूमं विवर्ज्जयेत् ॥
नैकः सुप्यात् शून्यगृहे स्वयं नोपानहौ वहेत् ।
नाकारणाद्वा निष्ठीवेन्न बाहुभ्यां नदीं तरेत् ॥
न पादक्षालनं कुर्य्यात् पादेनैव कदाचन ।
नाग्नौ प्रतापयेत् पादौ न कांस्ये धावयेद्बुधः ॥
नाभिप्रसारयेद्देवान् ब्राह्मणान् गामथापि वा ।
न स्पृशेत् पाणिनोच्छिष्टो विप्रगोब्राह्मणा-नलान् ॥
न चैवान्नं पदा वापि न देवप्रतिमां स्पृशेत् ।
नोत्तरेदनुपस्पृश्य स्रवन्तीं नोऽतिक्रमेत् ॥
चैत्यं वृक्षं नैव छिन्द्यान्नाप्सु ष्ठीवनमुत्सृजेत् ।
न चाग्निं लङ्घयेद्धीमान् नोपदध्यादधः क्वचित् ॥
न चैवं पादतः कुर्य्यात् तिलबर्हं निशि त्यजेत् ।
न कूपमवरोहेत नावेक्षेताशुचिः क्वचित् ॥
अग्नौ न प्रक्षिपेदग्निं नाद्भिः प्रशमयेत्तथा ।
सुहृन्मरणमार्त्तिं वा न स्वयं श्रावयेत् परान् ॥
अपण्यमथ पण्यं वा विक्रये न प्रयोजयेत् ।
पुण्यस्थानोदकस्थाने सीमान्तं वा कृषेन्न तु ॥
न भिन्द्यात् पूर्व्वसमयमभ्युपेतं कदाचन ।
परस्परं पशून् व्यालान् पक्षिणो न च योधयेत् ॥

कारयित्वा स्वकर्म्माणि कारून् पश्चान्न वञ्चयेत् ।
बहिर्गन्धञ्च कुद्वारप्रवेशञ्च विवर्ज्जयेत् ॥
नैवाचरेत् सभां विप्रः समवायञ्च वर्ज्जयेत् ।
न वीजयेद्वा वस्त्रेण न देवायतने स्वपेत् ।
नाग्निगोब्राह्मणादीनामन्तरेण व्रजेत् क्वचित् ।
नाक्रामेत् वामतश्छायां ब्राह्मणानां गवामपि ॥
स्वान्तु नाक्रामयेच्छायां पतिताद्यैर्न रोगिभिः ।
वर्ज्जयेन्मार्ज्जनीरेणुं स्नानवस्त्रघटोदकम् ॥
नाश्नीयात् पयसा तक्रं न बीजान्युपजीवयेत् ॥
विवत्सायाश्च गोक्षीरमौष्ट्रं वा निर्द्दशस्य च ।
आविकं सन्धिनीक्षीरमपेयं मनुरब्रवीत् ॥
हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ।
दद्यादतिथये नित्यं बुध्येत परमेश्वरम् ॥
भिक्षामाहुर्ग्रासमात्रमग्रं तस्याश्चतुर्गुणम् ।
पुष्कलं हन्तकारन्तु तच्चतुर्गुणमिष्यते ॥”
मार्कण्डेये ।
“भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा ।
अदत्त्वा तु न भोक्तव्यं यथा विभवमात्मनः ॥”*
काशीखण्डे ।
“नैवोत्कटासनेऽश्नीयान्नाञ्जलौ वस्त्रयुक् पिबेत् ॥
श्राद्धं कृत्वा परश्राद्धे योऽश्नीयात् ज्ञानवर्जितः ।
दातुः श्राद्धफलं नास्ति भोक्ता किल्बिषभाग्-भवेत् ॥
नोत्पाटयेल्लोमनखं दशनेन कदाचन ।
करजैः करजच्छेदं करेणैव विवर्ज्जयेत् ॥
अपद्वारे न गन्तव्यं स्ववेश्मपरवेश्मनोः ।
उच्छिष्टमूत्रदेवार्थमर्घ्यं दूरात् परित्यजेत् ॥
निष्ठीवनञ्च शय्यायां गृहात् दूरे विनिःक्षिपेत् ॥
उद्धृत्य पञ्चमृत्पिण्डान् स्नायात् परजलाशये ।
अनुद्धृत्य च तत्कर्तुरेनसः स्यात्तुरीयभाक् ॥”
गार्ग्ये ।
“यस्तु पाणितले भुङ्क्ते यस्तु फुत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्यस्तु तस्य गोमांसवच्च तत् ॥”
अत्रिस्मृतौ ।
“स्तनाधिकस्तनी या गौरथवामेध्यचारिणी ।
तयोर्दुग्धं न होतव्यं न पातव्यं कदाचन ॥
अजा गावो महिष्यश्च अमेध्यमपि भक्षयेत् ।
दशाहे च तद्दुग्धं गोमयञ्च विवर्ज्जयेत् ॥
अमुष्या दन्तकाष्ठञ्च प्रत्यक्षलवणन्तथा ।
मृत्तिकाभक्षणञ्चैव तुल्यं गोमांसभक्षणैः ॥”
अथापवादो मनुस्मृतौ ।
“वाहनं वैष्णवञ्चैव नवमी परमाद्भुते ।
प्रत्यक्षे अपि ते ग्राह्ये निषिद्धत्वमगोचरः ॥”
व्यासस्मृतौ ।
“दिवा कपित्थच्छाया च निशायां दधिभो-जनम् ।
कार्पासं दन्तकाष्ठञ्च शक्रादपि हरेच्छ्रियम् ॥”
विष्णुस्मृतौ च ।
“कपिलायाः पयः पीत्वा शूद्रस्तु नरकं व्रजेत् ।
होमशेषं पिबेद्विप्रः स्यादन्यथा पशुः ॥
परित्यज्य पुनर्नैव तत्त्वस्थानोऽप्यन्यथा ।

यदत्र लिखितं किञ्चित्तत् क्षन्तव्यं महात्मभिः ॥
आचाराश्चेदृशाः सन्ति परेऽपि बहुधाः सताम् ।
ते लोकप्रायतो ज्ञेया अपेक्ष्या यदि वैष्णवैः ॥
लिखितैषां माहात्म्यमप्यत्र लिखितात् बुधा ।
सदाचारस्य नित्यत्वान्माहात्म्याच्च सुविस्तृतिः ॥”
इति श्रीहरिभक्तिविलासे नित्यकृत्यसमापनो नाम ११ विलासः ॥

**वैष्णवी**, स्त्री, ( विष्णोरियम् । विष्णु + अण् । स्त्रियां ङीप् । ) विष्णुशक्तिः । यथा,—
“एषा विष्णुशक्तिरुद्दिष्टा जगद्विस्तारकारिणी ।
एका चैषा परा शक्तिः सात्त्विकी ब्रह्मसंस्थिता ॥
एषैव कृष्णा तमसि रौद्री देवी प्रकीर्त्तिता ।
अष्टादश यथा कोट्यो वैष्णव्या भेद उच्यते ।
या विष्णो राजसी शक्तिः पालिनी चैव वैष्णवी ॥”
इति वाराहे त्रिशक्तिमाहात्म्यनामाध्यायः ॥
अपि च ।
“शङ्खचक्रगदाधारी विष्णुमाता तथाविधा ।
विष्णुरूपा यथा देवी वैष्णवी तेन गीयते ॥”
इति देवीपुराणे ४५ अध्यायः ॥
अपरञ्च ।
“विष्णुभक्ता विष्णुरूपा विष्णोः शक्तिस्वरूपिणी ।
सृष्टौ च विष्णुना सृष्टा वैष्णवी तेन कीर्त्तिता ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५४ अध्यायः ॥
दुर्गा । इति शब्दरत्नावली ॥ गङ्गा । यथा, पद्मपुराणम् ।
“विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता ।
पाहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात् ॥”
इत्यादि आह्निकाचारतत्त्वे स्नानार्थगङ्गावाहन-मन्त्रः ॥ अन्यच्च ।
“विष्णुपादप्रसूतासि वैष्णवीनामधारिणी ।
सर्व्वत्र रक्ष मां नित्यं गङ्गा त्रिपथगामिनी ॥”
इति गङ्गाकवचम् ॥
अपराजिता । इति शब्दचन्द्रिका ॥ शतावरी । इति राजनिर्घण्टः ॥ तुलसी । इति शब्द-माला ॥

**वैसारिणः**, पुं, ( विशेषेण सरतीति विसारी मत्स्यः स एव । “विसारिणो मत्स्ये ।” ५ । ४ । १६ । इति अण् । ) मत्स्यः । इत्यमरः ॥

**वैहायनं**, क्ली, ( विशेषेण हापयतीति विहायनम् । तदेव । स्वार्थे अण् । ) नाट्ये पुरुषस्य स्त्रीवेश-धारणम् । इति केचित् ॥

**वैहार्य्यः**, त्रि, (विशेषेण ह्रियते इति । वि + हृ + ण्यत् । विहार्य्य एव । स्वार्थे अण् । ) परि-हासेन वाचनीयः । श्यालकसम्बन्ध्यादि । इत्य-र्ज्जुनमिश्रः ॥ यथा,—
“यथा वादेषु नारीषु वैहार्य्येषु तथैव च ।
सङ्करेषु निपातेषु तथापत्सवनेषु च ।
अश्रुतं भीतपूर्व्वं मे तेन सत्येन सं मम ॥”
इति महाभारते उद्योगपर्व्व ॥

**वैहासिकः**, पुं, ( विहास + ठक् । ) विहासं करोति यः । भण्ड इति ख्यातः । तत्पर्य्यायः ।

शाक्यसिंहः २ शौद्धोदनिः ३ गौतमः ४ अर्कबन्धुः ५ मायादेवीसुतः ६ । इति हेमचन्द्रः ॥ ( यथा, नैषधे । १९ । ६७ ।
"दूराध्वाकृतिभिरध्वमवैरविजयविमात्र-
भीतुप्राप्ततनकरविनिर्जितवाजिवाहोऽयम् ॥")

वोटा, स्त्री, दासी । यथा,—
"पोटा वोटा च चेटी च दासी च कुट-
हारिका ।"
इति हेमचन्द्रः ॥

वोडः, पुं, गुवाकः । इति शब्दरत्नावली ॥ अट्टालके भूरिप्रयोगे च भोड इति ख्यातः ॥

वोडुः, पुं, लोमशपत्रः । वोड़ा इति भाषा । यथा । लोमाख्यो मकर्शो वोडुः । इति भरतधृतत्रिकाण्डशेषः ॥ मत्स्यविशेषः । इति मेदिनी ॥

वोड्डी, स्त्री, पणचतुर्थांशः । इति मेदिनी ॥ बुड़ि इति भाषा ॥

वोढव्यः, त्रि, वहधातोस्तव्यप्रत्ययेन निष्पन्नमेतत् । वहनीयः । वाह्यः । इति मुग्धबोधव्याकरणम् ॥ ( यथा, हरिवंशे । ७५ । ८८ ।
"वोढव्या पृथिवीयं भूःधरा दमनहंसि ॥"
परिणेतव्यः । यथा, महाभारते ।१२।४४।४५।
"न चैतेभ्यः प्रदातव्या न वोढव्या तथाविधा ॥")

वोढा, [ ऋ ] पुं, ( वहतीति । वह + तृच् । "सहिवहोरोदवर्णस्य ।" ६ । ३ । ११२ । इति अकारस्यौकारः । ) भारिकः । ( यथा, भागवते । ५ । १० । ४ ।
"विषमगतां स्वशिबिकां रहूगण उपधार्य पुरुषानधिवहत आह हे वोढारः साध्वतिक्रमत ॥" ) षण्ढः । परिणेता । इति शब्दरत्नावली ॥ ( यथा, मनुः । ८ । २०४ ।
"अन्यां चेद्दर्शयित्वान्या वोढुः कन्या प्रदीयते ।
उभे ते एकशुल्केन वहेदित्यब्रवीन्मनुः ॥")
सूतः । इति मेदिनी ॥ अनड्वान् । वृषभः । इति राजनिर्घण्टः ॥ ( यथा, महाभारते । ११ । २६ । ५ ।
"तपोऽर्थीयं ब्राह्मणी धत्त गर्भं
गौर्वोढारं धावितारं तुरङ्गी ॥"
वहनकर्त्तरि, त्रि । यथा, कुमारे । १ । १५ ।
"भागीरथीनिर्झरसीकराणां
वोढा मुहुः कम्पितदेवदारुः ॥" )

वोढुः, पुं, मुनिविशेषः । यथा,—
"सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ।
सर्व्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ॥"
इत्याह्निकाचारतत्त्वम् ॥

वोण्टः, पुं, वृन्तम् । इति शब्दरत्नावली ॥ वोंटा इति भाषा ॥ किन्तु लिपिकरप्रमादपाठोऽयम् । यथा [illegible] ।
"तथा वौंट इति ख्याते वृन्तं प्रसवबन्धनम् ॥"

वोदः, त्रि, आर्द्रः । इति त्रिकाण्डशेषः ॥

वोदालः, पुं, (वोदः आर्द्रः सन् अलतीति । अल + अच् ।) मत्स्यविशेषः । बोयालि इति भाषा ॥ तत्पर्य्यायः । सहस्रदंष्ट्री १ पाठीनः २ वदालकः ३ । इति शब्दरत्नावली ॥

वोरकः, पुं, लेखकः । इति त्रिकाण्डशेषः ॥

वोरटः, पुं, कुन्दपुष्पम् । इति त्रिकाण्डशेषः ॥

वोरपट्टी, स्त्री, मसूरा । इति शब्दमाला ॥ मादुर इति भाषा ॥

वोरवः, पुं, धान्यविशेषः । वोरो इति भाषा । अस्य गुणाः ।
"वोरवस्तु गुरुः शीतस्त्रिदोषस्य प्रकोपनः ।
मधुरश्चाम्लपाकश्च स्निग्धः पित्तकरो गुरुः ॥"
इति राजवल्लभः ॥

वोरुखानः, पुं, पाटलवर्णाश्वः । इति हेमचन्द्रः ॥

वोलं, क्ली, ( वोलयति प्राबल्ये निमग्नं भवतीति । वुल + अच् । यद्वा, वा गतौ पिक्षादित्वात् कलच् ।) गन्धरसतरुनिर्यासम् । तत्पर्य्यायः । रसापहम् २ सुकम् ३ हुरम् ४ पिण्डकम् ५ विषम् ६ निर्लोहम् ७ बर्बरम् ८ पिण्डम् ९ बोरभम् १० रक्तगन्धकम् ११ रसगन्धम् १२ महागन्धम् १३ विषघ्नम् १४ शुभगन्धम् १५ विषगन्धम् १६ गन्धरसम् १७ प्राणादिः १८ । अस्य गुणाः ।
"वोलञ्च कटु तिक्तोष्णं कषायं रक्तदोषनुत् ।
कफपित्तामयान् हन्ति प्रदरादिरुजापहम् ॥"
इति राजनिर्घण्टः ॥
तत्पर्य्यायगुणाः ।
"वोलं गन्धरसः प्राणपिण्डगोपरसाः समाः ।
वोलं रक्तहरं शीतं मेध्यं दीपनपाचनम् ॥
मधुरं कटु तिक्तञ्च दाहस्वेदत्रिदोषजित् ।
ज्वरापस्मारकुष्ठघ्नं गर्भाशयविशुद्धिकृत् ॥"
इति भावप्रकाशः ॥

वोलः, पुं, ( वालीति । वा + कलच् । ) रसगन्धः । इत्यमरः ॥

वोलकः, पुं, वेलकः । इति शब्दरत्नावली ॥

वोल्लाहः, पुं, अश्वविशेषः । यथा,—
"वोल्लाहस्त्वयमेव स्यात् पाण्डुकेशरवालधिः ।"
इति हेमचन्द्रः ॥

वोहित्थं, क्ली, यानपात्रम् । इति हेमचन्द्रः ॥ जाहाज इति भाषा ॥

वौ(बौ)द्धं, क्ली, (बुद्धेन ज्ञातम् । बुद्ध + अण् ।) बुद्धकृतनिरीश्वरशास्त्रम् । तत्तु सर्व्वैः शास्त्रकारैः खण्डितं अतएवाग्राह्यम् । जिनधर्म्मः । यथा,
"ततो बृहस्पतिः शक्रमकरोद्दनुदर्पितम् ।
यज्ञशान्तिविधानेन पौष्टिकेन च कर्म्मणा ॥
गत्वाथ मोहयामास राजपुत्रान् बृहस्पतिः ।
जिनधर्म्मं समास्थाय वेदबाह्यं स वेदवित् ॥
वेदत्रयीपरिभ्रष्टांश्चकार धिषणाधिपः ।
वेदबाह्यान् परिज्ञाय हेतुवादसमन्वितान् ।
जघान शक्रो वज्रेण सर्व्वान् धर्म्मबहिष्कृतान् ॥"
इति मात्स्ये सोमवंशानुकीर्त्तनं नाम २४ अः ॥
बुद्धसम्बन्धिनि, त्रि ॥

वौषट्, व्य, (उह्यतेऽनेन हविरिति । वह + बाहुलकात् डौषट् ।) देवहविर्द्दानमन्त्रः । तत्पर्य्यायः । स्वाहा २ श्रौषट् ३ वषट् ४ स्वधा ५ । इत्यमरः ॥ एते पञ्च शब्दा देवहविर्द्दाने वह्निमुखाहुतौ वर्त्तन्ते । देवाय हविषो दानं देवहविर्द्दानम् । तत्र देवा इन्द्रादयः अत्र पितरो देवता इति स्मृतेस्तेऽपि देवा हविर्द्दाने इत्यनेन एते मन्त्रा इति सूचितम् । अयमन्ते स्वाहेव हविर्भुजमिति रघुः । स्वाहायां मन्त्रभेदे स्त्रियां स्वाहाभियोजितेति कोषान्तरम् । स्वाहा इत्यादि । श्रौषट् तालव्यादि मूर्द्धन्यमध्यम् । वौषट् वषट्‌द्वयं मूर्द्धन्यमध्यम् । स्वधा इत्यादि । इन्द्राय स्वाहा । इत्यादिप्रयोगः । इति भरतः ॥

व्यंशकः, पुं, ( विगतोऽंशो विभागो यस्य । छेदादिना प्रायो विभागानर्हत्वादस्य तथात्वम् ।) पर्व्वतः । इति त्रिकाण्डशेषः ॥

व्यंसकः, पुं, (वि + + अंस + ण्वुल् ।) धूर्त्तः । इति हेमचन्द्रः ॥

व्यंसितः, त्रि, ( वि + अंस + क्तः । ) प्रतारितः । इति त्रिकाण्डशेषः ॥

व्यक्तः, त्रि, ( वि + अञ्ज व्यक्तौ + क्तः । ) प्राज्ञः । इत्यमरः ॥ स्फुटः । इति मेदिनी ॥ ( यथा, साहित्यदर्पणे । ३ । १ ।
"विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।
रसतामेति रत्यादिः स्थायी भावः सचेतसाम् ॥")
पुं, विष्णुः । यथा,—
"व्यक्तो वायुरधोक्षजः ।"
इति तस्य सहस्रनामस्तोत्रम् ॥

व्यक्तदर्शः, पुं, ( व्यक्तं स्फुटं यथा स्यात् तथा द्रष्टोऽर्थो येन । ) साक्षी । तत्पर्य्यायः । प्रत्यक्षी २ । इति त्रिकाण्डशेषः ॥

व्यक्तरूपः, पुं, (व्यक्तं रूपं यस्य ।) विष्णुः । यथा,
"अव्यक्तो व्यक्तरूपश्च सहस्रजिदनन्तजित् ।"
इति तस्य सहस्रनामस्तोत्रम् ॥
व्यक्तरूपयुक्ते, त्रि ॥

व्यक्तिः, स्त्री, ( व्यज्यतेऽनयेति । वि + अञ्ज + क्तिन् ।) पृथगात्मिका । इत्यमरः ॥ जनः । इति हेमचन्द्रः ॥ व्यक्तता च ॥ ( यथा, रघुः ।१।१०।
"तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥"
भूतमात्रम् । यथा, गीतायाम् । ८ । १८ ।
"अव्यक्ताद्व्यक्तयः सर्व्वाः प्रभवन्त्यहरागमे ॥"
"व्यक्तयश्चराचराणि भूतानि ।" इति तट्टीकायां स्वामी ॥ न्यायशास्त्रोक्तव्यक्तिपदार्थः । यथा, साहित्यदर्पणे । २ । २५ ।
"सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥")

व्यग्रः, त्रि, ( विरुद्धं अगतीति । अग + अर्च्चेरिति साधुः ।) आसक्तः । ( यथा, महानिर्व्वाणतन्त्रे । ३ । १२४ ।
"लुब्धा धनार्ज्जने व्यग्राः सदा चञ्चलमानसाः ॥")
आकुलः । इत्यमरः ॥ ( यथा, कुमारे ।७।२।
"वैवाहिकैः कौतुकसंविधानै-
र्गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ॥"

तालवृन्तम्। इति श्रीधरस्वामी ॥ यथा, भागवते। ३। २८। ५।

"तं व्यजनं दितिजाधमेन
अपार्थदृशाकेन विवर्त्ममानम् ॥")

पुं, विष्णुः। यथा,—

"पद्मनाभो विपक्षो व्यङ्गो नैकश्रङ्गो महाशयः।"

इति तस्य सहस्रनामस्तोत्रम् ॥

व्यङ्गः, पुं, (विगतानि अङ्गानि यस्य।) भेकः। इति मेदिनी ॥ (विगतानि अङ्गानि यस्मात्।) मुखरोगविशेषः। तस्य लक्षणं यथा,—

"क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः।
सहसा मुखमागत्य मण्डलं विसृजत्यतः।
नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ॥"

इति माधवकरः ॥ *॥

तस्य चिकित्सा।

"वटाङ्कुरा मसूराश्च प्रलेपाद्व्यङ्गनाशनः।
व्यङ्गे मञ्जिष्ठया लेपः प्रशस्तो मधुयुक्तया ॥
अथवा लेपनं शस्तं शशस्य रुधिरेण च।
जातीफलस्य लेपस्तु हरेद्व्यङ्गञ्च नीलिकाम् ॥
वटस्य पाण्डुपत्राणि मालती रक्तचन्दनम्।
कुष्ठं कालीयकं लोध्रं एभिर्लेपं प्रयोजयेत् ॥"

इति भावप्रकाशः ॥

(त्रि, विगतं अङ्गं यस्य।) हीनाङ्गः। इति मेदिनी ॥ (यथा, महाभारते। १। ३६। २०।

"वयोगतमपि मातङ्गं मामिवाक्लिष्टदर्शनात्।
न कश्चिद्व्यङ्गकं वा व्यङ्गं नापि व्याधितम् ॥")

व्यङ्ग्यः, त्रि, व्यञ्जनया बोध्योऽर्थः। यथा,—

"वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः।
व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः ॥"

इति साहित्यदर्पणे २ परिच्छेदः ॥

व्यच, श व्याजे। छद्मने। इति कविकल्पद्रुमः ॥ (तुदा०-कुटा०-पर०-सक०-सेट्।) व्याजश्छल, विचति खलं खलः। छलयति इत्यर्थः। अविचीत् विव्याच। इति दुर्गादासः ॥

व्यजः, पुं, (व्यजत्यनेनेति। वि + अज + "गोचरसञ्चरेति।" ३। ३। ११९। इति घ। निपातनादजेर्व्यघञपोरिति वीभावो न भवति।) व्यजनम्। विपूर्व्वाजधातोरप्रत्ययेन निष्पन्नमिदम् ॥

व्यजनं, क्ली, (व्यजत्यनेनेति। वि + अज + ल्युट्। 'वा यौ।' २।४।५७। इति पक्षे वीभावो नास्ति।) तालवृन्तकम्। इत्यमरः ॥ पाखा इति भाषा ॥ (यथा, ऋतुसंहारे। १। ८।

"सचन्दनाम्बुव्यजनोद्भवानिलैः
सहारयष्टिस्तनमण्डलार्पणैः।
सवल्लकीकाकलिगीतनिस्वनैः
प्रबुध्यते सुप्त इवाद्य मन्मथः ॥")

तस्य सामान्यगुणः। स्वेददाहश्रमापहत्वम्। तालव्यजनगुणः। त्रिदोषशमनत्वम्। लघुत्वञ्च। वंशव्यजनगुणः। रूक्षत्वम्। उष्णत्वम्। वायुपित्तकारित्वञ्च। वेत्रवस्त्रमयूरपुच्छव्यजनगुणः। त्रिदोषनाशित्वम्।

श्रमापहत्वम्। त्रिदोषशमनत्वम्। मक्षिकादिनिवारकत्वञ्च। इति राजवल्लभः ॥

व्यञ्जकः, पुं, (व्यनक्तीति। वि + अञ्ज + ण्वुल्।) अभिनयः। इत्यमरः ॥ ये हृद्गतक्रोधादिभावाभिव्यञ्जके। व्यनक्तीति व्यञ्जकः। अनुभ अभि गति व्यनक्ति अक। आङ्गिकवाचिकसात्त्विकाहार्य्यभेदात् व्यञ्जकश्चतुर्विधः। अभिमुखं नीयते अर्थोऽनेन इति अभिनयः। नी ञ प्रापणे अल्। हस्तादिभिः शब्दवातादिकथनमभिनयः। घटाद्याकारकथनं करादिसंस्थानमभिनयः इत्यन्येऽपि। इति भरतः ॥ व्यञ्जनया प्रतिपादकः। (यथा, साहित्यदर्पणे। २। १३।

"अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधो मतः।
शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ॥"

प्रकाशके, त्रि। यथा, मनुः। २। ६८।

"उत्पत्तिव्यञ्जकः पुण्यः कर्म्मयोगं निबोधत ॥")

व्यञ्जनं, क्ली, (व्यज्यते व्यक्ते अन्नादि संयोज्यतेऽनेनेति। वि + अञ्ज + ल्युट्।) अन्नोपकरणम्। तत्तु सूपशाकादि। इति राजनिर्घण्टः ॥ तत्पर्य्यायः। तेमनम् २ निष्ठानम् ३। इत्यमरः ॥ तेमः ४। इति शब्दरत्नावली ॥ (यथा, कथासरित्सागरे। ८। ६७। २।

"आनो भर व्यञ्जनं गामश्वमभ्यञ्जनम् ॥")

अस्य गुणाः।

"व्यञ्जनं शाकमत्स्याद्यं कृतं द्रव्यैश्च पुष्टिदम्।
द्रव्येण येन येनेह व्यञ्जनं मनुजमांसयोः।
तस्य तस्य तयोर्ज्ञेनद्गुणदोषैर्विभावयेत् ॥"

इति राजवल्लभः ॥

व्यञ्जनविशेषगुणाः तत्तच्छब्दे द्रष्टव्याः ॥ *॥ चिह्नम्। (व्यञ्जना। यथा, साहित्यदर्पणे। ४। ५८।

"अवाच्यत्वादिकं तस्य यस्य व्यञ्जनरूपतः ॥")

श्मश्रु। (यथा, महाभारते। १। १५८। ३४।

"कृत एव परित्यक्तुं सुतं शक्याश्चरं स्वयम्।
बालमप्राप्तवयसमजातव्यञ्जनाकृतिम् ॥")

अवयवः। दिनम्। इति मेदिनी ॥ स्त्रीपुंसयोरुपस्थदेशः। स तु उपस्थः। अङ्गभाजकम्। स तु ककारादिहकारान्तवर्णः। इति धरणिः (यथा, साहित्यदर्पणे। १०। ६४०।

"सवर्णे पृथगार्य्यायाः स्वरव्यञ्जनसंहतेः।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥")

व्यञ्जना, स्त्री, (वि + अञ्ज + णिच् + युच्। टाप्।) शब्दस्य वृत्तिविशेषः। तस्या लक्षणं यथा,—

"विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥"

शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभाव इति मतेनाभिधा लक्षणा तात्पर्य्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वा उपक्षीणासु ययान्योऽर्थो बोध्यते सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च वृत्तिर्व्यञ्जन-ध्वनन-गमन-प्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम। तत्र।

"अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा ॥"

अभिधामूलामाह।

"अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।
एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया ॥"

आदिशब्दाद्विप्रयोगादयः। उक्तं हि।

"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥"

इति ॥

सशङ्खचक्रो हरिरिति शङ्खचक्रसंयोगेन हरिशब्दो विष्णुमेवाभिधत्ते। अशङ्खचक्रो हरिरिति तद्वियोगेन तमेव। भीमार्ज्जुनाविति अर्ज्जुनः पार्थः। कर्णार्ज्जुनाविति कर्णः सूतपुत्रः। स्थाणुं वन्दे भवच्छिदे इति स्थाणुः शिवः। सर्व्वं जानाति देव इति देवो भवान्। कुपितो मकरध्वज इति मकरध्वजः कामः। देवः पुरारिरिति पुरारिः शिवः। मधुना मत्तः पिक इति मधुर्व्वसन्तः। पातु वो दयितामुखमिति मुखं सांमुख्यम्। विभाति गगने चन्द्र इति चन्द्रः शशी। निशि चित्रभानुरिति चित्रभानुर्वह्निः। भाति रथाङ्गमिति नपुंसकव्यक्त्या रथाङ्गं चक्रम्। स्वरस्तु वेद एव विशेषप्रतीतिकृत् काव्ये इति तस्य विषये नोदाहृतम्। इदञ्च केऽप्यसहमाना आहुः स्वरोऽपि काक्वादिरूपः काव्ये विशेषप्रतीतिकृदेव। उदात्तादिरूपोऽपि मुनेः पाठोक्तदिशा शृङ्गारादिरसविशेषप्रतीतिकृदेवेति। एतद्विषये उदाहरणमुचितमेव इति तन्न तथाहि स्वराः काक्वादय उदात्तादयो वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति न खलु प्रकृतोक्तमनेकार्थशब्दस्यैकार्थनियन्त्रणरूपं विशेषम्। किञ्च यदि यत्र क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावादनियन्त्रितयोरप्यर्थयोरनुरूपस्वरवशेनैकत्र नियमनं वाच्यं तदा तथाविधस्थले श्लेषाङ्गीकारप्रसङ्गः न च तथा अतएवाहुः श्लेषनिरूपणप्रस्तावे काव्यमार्गे स्वरो न गण्यते इति च नय इत्यलमुपजीव्यानां मान्यानां व्याख्यानेषु कटाक्षनिक्षेपेण। आदिशब्दादीदृशस्थलेऽपि हस्तादिचेष्टादिभिः स्तनादीनां कमलकोरकाद्याकारत्वम्। एवमेकस्मिन्नर्थेऽभिधया नियन्त्रिते या शब्दस्यान्यार्थबुद्धिहेतुः शक्तिः सा अभिधामूला व्यञ्जना। यथा मम तातपादानां महापात्रचतुर्दशभाषाविलासिनीभुजङ्गमहाकवीश्वरश्रीचन्द्रशेखरसान्धिविग्रहिकाणाम्।

"दुर्गालङ्घितविग्रहो मनसिजं संमीलयंस्तेजसा
प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो

भोगिभिः।
नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं

धारयन्
गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः ॥"

अत्र प्रकरणेनाभिधया उमावल्लभशब्दस्य उमानाम्नी महादेवी तद्वल्लभभानुदेवनृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपो-

"अनियुक्तो नियुक्तो वा धर्म्मज्ञो वक्तुमर्हति ।
दैवीं वाचं स वदति यः शास्त्रमुपजीवति ॥"
दैवीं देवानुमताम् ॥ ० ॥ धर्म्मशास्त्रयोस्तु विरोधे लौकिकव्यवहारं प्रमाणयेत् । इत्याह स एव ।
"धर्म्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः ।
व्यवहारोऽपि बलवान् धर्म्मस्तेनावहीयते ॥"
अवहीयते अपगच्छति हि मतानिरस्तात्मज्ञाती: ।
अतएव वृहस्पतिः ।
"केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः ।
युक्तिहीनविचारे तु धर्म्महानिः प्रजायते ॥"
युक्तिन्याय: । स च लौकिकव्यवहार इति व्यवहारमातृका । अतएव कात्यायनः ।
"कुलशीलवयोवृत्तवित्तवद्भिरधिष्ठितम् ।
वणिग्भिः स्यात् कतिपयैः कुलवृद्धैरधिष्ठितम् ॥"
सद इति शेषः । कात्यायनः ।
"सभ्येनावश्यवक्तव्यं धर्म्मार्थसहितं वचः ।
शृणोति यदि नो राजा स्यात्तु सभ्यस्तदाऽनृतः ॥"
सभ्यः सभायां साधुः ॥ ० ॥ तथाविधानाह याज्ञवल्क्यः ।
"श्रुताध्ययनसम्पन्नाः कुलीनाः सत्यवादिनः ।
राज्ञा सभासदः कार्य्याः शत्रौ मित्रे च ये समाः ॥"
श्रुताध्ययनसम्पन्नाः धर्म्मशास्त्रज्ञाः । कुलीनाः असङ्करादिदोषशून्यमातापितृवंशपरम्पराकाः । एवंभूताः सभासदः सभायां यथा सीदन्ति उपविशन्ति तथा दानमानसत्कारैः राज्ञा कर्त्तव्याः ॥ ० ॥ तथाविधावस्थानेन भूमेः सभात्वमाह मनुः ।
"यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।
राज्ञः प्रतिकृतो विद्वान् ब्राह्मणस्तां सभां विदुः ॥"
विद्वत्त्रयसत्तायामपि सभापर्य्याप्तिमिच्छन्नाह स एव ।
"त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः ।
त्रयश्चाश्रमिणः पूर्व्वे परिषत् स्याद्दशावरा ॥"
त्रैविद्यः त्रिवेदपारगः । हैतुकः । सद्युक्तिव्यवहारी । अनएवामराधिपः । सभा सदसि सभ्ये च । अथ भा दीप्तिः प्रकाशो ज्ञानमिति यावत् तया सह साक्षात् परम्परया वा वर्त्तते इति सभा ॥ ० ॥ कात्यायनः ।
"दिवसस्याष्टमं भागं मुक्त्वा भागत्रयं तु यत् ।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः ॥"
अष्टमयामार्द्धप्रहरम् । भागत्रयं प्रहरद्वयपर्य्यन्तम् । मनुः ।
"धर्म्मासनमधिष्ठाय संवीताङ्गः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेत् ॥"
मनुनारदबौधायनहारीताः ।
"पादोऽधर्म्मस्य कर्त्तारं पादः साक्षिणमृच्छति ।
पादः सभासदः सर्व्वान् पादो राजानमृच्छति ।
राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।
एनो गच्छति कर्त्तारं निन्दार्हो यत्र निन्द्यते ॥"
कर्त्तारं वादिनम् । राजपादं विवेचनपरम् । अनेनाः निष्पापः ॥ अर्थिप्रत्यर्थ्युपादानमाह नारदः ।
"यस्य चाभ्यधिका पीडा कार्य्यं वाभ्यधिकं भवेत् ।
तस्यार्थिभावो दातव्यो न यः पूर्व्वं निवेदयेत् ॥"
अत्रैव पूर्व्वपक्षो भवेत्तस्य इति कात्यायनीये तृतीयपादः । न यः पूर्व्वं निवेदयेदिति तस्योत्तरः पक्ष इति शेषः । न यः पूर्व्वमिति पाठे यः प्रथमं निवेदयति स पूर्व्ववादीत्यर्थः । वृहस्पतिः ।
"द्वयं पूर्व्विकया यातावर्थिप्रत्यर्थिनौ यदा ।
वादो वर्णानुपूर्व्व्येण ग्राह्यः पीडामवेक्ष्य वा ॥"
यत्र द्वावेव सहसा प्रभौ मदावर्णं ग्रस्त इति तत्र ब्राह्मणादिक्रमेणाधिकपीडादर्शनेन वा वादो ग्राह्यः ॥ ० ॥ स्वयं विवादाशक्तौ प्रतिनिधिमाह नारदः ।
"अर्थिना सन्नियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥"
तयोरर्थ्यादिप्रतिवादिनोः । वृहस्पतिरपि ।
"ऋत्विक् वादे नियुक्तश्च समौ सम्परिकीर्त्तितौ ।
यज्ञे स्वाम्याप्नुयात् पुण्यं हानिं वादेऽथवा जयम् ॥"
कात्यायनः ।
"मनुष्यमारणे स्तेये परदाराभिमर्शने ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥
पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दातव्यः कर्त्ता तु विवदेत् स्वयम् ॥"
कुलस्त्रीप्रभृतीनां प्रतिनिधिमाह व्यासः ।
"कुलस्त्रीबालकोन्मत्तजडार्त्तानाञ्च बान्धवाः ।
पूर्व्वपक्षोत्तरे ब्रूयुर्नियुक्तो भृतकस्तथा ॥"
भ्रात्रादीतरस्य पक्षस्थितस्य दण्डनीयत्वमाह नारदः ।
"यो न भ्राता पिता वापि न पुत्रो न नियोजितः ।
परार्थवादी दण्ड्यः स्यात् व्यवहारेषु विब्रुवन् ॥"
विब्रुवन् विरुद्धं ब्रुवन् ॥ ० ॥ नारदः ।
"निर्व्वेष्टुकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथान्येन राजकार्य्योद्यतस्तथा ॥
गवां प्रचारे गोपालाः शस्यवप्ने कृषीवलाः ।
शिल्पिनश्चापि तत्काले आयुधीयाश्च विग्रहे ॥
अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती ।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः ॥"
निर्व्वेष्टुकामो विवाहप्रवृत्तः । अन्येन वादान्तरेण । अप्राप्तव्यवहारः षोडशवर्षादर्व्वाक् । तत्काले विवाहादिसमाप्तिपर्य्यन्तकाले । एते विषमस्थाश्च उपप्लवदेशस्थाश्च जलमध्यादिना नासेध्या नाह्वातव्याः । एतान् प्राप्तकालान् वादिना निवेदितानिति शेषः ॥ ० ॥ याज्ञवल्क्यः ।
"अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत् ॥"
अभियुक्तः अकृतरमदत्वा भाषावादिनमेतं स्वाभियोगानुपमर्द्देन विवादान्तरेण न योजयेत् । युगपदनेकव्यवहारासम्भवात् । नारदोऽपि ।
"पूर्व्ववादं परित्यज्य योऽन्यमालम्बते पुनः ।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥"
हीनवादीत्यनेन दण्डनोक्ता न तु प्रकृतार्थहीनता अन्यथा वृथापत्तिः ॥ ० ॥ पारुष्ये प्रतिप्रसवमाह स एव ।
"कुर्य्यात् प्रत्यभियोगञ्च कलहे साहसेषु च ॥"
वाक्पारुष्ये शस्त्रादिप्रहारेषु च । यथापूर्व्वमहमप्यनेनाक्रुष्टः प्रक्षेप हत इत्यपराधाभावाय प्रत्यभियोगं कुर्य्यात् । तथा च वृहस्पतिः ।
"आक्रुष्टस्तु यदाक्रोशंस्ताडितः प्रतिताडयन् ।
हत्वाततायिनञ्चैव नापराधी भवेन्नरः ॥"
एतेन वाक्पारुष्यदण्डपारुष्ययोः प्रकृताभियोगे स्वकाभियोगेऽपि न दोषः । यत्तु ।
"पूर्व्वमाचारयेद्यस्तु नियतं स्यात् स दोषभाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्व्वे तु विनयो गुरुः ॥"
इति नारदवचनं तत् पूर्व्वापेक्षया परस्याधिकवाक्पारुष्योत्पादकस्यापि स्वल्पदण्डविधायकम् ॥ ० ॥ युगपत्संप्रवर्त्तने अधिकदण्डाभावमाह स एव ।
"पारुष्ये साहसे चैव युगपत्संप्रवृत्तयोः ।
विशेषश्चेन्न लभ्येत विनयः स्यात् समस्तयोः ॥"
विनयो दण्डः । एवञ्च दण्डोऽयमनपराधि अति हतः पीडितत्वादिति भाषायां प्रत्यभियोगः कार्य्य एव । प्रत्यवस्कन्दनोत्तरत्वेन युगपदनेकव्यवहारापत्तिदोषस्याभावात् ॥ ० ॥ सभापतेः कर्त्तव्यमाह कात्यायनः ।
"अथ चेत् प्रतिभूर्नास्ति वादयोग्यस्तु वादिनोः ।
स रक्षितो दिनस्यान्ते दद्यात् भृत्याय वेतनम् ॥"
प्रतिभवति तत्कार्य्ये तद्वद्भवति इति प्रतिभूर्लग्नकः । वादयोग्यः विवादफलस्य साधितधनादिदानस्य दण्डदानस्य च क्षमः । वादिनोः भाषावादिन उत्तरवादिनश्च । तथाच याज्ञवल्क्यः ।
"उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्य्यनिर्णये ।
प्रतिभुवस्त्वभावे च राज्ञा संस्थापनं तयोः ॥"
राज्ञा संस्थापनं दण्डतुल्याधिकरणं निर्णयस्य कार्य्ये धनादिदाने राजदत्तादित्वात् कार्य्यशब्दस्य पूर्व्वनिपातः । भृत्यः तन्नयुक्तो राजनियुक्तः ॥ ० ॥ प्रत्यर्थी यदि कञ्चित् कालं प्रार्थयते स लभते अर्थी तु कालं प्रार्थयन् अर्थित्वमेव जह्यादिति तेन कालो न प्रार्थनीयः । तदाह ।
"प्रत्यर्थी लभते कालं त्र्यहं सप्ताहमेव च ।
अर्थी तु प्रार्थयन् कालं तत्क्षणादेव हीयते ॥"
क्वचित् प्रत्यर्थी कालं न लभते । याज्ञवल्क्यः ।
"साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् ।
विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥"
साहसं मनुष्यमारणम् । गोरत्र दोहा ।

योक्तुः शिरोवर्त्तित्वोक्तेरभियोक्तव्य दिव्यकर्तृत्वं प्रतीयते। प्रत्यर्थीच्छया अर्थिनो दिव्यमाह वक्ष्येति। इतरोऽभियुक्तः। एतच्च दिव्यतत्त्वे विवृतम्। प्रतिज्ञातार्थसाधकमिति साधकं साक्ष्यादिकम्। तदाह बृहस्पतिः।
"द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा।
साक्षिलेख्यानुमानञ्च मानुषी त्रिविधा स्मृता।
धटाद्या धर्म्मजान्ता च दैविकी नवधा स्मृता॥"
तत्रानुमानन्तु युक्त्यादि। *। तत्र साक्ष्यमाह मनुः।
"समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिध्यति।"
एतत् प्रमाणमात्रोपलक्षणम्।
"अनुभावी तु यः कश्चित् कुर्य्यात् साक्ष्यं विवादिनाम्।"
इति तद्वचनान्तरात्।
अतएवाकृतमपि साक्षित्वमाह मनुः।
"यत्रानिबद्धो वीक्षेत शृणुयाद्वापि किञ्चन।
पृष्टस्तत्रापि तद्ब्रूयात् यथादृष्टं यथाश्रुतम्॥"
अनिबद्धश्चात्र साक्षित्वेनानियुक्तः। परम्परयापि श्रवणमाह विष्णुः।
"उद्दिष्टसाक्षिणि मृते देशान्तरगतेऽपि वा।
तदभिहितश्रोतारः प्रमाणं नात्र संशयः॥"
अस्योत्तरसंज्ञामाह नारदः।
"साक्षिणामपि यत् साक्ष्यं सपक्षं परिभाषताम्।
श्रवणात् श्रावणाद्वापि स साक्ष्युत्तरसंज्ञकः॥"
सपक्षमपि साक्ष्यं परिभाषतां साक्षिणां यः स्वयं शृणोति अर्थिना श्राव्यते वा स श्रवणात् श्रावणादुत्तरसाक्षीत्यर्थः। एवं योऽर्थिना गूढतया प्रत्यर्थिवचनं श्रावितः स गूढसाक्षीत्याह स एव।
"अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्।
यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते॥"
तैरान्तरवाद्यभिहितार्थविषयकदृष्टकारणकं विज्ञापनं साक्ष्यमिति स्थितम्। तत्र नारदः।
"तेषामपि न बालः स्यान्नैको न स्त्री न कूटकृत्।
न बान्धवो न चारातिर्ब्रूयुस्ते कार्य्यमन्यथा॥"
कार्य्यं सदपि अन्यथा तद्विपरीतत्वेन। अयञ्च यदि परमधार्म्मिकत्वेन बान्धवादीनामपि सत्यवादित्वं निश्चीयते तदा तेऽपि साक्षिणो भवितुमर्हन्तीति। तेषां साक्ष्यविधायकं वक्ष्यमाणमनुवचनमपि एतद्विषयम्। याज्ञवल्क्यः।
"त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्त्तक्रियारताः।
यथाजाति यथावर्णं सर्व्वे सर्व्वेषु वा स्मृताः॥"
त्रयोऽवरा निकृष्टा येषां ते त्र्यवराः त्रिभ्योऽन्यूना भवन्तीत्यर्थः। यथेति यो यज्जातीयस्तस्य तज्जातीयः साक्षी। स्त्रीणां स्त्रियोऽन्त्यजानामन्त्यजाः। यथावर्णं ब्राह्मणानां ब्राह्मणाः क्षत्रियादीनां क्षत्रियादयः। अभावे तु तत्र द्वैतं विना सर्व्व एव। त्र्यवरा इत्यस्यापवादमाह स एव।

"उभयानुमतः साक्षी भवत्येकोऽपि धर्म्मवित्।"
उभयानुमतत्वं धर्म्मवित्त्वञ्च मिलितं तन्त्रम्। तदाह विष्णुः। अभिमतस्तूभयपक्षसमवानुमतश्चैकोऽपि इति। अतएव श्रोत्रियमप्येकं निषेधयति बृहस्पतिः।
"नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा।
उभौ तु श्रोत्रियौ साक्ष्ये नैकं पृच्छेत् कदाचन॥"
एको मिलितगुणद्वयः प्रधानकल्पः तदभावे उभयानुमतमात्रोऽपि ग्राह्य इत्याह नारदः।
"उभयानुमतो यः स्याद्द्वयोर्व्विवदमानयोः।
भवत्येकोऽपि साक्षित्वे प्रष्टव्यः स्यात् स संसदि॥"
उभयानुमत एकोऽनुमत्यादिना अर्थकल्पविशेषतः साक्षित्वे संसदि बहुजनसन्निधौ प्रष्टव्यः तथात्वे पश्चाद्विवादिनोऽप्यन्यतरोऽभिभवात् स्वाभिप्रायप्रत्यवादित्वाशयः। विचारश्च तन्निर्णयार्थत्वात्तदाह मनुः।
"एकोऽप्यलुब्धः साक्षी स्याद्बह्व्यः शुच्योऽपि न स्त्रियः।
स्त्रीबुद्धेरस्थिरत्वात्तु दोषैश्चान्येऽपि ये वृताः॥"
एकोऽलुब्धस्तु साक्षी स्यादिति कुल्लूकभट्टधृतपाठः। एको लुब्धस्त्वसाक्षी स्यादिति [illegible]पाठस्तु न युक्तः। लुब्धानेकस्योऽप्यसाक्षिणो भवितुमर्हन्तीति एकपदव्यर्थतापत्तेः। भवतु वा तत्पाठः तथाप्येक इत्यनुरोधात् तन्निषिद्धलुब्धेनालुब्धस्यैकस्यानुमतिसत्त्वे धर्म्मवित्त्वमन्तरेण साक्षित्वं बोध्यं इत्यर्थतो न विरोधः। अतएव विष्णुरूपप्रभृतीनां उभयानुमत एक एव साक्षीति व्याख्याने धर्म्मविदिति नोक्तम्। दोषैस्तेयादिभिः। तथा च नारदः।
"स्तेनाः साहसिका धूर्त्ताः कितवा वञ्चकाश्च ये।
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते॥"
कितवा द्यूतकराः। *। अपवादमाह उशनाः।
"दासोऽन्धो बधिरः कुष्ठी स्त्रीबालस्थविरादयः।
एतेऽप्यनभिसम्बन्धाः साहसे साक्षिणो मताः॥"
स्थविरो ह्रासेन्द्रियग्रामः। आदिशब्दात् कितवादयः। उभयानुमताभावे शुचिक्रियत्वादिगुणश्चैको ग्राह्यः। तथा च व्यासः।
"शुचिक्रियश्च धर्म्मज्ञो योऽन्यथाप्यनुभूतवाक्।
प्रमाणमेकोऽपि भवेत् साहसेषु विशेषतः॥"
अनुभूतवाक् स्थानान्तरे सत्यत्वेनेति। भवदेवभट्टोऽप्येवम्। साहसमाह नारदः।
"मनुष्यमारणं स्तेयं परदाराभिमर्षणम्।
पारुष्यमनृतञ्चैव साहसं पञ्चधा स्मृतम्॥"
कात्यायनः।
"अन्धकारे तु निःक्षेपे साक्ष्यमेकोऽपि दापयेत्।
अर्थिना प्रहितः साक्षी भवेदेकोऽपि याचितः॥
संकलं येन यत् पण्यं तत्तथैव विभावयेत्।
एक एव प्रमाणं स विवादे परिकीर्त्तितः॥"
संकलं प्रहितं पण्यं कुङ्कुमादि। विष्णुः।
स्तेयसाहसवाग्दण्डपारुष्यसंग्रहणेषु साक्षिणो

न परीक्षा इति स्तेयपरदारगमनादिकार्य्याणां निभृतत्वेनैव क्रियमाणत्वात् दैवादेव परं साक्षिणो भवन्तीति न परीक्षा इत्युक्तम्। तेषां साक्ष्यन्तु मित्रादिभावादिनिरूपणेनैवोपपन्नत्वप्रयुक्तिप्रामाण्योपलम्भनीयम्। न तु वाक्यमात्रादिति व्यवहारमातृका। अतएव कात्यायनः।
"स्तेयादिषु परीक्षेत साक्षिणः स्थिरकर्म्मसु।
साहसात्मविवेकेन परीक्षा कुत्रचित् स्मृता॥"
इति। *।
श्रोत्रियादीनामसाक्ष्यमाह नारदः।
"श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता नराः।
वचनात्तेष्वसाक्षित्वं नात्र हेतुरुदाहृतः॥"
दानरत्नाकरे श्रोत्रियमाह देवलः।
"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा।
षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित्॥"
सकल्पां कल्पमात्राङ्गसहिताम्। षड्भिरिति सहार्थे तृतीया। वचनादिति श्रोत्रियत्वादिरूपाभिधानात् न च तदन्यो हेतुरित्यर्थः। तथा च श्रौतवैदिककर्म्मकरणव्यग्रतया परकीयकार्य्ये विकलत्वसम्भवात् साक्षित्वरूपकर्त्तव्यनियोगे तत्त्वात्ययभयेन व्यवहारद्रष्टारोऽपि तान् न पृच्छन्तीति तत्साक्ष्यकरणानर्थक्याच्च न ते साक्षिणः कर्त्तव्याः किन्तु स्वतः स्वयं साक्षिणो भवन्त्येव। उभौ तु श्रोत्रियौ स्यातामिति स्मृतेः। वृद्धस्यासाक्षित्वं वृद्धत्वादेव ज्ञानेन्द्रियह्रासादित्यर्थः। मनुः।
"स्त्रीणां साक्ष्यं स्त्रियः कुर्य्युर्द्विजानां सदृशा द्विजाः।
शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः॥
अन्तर्व्वेश्मन्यरण्ये वा शरीरस्यात्ययेऽपि च।
स्त्रियाप्यसम्भवे कार्य्यं बालेन स्थविरेण वा॥
शिष्येण बन्धुना वापि दासेन भृतकेन वा।
देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान्॥
उदङ्मुखान् प्राङ्मुखान् वा पूर्व्वाह्णे वै शुचिः शुचीन्।
ब्रूहीति ब्राह्मणं पृच्छेत् सत्यं ब्रूहीति पार्थिवम्॥
गोबीजकाञ्चनैर्व्वैश्यं शूद्रं सर्व्वैस्तु पातकैः॥"
गोबीजकाञ्चनापहारे यत् पापं तत्तवानृताभिधाने स्यादिति वैश्यम्। एतत्साक्ष्यानृताभिधाने भवान् सर्व्वैः पातकैः संबध्यत इत्युक्त्वा शूद्रञ्च पृच्छेत्।
"ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनः।
मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतो मृषा॥"
इति मनूक्तं शूद्रम्। सत्यञ्च।
"अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते॥"
इति मनुनारदोक्तं श्रावयेत्॥
याज्ञवल्क्यः।
"न ददाति हि यः साक्ष्यं जानन्नपि नराधमः।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि॥"

अज्ञाता अपि साक्षिणो भवन्तीत्याहतुर्भृगु-कात्यायनौ ।
"अन्ये पुनरनिर्दिष्टाः साक्षिणः समुदाहृताः ।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
कार्य्येष्वभ्यन्तरो यः स्यादर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥"
स्मृतिः ।
"दत्तादत्तेऽथ भृत्यानां स्वामिनां निर्गमे सति ।
विक्रयादानसम्बन्धे क्रीत्वा धनमनिच्छति ॥
द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥
प्रकाशे चाहृते चापि पारुष्ये दण्डवाचिके ।
बलोद्भवेषु कार्य्येषु साक्षिणो दिव्यमेव च ॥"
बृहस्पतिः ।
"लेख्यं वा साक्षिणो वापि विवादे यस्य दूषिताः ।
तस्य कार्य्यं न सिध्येत यावत्तन्न विशोधयेत् ॥"
तत्र साक्षिरूपप्रमाणम् ॥ * ॥ लेख्यशोधनमाह कात्यायनः ।
"अदृष्टलेख्यसम्बन्धे जीवतो वा मृतस्य च ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥"
तथा ।
"समवेतैश्च यद्दृष्टं वक्तव्यं तत्तथैव च ।
विभिन्नैनैव कार्य्ये तु वक्तव्यं पृथक् पृथक् ॥
नापृष्टैरनियुक्तैर्वा वक्तं सत्यं प्रयत्नतः ।
वक्तव्यं साक्षिभिः साक्ष्यं विवादस्थानमागतैः ॥
अनुद्दिष्टेन लिखितं दृष्टं वान्यविदा तु यत् ।
प्रत्यक्षं तत् स्मृतं कार्य्यं साक्ष्यं साक्षी तु तद्वदेत् ॥"
नारदः ।
"यः परार्थेऽपहरति स्वां वाचं पुरुषाधमः ।
आत्मार्थे किं न कुर्य्यात् स पापी नरकनिर्भयः ॥
वाचो ये वाचि नियता वाङ्मूला वाग्विनिः-सृताः ।
यस्तु तां स्तेनयेद्वाचं स सर्व्वस्तेयकृन्नरः ॥"
बौधायनः ।
"पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्व्वं भूम्यनृते हन्ति साक्ष्ये साक्षी मृषा वदन् ॥"
बृहस्पतिः ।
"यस्य चैवं प्रतिज्ञातं साक्षिभिः प्रतिपादितम् ।
स जयी स्यादन्यथा तु साध्यार्थं न समाप्नुयात् ॥"
याज्ञवल्क्यः ।
"उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः ।
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्व्वसाक्षिणः ॥"
अन्यथा पूर्व्वविपरीतार्थप्रकारेण । कूटा असत्यवचनाः । तथा ।
"यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणञ्च विवासयेत् ॥"
तमन्येभ्यः साक्ष्यं श्रावयेत्यादिना प्रयुक्तो यः श्रावितः कारितशपथात् परस्थितः एवम्भूतोऽपि सभायां निबद्धार्थे साक्ष्यं निह्नुते असत्यवाद-युक्तो दण्ड्यः ॥ * ॥

अथ लिखितम् ।
तत्र बृहस्पतिः ।
"षाण्मासिकेऽपि समये भ्रान्तिः संजायते यतः ।
धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥"
नारदः ।
"लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा ।
असाक्षिकं साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥
स्वतस्तु साक्षिणो यत्र धनिकर्णिकलेखकाः ।
तद्व्यपार्थकरं ज्ञेयं व्याधेः स्थिराभावात् ॥
दर्शितं प्रतिकालञ्च पाठितं श्रावितञ्च यत् ।
लेख्यं सिध्यति सर्व्वत्र मृतेष्वपि च साक्षिषु ॥
लेख्ये देशान्तरन्यस्ते शीर्णे दुर्लिखिते हृते ।
सतस्तत्कालकरणमसतो द्रष्टृदर्शनम् ॥
छिन्नभिन्नहृतोन्मृष्टनष्टदुर्लिखितेषु च ।
कर्त्तव्यमन्यल्लिखितं एष लेख्यविधिः स्मृतः ॥
लेख्ये यत्रान्यनामाङ्कं हेत्वन्तरकृतं भवेत् ।
विप्रतिपत्तौ परीक्ष्यं तत् सम्बन्धागमहेतुभिः ॥"
स्वलेख्यमसाक्षिकमपि प्रमाणं अन्यकृतं लेख्यं साक्षिमदिति यथासंख्येनान्वयः । देशस्थिते-र्धिकान् देशे यादृशलेख्यस्थितिः प्रवर्त्तते तत्र तादृशाः । तयोः स्वहस्तान्यकृतलेख्ययोः । स्वता इति साक्ष्यादौ मृते पुत्रादिसंज्ञं लेख्य-पत्रं न सिध्यति । यद्याधिभोगोऽस्ति तदा तदपि प्रमाणमित्यर्थः ॥ * ॥ यत्तमाह कात्यायनः ।
"यत्र पत्रमापन्नो लेखकः सह साक्षिभिः ।
स्वयं वा धनिकश्चैव नेष्टं पत्रं प्रमापयेत् ॥"
दर्शितमिति तथाविधमपि पूर्व्वसाक्षिकादि-सन्निधौ स्वयमर्थेन वा दर्शितं श्रावितं वा तदपि सिध्यतीत्यर्थः । सतो देशान्तरस्थपत्रस्य तत्कालकरणं पत्रानयनकालप्रतीक्षणम् । असतो दग्धादेः तदवलोकिकोपन्यासः । लेख्यमिति यत् पत्रं केनापि हेतुना अन्यनामचिह्नितं तत्र विप्रतिपत्तौ सत्यां पत्रं तेन सम्बन्धविश्वास-हेतुभूतसम्बन्धागमस्वरूपकारणैर्निर्णेयमिति ।
बृहस्पतिः ।
"मत्ताभियुक्तभीतार्त्तैः स्त्रीमत्तव्यसनातुरैः ।
निग्राहयुक्तं बलात्कारैः कृतं लेख्यं न सिध्यति ॥"
व्यासः ।
"दासास्वतन्त्रबालैश्च स्त्रीजनैश्चैव यत्कृतम् ।
प्रमाणं नैव तल्लेख्यमिति शास्त्रविदो विदुः ॥"
मिताक्षरायां स्मृतिः ।
"पूगश्रेणीगणादीनां या स्थितिः परिकीर्त्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥"
पूगस्तु ।
"समूहो वणिगादीनां पूगः स परिकीर्त्तितः ।"
इति कात्यायनवचनोक्तः ।
आदिशब्दात् विजातीयसमाजः । तेन ग्रामनगरादिः । श्रेणी तु सजातीयसमूहः ताम्बूलिक-कुविन्दचर्म्मकारकादिः । गण एकक्रियार्थो-द्यतः । लेख्यस्य प्रामाण्यमुक्त्वा लेख्य-साक्षिणां प्रागुक्तशोधनप्रकारेण तन्निरसनीयं तत्पूर्व्वत्व तु लेख्याभोगो भोग एव उपन्यासो

न तु लेख्यस्वरूपम् । तदाह कात्यायनः ।
"आहर्त्ता भुक्तियुक्तोऽपि लेख्यदोषान् विशो-धयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात् ॥"
बृहस्पतिः ।
"आहरेल्लेख्यमाहर्त्ता तत्सुतो भुक्तिमेव हि ।
अभियुक्तः प्रमीतश्चेत् तत्सुतोऽपि तदुद्धरेत् ॥"
अभियुक्त इति लेख्यस्य साधुत्वस्थापनार्थं अभि-युक्ते लेख्यकर्त्तरि तदनिस्तीर्य्यैव मृते तत्पुत्रेण साधुत्वं साध्यमित्यर्थः तत्साधनञ्च स्वहस्तलिख-नादिनेति प्रागुक्तम् ॥ * ॥

अथ भुक्तिः ।
तत्र याज्ञवल्क्यः ।
"पश्यतोऽब्रुवतो हानिर्भूमेर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥"
विवादमकुर्व्वतः समक्षं भुञ्जानेन परेणासम्बन्धिना भुज्यमानाया भूमेर्विंशतिवर्षैर्हानिः स्वत्वहानिः । अत्र लोकव्यवहारकर्म्मावसे-श्रवणं श्रावणेन । तथा च विष्णुधर्म्मोत्तरम् ।
"सभायामुपाख्यान्य श्रावणेन
लोकस्य यत् स्यात् व्यवहारकर्म्म ॥"
तत्रैव ।
"श्रावणे च तथा साक्षि विंशत् वर्षोदयाः स्मृताः ॥"
विशेषयति व्यासः ।
"वर्षाणि विंशतिर्यस्य भूर्भुक्ता तु परैरिह ।
सति राज्ञि समर्थस्य तस्य सेह न सिध्यति ॥"
समर्थस्य बालत्वादिदोषरहितस्य । धनस्य दश-वर्षाणि वा स्वत्वहानिः । तथा च मनुनारदौ ।
"यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥"
यत्किञ्चित् धनजातं समक्षमेव पीडादिव्यति-रेकेण परैर्दश वर्षाणि भुज्यमानं स्वामी तूष्णीं प्रेक्षते मा भुज्यतामिति न प्रतिषेधति स्वामी तल्लब्धुं योग्यो भवति तत्र तस्य स्वाम्यं नश्यती-त्यर्थः । गौतमः । अजडापौगण्डधनं दशवर्ष-भुक्तं परैः सन्निधौ भोक्तुः इति । जडो विकले-न्द्रियः पौगण्डः पूर्णोऽप्राप्तव्यवहारक्षमः कनीयो यस्य सः । तदाह नारदः ।
"बाल आषोडशाद्वर्षात् पौगण्डश्चापि शब्द्यते ॥"
अयापौगण्डः प्रकीर्त्तित इति कुल्लूकभट्टेन लिखितम् । तत्पाठेऽपि अपौगण्डस्तु पौगण्डः इति विकल्पबोधादविरुद्धः । तत्कालप्रत्यक्ष-व्यवहारादिवचनाद्विंशतिवर्षप्रवर्षादिकालेभोग एव स्वत्वं जनयति । यथा । कालप्राप्तिवशेन बीजमङ्कुरं जनयति तरवश्च कुसुममिति कालेन व्यापारितत्वेऽपि प्राक्कालीन-भोगात् स्वाम्यमस्य भवति । यथा जयेन राज्ञः परराज्यमिति । एवमेव श्रीकरवाच-स्पतिश्लोकभवदेवभट्टशूलपाणिकुल्लूकभट्टचक्र-वर्त्तिमिश्रनव्यवर्द्धमानोपाध्यायप्रभृतयः अभ-

हारोऽपि तादृगेव। एतद्दिक्षतवचनान्यथा व्याख्यातानि ॥ ० ॥ तथोपेक्षया अवस्थानं शङ्क्या च अवमाह नारदः ।

"भुज्यमानान् परैरर्थान् यः स्वान्मोहादुपेक्षते ।
समक्षं जीवतोऽप्यस्य तान् भुक्तिः कुरुते वशे ॥"

यत्क्रमाह बृहस्पतिः ।

"स्थावरं सिद्धिमाप्नोति भुक्त्वा स्वामिनुपेक्षया ।"

उपेक्षया अमया तत्कारणञ्च स्वामिनः सुधीज्ञत्वमशक्तत्वयासुत्वादि । एवञ्च विंशतिवर्षात् पूर्वं ज्ञातिग्राम्यकथैवापाजनादेरत्यवनय एव स्वत्वम् । एवं दशवर्षात् पूर्वं ज्ञातिपाल्यदीर्घनवासनादेरन्यमदृष्टादावेव स्वत्वं तत्तन्नाशपरन्तु भूमौ सवादिधनेऽपि स्वत्वमिति । पूर्वं तत्तन्नाशकभोगे तु चौर्यदोषो भवत्येव । भोगे तु स्वत्वानिमाध्यादीनां व्यावर्त्तयति ॥ ० ॥ प्रसक्तोऽप्यत्र एवमभिधाय याज्ञवल्क्यः ।

"आधिसीमोपनिक्षेपजडबालधनैर्विना ।
तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरिह ॥"

आधिर्बन्धकद्रव्यम् । उपनिक्षेपस्तु "वासनस्थमनाख्याय समुद्रं यन्निधीयते" इति नारदोक्तः । वासनं निक्षेपाधारभूतं सम्पुटादिकम् । समुद्रं मुद्रादियुतम् । जडो बुद्धिविकलः । बालः अप्राप्तषोडशवर्षः । उपनिधिः प्रीत्या भोगार्थं अर्पितः । तत्र आध्यादिभिर्धनैर्जडादिधनैश्च विनान्यानि यानि तत्समभोगकाले स्वामिनो नश्यन्ति एतानि तु स्वामिनो न नश्यन्ति न वा भोक्तुर्भवन्ति । मिताक्षरायां स्मृतिः ।

"द्वारमार्गक्रियाभोगजलवाहादिषु क्रिया ।
भुक्तिरेव तु गुर्वी स्यान्न दिव्यं न च साक्षिणः ॥"

याज्ञवल्क्यः ।

"आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् ।
आगमः कारणं तत्र भुक्तिः स्तोकापि यत्र न ॥
आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥
योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विना कृता ॥"

भूम्यादावागमः पूर्वपुरुषक्रमागतभोगाद्बलवान् अतः क्रमागतभोग आगमाद्बलवान् । तथा च बृहस्पतिः ।

"अनुमानाद्गुरुः साक्षी साक्षिभ्यो लिखितं गुरु ।
अव्याहता त्रिपुरुषी भुक्तिरेभ्यो गरीयसी ॥"

त्रिपुरुषभोगमाह व्यासः ।

"प्रपितामहेन यद्भुक्तं तत्पुत्रेण विना च तम् ।
तौ विना यस्य पिता च तस्य भोगस्त्रिपूरुषः ॥
पिता पितामहो यस्य जीवेच्च प्रपितामहः ।
त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपूरुषः ॥"

आगमोऽपि बलवान् भवति यत्र स्तोकापि भुक्तिर्नास्ति । तथा च नारदः ।

"विद्यमानेऽपि लिखिते जीवत्स्वपि च साक्षिषु ।
विशेषतः स्थावराणां यन्न भुक्तं न तत्स्थिरम् ॥"

इति दीपकलिका ।

यत्र वादिनौ स्वस्वागमप्रवृत्तौ आगमयोश्च पूर्वापरभावो नास्ति तत्र यस्य भुक्तिस्तस्यागमो बलीयान् न अन्यस्येत्यर्थः इति मिताक्षरा ॥ अर्थाद्द्वयोरागमयोः पौर्वापर्यनिश्चयश्चेत् ।

"सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया ।
आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥"

इति याज्ञवल्क्यवचनाविरोधः ।

आगमस्त्विति आ सम्यक् गम्यते प्राप्यते स्वीक्रियते येन स आगमः क्रयादिरिति व्यवहारमातृका । आगमः दानक्रयादिकमिति दीपकलिका । आगमो यथोपार्जनोपायः क्रयादिरिति मैथिलाः । तथाप्येवाभियुक्तस्तत्कृततामुद्धरेत् तत्पुत्रपौत्रौ नागममुद्धरेतां किन्तु भुक्तिरेव । तत्र प्रमाणं विशेषयति बृहस्पतिः ।

"आहर्त्ता शोधयेत् भुक्तिमागमञ्चापि संसदि ।
तत्सुतो भुक्तिमेवैकां पौत्रादिषु न किञ्चन ॥"

इदं शूलपाणिकृतं तत्पुत्रादिर्न किञ्चनेति मैथिलकृतम् । आहर्त्ता अर्जनकर्त्ता अत्र पुत्रस्य भुक्तिशोधनमात्रम् ॥ ० ॥ भुक्तिशोधनमाहतुर्व्यासकात्यायनौ ।

"आगमो दीर्घकालश्च निश्छिद्रोऽन्यरवोज्झितः ।
प्रत्यर्थिसन्निधानश्च भोगः पञ्चाङ्ग उच्यते ॥"

इत्यत्र प्रमाणत्वेन । आगमः क्रयादियुक्तः । एष च भूमिविषयकविंशतिवर्षधनविषयकदशवर्षाभ्यूनकालभोगपरः । योऽभियुक्त इत्यादि यो भोगे क्रियमाणे परेणाभियुक्तः सन् परेतो मृतः स्वागमामसमुद्धृतवान् तदा तत्पुत्रादिरागममुद्धरेत् । तथा च नारदः ।

"अनागतविवादस्य प्रेतस्य व्यवहारिणः ।
पुत्रेण सोऽर्थः संशोध्यो न तु भोगो निवर्त्तयेत् ॥"

विवादे सति प्रेतः । भोगः केवलभोगः । तथा च स एव । आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा इति एव सविवादभोगः वर्षान्तरपरः । तथाविधभोगस्यागमं विनापि प्रामाण्यात् । तथा व्यासः ।

"वर्षाणि विंशतिं भुक्ता स्वामिना व्याहता सती ।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा तु द्विपौरुषी ।
त्रिपौरुषी तु त्रिगुणा न तत्रान्विष्य आगमः ॥"

एतद्वचनमपरभोगविषयकमिति अस्वपविंशतिवर्षाभोगविषयकवचनेनाविरोधः । एतादृक् स्मृत्युक्तकाल एव । कात्यायनः ।

"स्मार्त्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते ।
अस्मार्त्ते आगमाभावात् क्रमात्त्रिपुरुषागता ॥"

शतिवर्षैकपुरुषभुक्तौ त्रिपुरुषभुक्तिरपदेश्यस्य वत्समाह न तस्येत्यादि । अतएव नारदः ।

"अन्यायेन तु यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः ।
न तत् शक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतम् ॥"

अन्यायेनैवास्वागममिति शूलपाणिधृतपाठः । तदर्थः । पिता अत्र पितरमारभ्य त्रिभिरित्यर्थः । मनुः ।

"अनागमन्तु यो भुङ्क्ते बहून्यब्दशतानि च ।
चौरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः ॥"

इति तस्य वचनं दण्डविधायकं न तत्स्वार्थपर धर्मशास्त्रविरोधात् । तदाह स एव ।

"यत्र विप्रतिपत्तिः स्यात् धर्मशास्त्रार्थशास्त्रयोः ।
अर्थशास्त्रार्थमुत्सृज्य धर्मशास्त्रार्थमाचरेत् ॥"

एवमेव शूलपाणिव्याख्यायाः । वस्तुतस्तु अनागममिति दण्डविधायकवचनं शोधनरूपधनपरम् ।

"शोधनश्च नृपेन्द्राणां न कदाचन जीर्य्यति ।
अनागमं भुज्यमानमपि वर्षशतैरपि ॥"

इति कात्यायनवचनात्तदैकवाक्यत्वात् । तत्र विप्रतिपत्तिः स्यादिति वचनस्याप्येतदुदाहरणम् । यत्रैकस्य जयेऽधर्मभागी मित्रस्येतरस्य जयेऽधर्मभागी धर्मलाभश्च ।

"हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ।
अतो यतेत तत्प्राप्ताविति वेदविदां मतम् ॥"

इति याज्ञवल्क्योक्तार्थशास्त्रार्थमुत्सृज्य लोभलोभविवर्ज्जित इति धर्मशास्त्रार्थमवलम्ब्य व्यवहारं पश्येत् । अतएव सभ्येनावश्यवक्तव्यं धर्मार्थसहितं वचः । इति कात्यायनोक्तम् । भवदेवभट्टास्तु अनागमं प्रतिवादिनोऽसन्निधाने पुरुषैकदशभोगाभिप्रायम् । त्रैपुरुषभोगस्य तत्रैव प्रमाणत्वादित्याहुः ॥

अथ भुक्तिव्यपवादः ।

बृहस्पतिः ।

"भुक्तिस्त्रैपुरुषी सिध्येदपरेषां न संशयः ।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ॥
अस्वामिना च यद्भुक्तं गृहक्षेत्रापणादिकम् ।
सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते ॥
विवाह्यश्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैव च ।
सुदीर्घेणापि कालेन तेषां तन्नु न सिध्यति ॥"

व्यापको विक्रयस्थानं विवाह्यो जामाता ॥ ० ॥

अथ युक्तिः ।

नारदः ।

"उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः ।
केशाकेशि गृहीतश्च युगपत् पारदारिकः ॥
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः ।
तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्त्तितः ॥
प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः ।
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् ॥"

प्रत्यक्षचिह्नैः रुधिरक्षतादिभिः । पारुष्ये वाक्पारुष्ये । एवं । लोप्त्रहस्तश्च चौर इति । नारदः ।

"अभीक्ष्णं दृश्यमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं समाचरेत् ॥"

यदा वाचिकेनाधमर्णिकस्त्रिचतुःपञ्चकृत्वो वा त्वं मे धनं धारयसीति पुनः पुनर्दृश्यमानोऽपि न तद्वाक्यं प्रतिहन्ति तदोत्तरकालमनेनाभ्युपगतोऽयमर्थ इत्यवधार्य्य तमर्थमविक्रम्य दापयेदित्यर्थः ॥ ० ॥

अथ शपथः ।

नारदः ।
"युक्तिष्वप्यवसन्नासु शपथैरेनमर्द्दयेत् ।
अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः ॥"
एनं विचार्य्यमाणमर्थं अर्द्दयेत् पीडयेन्निर्णये-दित्यर्थः । अर्थस्य विवादास्पदस्य बलं बहुत्व-भावः कालस्य च बलं पुण्यापुण्यत्वं तदपेक्षं यथा स्यादित्यर्थः । भूदूर्वाकरणस्य पुत्रादि-शिरःस्पर्शस्य चाग्ने दर्शनीयत्वात् । अत्र मयै-तत् कृतं न वेति प्रतिज्ञातुर्भार्य्यायाः जये वा हस्तं प्रक्षिपेत् । इतःपर्य्यन्ते मम सुकृतं नश्येदिति वा ब्रूयात् । न त्वग्निपरीक्षां जल-परीक्षां वा कुर्य्यात् इत्यभिप्रायवर्णनं युक्तं तस्या महाभियोगविषयकत्वेन शपथसमभिव्याहारा-नर्हत्वात् । सुकृतादिभिरित्यादिना दूर्वादिग्रहा-दुपग्रहः । तथा च विष्णुः ।
"सर्व्वमहापातकेषु कृत्यं सर्वं प्रकल्पयेत् ।"
तत्र सहस्रार्द्धे शूद्रं दूर्व्वाकरं ग्राहयेत् । द्विसहस्रार्द्धे तिलकरं त्रिसहस्रार्द्धे रजतकरं चतुःसहस्रार्द्धे सुवर्णकरं पञ्चसहस्रार्द्धे सीतो-द्धृतमृत्तिकाकरं सुवर्णार्द्धे कोषो देयः शूद्रस्य यथासम्भवं विहिता क्रिया तथा द्विगुणेऽर्थे राजन्यस्य त्रिगुणेऽर्थे वैश्यस्य चतुर्गुणेऽर्थे ब्राह्मणस्येति । सहस्रं काञ्चनरजिका तत्-सङ्ख्याकूणे सहस्रार्द्धे । एवमन्यत्र । मनुः ।
"सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्व्वैस्तु पातकैः ।
पुत्रदारस्य वाप्येवं शिरांसि स्पर्शयेत् पृथक् ॥"
सत्येनेति मयैतत् कृतं न कृतं वेति प्रतिज्ञा-तुर्मम सत्यमिति वक्तव्यम् । तथैव क्षत्रियेण वाहनायुधं स्प्रष्टव्यम् । तथैव वैश्येन गोबीज-काञ्चनानामन्यतमं स्प्रष्टव्यम् । शूद्रेण तु पूर्व्वोक्तं सर्व्वमेव स्प्रष्टव्यं तेषां तथाकरणमात्राणां पातक-हेतुत्वात् पातकशब्देन निर्द्देशः । एवमुपयो-ऽपीयम् ॥ * ॥ दैवक्रियाविषयमाह नारदः ।
"अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे ।
न्यासापहरणे चैव दिव्या सम्भवति क्रिया ॥"
बृहस्पतिः ।
"देवब्राह्मणपादांश्च पुत्रदारशिरांसि च ।
इति तु शपथाः प्रोक्ता मनुना स्वल्पकारणे ।
साहसेष्वभिशापे च दिव्यानि तु विशोधनम् ॥"
अत्र शपथदिव्ययोः पृथक्प्रतीतिः । शपथे न दिव्यधर्म्माः किन्तु वेदी कर्त्तव्या तत्र शौचार्थं स्नानाचमनादिमात्रं कार्य्यम् । दिव्यानि तु दिव्यत्वेन कथितानि नाम लिखितानि । अस्ता-भियुक्तेन शपथः कर्त्तव्य इत्युक्तम् ॥ * ॥ उभ-येच्छयाभियोक्तापीत्याह नारदः ।
"अभियोक्ता शिरोवर्त्ती सर्व्वत्रैव प्रकीर्त्तितः ।
इच्छयान्यतरः कुर्य्यादितरो वर्त्तयेच्छिरः ॥"
इतरः शपथकर्तृभिन्नः । तथा कात्यायनः ।
"आचतुर्द्दशकादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः ॥"
व्यसनमापत् । घोरमतिपीडाकरम् । तथा च कोशाधिकारे यस्य पश्येद्द्विसप्ताहात् विष्णुः ।
"रोगोऽग्निर्ज्ञातिमरणं राजातङ्कमथापि
वा ।
तमशुद्धं विजानीयात् तथा शुद्धं विपर्य्ययात् ॥"
कात्यायनः ।
"तत्रैकस्य च यस्य स्यात् जनस्य यदि पश्यति ।
रोगोऽग्निर्ज्ञातिमरणमृणं दद्यात् दमञ्च सः ॥
ज्वरातिसारविस्फोटगात्रास्थिपरिपीडनम् ।
नेत्ररुगगलरोगश्च तथोन्मादः प्रजायते ।
शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणाम् ॥"
तत्रैकस्येति न तु देशव्यापकमरकादिः । मनुः ।
"न वृथा शपथं कुर्य्यात् स्वल्पेऽप्यर्थे नरो बुधः ।
वृथा हि शपथं कुर्व्वन् प्रेत्य चेह च नश्यति ॥
कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने ।
ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥"
कामिनीष्विति रहसि कामिनीकर्णोत्पार्थं वृथा-शपथे एवं विवाहसिद्ध्यर्थं गोग्रासार्थं आवश्यक-होमेन्धनार्थं ब्राह्मणरक्षार्थमङ्गीकृतधनादौ ।
यमः ।
"वृथा तु शपथं कृत्वा कीटस्य सर्षपं युतम् ।
अनृतेन च युज्येत यथेन च तथा नरः ।
तस्मात् शपथं कुर्य्यादतो मिथ्याविवर्जितम् ॥"
कीटस्येति प्राणिमात्रोपलक्षणं तद्वधपापेन वृथाशपथकर्त्ता युज्यत इत्यर्थः ।

अथ निर्णयः ।

तत्र नारदः ।
"यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी
भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥
स्वयमभ्युपपन्नोऽपि स्वचर्य्यावसितोऽपि सन् ।
क्रियावसन्नोऽप्यर्हेत परं सभ्यावधारणम् ।
सभ्यैरवधृतः पश्चात् न शाध्यः शास्त्रमात्रतः ॥"
यस्य वादिनः प्रतिवादिनो वा साक्षिण इत्युप-लक्षणम् । साक्षिलिखितभुक्तिशपथानां मध्ये-ऽन्यतमप्रमाणं यस्य प्रतिज्ञायाः सत्यप्रति-पादकं स एव जयी अन्यथा पराजित इति प्रत्येतव्यम् । स्वयमभ्युपपन्नः आत्मनैवाङ्गीकृत-पराजयः स्वचर्य्यावसितः कम्पस्वेदवैवर्ण्या-दिना पराजितत्वेनावधृतः । क्रियावसन्नः साक्ष्यादिना प्राप्तपराजयः । परमनन्तरं सभ्या-वधारणमर्हेत सभासदां मिलितानामयं परा-जित इति निर्णयमर्हेत । शास्त्रेण न शास्त्र-विधिना शास्यः ॥ * ॥ निर्णयस्य फलमाह बृहस्पतिः ।
"प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।
जयपत्रस्य चादानात् जयी लोके निगद्यते ॥"
जयपत्रस्य लिखनप्रकारमाह स एव ।
"यद्वृत्तं व्यवहारेषु पूर्व्वपक्षोत्तरादिकम् ।
क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥
पूर्व्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः ।
प्रदद्याज्जयिने पत्रं जयपत्रं तदुच्यते ॥"
कात्यायनः ।
"अर्थिप्रत्यर्थिवाक्यानि प्रतिसाक्षिवचस्तथा ।
निर्णयश्च तथा तस्य यथा चावधृतं स्वयम् ॥
एतद्यथाक्षरं लेख्यं यथापूर्व्वं निवेशयेत् ।
सभासदश्च ये तत्र धर्म्मशास्त्रविदस्तथा ॥"
ततश्च भाषोत्तरे क्रिया च प्रमत्ताद्यादिकं निर्णयो जयपराजयावधारणं निर्णयकालाव-स्थितसभ्यसाक्ष्यादिकं सर्व्वं लेखनीयं निरू-पणस्य सम्यक्त्वप्रदर्शनार्थम् । तथाहि भाषो-त्तरविज्ञानं दैवन्तरेण पुनर्न्यायप्रसञ्जनान-विधानार्थं नहि न मया नीतमिति मिथ्योत्तरेण पराजितस्य पुनः परिशोधितं मयेति प्रत्यव-स्थानं सम्भवति । प्रमाणलिखनन्तु पुनः प्रमा-णान्तरेण न्यायनिषेधार्थम् । तदाह कात्या-यनः ।
"क्रिया बलवती मुक्ता दुर्बला योऽवलम्बते ।
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियाम् ॥
निर्णीते व्यवहारे तु प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो वापि पूर्व्वमावेदितं न चेत् ॥
यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः ।
निर्णीतव्यवहाराणां प्रमाणमफलन्तथा ॥"
निर्णयोत्तरकृत्यमाह मनुः ।
"अर्थेऽपव्ययमानन्तु कारणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशञ्च शक्तितः ॥"
अपव्ययमान अपलपन्तं कारणेन साक्ष्यादि-प्रमाणेन । याज्ञवल्क्यः ।
"ज्ञातापराधं दैवञ्च ज्ञात्वा बलमथापि वा ।
वधः कर्म्म च वित्तञ्च दण्डं दण्ड्येषु दापयेत् ॥"
मनुः ।
"तीरितं चानुशिष्टञ्च यत्र क्वचन यत्नतः ।
कृतं तद्धर्म्मतो विद्यात् न तद् भूयो निव-
र्त्तयेत् ॥"
अनुशिष्टं साक्ष्यादिनिर्णीतं अतएव तीरितं प्राड्विवाकादिभिः समापितम् । तद्विवादपदं पुनर्न निवर्त्तयेदित्यर्थः । अत्र तीरितानुशिष्ट-योरप्यधर्म्मकृतत्वं प्रत्यवतिष्ठते । तत्र पुनर्न्याय-दर्शनमाह नारदः ।
"तीरितं चानुशिष्टञ्च यो मन्येत विधर्म्मतः ।
द्विगुणं दण्डमादाय तत् कार्य्यं पुनरुद्धरेत् ॥"
असद्विचारे तु विचारान्तरमाह स एव ।
"असाक्षिकन्तु यद्दृष्टं विमार्गेण च तीरितम् ।
असम्पन्नमतैर्दृष्टं पुनर्दर्शनमर्हति ॥"
असाक्षिकमित्यप्रमाणकोपलक्षणम् । याज्ञ-वल्क्यः ।
"दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान् नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥
साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः ।
स्वचर्य्यावसितानान्तु नास्ति पौनर्भवो विधिः ॥"
साक्षिवचनेन सभ्यावधारणेन च प्राप्तप-राजयानां पुनर्न्यायदर्शनम् । कम्पादिना निज-भावादिना प्राप्तपराजयानान्तु नास्ति पुनर्न्यायः । इत्युक्तमिदमपि ।

"प्रमादमत्तोन्मत्तार्त्तव्यसनाभियुतेन च ।
हीनस्य मनुते वादो न बालाविजितस्य च ॥"
मनुः ।
"बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम् ।
सर्व्वान् बलकृतानर्थानकृतान् मनुरब्रवीत् ॥"
याज्ञवल्क्यः ।
"बलोपाधिविनिर्वृत्तान् व्यवहारान्निवर्त्तयेत् ।
स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा ॥
मत्तोन्मत्तार्त्तव्यसनिबालभीतप्रयोजितः ।
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति ॥"
उपाधिश्छलमिति शूलपाणिः । उपाधिर्भयादिरिति विज्ञानेश्वरः । सन्ति भीतादियोजित इत्युक्तवचनेन पौनरुक्त्यम् । व्यसनीति व्यसनिभिः । मत्तो मद्यादिना । उन्मत्तो वातादिना । आर्त्तो शूलाद्यार्त्तः । असम्बद्धो वादिनियुक्तव्यतिरिक्त उदासीनः । आदिपदात् स्वतन्त्रदासपुत्रादेर्ग्रहणम् । तथा च नारदः ।
"स्वतन्त्रोऽपि हि यत् कार्य्यं कुर्य्यादप्रकृतिं गतः ।
तदप्यकृतमेवाहुरस्वातन्त्र्यस्य हेतुतः ॥
कामक्रोधाभिभूता वा भयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥
तथा दासकृतं कार्य्यमकृतं परिचक्षते
अन्यत्र स्वामिसन्देशान्न दासः प्रभुरात्मनः ॥
पुत्त्रेण च कृतं कार्य्यं यत् स्यादस्वच्छन्दतः पितुः ।
तदप्यकृतमेवाहुर्दासपुत्त्रौ च तौ समौ ॥"
एतच्च कुटुम्बभरणातिरिक्तविषयम् ।
"कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं समाचरेत् ।
स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत् ॥"
इति मनुवचनात् कुटुम्बभरणीयम् । अध्यधीनः परतन्त्रः पुत्त्रदासादिः । व्यवहारकृतादिकं ज्यायान् स्वतन्त्रः न विचालयेत् अनुमन्येत । तथा च नारदः ।
"स्वातन्त्र्यन्तु स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम् ।
अस्वतन्त्राः प्रजाः सर्व्वाः स्वतन्त्रः पृथिवीपतिः ॥
अस्वतन्त्रः स्मृतः शिष्य आचार्य्ये तु स्वतन्त्रता ।
अस्वतन्त्राः स्त्रियः सर्व्वाः पुत्त्रा दासाः परिग्रहाः ॥
स्वतन्त्रस्तत्र तु गृही यस्य यत् स्यात् क्रमागतम् ।
गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः ॥
बाल आषोडशाद्वर्षात् पौगण्डोऽपि निगद्यते ।
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ॥
जीवतोर्न स्वतन्त्रः स्याज्जरयापि समन्वितः ।
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ।
अभावे बीजिनो माता तदभावे च पूर्व्वजः ॥"
परिग्रहा अनुजीविप्रभृतयः । तथा च वृहस्पतिः ।
"पितृव्यभ्रातृपुत्त्रस्त्रीदासशिष्यानुजीविभिः ।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति ॥"
कात्यायनः ।
"कुटुम्बार्थमशक्तेन गृहीतं व्याधितेन वा ।
उपप्लवनिमित्तञ्च विद्यादापत्कृतन्तु तत् ॥
कन्यावैवाहिकञ्चैव प्रेतकार्य्ये च यत् कृतम् ।
एतत् सर्व्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः ॥"
प्रभोरिति कर्त्तरि षष्ठी तेन प्रभुणा दातव्यमिति रत्नाकरः । वृहस्पतिः ।
"यः स्वामिना नियुक्तोऽपि धनाय व्ययपालने ।
कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः ॥
प्रमाणं तत् कृतं सर्व्वं लाभालाभव्ययोदयम् ।
स्वदेशे वा विदेशे वा स्वामी तन्न विसंवदेत् ॥"
इति श्रीरघुनन्दनभट्टाचार्य्यविरचितं व्यवहारतत्त्वं समाप्तम् । ● ।

व्यवहारज्ञः, पुं, ( व्यवहारं जानातीति । ज्ञा + कः ।) प्राप्तव्यवहारः । (सावालक इति भाषा ।) स तु षोडशवर्षानन्तरं भवति । यथा,—
"बाल आषोडशाद्वर्षात् पौगण्डोऽपि निगद्यते ।
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ॥"
इति व्यवहारतत्त्वधृतनारदवचनम् ॥
व्यवहारज्ञातरि, त्रि ॥

व्यवहारदर्शनं, क्ली, (व्यवहारस्य दर्शनम् ।) न्यायदर्शनम् । विचारकरणम् । इति मिताक्षरा ॥

व्यवहारपदं, क्ली, ( व्यवहारस्य पदम् । ) वादिना राज्ञि निवेदनम् । ( नालिश इति भाषा । ) यथा, याज्ञवल्क्यः ।
"स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥"
स्मृतिसदाचारविभूतेन मार्गेण परैर्धर्षितः परिभूतो वा पीडितश्चेद्राजनि निवेदयेत् तद्व्यवहारदर्शनस्थानम् । चेदित्यत्र यदिति केचित् । आवेदयति चेदित्यनेन स्वयं विवादोत्थापनं राज्ञा न कर्त्तव्यमिति शूलपाणिमहामहोपाध्यायाः । राज्ञीति व्यवहारप्रदर्शकपरं तथा च वृहस्पतिः ।
"राजा कार्य्याणि संपश्येत् प्राड्विवाकोऽथ वा द्विजः ॥"
कात्यायनः ।
"सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
स्वयं च राजा निर्णयात् तेषां जयपराजयौ ॥
यदा कार्य्यवशाद्राजा न पश्येत् कार्य्यनिर्णयम् ।
तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं वेदपारगम् ।
यदि विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्म्मशास्त्रज्ञं शूद्रं यत्नेन वर्ज्जयेत् ॥"
स विनीतवेशः । मनुः ।
"जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः ।
धर्म्मप्रवक्ता नृपतेर्न तु शूद्रः कदाचन ॥"
व्यासः ।
"द्विजान् विहाय यः पश्येत् कार्य्याणि वृषलैः सह ।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोषश्च नश्यति ॥
दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः ।
दुग्धां गां कः परित्यज्य दुहेच्छीलवतीं खरीम् ॥"
इति व्यवहारतत्त्वम् ॥

व्यवहारपादः, पुं, ( व्यवहारस्य पादः । ) व्यवहारांशः । यथा । अथ व्यवहारपादनिर्णयः । तत्र वृहस्पतिः ।
"पूर्व्वपक्षः स्मृतः पादो द्विपादश्चोत्तरः स्मृतः ।
क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृतः ॥"
इति व्यवहारतत्त्वम् ॥
अपि च ।
"परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु ।
वाक्यान्न्यायाद्व्यवस्थानं व्यवहार उदाहृतः ॥
भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः ।
आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते ॥"
इति मिताक्षरा ॥

व्यवहारमातृका, ( व्यवहारस्य मातृकेव । ) व्यवहारोपयोगिक्रिया । तद्यथा । व्यवहारदर्शनम् १ व्यवहारलक्षणम् २ सभासदः ३ प्राड्विवाकादिः ४ व्यवहारविषयः ५ राज्ञः कार्य्यानुत्पादकत्वम् ६ कार्य्यार्थिनि प्रश्नः ७ आह्वानानाह्वाने ८ आसेधः ९ प्रत्यर्थ्यागते लेख्यादिकर्त्तव्यता १० पक्षविधौ दोषः ११ शोध्यं लेख्यं १२ पक्षाभासाः १३ अनादेयाः १४ आदेयः १५ नियुक्तजयपराजयौ वादिजयपराजयौ १६ शोधितलेख्यनिवेशनम् १७ उत्तराधिरोपणम् १८ शोधिते पक्षारूढे उत्तरकर्त्तव्यम् १९ उत्तरलक्षणम् २० सत्योत्तरलक्षणम् २१ मिथ्योत्तरलक्षणम् २२ प्रत्यवस्कन्दनोत्तरम् २३ प्राङ्न्यायोत्तरम् २४ उत्तराभासः २५ सङ्करानुत्तरम् २६ प्रत्यर्थिक्रियानिर्द्देशः २७ उत्तरे पक्षेऽभिनिविष्टे इति साधननिर्द्देशः २८ तत्सिद्धौ सिद्धिः २९ चतुष्पाद्व्यवहारः ३० । इति मिताक्षरायां व्यवहारमातृका ॥

व्यवहारमार्गः, ( व्यवहारस्य मार्गः । ) व्यवहारविषयः । व्यवहारपदम् । इति मिताक्षरा ॥

व्यवहारविधिः, पुं, ( व्यवहारस्य विधिः । ) व्यवहारस्य विधानम् । धर्म्मशास्त्रम् । इति मिताक्षरा ॥

व्यवहारविषयः, पुं, ( व्यवहारस्य विषयः ।) व्यवहारपदम् । तत्तु अष्टादशविधम् । यथा । ऋणादानम् १ निक्षेपः २ अस्वामिविक्रयः ३ सम्भूयसमुत्थानम् ४ दत्तस्यानपकर्म्म ५ वेतनादानम् ६ संविदो व्यतिक्रमः ७ क्रयविक्रयानुशयः ८ स्वामिपालयोर्विवादः ९ सीमाविवादधर्म्मः १० वाक्पारुष्यम् ११ दण्डपारुष्यम् १२ स्तेयम् १३ साहसम् १४ स्त्रीसंग्रहणम् १५ स्त्रीपुंधर्म्मः १६ विभागः १७ द्यूतम् १८ । इति मानवे ८ अध्यायः ॥

व्यवहारस्थानं, क्ली, ( व्यवहारस्य स्थानम् । ) व्यवहारपदम् । व्यवहारविषयः । इति मिताक्षरा ॥

हिंसार्थानां प्रयोगे च कृति कर्म्मणि कर्त्तरि ।
न कर्तृकर्म्मणोः षष्ठी निष्ठादौ प्रतिपादिता ।
द्विविधं प्रातिपदिकं प्रातिपदिकमव्ययम् ॥ * ॥
सुबादिभ्यस्तिङो जः स्यात्तद्धाता दश वै स्मृताः ।
तिप्तसन्ति प्रथमो मध्यः सिप्थस्थोत्तमपूरुषः ॥
मिप्वसमः परस्मै तु पदानामात्मनेपदम् ।
तातामन्ता प्रथमो मध्यस्थासाथाध्वमुत्तमः ॥
आदेशा इड्वहिमहन्ता भविताद्यपि धातुतः ।
नाम्नि प्रयुज्यमानेऽपि प्रथमः पुरुषो भवेत् ॥
मध्यमो युष्मदि प्रोक्त उत्तमः पुरुषोऽस्मदि ।
भूवाद्या धातवः प्रोक्ताः सनाद्यन्तास्तु धातवः ॥
लडीरितो वर्त्तमाने लेडातीते च धातुतः ।
भूतानद्यतने लङ् च लोडाशिषि च धातुतः ॥
विध्यादावेवानुमतौ लिङ्विधिर्मन्त्रके भवेत् ।
निमन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु तथाशिषि ।
लिङ्लिटौ परोक्षे स्याल्लङ् लुङ् लट् लङ् भविष्यति ।
स्यादद्यतने लुट् च भविष्यति च धातुतः ॥
धातोर्लिङ्क्रियाभिपत्तौ लिङर्थे लोट् प्रकीर्त्तितः ।
कृतस्त्वव्यपि वर्त्तन्ते भावे कर्म्मणि कर्त्तरि ।
घञ्घ्यणतव्यतृच्यदनीयक्क्तक्तवतादयः ॥”
इति गारुडे कुमारव्याकरणे २०९ अध्यायः ॥
कुमार उवाच ।
“सिद्धोदाहरणं वक्ष्ये संहितादि परस्परम् ।
विप्रार्थं वासतां चीदं कुसमं स्यात् पितृषभः ॥
होतृकारो विष्णुरयं लाङ्गलीषा मनीषया ।
गङ्गोदकं तवल्कार ऋणार्णं प्रार्णमित्यपि ॥
शीतार्त्तश्च तवल्कारः सैन्धवौकार इत्यपि ।
मध्वासनश्च पित्रर्थं नावयं नाव्ययोजयेत् ॥
नायको लवणं नावक्ष वने तेन ईश्वराः ।
इन्द्रीहरमथोऽत्र यजुरेहि षट् इमौ ॥
अमी अश्वाः षड़श्वीति मधुराद्युत्सृजानि च ।
तच्छ्रेतस्तु नातीति तच्छलं तच्छ्मशानकम् ।
सुगणश्च पचन्नत्र भवांश्छादयतीति दिक् ।
भवांष्ठक्कुरकश्चैव भवांस्तरति संस्थितम् ॥
भवाँल्लिखति ताञ्छेते भवाञ्छूरोऽप्यरीडशम् ।
भवाञ्चीनं त्वमरवि त्वङ्करोषि सदार्च्चनम् ।
कश्चरेत् कष्टकारेण कः कुर्य्यात् कः खले स्थितः ।
कः पेटे चैव कः षण्डः कोऽर्थः को याति गौरवम् ॥
क इहार्थक एवाहुर्देवा आयुक्त भो भज ।
प्रभुर्विष्णुरगति च गीर्पतिश्चैव धूर्पतिः ॥
तस्मात्रैव भवेत् स स्यात् कथमनुगच्छति ।
कुटीच्छाया तथाच्छाया वासवोऽर्थो तथेदृशः ॥
समासाः षट् पुराणे वै सहिताः कर्म्मधारयः ।
द्विगुश्चैवेषो नाम्ना यं तत्पुरुषः स्मृतः ॥
तन्जनश्च तदर्थं च वृकभीतिश्च पत्तनम् ।
आगच्छित्रगवश्चो बहुव्रीहिरथाव्ययौ ॥
भावोऽधिस्त्रि यथोक्त्वं द्वन्द्वो देवर्षिमानवाः ।
सङ्गताः पावकः पैवो मात्रश्च भरतादयः ॥

देवाभिवसिपत्नं शुक्लोद्भवं भुवः पिता ।
ना प्रशास्ता च रा गौश्चौ कृतागश्चाच पुंस्यपि ॥ * ॥
हलन्तावच्चमुङ् वाग्धुङ्कत्वम्यान्यगाविधः ।
आत्मा राजा युवा पन्थाः पूषब्रह्महणौ शशी ॥
विट्वेधा अप्यनडुत् मधुलिट् वाङ्कट् तथा । * ।
वनवार्ष्णेयवस्तूनि अप्यसामायणौ तथा ॥
कर्म्म वर्णिसंपुष्पेव अप्सकलना मधुवर्के । * ।
जाया जरा नदी लक्ष्मीः श्रीः स्त्री भूमिर्वधूरपि ॥
भूः पुनर्भूस्तथा धेनुः स्वसा माता च गौः स्त्रियः ।
वाक् स्रक् द्यौ क्षुत् त्विट् सुधः पामा युवतिः ककुभस्तथा ॥
द्यौर्भूतिः प्रावृषश्चैव सुमन उष्णिहो स्त्रियाम् ।
गुणद्रव्यक्रियायोगात्त्रिलिङ्गाश्च वदामि ते ॥
शुक्लः कीलालपाश्चैव शुचिश्च ग्रामणीः सुधीः ।
पटुः कमलभूः कर्त्ता सुमना वहवः सुगौः ॥
कष्टो नामस्तथा ध्वंसो मधुमथमदीर्घपात् ।
धनार्थौ च सुहृत् सोमौ बागकृत्यादिकस्तथा ॥
सुवर्णौ वहुपान्त्ये वा पैषा त्वमहुवा तथा ॥ * ।
सर्व्वविश्वोभये चोभौ अन्यान्तरेतराणि च ।
त्वत्स्वतरे नेमः समोऽथ सिम इत्यथम् ।
पूर्व्वापरावराश्चैव दक्षिणश्चोत्तराधरौ ॥
अपरश्चान्तरोऽप्येतद्यत्तत्किमदसो इयम् ।
युष्मदस्मत् प्रथमश्चरमाल्पे तथार्द्धके ॥
एकः कतिपयो द्वौ च त्रयः सर्व्वादयस्तथा ॥ * ।
भुविविदिर्पविक्रन्दिधार्थश्च ययतिः स्मृतिः ॥
गोहुर्विधा जुहोतिश्च जहातिश्च दधात्यपि ।
दीव्यति सूयतिर्षिश्च पुष्यतिरहिणोत्यपि ॥
तुटिचालयति सपि वधि गुर्व्वौ सती ततिः ।
शमिः करोति क्रीणाति दृणोतिर्धृति वर्चति ॥
कलोकुरपराश्चैव धानश्च गुणा तथा । * ।
भवत् भवान् भवन्तौ च श्रेयं कर्त्तव्यमेव च ॥
कार्य्यं जनश्च कृत्वा च प्रत्ययाः सुस्तथापरे ।
कुम्भकारो सुराः सन्ति देवविप्रजनाश्च ॥
नरेण कार्य्यं वेदैश्च क्रियते देहि भोजनम् ।
द्विजाय च वरिष्ठाभ्यां मा तेभ्योऽस्तु समागतः ॥
तीर्थात्तथाश्रमाभ्याश्च सद्भ्यः श्वशुरस्य च ।
गन्धर्व्वयोः करयानाश्च ज्ञानं सिद्धमहात्मयोः ॥
श्रावणश्चैव चैत्रेषु नेया यथामति ।
सर्व्वे तिष्ठन्ति सर्व्वके सर्व्वस्मात् सर्व्वतो मतः ॥
सर्व्वेषाञ्चैव सर्व्वस्मिन् विश्वादयस्तथा ।
पूर्व्वः पूर्व्वाश्च पूर्व्वस्मात् पूर्व्वस्मिन् पूर्व्व इत्यलम् ॥
सूत उवाच ।
सुप्तिङन्तं सिद्धरूपं नामनाश्चैव दर्शितम् ।
कात्यायनः कुमारात्तु ज्ञात्वा विस्तरमब्रवीत् ॥”
इति गारुडे कुमारव्याकरणे २१० अध्यायः ॥ * ॥
एतद्भिन्नं अग्निपुराणे कार्त्तिकेयोक्तव्याकरणमस्ति । एवं महेश्वरकृतमाहेश्वरव्याकरणं पाणिनिमुनिकृतपाणिनीयव्याकरणं शर्व्ववर्म्मकृतकलापव्याकरणं क्रमदीश्वरकृतसंक्षिप्तसारव्याकरणं पद्मनाभदत्तकृतसुपद्मव्याकरणं वोपदेवकृतमुग्धबोधव्याकरणं गोस्वामिकृतहरिनामामृतव्याकरणं भट्टोजिदीक्षितकृतसिद्धान्तकौमुदीव्याकरणं अनुभूतस्वरूपाचार्य्यादिकृतसारस्वतादिव्याकरणानि च सन्ति ॥ * ॥ (विस्तारः । यथा, महाभारते । १२ । २५१ । ११ ।
“अवस्थात्मिका बुद्धिर्मनो व्याकरणात्मकम् ॥”)

**व्याकुलः**, त्रि, (विशेषेण आकुलः ।) शोकादिभिरितिकर्त्तव्यतामूढः । तत्पर्य्यायः । विह्वलः २ । इत्यमरः ॥ (यथा, महाभारते । ५ । १७७ । २५ ।
“करोद्य या शोकवती बाष्पव्याकुललोचना ॥”
उपद्रुतः । यथा, भागवते । १ । ३ । २८ ॥
“एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥”)

**व्याकुलात्मा**, [न्] त्रि, (व्याकुलः आत्मा यस्य ।) शोकाभिहतचित्तः । यथा,—
“भो हृष्टाः पर्व्वतस्था बहुकुसुमयुता वायुना घूर्णमाना
रामोऽहं व्याकुलात्मा दशरथतनयः पृच्छति शोकदग्धः ।
बिम्बोष्ठी चारुनेत्रा गजपतिगमना दीर्घकेशी सुमध्या
हा सीता केन नीता मम हृदयगता केन वा कुत्र दृष्टा ॥”
इति महानाटकम् ॥

**व्याकृतिः**, स्त्री, (विशिष्टा आकृतिः ।) भङ्गिः । इति हलायुधः ॥

**व्याकोशः**, त्रि, (व्याकुश्यति प्रस्फुटतीति । वि + आ + कुश + कः ।) विकसितः । इत्यमरटीकायां रामाश्रमः ॥ (यथा, माघे । ४ । ४६ ।
“दोषापि नूनमहिमांशुरसौ किलेति
व्याकोशकोकनदतां दधते नलिन्यः ॥”
भावे घञ् । प्रस्फुटनम् । यथा, मृच्छकटिके । ३ अङ्के ।
“पद्मव्याकोशं भास्करं बालचन्द्रं
वापीविस्तीर्णं स्वस्तिकं पूर्णकुम्भम् ।
तत्कस्मिन् देशे दर्शयाम्यात्मशिल्पं
दृष्ट्वा श्वो यद्विस्मयं यान्ति पौराः ॥”)

**व्याकोचः**, त्रि, (व्याकुञ्चति मुकुलीभावादपिनिःसरतीति । वि + आ + कुच + कः ।) प्रफुल्लः । इत्यमरः ॥ (यथा, महाभारते । ७ । १० । २२ ।
“तं पद्मनिकराकारं पद्मपत्रनिभेक्षणम् ।
व्याकोचपद्माभिमुखो नलो निवराच सायकैः ॥”)

**व्याख्या**, स्त्री, (व्याख्यानमिति । वि + आ + ख्या + “आतश्चोपसर्गे ।” इत्यङ् । ततष्टाप् ।) विवरणम् । इति हलायुधः ॥ (यथा, भागवते । ७ । १३ । ८ ।
“न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून् ।
न व्याख्यामुपयुञ्जीत नारम्भानारभेत् क्वचित् ॥”
ग्रन्थः । यथा, तन्त्रसारे वागीश्वरीप्रकरणे ।
“शुभ्रां स्वच्छविलेपमाल्यवसनां शीतांशुखण्डोज्ज्वलां

व्याख्यासत्पुस्तं सुधाढ्यकलशं विद्यां च हस्ताम्बुजैः ।
बिभ्राणां कमलासनां कुचनतां वाग्देवतां
सस्मिताम्
वन्दे वाग्विभवप्रदां त्रिनयनां सौभाग्यसम्पत्
करीम् ॥")

व्याख्यागम्यं, क्ली, ( व्याख्यया गम्यम् । ) उत्तराभासभेदः । व्याख्यया विवरणेन गम्यते ज्ञायते यत् ॥ यथा,—
"अस्तव्यस्तपदव्यापि निगूढार्थं तथाकुलम् ।
व्याख्यागम्यमथारच्य नोत्तरं शस्यते बुधैः ॥"
इति व्यवहारतत्त्वम् ॥

व्याख्यातः, त्रि, विवृतः कथितः । वि-आङ्पूर्व्वकख्याधातोः क्तप्रत्ययेन निष्पन्नमिदम् ।

व्याघातः, पुं, ( व्याहन्यतेऽनेनेति । वि+आ+हन+घञ् । ) विष्कम्भादिसप्तविंशतियोगान्तर्गतत्रयोदशयोगः । यथा,—
"परित्यज्य त्यजेदेवं शुभकर्म्म ततः परम् ।
आद्यौ पञ्च विष्कम्भे सप्त शूले च नाडिकाः ॥
गण्डव्याघातयोः षट् च नव हर्षणवज्रयोः ।
वैधृतिव्यतिपातौ च समस्तौ परिवर्ज्जयेत् ॥"
इति ज्योतिस्तत्त्वम् ॥*॥

तत्र जातफलम् ।
"व्याघातकर्त्ता च जनो नितान्तं
व्याघातजन्मा मनुजः कठोरः ।
असत्यभाषी क्षमया विहीनो
मन्देक्षणो दीर्घतनुः कृशाङ्गः ॥"
इति कोष्ठीप्रदीपः ॥*॥

अन्तरायः । ( यथा, महाभारते ।१।२।२८८।
"तेन व्याघातमन्त्राणां क्रियमाणमवेक्ष्य च ॥")
प्रहारः । इति मेदिनी ॥ अलङ्कारविशेषः ।
तस्य लक्षणं यथा,—
"यद्यथा साधितं केनाप्यपरेण तदन्यथा ।
तथैव यद्विधीयेत स व्याघात इति स्मृतः ॥"
येनोपायेन यत् एकेन उपकल्पितं तस्यान्येन जिगीषुतया तदुपायकमेव यदन्यथाकरणं स साधितवस्तुव्याहतिहेतुत्वात् व्याघातः ।
उदाहरणम् ।
"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥"
इति काव्यप्रकाशे १० उल्लासः ॥

व्याघ्रः, पुं, ( व्याजिघ्रतीति । वि+आ+घ्रा+कः ।) जन्तुविशेषः । बाघ इति भाषा ॥ (यथा, छान्दोग्ये । ६ । ९ । ३ ।
"त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति ॥") तत्पर्य्यायः ।
शार्दूलः २ द्वीपी ३ । इत्यमरः ॥ पुण्डरीकः ४ पञ्चनखः ५ चित्रकः ६ पृदाकुः ७ । इति जटाधरः ॥ हिंस्रपशुः ८ व्याडः ९ हिंस्रकः १० हिंसारुः ११ श्वापदः १२ । इति शब्दरत्नावली ॥ पञ्चनखः १३ व्यालः १४ गुहाशयः १५ तीक्ष्णदंष्ट्रः १६ भीरुः १७ नखायुधः १८ ।
अस्य मांसगुणाः ।
"शार्दूलसिंहवरमर्क्षतरक्षुमुख्या
येऽन्ये प्रसह्य विनिहत्य भिषन्त्ययन्ते ।
ते कीर्त्तिताः प्रसहनाः पललं तदीय-
मर्शःप्रमेहजठरामयनाशकारि ॥"
इति राजनिर्घण्टः ॥

स तु कश्यपभार्य्यादंष्ट्रापत्यम् । यथा,—
"दंष्ट्रा त्वजनयत् पुत्रान् व्याघ्रसिंहांश्च भामिनी ।
द्वीपिनश्च सुतास्तस्या व्याघ्यादाश्चामिषप्रियाः ॥"
इत्याग्नेये वह्निपुराणे काश्यपीयवंशनामाध्यायः ॥
नरादिशब्दोत्तरस्थः श्रेष्ठार्थवाचकः ॥ ( यथा, महाभारते । १ । १५२ । २९ ।
"किन्नु दुःखतरं शक्यं मया प्राप्तुमतःपरम् ।
योऽहमद्य नरव्याघ्रान् सुप्तान् पश्यामि भूतले ॥")
रक्तैरण्डः । करञ्जः । इति मेदिनी ॥

व्याघ्रदलः, पुं, एरण्डवृक्षः । इति शब्दमाला ॥
राजनिर्घण्टे रक्तैरण्डपर्य्याये व्याघ्रदल इति पाठः ॥

व्याघ्रनखं, क्ली, ( व्याघ्रस्य नखमिव । ) नखीनामगन्धद्रव्यम् । तत्पर्य्यायः । व्याडायुधम् १ करजम् ३ चक्रकारकम् ४ । इत्यमरः ॥ नखाङ्कम् ५ नखी ६ नख्यम् ७ व्याघ्रनखी ८ । इति शब्दरत्नावली ॥ ( यथा, बृहत्संहितायाम् ।७७।६।
"मञ्जिष्ठया व्याघ्रनखेन शुक्त्या
त्वचा सकुष्ठेन रसेन चूर्णः ।
तैलेन युक्तोऽर्कमयूखतप्तः
करोति तच्चम्पकगन्धितैलम् ॥")
तत्पर्य्यायगुणाः ।
"नखं व्याघ्रनखं व्याघ्रायुधं तच्चक्रकारकम् ।
नखं स्वल्पं नखी प्रोक्ता हनुर्हट्टविलासिनी ॥
नखद्वयं ग्रहश्लेष्मवातास्रज्वरकुष्ठहृत् ।
लघूष्णं शुक्रलं वर्ण्यं स्वादु व्रणविषापहम् ।
अलक्ष्मीमुखदौर्गन्ध्यहृत् पाकरसयोः कटुः ॥"
इति भावप्रकाशः ॥
कन्दविशेषः । नखक्षतविशेषः । इति मेदिनी ॥

व्याघ्रनखः, पुं (व्याघ्रस्य नखमिव कण्टकं यस्य ।) स्नुहीवृक्षः । व्यालनखः । इति राजनिर्घण्टः ।
व्याघ्रस्य नखश्च ॥

व्याघ्रनखकं, क्ली, ( व्याघ्रनखमेव । स्वार्थे कन् । ) नखक्षतम् । इति शब्दमाला ॥

व्याघ्रनायकः, पुं, ( व्याघ्रस्य नायक इव । ) शृगालः । इति राजनिर्घण्टः ॥

व्याघ्रपात्, [द्] पुं, ( व्याघ्रस्य पाद इव अग्रिमशाखा यस्य । "पादस्य लोपोऽहस्त्यादिभ्यः ।"५। ४ । १३८ । इत्यलोपः ।) विकङ्कतवृक्षः । इत्यमरः ॥ मुनिविशेषः । इति पुराणम् ॥
व्याघ्रतुल्यचरणे, त्रि । इति मुग्धबोधव्याकरणम् ॥

व्याघ्रपादः, पुं, (व्याघ्रस्य पादा इव मूलानि यस्य ।) विकङ्कतवृक्षः । विकङ्कतवृक्षः । इति राजनिर्घण्टः ॥ (मुनिविशेषः । यथा, महाभारते ।
१३ । १४ । १०९ ।
"पुराकृतयुगे तात ऋषिरासीत् महायशाः ।
व्याघ्रपाद इति ख्यातो वेदवेदाङ्गपारगः ॥")

व्याघ्रपुच्छः, पुं, ( व्याघ्रस्य पुच्छमिव पत्त्रमस्य । ) एरण्डवृक्षः । इत्यमरः ॥ व्याघ्रस्य लाङ्गूलञ्च ॥

व्याघ्राटः, पुं, (व्याघ्र इव अटतीति । अट गतौ + पचाद्यच् । ) भरद्वाजपक्षी । इत्यमरः ॥

व्याघ्रादनी, स्त्री त्रिवृता । इत्यमरः ॥

व्याघ्रास्यः, पुं, ( व्याघ्रस्य आस्यमिव आस्यमस्य ।) बिडालः । इति शब्दचन्द्रिका ॥ व्याघ्रमुखे, क्ली ॥

व्याघ्री, स्त्री, ( व्याघ्र + ङीष् । ) कण्टकारी ।
इत्यमरः ॥ व्याघ्रपत्नी च ॥ ( यथा, रघुः ।
१२ । ३७ ।
"तस्याः परिभवो व्याघ्रामिवावेहि त्वयाहतम् ॥")

व्याजः, पुं, ( अजति यथार्थव्यवहारादपगच्छत्यनेनेति । वि+अज+घञ् । घञि विभाषा नास्ति । ) कपटः । स तु अयथार्थव्यवहारः ।
वचनमात्रफलम् । इति सर्व्वानन्दो मधुश्च ॥
अपदेशः । स कारणान्तरप्रवृत्तः कारणान्तरोद्भावनम् । व्याजोऽन्यरूपाच्छादनम् । यथा ध्यानव्याजमुपेत्य चिन्तयसि कामिति । व्याजोऽयमभिप्रायगोपनफलः । पूर्व्वोक्तस्तु परापकारफलः । इत्ययथार्थव्याजयोर्भेदः । अन्यमुद्दिश्य अन्यप्रतिपादनमिह व्याज इत्यर्थः । यदाह अन्यमुद्दिश्य अन्यार्थमङ्गनमपदेशः । यथा, जलक्रीडामुद्दिश्य जारावलोकनार्थं यातीति । इत्यमरभरतौ ॥

व्याजनिन्दा, स्त्री, (व्याजेन निन्दा ।) कपटकुत्सा ।
अलङ्कारविशेषः । यथा,—
"निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते ॥"
इति चन्द्रालोकः ॥
( उदाहरणं यथा,—
"विधिस्त्रिन्द्यो यस्तेऽप्रागेकमेवाहरच्छिरः ॥")

व्याजस्तुतिः, स्त्री, ( व्याजेन स्तुतिः । व्याजरूपा स्तुतिश्च ।) कपटप्रशंसा । अलङ्कारभेदः । यथा,
"उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः ॥"
इति चन्द्रालोकः ॥
( उदाहरणं यथा,—
"कः स्वर्धुनि ! विवेकस्ते पापिनो नयसे दिवम् ॥")

व्याजोक्तिः, स्त्री, (व्याजेन उक्तिः ।) छलवाक्यम् ।
अलङ्कारविशेषः । यथा,—
"व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् ॥"
इति चन्द्रालोकः ॥
( उदाहरणं यथा,—
"सखि ! पश्य गृहारामपरागैरस्मि धूसरा ॥")

व्याडः, पुं, सर्पः । श्वापदपशुः । इत्यमरः ॥
( यथा, मार्कण्डेये । । ३५ । १० ।

"यो भ्रमवो श्वसो मधो व्याकुः मङ्गलया-
क्रमात् ॥")
वकः । इति शब्दरत्नावली ॥ बकबकः । इति रायमुकुटः ॥

व्याड़ायुधं, क्ली, (व्याड़स्य व्याड़स्यायुधं वज्र-मिव ।) व्याघ्रनखाख्यद्रव्यम् । इत्यमरः ॥

व्याड़िः, पुं, कोषकारमुनिविशेषः । तत्पर्य्यायः । विन्ध्यवासी २ नन्दिनीतनयः ३ । इति हेमचन्द्रः ॥ विन्ध्यस्थः ४ नन्दिनीसुतः ५ । इति त्रिकाण्डशेषः ॥

व्यात्तं, त्रि, (वि + आ + दा + क्तः ।) प्रसारितम् । विवृतम् । यथा,—

"तस्योद्दंष्ट्रं गिरिकन्दराकुल-
व्यात्ताननं तद्धनुभेदभीषणम् ।
दिवि स्पृशत्कायमदीर्घपीवर-
ग्रीवोरुवक्षःस्थलमल्पमध्यमम् ॥"
इति श्रीभागवते ७ स्कन्धे ८ अध्यायः ॥

गिरिकन्दरवत् अद्भुतं व्यात्तं प्रसृतमास्यं नासे च यस्मिन् । इति तट्टीकायां श्रीधरस्वामी ॥

व्यात्युक्षी, स्त्री, (व्यतिहारेण उक्षणम् । वि + आ + अति + उक्ष + "कर्म्मव्यतीहारे णच् स्त्रियाम् ।" ३।३।४३। इति णच् । ततः "णचः स्त्रियामञ् ।" ५।४।१४। इति अञ् । "टिड्ढाणञ्-" इति ।" ४।१।१५। इति ङीप् ।) रसिकानाम-न्योन्यं जलक्रीडनम् । इति संक्षिप्तसारोणादि-वृत्तिः ॥ तत्पर्य्यायः जलक्रीडाशब्दे द्रष्टव्यः ॥

व्यादिशः, पुं, (विशेषेणादिशति स्वस्वकर्म्मणि नियोजयति जगत् । वि + आ + दिश + कः ।) विष्णुः । यथा,—
"अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥"
इति महाभारते तस्य सहस्रनामस्तोत्रम् ॥

व्याधः, पुं, (विध्यति मृगादीन् । व्यध + "श्याद्व्य-धेति ।" ३।१।१४१। इति णः ।) मृग-हिंसकजातिः । शिकारी इति भाषा । स तु सर्व्वस्वीपत्न्यां क्षत्रियाज्जातः । यथा,—
"नापिताद्गोपकन्यायां सर्व्वस्वी तस्य योषिति ।
क्षत्त्राद्बभूव व्याधश्च बलवान् मृगहिंसकः ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥
तत्पर्य्यायः । मृगवधाजीवः २ मृगयुः ३ लुब्धकः ४ । इत्यमरः ॥ मृगावित् ५ कौशाटः ६ । इति जटाधरः ॥ मृगजीवनः ७ वनपांशुलः ८ । इति शब्दरत्नावली ॥ (यथा,—
"विद्धा मृगी व्याधशिलीमुखेन
मृगोऽपि तत्कातरवीक्षणेन ।
अहन् परित्यज्य गतव्यथा सा
मृगस्य जीवावधिराधिरासीत् ॥"
इत्युद्भटः ॥)
दुष्टः । इति मेदिनी ॥ (यथा, भागवते । ३ । १४ । ३४ ।
"व्याधस्याप्यनुकम्प्यानां स्त्रीणां देवः सती-पतिः ॥")

व्याधभीतः, पुं, (व्याधाद्भीतः ।) मृगः । इति शब्दचन्द्रिका ॥ (व्याधभीते, त्रि ॥)

व्याधामः, पुं, वज्रम् । इति हेमचन्द्रः ॥

व्याधिः, पुं, (विविधा आधयोऽस्मात् । यद्वा, वि + आ + धा + "उपसर्गे घोः किः ।" ३।३।९२। इति किः ।) कुष्ठम् । रोगः । इत्यमरः ॥ (यथा, महाभारते । १२ । १६ । ८ ।
"द्विविधो जायते व्याधिः शारीरो मानस-स्तथा ।
परस्परं तयोर्जन्म निर्द्वन्द्वं नोपलभ्यते ॥")
कामव्याधायव्यापकव्यग्रता । इति रत्नमञ्जरी ॥
कुष्ठस्य निदानं यथा,—
"व्यायामसमव्योत्याक्षीडाविषयसेवितैः ।
विरोधकन्नभीदर्पविषादाद्यैश्च दूषितः ॥
पुंसोऽम्लावलभञ्जगोपचिताक्षवस्वरान् ।
सर्व्वाकाराश्रितोऽदर्द रोमहर्षं सुश्रुतात्म् ॥
कुष्ठं विमममश्नन्त कुर्य्यात् सर्व्वाङ्गमार्द्दवम् ॥"
इति गारुडे १७२ अध्यायः ॥
अन्यत् कुष्ठशब्दे द्रष्टव्यम् ॥ * ॥ अथ कुष्ठस्य चिकित्सा ।
"वातोत्तरेषु सर्पिर्व्वमनं कफोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं श्रेष्ठम् ॥
पथ्याकरञ्जसिद्धार्थनिशावल्गुजसैन्धवैः ।
विडङ्गसहितैः पिष्टैर्लेपो मूत्रेण कुष्ठनुत् ॥"
अवल्गुजः वाकुचीति लोके । पथ्यादिभि-र्लेपः ॥ * ॥
"सोमराजीभवं चूर्णं खदिरेरसमन्वितम् ।
उद्वर्त्तनमिदं हन्ति कुष्ठरोगं क्षणाक्षदम् ॥"
सोमराजी वाकुचीति लोके । सोमराज्युद्-वर्त्तनम् ॥ * ॥
"रसायनं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम् ।
मार्कण्डेयप्रभृतिभिर्यत् प्रयुक्तं महर्षिभिः ॥
पुष्पकाले तु पुष्पाणि फलकाले फलानि च ।
संगृह्य पिचुमर्द्दस्य त्वङ्मूलानि दलानि च ॥
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत् ।
त्रिफला त्र्यूषणं ब्राह्मी श्वदंष्ट्रारुष्करामयः ॥
विडङ्गसारवाराहीलोहचूर्णाः स्मृताः समाः ।
निशाद्वयावल्गुजकव्याधिघाताः सशर्कराः ॥
कुष्ठमिन्द्रयवाः पाठा चूर्णमेषान्तु संयुतम् ।
खदिरासननिम्बानां घनं क्वाथेन भावयेत् ॥
सप्तधा पञ्चनिम्बन्तु मार्कवस्वरसेन च ।
स्निग्धः शुद्धतनुर्धीमान् योजयेत्तच्छुभे दिने ॥
मधुना तिक्तहविषा खदिरासनवारिणा ।
लेह्यमुष्णाम्भसा वापि कोलवृद्ध्या पलं भवेत् ।
जीर्णे तस्मिन् समश्नीयात् स्निग्धं लघु हितं च यत् ॥

विचर्च्चिकोदुम्बरपुण्डरीक-
कपालदद्रूकिटिभालसादि ।
शतारुविस्फोटविसर्पमालाः
कफप्रकोपं त्रिविधं किलासम् ॥
भगन्दरश्लीपदवातरक्त-
जडान्ध्यनाड़ीव्रणशीर्षरोगान् ।
सर्व्वान् प्रमेहान् प्रदरांश्च सर्व्वान्
दंष्ट्राविषं मूलविषं निहन्ति ॥
स्थूलोदरः सिंहकृशोदरः स्यात्
सुश्लिष्टसन्धिर्मधुनोपयोगात् ।
वलीवरोगादपि ये दशन्ति
सर्पादयो यान्ति विनाशमाशु ॥
जीवेच्चिरं व्याधिजराविमुक्तः
शुभे रतिश्चन्द्रसमानकान्तिः ॥"

अयमर्थः । निम्बस्य फलपुष्पत्वक्पत्रमूलानि सर्व्वाणि समुदितानि द्विगुणानि चूर्णितानि भृङ्गराजस्य रसेन सप्तवारान् भावयेत् । त्रिफलादीनि पाठान्तानि समुदितान्येक-भागानि चूर्णितानि खदिरासननिम्बानां निविड़क्वाथेन भावयेत् । ततः सर्व्वमेकीकृत्य मध्वादिनावलिह्यात् । पञ्चनिम्बकावलेहः ॥ * ॥
"शशिलेखापञ्चपलं तावद्धि खदिरस्य गुग्गुलो-र्देद्य च ।
तावच्च पलत्रयं त्रि जीवाक्षामलकिकायाः ॥
त्रिफलाकरञ्जपत्तखदिरगुडूचीनिर्गुण्ड्यः ।
मुस्ताविडङ्गरजनीकुटजत्वङ्निम्बवह्नि-सम्पाकाः ॥
एते रचितां वटिकां मधुदुग्धमिश्रां पिबेत्-प्रातः ।
गोमूत्रेण च कुष्ठं दुष्टव्रणवातमश्विरेष्य ।
श्वित्राणि पाण्डुरोगं विषमारुदरप्रमेह-गुल्मांश्च ।
नाशयति बलीपलितं योगः स्वायम्भुवो नाम्ना ॥"
शशिलेखा सोमराजी । गिरिजस्य शिलाजतुनः । तावत् सर्व्वमाषिकस्य । आवल्गिका सुकीति लोके । स्वायम्भुवो गुग्गुलुः ॥ * ॥
"त्रिवर्णं त्रिफला व्योषमजाजी कारवी वचा ।
सैन्धवातिविषा कुष्ठं चव्यैलायावशूकजम् ।
विडङ्गान्यजमोदा च मुस्ता चामरदारु च ।
यावन्त्येतानि सर्व्वाणि तावन्मात्रन्तु गुग्गुलुः ॥
संक्षुद्य सर्पिषा सार्द्धं गुटिकां कारयेद्भिषक् ।
प्रातर्भोजनकाले च खादेदग्निबलं यथा ॥
हन्त्यष्टादश कुष्ठानि क्रिमीन् दुष्टव्रणानि च ।
ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान् ॥
गृध्रसीमस्थिभग्नञ्च गुल्मञ्चापि नियच्छति ।
व्याधिं कोष्ठगतांश्चापि जयेद्विष्णुरिवासुरान् ॥"
एकविंशतिको गुग्गुलुः ॥ * ॥
"वातरक्ताधिकारोक्तः पुरः कैशोरकाभिधः ।
कुष्ठानि वातरक्तानि नाशयेत् परमौषधम् ॥"
इति कैशोरको गुग्गुलुः ॥ * ॥
"भल्लातकं प्रस्थयुगं छित्त्वा द्रोणजले क्षिपेत् ।
प्रस्थद्वयं गुडूच्याश्च चूर्णं तत्राम्भसि क्षिपेत् ॥
चतुर्थांशावशेषन्तु कषायमवतारयेत् ।
वस्त्रपूते कषाये च वक्ष्यमाणानि निक्षिपेत् ॥
शरावमात्रं गोसर्पिर्दुग्धस्याढ़कं तथा ।
सितां प्रस्थमितां दद्यात् प्रस्थार्द्धमाक्षिकं क्षिपेत्
सर्व्वाण्येकत्र भाण्डे तु पचेत् मृदग्निना शनैः ।
सर्व्वमेतद् घनीभूते पावकादवतारयेत् ॥

तत्र चैतानि चूर्णानि भूमो चिन्तमिलाञ्जना ।
काकुची चाथ द्दन्तः पिचुमर्द्दौ हरीतकी ॥
धात्री दाविञ्च मञ्जिष्ठा मरिचं नागरं वचा ।
यवानी सैन्धवं मुस्तं रसोना नागकेशरम् ॥
पर्प्पटः पद्मकं बालमुशीरं चन्दनं तथा ।
गोक्षुरस्य च बीजानि कर्षे द्वे रक्तचन्दनम् ॥
पृथक् पलाह्वमानानां चूर्णमेषामिच चिपेत् ।
पलमात्रमिदं प्रातः समश्नीयाज्जलेन हि ॥
नाशयेदचिरेणैव कुष्ठानि विविधान्यपि ।
वातरक्तानि सर्व्वाणि सर्व्वाण्यर्शांसि सेवितः ॥
व्यायाममातपं वह्निमम्लं माषं दधि त्यजेत् ।
तैलाभ्यङ्गं तथाश्वानं नरो भल्लातके त्यजेत् ॥"
इति अमृतभल्लातकावलेहः ॥ * ॥
"निम्बं गोपाह्वया कट्वी त्रायन्ती त्रिफला वचम् ।
पर्प्पटाब्दगुडूच्यम्ला वचा खदिरचन्दनम् ॥
पाठा शुण्ठी शटी भार्गी वासा भूनिम्बवल्कलम् ।
श्वासेक्षुवालको मूर्व्वा विडङ्गेन्द्रयवानलम् ॥
हस्तिपर्ण्योऽमृता श्रेका पटोलरजनीद्वयम् ।
कषायत्वचतसाकलाथैचौकटाफलम् ॥
मञ्जिष्ठा लाङ्गली रास्ना गजमालं पुनर्नवा ।
दन्ती विजयसारश्च भृङ्गराजकुरण्टकम् ॥
अङ्कोठकश्च प्रास्फोटं द्विपलांशं पृथक् पृथक् ।
गृह्णीयात्तानि सर्व्वाणि जलद्रोणे पचेच्छनैः ॥
अष्टभागावशेषन्तु कषायमवतारयेत् ।
विधाय वाससा पूतं स्थापयेद्भाजने दृढे ॥
भल्लातकसहस्राणि छित्त्वा नीरमयेऽम्भसि ।
पचेदष्टावशेषन्तु कषायमवतारयेत् ॥
तत्र पक्वेव संशोध्य द्वौ कषायौ विमिश्रयेत् ।
गुडस्य च तुलां दत्त्वा लेहवत् साधु साधयेत् ॥
भल्लातकसहस्राणि तत्र बीजानि निःक्षिपेत् ।
त्रिकटुः त्रिफला मुस्तं विडङ्गं चक्रकं तथा ॥
चन्दनं सैन्धवं कुष्ठं दीप्यकञ्च पलं पलम् ।
सौगन्ध्यं क्षिपेत्तत्र चातुर्जातं पलं पृथक् ॥
महाभल्लातको ह्येष महादेवेन भाषितः ।
प्राणिनां हितकामाय जयेच्छीघ्रं प्रयोजितः ॥
श्वित्रमौदुम्बरं दद्रुश्चर्म्मकं सकाकणम् ।
पुण्डरीकञ्च चर्म्माख्यं विस्फोटं रक्तमण्डलम् ॥
कच्छूं कपालकं कुष्ठं पामानञ्च विपादिकाम् ।
वातरक्तं चतुर्थांशि पाण्डुरोगं प्रणाशयेत् ॥
रक्तपित्तमुदावर्त्तकासश्वासं भगन्दरम् ॥
सदाभ्यासेन पलितमामवातं सुदुस्तरम् ॥
निर्गन्धयस्तु कथितो विहाराहारमैथुनैः ।
कुरुते परमां कान्तिं प्रदीप्तं जठरानलम् ॥
अनुपानं प्रयोक्तव्यं हिमातोयं पयोऽथवा ।
भोजने तु सदा स्वाच्छन्द्यमत्यं विशेषतः ॥"
गोपा मैल धाउ इति लोके । तत्र आच निघण्टुः ।
"शारिवा शारदा स्फोटा गोपकन्या प्रता-
निका ।"
तद्भावको गोपीशब्दश्च तत्र आह । गोपी
श्यामा शारिवा स्यादनन्तोत्पलशारिवा इत्य-
मरः ॥ गोपाङ्गना गोपवल्ली लताङ्का काष्ठ-
शारिवेति मदनपालः । अथवा अतीस् ।
अवल्गुजः सोमराजी । अनन्ता दुरालभा ।
चन्दनं श्वेतम् । भार्ग्गी ब्राह्मी कण्टकारी-
फलम् । श्यामा त्रया धाउ । हस्तिकर्णः
हस्तिकर्ण । श्रेका चका इति । धमाकः हरि-
तम् । शतवेधः अश्ववेधः । कषटापर्णं आरक्त-
पुष्पाफलम् । कुरण्टकः कटसरैया । दीप्यकः
इति यवानी । महाभल्लातकः ॥
"मञ्जिष्ठा त्रिफला तिक्ता वचा दारु निशा-
मृता ।
निम्बश्चैषां कृतः क्वाथः सर्व्वकुष्ठानि नाशयेत् ॥"
इति लघुमञ्जिष्ठादिक्वाथः ॥ * ॥
"मञ्जिष्ठा वाकुची चक्रमर्द्दश्च पिचुमर्द्दकम् ।
हरीतकी हरिद्रा च धात्री वासा शतावरी ॥
बला नागबला यष्टीमधुकं सुरकोपि च ।
पटोलस्य फलोशीरं गुडूची रक्तचन्दनम् ॥
मञ्जिष्ठादिरयं क्वाथः कुष्ठानां नाशनः परः ।
वातरक्तस्य संहर्त्ता कण्डूमण्डलनाशनः ॥"
इति मध्यममञ्जिष्ठादिक्वाथः ॥ * ॥
"मञ्जिष्ठा कुटजामृता घनवचा शुण्ठी हरिद्रा
द्वयं
क्षुद्रारिष्टपटोलकुष्ठकटुका भार्गी विडङ्गा-
ग्निकम् ।
मूर्व्वा दारु कलिङ्गभृङ्गमगधा त्रायन्ति पाठा
वरी
गायत्री त्रिफला किरातकमहानिम्बा वचा-
रग्वधम् ॥
श्यामा चन्दनगुडूचनं वरुणकं दन्ती कणा
गोक्षुरं
वासा पर्प्पटशारिवा प्रतिविषानन्ता विशाला
जलम् ।
मञ्जिष्ठादिरयं कषायविहिता नित्यं पुमान् यः
पिबेत्
त्वग्दोषा क्षपितैश्च यान्ति विलयं कुष्ठानि
चाष्टादश ।
नाशं गच्छति वातरक्तमखिलं नश्यन्ति रक्ता-
मया
वीसर्प्पश्च सूक्ष्मता नयनजा रोगाः प्रशा-
म्यन्ति च ॥"
अरिष्टः निम्बः । कलिङ्गः इन्द्रयवः । भृङ्गं
भृङ्गरा । वरी शतावरी । गायत्री खदिरः ।
असनः विजयसारः । श्यामा प्रियङ्गुः ।
चन्दनमत्र रक्तं ग्राह्यम् । शारिवा धाउ ।
अनन्ता दुरालभा । विशाला इन्द्रवारुणी
इति । जलं गैन्धवाला । इति बृहन्मञ्जिष्ठादिक्वाथः ॥
"मरिचं त्रिवृता मुस्ता हरितालं मनःशिला ।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥
विशाला करवीरश्च चीरमर्कपयस्तथा ।
गोमयस्य रसं कुर्य्यात् प्रत्येकं कार्षिकोन्मितम् ॥
विषस्यार्द्धपलं देयं तैलं प्रस्थमितं कटु ।
पचेच्चतुर्गुणे नीरे गोमूत्रे द्विगुणे तथा ॥
मरिचाद्यमिदं तैलमभ्यङ्गात् कुष्ठनाशनम् ।
दद्रुश्चाभ्यङ्गतः श्वित्रं विचर्च्चीं तनुमयाद्द्रवेत् ॥
तैलमेतज्जयेत् कच्छूं पामां श्वित्रं विचर्च्चिकाम् ।
पुण्डरीकं तथा दद्रूं मूर्च्छतां क्षिप्रमेव विनाम् ॥"
इति लघुमरिचाद्यं तैलम् ॥ * ॥
"मरिचं त्रिवृता दन्ती क्षीरमार्कं शकृद्रसः ।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥
विशाला करवीरश्च हरितालं मनःशिला ।
चित्रकं लाङ्गली मुस्ता विडङ्गं चक्रमर्द्दकः ॥
शिरीषः कुटजो निम्बः सप्तपर्णोऽमृता स्नुही ।
शम्पाको नक्तमालश्च खदिरो वाकुची वचा ॥
ज्योतिष्मती च फलिका विषं द्विपलिकं भवेत् ।
आढ़कं कटुतैलस्य गोमूत्रञ्च चतुर्गुणम् ॥
मृत्पात्रे लौहपात्रे च शनैर्मृद्वग्निना पचेत् ।
मरिचाद्यमिदं तैलं महद्भिर्मुनिभिरीरितम् ॥
भिषगेतेन तैलेन जयेत् कौष्ठिकान् व्रणान् ।
पामाविचर्च्चिकादद्रुकच्छूविस्फोटकानि च ॥
वलयः पलितं च्छाया नीलं व्यङ्गं तथैव च ।
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्य्यञ्च जायते ॥
प्रथमे वयसि स्त्रीणां यासां नस्यं प्रदीयते ।
तासामपि जरां प्राप्य न स्तनौ पतितौ
स्तनौ ॥
बलीवर्द्दस्तुरङ्गो वा गजो वा वायुपीडितः ।
त्रिभिरभ्यङ्गनै रम्यं भवेन्मारुतविक्रमः ॥"
ज्योतिष्मती मालकाङ्गनीति लोके । इति महा-
मरिचाद्यं तैलम् ॥ * ॥
"तालकस्य तु पत्राणि यस्य सन्ति पृथक् पृथक् ।
अभ्रकस्यैव तद्भागं हरितालं चिकित्सकैः ॥
पुनर्नवायाः स्वरसे तालकं तद्विमर्द्दयेत् ।
दिनमेकं ततस्तस्मिन् चणकं गमिते सति ॥
कुर्व्वीत चक्रिकां तान्तु शोषयेत् स्वल्पमातपे ।
पुनर्नवासमुत्थाङ्गारैः स्थालीं गलावधि ॥
पूरयेच्च ततः क्षारं दृढ़येत् पीड़नेन हि ।
क्षारस्योपरि तां दद्यात् तालकस्य तु चक्रि-
काम् ॥
तत्र आच्छादनं दत्त्वा मुद्रां कृत्वा विशोषयेत् ।
स्थालीं चुल्ल्यां निधायाग्निमखण्डं ज्वालयेद्-
भिषक् ॥
निरन्तरमहोरात्रं पञ्चकं तेन सिध्यति ।
स्वाङ्गशीतं समुत्तार्य्य गृह्णीयाद्रसमुत्तमम् ॥
तालकेश्वरनामायमुक्तो गुञ्जामितो रसः ।
गुडूच्यादिकषायेण प्रदानेनापि विनाशयेत् ॥
अष्टादशापि कुष्ठानि वातरक्तं तथोल्वणम् ।
फिरङ्गदेशजं रोगं दुस्तरं च व्यपोहति ॥
एतद्भैषज्यसेवी तु लवणाम्लं विवर्ज्जयेत् ।
तथा कटुरसं वह्निमातपं दूरतस्त्यजेत् ॥
लवणं यः परित्यक्तुं न शक्नोति कथञ्चन ।
स तु सैन्धवमश्नीयात् मधुरोपरसो हि सः ॥"
इति तालकेश्वरो रसः ॥ * ॥
"तालकाद्यमिताकृतं टङ्कणं त्रिगुणं युतम् ।
गन्धार्कौ द्विगुणौ कृताञ्जलीरद्भिः प्रमर्द्दयेत् ॥
चक्रकं पुटितं पीड़ा भूधरे चकजं त्र्यहम् ।
षट्पदं द्विपलं तास्यं लोहभस्म चतुष्टयम् ॥

ओङ्कारस्तत्परं ब्रह्म सावित्री स्यात्तदक्षरम् ।
एष मन्त्रो महाभाग द्वादशार्ण उदाहृतः ॥"
इति कौर्म्मे उपविभागे १६ अध्यायः ॥
( वाक्यम् । यथा, कुमारसम्भवे । ३ । ६३ ।
"न स्त्रीष्वरव्याहृतयः कदाचित्
पुष्णन्ति लोके विपरीतमर्थम् ।" )

व्युतः, त्रि, ( वि + वे + क्तः । ) स्यूतम् । इति भरतद्विरूपकोषः ॥

व्युतिः, स्त्री, ( वि + वे + क्तिन् । ) स्यूतिः । तन्तुसन्ततिः । इति भरतद्विरूपकोषः ॥

व्युत्क्रमः, पुं, ( वि + उत् + क्रम + घञ् । ) क्रमविपर्य्ययः । अतिक्रमः । तत्पर्य्यायः । उत्क्रमः २ व्यत्क्रमः ३ । इति हेमचन्द्रः ॥ (यथा, साहित्यदर्पणे । १० ।
"पश्येत् कश्चिच्चल चपल रे का त्वराहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि
यासि ॥")

व्युत्थानं, क्ली, (वि + उत् + स्था + ल्युट् ।) स्वातन्त्र्यम् । विरोधाचरणम् । इति मेदिनी ॥
( यथा, महाभारते । १४ । २८ । १४ ।
"एवं ते क्षत्रियाभीरा पुत्राश्च सवरैः सह ।
तपस्तप्तं परिमता व्युत्थानात् चापधन्विनः ॥")
प्रतिरोधनम् । समाधिपारणम् । इति हेमचन्द्रः ॥ नृत्यभेदः । इति शब्दरत्नावली ॥ विशिष्टोत्थानञ्च ॥ ( चित्तस्यावस्थाविशेषः । इति पातञ्जलदर्शनम् ॥ )

व्युत्पत्तिः, स्त्री, (वि + उत् + पद + क्तिन् ।) विशिष्टोत्पत्तिः । संस्कारः । इति व्युत्पन्नशब्दार्थदर्शनात् । यथा । शरत्कालबोधनीयत्वेन शारदापदव्युत्पत्तेस्तत् पदं तावत्यादि सारं ददातीति व्युत्पत्तिस्तु वाच्यनिष्ठा । इति तिथ्यादितत्त्वम् ॥ शक्तिज्ञानम् । यथा । व्यवहारादिबाधकं विना विवरणादपि व्युत्पत्तेः । वाचकं विना स्वार्थस्य बाधकं यदि शेषयं तद्भावस्त्वविशेषणसहकारेण व्युत्पत्तेः व्युत्पत्तिसम्भवात् शक्तिग्रहसम्भवादिति यावत् । इति व्याप्तिवादस्य माथुरी टीका ॥

व्युत्पन्नः, त्रि, (वि + उत् + पद + क्तः ।) संस्कृतः । इति हेमचन्द्रशब्दरत्नावल्यौ ॥ व्युत्पत्तियुक्तः । यथा । व्याकरणव्युत्पन्नशब्दज्ञानाधीनं शास्त्रान्तरज्ञानं तदधीना च वैदिकक्रिया तत्फलं स्वर्गादि । इति मुग्धबोधटीकायां दुर्गादासः ॥

व्युत्पादकः, त्रि, ( विशिष्टोत्पादयति ज्ञानम् । वि + उत् + पद + णिच् + ण्वुल् । ) व्युत्पत्तिजनकः । यथा । शब्दव्युत्पादकशास्त्रारम्भे शब्देरेव मङ्गलं कर्त्तव्यम् । इति मुग्धबोधटीकायां दुर्गादासः ॥

व्युदासः, पुं, (वि + उत् + अस + घञ् ।) निरासः । परित्यागः । यथा । तदेवैतद्विकारस्वव्याप्तिविदेवे स्वविधिनो निमज्जति कर्म्मणि सस्यान्तरव्युदासाय । इत्यमावास्याकालनिरूपणे तिथ्यादितत्त्वम् ॥ (यथा च महाभारते । १२ । १६ । १८ ।
"अपैत्यात्मव्युदासेन शरीरे पाञ्चभौतिके ॥")

व्युष्टं, क्ली, ( वि + वस् + क्तः । ) फलम् । दिनम् । प्रभातम् । ( यथा, माघे । १२ । ४ ।
"व्युष्टं प्रयाणञ्च वियोगवेदना-
विधूननारीकमभूत् समं तदा ॥")
पर्य्युषितम् । इति हेमचन्द्रः ॥ (प्रभातार्थे क्वचित् पुंलिङ्गोऽपि । स तु दोषायाः पुत्रः । यथा, भागवते । ४ । १३ । १४ ।
"प्रदोषो निशिथो व्युष्ट इति दोषासुतास्त्रयः ।
व्युष्टः सुतं पुष्करिण्यां सर्व्वतेजसमादधे ॥")

व्युष्टः, त्रि, ( वि + वस + क्तः । ) उषितः । (यथा, महाभारते । ३ । ६८ । २८ ।
"सा व्युष्टा रजनीं तत्र पितुर्वेश्म निवासिनी ।")
दग्धः । इति मेदिनी ॥

व्युष्टिः, स्त्री, (वि + वस् + क्तिन् ।) फलम् । (यथा, महाभारते । १२ । २२८ । ४ ।
"महत्तपसो व्युष्ट्या पश्यमीको परावरौ ॥")
समृद्धिः । इति मेदिनी ॥ स्तुतिः । इति हेमचन्द्रः ॥ (प्रकाशः । यथा, ऋग्वेदे ।१।१७१।५।
"व्युष्टिषु शवसा शश्वतीनाम् ॥"
"व्युष्टिषु उषःसु प्रकाशेषु सत्सु ।" इति तद्भाष्ये सायणः ॥ )

व्यूढः, त्रि, (विशेषेण उह्यतेस्म । वि + वह + क्तः ।) विन्यस्तः । संहतः । इत्यमरः । ३ । १ । ४४ ॥ (व्यूहरचनयाधिष्ठितः । यथा, गीतायाम् ।१।२।
"दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्य्योधनस्तदा ।
आचार्य्यमुपसंगम्य राजा वचनमब्रवीत् ॥")
पृथुलः । इति मेदिनी ॥ ( यथा, रघुः । १ । १३ ।
"व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्म्महाभुजः ।
आत्मकर्म्मक्षमं देहं क्षात्रो धर्म्म इवाश्रितः ॥")

व्यूढकङ्कटः, त्रि, ( व्यूढः कङ्कटः सन्नाहो येन । ) सन्नद्धः । इत्यमरः ॥

व्यूढिः, स्त्री, ( वि + वह + क्तिन् । ) विन्यासः । संहतिः । पृथुलता । इति व्यूढशब्दार्थदर्शनात् ॥

व्यूतं, त्रि, स्यूतम् । तन्तुसन्ततम् । विपूर्व्ववेञ्धातोः क्तप्रत्ययेन निष्पन्नमेतत् ॥

व्यूतिः, स्त्री, (वि + वे अथ वा + क्तिन् । "ऊतियूतिजूतीति ।" ३ । ३ । ९७ । इति निपातितः । ) वस्त्रादिवयनक्रिया । तत्पर्य्यायः । वानिः २ । इत्यमरः ॥ व्यूतिः ३ । इति तट्टीका ॥ वानी ४ । इति शब्दरत्नावली ॥

व्यूहः, पुं, (वि + ऊह + घञ् ।) समूहः । निर्म्माणम् । तर्कः । इति मेदिनी ॥ देहः । ( यथा, भागवते । ११ । ६ । १० ।
"यः सात्वतैः समविभूतय आत्मवद्भि-
र्व्यूहेऽर्च्चितः सवनशः स्वरतिक्रमाय ॥")
सैन्यः । इति त्रिकाण्डशेषः ॥ ( परिणामः । लिङ्गम् । यथा, भागवते । ३ । २६ । ७० ।
"वासुदेवमनोऽप्यस्मिन् व्यूहमूर्त्तौ क्रमादिमान् ॥")
युद्धार्थसैन्यरचना । तत्पर्य्यायः । बलविन्यासः २ । इत्यमरः ॥ "युद्धार्थं सैन्यस्य देशविशेषे विभज्य दुर्भेद्यत्वनिमित्तं स्थापनं व्यूहः । ऊह वितर्के विपूर्व्वात् घञ् । युद्धे दण्डादयो भेदा विशेषा व्यूहस्तेषामपि त्वादिना भोगमण्डलासंहतानां ग्रहः । यथाह कामन्दकिः ।
तिर्य्यग्वृत्तिश्च दण्डः स्याद्भोगोऽन्वावृत्तिरेव च ।
मण्डलं सर्व्वतो वृत्तिः पृथग्वृत्तिरसंहतः ॥ इति ॥
एषां चतुर्णाञ्च बहवो भेदाः क्रौञ्चचक्रादयो ग्रन्थगौरवभयान्नोक्ताः ।" इति भरतः ॥ अपि च ।
"समग्रस्य तु सैन्यस्य विन्यासः स्थानभेदतः ।
स व्यूह इति विख्यातो युद्धेषु पृथिवीभुजाम् ॥
व्यूहभेदास्तु चत्वारो दण्डो भोगोऽथ मण्डलम् ।
असंहतश्च निर्द्दिष्टा नीतिशास्त्रादिवक्तृभिः ॥
अन्येऽपि प्रकृतिव्यूहाः क्रौञ्चचक्रादयः क्वचित् ।
तिर्य्यग्वृत्तिस्तु दण्डः स्याद्भोगोऽन्वावृत्तिरेव च ॥
मण्डलं सर्व्वतो वृत्तिः पृथग्वृत्तिरसंहतः ।
सैन्यानां नीतिशास्त्रादौ व्यूहभेदाः समीरिताः ।
क्रौञ्चचक्रादिभेदानां लक्ष्यं भारतादिषु ॥"
इति शब्दरत्नावली ॥
( यथा च कामन्दकीयनीतौ ।१९।२९—५७ ।
"सर्व्वव्यूहविधानज्ञा युद्धकर्म्मसु कर्म्मठाः ॥
उरः कक्षौ च पक्षौ च मध्यं पृष्ठं प्रतिग्रहः ।
कोटी च व्यूहशास्त्रज्ञैः सप्ताङ्गो व्यूह उच्यते ॥
उरस्य कक्षपक्षौ च व्यूहोऽयं सप्रतिग्रहः ।
गुरोरेष च शुक्रस्य कक्षाभ्यां परिवर्ज्जितः ॥
अभेद्याः कुलजा मेध्या लब्धलक्ष्याः प्रहारिणः ।
सेनापतयः कार्य्या व्यूहयुद्धप्रतिक्रियाः ॥
प्रवीरपुरुषैरेतैस्तिष्ठेयुः परिवारिताः ।
अभेदेन च युध्येरन् रक्षेयुश्च परस्परम् ॥
फल्गु सैन्यस्य यत्किञ्चिन्मध्ये व्यूहस्य तद्भवेत् ।
युद्धवस्तु च यत्किञ्चिन्नायकस्थापने भवेत् ॥
युद्धार्थं युद्धकुशलं चक्रानीकं प्रयोजयेत् ।
युद्धं हि नायकप्राणं हन्यते तदनायकम् ॥
व्यूहोऽश्वपृष्ठसमवः पत्त्यश्वरथदन्तिभिः ।
तथाप्रतिहतो ज्ञेयो हस्त्यश्वरथपत्तिभिः ॥
मध्ये देयं हयानीकं रथानीकं तु कक्षयोः ।
पक्षयोश्च गजानीकं व्यूहोऽन्तभिद्यं स्मृतः ॥
रथस्थाने हयान्दद्यात्पदातींश्च हयाभवे ।
रथाभावे तु मतिमान्नागानेव प्रकल्पयेत् ॥
विभज्य प्रक्षिपेन्मध्ये पत्त्यश्वरथकुञ्जरान् ।
मध्ये कुर्व्वीत नागेन्द्रान् पत्त्यश्वरथवारिणान् ॥
धनुः कर्णौ च दण्डश्च शकटो मकरध्वजः ॥
इत्यादयो महाव्यूहास्तदाकारान् प्रकल्पयेत् ॥
यदि स्याद्दण्डबाहुल्यं तदा चापः प्रकीर्त्तितः ।
मण्डलोऽसंहतो भोगो दण्डश्चेति मनीषिभिः ॥
कथिताः प्रकृतिव्यूहा भेदास्तेषां प्रकीर्त्तिताः ।
यः स तं व्यूह्य मतिमान् स्थाने स्थाने प्रकल्पयेत् ॥
तिर्य्यग्वृत्तिश्च दण्डः स्याद्भोगोऽन्वावृत्तिरेव च ।
प्रदरो दृढकोऽसह्यश्चापो वै तद्विपर्य्ययः ॥
प्रतिष्ठः सुप्रतिष्ठश्च श्येनो विजयसञ्जयौ ।
विशालविजयः सूची स्थूणाकर्णचमूमुखः ॥

सूच्याख्यो वलयश्चैव दण्डभेदाः सुदुर्ज्जयाः ।
अतिक्रान्तः प्रतिक्रान्तः कक्षाभ्याञ्चैकपक्षतः ॥
अतिक्रान्तश्च पक्षाभ्यां त्रयोऽन्यस्तु विपर्य्ययः ।
स्थूणापक्षो धनुःपक्षो द्विस्थूणो दण्ड ऊर्द्ध्वगः ॥
द्विगुणान्तस्त्वतिक्रान्तपक्षोऽन्योऽस्य विपर्य्ययः ।
द्विचतुर्द्दण्ड इत्येवं ज्ञेया लक्षणतः क्रमात् ॥
गोमूत्रिकाहिसञ्चारी शकटो मकरस्तथा ।
भोगभेदाः समाख्यातास्तथा परिपतन्तकः ॥
दण्डपक्षो युगोरस्यः शकटस्तद्विपर्य्ययः ।
मकरो व्यत्यकीर्णश्च शेषः कुञ्जरराजिभिः ॥
मण्डलव्यूहभेदौ च सर्व्वतोभद्रदुर्ज्जयौ ।
अष्टानीको द्वितीयस्तु प्रथमः सर्व्वतोमुखः ॥
अर्द्धचन्द्रक उद्धारो वज्रो भेदाश्च संहतेः ।
तथा कर्कटशृङ्गी च काकपादी च गोधिका ॥
त्रिचतुःपञ्चसैन्यानां ज्ञेया आकारभेदतः ।
इति व्यूहाः समाख्याता व्यूहभेदप्रयोक्तृभिः ॥
शते सप्तदश प्रोक्ता दण्डव्यूहाश्च पञ्चधा ।
तथा व्यूहद्वयञ्चैव मण्डलस्य प्रयोक्तृभिः ॥
असंहतास्तु षड् व्यूहा भोगव्यूहाश्च पञ्चधा ।
व्यूहभेदास्तु प्रयोज्याः स्युर्द्दण्डकाल उपस्थिते ॥
पक्षादीनामथैकेन हत्वा शेषं परिक्षिपेत् ।
उरसा च समाहत्य कोटिभ्यां परिवेष्टयेत् ॥
परकोटिमुपक्रम्य पक्षाभ्यामप्रतिग्रहः ।
कोटिभ्यां जघनं हन्यादुरसा च प्रपीडयेत् ॥
एवं व्यूहप्रयत्नेन यत्नवानवनीपतिः ।
विदारयेद्व्यूहजातं बलेन द्विषतामलम् ॥” )

व्यूहनं, क्ली, ( वि + ऊह + ल्युट् । ) सैन्यसंस्थापनम् । विपूर्व्वोहधातोरनट्प्रत्ययेन निष्पन्नमिदम् ॥ (मेलनम् । यथा, भागवते । ३ । २६ । २६ ।
“चालनं व्यूहनं प्राप्तिर्न्नेतृत्वं द्रव्यशब्दयोः ॥”
“व्यूहनं मेलनं तृणादेः ।” इति तट्टीकायां स्वामी ॥ क्षोभके, त्रि । यथा, हरिवंशे । १२८ । ३६ ।
“परं गुणेभ्यः पृश्निगर्भसञ्ज्ञकं
यद्यः स्वयं व्यूहनं कान्तरूपम् ॥”
“व्यूहनं जगत्क्षोभकम् ।” इति तट्टीकायां नीलकण्ठः ॥)

व्यूहपार्ष्णिः, पुं, ( व्यूहस्य पार्ष्णिः । ) व्यूहपश्चाद्भागः । तत्पर्य्यायः । प्रत्यासारः २ । इत्यमरः ॥ प्रत्यासरः ३ । इति तट्टीका ॥ व्यूहस्य पश्चाद्व्यूहान्तरम् । इति केचित् । इति भरतः ॥ व्यूहमध्यम् । इति शब्दरत्नावली ॥

व्येञ, ञ ऐ क्षये । इति कविकल्पद्रुमः ॥ ( भ्वा०-उभ०-सक०-अनिट् । ) ञ, व्ययति व्ययते । ऐ, व्यैषात् । इति दुर्गादासः ॥

व्योकारः पुं, लौहकारः । इत्यमरः ॥

व्योम, [न्] क्ली, ( व्येञ् क्षये + “व्यामन् व्योम-निति ।” उणा० ४ । १४६ । इति निपातनात् साधुः । यद्वा, “विपूर्व्वादवतेर्व्याप्त्यर्थत्वात् औणादिके ‘सर्व्वधातुभ्यो मनिन् ।’ इति सूत्रेण मनिन्प्रत्यये ‘ज्वरत्वरस्रिव्यविमवामुपधायाश्च ।’ इत्यूठि गुणः । अवति व्याप्नोति सर्व्वं जगत् । यद्वा अवतिर्गत्यर्थः आवि अन् व्योम । अवनं गमनं विविधमस्मिन् विद्यते । यद्वा रक्षार्थः विभुरिवावति प्राणिनोऽवकाशप्रदानेन । उणादौ तु नामन् सीमन् व्योमन् इत्यादिना वेञ् संवरणे इत्यस्मान्मनिनि ऊत्वं निपात्यते । व्ययते सह वायुना व्योम । तथाच निरुक्तम् योनिरन्तरिक्षं महानवयवः परिवीतो वायुना इति ।” इति निघण्टुटीका । १ । ३ । १ ।) आकाशः । इत्यमरः ॥ (यथा, रघुः । ४ । २९ ।
“रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्व्वन् व्योमेव भूतलम् ॥”)
जलम् । भास्करस्यार्च्चनाश्रयः । इति मेदिनी ॥ अभ्रकम् । इति राजनिर्घण्टः ॥

व्योमकेशः, पुं, ( व्योम एव केशा यस्य । विराट्-मूर्त्तित्वादस्य तथात्वम् । ) शिवः । इत्यमरः ॥ ( यथा, महाभारते । ७ । २०० । १२९ ।
“सूर्य्याचन्द्रमसौ लोके प्रकाशन्ते रुचश्च याः ।
ते केशसंज्ञितास्त्र्यक्षे व्योमकेश इति स्तुतः ॥”)

व्योमकेशी, [न्] पुं, महादेवः । गङ्गाधारणकाले व्योमव्यापिनः केशा यस्य सन्तीति व्योमकेशशब्दात् इन्प्रत्ययेन निष्पन्नमेतत् ॥

व्योमचारिपुरं, क्ली, ( व्योमचारि आकाशगामि पुरम् । ) सौभपुरम् । इति भूरिप्रयोगः ॥

व्योमचारी, [न्] पुं, ( व्योम्नि चरतीति । चर + णिनिः । ) देवता । पक्षी । इति मेदिनी ॥ चिरजीवी । द्विजातिः । इति विश्वः ॥ (आकाशचारिणि, त्रि । यथा, कथासरित्सागरे । ७२ । ५६ ।
“अस्ति पूर्व्वमहं व्योमचारी विद्याधरोऽभवम् ॥”)

व्योमधूमः, पुं, ( व्योम्नः धूमः । ) मेघः । इति त्रिकाण्डशेषः ॥

व्योमनासिका, स्त्री, भारतीपक्षी । इति त्रिकाण्डशेषः ॥

व्योममञ्जरं, क्ली, (व्योम्नः मञ्जरमिव ।) पताका । इति त्रिकाण्डशेषः ॥

व्योममण्डलं, क्ली, ( व्योम्नः मण्डलम् । ) पताका । इति शब्दरत्नावली ॥ आकाशञ्च ॥

व्योममुद्गरः, पुं, ( व्योम्नः मुद्गर इव । ) निर्घातः । इति हारावली ॥

व्योमयानं, क्ली, (व्योमगामि यानम् ।) विमानम् । इत्यमरः ॥

व्योमस्थली, स्त्री, भूमिः । इति भूरिप्रयोगः ॥ ( व्योम्नः स्थली । ) नभःस्थलञ्च ॥

व्योमाभः, पुं, (व्योम्ना शून्येन आभातीति । आ + भा + कः ।) बुद्धः । इति त्रिकाण्डशेषः ॥

व्योमोदकं, क्ली, (व्योम्नः उदकम् ।) दिव्योदकम् । इति राजनिर्घण्टः ॥

व्योषं, क्ली, ( विशेषेण ओषतीति । उष दाहे + पचाद्यच् ।) त्रिकटु । इत्यमरः ॥ (यथा, सुश्रुते । १ । ४४ ।
“व्योषं त्रिजातकं मुस्ता विडङ्गामलकी तथा ॥”)

व्रज, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) व्रजति । इति दुर्गादासः ॥

व्रज, क संस्कृतौ । गतौ । इति कविकल्पद्रुमः ॥ ( चुरा०-पर०-सक०-सेट् । ) क, व्राजयति । निरेफौ तौ । तौ इमौ निरेफौ रेफरहितौ च आसाताम् । इति दुर्गादासः ॥

व्रज्या, स्त्री, व्रजनम् । गमनम् । व्रज गतौ इत्यस्मात् यप्रत्ययेन निष्पन्नमिदम् । इति सिद्धान्तकौमुदी ॥

व्रजः, पुं, ( व्रज गतौ + “गोचरसञ्चरेति ।” ३ । ३ । ११९ । इति घप्रत्ययेन निपातनात् साधुः ।) समूहः । इत्यमरः ॥ ( यथा, महाभारते । १ । १४९ । १२ ।
“ततः प्रतापः सुमहान् शब्दश्चैव विभावसोः ।
प्रादुरासीत् तदा तेन बुबुधे स जनव्रजः ॥”)
गोष्ठम् । ( यथा, माघे । २ । ६४ ।
“निरुद्धवीवधासारप्रसारा गा इव व्रजम् ।
उपरुन्धन्तु दाशार्हाः पुरीं माहिष्मतीं द्विषः ॥”)
पन्थाः । इति मेदिनी ॥ अयन्तु मथुरायाश्चतुष्पार्श्वनिर्द्देशः । अस्य विवरणं यथा, वाराहे ।
“व्रजमण्डलभूमौ तु श्रीवनागमकं परम् ।
कुसुमाख्यं महारम्यं सर्व्वेषां मध्यसंस्थितम् ॥
तस्योपरिस्थितं लोकं सर्व्वस्थानं महावनम् ।
व्रजलीलाविहारार्थं नवस्थानविराजितम् ॥
चतुरष्टककोणेन परिपूर्णविराजितम् ।
अस्य प्रदक्षिणीकुर्व्वन् धनधान्यसुखं लभेत् ॥
दानार्थीचाक्रतो लोको विष्णुलोकमवाप्नुयात् ।
भावाभावान्म्रियते येन पुनर्ज्जन्म न विद्यते ॥
पुण्यं बहुगुणं लब्ध्वा ततोऽस्मिन् व्रजमण्डले ।
क्षणेन निर्म्मितास्तीर्थाः षाड्गुण्यचलताः ॥”*
तत्रादौ वनोपवनप्रतिवनाधिवनाख्यचत्वारिंशत् तानि चतुरष्टकोणपरिमाणस्थितानि चतुर्भागस्थोऽभ्यन्तरस्थितानि क्रमश आह । पाद्मे ।
“वनानि द्वादशान्याहुर्यमुनोत्तरदक्षिणे ।
महावनं महारण्यं १ द्वयं काम्यवनं शुभम् २ ॥
कोकिलाख्यं तृतीयञ्च ३ तूर्य्यं तालवनं तथा ४ ।
पञ्चमं कुसुदाख्यञ्च ५ षष्ठं भाण्डीरसंज्ञकम् ६ ॥
ख्याता छत्रवनं श्रेष्ठं सप्तमं परिकीर्त्तितम् ७ ।
अष्टमं खदिरं प्रोक्तं ८ नवमं लोहजं वनम् ९ ॥
ख्याता मधुवनं श्रेष्ठं दशमं बहुपुण्यदम् १० ।
एकादशं समाख्यातं बहुलावनसंज्ञकम् ११ ॥
ख्याता बिल्ववनं श्रेष्ठं द्वादशं कामनाप्रदम् १२ ।
इति द्वादशसंज्ञानि वनानि शुभदानि च ॥”
इति द्वादशवनानि ॥
अथ द्वादशोपवनान्याह वाराहे ।
“आदौ ब्रह्मवनं नाम १ द्वितीयं अप्सरावनम् २ ।
तृतीयं विह्वलं नाम ३ कदम्बाख्यं चतुर्थकम् ४ ॥
ख्याता स्वर्णवनं श्रेष्ठं पञ्चमं परिकीर्त्तितम् ५ ।
सुरभीवनमाख्यातं षष्ठमानन्दवर्द्धनम् ६ ॥
श्रेष्ठं प्रेमवनं नाम सप्तमं शुभदं नृणाम् ७ ।

कपोतवर्णप्रतिमाः पाण्डुधूसराः। स्थिराः विशीर्णतारहिताः। पिड़कावन्तः संरोहणार्थं ये मांसाङ्कुरास्तद्युक्ताः ॥ * ॥ सरूढ़लिङ्गमाह ।

"रूढ़वर्त्मानमग्रन्थिमशूनमरुजं व्रणम् ।
त्वक्सवर्णं समतलं सम्यग्रूढ़ं विनिर्दिशेत् ॥"

रूढ़वर्त्मानं संरूढ़व्रणमार्गम् । समतलं अनिम्नम् ॥ * ॥ सुखसाध्यत्वादिकमाह ।

"आत्मवतः सुखे देशे तरुणस्याप्युपद्रवः ।
धीमतोऽभिनवः काले सुखे साध्यः सुखं व्रणः ॥"

सुखे देशे मर्म्मरहिते । अनुपद्रवः ज्वरतृष्णाश्वासकासारोचकादिरहितः । धीमतः पथ्यसेविनः । सुखे काले हेमन्ते शिशिरे च ।

"गुणैरन्यतरैर्विहीनः कृच्छ्रो व्रणः स्मृतः ।
सर्व्वैर्विहीनो विज्ञेयस्त्वसाध्यो निरुपक्रमः ॥"

एभिरात्मवत्त्वादिभिः । निरुपक्रमः अनुपक्रान्तः चिरमुपेक्षित इति यावत् ।

"वसामेदोऽथ मज्जानं मस्तुलुङ्गञ्च यः स्रवेत् ।
आगन्तुजो व्रणः सिद्ध्येन्न सिद्ध्येद्दोषसम्भवः ॥"

मस्तुलुङ्गं मस्तकाभ्यन्तरस्नेहः ।

"कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ।
व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणाः ॥"

अरिष्टमाह ।

"दह्यन्ते चान्तरत्यर्थं बहिःशीताश्च ये व्रणाः ।
दह्यन्ते बहिरत्यर्थं भवन्त्यन्तश्च शीतलाः ॥
प्राणमांसक्षयश्वासकासारोचकपीड़िताः ।
प्रवृद्धपूयरुधिरा व्रणा ये चापि मर्म्मसु ॥
क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः ।
चिकित्सेन्नैव तान् वैद्यः संरक्षन्नात्मनो यशः ॥
मद्यागुर्व्वाज्यसुमनः पद्मचन्दनचम्पकम् ।
सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ॥"

मर्म्मसु पायुनाभिहृदयादिषु । सुमनाः जातिः । दिव्यगन्धाः पारिजातादिगन्धाः ॥ * ॥ अथागन्तुव्रणस्य निदानमाह ।

"नानाधारामुखैः शस्त्रैर्नानास्थाननिपातितैः ।
भवन्ति नानाकृतयो व्रणास्तांस्तान्निबोध मे ॥"

नानाधारामुखानि येषां तैः शस्त्रैः अर्द्धचन्द्रखड्गभल्लकुन्तशूलशरादिभिः । नानाकृतयः बह्वाकृतयः । ता आकृतीराह ।

"छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च ।
घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् ॥"

तत्र छिन्नस्य लक्षणमाह ।

"तिर्य्यक् छिन्न ऋजुर्व्वापि यो व्रणश्चायतो भवेत् ।
गात्रस्य पातनं तद्धि छिन्नमित्यभिधीयते ॥"

यो व्रणः तिर्य्यक्छिन्नः खड्गादिहततिर्य्यक्छेदक्षतः । ऋजुर्व्वापि अथवा खड्गादिहतो रक्तो व्रणः । आयतः दीर्घः । आयत इति तिर्य्यक्छिन्नस्य ऋजोश्च विशेषणम् । गात्रस्य पातनं गात्रस्यैकदेशस्य छेदेन पृथक्करणं वा छिन्नमित्यभिधीयते ॥ * ॥ भिन्नमाह ।

"शक्तिकुन्तेषुखड्गाग्रविषाणैराशयो हतः ।
यत्किञ्चित् प्रस्रवेत्तद्धि भिन्नमित्यभिधीयते ॥"

आशयः कोष्ठः ॥ * ॥ कोष्ठभेदस्य लक्षणमाह ।

"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च ।
हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते ॥
तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते ।
मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति ॥
मूर्च्छाश्वासतृडाध्मानमभक्तच्छन्द एव च ।
विण्मूत्रवातसङ्गश्च स्वेदस्रावोऽक्षिरक्तता ॥
लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च ।
हृदि शूलं पार्श्वयोश्च विशेषश्चाभिधीयते ॥"

तस्मिन् कोष्ठे । भिन्ने शस्त्रादिभिः । रक्तपूर्णे कोष्ठे तत्रावस्थानात् कुतेन रक्तेन पूर्णे वा ज्वरादयो जायन्ते ॥ * ॥ आमाशये पक्वाशये च रक्तपूर्णे लक्षणभेदमाह ।

"आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि ।
आध्मानमतिमात्रञ्च शूलञ्च भृशदारुणम् ॥
पक्वाशयगते रक्ते रुजा गौरवमेव च ।
अधःकाये विशेषेण शीतता च भवेदिह ॥"

रुजा शूलम् । गौरवं पक्वाशये । अधःकाये नाभेरधोदेशे विशेषेण गौरवमित्यन्वयः । शीतता च भवेदिह । इह नाभेरधोदेशे शीतता च स्यात् । सा च वाधिक्यभावात् ॥ * ॥ विद्धमाह ।

"सूक्ष्मास्यशल्याभिहतं यदङ्गमाशयं विना ।
उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्द्दिशेत् ॥"

आशयं विना कोष्ठं विना । उत्तुण्डितं अनिर्गतशल्यम् । निर्गतं वा निर्गतशल्यं वा ॥ * ॥ सशल्यस्य व्रणस्य लक्षणमाह ।

"श्यावं सशोथं पिड़कान्वितञ्च
मुहुर्मुहुः शोणितवाहिनञ्च ।
मृदून्नतं बुद्बुदतुल्यमांसं
व्रणं सशल्यं कथयन्ति ॥"

मुहुर्मुहुः शोणितवाहनं यदा यदा शल्यं चलति तदा तदा रुधिरं वहति । उन्नतं उत्थितमुखम् ॥ * ॥ कोष्ठस्थितस्य शल्यस्य लक्षणमाह ।

"त्वचोऽतीत्य शिरादीनि भित्त्वाङ्गं परिहृत्य वा ।
कोष्ठे प्रतिष्ठितं शल्यं कुर्य्यादुक्तानुपद्रवान् ॥"

त्वचः समापि अतिक्रम्य उक्तानुपद्रवान् आटोपानाहौ व्रणमुखेनान्न पुरीषदर्शनञ्च ॥ * ॥ अथान्त्रस्य कोष्ठस्य रक्तस्य पुरीषस्य लक्षणमाह ।

"कोष्ठान्तर्शोणितं पाण्डु शीतपादकराननम् ।
शीतोच्छ्वासं रक्तनेत्रमानद्धञ्च विवर्जयेत् ॥"

आनद्धं आनाहवन्तम् ॥ * ॥

क्षतमाह ।

"नातिच्छिन्नं नातिभिन्नमुभयोर्लक्षणान्वितम् ।
विषमं व्रणमङ्गे यत्तत् क्षतं परिकीर्त्तितम् ॥"

नातिच्छिन्नं नातिदीर्घक्षतम् । नातिभिन्नं नातिगम्भीरक्षतम् । उभयोश्छिन्नभिन्नयोः । विषमं व्रणमङ्गे यत् यदुन्नतनतमङ्गवैषम्यकरम् ॥ * ॥ पिच्चितमाह ।

"प्रहारपीड़नाभ्यान्तु यदङ्गं पृथुतां गतम् ।
सास्थि तत् पिच्चितं विद्यान्मज्जरक्तपरिप्लुतम् ॥"

प्रहारो मुद्गरादिना । पीड़नं कपाटादिना । पृथुतां चिपिटताम् ॥ * ॥ घृष्टमाह ।

"घर्षणादभिघाताद्वा यदङ्गं विगतत्वचम् ।
उषास्रावान्वितं तत्तु घृष्टमित्यभिधीयते ॥
घर्षणात् कर्कशेष्टकापाषाणभित्त्यादिभिः ॥" * ॥ मांसशिरास्नायुसन्ध्यस्थिमर्म्मसु क्षतेषु सामान्यलक्षणमाह ।

"भ्रमः प्रलापः पतनं प्रमोहो
विचेष्टनं ग्लानिरथोष्णता च ।
स्रस्ताङ्गता मूर्च्छनमूर्द्ध्ववात-
स्तीव्रा रुजो वातकृताश्च तास्ताः ॥
मांसोदकाभं रुधिरञ्च गच्छेत्
सर्व्वेन्द्रियार्थोपरमस्तथैव ।
दशार्द्धसंख्येष्वपि विक्षतेषु
सामान्यतो मर्म्मसु लिङ्गमुक्तम् ॥"

पतनं भूमौ । विचेष्टनं विरुद्धं चेष्टनं हस्तपादादिप्रक्षेपणादिकम् । मूर्च्छनं इन्द्रियमोहः । प्रमोहो मनोमात्रमोहः । तीव्रा रुजो वातकृताश्च तास्ताः दण्डापतानकादयः । रुधिरञ्च गच्छेत् मेहनभगगुदास्यघ्राणेभ्यः स्रवेत् । सर्व्वेन्द्रियार्थोपरमः इन्द्रियाणां कार्य्यनाशः ॥ * ॥ अथ मर्म्मशिरास्नायुसन्ध्यस्थ्नां विद्धानां पृथग्लक्षणमाह ।

"सुरेन्द्रगोपप्रतिमं प्रभूतं
रक्तं स्रवेत्तत्क्षयजश्च वायुः ।
करोति रोगान् विविधान् यथोक्तान्
शिरासु विद्धास्वथवा क्षतासु ॥"

सुरेन्द्रगोपो वार्षिकोत्थितकीटविशेषः । बीरबहुटी इति लोके विदितम् । प्रभूतं बहु । रोगान् शिरोऽभितापान्धताक्षेपकादीन् । विद्धासु शरादिना । क्षतासु खड्गादिना ।

"कौब्ज्यं शरीरावयवावसादः
क्रियास्वशक्तिस्तुमुला रुजाश्च ।
चिराद्व्रणो रोहति यस्य चापि
तं स्नायुविद्धं पुरुषं वदन्ति ॥"

कौब्ज्यं विद्धस्याङ्गस्य वक्रता । तुमुला महती ।

"शोफातिवृद्धिस्तुमुला रुजश्च
बलक्षयः सर्व्वत एव शोथः ।
क्षते तु सन्धावचलाचलेषु
स्यात् सन्धिकर्म्मोपरमश्च लिङ्गम् ॥"

सर्व्वत एव शोथः सर्व्वसन्धीन् व्याप्य शोथः । उपरमः नाशः ।

"घोरा रुजो यस्य निशादिनेषु
सर्व्वास्ववस्थासु न चैति शान्तिम् ।
भिषग्विपश्चिद्विदितार्थसूत्र-
स्तमस्थिविद्धं पुरुषं प्रवक्ति ॥"

सर्व्वास्ववस्थासु शयनासनादिकासु । विदितार्थसूत्रः ज्ञातशास्त्रकः ॥ * ॥ अथ मर्म्मशिरादिविद्धलिङ्गानि पृथगभिधाय मर्म्मशिरादीनां विद्धानां पृथग्लिङ्गान्युद्दिशन्नाह ।

"यथास्वमेतानि विभावयेच्च
लिङ्गानि मर्म्मस्वपि ताड़ितेषु ।"
यथोक्तं शिरादीनां लिङ्गानां एतानि लिङ्गानि पृथगुक्तानि लिङ्गानि चकारात् भ्रमप्रलापादीनि च मर्म्मस्वपि शिरादिषु ताड़ितेषु विद्धेषु । विभावयेत् जानीयात् ॥ * ॥ मर्म्मव्रणानामुपद्रवानाह ।
"विसर्पश्च पक्षाघातश्च शिरास्तम्भोऽपतानकः ।
मोहोन्मादौ व्रणे पीड़ा ज्वरस्तृष्णा हनुग्रहः ॥
कासश्छर्द्दिरतीसारो हिक्का श्वासः सवेपथुः ।
षोड़शोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः ॥"
अथाग्निदग्धस्य निदानमाह ।
"तत्राग्निर्द्विविधो ज्ञेयः स्निग्धरूक्षः समाश्रितः ।
स्निग्धस्तत्र तु तैलादि रूक्षं लौहादि कथ्यते ॥"
अग्निदग्धं चतुर्विधमाह ।
"अग्निदग्धं चतुर्द्धा स्यात् प्लुष्टं दुर्दग्धमेव च ।
सम्यग्दग्धं तथा तीव्रदग्धञ्च परिकीर्त्तितम् ॥"
तेषां लक्षणमाह ।
"यद्विवर्णमतिप्लुष्टं तत् प्लुष्टमभिधीयते ।
तीव्रदाहो व्यथावन्तो यत्र स्फोटा भवन्ति हि ।
चिरेण ते प्रशाम्यन्ति तद्दुर्दग्धमुदाहृतम् ॥
ताम्रवर्णमगम्भीरं दाहपीड़ाविवर्जितम् ।
सुसंस्थितञ्च कथितं सम्यग्दग्धं भिषग्वरैः ॥
लम्बांसं यत्र दग्धं स्याद्विशेषो वपुषस्तथा ।
शिरास्नाय्वस्थिसन्धीनां तं वदन्त्यतिदग्धकम् ॥
अत्यर्थं वेदना दाहो ज्वरस्तृष्णा मूर्च्छया सह ।
स्यादुग्रदग्धस्तु चिरादपीह रूढ़ो याति विवर्णताम् ॥"* ॥
अथ व्रणस्य चिकित्सा ।
"आदौ शोथहरो लेपस्ततस्तु परिषेचनम् ।
विम्लापनमवस्रावश्चतः स्यादुपनाहनम् ॥
पाचनं भेदनं पश्चात् पीड़नं शोधनं तथा ।
रोपणं वर्णकरणं व्रणस्यैते क्रमाः स्मृताः ॥"
क्रमाश्चिकित्साः । सुश्रुते व्रणस्य षष्टिरुपक्रमा लिखिताः सन्ति । ते सर्व्वेऽत्र विस्तरभयान्न लिखिताः ॥ * ॥ तत्रादौ शोथहरं लेपमाह ।
"यथा प्रज्वलिते वेश्मन्यम्भसा परिषेचनम् ।
क्षिप्रं प्रशमयत्यग्निमेवमालेपनं व्रणम् ॥
बीजपूरजटाहिंस्रा देवदारु महौषधम् ।
रास्नाग्निमन्थौ लेपोऽयं वातशोथविनाशनः ॥*
मधुकं चन्दनं दूर्व्वा नलमूलञ्च पद्मकम् ।
उशीरं वालकं पद्मं लेपोऽयं पित्तशोथहा ॥
न्यग्रोधोडुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
ससर्पिष्कैः प्रदेहः स्याच्छोथे पित्तसमुद्भवे ॥*॥
आगन्तुजे रक्तजे च लेप एषोऽभिपूजितः ।
अजगन्धाश्वगन्धा च मञ्जिष्ठा सरलस्तथा ।
एकैषिकाग्निमन्था च लेपोऽयं श्लेष्मशोथहा ॥"
अजशृङ्गी मेढ़ाशृङ्गी । एकैषिका श्यामनिशोतः
"लाक्षा पुराणपिण्याकं शिग्रुत्वक् त्रिवृता शिवा ।
मूत्रपिष्टः सुखोष्णोऽयं प्रलेपः श्लेष्मशोथहा ॥*॥

न रात्रौ लेपनं दद्याद्दत्तं च पतितं तथा ।
न च पर्य्युषितं शुष्यमाणं तथैव धारयेत् ॥"
दत्तं दत्तमेव पुनर्न दद्यात् । पतितं दोषभावं वहनात् पतितम् । पर्य्युषितं लेपनद्रव्यकालातीतं यत् पर्य्युषितम् ।
"तमसा पिहितो ह्युष्मा रोमकूपमुखे स्थितः ।
विना तेनैव निर्याति रात्रौ नावेक्षयेत्ततः ॥
रात्रावपि प्रयोक्तव्यो विधातव्यो विचक्षणैः ।
अपाकिशोथे गम्भीरे रक्तपित्तसमुद्भवे ॥"*॥
अथ परिषेचनमाह ।
"यथाम्बुभिः सिच्यमानः शान्तिमग्निर्हि गच्छति ।
दोषाग्निरेवं सहसा परिषेकेण शाम्यति ॥"
तद्यथा,—
"वातशोथनिवार्यैस्तैलैर्मांसरसैः शृतैः ।
उष्णैः संसेचयेत् शोथं वातिकं काञ्जिकेन तु ॥
पित्तरक्ताभिघातोत्थं शोथं सिञ्चेत्तु शीतलैः ।
क्षीराम्बुमधुमृद्वीकारसैः पित्तहरैः शृतैः ॥
कफशोथनिःक्वाथैरुष्णैः परिषेचयेत् ।
तैलक्षाराम्बुमूत्रैश्च शोथं श्लेष्मसमुद्भवम् ॥"*॥
अथ विम्लापनमाह ।
"स्तब्धः कठिनशोथस्य कार्य्यं विम्लापनं व्रणे ।"
अथ शोथस्य विम्लापनस्य विधिमाह । सुश्रुतः ।
"अभ्यज्य स्वेदयित्वा तु वेणुनाड्या शनैः शनैः ।
विमर्द्दयेद्भिषक् सम्यक् तलेनाङ्गुष्ठकेन वा ॥"
वेणुनाड्या स्वेदयित्वा उष्णस्वेदं कृत्वा ॥ * ॥
रक्तमोक्षणमाह ।
"वेदनोपशमार्थाय तथा पाकशमाय च ।
अचिरोत्पतिते शोथे शोणितस्रावणं चरेत् ॥"
चरेत् कुर्य्यात् ।
"एकतस्तु क्रियाः सर्व्वा रक्तमोक्षणमेकतः ।
रक्तं हि व्रणमूलं तन्नैवास्ति न चापि रुक् ॥
विवर्णे कठिने श्यावे व्रणे चात्यन्तवेदने ।
अविषेऽपि विशेषेण जलौकोभिः पदैरपि ॥"
शोणितस्रावणं चरेदित्यनेनान्वयः ॥ * ॥
अथोपनाहस्वेदमाह । तस्य विधिर्भेषजसाधनप्रकारश्च कथित एवास्ति ।
"व्रणावतां शाखानां कठिनानां तथैव च ।
शोथानां स्वेदनं कार्य्यं ये चाप्येवं विधास्तथा ॥"
शोथानां आमानां तथा; पक्वशोथाः तेषा-अपि स्वेदनं कार्य्यम् ।
"शोथयोरुपनाहस्तु दद्यादामविदग्धयोः ।
अशान्तमविदग्धस्तु विदग्धः पाकमेति च ॥"
अविदग्धः आमः । विदग्धः पाकोन्मुखः । च तथा,—
"दशमूली वचा रास्ना वाजिगन्धा प्रसारिणी ।
मूलं शणस्य वातारिविल्वकारपुनर्नवाः ॥
शोभाञ्जनः कणा चापि सैन्धवं त्रिवृमिश्रकम् ।
शुक्लाकार्यवशोर्व्वारुकलवी च कुमारिका ॥
तिला यवाश्च सिद्धार्थः कुठेरो मूलकं शितिः ।
यवाम्लैरम्लमिश्रैश्च स्नेहरकेन संयुतैः ॥
कल्कोष्णैः सुखोष्णैश्च स्वेदयेद्विधिवच्छनैः ।
अनेन प्रशमं याति वातशोथो न संशयः ॥"

दशमूलाद्युपनाहमाह ।
"पुनर्नवा दारु शुण्ठी शिग्रुः सिद्धार्थ एव च ।
अम्लपिष्टः सुखोष्णोऽयं प्रलेपः सर्व्वशोथहा ॥"
पुनर्नवादिः ॥ * ॥
अथ पाचनमाह ।
"न प्रशाम्यति यः शोथः प्रलेपादिविधानतः ।
द्रव्याणि पाचनीयानि दद्यात्तत्रोपनाहने ॥"
पाचनद्रव्याण्याह ।
"शणमूलकशिग्रूणां फलानि तिलसर्षपाः ।
अतसीसक्तवः किण्वमुष्णद्रव्याश्च पाचनम् ॥"
शणमूलादीनामतसान्ताः सक्तवः कर्त्तव्याः । किण्वं सुराबीजम् । यवगोधूममाषादिप्रकारः अथवोष्णद्रव्यं व्रणस्य पाचनं भवति ॥ * ॥
अथ भेदनमाह ।
"अन्तःपूयेषु व्रणेषु तथैवोत्सङ्गवत्स्वपि ।
गतिमत्सु च रोगेषु भेदनं संप्रयुज्यते ॥"
उत्सङ्गवत्सु कोटरवत्सु । गतिमत्सु नाड़ीव्रणेषु । भेदनं शस्त्रमौषधकर्म्म च ॥ * ॥ तत्र शस्त्रेण भेदनमाह ।
"रोगे व्यधनसाध्ये तु यथोद्दिष्टं प्रमाणतः ।
शस्त्रं विधाय दोषस्तु स्रावयेत् कथितं यथा ॥"
क्वचिच्छस्त्रनिषेधापवादमाह ।
"बालवृद्धासहक्षीणभीरूणां योषितामपि ।
व्रणेषु मर्म्मजातेषु भेदनं द्रव्यलेपनम् ॥"
तच्च भेदमाह ।
"चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः ।
कपोतकङ्कगृध्राणां मलं लेपेन दारणम् ॥"
चिरविल्वः करञ्जः । अग्निकः भल्लातकः ।
"भल्लातकास्थिचर्व्यं तु रक्तचन्दनमिष्यते ॥"
हयमारकः करवीरः । दारणं भेदनम् ।
"क्षारद्रव्यं तथा क्षारो दारणः परिकीर्त्तितः ॥"
क्षारद्रव्यं अपामार्गादि । क्षारः सर्ज्जिका यवक्षारादिः ।
"हस्तिदन्तो जले पिष्टो बिन्दुमात्रः प्रलेपतः ।
अत्यन्तकठिने शोथे कथितो भेदनः परः ॥"*॥
अथ पीड़नमाह ।
"पूयगर्भानणुद्वारान् व्रणान् मर्म्मगतानपि ।
यथोक्तैः पीड़नद्रव्यैः समन्तात् परिपीड़येत् ॥"
पीड़नद्रव्याण्याह ।
"द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि प्रपीड़येत् ।
यवगोधूममाषाणां चूर्णानि च समासतः ॥
शुष्यमाणमुपेक्षेत प्रलेपं पीड़नं प्रति ।
न चापि मुखमालिम्पेत्तथा दोषः प्रसिच्यते ॥"
पीड़नं प्रति पीड़नद्रव्यलेपं प्रति । पीड़नद्रव्यलेपे शुष्यन्तमपि धारयेदित्यर्थः । तथा व्रणस्य मुखे लेपं विना प्रसिच्यते स्रवति ॥ * ॥
अथ शोधनमाह ।
"व्रणस्य त्वविशुद्धस्य क्वाथः शुद्धिकरः परः ।
पटोलनिम्बपत्रस्य सर्व्वथैव प्रयुज्यते ॥
वातिके दशमूलानां क्षीरिणां पैत्तिके व्रणे ।
आरग्वधादेः कफजे कषायः शोधने हितः ॥

"आम्रजम्ब्वाककदम्बनी-
पिष्पल्यादीषपत्रकषायमपुके: ।
घर्षैः कृत्वा व्रणपिचेव नाडीं
कुम्भीरपिष्टा व्रव विशकेष ॥
नाडाः शुक्लेन वर्त्तनं कृतत् तत्ता प्रवेशयेत् ।
कुष्ठको भक्तिविधिना लेपं व्राणादिवारयितम् ॥
एवमस्याव पलेपं कृतं वा कारं तथा ।
पलेपं बहुपनं पत्रं कारं वा तथैव च ॥"

इति वा पाठः ।

"नाडा अभ्यन्तरे वैद्यो लघुहस्तः प्रवेशयेत् ।
कर्पूरकारशेक्षेत्र सिद्धार्थकभवं भिषक् ।
पचेत् सिन्दूरकल्केन नाडीदुष्टव्रणापहम् ॥
गुग्गुलुत्रिफलाव्योषैः समांशैराज्ययोजितम् ।
अक्षप्रमाणां गुटिकां खादेच्छीताम्बुना नरः ॥
नाडीदुष्टव्रणं शूलभगन्दरम् ।
गुल्मं च गुदजान् हन्यात् पचिराट् यमानिव ॥"
सप्ताङ्गो गुग्गुलुः । इति नाडीव्रणाधिकारः ॥०॥
भगन्दरस्य निदानं चिकित्सा च भगन्दरशब्दे द्रष्टव्यम् । उपदंशस्य निदानाद्युपदंशशब्दे द्रष्टव्यम् ॥०॥ अथोपदंशस्य चिकित्सा ।
"उपदंशेषु सर्वेषु स्निग्धस्विन्नस्य देहिनः ।
मेढ्रमध्ये शिरां विध्येत् पातयेद्वा जलौकसः ॥
सद्यो निर्हृतदोषस्य रुक्शोथावुपशाम्यतः ।
पाको निवार्य्यो यत्नेन शिश्नक्षयकरः स यत् ॥
पटोलनिम्बत्रिफलागुडूची-
क्वाथं पिबेद्वा खदिरासनाभ्याम् ।
क्वाथं तथा शोथमपाकरोति
सर्व्वोपदंशेषु ततो हितोऽयम् ॥
उपदंशेषु पक्वेषु व्रणप्रक्षालनं हितम् ।
त्रिफलायाः कषायेण भृङ्गराजरसेन वा ॥
नीलोत्पलं सुखकरं पद्मं सौगन्धिकं तथा ।
एव चूर्णं मूत्रजाद्वं प्रक्षेपणाय प्रशस्यते ॥
जम्ब्वाम्रफलपूर्वेण रसेन दाडिमत्वचः ।
गुग्गुलनागदन्तीं कुर्य्याल्लेपं पूयवर्जितं वा ॥
दहेत् कटाहे त्रिफलां तन्मसी मधुसंयुता ।
प्रक्षेपेणोपदंशस्य व्रणः सद्यः प्ररोहयेत् ॥
पटोलनिम्बत्रिफलाकिरात-
क्वाथं पिबेद्वा खदिरासनाभ्याम् ।
सगुग्गुलुं वा त्रिफलायुतं वा
सर्व्वोपदंशोपहरः प्रयोगः ॥
भूनिम्बनिम्बत्रिफलापटोल-
करञ्जजातीखदिरासनानाम् ।
कषायकल्कैः प्रणमाशु चाज्यं
सर्व्वोपदंशोपहरं प्रदिष्टम् ॥

इति भूनिम्बादिघृतम् ।

"हृतानि यानि पीतानि कुष्ठे नाडीव्रणे तथा ।
उपदंशे प्रयोज्यानि तैकान्यङ्गानि सर्पिषि ॥
कारस्करेण संछिन्न शिश्नपतितमिश्रितः ।
दृष्टेव तामलकाभ्यां चिकित्सां समाचरेत् ॥"

इत्युपदंशाधिकारः ॥०॥

शूकदोषाधिकारः शूकदोषशब्दे द्रष्टव्यः । इति भावप्रकाशः ॥०॥ अथ व्रणनाशकसेव्यम् ।
"कङ्कुष्ठं वटकं चव्यमुग्रकमवाद्युषम् ।
पिप्पलं बकुलं पञ्चपत्रबीजानिमूलकम् ॥
मधूकमाम्रकर्णं च परं पलितपरम् ।
शिरीषवीर्ये वसकमेवत् कायेन वाचितम् ।
देवे वहित व्रणान्नीयानिवारकमयावपि ॥"

इति गारुडे १८० अध्यायः ॥

व्रणकृत्, पुं, (व्रणं करोतीति । कृ + क्विप् । तुगागमश्च ।) भल्लातकः । इति रत्नमाला ॥ व्रणकारके, त्रि ॥
व्रणकेतुघ्नी, स्त्री, (व्रणकेतुं हन्तीति । हन + टक् । ङीप् ।) कृष्णशीशपुष्पः । इति राजनिर्घण्टः ॥
व्रणद्विट्, [ष्] पुं, (व्रणस्य द्विट् शत्रुः ।) नालकम्पिल्ला । इति शब्दचन्द्रिका । व्रणवैरी, त्रि ।
व्रणघ्नः, पुं, (व्रणं हन्तीति । हन + कः ।) एरण्डवृक्षः । इति शब्दचन्द्रिका । व्रणघातके, त्रि ॥
व्रणघ्ना, स्त्री, (व्रणं हन्तीति । हन + कः । स्त्रियां टाप् ।) गुडूची । इति शब्दचन्द्रिका ॥
व्रणहृत्, पुं, (व्रणं हरतीति । हृ + क्विप् । तुक् च ।) कालिकावृक्षः । इति राजनिर्घण्टः ॥
व्रणारिः, पुं, (व्रणस्य अरिः शत्रुः ।) बोलम् । अगस्त्यवृक्षः । इति राजनिर्घण्टः ॥
व्रतं, क्ली पुं, भक्षणम् । इत्युणादिकोषः ॥ (व्रियते इति । वृञ् वरणे + बाहुलकात् अतच् । स च कित् ।) पुण्यजनकोपवासादि । तत्पर्य्यायः । नियमः २ पुण्यकम् ३ । इत्यमरः ॥ नियामः ४ संयमः ५ । इति शब्दरत्नावली ॥ अथ व्रतविधिः । तत्रारम्भप्रतिष्ठयोर्व्वर्ज्यकालमाह ज्योतिषे । गुरोर्भृगोरस्तबाल्ये वार्द्धके सिंहगे गुरौ इति । तथा बाले च सिंहमासे मलम् । मलप्रतिष्ठातस्थारम्भवृषवर्ज्यम् ॥०॥ बुधाष्टमीव्रते विशेषो राजमार्त्तण्डोक्तो यथा,—
"विकेश्वरात्मसंयुक्ता पूर्णा वा च सिताष्टमी ।
तस्यां नियमकर्त्तारो न स्युः खण्डितसम्पदः ॥
चतुर्थे मकरे याते देवे चापति माधवे ।
बुधाष्टमीं प्रकुर्वीत वर्ज्जयित्वा तु चैत्रजाम् ॥
मधुसे च श्रावणे भाद्राव्यापे मघो तथा ।
बुधाष्टमीं न कुर्वीत कृता हन्ति पुराकृतम् ॥"
अथ व्रताङ्गस्नानम् । तत्र देवलः ।
"अस्नात्वा प्रातराहारं कृत्वा चैव समाहितः ।
सूर्य्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत् ॥
अक्षपर्णं तथा क्षौमं चक्रमालिन्यवर्ज्जनम् ।
प्रतिज्ञेवापि च नादि यदिच्छाधीति निश्चयः ॥"
अथ प्रातरिच्छाञ्जनेन नाच्यः । किन्तु व्रतनियमेनाक्षयोऽक्षलिक्षात् ।
"प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकम् ।
नापराह्णे न मध्याह्ने पित्र्यकाले हि तौ स्मृतौ ॥"
इति वराहपुराणे वचनान्तरम् । तदपराह्णा प्रातराहारमिति ।
"तुलसिच्छिद्रपत्रं प्रीतं विप्राणां अर्व्वाचिन्त्य निम्नम् ।
अपरेण च तथा तमास्थित्वा वाह्नेयरतरा-
मामः ॥"
इति कृष्णोपयरिधिष्टादेकाहारं पूर्व्वदिने कृता परदिने स्नात्वा च सूर्य्यादिदेवेभ्यो निवेद्य । ओं सूर्य्यः सोमो यम इत्यादिमन्त्रेण सान्निध्यं प्रार्थ्य व्रतमाचरेत् । ततः सङ्कल्पयेत् । यद्वा सूर्य्यादिदेवेभ्यो निवेद्य पूजनीयदेवादि कृत्वा व्रतमाचरेत् व्रतं कुर्य्यात् । तद्विधानञ्च प्रायश्चित्तवर्त्तिनि ।
"गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासन्तु गृह्णीयात् यद्वा वार्य्येव धारयेत् ॥"०॥
कर्म्मादौ अर्घ्यपूजामाह मत्स्यपुराणम् ।
"यावन्न दीयते चार्घ्यं भास्कराय महात्मने ।
तावन्न पूजयेद्विष्णुं शङ्करं वा महेश्वरीम् ॥"
नवग्रहपूजामाह मत्स्यपुराणम् ।
"नवग्रहमखं कृत्वा ततः कर्म्म समारभेत् ।
अन्यथा फलदं पुंसां न काम्यं जायते क्वचित् ॥"
आदित्यादिपूजामाह पद्मपुराणम् ।
"आदित्यं गणनाथञ्च देवीं रुद्रं यथाक्रमम् ।
नारायणं विशुद्धाख्यं अन्ते च कुलदेवताम् ॥"
यत्तु ।
"देवतादौ यदा मोहात् गणेशञ्च न पूजयेत् ।
तदा पूजाफलं हन्ति विघ्नराजो गणाधिपः ॥"
इत्यनेन गणेशपूजनस्यादित्वमुक्तं तत् कर्म्मपूजेतरपरम् । कुलदेवतैवञ्च कुलाद्युपलक्षणम् ।
"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥"
तत्र विशेषयति मत्स्यपुराणम् ।
"गर्भिणी सूतिका नक्तं कुमारी च रजस्वला ।
यदाशुद्धा तदान्येन कारयेत् क्रियते सदा ॥
उपवासाशक्तौ तु नक्तं भोजनं कुर्वीत ।
"उपवासेष्वशक्तानां नक्तं भोजनमिष्यते ।"
इति वचनान्तरात् अशुद्धा चेत् पूजां कारयेत् । कायिकञ्चोपवासादिकं सदा शुद्धया अशुद्धया वा स्वयं क्रियते । अत्यन्तासामर्थ्ये पुत्रादिप्रतिनिधिद्वारा उपवासः कार्य्यः । तदभावेऽनुकल्पः । गरुडपुराणम् ।
"भार्य्या भर्त्तृव्रतं कुर्य्यात् भार्य्यायाश्च पति-
स्तथा ।
असामर्थ्यात् द्वयोस्ताभ्यां व्रतभङ्गो न जायते ॥
पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ।
एषामभाव एवाथ्यं ब्राह्मणं विनियोजयेत् ॥"
आरब्धव्रतस्यासमाप्तौ मरणेऽपि तत्फलप्राप्तिमाहाङ्गिराः ।
"यो यदर्थं चरेद्धर्म्मं न समाप्य मृतो भवेत् ।
स तत्पुण्यफलं प्रेत्य प्राप्नुयादित्युवाच वै ॥"
प्रेत्य परलोके । छागलेयपुराणम् ।
"क्रोधात् लोभात् प्रमादाद्वा व्रतभङ्गो यदा
भवेत् ।
उपवासत्रयं कुर्य्यात् कुर्य्याद्वा केशमुण्डनम् ॥"
मोहो भ्रमः । प्रमादोऽनवधानता । चाण्डालः स्पृष्टश्चेत् तेन सुतकाश्च कार्य्यं तच्चनाकरणे त्रिगुणं प्रायश्चित्तम् । उपवासत्रयाशक्तौ चतुर्विंशतिपणा देयाः । पद्मपुराणम् ।

"वपनं नैव नारीणां नानुव्रज्याजपादिकम् ।
न गोष्ठे शयनं तासां न च दद्याद्गवाजिनम् ॥
सर्व्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम् ।
एवमेव तु नारीणां तुण्डमुण्डनमादिशेत् ॥"
इति गोवधप्रकरणे विवेचितम् ।
"प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् ।
पूर्व्वं गृहीत्वा सङ्कल्पं प्रमादान्नाचरेद्यदि ।
जीवन् भवति चण्डालो मृतः श्वा चाभि-
जायते ॥"
इति प्रायश्चित्तविवेकधृतवचनम् ॥
देवलः ।
"सर्व्वभूतभयं व्याधिः प्रमादो गुर्व्वनुशासनम् ।
अव्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रतः ॥"
भर्त्तुरनुज्ञया स्त्रीणां व्रतकरणे न दोषः । कामं
भर्त्तुरनुज्ञया व्रतोपवासनियमेज्यादीनामभ्यासः
स्त्रीधर्म्म इति संवत्सरप्रदीपधृतशङ्खवचनात् ॥
अथ कथाश्रवणमाह देवीपुराणम् ।
"तद्दानं तत्तपः कामं तत्कथाश्रवणादिकम् ।
उपवासकृतो ह्येते गुणाः प्रोक्ता मनीषिभिः ॥"
अथ व्रतप्रतिष्ठाविधिः ।
श्रीभगवानुवाच ।
"वापीकूपतडागानां मठसंक्रमवेश्मनाम् ।
नियमव्रतकृच्छ्राणां प्रतिष्ठां शृणु सत्तम ॥
आचार्य्य विधिना वह्निं समाधाय विचक्षणः ।
स्थिलो पूर्व्ववटं कांस्यं सम्भवं स्थापयेद्बुधः ॥
अङ्गान् सर्व्वं समासाद्य श्रपयेद्यवमयं चरुम् ।
क्षीरेण कपिलायास्तु तद्विष्णोरिति साधकः ॥
प्रणवेनाभिघार्य्याथ दर्व्व्या संघट्टयेत् ततः ।
साधयित्वावतार्य्याथ तद्विष्णोरिति होमयेत् ॥
व्याहृत्या चैव गायत्र्या तद्विप्रासेति होमयेत् ।
विश्वतश्चक्षुरित्युक्ता वेदादीर्होमयेत्तथा ॥
ॐ भूरग्नये स्वाहा । ॐ सूर्य्याय स्वाहा । ॐ
प्रजापतये स्वाहा । ॐ अन्तरीक्षाय स्वाहा ।
ॐ द्यौः स्वाहा । ॐ ब्रह्मणे स्वाहा । ॐ
पृथिव्यै स्वाहा । ॐ महाराजाय स्वाहा ।
ॐ सोमं राजानमिति जुहुयात् । ॐ लोक-
पालेभ्यः स्वाहा । स्वस्वमन्त्रैर्जुहुयाद्ग्रहेभ्यश्च ।
एवं हुत्वा चरोर्भागं दद्यात् दशदिशां बलिम् ।
ततः पलाशसमिधा जुहेदष्टोत्तरं शतम् ॥
आज्यन्तु जुहुयात् पश्चादेभिर्मन्त्रैर्द्विजोत्तमः ।
ततः पुरुषसूक्तैश्च मन्त्रैराज्यन्तु होमयेत् ॥
इरावतीति जुहुयात् तिलान् घृतपरिप्लुतान् ।
हुत्वा च ग्रहविष्णोश्च देवानामनुयायिनम् ॥
ग्रहाणामाहुतीर्हुत्वा लोकेशानामथो पुनः ।
पर्व्वतानां नदीनाञ्च समुद्राणां तथैव च ॥
हुत्वा व्याहृतिभिर्दद्यात् स्रुचा पूर्णाहुतित्रयम् ।
वौषडन्तेन मन्त्रेण वैष्णवेन सुरोत्तम ॥
पञ्चगव्यञ्च संप्राश्य दद्यादाचार्य्यदक्षिणाम् ।
तिलपात्रं हेमयुक्तं सवत्सां गामलङ्कृताम् ।
प्रीयतां भगवान् विष्णुरित्युत्सृजेद्व्रतं नरः ॥*॥
आरामं कारयेद्यस्तु नन्दने स चिरं वसेत् ।
मठप्रदानात् स्वर्लोकं प्राप्नोति पुरुषः सदा ॥
सेतुप्रदानादिन्द्रस्य लोकमाप्नोति मानवः ।
प्रपादानाद्वारुणस्य लोकमाप्नोत्यसंशयम् ॥
संक्रमाणान्तु यः कर्त्ता दुर्गतिं तरते नरः ।
स्वर्गलोके च निवसेत् इष्टकासेतुकृत्तथा ॥
गोमार्गस्य तथा कर्त्ता गोलोके क्रीडते चिरम् ।
नियमव्रतकृद्याति विष्णुलोकं नरोत्तमः ॥
कृच्छ्रकृत् स्वर्गमाप्नोति सर्व्वपापविवर्ज्जितः ।
अनेन विधिना मर्त्त्यः संपूर्णं फलमाप्नुयात् ॥*॥
इयं प्रतिष्ठा सामान्या सर्व्वसाधारणा च ।
कर्त्तव्या देशिकैर्मन्त्रैः प्रतिष्ठा यत्र विद्यते ॥
इति संक्षेपतः प्रोक्तः समुदायविधिस्तव ।
सर्व्वेषामेव धर्म्माणां सर्व्वकामफलप्रदः ॥
सर्व्वधर्म्मेषु कर्त्तव्या प्रतिष्ठा विधिना बुधैः ।
फलार्थिभिरप्रतिष्ठं यस्मान्निष्फलमुच्यते ॥"
इति हयशीर्षे समुदायप्रतिष्ठापटलः ॥ *॥
आचार्य्य वैदिकेन स्वगृह्योक्तविधिनेति यावत् ।
स्थिलेति उद्दूखलोपलक्षणम् । कांस्यं अग्निप्रण-
यनार्थम् । कांस्येन अग्निप्रणयनमाह । गृह्य-
संग्रहे ।
"शुभं पात्रन्तु कांस्यं स्यात्तेनाग्निं प्रणयेद्-
बुधः ॥
तस्याभावे शरावेण नवेनाभिमुखश्च तम् ।
सर्व्वतः पाणिपादान्तः सर्व्वतोऽक्षिशिरोमुखः ।
विश्वरूपो महानग्निः प्रणीतः सर्व्वकर्म्मसु ॥"
एवञ्चाग्निप्रणयनानन्तरं सर्व्वत इत्यस्य पाठो
युक्तः । प्रणीत इति मन्त्रलिङ्गात् । अन्यथा
स्थापनानन्तरं एतदभिधानं व्यर्थं स्यात् ॥ * ॥
अत्र च पाकाङ्गत्वात् शाट्यायनमग्निमाह
गृह्यासंग्रहः ।
"प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहसः ।
पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा ।
आहूय चैव होतव्यं यत्र यो विहितोऽनलः ॥"
प्रायश्चित्तं होमकर्म्मवैगुण्यसमाधानार्थं प्राय-
श्चित्तात्मकमहाव्याहृतिहोमादौ । तथा च
छन्दोगपरिशिष्टम् ।
"यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत् ।
चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा ॥
अपि वा ज्ञातमित्येषा प्राजापत्यापि वाहुतिः ।
होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिः
स्मृतः ॥"
अथ त्रिविकल्प इत्यभिधानात् सामगानां भव-
देवभट्टोक्तशाट्यायनहोमो निष्प्रामाणिकः ।
अत्रासुकाम्ये इन्द्राणाञ्चानञ्च इत्युचार्य्य यवा-
भावे व्रीह्यादिभिरपि होमः ।
"हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन् सर्व्वाभावे विवर्ज्जयेत् ॥
यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥"
इति छन्दोगपरिशिष्टात् ।
तत्र गोभिलेन अथ हविर्निर्व्वपति व्रीहीन्
यवान् वा कांस्ये चरुस्थाल्यां वा अमुष्मै त्वा
जुष्टं निर्व्वपामीति देवतानामोद्देशः । बहुद-
यजुषा द्विवृत्ताणीत्यनेन निर्व्वापक्रमाभिधानात्
सामगेन तन्मात्रं कर्त्तव्यम् । अत्र च विष्णवे
त्वा जुष्टं निर्व्वपामीत्यनेन यजुषा चरुं इत्यभि-
धानात् हवनीयनिर्व्वापप्रयादिचरुनिष्पत्तिः
कर्त्तव्या । तत्र छन्दोगपरिशिष्टम् ।
"देवतासंख्यया ग्राह्या निर्व्वापाश्च पृथक् पृथक् ।
तूष्णीं द्विरेव गृह्णीयाद्धोमश्चापि पृथक् पृथक् ॥"
अत्र देवतासंख्यया पृथक् पृथक् निर्व्वापः ।
अनुनिर्व्वापकर्म्मणैव । होमोऽपि पृथक् पृथ-
गेवेति । आलस्यादिपुरुषदोषेण गृहीतमक्ष-
तेनापि मन्त्रेण निर्व्वापादिकं समाचरन्ति
याज्ञिकाः ।
"घाते ध्यने तथा च्छिन्ने सामान्ये मान्त्रिके
तथा ।
षष्ठे मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः ॥"
इत्युक्तेः । मान्त्रिके मन्त्रसाध्ये अवघातादौ ध्यने
तत्काले मन्त्रपाठाभावे मन्त्राः प्रयोक्तव्याः ।
कपिलाया अभावे अन्यधेनोरपि दुग्धेन सप्रणव-
तद्विष्णोरित्यनेनाभिघार्य्य दर्व्व्या दक्षिणावर्त्तेन
संमिश्रयेत् । दर्व्वी च प्रादेशप्रमाणा द्व्यङ्गुल-
विस्तारा ग्राह्या ।
"इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत् ।
वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम् ॥
एषैव दर्व्वी यस्तत्र विशेषस्तमहं ब्रुवे ।
दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयोनन्तु मेक्षणम् ॥"
इति छन्दोगपरिशिष्टात् ।
इध्मार्द्धप्रमाणं प्रादेशमात्रम् । प्रादेशद्वयमिध्मस्य
प्रमाणं परिकीर्त्तितम् । इति छन्दोगपरि-
शिष्टोक्तेः । अर्थत्यनेन स्वगृह्योक्तविषकर्म्मसमा-
पनानन्तरं प्रकृतहोमः । अत्र बहुदेवताक-
चरुहोमादुपघातहोमः ।
"चरौ तु बहुदैवत्ये होमः स्यादुपघातवत् ।"
इति छन्दोगपरिशिष्टधृतवचनात् ॥
उपघातलक्षणमाह गृह्यासंग्रहः ।
"पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः ।
हूयते चानुपस्तीर्य्य उपघातः स उच्यते ॥
यद्युपघातं जुहुयाच्चरावाज्यं समापयेत् ।
मेक्षणेन तु होतव्यं नाज्यभागो न स्विष्टकृत् ॥"
अनुपस्तीर्य्य इत्यनेन स्रुचि यच्चतुरावत्तं पञ्चा-
वत्तं वा उपस्तरणादिकं तदत्र नास्ति तेन
मेक्षणादिना सकृत् गृहीत्वा होतव्यम् ॥ * ॥
प्रकृतहोमात् प्राक् वह्निपूजनमाह मार्कण्डेय-
पुराणम् ।
"पूजयेच्च ततो वह्निं दद्याच्चाप्याहुतीः क्रमात् ।"
तत इति वह्निनामकरणध्यानानन्तरम् ।
होमाहुतौ स्मृतिः ।
"मन्त्रोङ्कारपूर्व्वेण स्वाहान्तेन विचक्षणः ।
स्वाहावसाने जुहुयाद्ध्यायन् वै मन्त्रदेवताम् ॥"
ततस्तद्विष्णोरितिमन्त्रेण चरुणा होमयेत् । एवं
व्याहृत्या प्रत्येकं भूरित्यादिना । गायत्र्या
सावित्र्या । तद्विप्रासेति तद्विप्रासो विपन्यवो
जागृवांस इत्यादिना । विश्वत इति विश्वत-

अप्सुवस विश्वतोमुख इत्यादिना। वेदाद्यैः अग्निमीळे इत्यादिना। इषेत्वोर्ज्जेत्वा इत्यादिना। अग्न आयाहि इत्यादिना। शन्नो देवीरित्यादिना चतुर्भिः। भूरग्नये इत्याद्यष्टभिः। ततः सोमं राजानमित्यादिना। ततो लोकपालेभ्य इत्यादिना स्वस्वमन्त्रैस्तत्तद्दैवतत्वप्रादिक्पालमन्त्रैः। तत्र सामगानां इन्द्रस्य त्रातारमित्यादिना। अग्नेः अग्निं दूतं वृणीमहे इत्यादिना। यमस्य नाके सुपर्णमित्यादिना। निर्ऋतेर्नैत्यादि निर्ऋतीनां इत्यादिना। वरुणस्य घृतवती भुवनाना-मित्यादिना। वायोः वात आवातु भेषजं इत्यादिना। सोमस्य सोमं राजानमित्यादिना। ईशानस्य अभि त्वा शूर नो नुम इत्यादिना। ब्रह्मणो ब्रह्मजज्ञानं प्रथममित्यादिना। अनन्तस्य चर्षणीधृतमित्यादिना। तथा च गोभिलीयकर्म्मप्रदीपे।

"त्रातारमिन्द्रमवितारमिन्द्रस्य परिकीर्त्तितः।
अग्निं दूतं वृणीमहे वह्नेर्मन्त्रो यमस्य मे॥
नाके सुपर्णमुपयत् वैत्याहिर्निर्ऋतेस्तथा।
घृतवतीति वरुणस्य वात आवातु भेषजम्॥
वायोर्मन्त्रः समुद्दिष्टः सोमं राजानमित्यपि।
सोमस्य मन्त्रः कथितस्त्वभित्वेतीश उच्यते॥"
ईशे ईशानस्य।
"ब्रह्मजज्ञानं प्रथमं ब्रह्मणः परिकीर्त्तितः।
चर्षणीधृतमिति च शेषस्य समुदाहृतः॥"
ग्रहेभ्यः नवग्रहेभ्यः स्वस्वमन्त्रैः सर्व्ववेदसाधारणैः। सूर्य्यस्याकृष्णेनेत्यादिना। सोमस्याप्यायस्वे-त्यादिना। मङ्गलस्याग्निर्मूर्द्धा इत्यादिना। बुधस्योद्बुध्यस्वेत्यादिना। बृहस्पतेर्बृहस्पते अतियदर्य्य इत्यादिना। शुक्रस्य शुक्रन्तेऽन्यद्यजतन्ते इत्यादिना। शनैश्चरस्य शन्नो देवीरित्यादिना। राहोः कयानश्चित्र इत्यादिना। केतोः केतुं कृण्वन्नित्यादिना। तथा च मत्स्यपुराणम्।
"आकृष्णेनेति सूर्य्याय होमः कार्य्यो विजानता।
आप्यायस्वेति सोमाय मन्त्रेण जुहुयात् पुनः॥
अग्निर्मूर्द्धा दिवो मन्त्रमिति भौमाय कीर्त्तयेत्।
अग्ने विवस्वदुषस इति सोमसुताय च॥
बृहस्पते परिदीया रथेनेति गुरोर्मतः।
शुक्रन्तेऽन्यदिति च शुक्रस्यापि निगद्यते॥
शनैश्चरायेति पुनः शन्नो देवीति होमयेत्।
कयानश्चित्र आभुव दूतो राहोरुदाहृतः।
केतुं कृण्वन्निति कुर्य्यात् केतूनामुपशान्तये॥"
एवं ग्रहहोमं समाप्य ग्रहेभ्य एव प्राच्यादि-दिग्भ्यः पायसबलिं दद्यात्। तद्यथा। एष पायसबलिः ॐ प्राच्यै दिशे नमः इत्यादिना। दक्षिणायै दिशे स्वाहा इति श्रुतिदर्शनात्। हरि-हरपद्धतिकल्पप्रदीपाभ्यां स्वाहान्तेन बलिदान-मुक्तम्। वस्तुतस्तु बलिप्रकरणे एव प्राच्यादि-भ्योऽहरहर्नित्यं प्रयोग इति गोभिलसूत्रे उक्तिलिङ्गनिर्द्देशात् दिशां दैवतानां बलौ प्रती-यते। अत स्वधानीतिपाठात् सुमुकमौर्य्ये? दक्षिणायै इत्यनाहत्य ॐ प्राच्यै दिशे नम इति बली प्रयुज्यते। एभिर्मन्त्रैस्तद्विष्णोः परमं पदं इत्यादिवाक्यमन्त्रैः। आज्यमिश्रिति तुष्यन्ते च अग्निहोमे तेषां आवर्त्तनात् मन्त्राकाङ्क्षायां प्राय-श्चित्तत्वेन तद्विष्णोरित्यस्य परिग्रहः। तत-द्विष्णोरिति मन्त्रेण स्वाहान्तेन घृताक्तयवाष्ट-समिद्धिरष्टोत्तरशतं जुहुयात्। पूर्व्वोक्तमन्त्रैः पूर्व्वोक्तदेवताभ्यः सुवेणाज्याहुतीर्जुहुयात्। पृथक्तत्तद्देवोक्तः। तत्र सामगानाम्। ॐ इदं विष्णुरिति। प्रेतवस्य विष्णोरिति। प्राकाश-मुपवेष इन्द्राय इति। वषट्ते विष्णविति। विष्णा-नूते इति। पुरुष एवेदमिति। सहस्रा वा इति। ततो विराड्विति। कयान इत्यादि पृथक्-कल्पम्। तथा च सामिधेनी श्रुतिः। इदं विष्णुः प्रेतवस्य विष्णोः प्राकाशमुपवेष इन्द्राय इति वाराहमन्त्रं पुरुषव्रते चैषा वैखानसामसंहितायां प्रयुञ्जन् विष्णुः प्रीणाति इति प्राकाशमुपवेष इन्द्राय इति वाराहमन्त्र-मित्यनेन एको मन्त्रः प्रकाशितः। पुरुष इत्य-नेन पुरुषपदयुक्तपञ्चमन्त्राः। मते इत्यनेन कयान-श्चित्र इत्येको मन्त्रः। सामगो जुहुयात्। यजुर्व्वेदी तु तत्र प्रतिष्ठाभिः सहस्रशीर्षेत्यादि ऋग्भिः षोडशाहुतीर्जुहुयात्। इरावतीति तिलान् घृताक्तान् सकृज्जुहुयात्। एवं मत्स्यानु-यायिभ्यः स्वाहा विष्णुयायिभ्यः स्वाहा ईशानानुयायिभ्यः स्वाहा। एवं पूर्व्वोक्तनव-ग्रहमन्त्रैः पूर्व्वोक्तदिक्पालमन्त्रैश्च जुहुयात्। एवं पर्व्वतेभ्यः स्वाहा नदीभ्यः स्वाहा नदेभ्यः स्वाहा समुद्रेभ्यः स्वाहा भूः स्वाहा भुवः स्वाहा इति जुहुयात्। ततः परिभाषासिद्धं व्याहृतिमहाव्याहृतिहोमं प्रायश्चित्तहोमञ्च कृत्वा स्रुवा तद्विष्णोरिति मन्त्रेण वौषडन्तेन पूर्णाहुतिमथ गृत्वाय जुहुयादिति विशेषोपा-दानात् नात्र व्याहृत्युक्तपूर्णहोमः। ततः पञ्चमन्त्रं पयस्विनीं प्राप्य प्रत्यक्षा वा हेमयुक्तं सवत्सां तिलपात्रं अलङ्कृतां गाञ्च दक्षिणा-माचार्य्याय दद्यात्। आचार्य्यपदञ्च।
"उपाचरति वेदार्थान् यज्ञविद्याः स्मृतीरपि।
श्रुतिस्मृतिसमापन्नमाचार्य्यं तं विदुर्बुधाः॥"
इति छन्दोगपरिशिष्टात्।
कर्म्मोपदेष्टृत्वाभिलेन आचार्य्यपदं स्वयं होतृ-पक्षे ब्रह्मपरं अन्यहोतृपक्षे ब्रह्महोतृद्वयपरम्। स्वयं ब्रह्महोतृकर्म्मकरणपक्षे पुस्तकधारक-परम्।
"यज्ञस्य दक्षिणा देया यत्र या परिकीर्त्तिता।
कर्म्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्॥
विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्द्धहरो भवेत्।
स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्॥"
इति छन्दोगपरिशिष्टकात्यायनात्।
एवं प्रकारविधिना अविज्ञापनादि प्रीयतां भग-वान् विष्णुरित्यन्तकर्म्मसंस्कारगोपथादितान-मिश्रमङ्गलस्थाद्विकरणान्यतरद्रूपा समुदाय-प्रतिष्ठा कर्त्तव्या। समुदायस्य प्रकृतगोपथादेः प्रतिष्ठा समुदायप्रतिष्ठा। तथा च कपिलपञ्च-रात्रम्।
"प्रतिष्ठाशब्दसंसिद्धिः प्रतिपूर्व्वाच्च तिष्ठतेः।
वस्तुत्वापादनानां संस्कारादौ प्रतिःस्थितिः॥"
तथा च गोपथादेवस्तुकर्म्मसंस्कारस्य प्रतिष्ठान-कत्वम्। अप्रतिष्ठन्तु निष्फलमित्युक्तः। एतद्-व्रतकर्म्मणा प्रीयतां भगवान् विष्णुरिति समा-पयेत्॥ *॥ अथ व्रतप्रतिष्ठाप्रयोगः। तत्र कृतनित्यक्रियः कथासमं व्रतं समाप्य तत्तद्देवता-प्रीतिकामो यथाशक्ति दानादि दद्यात्।
"व्रते देवगृहोत्सर्गे कूपादीनां प्रतिष्ठने।
दद्यात् षोडशदानानि किम्बा दानानि चैव वा॥"
इति दानसागरधृतवचनात्॥
ॐ तत् सदिदं कार्य्यं ॐ अद्येत्यादि अमुक-गोत्रोऽमुकदेवशर्म्मा तत्तद्व्रतफलप्राप्तिकामः कृतैतत् अमुकव्रतप्रतिष्ठामहं करिष्ये। स्त्री चेद्व्रतकारिणी तदा अमुकगोत्रामुकी देवी-त्यादृशं इति सङ्कल्पं कुर्य्यात्। ततो घटं संस्थाप्य पञ्च देवान् संपूज्य गौर्य्यादिषोडशमातृकाः संपूज्याः। पृथक्सदा नान्दीश्राद्धं कुर्य्यात्। तत उत्तराभिमुखं ब्राह्मणमुपवेश्य तत्समीपे आसनमानीय प्राङ्मुखो यजमानः ॐ साधु भवानास्तां इति तत्राञ्जलिं वदेत्। ॐ साध्वह-मासे इति प्रतिवचनम्। ॐ अर्च्चयिष्यामो भवन्तं इति पुनरुक्ते ॐ अर्च्चयेति प्रतिवचनम्। ततो वस्त्रालङ्कारगन्धपुष्पादिभिरभ्यर्च्य दक्षिणं जानु स्पृष्ट्वा ॐ अद्येत्यादि अमुकगोत्रममुक-देवशर्म्माणमर्च्चितं कृतैतदमुकव्रतप्रतिष्ठाकर्म्मणि होमादिकर्म्मकरणाय भवन्तमहं वृणे। ॐ वृतोऽस्मीति प्रतिवचनम्। ॐ यथाविहितं तत्कर्म्म कुरु। ॐ यथाज्ञानं करवाणि इति प्रतिवचनम्। ततो वेदीं पञ्चगव्येनाभ्युक्ष्य पूर्व्वं पञ्च घटान् घटमेकं वा संस्थाप्य प्रथमलिखित-क्रमेण भूतशुद्ध्यादिगणेशादिपूजां विधाय तत्तद्-देवतां क्रमेण पूजयेत्। ततो होता स्वगृह्योक्त-विधिनाग्निं संस्थाप्य ब्रह्मस्थापनानन्तरं चरु-श्रपणं कुर्य्यात्। अन्यत् सर्व्वं प्रतिष्ठापद्धतौ ज्ञेयम्॥ *॥ अथ व्रतप्रयोगः। स्वस्तिवाचनं कृत्वा सूर्य्यः सोम इति पठित्वा सङ्कल्पं कुर्य्यात्। अद्ये-त्यादि अमुककामोऽमुकव्रतमहं करिष्ये। व्रता-दौ आहान्तसंख्यामुल्लिखेत् अद्यारभ्येति च उदङ्मुखो भूत्वा यमनं कुर्य्यात्। ॐ यमः स्थिते नम इति स्थण्डिलं मार्जयेत्। ॐ स इत्यभ्युक्षयेत्। वामहस्तेन स्थण्डिलं गृहीत्वा कुशेन प्रणवपूर्व्वकं चतुर्थ्यन्तव्रतदेवतानाम लिखेत्। हस्तप्रमाणं स्थण्डिलं चतुरस्रं सित-तण्डुलेनापूर्य्य मध्ये त्रिसप्ताङ्ककर्णिकं हरिद्रा-चूर्णेन सद्बहिर्वितस्तिप्रमाणान्यन्योन्यसक्तानि अष्टदलानि सिततण्डुलचूर्णेन पद्मसूत्रे केशराणि कुसुम्भचूर्णेन पञ्चमन्त्रीर्वर्ण्यादिपञ्चचूर्णेन पीठ-मालाञ्च दग्धपुलाकजेन कृत्वा घटं संस्थाप्य सामान्यार्घ्यं कृत्वा तद्दर्शितात्मानं पूजोपकरण-

चाभ्यर्च्य गणेशादीन् नवग्रहांश्चैव पूजयेत्।
ततो व्रतदेवता: पूजयेत्। इति व्रततत्त्वम् ॥*॥
अथ व्रतलक्षणम्। दीर्घकालानुपालनीयसङ्कल्पो व्रतमिति नारायणोपाध्यायानां स्वरस:। कर्त्तव्यविषयो नियत: सङ्कल्पो व्रतमिति श्रीदत्तहरिनाथवर्द्धमानप्रभृतय:। सङ्कल्पश्च भावे मयैतत् कर्त्तव्यमेव निषिद्धे न कर्त्तव्यमिति ज्ञानविशेष:। अतएव सङ्कल्प: कर्म्ममानस-मित्याभिधानिका:। वस्तुतस्तु पूर्व्वोक्तवराह-पुराणवचनेनैकादश्युपवासस्य व्रतत्वाभिधानात्।
"एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्र उदाहृत:॥"
इत्यादि याज्ञवल्क्याद्युक्तेषु एकभक्तनक्तायाचित-भोजनोपवासादिषु पादकृच्छ्रादित्वाभिधानाच्च न सङ्कल्पो व्रतम्। किन्तु सङ्कल्पविषयतत्तत्-कर्म्मैव व्रतमिति। अतएव व्रतानां सङ्कल्पसम्भव-त्वमाह मनु:।
"सङ्कल्पमूल: कामो वै यज्ञा: सङ्कल्पसम्भवा:।
व्रता नियमधर्म्माश्च सर्व्वे सङ्कल्पजा: स्मृता:॥"
अनेन कर्म्मणा इदमिष्टं फलं साध्यते इत्येवं विधया बुद्धि: सङ्कल्पस्तदनन्तरमिष्टसाधनतया अवगते तस्मिन् इच्छा जायते ततस्तदर्थं प्रयत्नं कुर्व्वीत इत्येवं यज्ञा: सङ्कल्पसम्भवा:। व्रता नियमरूपा धर्म्माश्चतुर्थाध्याये वक्ष्यमाणा:। सर्व्वे इत्यनेन अन्येऽपि शास्त्रार्था: सङ्कल्पादेव जायन्ते इति कुल्लूकभट्ट:॥*॥ सङ्कल्पमाह वराहपुराणम्।
"प्रात: सङ्कल्पयेद्विद्वानुपवासव्रतादिकम्।
नापराह्णे न मध्याह्ने पित्र्यकालौ हि तौ स्मृतौ॥"
सङ्कल्पं व्रतस्यारम्भ इत्युक्तं राघवभट्टो विष्णु:।
"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्॥
आरम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयो:।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिष्क्रिया।
निमन्त्रणन्तु वा श्राद्धे आरम्भ: स्यादिति
श्रुति:॥"
पाकपरिष्क्रियेति सामिदर्शश्राद्धविषयम्। तत्रैव तत्राग्नुद्धरणविधानेन तदग्निपाकस्याबाधा-वगमात् ॥*॥ सङ्कल्पविधानन्तु संवत्सरप्रदीपे।
"प्रात:सन्ध्यां तत: कृत्वा सङ्कल्पं बुध आचरेत्।"
शान्तिपर्व्वणि।
"गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुख:।
उपवासन्तु गृह्णीयाद्यद्वा सङ्कल्पयेद्बुध:॥
देवतास्तस्य तुष्यन्ति कामिकं तस्य सिध्यति।
अन्यथा तु वृथा मर्त्त्या: क्लिश्यन्ति स्वल्प-
बुद्धय:॥"
यद्वेति पक्षान्तरम्। तेन ताम्रपात्राभावे सङ्कल्पमात्रं करणीयम् ॥*॥ गृहीतव्रताकरणे दोषमाह छागलेय:।
"पूर्व्वं व्रतं गृहीत्वा यो नाचरेत् काममोहित:।
जीवन् भवति चाण्डालो मृत: श्वा चैव जायते॥
द्वादशीव्रतमादाय व्रतभङ्गं करोति य:।
द्वादशाब्दं व्रतं चीर्णं निष्फलं तस्य जायते॥"
इति नारदीयवचनात् द्वादश्यां विशेषोऽपि ॥*॥
प्रायश्चित्तमाह पद्मपुराणम्।
"क्रोधात्मोहात् प्रमादाद्वा व्रतभङ्गो यदा
भवेत्।
उपवासत्रयं कुर्य्यात् कुर्य्याद्वा केशमुण्डनम्।
प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत्॥"
वाशब्द: समुच्चये तेन मुण्डनञ्च कर्त्तव्यमिति प्रायश्चित्तविवेक:। प्रमादादस्य सकृत्कृतत्वे प्रतिप्रसूते देवल:।
"सर्व्वभूतभयं व्याधि: प्रमादो गुरुशासनम्।
अव्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रत:॥"
इत्येकादशीतत्त्वम् ॥*॥
पुण्यजनकव्रतानि यथा। वैशाखस्य शुक्लतृती-यायां अक्षयतृतीयाव्रतम् १ तस्य शुक्ला द्वादशी पिपीतकी २ तच्चतुर्द्दशी नृसिंहचतुर्द्दशी ३ तस्य कृष्णाष्टमी त्रिलोचनाष्टमी ४ तस्य कृष्ण-चतुर्द्दशी सावित्री ५ ज्यैष्ठशुक्लतृतीया रम्भा-तृतीया ६ तस्य शुक्ला चतुर्थी उमाचतुर्थी ७ तस्य शुक्ला षष्ठी अरण्यषष्ठी ८ तच्चतुर्द्दशी चम्पकचतुर्द्दशी ९ आषाढ़ीशुक्लैकादशी शयनै-कादशी १० श्रावणी कृष्णाष्टमी श्रीकृष्णजन्मा-ष्टमी ११ भाद्रशुक्ला चतुर्थी शिवा चतुर्थी १२ तस्य शुक्ला षष्ठी चपेटा षष्ठी १३ तस्य शुक्ला सप्तमी ललिता सप्तमी तत्र कुक्कुटीव्रतम् १४ तस्य शुक्लाष्टमी दूर्व्वाष्टमी १५ राधाष्टमी च १६ तस्य शुक्ला नवमी तालनवमी १७ तस्य शुक्लैकादश्यां पार्श्वपरिवर्त्तनव्रतम् १८ तस्य शुक्ला द्वादशी श्रवणद्वादशी १९ तस्य शुक्ला चतुर्द्दशी अनन्तचतुर्द्दशी २० तस्य कृष्णा चतुर्थी गणेशचतुर्थी २१ आश्विनशुक्लाष्टमी महाष्टमी २२ कार्त्तिकशुक्ला नवमी दुर्गानवमी २३ तस्य शुक्लैकादशी उत्थानैकादशी २४ तस्य शुक्ला चतुर्द्दशी पाषाणचतुर्द्दशी २५ तच्छुक्ली-यैकादश्यादिपञ्चतिथ्यात्मकं भकपञ्चकम् २६ वृश्चिकसंक्रान्त्यां सर्व्वजयाव्रतम् २७ कार्त्ति-केयव्रतञ्च २८ अग्रहायणस्य शुक्ला षष्ठी गुह-षष्ठी २९ तस्य शुक्ला सप्तमी मित्रसप्तमी ३० तस्य शुक्ला द्वादशी अखण्डा द्वादशी ३१ माघ-शुक्ला चतुर्थी वरदा चतुर्थी ३२ तस्य शुक्ल-पञ्चम्यां श्रीपञ्चमीव्रतं षड्वर्षनिष्पाद्यम् ३३ तस्य शुक्ला षष्ठी शीतला षष्ठी ३४ तस्य शुक्ला सप्तमी आरोग्यसप्तमी ३५ तस्य शुक्लैकादशी भीमैकादशी ३६ तद्द्वादशी वराहद्वादशी ३७ तस्य कृष्णा चतुर्द्दशी शिवरात्रि: ३८ फाल्-गुनशुक्ला द्वादशी गोविन्दद्वादशी ३९ चैत्र-कृष्णा षष्ठी कन्दषष्ठी ४० चैत्रशुक्लाष्टमी अशोकाष्टमी ४१ तस्य शुक्ला नवमी श्रीराम-नवमी ४२ तस्य शुक्ला त्रयोदशी मदनत्रयो-दशी ४३। इति स्मृति: ॥*॥ अयाचितव्रतं नक्तव्रतं उमामहेश्वरव्रतं शङ्करनारायणव्रतं



देवीपुराणे कृष्णाष्टमीव्रतनामाध्याये सप्ता-र्णवमाहात्म्याध्याये च द्रष्टव्यम् ॥*॥ तिथ्यादि-व्रतं गारुड़े ११६ अध्याये अगस्त्यार्घ्यव्रतं गारुड़े ११९ अध्याये चातुर्मास्यव्रतानि गारुड़े १२१ अध्याये भीष्मपञ्चकादिव्रतं गारुड़े १२३ अध्याये द्रष्टव्यम् ॥*॥ कार्त्तिकस्नानव्रतं कार्त्तिकव्रतं कार्त्तिकप्रदीपदानव्रतञ्च पाद्मोत्तर-खण्डे १४० अध्याये द्रष्टव्यम् ॥*॥ प्रतिपत्कल्पे ब्रह्मव्रतम्। द्वितीयाकल्पे पुष्पद्वितीयाव्रतं फल-द्वितीयाव्रतञ्च। तृतीयाकल्पे गौरीव्रतम्। चतुर्थीकल्पे गणेशचतुर्थी। पञ्चमीकल्पे भाद्र-शुक्ला पञ्चमी नागपञ्चमी। षष्ठीकल्पे भाद्र-शुक्ला षष्ठी गुहषष्ठी। सप्तमीकल्पे माघशुक्ल-सप्तमी रथसप्तमी। शुक्लपक्षे रविवारे सप्तम्यां रोहिणीनक्षत्रयोगे विजयासप्तमी। रविवारे संक्रान्तौ आदित्यहृदयव्रतम्। शुक्लपक्षीय-सप्तम्यां पञ्चतारकनक्षत्रयोगे जया सप्तमी। माघशुक्लसप्तमी जयन्ती। भाद्रशुक्लसप्तमी अपराजिता सप्तमी। शुक्लपक्षे सप्तम्यां रवि-संक्रमणे महाजया सप्तमी। मार्गशीर्षस्य शुक्ला सप्तमी नन्दा सप्तमी। शुक्लसप्तम्यां हस्ता-नक्षत्रयोगे भद्रासप्तमीव्रतम्। फाल्गुनस्य शुक्ला सप्तमी कामदा सप्तमी। पापनाशिनी सप्तमी-व्रतम्। भानुपदव्रतम्। सर्व्वव्याप्तिसप्तमीव्रतम्। मार्त्तण्डसप्तमीव्रतम्। भाद्रशुक्लसप्तमी फल-सप्तमी। श्रावणशुक्लसप्तमी अव्यङ्गसप्तमी। मार्गशीर्षस्य सितसप्तम्यां हस्तानक्षत्रयोगे चित्रभानुव्रतम्। इति भविष्यपुराणम् ॥*॥ उत्तरायणे शुक्लपक्षे बुधवारे अष्टमी बुधाष्टमी। अमावस्याव्रतम्। वैशाखीपूर्णिमा मिष्टपूर्णिमा। मेषसंक्रान्तौ मधुसंक्रान्ति:। जलसंक्रान्ति:। फलसंक्रान्ति:। धान्यसंक्रान्ति:। दधिसंक्रान्ति-व्रतञ्च ॥*॥ अथ व्रतविधि:। तत्र व्रतधर्म्मा:। तत्र विष्णुहारीतौ।
"हिंसार्थं नखरोमादीन् प्रवाप्य स्नानमाचरेत्।
भस्मगोमयमृद्वारिपञ्चगव्यादिकल्पितम्॥
मलापकर्षणं कार्य्यं बाह्यशौचात्मसिद्धये।
दन्तधावनपूर्व्वेण पञ्चगव्येन संयुतम्।
व्रतं निशामुखे ग्राह्यं वह्निस्तारकदर्शने॥"
तत्र प्रायश्चित्तव्रतारम्भे पूर्व्वदिने पञ्चगव्यं प्राश्य दन्तधावनं कृत्वा सायं समये व्रतसङ्कल्प: कर्त्तव्य:। वशिष्ठ:। श्मश्रुकेशनखान् वापयेद्भ्रू-लोमशिखावर्ज्जम्। केशधारणेच्छायां द्विगुण-व्रतमाह हारीत:।
"राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुत:।
केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत्॥
केशानां धारणार्थन्तु द्विगुणं व्रतमाचरेत्।
द्विगुणे तु व्रते चीर्णे दक्षिणा द्विगुणा भवेत्॥"*
स्त्रिया: केशवपनं न कार्य्यमित्याह बौधायन:।
सर्व्वे शिखवनमुदकोपस्पर्शनमध:शयनमेकवासता केशश्मश्रुनखरोमवापनं एतदेव स्त्रिया: केश-वपनवर्ज्जम्। पञ्चगव्यप्राशनमीप्सितकल्प:।

तथा शङ्खलिखितौ ।
"वाग्य कैयुगलखात् पूर्व्वं व्रतं प्राश्य यष्टिर्निधि ।
प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत् ॥
प्रायश्चित्तमुपासीनो वाग्व्रतश्चिसवनं स्पृशेत् ।
एकवासार्द्रवासा वा लघ्वाशी खण्डितेन्द्रियः ॥
स्थानी वीरासनी मौनी मौञ्जी दण्डकमण्डलुम् ।
भैक्षचर्य्याग्निकार्य्यञ्च कुर्य्याद्बैलुयादृत्तम् ॥"
प्रत्येकं नियतं कालमिति व्रतसंख्या वक्ष्यमाणा उद्धरणीया इत्यर्थः । वीरासनी भित्त्याद्यनाश्रितः । दण्डकमण्डलु आर्षत्वात् मतुपो लोपेन तेनैतद्युक्त इत्यर्थः । कुर्य्याद्वैदेहेवा हेवहेलनमित्यादिमन्त्रैः । मनुः ।
"महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम् ।
अहिंसासत्यमक्रोधमार्ज्जवञ्च समाचरेत् ।
त्रिरह्नस्त्रिर्निशायाञ्च सवासा जलमाविशेत् ॥"
त्रिरह्नस्त्रिर्निशायाञ्च इति षट्कालविषयमिदम् । पिपीलिकामध्यचान्द्रायणादितप्तकृच्छ्रवर्ज्जं सकालनियमार्थं बहुषु विधानविधानात् । तथा ।
"स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् ।
स्थानासनाभ्यां विहरेदशक्तोऽधःशयी भवेत् ॥
ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्च्चकः ।
सावित्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः ॥
सर्व्वेषु च व्रतेष्वेवं प्रायश्चित्तार्थमाहृतः ॥"
ब्रह्मचारी मैथुनवर्ज्जं व्रती स्नानमाल्यानुलेपनाद्युपस्पर्ज्जनम् । शूद्रेण सावित्रीजपस्थाने नारायणादिमन्त्रजपः कार्य्यः । ब्राह्मणद्वारा वा कारयितव्यः । एवमन्यत्रापि । यथा वराहपुराणम् ।
"अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥"
जावालः ।
"आरम्भे सर्व्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव हि गायत्र्या जुहुयाद्ब्राह्मणः पृथक् ॥
श्राद्धं कुर्य्याद्व्रतान्ते च गोहिरण्यादिदक्षिणाम् ।
यदि दत्तो वसन् कुर्व्वन् ब्रह्मलोके महीयते ॥
स्त्रीणां होमो न कर्त्तव्यः पञ्चगव्यन्तथैव च ।
शूद्राणां पाणिनाच्चैव संवादं न च कारयेत् ॥
संवादस्तु न कर्त्तव्यस्त्रिवर्गेषु कदाचन ।
ब्राह्मणेनैव वक्तव्या उत्पन्ने प्रायसंशये ॥"
श्राद्धमिति शुद्ध्यर्थं श्राद्धं दर्शितम् । स्त्रीभिर्होमो न कर्त्तव्यः पञ्चगव्यपानञ्च स्त्रीणां कर्त्तरि चेति षष्ठी । प्रारब्धव्रतपीडया प्राणसंशये । अन्ये वर्णा न प्रष्टव्या ब्राह्मणा एव प्रष्टव्याः । व्रतं मौनं पूर्व्वोक्तं । तत्र विशेषमाह आपस्तम्बः । तत्र मौनमुक्तं चेद्विद्युदृष्टैर्निमिन्नैराम्नायमिभिर्व्वत्कृत्यैर्वान्यन्तरात् सन्ध्यायाञ्च मुख एव यावद्यावदर्थं भाषते न मन्त्रलोपो भवतीति विज्ञायते । मन्त्रलोपो व्रतलोपः । बालवृद्धादिभिरक्षीणमपि व्रतं कार्य्यमित्याह शङ्खलिखितौ ।
"असंस्कृतो विवर्ज्जनाक्षो रोगी भवति जीवकः ।
यथाशक्ति प्रकुर्व्वीत व्रतं शीघ्रं न लुप्यति ॥"
अशक्तावन्यद्वारापि कार्य्यमिति उक्तञ्च ब्रह्मपुराणे ।
"रोगी वृद्धश्च पीडकः कुर्व्वन्नन्येन तं सदा ।
चतुर्थादनुयथाशुक्लमष्टमं यावदेव हि ॥
स्त्रियोर्न तं प्रकुर्व्वीरन् सुतवन्धुभिराश्रयाः ।
गुर्व्विणी वालवत्सा च रोगी ब्रह्मपरायणः ॥
एते भक्तेषु भुञ्जन्ति वाला मध्याह्न एव च ।
व्रतस्थः पावनार्थं कदाचिदुदकं पिबेत् ॥
मूलफले तथा क्षीरं यज्ञशिष्टं तथा हविः ।
व्रतमध्ये तु रोगार्त्तो वैद्यप्रोक्तमथौषधम् ।
करोति च गुरोराज्ञां व्रतभङ्गान्तनुकार्य्यादपि ।
ब्राह्मणस्याभिलषितं साधयेदविचारयन् ॥
एतावन्तो व्रतस्थानामव्रतघ्नानि कुर्व्वचित् ।
व्रतस्थेतेषु देवास्तान् व्रतस्थस्तु प्रपूजयेत् ॥"
पीडको वालः । ब्रह्मपरायणः कुटुम्बी ब्रह्माभ्यासपरः वत्सिनवः । बौधायनः ।
"अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्व्वचनमौषधम् ॥"
हारीतधर्म्मौ ।
"व्रतचोपहारश्च हवींषि चरवस्तथा ।
निर्व्विशङ्केन भोक्तव्यं व्रतमस्य न लुप्यते ॥"
वलिर्व्वैश्वदेवादिर्भूतनाथो हरः । उपहारो नैवेद्यम् । चरुः पार्व्वणस्थालीपाकादि । अत्र चैषां हुतावशिष्टं भक्षणीयमिति । देवलः ।
"उपवासो विनश्येत दिवास्वप्नात्तमैथुनैः ।
अत्यये जलपानेन नोपवासः प्रणश्यति ॥"
वृद्धशातातपः ।
"गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥"
अलङ्कारवस्त्रसिन्दूरादि उपवासेन हेतुना इत्यर्थः । तथा ।
"स्त्रीणां सम्प्रेक्षणात् स्पर्शात् ताभिः संकथनादपि ।
ब्रह्मचर्य्यं विपद्येत न दारेष्वृतुमाश्यपि ॥"
संप्रेक्षणात् संकथनात् इति अत्र सरागत्वं संप्रश्नस्यार्थः । इति प्रायश्चित्तविवेकः ॥ * ॥
प्रायश्चित्तात्मकव्रतानि यथा । विश्वामित्रः ।
"लघ्वचान्द्रायणादीनि शुद्धाभ्युदयकारणम् ।
प्रकाशे च रहस्ये च संशयेऽशुक्लेऽस्फुटे ॥
प्राजापत्यः सान्तपनः शिशुकृच्छ्रः पराककः ।
अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः कृच्छ्रातिकृच्छ्रकः ॥
महासान्तपनः शुद्धो तप्तकृच्छ्रस्तु पावनः ।
जलोपवासकृच्छ्रस्तु ब्रह्मकूर्च्चस्तु शोधकः ॥
एते व्यस्ताः समस्ता वा प्रत्येकमेकशोऽपि वा ।
पातकादिषु सर्व्वेषु पापकेषु प्रयत्नतः ॥
कार्य्याश्चान्द्रायणैर्युक्ताः केवला वा विशुद्धये ।
शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणं तथा ॥
यवमध्यं तथा प्रोक्तं तथा पिपीलिकाकृतम् ।
उपपातकिनामनादिष्टेषु चैव हि ॥
प्रकाशे च रहस्ये च अभिसन्ध्याद्यपेक्षया ।
जातिशक्तिगुणान् दृष्ट्वा सकृद्बुद्धिकृतं तथा ।
अनुबन्धादिकं दृष्ट्वा सर्व्वं कार्य्यं यथाक्रमम् ॥"
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
द्वादशवार्षिकादिव्रतं प्रायश्चित्तविवेकादौ द्रष्टव्यम् ॥

**व्रततिः**, स्त्री, ( प्र + तन विस्तारे + क्तिच् । पृषोदरादित्वात् पस्य वः । ) विस्तारः । लता । इत्यमरः ॥ ( यथा, ऋग्वेदे । ८ । ४० । ६ ।
"अपि वृश्च पुराणवद्व्रततेरिव
गुष्पितमोजो दासस्य दम्भय ॥"
"व्रततेरिव यथा लताया गुष्पितं निर्गतां शाखां दृश्चति ।" इति तद्भाष्ये सायनः ॥)

**व्रतती**, स्त्री, ( व्रतति + पक्षे ङीष् । ) विस्तारः । लता । इति भरतद्विरूपकोषः ॥ ( यथा, रघुः । १४ । १ ।
"अपश्यतां दाशरथी जनन्यौ
छेदादिवोपघ्नतरोर्व्रतत्यौ ॥" )

**व्रतभिक्षा**, स्त्री, ( व्रते उपनयनकाले भिक्षा । ) उपनयनकालीनभिक्षा । तस्या विधिर्यथा । अथ भैक्ष्यञ्चरति । अथ प्रत्यक्त्वाश्रीमादित्योपस्थानमग्निप्रदक्षिणञ्च प्रांशति ।
"प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेत् भैक्ष्यं यथाविधि ॥"
इति मनुवचनात् ॥
भिक्षासमूहं भैक्ष्यं चरति आचरति इत्यर्थः । मातरमेवाग्रे ये चान्ये सुहृदो यावत्यो वा सन्निहिताः स्युः । याचते इत्यध्याहार्य्यम् । सुहृदे स्निग्धहृदये स्वसादि । तथा च मनुः ।
"मातरं वा स्वसारं वा मातुर्व्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमां या चैनं नावमानयेत् ॥"
सन्निहितासद्देशस्थाः न तु प्रतिगृहं गत्वा । भवति भिक्षां देहीति ब्राह्मणभिक्षाप्रयोगः । तथा च मनुः ।
"भवत्पूर्व्वं चरेत् भैक्ष्यमुपनीतद्विजोत्तमः ।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्ष्यचर्य्या यथाक्रमम् ॥"
इति याज्ञवल्क्यवचनाच्च ॥ इति संस्कारतत्त्वम् ॥

**व्रतसंग्रहः**, पुं, ( व्रतस्य संग्रहः । ) दीक्षा । इति हेमचन्द्रः ॥

**व्रतादेशः**, पुं, (व्रतस्यादेशः ।) उपनयनम् । यथा,
"आद्यन्तजननात् सद्य आचूडादेकरात्रकम् ।
त्रिरात्रमाव्रतादेशात् दशरात्रमतः परम् ॥"
इति शुद्धितत्त्वम् ॥

**व्रती**, [न्] पुं, ( व्रतमस्यास्तीति । व्रत + इनिः । ) यजमानः । इत्यमरः ॥ ( ब्रह्मचारी । यथा, मनुः । २ । १८८ ।
"भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती ।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥" )

व्रतविशिष्टे, त्रि । यथा,—
"तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पार-
णम् ॥"
इति तिथ्यादितत्त्वम् ॥

व्रश्च, ऊ श्र छेदे । इति कविकल्पद्रुमः ॥ ( तुदा०-पर०-सक०-वेट् ।) दन्त्योपधः चयोगात् तालव्यः । तेन क्विपि शब्छ्रात्वेति षड्निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात् तालव्यस्य दन्त्यत्वे संयोगादेः सस्य लोपे सुवृट् इति । तथा च ।
"नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारः स्यात् चाट्टवर्गस्तवर्गजः ॥"
इति वोपदेवः ॥
अस्यार्थः । धातुषु मध्ये झलि झसे परे अनुस्वारपञ्चमौ नकारजौ ज्ञेयौ तालव्यशकारश्च दन्त्यसकारजातः मूर्द्धन्यषकारात् परष्टवर्गोऽपि तवर्गजातो ज्ञेय इति । मिक्षास्थाने इत्यादीनाञ्च थकारादिप्रकृतित्वे नष्टौ इत्यादिबोध्यम् । ऊ, अव्रश्चीत् अव्राक्षीत् । श्र, वृश्चति । इति दुर्गादासः ॥

व्रश्चनं, क्ली, ( व्रश्च+ल्युट् ।) छेदनम् । व्रश्चधातोरनटप्रत्ययेन निष्पन्नम् ॥ ( यथा, शतपथब्राह्मणे । ३ । ६ । ४ । ७ ।
"स दारुमना वृश्चनाय भवति ॥")

वृश्चनः, पुं, ( व्रश्चति छिनत्ति पतिक्रमेरिति । वृश्च+ल्युः । यद्वा, वृश्चत्यनेनेति करणे ल्युट् ।) स्वर्णादिच्छेदिका । छेनी इति भाषा । तत्पर्य्यायः । पत्रपरशुः २ । इत्यमरः ॥ पत्रपर्शुः ३ । इति शब्दरत्नावली ॥ स्वर्णलोहादिभेदकः ४ । इति जटाधरः ॥ वृश्चच्छेदनजातनिर्यासः । यथा,—
"देवतार्थं हविः शिग्रुं लोहितान् वृश्चनांस्तथा ।
अनुपाकृतमांसानि विड्जानि कवकानि च ॥"
इति याज्ञवल्क्यः ॥
व्रश्चनात् छेदनजातान् लोहितानपि । यथा, मनुः ।
"लोहितान् वृक्षनिर्यासान् वृश्चनप्रभवांस्तथा ।"
इति मिताक्षरायामाचाराध्यायः ॥
(करणे ल्युट् तस्य कुठारादिवाचकता विशेष्यलिङ्गता च । यथा, कातन्त्रे कृत्सु करणाधिकरणयोश्चेत्यत्र कलापचन्द्रः । "शुद्धनाश्च शब्दः प्रायो विशेष्यलिङ्गवाची यथा वृश्चनः कुठारो गोदोहनी घटी टङ्कः पाषाणदारण इति ॥")

व्राजिः, स्त्री, ( व्रजति गच्छतीति । व्रज गतौ + "वसिवपियजीति ।" उणा० ४ । १२४ । इति इञ् ।) वायुः । व्रजधातोरौणादिकेञ्प्रत्ययेन निष्पन्नमेतत् ॥

व्रातः, पुं, समूहः । इत्यमरः ॥ ( यथा, भागवते । ४ । २५ । १६ ।
"नानारण्यमृगव्रातैरनाबाधे मुनिव्रतैः ।
आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः ॥")
व्राधादिः । इति शब्दटीकायां भरतः ॥

(मनुष्यः । इति निघण्टुः । २ । ३ । "हन् वधे 'तानशानवानसुषिर' इत्यादिसूत्रेण औणादिकेन तन्प्रत्यये आकारागमो निपात्यते । तृणन्ति स्वमभिमतं देवताभ्यः तपश्चाराधितेभ्यः प्रतिपन्ने वा यज्ञादौ । यद्वा, व्रातो साध्वादिसञ्चयः । तत्र भवा व्राताः मत्वर्थीयोऽकारः । यद्वा, व्रतमिति कर्म्मनाम अन्नं वा । अन्नमपि व्रतयतेर्भक्षार्थस्योक्तेः तदीयाः 'तस्येदम्' इत्यण् । 'कर्म्मणा जायते जन्तुः कर्म्मणैव प्रलीयते' इत्युक्तेः कर्म्मणामधिकारित्वाच्च मनुष्याणां कर्म्मसम्बन्धित्वम् । 'अतो अन्नाद् भूतानि जायन्ते जातान्यन्नेन वर्द्धन्ते' इति । अन्नात् रेतो रेतसः पुरुषः इति च श्रुतिः मनुष्याणामन्नसम्बन्धित्वम् ।" इति तट्टीकायां देवराजयज्वा ॥ अस्मिन्नर्थे प्रायशो बहुवचनप्रयोगो दृश्यते ॥ * ॥ स्त्री, शरीरायासजीविकर्म्म । इति काशिका । ५ । २ । २१ ॥)

व्रातीनः, पुं, ( शरीरायासेन ये जीवन्ति तेषां कर्म्म व्रातं तेन जीवतीति । व्रात+"व्रातेन जीवति ।" ५ । २ । २१ । इति खञ् ।) संघजीवी । इति हेमचन्द्रः ॥ (यथा, भट्टिः । ४ । १२ ।
"व्रातीनव्यालदीप्तास्त्रैः सुत्वनः परिपूजयन् ॥")

व्रात्यः, पुं, ( व्रातो बालादिः स इव । "शाखादिभ्यो यत् ।" ५ । ३ । १०३ । इति यत् ।) दशसंस्काररहितः । षोडशवर्षादूर्द्धं असंस्कृतो अकृतसावित्रीको वा । इति भरतः ॥ तत्पर्य्यायः । संस्कारहीनः २ । इत्यमरः ॥ सावित्रीपतितः ३ वात्सुवः ४ पुयमोक्तिकः ५ । इति जटाधरः ॥ तस्य प्रायश्चित्तादि यथा,—
"अथ व्रात्यविधिं देवि । प्रायश्चित्तन्तु यद्भवेत् ।
तत् शृणुष्व महेशानि सर्व्ववर्णे विशेषतः ॥
दश वर्षाणि पञ्चैव ब्राह्मणश्चोपनीयते ।
एकविंशतिवर्षाणि यावत्संसुमाचरेत् ।
अत ऊर्द्धं पतत्येव सर्व्वधर्म्मबहिष्कृतः ॥
गायत्त्रीपतिता व्रात्या व्रात्यस्तोमेन संस्कृतः ।
अशक्तो चैव यज्ञस्य चरेदौद्दालिकं व्रतम् ॥
द्वौ मासौ यावकाहारो मासमेकं पयः पिबेत् ।
दध्ना च पक्षमेकन्तु अष्टरात्रं घृतेन तु ॥
अयाचितेन षड्रात्रं त्रिरात्रं वर्त्तयेज्जलैः ।
अहोरात्रं न भुञ्जीत ततः संस्कारमर्हति ॥
पतिता यस्य गायत्त्री दश वर्षाणि पञ्च च ।
प्रायश्चित्तं भवेत्तस्य प्रोवाच भगवान् शिवः ॥
सशिखं वपनं कृत्वा व्रतं कुर्य्यात् समाहितः ।
हविष्यं भोजयेदन्नं ब्राह्मणान् सप्त पञ्च वा ॥
एकविंशतिरात्रन्तु पिबेत् प्रसृतियावकम् ।
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम् ॥
अशक्तावथवाशक्तौ कुर्य्याच्चान्द्रायणत्रयम् ।
सावित्रीपतिता येवा देशकालादिविभ्रमात् ॥
चान्द्रायणं चरेद्यस्तु व्रतान्ते धेनुमुत्सृजेत् ।
चीरं वापि भिक्षेद्वासं दद्याद्वा वत्सधारिणीम् ॥"
इति मत्स्यसूक्ते प्रायश्चित्तप्रकरणे ३८ पटलः ॥

व्रात्यस्तोमः, पुं, यज्ञविशेषः । यथा,—
"सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते
क्रतोः ॥"
इति गारुडे ९४ अध्याये ॥ तथा, याज्ञवल्क्ये । १ । ३८ ॥

व्री, श शि वृत्याम् । इति कविकल्पद्रुमः ॥ (क्र्या०-प्या०-पर०-सक०-अनिट् ।) रेफोपधः । शि, व्रिणाति । व्रीणः व्रीतिः । श, यो व्रीणाति जयश्रियं रणभुवि । व्रीतः व्रीतिः । इति दुर्गादासः ॥

व्री, य ङ ओ गतौ । वृत्याम् । इति कविकल्पद्रुमः ॥ ( दिवा०-आत्म०-सक०-अनिट् ।) रेफोपधः ॥ य ङ, व्रीयते । ओ, व्रीणः । इति दुर्गादासः ॥

व्रीड, य ञि क्षिपि । लज्जे । इति कविकल्पद्रुमः ॥ ( दिवा०-पर०-सक०-लज्जे-अक०-सेट् ।) रेफयुक्तः । य, व्रीड्यति बाणं चापः । व्रीड्यति वधूः । ञि, व्रीडितोऽस्ति । इति दुर्गादासः ॥

व्रीडः, पुं, ( व्रीड+भावे घञ् ।) लज्जा । इत्यमरः ॥ ( यथा, कुमारे । ७ । ६७ ।
"स शूलमाकृष्टवता शरीर-
मनेन दग्धं कुसुमायुधस्य ।
व्रीडादमुं देवमुदीक्ष्य मन्ये
सन्न्यस्तदेहः स्वयमेव कामः ॥")

व्रीडनं, क्ली, ( व्रीड+ल्युट् ।) लज्जा । यथा,—
"अथ मन्दाक्षमन्दास्यं लज्जा लज्या च
ह्रीस्त्रपा ।
व्रीडो व्रीडा व्रीडनञ्च लज्जापर्य्याय ईरितः ॥"
इति शब्दरत्नावली ॥

व्रीडा, स्त्री, ( व्रीड+"गुरोश्च हलः ।" ३ । ३ । १०३ । इत्यः । टाप् ।) लज्जा । इत्यमरः ॥ ( यथा आर्य्यासप्तशत्याम् । ३५७ ।
"प्रासवभागस्य त्वया वदतः सखि नास्य विद्यते
व्रीडा ।
सुभगम्मन्यापि योऽयं न लज्जते दग्धकालि-
कया ॥" )

व्रीस, कि वधे । इति कविकल्पद्रुमः ॥ (चुरा०-पक्षे भ्वा०-सक०-सेट् ।) कि, व्रीसयति व्रीसति । इति दुर्गादासः ॥

व्रीहिः, पुं, ( वर्द्धते वृद्धिं गच्छतीति । वृह वृद्धौ + "इगुपधात् कित् ।" उणा० ४ । ११९ । इति इन् । पृषोदरादित्वात् साधुः ।) धान्यमात्रम् । आशुधान्यम् । इत्यमरः ॥ अस्य सामान्यनामगुणाश्च यथा,—
"धान्यं भोज्यञ्च भोगार्हमन्नाद्यं जीवसाधनम् ।
तच्च तावद्विधा ज्ञेयं शूकशिम्बीद्वयाश्रयम् ॥
व्रीह्यादिकं यदि च शूकसमन्वितं स्यात्
तत् शूकधान्यमयमुक्तमकुरकादि ।
शिम्बीनिगूढमिति तन्यवदन्ति शिम्बी-
धान्यं द्वयोर्द्दलतया द्विधान्यमन्यत् ।
तत्र त्रिदोषशमनं लघु शूकधान्यं
तिक्तं बलातिशयवीर्य्यविवर्द्धनाय ।
शिम्बीभवं गुरु हिमञ्च विबन्धदायि
वातावहन्तु शिशिरं द्विधान्यमाहुः ॥

देशे देशे शूकधान्येषु संख्या
ज्ञातुं शक्या नैव सैर्वेर्वतैव्वा ।
तस्मादेषां येषु भोगोपभोगा-
स्तान्यस्माभिर्व्याक्रियन्ते कियन्ति ॥
शालयः कलमा कृष्णा व्रीहिश्रेष्ठा नृपप्रियाः ।
धान्योत्तमाश्च विज्ञेयाः केदाराः सकुमारकाः ॥
राजान्नषष्टिकतिलेमररक्तसुख-
स्थलाशुमल्लतिरियादिकशालिसंज्ञाः ।
व्रीहिस्त्वनेन दशधा भुवि शायनाः स्यु-
स्तेषां क्रमेण गुणनामगणं ब्रवीमि ॥
व्रीहिर्गौरो मधुरशिशिरः पित्तहारी कषायः
स्निग्धो वृष्यः क्रमिकफहरस्तापरक्तापहश्च ।
पुष्टिं धत्ते श्रमशमनकृद्वीर्य्यवृद्धिं विधत्ते
कृष्णोऽत्यन्तं जनयति सुदं वातकृत्पित्तकोऽन्यः ॥"
इति राजनिर्घण्टः ॥

अपि च ।
"वार्षिकाः काञ्चनाः शुक्ला व्रीहयश्चिर-
पाकिनः ।
कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि ॥
शालसुखो जतुसुख इत्याद्या व्रीहयः स्मृताः ।
कृष्णव्रीहिः स विज्ञेयो यत्कृष्णतुषतण्डुलाः ॥
पाटलः पाटलापुष्पवर्णको व्रीहिरुच्यते ।
कुक्कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्डक उच्यते ॥
शालमुखः कृष्णशूकः कृष्णतण्डुल उच्यते ।
लाक्षावर्णमुखं तस्य ज्ञेयो जतुसुखस्तु सः ॥
व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः ।
अल्पाभिष्यन्दिनो बद्धवर्चस्काः षष्टिकैः समाः ॥
कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे ॥"
इति भावप्रकाशः ॥

तस्य यज्ञीयत्वं यथा,—
"यज्ञार्थं ननु भूतानां भक्ष्यमित्येव वै श्रुतिः ।
दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च ॥
एते पञ्च महायज्ञा ब्रह्मणा निर्म्मिताः पुरा ।
ब्राह्मणानां हितार्थाय इतरेषां च तत्सुखाः ॥
इतरेषां तु वर्णानां ब्राह्मणैः कारिताः शुभाः ।
एवं कृत्वा नरो मुक्तस्ताह्यदिवि । विशुध्यति ॥
अन्यथा व्रीहयोऽप्येते एकैके स्वगपक्षिणः ।
मन्तव्या दाल्भ्यभोक्तृणां महामांसं तु तत्
स्मृतम् ॥"
इति वाराहे आह्निकतत्त्वान्ताध्यायः ॥
तेन पितृतृप्तिर्यथा । मनुः ।

"तिलैर्व्रीहियवैर्मा[illegible]षैरद्भिर्मूलफलेन वा ।
दत्तेन मासं [illegible] विधिवत् पितरो नृणाम् ॥"
व्रीहिः [illegible]न्यम् । याज्ञवल्क्यः ।
"हविष्यान्नेन वै मासं पायसेन च वत्सरम् ।
मात्स्यहारिण[illegible]शाकुनच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्याभि[illegible] दत्तेनेह पितामहाः ॥"
हरिष्यान्नेन [illegible]वान्नेन । इति । अमा-
वास्यास्तिस्रोऽष्टका माघी प्रौष्ठपद्यूर्द्ध्वं कृष्णत्रयो-
दशी व्रीहियवपाकौ च ।
"एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजा-
पतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥"
इति विष्णुवचनं [illegible]श्राद्धस्यैव व्रीहि-
यवोभयप्राप्तिविषयकालस्य विधायकं न्मेवाद्य-
धान्यशुद्ध्यादौ । शालिकालस्य तु प्राप्तिः ।
"शरद्वसन्तयोः केचित् नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः ॥"
इति छन्दोगपरिशिष्टे व्रीहिप्राप्तौ नवयज्ञोऽप्यष्टौ-
शालिविधानात् यज्ञतुल्यत्वात् श्राद्धेऽपि तथा
कल्पनात् । इति च श्राद्धतत्त्वम् ॥ * ॥ नवान्न-
श्राद्धकालो यथा । विष्णुः । अमावस्यास्तिस्रो-
ऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्ठपद्यूर्द्ध्वं कृष्ण-
त्रयोदशी व्रीहियवपाकौ च ।
"एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥
व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ।
न तावद्यौ महाराज विना श्राद्धं कथञ्चन ॥"
इति मलमासतत्त्वम् ॥
तेन यागकरणं यथा,—
व्रीहिभिर्यजेत यवैर्यजेत इति श्रुतिः । तत्र
"व्रीहिप्रयोगे प्रतीतयवप्रामाण्यपरित्यागः ।
अप्रतीतयवाप्रामाण्यकल्पनम् ।" इत्येकादशी-
तत्त्वम् ॥ * ॥ व्रीह्यप्राप्तौ शालिधान्येन कर्त्त-
करणं यथा,—
"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥"
इति तिथ्यादितत्त्वम् ॥
व्रीहिकः, त्रि, (व्रीहिरस्यास्तीति । व्रीहि +
"व्रीह्यादिभ्यश्च ।" ५ । २ । ११६ । इति ठन् ।)
धान्यविशिष्टः । इति सिद्धान्तकौमुदी ॥

व्रीहिकाञ्चनः, पुं, (व्रीहिः काञ्चनमिव । अभि-
धानात् पुंस्त्वम् ।) मसूरः । इति त्रिकाण्डशेषः ॥
व्रीहिपर्णी, स्त्री, (व्रीहेः पर्णमिव पर्णमस्याः ।
ङीष् ।) शालपर्णी । इति राजनिर्घण्टः ॥
व्रीहिभेदः, पुं, (व्रीहेर्भेदः ।) धान्यविशेषः ।
चिना इति ख्यातः । तत्पर्य्यायः । अणुः २ ।
इत्यमरः ॥
व्रीहिमयः, पुं, (व्रीहेः पुरोडाशः । व्रीहि + "व्रीहेः
पुरोडाशे ।" ४ । ३ । १४८ । इति मयट् ।)
व्रीहिनिर्म्मितपुरोडाशः । इति सिद्धान्तकौमुदी ॥
(व्रीह्यात्मके, त्रि । यथा, महाभारते । १३ ।
११५ । ५६ ।
"श्रयते हि पुरा कल्पे नृणां व्रीहिमयः पशुः ।
येनायजन्त यज्वानः पुण्यलोकपरायणाः ॥")
व्रीहिराजकः, पुं, (व्रीहीणां राजा । टच् समासे ।
ततः कन् ।) कङ्गुधान्यम् । चीनकधान्यम् ।
इति मेदिनी ॥
व्रीहिश्रेष्ठः, पुं, (व्रीहिषु श्रेष्ठः ।) शालिधान्यम् ।
इति राजनिर्घण्टः ॥
व्रीही, [न्] त्रि, (व्रीहिरस्यास्तीति । व्रीहि +
"व्रीह्यादिभ्यश्च ।" ५ । २ । ११६ इति इनिः ।)
व्रीहियुक्तक्षेत्रादि । इति सिद्धान्तकौमुदी ॥
व्रीह्यगारं, क्ली, (व्रीहीणामगारम् ।) धान्यगृहम् ।
तत्पर्य्यायः । कुशूलः २ । इति त्रिकाण्डशेषः ॥
व्रुड, शि संवृतिमज्जनयोः । मज्जे । इति कविकल्प-
द्रुमः ॥ (तुदा०-कुटा०-पर०-सक०-अकञ्च-सेट् ।)
रेफयुक्तः । शि, व्रुडति अव्रुडीत व्रुव्रोड ।
मज्जो मज्जनम् । इति दुर्गादासः ॥
व्रूस, कि वधे । इति कविकल्पद्रुमः ॥ (चुरा०-पक्षे
भ्वा०-सक०-सेट् ।) रेफयुक्तो दीर्घो । कि,
व्रूसयति व्रूसति । इति दुर्गादासः ॥
व्रैहः, त्रि, (व्रीहेरवयवो विकारो वा । व्रीहि +
"बिल्वादिभ्योऽण् ।" ४ । ३ । १३६ । इत्यण् ।)
व्रीहिनिर्म्मितः । इति सिद्धान्तकौमुदी ॥
व्रैहेयः, त्रि, (व्रीहीणां भवनं क्षेत्रम् । व्रीहि +
"व्रीहिशाल्योर्ढक् ।" ५ । २ । २ । इति ढक् ।)
आशुधान्योपयुक्तभूम्यादिः । इत्यमरः ॥
व्ली, श शि गतिहृत्योः । इति कविकल्पद्रुमः ॥
(क्र्या०-प्वा०-पर०-सक०-अनिट् ।) अन्तःस्थ
[illegible]पधः । शि, व्लिनाति । व्लीनः व्लीनि ।
इति दुर्गादासः ॥